वागीशाद्याः सुमनसः सर्वार्थानामुपक्रमे ।
यं नत्वा कृतकृत्याः स्युस्तं नमामि गजाननम् ॥ १ ॥

॥ १ ॥

इष्टदेवतां नमस्कृत्य चिकीर्षितार्थपरिपालनार्थं पालके स्वामिनि विद्यमानं महिमानमनुस्मरति—

युक्तिं मानवतीं विदन्स्थिरधृतिर्भेदे विशेषार्थभा-
गामोहः क्रमकृत्प्रयुक्तिनिपुणः श्लाघ्यातिदेशोन्नतिः ।
नित्यस्फूर्त्यधिकारवान्गतसदाबाधः स्वतन्त्रेश्वरो
जागर्ति श्रुतिमत्प्रसङ्गचरितः श्रीबुक्कणक्ष्मापतिः ॥२॥

अत्र चिकीर्षिते धर्मशास्त्रे वर्तमानानां द्वादशानामध्यायानां ये प्रतिपाद्या अर्थाः, ये च नीतिशास्त्रोक्ता राजधर्माः, ते सर्वेऽप्यस्मिन्भूपतावुपलभ्यन्ते । नीतिपक्षे—युक्तिर्योगः संधिः । सा च युक्तिर्मानवती । मानः सत्कारश्चतुर्षु सामभेददानदण्डेषूपायेषु प्रथम उपायः । वैरिणो बुद्धिभेदो द्वितीयः । एताभ्यां दानदण्डावप्युपलक्ष्येते । एतैश्चतुर्भिरुपायैर्विशेषेणार्थं धनं भजति प्राप्नोति । एतावता शत्रुक्षयः कथितः । अवशिष्टेन स्वराज्यप्रतिपालनप्रकारः प्रतिपाद्यते—आप्तेष्वमात्यप्रभृतिषु पुरुषेषु 'अयमीदृशस्य व्यापारस्य योग्यो नान्यस्य' इत्येवमूहापोहकुशलः । 'राजसभायामेते तपस्विनः पूज्या विप्रा दक्षिणभाग उपवेशनीयाः, एते च भृत्या वामभागे' इति क्रमं करोति तत्तद्ग्रामेष्वधिकृतान्पुरुषानुचितबुद्धिप्रदानेन प्रयोक्तुं निपुणः । समुद्रपर्यन्तत्वेनातिविस्तृतस्य देशस्योन्नतिः समस्तवस्तुसंपत्तिः । सा च परराष्ट्रनिवासिभिः सकलप्राणिभिः श्लाघ्यते । 'इदं कर्तव्यम्, इदं न' इत्येवं कार्याकार्यविषया स्फूर्तिस्तस्यामधिकारोऽस्य राज्ञो नित्यः सर्वत्राप्रतिहतबुद्धित्वात् । गतो निवारितः सतां तपस्विनामाबाधो विघ्नो येनासौ गतसदाबाधः । देशान्तराधिपतीनां राज्ञामेतदधीनत्वेनापरप्रेष्यत्वादयं स्वतन्त्रः । जगदीश्वरस्य विद्यातीर्थमुनेर्भोगमूर्तित्वेनायमीश्वरः । यस्य सभायां गोष्ठीरूपः प्रसङ्गो वेदार्थविषयत्वेन श्रुतिमान् । यदीयं चरितमपि निरन्तरं वेदोक्तरहस्यार्थध्यानरूपत्वेन श्रुतिमद्भवति सोऽयं श्रुतिमत्प्रसङ्गचरितः । एवंविधो बुक्कभूपतिरन्तः परमेश्वरध्याने, बहिः प्रजापालने च नित्यं जागर्ति । यथा नीतिशास्त्रोक्तेषु सामभेदादिष्वयं कुशलस्तथा सर्वज्ञावतारत्वाद्धर्मशास्त्रोक्तेषु प्रमाणादिप्रसङ्गान्तेष्वध्यायार्थेषु कुशलः । ते चाध्यायार्था उपरिष्टात्प्रदर्श्यन्ते ॥ २ ॥

१ क. °य वि° । २ क. °मानम° । ३ घ. °नुस्मरयन्ति यु° । ङ. °नुस्मारयति । ४क. ख. ङ. °ति युक्तिं मानवतीमिति यु° । ५ ग. °ज्यपा° । ६ घ. °रोतीति क्रमकृत् । त° ७ घ. ङ. °स्मभोग्यव° । ८ क. ख. ङ. °कणभु° ।

राज्ञः सर्वज्ञत्वं सोपपत्तिकं प्रकटयति—

यद्ब्रह्म प्रतिपाद्यते प्रगुणयत्तत्पञ्चमूर्तिप्रथां
तत्रायं स्थितिमूर्तिमाकलयति श्रीबुक्कणक्ष्मापतिः।
विद्यातीर्थमुनिस्तदात्मनि लसन्मूर्तिस्त्वनुग्राहिका
तेनास्य स्वगुणैरखण्डितपदं सार्वज्ञ्यमुद्द्योतते ॥ ३ ॥

सर्वासूपनिषत्सु प्रतीयमानं यत्परं ब्रह्म तदेव शैवागमेषु सृष्टिस्थितिसंहारनिरोधनानुग्रहलक्षणपञ्चकृत्यासिद्ध्यर्थमीशानतत्पुरुषाघोरवामदेवसद्योजातलक्षणानां पञ्चानां मूर्तीनां प्रथां प्रसिद्धिं विस्तारं वा प्रगुणयति प्रकटी करोतीति प्रतिपाद्यते। तत्र तासु मूर्तिष्वयं भूपालः स्थितिमूर्तिं धत्ते। तस्या मूर्तेरात्मनि लसन्विद्यातीर्थमुनिः कृत्स्नस्य जगतोऽनुग्राहिका मूर्तिरित्युच्यते। यस्मादयं भूपो वेदान्तोक्तं परं ब्रह्म, यस्माच्चाऽऽगमोक्ता महेश्वरस्य स्थितिमूर्तिः, यस्माच्च श्रीविद्यातीर्थमुनिस्तदात्मनि संनिधाय प्रकाशते, तस्मात्सर्वज्ञत्वमस्य राज्ञ उत्कर्षेणाऽऽविद्वदङ्गनागोपालमविवादेन प्रतिभासते ॥३॥

उक्तगुणोपेतस्य राज्ञो मन्त्रिणं नानापुराणप्रसिद्धदृष्टान्तैर्हितकारितया प्रशंसति—

इन्द्रस्याऽऽङ्गिरसो नलस्य सुमतिः शैब्यस्य मेधातिथि-
र्धौम्यो धर्मसुतस्य वैन्यनृपतेः स्वौजा निमेर्गौतमिः।
प्रत्यग्दृष्टिररुन्धतीसहचरो रामस्य पुण्यात्मनो
यद्वत्तस्य विभोरभूत्कुलगुरुर्मन्त्री तथा माधवः ॥ ४ ॥

॥ ४ ॥

चिकीर्षितग्रन्थे श्रद्धातिशयमुत्पादयितुं कर्तृगौरवं प्रकटयति—

श्रुतिस्मृतिसदाचारपालको माधवो बुधः।
स्मार्तं व्याख्याय सर्वार्थं द्विजार्थं श्रौत उद्यतः ॥ ५ ॥

सर्ववर्णाश्रमानुग्रहाय पुराणसारपाराशरस्मृतिव्याख्यादिना स्मार्तो धर्मः पूर्वं व्याख्यातः। इदानीं द्विजानां विशेषानुग्रहाय श्रौतधर्मव्याख्यानाय प्रवृत्तः ॥५॥

ग्रन्थमारिप्सुर्गुरुमूर्त्युपाधिकं सकलवेदशास्त्रप्रवर्तकत्वेनात्रोचितेष्टदेवतारूपं परमेश्वरमादौ नमस्कृत्य श्रोतृप्रवृत्तिसिद्ध्यर्थं विषयप्रयोजने दर्शयंस्तं ग्रन्थं प्रतिजानीते—

प्रणम्य परमात्मानं श्रीविद्यातीर्थरूपिणम्।
जैमिनीयन्यायमाला श्लोकैः संगृह्यते स्फुटम् ॥ ६ ॥

जैमिनिप्रोक्तानि धर्मनिर्णायकान्यधिकरणानि न्यायाः। तेऽस्य ग्रन्थस्य

---

१ क. ख. घ. ङ. °ति यद्ब्रह्म प्रतिपाद्यत इत्यादिना। २ ख. वेदेनोक्तं। ३ ख. ङ. °ति-इन्द्रस्याऽऽङ्गिरस इति। चि°। ४ क. ख. ग. घ. श्रौते धर्मे व्या°। ५ ख. °ध्यर्थे वि°। ६ क. घ. °ने निद°।

विषयः। पठितुं सुगमैः कतिपयैरेव श्लोकैस्तेषां स्फुटीभावः प्रयोजनम्। न्यायमाला संगृह्यत इति ग्रन्थनामनिर्देशपूर्विका प्रतिज्ञा ॥६॥

करिष्यमाणस्य ग्रन्थस्य प्रकारं दर्शयति—

एको विषयसंदेहपूर्वपक्षावभासकः।
श्लोकोऽपरस्तु सिद्धान्तवादी प्रायेण कथ्यते ॥ ७ ॥
चत्वारोऽवयवा एकश्लोकेनोक्ताः क्वचित्क्वचित्।
यत्र क्वापि बहुश्लोकैरुच्यन्तेऽतो न विस्तरः ॥ ८ ॥

एकैकस्याधिकरणस्य विषयः, संदेहः, संगतिः, पूर्वपक्षः, सिद्धान्तश्चेति पञ्चावयवाः। तत्र संगतिरनन्तरमेव व्युत्पादयिष्यमाणेन प्रकारेण प्रत्यधिकरणं स्वयमेवोहितुं शक्यते। अवशिष्टानां चतुर्णामवयवानां संग्राहकाः क्वचिद्द्वौ श्लोकाः, क्वचिदेक इत्यावापोद्वापाभ्यामन्ततः प्रत्यधिकरणं श्लोकद्वित्वे संख्या पर्यवस्यति। अतो बहुत्वाद्विम्यता ग्रन्थगौरवशङ्का न कर्तव्या ॥ ७ ॥

तमेव ग्रन्थागौरवभावं स्फुटीकुर्वन्रूपकव्याजेन सुबोधत्वं दर्शयति—

सर्वथाऽपि सहस्रे द्वे नातिक्रामति संग्रहः।
मीमांसासागरस्तेन क्रीडापुष्करिणी भवेत् ॥ ९ ॥

श्लोकेन श्लोकाभ्यां श्लोकैर्वा यथासंभवं न्यायः संगृह्यताम्। सर्वथाऽपि सहस्रन्यायसंग्रहरूपो ग्रन्थः श्लोकसहस्रद्वयपूर्तेरर्वागेव समाप्स्यते, न तु सहस्रद्वयमतिक्रामति। भाष्यटीकादीनां बहुत्वाद्दुरवगाहत्वाच्च मीमांसा सागरसमा पूर्वमासीत्। क्रियमाणेनानेन ग्रन्थेन दोषद्वयरहितेन राजपुत्राणां बालानां क्रीडार्थं निर्मितया नातिदघ्न्या पुष्करिण्या समा भविष्यति। यद्यपि शास्त्रदीपिकादौ क्वचित्क्वचित्संग्रहश्लोकोऽस्ति, तथाऽपि न सर्वत्र विद्यते। यत्रास्ति तत्रापि विषयसंशययोरसंग्रहान्न श्लोकपाठमात्रेणाधिकरणमुपन्यसितुं शक्यते। अतो न क्वापि गतार्थत्वं शङ्कनीयम् ॥९॥ संगतिं व्युत्पादयति—

शास्त्रेऽध्याये तथा पादे न्यायसंगतयस्त्रिधा।
शास्त्रादिविषये ज्ञाते तत्तत्संगतिरूह्यताम् ॥ १० ॥

शास्त्रसंगतिः, अध्यायसंगतिः, पादसंगतिश्चेति त्रिधा संगतिः। सा च शास्त्रादीनां त्रयाणामसाधारणे विषये ज्ञाते सति स्वयमेवोहितुं शक्या ॥ १० ॥

१ ख. सुगमैः। २ क. °कैरश°। ३ ग. विस्तराः। ४ क. घ. °वोहयितुं। ५ क. घ. कार्या। ६ क. ख. घ. ङ. °न्थबाहुल्याभा°। ७ ग. °वं स्पष्टीकु°। ८ ख. °भवेन न्या°। ९ ख. संगृह्यते। १० क. ख. घ. ङ. °माप्यते। ११ क. ख. °द्दुर्गह°। १२ ग. °णेन त्वना°। घ. °णेन त्वनेनैव ग्र°। १३ क. घ. °रभावान्न। १४ ख. तत्र संग°। १५ क. °यितुं। १६ ख. घ. शक्यते।

शास्त्रस्याध्यायानां चासाधारणं विषयं दर्शयति—

**धर्मो द्वादशलक्षण्या व्युत्पाद्यस्तत्र लक्षणैः।**
**प्रमाणभेदशेषत्वप्रयुक्तिक्रमसंज्ञकाः॥ ११॥**
**अधिकारोऽतिदेशश्च सामान्येन विशेषतः।**
**ऊहो बाधश्च तन्त्रं च प्रसङ्गश्चोदिताः क्रमात्॥ १२॥**

लक्षणान्यध्यायाः। द्वादशानां लक्षणानां समाहारो द्वादशलक्षणी। तादृशस्य द्वादशलक्षणोपेतस्य शास्त्रस्य धर्मो विषयः।

प्रमाणादयः प्रसङ्गान्ता द्वादश पदार्थाः क्रमाद्द्वादशानामध्यायानां विषयाः। प्रथमेऽध्याये—विध्यर्थवादादिरूपं प्रमाणं निरूपितम्। द्वितीये—यागदानादिकर्मभेदः। तृतीये—प्रयाजादीनां दर्शपूर्णमासाद्यर्थत्वेन तच्छेषत्वम्। चतुर्थे—'गोदोहनस्य पुरुषार्थत्वप्रयुक्त्याऽनुष्ठानम्, न तु क्रत्वर्थत्वप्रयुक्त्या' इत्येवमादयः। पञ्चमे—क्रमनियतिविधेयत्वादयः। षष्ठे—'कर्तुरधिकारो नान्धादेः' इत्यादयः। सप्तमे—"समानमितरच्छ्येनेन" इत्यादिप्रत्यक्षवचनेन, अग्निहोत्रादिनाम्नाऽनुमितवचनेन च सामान्यतोऽतिदेशः। अष्टमे—"सौर्यं चरुं निर्वपेत्" इत्यत्र निर्वापस्तद्धितेन देवतानिर्देश एकदेवतात्वमौषधद्रव्यकत्वमिति लिङ्गेनाऽऽग्नेयपुरोडाशेतिकर्तव्यतैव, नान्यस्येत्येवमादिर्विशेषतोऽतिदेशः। नवमे—प्रकृतौ "अग्नये जुष्टं निर्वपामि" इति पठिते मन्त्रे विकृतौ सौर्यचरावग्निपदपरित्यागेन सूर्यपदप्रक्षेपेण 'सूर्याय जुष्टं निर्वपामि' इत्येवमाद्यूहः। दशमे—कृष्णलेषु चोदकप्राप्तस्यावघातस्य वितुषीकरणासंभवेन लोप इत्येवमादिर्बाधः। एकादशे—बहूनामाग्नेयादीनां प्रधानानां सकृदनुष्ठितेन प्रयाजाद्यङ्गेनोपकार इति तन्त्रम्। द्वादशे—प्रधानस्य पशोरुपकारायानुष्ठितेन प्रयाजाद्यङ्गेन पश्वङ्गपुरोडाशेऽप्युपकार इत्यादिप्रसङ्गः॥ ११॥ १२॥

पादानामसाधारणं विषयं दर्शयति—

**विध्यर्थवादस्मृतयो नाम चेति चतुर्विधम्।**
**प्रथमाध्यायगैः पादैश्चतुर्भिर्मानमीरितम्॥ १३॥**

प्रथमे पादे—विधिरूपं मानमीरितम्। द्वितीये—अर्थवादरूपम्। अर्थवादो मन्त्रस्याप्युपलक्षकः। तृतीये—स्मृतिरूपम्। स्मृतिराचारमप्युपलक्षयति। चतुर्थे—उद्भिच्चित्रादिनामरूपम्॥ १३॥

**उपोद्घातः कर्मभेदमानं तस्यापवादगीः।**
**प्रयोगभेद इत्येते द्वितीयाध्यायपादगाः॥ १४॥**

द्वितीयाध्यायस्य प्रथमे पादे—आख्यातमेवापूर्वबोधकम्, अपूर्वसद्भावश्चेत्यादिकः कर्मभेदचिन्तोपयुक्त उपोद्घातो वर्णितः। द्वितीये—धातुभेदपुनरु-

---

१ ख. °र्थकत्वे°। २ क. घ. °सदसद्भाव°। ३ क. ग. घ. ङ. °व इत्या°।

त्यादिभिः कर्मभेदः । तृतीये—रथंतरादीनां कर्मभेदप्रामाण्यापवादः । चतुर्थे—नित्यकाम्ययोः प्रयोगयोर्भेदः ॥ १४ ॥

श्रुतिर्लिङ्गं च वाक्यादिविरोधप्रतिपत्तयः ।
अनारभ्योक्तिबह्वर्थस्वाम्यर्था अष्टपादगाः ॥ १५ ॥

तृतीयाध्यायस्य प्रथमे पादे—शेषत्वबोधकानां श्रुतिलिङ्गादीनां मध्ये श्रुतिर्विचारिता । द्वितीये—लिङ्गम् । तृतीये—वाक्यप्रकरणादि । चतुर्थे—निवीतोपवीतादिष्वर्थवादत्वविधित्वादिनिर्णयहेतुः श्रुत्यादेः परस्परविरोधसदसद्भावः । पञ्चमे—प्रतिपत्तिकर्माणि । षष्ठे—अनारभ्याधीतानि । सप्तमे—बहुप्रधानोपकारकप्रयाजादीनि । अष्टमे—याजमानानि ॥१५॥

प्रधानस्य प्रयोक्तृत्वमप्रधानप्रयोक्तृता ।
फलचिन्ता जघन्याङ्गचिन्तेत्येते चतुर्थगाः ॥ १६ ॥

चतुर्थाध्यायस्य प्रथमे पादे—प्रधानभूताऽऽमिक्षा दध्यानयनस्य प्रयोजिकेत्यादि प्रधानप्रयोक्तृत्वं विचारितम् । द्वितीये तु—अप्रधानं वत्सापाकरणं शाखाछेदे प्रयोजकमित्याद्यप्रधानप्रयोक्तृत्वम् । तृतीये—जुहूपर्णमयीत्वादेरपापश्लोकश्रवणादिफलभावाभावचिन्ता । चतुर्थे—राजसूयगतजघन्याङ्गाक्षद्यूतादिचिन्ता ।१६

श्रुत्यादिभिः क्रमस्तस्य विशेषो वृद्ध्यवर्धने ।
श्रुत्यादेर्बलिता चेति पञ्चमाध्यायपादगाः ॥ १७ ॥

पञ्चमाध्यायस्य प्रथमे पादे—श्रुत्यर्थपाठादिभिः क्रमो निरूपितः । द्वितीये—वाजपेयगतेषु सप्तदशसु पशुष्वेकैकधर्मसमापनमित्यादिक्रमविशेषः । तृतीये—पञ्चप्रयाजादीनामावर्तनेनैकादश्यमित्यादिवृद्धिः, अदाभ्यग्रहचित्रिण्योरनावृत्तिरित्यादिवृद्ध्यभावः । चतुर्थे—क्रमनियामकानां श्रुत्यर्थपाठादीनां प्रबलदुर्बलभावः ।

अधिकारी तस्य धर्माः प्रतिनिध्यर्थलोपने ।
दीक्षा सत्रं देयवह्नी षष्ठे पादेष्वमी स्थिताः ॥ १८ ॥

षष्ठाध्यायस्य प्रथमे पादे—कर्माधिकारः कर्तुरस्ति, अन्धादेर्नास्ति, स्त्रिया अस्ति, स च पत्या सह, इत्येवमादिनाऽधिकारी निरूपितः । द्वितीये—सत्राधिकारिणां प्रत्येकं कृत्स्नं फलम्, दर्शपूर्णमासयोः कर्त्रैक्यनियमः, काम्यं कर्म समापनीयम्, इत्येवमादयोऽधिकारिधर्मा उक्ताः । तृतीये—द्रव्यस्य प्रतिनिधिरस्ति, देवादीनामग्न्यादीनामधिकारिणश्च स नास्ति, इत्यादिनिरूपणम् । चतुर्थे—पदार्थलोपनं विचारितम्, 'अवत्तनाशे सत्याज्येन यजेत्, इडाज्यस्य नाशे सति शेषान्नं ग्राह्यम्' इत्यादिकम् ।

१ क. °क्यभेदक° । २ क. °सद्भा° । ३ क. °कृत्वम् । द्वि° । ४ घ. जुहूवाः प° ।

पञ्चमे—कालापराधेन चन्द्रोदये सत्यभ्युदयेष्टिः प्रायश्चित्तम्, ज्योतिष्टोमस्यैकादयो दीक्षाः, द्वादशाहस्य द्वादश दीक्षाः, इत्यादि निरूपितम् । षष्ठे—सत्राधिकारिणस्तुल्यकल्पा एव, सत्रं विप्रस्यैव, इत्येवमादिकं चिन्तितम् । सप्तमे—पित्रादिकं न देयम्, महाभूमिर्न देया, इत्येवमादिर्देयविचारः । अष्टमे—लौकिकाग्नावुपनयनहोमः, स्थपतीष्टिस्तथैव, इत्येवमाद्यग्निविचारः कृतः ॥ १८ ॥

प्रत्यक्षोक्त्यतिदेशोऽस्य शेषः नामनिरूपणम् ।
नामलिङ्गातिदेशौ द्वौ सप्तमाध्यायपादगाः ॥ १९ ॥

सप्तमाध्यायस्य प्रथमे पादे—'समानमितरच्छ्येनेन' इत्यादिप्रत्यक्षवचनातिदेशः । द्वितीये—रथंतरशब्देन गानमात्राभिधायिना गानस्यैवातिदेश्यत्वमित्येतादृशः पूर्वोक्तातिदेशस्य शेषो विचारितः । तृतीये—अग्निहोत्रनाम्नाऽतिदेशः । चतुर्थे—निर्वापौषधद्रव्यादिलिङ्गातिदेशः ॥ १९ ॥

स्पष्टलिङ्गादथास्पष्टात्प्रबलादपवादतः ।
अतिदेशविशेषाः स्युरष्टमाध्यायपादगाः ॥ २० ॥

अष्टमाध्यायस्य प्रथमे पादे—स्पष्टेन लिङ्गेनातिदेशविशेषः । तद्यथा—सौर्यचरावतिदेशकानि निर्वापः, तल्लिङ्गेन देवतानिर्देशः, एकदेवतत्वम्, औषधद्रव्यकत्वम्, इत्यादीनि स्पष्टान्याग्नेयलिङ्गानि । द्वितीये तु—अस्पष्टैर्लिङ्गैरतिदेशः । तद्यथा—वाजिने हविःसामान्येन लिङ्गेन पयोविध्यन्तोऽतिदिश्यते । तत्र लिङ्गमस्पष्टम् । शीघ्रं तद्बुद्ध्यनुत्पादनात् । तृतीये—प्रबलेन लिङ्गेनातिदेशः । तद्यथा—आभिचारिकेष्वाग्नावैष्णवसारस्वतबार्हस्पत्येषु हविःषु त्रित्वेन लिङ्गेन यथाक्रममाग्नेयादिविध्यन्ते प्राप्ते द्विदैवत्यत्वेन लिङ्गेन प्रथम आग्नावैष्णवे तृतीयस्याग्नीषोमीयस्य विध्यन्तोऽतिदिष्टः । प्रबलं च द्विदैवत्यत्वम् । शब्दोच्चारणमात्रेण सहसा प्रतिभासात् । क्रमस्तु विलम्बितप्रतीत्या दुर्बलः । चतुर्थे—दर्विहोमेष्वतिदेशोऽपोद्यते ॥ २० ॥

ऊहारम्भोऽथ सामोहो मन्त्रोहस्तत्प्रसङ्गतः ।
नवमाध्यायपादेषु चतुर्ष्वेते प्रकीर्तिताः ॥ २१ ॥

नवमाध्यायस्य प्रथमे पादे—उपोद्घातपूर्वकमूहविचारप्रारम्भः । तत्र यथा-

---

१ क. ख. ग. घ. °मे ज्यो° । २ क. ख. विचारितम् । ३ क. ग. घ. °पणात् । ४ क. °न्द्येयाति° । ५ क. °न साममा° । ६ ख. °नस्य वा° । ७ ख. विशेषो । ८ क. ख. ग. घ. °इमस्य । ९ क. स यथा । १० क. °वतिदेशकानिर्देशे एक इति । ११ क. ख. घ. °त्वम् । इ° । १२ क. °ष्टाग्ने° । १३ क. °स्पष्टेन लिङ्गेन । घ. °स्पष्टलिङ्गे° । १४ क. स यथा । १५ क. °ध्यन्तातिदिश्य° । १६ घ. तत्त्व° । १७ क. °नुपादाना° । १८ क. °शः । आ° । १९ क. °के कर्मण्याग्ना° । २० क. °से प्र° । २१ क. °ष्णवस्तृती° । २२ क. °र आरब्धः । त° । ख. °रप्रसङ्गः । त° ।

जादयो धर्मा अपूर्वप्रयुक्ताः । अवघातमन्त्रादिष्वविवक्षितं व्रीह्यग्न्यादिस्वरूपं साधनविशेषत्वमात्रं विवक्षितमित्यादिरूपोद्घातः। सवित्रश्विपूषशब्दानां विकृतिषु नास्त्यूहः । अग्निशब्दस्यास्त्यूह इत्यादिक ऊहविचारारम्भः । द्वितीये—सपरिकरः सामोहः । तृतीये—मन्त्रोहः । चतुर्थे—मन्त्रोहप्रसङ्गापतितो विचारः ॥२१॥

**द्वारलोपोऽस्य विस्तारः कार्यैकत्वं समुच्चयः ।**
**ग्रहसामप्रकीर्णानि नञर्थश्चाष्टपादगाः ॥ २२ ॥**

दशमाध्यायस्य प्रथमे पादे—बाधहेतुर्द्वारलोपो निरूपितः। तद्यथा -'स्वयंकृता वेदिर्भवति' इत्यत्र वेदिनिष्पादनरूपस्य द्वारस्य लोपेन निष्पादकानामुद्धननादीनां बाधः। कृष्णलेषु वितुषीकरणरूपस्य द्वारस्य लोपेनावघातस्य बाधः। द्वितीये—संक्षेपेणोक्तस्य द्वारलोपस्य बहुभिरुदाहरणैर्विस्तारः। तृतीये—बाधकारणं कार्यैकत्वम् । तद्यथा—प्रकृतौ गवाश्वादिदक्षिणाया ऋत्विक्परिक्रयः कार्यम्। तथा विकृतिरूपे भूर्नामन्येकाहे धेनुरूपाया दक्षिणायास्तदेव कार्यम् ।ततो धेन्वा गवाश्वादिदक्षिणा विकृतौ चोदकप्राप्ता बाध्यते । चतुर्थे—नक्ष[illegible]हिता उपहोमाश्चोदकप्राप्तैर्नारिष्ठहोमैः सह समुच्चीयन्ते, इत्यादिः समुच्चयः । पञ्चमे—षोडशिग्रहः प्रकृतिगामी । स चाऽऽग्रयणपात्रादेव ग्रहीतव्यः, इत्यादिर्बाधप्रसङ्गागतो ग्रहादिविचारः। षष्ठे—'साम तृचे गेयम् ' इत्यादिर्बाधप्रसङ्गागतः सामविचारः । सप्तमे—पश्वङ्गेषु—प्रत्यङ्गं हविर्भेदः, न कृत्स्नः पशुर्हविर्भेदः । गृहमेधीयमपूर्वं कर्मेत्यादिर्बाधप्रसङ्गागतः प्रकीर्णविचारः। अष्टमे—'नानुयाजेषु' इति पर्युदासः, 'न सोमे' इत्यर्थवादः, 'नातिरात्रे' इति प्रतिषेधः ' इत्यादिर्बाधोपयुक्तो नञर्थविचा[illegible] ॥२२॥

**उपोद्घातस्तथा तन्त्रावापौ तन्त्रस्य विस्तृतिः ।**
**आवापविस्तृतिश्चैकादशाध्यायस्य पादगाः ॥ २३ ॥**

एकादशाध्यायस्य प्रथमे पादे—तन्त्रस्योपोद्घातो वर्णितः । द्वितीये—तन्त्रावापौ संक्षेपेणोक्तौ । तृतीये—तन्त्रमुदाहरणबाहुल्येन प्रपञ्चितम् । चतुर्थे—तथैवाऽऽवापः प्रपञ्चितः ॥ २३ ॥

---

१ क. °प्रयुक्ताव° । २ क. °तधर्मादिष्व° । ३ क. घ. °व्रीह्यादि° । ४ क. °दिरूपोऽवघात° । ५ क. °तः सावित्राश्वि° । ६ क. °चारः । द्वि° । ख. °चारसंभवः । द्वि° । ७ ख. °सद्रूप° । ८ घ. °यप्र° । ९ क. °थमपा° । १० क. °धद्वारा लो° । ११ क. °म ताश्विष्पा° । १२ क. °नामक एका° । १३ ख. ग. घ. स त्वाग्र° । १४ क. षष्ठे पृष्ठ्य—इहाप्रहद्रथंतरं सामेत्यत्र केषुचिदहःसु रथंतरं केषुचिद्बृहदिति स्यात् । तत्र प्रत्यहं समुच्चयः । सप्तमे अग्नीषोमीये प्रत्यङ्गं हविर्भेदेन कृत्स्नः पशुरेकं हविः पशोर्हृदयाद्यङ्गानां हविष्ट्वेन संकीर्तनमितराङ्गपरिसंख्यार्थमित्यादि । १५ ख. ङ. °षु ह° । १६ घ. ङ. °दः। गृ° । १७ क. अष्टमे नानुयाजेषु ये यजामहं करोति इत्यादावनुयाजव्यतिरिक्तेषु यजतिषु ये यजामहं करोतीति पर्युदासः । न त्वित्यादि । १८ ख. घ. यद्वतादि ।

प्रसङ्गस्तन्त्रिनिर्णीतिः समुच्चयविकल्पने ।
द्वादशाध्यायपादार्था इति पादार्थसंग्रहः ॥ २४ ॥

द्वादशाध्यायस्य प्रथमे पादे—पशुधर्माणां पशुपुरोडाशे प्रसङ्गः, सौमिकवेदेरुत्तरकालीनकर्मसु प्रसङ्गः, इत्यादिविचारः । द्वितीये—सवनीयपशोस्तन्त्रित्वम्, न तु सवनीयपुरोडाशानाम् । विकृतिस्तान्त्रिणी, न प्रकृतिः, अन्वारम्भणीया विकृतिष्वपि स्यात्, न तु प्रकृतावेवेत्यादिविचारः । तृतीये—स्वरवाससोः समुच्चयः । आधारगतानामृजुत्वसंततत्वादीनां समुच्चय इत्यादिकं प्राधान्येन, यवव्रीह्योर्विकल्प इत्यादिकं समुच्चयापवादत्वेन, इत्युभयं चिन्तितम् । चतुर्थे च—ऐन्द्राबार्हस्पत्ययाज्यानुवाक्यायुगलयोर्विकल्प इत्यादिकं प्राधान्येन, याज्यानुवाक्ययोः समुच्चय इत्यादिकं विकल्पापवादत्वेनेत्युभयं चिन्तितम् । चतुर्थे च—ऐन्द्राबार्हस्पत्ययाज्यानुवाक्यायुगलयोर्विकल्प इत्यादिकं प्राधान्येन, याज्यानुवाक्ययोः समुच्चय इत्यादिकं विकल्पापवादत्वेनेत्युभयं चिन्तितम् । तदेवं द्वादशाध्यायगतेषु षष्टिसंख्याकेषु पादेषु प्रतिपाद्या अर्थाः संगृहीताः ॥ २४ ॥

ननु यथोक्तेभ्यः पादार्थेभ्योऽन्येऽप्यर्था बहवस्तत्तत्पादेषु विचार्यन्ते, तेषां कथं तत्तत्पादान्तर्भाव इत्याशङ्क्याऽऽह—

उपोद्घातापवादाभ्यां प्रसङ्गानुप्रसङ्गतः ।
तत्तत्पादगतत्वेन विचारान्तरमुन्नयेत् ॥ २५ ॥

यथोक्तपादप्रतिपाद्यादन्येष्वर्थेषु यथोचितं कश्चिदुपोद्घातः, कश्चिदपवादः, कश्चित्प्रसङ्गपतितः, कश्चिदनुप्रसङ्गपतितः, इत्येवं पादान्तर्भाव उन्नेयः ॥ २५ ॥

ननु सन्त्वेवमध्यायानां पादानां च व्यवस्थिता अर्थाः । तदीयस्तु क्रमः कथमवगन्तव्य इत्यत आह—

शास्त्रे पूर्वोत्तरीभावोऽध्यायानामभिधास्यते ।
पादानां तु तमत्रैव लेशाद्व्युत्पादयामहे ॥ २६ ॥

एकस्मिन्नध्याये समाप्ते सति, अध्यायान्तरारम्भे, तयोरध्याययोः पूर्वापरीभावो वक्ष्यते ॥ २६ ॥

प्रथमाध्यायगतानां पादानां पूर्वोत्तरीभाव उदाहृते सति तद्दृष्टान्तेन पादान्तरेष्वपि तस्यैवोत्प्रेक्षितुं शक्यतया तमुदाहरति—

विधिः साक्षाद्विनिर्दिष्टस्तस्य शेषोऽर्थवादगीः ।
वेदमूला स्मृतिर्नाम शास्त्रांशोऽभिहितः क्रमः ॥ २७ ॥

जिज्ञासितस्य धर्मस्य प्रतिज्ञाते धर्मे विधिवाक्यं साक्षात्प्रमाणमिति तद्विचारः प्रथमे पादे गतः । ततोऽर्थवादवाक्यस्य विधिद्वारा प्रामाण्यं विध्यानन्तरभावित्वम् स्मृति-

१ क. स्तत्र निर्णीतिः स° । २ क. त्वेना द्वा° । ३ ग. °कं विकल्पाप° । ४ क. °दिनांप्र° । ५ क. °नेत्येतद्रूपं चि° । ६ क. ख. ग. °ष्वः पा° । ७ क. °न प्रसक्तान्त° । ८ घ. °व तद्वला व्युत्पा° ।

वाक्यस्य सार्थवादविधिरूपवेदमूलतया प्रामाण्यादर्थवादोत्तरभावित्वम् । नामधेयस्य वाक्यैकदेशत्वेन पूर्वोक्तत्रिविधवाक्यविचारोत्तरकालीनत्वम् । अनेन न्यायेनोत्तराध्यायगतपादानां परस्परं क्रम उन्नेयः ॥ २७ ॥

इत्थं शास्त्रस्याध्यायानां पादानां च क्रमविशेषविशिष्टानामसाधारणप्रतिपाद्यमर्थं निरूप्य तन्निर्णयफलं दर्शयति——

ऊहित्वा संगतीस्तिस्रस्तथाऽवान्तरसंगतिम् ।
ऊहेताऽऽक्षेपदृष्टान्तप्रत्युदाहरणादिकम् ॥ २७ ॥

शास्त्रादिप्रतिपाद्यार्थसंबन्धितयाऽधिकरणे योजिते सति तस्याधिकरणस्य शास्त्रसंगतिः, अध्यायसंगतिः, पादसंगतिश्चेति तिस्र ऊहिता भवन्ति । तद्यथा—प्रथमाध्यायस्य प्रथमपादस्य द्वितीयाधिकरणे धर्मस्य लक्षणप्रमाणराहित्यं पूर्वपक्षीकृत्य तत्सद्भावः प्रतिपादितः । तस्याधिकरणस्य धर्मसंबन्धितया धर्मविचारशास्त्रे संगतिः । प्रमाणविचाररूपत्वात्प्रथमाध्याये संगतिः । विधिवाक्यस्य प्रमाणत्वेनोपन्यासात्प्रथमपादे संगतिः। यथैतत्संगतित्रयमूहितम्, तथा पूर्वोत्तराधिकरणयोः परस्परमवान्तरसंगतिरूहनीया । सा चानेकरूपा—आक्षेपसंगतिः, दृष्टान्तसंगतिः, प्रत्युदाहरणसंगतिः, प्रासङ्गिकसंगतिः, उपोद्घातसंगतिः, अपवादसंगतिश्चेत्येवमादिरूपा ॥ २७ ॥

तासामाक्षेपादिसंगतीनामूहं व्युत्पादयति——

पूर्वन्यायस्य सिद्धान्तयुक्तिं वीक्ष्य परे नये ।
पूर्वपक्षोक्तयुक्तिं च तत्राऽऽक्षेपादि योजयेत् ॥ २८ ॥

तदेतत्सर्वं योजयित्वा प्रदर्श्यते—प्रथमेऽध्याये प्रथमपादस्य प्रथमाधिकरणगतो 'धर्मविचारशास्त्रं वैधम्' इति सिद्धान्तः । 'अर्थज्ञानहेतावध्ययने नियमविधेः संभवात्' इति तद्युक्तिः । द्वितीयाधिकरणे—'धर्मे लक्षणं प्रमाणं च नास्ति' इति पूर्वपक्षः । 'लौकिकाकारहीनत्वात्, प्रत्यक्षाद्यप्रवृत्तेश्च' इति तद्युक्तिः । तया युक्त्या धर्मस्य लक्षणप्रमाणराहित्ये सति नरविषाणसमो धर्म इति तद्विचारशास्त्रस्य विधेयत्वमनुपपन्नमित्याक्षेपसंगतिः । यथा प्रथमाधिकरणे नियमविधिसंभवेन हेतुना विचारशास्त्रस्य विधेयत्वमुक्तम्, तथा द्वितीयाधिकरणे लौकिकाकारहीनत्वप्रत्यक्षाद्यप्रवृत्तिरूपेण हेतुना धर्मे लक्षणप्रमाणे न स्त इति दृष्टान्तसंगतिः । यथा प्रथमाधिकरणसिद्धान्ते पूर्वोक्तयुक्तिरवलोक्यते, तथा द्वितीयाधिकरणे कांचिदपि युक्तिं न पश्यामि इति प्रत्युदाहरणसंगतिः । एते दृष्टान्त-

१ क. °लत्वेन प्रा° । २ क. °क्तविधिवा° । ३ क. °न्निरूपणफ° । ४ ङ. °थावान्त° । ५ ख. ग. °शास्त्रसं° । ६ ख. ग. °ध्यायसं° । ७ ख. घ. °तिः प्रसङ्गसं° । ८ ङ. °थमाध्या° । ९ घ. °ररहितत्वा° । १० क. °प्रमाणराहित्यं वक्तव्यम् । ११ क. °चिद्युक्तिं । १२ क. °श्याभीति ।

प्रत्युदाहरणसंगती मन्दबुद्धिभिरपि सर्वत्रोत्प्रेक्षितुं शक्येते। पञ्चमाधिकरणे विधिवाक्यस्य निरपेक्षत्वात्प्रामाण्यं वर्णितम्। तस्य च वाक्यस्य शब्दार्थयोर्मध्ये शब्दकोटिनिविष्टत्वाद्वाक्यप्रसङ्गेन शब्दनित्यत्वं षष्ठाधिकरणे वर्ण्यत इति प्रासङ्गिकसंगतिः। सप्तमाध्यायस्य चतुर्थे पादे द्वितीयाधिकरणेन सौर्यादिविकृतिषु वैदिकमङ्गजातमुपदेष्टुं तदुपयोगित्वेन प्रथमाधिकरणे धर्मसापक्षत्वं साधितम्। तत्र प्रथमाधिकरणमुपोद्घातः। सेयमुत्तराधिकरणेन सह पूर्वाधिकरणस्योपोद्घातसंगतिः। प्रथमाध्यायस्य तृतीयपादस्य प्रथमाधिकरणे—अष्टकादिस्मृतेः प्रामाण्यमुक्तम्। द्वितीयाधिकरणे—सर्ववेष्टनस्मृतेः पूर्ववत्प्राप्तंप्रामाण्यमपोद्यते। सेयमपवादसंगतिः। अनया दिशा सर्वत्र संगतिरूहनीया ॥ २८ ॥

( प्रथमे धर्मशास्त्रारम्भप्रतिज्ञाधिकरणे सूत्रम् )

अथातो धर्मजिज्ञासा ॥ १ ॥

इत्थं संगतीर्व्युत्पाद्याथ प्रत्यधिकरणं विषयसंशयपूर्वपक्षसिद्धान्तांश्चतुरोऽवयवान्संजिघृक्षुः प्रथमाध्यायस्य प्रथमे पादे प्रथमाधिकरणं प्रदर्शयन्नाऽऽरचयति—

स्वाध्यायोऽध्येय इत्यस्य विधानस्य प्रयुक्तितः।
विचारशास्त्रं नाऽऽरभ्यमारभ्यं वेति संशयः ॥ २९ ॥
अर्थधीहेतुताऽधीतेर्लोकसिद्धावघातवत्।
नियामकं न चैवातो वैधारम्भो न संभवी ॥ ३० ॥
दर्शापूर्ववदस्त्यत्र क्रत्वपूर्वं नियामकम्।
अर्थनिर्णायकं शास्त्रमत आरभ्यतां विधेः ॥ ३१ ॥

"चोदनालक्षणोऽर्थो धर्मः" इत्यारभ्य "अन्वाहार्ये च दर्शनात्" इत्येतदन्तं जैमिनिप्रोक्तं सूत्रजातं धर्मविचारशास्त्रम्। तदेतस्य प्रथमाधिकरणस्य विषयः 'स्वाध्यायोऽध्येतव्यः' इत्यध्ययनविधिरक्षरग्रहणमात्रपर्यवसायीति केचिन्मन्यन्ते। अपरे त्वेवमाहुः—'अर्थज्ञानरूपदृष्टप्रयोजनायेदमध्ययनं विधीयते। अर्थज्ञानं विचारमन्तरेण न संभवति। ततो विधिर्विचारशास्त्रस्य प्रयोजकः' इति। तत्रैवं संशयः—'इदं विचारशास्त्रं विधिप्रयुक्त्या नाऽऽरम्भणीयम्, उताऽऽरम्भणीयम्' इति। तत्र 'अर्थज्ञानायाध्ययनस्य विधिः' इति वदन्वादी प्रष्टव्यः—किमेतदत्यन्तमप्राप्तमध्ययनं विधीयते, किंवा पक्षेऽप्राप्तमवघात-

१ क. °तिभेदेषु। २ क. घ. °तमतिदे°। ३ क. °ण उपोद्घातसंगतिः। से°। ४ क. °त्प्रामा°। ख. ङ. °त्प्राप्तं प्रा°। ५ क. °त्पाद्य प्र°। ६ क. ङ. °यमपा°। ७ ख. घ. °शास्त्रमारभ्यं नाऽऽरभ्यं। ८ क. °कं च नैवा°। ९ क. अतो। १० क. किमेतदत्य°। ११ क. प्राप्तत्वादव°।

न्नियम्यते, इति । नाऽऽद्यः—'विमतं वेदाध्ययनमर्थज्ञानहेतुः, अध्ययनत्वात्, भारताध्ययनवत्, इत्यनुमानेनैव विधिनिरपेक्षेण प्राप्तत्वात् । तर्ह्यस्तु द्वितीयः पक्षः । अवघातवन्नियमविधित्वसंभवात् । यथा नखैरवघातेन वा तण्डुलनिष्पत्तिसंभवात्पक्षेऽप्राप्तोऽवघातो विधिनाऽवश्यं कर्तव्य इति नियम्यते, तथा लिखितपाठेन गुरुपूर्वकाध्ययनेन वाऽर्थज्ञानसंभवात्पक्षेऽप्राप्तमध्ययनं विधिना नियम्यत इति चेत् । न । वैषम्यात् । अवघातनिष्पन्नैरेव तण्डुलैरवान्तरापूर्वद्वारेण दर्शपूर्णमासौ परमापूर्वं जनयतः, नान्यथा । ततो दर्शपूर्णमासापूर्वमवघातस्य नियमहेतुः । अत्र तु लिखितपाठजन्येनैवार्थज्ञानेन क्रत्वनुष्ठानसिद्धेरध्ययनस्य नियमहेतुर्नास्ति । अतो द्विविधविध्यसंभवादर्थज्ञानहेतुविचारशास्त्रारम्भस्य वैधत्वं नास्ति । तर्हि श्रूयमाणस्य विधेः का गतिरिति चेत्, स्वर्गायाक्षरग्रहणमात्रं विधेयमिति वदामः । अश्रुतोऽपि स्वर्गो विश्वजिन्न्यायेन कल्पनीयः । "स स्वर्गः स्यात्सर्वान्प्रत्यविशेषात्" [ पू० मी० सू० ४ । ३ । १५ ] इति सूत्रेण विश्वजित्यश्रूयमाणमप्यधिकारिणं संपादयितुं तद्विशेषणं स्वर्गफलं युक्त्या स्थापितम् । तद्वदध्ययनेऽप्यस्तु । एतदेवाभिप्रेत्योक्तम्—

"विनाऽपि विधिना दृष्टलाभान्नहि तदर्थता ।
कल्प्यस्तु विधिसामर्थ्यात्स्वर्गो विश्वजिदादिवत्" ॥ इति ।

एवं च सति 'वेदमधीत्य स्नायात्' इति शास्त्रमनुगृह्यते । अस्मिञ्शास्त्रे वेदाध्ययनसमावर्तनयोर्नैरन्तर्यं प्रतीयते । त्वत्पक्षे तु—अधीतेऽपि वेदे धर्मविचारणाय गुरुकुल एवाधिवासः कर्तव्यः । तथा सति तन्नैरन्तर्यं बाध्यते । तस्माद्विचारशास्त्रस्य वैधत्वाभावात्पाठमात्रेण धर्मसिद्धेः समावर्तनशास्त्राच्च धर्मविचारशास्त्रं नाऽऽरम्भणीयमिति पूर्वः पक्षः ।

अत्रोच्यते—यदुक्तम्—'लोकसिद्धत्वान्नाप्राप्तविधिः' इति । तत्तथैवास्तु । नियमविधित्वं तु न वारयितुं शक्यम् । यथा दर्शपूर्णमासजन्यं परमापूर्वमवघातनियमजन्यस्यावान्तरापूर्वस्य कल्पकम्, एवमशेषक्रतुजन्यमपूर्वजातं क्रतुज्ञानसाधनाध्ययननियमजन्यस्यापूर्वस्य कल्पकं भविष्यति । नियमादृष्टाङ्गीकारे च श्रूयमाणे विधिरनर्थकः स्यात् । न च विश्वजिन्न्यायेन स्वर्गार्थत्वं युक्तम् । दृष्टफलेऽर्थज्ञाने संभवत्यदृष्टस्य कल्पयितुमशक्यत्वात् । अत एवोक्तम्—

१ क. दर्शापूर्व° । २ क. ग. °शास्त्रस्य । ३ क. वैषम्यं । ४ क. निर्णीतम् । ५ क. ख. ग. घ. तद° । ६ क. °गृहीतं स्यात् । अ° । ७ ङ. तत्पक्षे । ८ क. एव निवासः । ९ क. बाध्येत । १० क. °स्त्रस्याविधेयत्वात्पा° । ११ क. °ण स्वर्गादिसि° । १२ क. °श्च ना° । १३ क. °मत्राप्यशे° । १४ क. °ष्यतीति । १५ क. °रे श्रू° ।

" लभ्यमाने फले दृष्टे नादृष्टपरिकल्पना।
विधेस्तु नियमार्थत्वान्नाऽऽनर्थक्यं भविष्यति " ॥ इति।

नन्वेवमपि श्रुतव्याकरणाद्यङ्गस्याधीतवेदस्य पुरुषस्यार्थज्ञानसंभवाद्विचारशास्त्रस्य वैयर्थ्यमिति चेत्। न। ज्ञानमात्रसंभवेऽपि निर्णयस्य विचाराधीनत्वात्। 'अक्ताः शर्करा उपदधाति' इत्यत्र 'घृतेनैव, न तैलादिना' इत्ययं निर्णयो व्याकरणेन निरुक्तेन निगमेन वा न सिध्यति। विचारशास्त्रं तु 'तेजो वै घृतम्' इति वाक्यशेषादर्थं निर्णेष्यति। अतो विचारो वैधः। 'वेदमधीत्य स्नायात्' इति शास्त्रं त्वध्ययनसमावर्तनयोः पूर्वापरीभावसमानकर्तृकत्वे एवाचष्टे, न त्वानन्तर्यम्। तस्माद्विधिवशादेव विचारशास्त्रमारम्भणीयमिति सिद्धान्तः ॥२९॥३०॥३१॥

अस्मिन्नेवाधिकरणे गुरुमतमाह—

अथवाऽध्यापनात्सिद्धेर्नैवास्त्यध्ययने विधिः।
तेन पूर्वोत्तरौ पक्षौ प्रसाध्यावन्यहेतुभिः ॥ ३२ ॥
विधेयाध्यापनं सिध्येद्बालस्यार्थधियं विना।
तेन निर्विषयं शास्त्रं निष्फलं चेत्युपेक्ष्यताम् ॥ ३३ ॥
स्वतःप्राप्तार्थबोधस्य विवक्षानपनोदनात्।
विषयादि सुसंपादं शास्त्रमारभ्यते ततः ॥ ३४ ॥

'अष्टवर्षं ब्राह्मणमुपनयीत, तमध्यापयीत' इत्यध्यापनं विहितम्। न चात्र नियोज्याभावः। आचार्यत्वकामिनो नियोज्यत्वात्। 'उपनयीत' इत्यनेनाऽऽचार्यकरणे " संमाननोत्सञ्जनाचार्यकरणज्ञानभृतिविगणनव्ययेषु नियः " [ पा० सू० १। ३। ३६ ] इति पाणिनिसूत्रेण विहितेनाऽऽत्मनेपदेन नियोज्यविशेषणमाचार्यत्वं प्रतीयते। उपनयने यो नियोज्यः। स एवाध्यापनेऽपि। तयोरेकप्रयोजनत्वात्। एवं सत्याचार्यकर्तृकमध्यापनं माणवककर्तृकेणाध्ययनेन विना न सिध्यतीत्यध्यापनविधिप्रत्युक्त्यैवाध्ययनानुष्ठानसिद्धेर्न पृथगध्ययने विधिरभ्युपगन्तव्यः। श्रूयमाणं विधिवाक्यं नित्यानुवादत्वेनाप्युपपद्यते। ततोऽध्ययनविधिमुपजीव्य पूर्वमुपन्यस्तौ पूर्वोत्तरपक्षावन्यथा वर्णनीयौ। विषयसंशयावस्तु नास्ति विप्रतिपत्तिः। विचारशास्त्रं विषयः। अवैधं वैधं वेति संशयः। तत्र वैधत्ववादी प्रष्टव्यः—विधेयमाचार्यकर्तृकमध्यापनं किं माणवकस्यार्थज्ञानमपि प्रयुञ्जीत किंवा पाठमात्रम्। नाऽऽद्यः। अन्तरेणाप्यर्थज्ञानमध्यापनासिद्धेः।

१ क. ख. °ज्ञानासं°। २ क. पूर्वोत्तरौ°। ३क. °नं बालस्यार्थधीहेतुतां वि°। ४ क. अतो। ५ क. विषादिषु च संबादं। ङ. विषयादिसमुत्पाद्यं। ६ ख. °त्यध्ययनं। ७ ग. °र्यकरणत्वं। ८ क. °योगत्वा°। ख. °योज्यत्वा°। ९ ग. °ज्ञानं सिध्येन्न पू°। १० क. °स्ति प्र°। ११ क. °मध्ययन°।

पाठमात्रे तु विचारस्य विषयो न भवति[1]। आपाततः प्रतीतः संदिग्धोऽर्थो विषयः। तथा सति यत्रार्थप्रतीतिरेव नास्ति तत्र संदेहस्य का कथा। निर्णयो विचारस्य फलम्। सोऽपि विषयवद्दूरापेतः। अतो विषयप्रयोजनाभावाद्विचारशास्त्रं नाऽऽरम्भणीयमिति पूर्वः पक्षः।

अत्रोच्यते—मा[2] नामाध्यापनेनार्थावबोधः प्रयुज्यताम्। तथाऽपि साङ्गवेदाध्यायिनो निगमनिरुक्तव्याकरणैर्व्युत्पन्नस्य[3] पौरुषेयग्रन्थेष्विव[4] वेदेऽप्यर्थावबोधः[5] स्वत एव प्राप्नोति। ननु यथा 'विषं भुङ्क्ष्व' इत्यत्र प्रतीयमानोऽप्यर्थो न विवक्षितः, तथा वेदार्थस्या[6]विषयाद्यभावस्तदवस्थ इति चेत्। न। विवक्षाया अपनोदितुमशक्यत्वात्। विषभोजनवाक्यस्याऽऽप्तप्रणीतत्वेन बाधो मा भूदिति मुख्यार्थस्तत्र परित्यक्तः। वेदे तु—कुतो न विवक्षितार्थत्वम्। विवक्षिते च वेदार्थे यत्र यत्र पुरुषस्य संदेहः स सर्वोऽपि विचारशास्त्रस्य विषयः। तन्निर्णयः[7] प्रयोजनम्। ततोऽध्यापनविधिप्रयुक्तेनाध्ययनेन[8] बुध्यमानस्यार्थस्य विचार्यत्वाद्विचारशास्त्रस्य वैधत्वं सिद्धम् ॥३२॥३३॥३४॥

( द्वितीये धर्मलक्षणाधिकरणे सूत्रम् )

चोदनालक्षणोऽर्थो धर्मः ॥ २ ॥

द्वितीया[9]धिकरणं भट्टमतेनाऽऽरचयति—

विचारविषयो धर्मो लक्षणेन विवर्जितः।
मानेनं[10] वाऽथवोपेतस्ताभ्यामिति विचिन्त्यते ॥ ३५ ॥
लौकिकाकारहीनस्य तस्य किं नाम लक्षणम्।
मानशङ्का तु[11] दूरेऽत्र प्रत्यक्षाद्यप्रवर्तनात् ॥ ३६ ॥
चोदनागम्य आकारो[12] ह्यर्थत्वे सति लक्षणम्।
अत एव प्रमाणं च चोदनैवात्र नो कुतः ॥ ३७ ॥

लक्षणप्रमाणाभ्यां हि वस्तुसिद्धिः। अत एवाऽऽहुः—

" मानाधीना मेयसिद्धिर्मानसिद्धिश्च लक्षणात् " इति।

सजातीयविजातीयव्यावर्तको लक्ष्यगतः कश्चिल्लोकेप्रसिद्ध आकारो लक्षणम्। तेन च लक्षणेन लक्ष्ये वस्तुनि संभावनाबुद्धौ जातायां प्रमातुर्मुद्युक्तः[13] प्रमाणेन तदवगच्छति। तद्यथा—'सास्नादिमती गौः' इत्युपश्रुत्य चतुष्पात्सु जीवेषु तल्लक्षणलक्षित[14]पदार्थमन्विष्य 'इत्थं गौः' इति चक्षुषा[15]ऽवगच्छति।

१ ग. °ति। एवमापा°। २ घ. माऽस्तु। ३ क. °रणेषु व्युत्प°। ४ क. °षेयोऽन्यग्रन्थे°। ५ क. °धः स स्व°। ६ ख. °स्याप्यवि°। ७ क. °र्णयश्च प्र°। ८ ङ. °न न नु°। ९ क. ग. °तीयं भ°। १० क. °नेनाप्यथ°। ११ घ. च। १२ क. °कप्रयोगगम्य आ°। १३ क. °मुयतः प्र°। १४ क. °क्षितं तदर्थं निश्चित्य इ°। १५ क. °षा पश्यति

एवं च सत्यलौकिकत्वाद्धर्मस्य नास्ति लक्षणम्। तत्र कुतः प्रमाणानुयोगः। कथंचित्तदुपयोगेऽपि न तत्र प्रमाणसद्भावः शङ्कितुमपि शक्यः। न तावदत्र प्रत्यक्षं क्रमते। धर्मस्य रूपादिरहितत्वात्। अत एव व्याप्तिग्रहणाभावान्नानुमानम्। प्रत्यक्षाद्यनुमानमूलश्च शब्दस्य संगतिग्रहः। ततो व्युत्पत्त्यभावान्नाऽऽगमोऽपि तत्र प्रवर्तते। तस्माद्धर्मो लक्षणप्रमाणरहित इति प्राप्ते ब्रूमः—मा भूच्चक्षुरादिगम्यो लौकिक आकारः। तथाऽपि चोदनागम्यः स्वर्गफलसाधनत्वादिलक्षण आकारोऽस्ति। 'तेन अर्थत्वे सति चोदनागम्यो धर्मः' इति लक्षणं भवति। 'अर्थो धर्मः' इत्युक्ते ब्रह्मणि चैत्यवन्दनादौ घटादौ चातिव्याप्तिः। तद्व्यवच्छेदाय 'चोदनागम्यः' इत्युक्तम्। तावत्येवोक्ते विधिगम्येऽनर्थफलत्वेनानर्थरूपे श्येनाद्यभिचारकर्मण्यतिव्याप्तिः। तद्व्यवच्छेदाय 'अर्थः' इत्युक्तम्। यद्यपि श्येनस्य शत्रुवधः फलम्, नतु नरकः, तथाऽपि[1] तस्य वधस्य नरकहेतुत्वाद्वधद्वारा श्येनोऽनर्थः। न चैवमग्नीषोमीयपशुहिंसाया अपि वधत्वेन नरकहेतुत्वं स्यादिति शङ्कनीयम्। तस्याः क्रत्वङ्गत्वेन क्रतुफलस्वर्गव्यतिरेकेण फलान्तराभावात्। यतश्चोदनागम्यत्वे सत्यर्थत्वं धर्मलक्षणम्। अत एव गम्ये धर्मे गमकं विधिवाक्यं प्रमाणम्। यद्यपि प्रत्यक्षानुमानयोरविषयो धर्मः, तथाऽपि प्रसिद्धपदसमभिव्याहारेण व्युत्पत्तिः संभवति। तस्माल्लक्षणप्रमाणाभ्यामुपेतो धर्मः॥३५॥३६॥३७॥

अस्मिन्नेवाधिकरणे गुरुमतमाह—

यद्वा जिज्ञास्यवेदार्थः किं मन्त्राद्यवबोधितः।
सिद्धार्थोऽप्यथ विध्येकगम्यः कार्यार्थ एव वा॥ ३८॥
सिद्धेऽपि पुत्रजन्मादौ व्युत्पत्तेरुपपत्तितः।
मन्त्रादिगम्यसिद्धस्य वेदार्थत्वेऽपि का क्षतिः॥३९॥
हर्षहेतुबहुत्वेन व्युत्पत्तिः पुत्रजन्मनि।
दुर्लभा सुलभा कार्ये वेदार्थोऽतः स एव हि॥ ४०॥

"अथातो धर्मजिज्ञासा" [पू० मी० सू० १।१।१] इत्यत्राथशब्देन कृत्स्नवेदाध्ययनानन्तर्यमुच्यते। अतःशब्देन कृत्स्नस्य वेदस्य विवक्षितार्थत्वं हेतुः क्रियते। उक्तशब्दद्वयानुसारेण धर्मशब्दोऽपि कृत्स्नं वेदार्थमाचष्टे। ततः सूत्रे 'वेदार्थो जिज्ञास्यः' इति प्रतिज्ञा कृता। तत्र संशयः—किं मन्त्रार्थवादप्रतीतः सिद्धार्थोऽपि वेदार्थो भवति, किंवा विधिवाक्यप्रतीतः कार्यार्थ एव वेदार्थः, इति। तत्र—

"लोकावगतसामर्थ्यः शब्दो वेदेऽपि बोधकः"

१ क. शक्येत। २ ख. ङ. °मास्त्यनु°। ३ ख. °र्मलक्षणम्°। ४ क. °प वध-द्वारा। ५ क. °ङ्गफलस°। ६ ख. °र्थमेव। ७क. प्रसिद्धे। ८ क. दुर्बला। ९ ख. सुतरा। १० क. अतःशब्दः कृत्स्नवेदा°। ११ ङ. हेतुः क्रि°।

इति न्यायेन व्युत्पत्त्यनुसारी वेदार्थो वर्णनीयः। व्युत्पत्तिश्च सिद्धार्थेऽप्यस्ति। 'पुत्रस्ते जातः' इति वार्ताहरव्याहारजन्यं श्रोतुर्हर्षमनुमाय हर्षहेतौ पुत्रजन्मनि संगतिं प्रतिपद्यते। अतो मन्त्रार्थवादप्रतीतोऽप्यर्थो वेदार्थ इति प्राप्ते ब्रूमः—पुत्रजन्मवद्धर्षहेतूनां धनलाभादीनां बहुत्वादस्य वाक्यस्य पुत्रजन्मैवार्थ इति निर्णयो दुर्लभः। 'गामानय' इति वाक्ये तु गवानयनरूपां मध्यमवृद्धप्रवृत्तिमवलोक्य संगतिग्रहणं सुलभम्। तस्मात्कार्यरूप एव वेदार्थ इति ॥ ३८ ॥ ३९ ॥ ४० ॥

( तृतीये धर्मप्रमाणपरीक्षाधिकरणे सूत्रम् )

तस्य निमित्तपरीष्टिः ॥ ३ ॥

तृतीयाधिकरणं भट्टमतेनाऽऽरचयति—

धर्मस्य ज्ञापकं मानं यदुक्तं चोदनात्मकम्।
एतत्किं न परीक्ष्यं स्यात्किंवा सम्यक्परीक्ष्यताम् ॥ ४१ ॥
मानोपदेशान्मेयस्य सिद्धत्वात्किं परीक्षया।
मैवं विचारशास्त्रेऽस्मिन्परीक्षापेक्षते कुतः ॥ ४२ ॥

स्पष्टोऽर्थः ॥ ४१ ॥ ४२ ॥

अस्मिन्नेवाधिकरणे गुरुमतमाह—

आदौ परीक्ष्यो वेदार्थश्चोदनामानताऽथवा।
वेदार्थस्य प्रधानत्वात्प्रथमं तत्परीक्ष्यताम् ॥ ४३ ॥
चोदनामानतैवात्र प्रथमं साध्यतां गता।
अनपेक्षतया तस्य यतो मुख्यत्वमाश्रितम् ॥ ४४ ॥

द्वितीयाध्यायाद्यैः कर्मभेदशेषशेषित्वादिरूपो वेदार्थः सूत्रकारेण परीक्षिष्यते। चोदनाप्रामाण्यं तु प्रथमाध्याये परीक्ष्यते। तदेतदयुक्तम्। कुतः। वेदार्थस्य प्रधानत्वेनाऽऽदौ परीक्षणीयत्वात्। प्रधानभूतो हि वेदः। पुरुषार्थत्वेनानुष्ठेयत्वात्। प्रमाणं तु तदवगमनाय प्रवृत्तं सत्तच्छेषत्वान्न प्रधानमिति प्राप्ते ब्रूमः—अस्त्वनुष्ठाने प्राधान्यं वेदार्थप्रमाणयोः प्रधानोपसर्जनभावः। प्रमाणप्रमेययोर्विचारे तु प्रमाणस्यैव मुख्यत्वं निरपेक्षत्वात्। नहि स्वतःप्रामाण्यवादिनां मते स्वविषये प्रमाणस्यापेक्षास्ति। प्रमेयं तु सापेक्षम्। 'मानाधीना मेयसिद्धिः' इत्युक्तत्वात्। तदेतन्मुख्यत्वमाश्रित्य सूत्रकारः प्रमाणपरीक्षामादौ चकारेति युज्यते। अप्रामाण्या-

१ क. °तिस्तु सि°। २ क. °न्यश्रोतुर्हर्षमिति[illegible]°। ३ क. °रूपो वे°। ४ क. तत्किं मप°। ग. °तात्किंवाऽप°। ५ क. °रीक्ष्य उप°। ६ क. यतः। ७ क. °थमे त°। ८ ख. ग. घ. ङ. °रीक्षणम्। ९ ग. तस्या। १० क. °यत्वा°। ११ ख. ग. घ. ङ. °माणस्य तु। १२ क. परीक्ष्यम्। ख. ग. घ. ङ. परीक्षा। १३ क. तदयुक्तम्। १४ ङ. °तं तत°। १५ क. अनु°।

धान्यमाश्रित्य धर्मविचार एवाऽऽदौ कस्मान्न कृतः। न कृतः—अलौकिकेन प्रमाणेन धर्मस्यासिद्धौ तद्विचारस्याऽऽश्रयासिद्धेः ॥ ४३ ॥ ४४ ॥

तदेवमधिकरणत्रये व्युत्पादनार्थं भाट्टप्राभाकरमतभेद उपन्यस्तः। अथ प्रायेण भट्टमतमेवोपन्यस्यते—

( चतुर्थे धर्मे प्रत्यक्षाद्यगम्यत्वाधिकरणे सूत्रम् )।

सत्संप्रयोगे पुरुषस्येन्द्रियाणां बुद्धिजन्म तत्प्रत्यक्षमनिमित्तं विद्यमानोपलम्भनत्वात् ॥ ४ ॥

चतुर्थाधिकरणमारचयति—

प्रत्यक्षादिभिरप्येष गम्यते विधिनैव वा।
अक्षादीनां प्रमाणत्वान्मेयधर्मावभासिता ॥ ४५ ॥
वर्तमानैकविषयमक्षं धर्मस्तु भाव्यसौ।
अक्षमूलोऽनुमानादिस्तेन विध्येकमेयता ॥ ४६ ॥

अक्षं प्रत्यक्षम्। प्रत्यक्षादीनां प्रमाणत्वात्प्रमेयावभासकत्वं तावदविवादम्। धर्मश्च प्रमेयः, असंदिग्धाविपर्यस्तत्वे सति बुध्यमानत्वात्, घटादिवत्। तस्मात्प्रत्यक्षादिभिरप्येष धर्मो गम्यत इति प्राप्ते—

ब्रूमः—धर्मस्य प्रमेयत्वेऽपि प्रत्यक्षयोग्यता नास्ति। प्रत्यक्षस्य वर्तमानमात्रविषयत्वात्। यस्तु प्रत्यक्षस्यात्यन्तमविषयः, तत्रानुमानादीनां कैव कथा। क्वचित्प्रत्यक्षेण गृहीते व्याप्त्यादौ पश्चादनुमानादीनां प्रवृत्तिः। तस्माद्विधिनैव धर्मो गम्यते ॥ ४५ ॥ ४६ ॥

( पञ्चमे धर्मे विधिप्रामाण्याधिकरणे सूत्रम् )।

औत्पत्तिकस्तु शब्दस्यार्थेन संबन्धः, तस्य ज्ञानमुपदेशोऽव्यतिरेकश्चार्थेऽनुपलब्धे तत्प्रमाणं बादरायणस्यानपेक्षत्वात् ॥ ५ ॥

पञ्चमाधिकरणमारचयति—

१ क. °तः। अ°। २ ख. न—अ°। ३ ग. °दतदधि°। ४ क. ङ. °ब भट्ट°। ५ ग. च। ६ क. °कत्वमवि°। ७ ख. ग. घ. °त, पटा°। ८ क. °मानैकवि°। ९ क. °यश्च। १० क. °व ग°।

अबोधको बोधको वा न तावद्बोधको विधिः ।
शक्तेरलौकिके धर्मे ग्रहणं दुर्घटं यतः ॥ ४७ ॥
समभिव्याहृते धर्मे शक्तिग्रहणसंभवात् ।
बोधकेस्य विधेर्मात्वमनपेक्षतया स्थितम् ॥ ४८ ॥

यथा धर्मे प्रत्यक्षादीनां प्रामाण्यं नास्ति, तथा विधेरपि नास्त्वे प्रामाण्यम् । शक्तिग्रहणपूर्वकं हि प्रामाण्यमाप्तवाक्यस्य दृष्टम् । शक्तिश्च लोकप्रसिद्धे गवादौ गृह्यते । धर्मस्त्वलौकिकः । अतस्तत्र शक्तिग्रहणं दुर्घटम् । तस्माद्विधेरबोधकत्वान्न धर्मे प्रामाण्यमिति प्राप्ते——

ब्रूमः——यथा 'प्रभिन्नकमलोदरे मधूनि मधुकरः पिबति' इत्यत्र मधुकरपदस्यार्थमजानन्नन्यपदार्थमवगत्य तत्समभिव्याहारात्कमलस्य मध्यगते मधुपानं कुर्वति दृश्यमानभ्रमरे मधुकरशब्दस्य संगतिं गृहीत्वा वाक्यार्थं प्रतिपद्यते, तथा 'कारीर्या वृष्टिकामो यजेत' इत्यत्र लोकप्रसिद्धार्थवृष्ट्यादिपदसमभिव्याहारादलौकिकभावनायां विधेः संगतिं गृहीत्वा विधिवाक्यार्थं पुरुषो बुध्यते । तस्मादबोधकत्वलक्षणमप्रामाण्यं नास्ति । न च संवादाभावादप्रामाण्यम् । समनन्तरभाविप्रतिनियतफले वृष्ट्यादौ संवादस्यापि संभवात् । अनियतदृष्टफले चित्रायागादौ, प्रतिनियतजन्मान्तरफले ज्योतिष्टोमादौ च संवादः कथमिति चेत् । एवं तर्हि स्वतःप्रामाण्याभ्युपगमान्नास्ति क्वापि संवादाद्यपेक्षा । तस्मादबोधकत्वसापेक्षत्वयोरप्रामाण्यकारणयोरभावाद्विधेः स्वतःसिद्धं प्रामाण्यं नापह्नोतुं शक्यम् ॥४७॥४८॥

( षष्ठे शब्दनित्यताधिकरणे सूत्राणि ६—२३ )

**कर्मैके तत्र दर्शनात् ॥ ६ ॥ अस्थानात् ॥ ७ ॥ करोतिशब्दात् ॥ ८ ॥ सत्त्वान्तरे च यौगपद्यात् ॥ ९ ॥ प्रकृतिविकृत्योश्च ॥ १० ॥ वृद्धिश्च कर्तृभूम्नाऽस्य ॥ ११ ॥ समं तु तत्र दर्शनम् ॥ १२ ॥ सतः परमदर्शनं विषयानागमात् ॥ १३ ॥ प्रयोगस्य परम् ॥ १४ ॥**

१ क. °धस्य हि वि° । २ क. °स्ति । श° । ३ क. अतः श° । ख. ग. अतस्तच्छक्ति° । ४ क. °रस्या° । ५ क. °नन्नितरपदानामर्थं° । ६ क. ख. घ. ङ. °लम° । ७ ख. ग. घ. ङ. °माने भ्र° । ८ ख. संबन्धाभा° । ९ क. °तवृष्टिफले चित्रयागादौ च संवादस्य सं° । १० ख. °तदृष्टज° । ११ ख. °ण्यान्ना° ।

आदित्यवद्यौगपद्यम् ॥ १५ ॥ वर्णान्तरमविकारः ॥ १६ ॥ नादवृद्धिपरा ॥ १७ ॥ नित्यस्तु स्याद्दर्शनस्य परार्थत्वात् ॥ १८ ॥ सर्वत्र यौगपद्यात् ॥ १९ ॥ संख्याभावात् ॥ २० ॥ अनपेक्षत्वात् ॥ २१ ॥ प्रख्याभावाच्च योगस्य ॥२२॥ लिङ्गदर्शनाच्च ॥ २३ ॥

षष्ठाधिकरणमारचयति—

विध्यादिरूपो यः शब्दः सोऽनित्योऽथाविनश्वरः।
अनित्यो वर्णरूपत्वाद्वर्णे जन्मोपलम्भनात् ॥ ४९ ॥
अबाधितप्रत्यभिज्ञाबलाद्वर्णस्य नित्यता।
उच्चारणप्रयत्नेन व्यज्यतेऽसौ न जन्यते ॥ ५० ॥

शब्दनित्यत्ववादिनो वैयाकरणास्तावदेवं मन्यन्ते—वर्णसमूहश्रवणानन्तरम् 'इदमेकं पदम्' इति प्रत्ययो मानसप्रत्यक्षेणोत्पद्यते। तस्य च प्रत्ययस्य वर्णव्यतिरिक्तः कश्चित्स्फोटनामकः पदार्थो विषयः। स च नित्यः। स एव शब्दः, न तु वर्णा इति। तदेतन्नैयायिकादयो न सहन्ते। वर्णेष्वेवैकार्थावच्छेदोपाधिना पदैक्यबुद्धेरुपपत्तौ वर्णातिरिक्तस्फोटकल्पना निरर्थिका। तस्माद्वर्णानामेव शब्दत्वम्। वर्णाश्च प्रतिपुरुषं प्रत्युच्चारणं च जन्मविनाशवन्त उपलभ्यन्ते। तस्मादनित्यः शब्दः। तस्य च कारणदोषसंभवाद्विधेरप्रामाण्यमिति पूर्वः पक्षः।

बहुभिः पुरुषैः प्रत्येकं बहुकृत्व उच्चारिते गोशब्दे 'त एवेमे गकारादयो वर्णाः' इत्यबाधितप्रत्यभिज्ञा जायते। तद्बलान्नित्या वर्णाः। न च वर्णानां जन्माभावे बहुकृत्व उच्चारणप्रयत्नो व्यर्थ इति शङ्कनीयम्। तत्प्रयत्नस्य व्यञ्जकत्वाङ्गीकारात्। एवं सति पुरुषभेदादुच्चारणभेदाच्च यथायोगमुदात्तादिभेदैः पटुमृदुत्वादिभेदैश्चोपेतान्ध्वनिविशेषानुत्पाद्य चरितार्था भविष्यन्ति। तस्मान्नित्ये शब्दे कारणदोषाभावान्नास्त्यप्रामाण्यम् ॥ ४९ ॥ ५० ॥

---

१ क. °दुर्णज°। २ क. ङ. वर्णः। ३ ख. ग. घ. ङ. °पत्तेर्वर्णा°। ४ क. ख. ग. घ. एवामी ग°। ५ क. च. नित्यत्व°। ६ क. °वे उ°। ७ ङ. °यत्ना व्यर्था इ°। ८ ख. °गमनुदा°।

( सप्तमे वेदप्रत्यायकत्वाधिकरणे सूत्राणि ॥ २४—२६ )

उत्पत्तौ वाऽवचनाः स्युरर्थस्यातन्निमित्तत्वात् ॥ २४ ॥ तद्भूतानां क्रियार्थेन समाम्नायोऽर्थस्य तन्निमित्तत्वात् ॥ २५ ॥ लोके संनियमनात्प्रयोगसंनिकर्षः स्यात् ॥ २६ ॥

सप्तमाधिकरणमारचयति—

वेदवाक्यममानं स्यान्मानं वा नास्य मानता ।
पृथक्संगत्यपेक्षायामनपेक्षत्ववर्जनात् ॥ ५१ ॥
वेदेऽपि लोकवन्नैव वाक्यार्थे संगतिः पृथक् ।
ग्रहीतव्या ततो वाक्यं प्रमाणं नैरपेक्ष्यतः ॥ ५२ ॥

यद्यपि वर्णानां नित्यत्वादेकार्थावच्छेदकस्य पदस्यापि वर्णरूपतया नित्यत्वाद्वर्णपदद्वारा वेदस्य कारणसापेक्षत्वं नास्ति तथाऽपि ' अग्निहोत्रं जुहुयात्स्वर्गकामः ' इत्यादिवाक्यस्य वाक्यार्थे संगतिग्रहणमपेक्षितम् । ततो नैरपेक्ष्याभावात्प्रामाण्यं नास्तीति प्राप्ते—

ब्रूमः—लोके ' गामानय ' इत्यादिवृद्धप्रयोगे पदपदार्थयोरेव संगतिर्गृह्यते । वाक्यं त्वाकाङ्क्षायोग्यतासंनिधिवशात्स्वार्थं प्रतिपादयतीत्यविवादम् । तथा वेदवाक्यस्यापि प्रत्यायकत्वादनपेक्षत्वेन प्रामाण्यमविरुद्धम् ॥ ५१ ॥ ५२ ॥

( अष्टमे वेदापौरुषेयत्वाधिकरणे सूत्राणि २७—३२ )

वेदांश्चैके संनिकर्षं पुरुषाख्याः ॥ २७ ॥ अनित्यदर्शनाच्च ॥ २८ ॥ उक्तं तु शब्दपूर्वत्वम् ॥ २९ ॥ आख्याः प्रवचनात् ॥ ३० ॥ परं तु श्रुतिसामान्यमात्रम् ॥ ३१ ॥ कृते वा विनियोगः स्यात्कर्मणः संबन्धात् ॥ ३२ ॥

अष्टमाधिकरणमारचयति—

---

१ ख. ग. घ. ङ. °थद्संकेतवीक्षा° । २ क. °वच्चैव वाक्यार्थे नैव संगतिः । ग्र° । ३ ग. घ. निरपेक्षतः । ४ क. °कस्य पदस्य व° । ङ. °कस्यापि पदस्य व° । ५ ख. ग. घ. ङ. °द्विपदप्रयोगेषु प° । ६ क. वेदस्यापि ।

पौरुषेयं न वा वेदवाक्यं स्यात्पौरुषेयता ।
काठकादिसमाख्यानाद्वाक्यत्वाच्चान्यवाक्यवत् ॥ ५३ ॥
समाख्याध्यापकत्वेन वाक्यत्वं तु परा‌हतम् ।
तत्कर्त्रनुपलम्भेन स्यात्ततोऽपौरुषेयता ॥ ५४ ॥

'काठकम्, कौथुमम्, तैत्तिरीयकम्' इत्यादिसमाख्या तत्तद्वेदविषया लोके दृष्टा । तद्धितप्रत्ययश्च "तेन प्रोक्तम्" [ पाणि० सू० ४ । ३ । १०१ ] इत्यर्थे वर्तते । तथा सति 'व्यासेन प्रोक्तं वैयासिकं भारतम्' इत्यादाविव पौरुषेयत्वं प्रतीयते । किंच 'विमतं वेदवाक्यं पौरुषेयम्, वाक्यत्वात्, कालिदासादिवाक्यवत्' इति प्राप्ते—

ब्रूमः—अध्ययनसंप्रदायप्रवर्तकत्वेन समाख्योपपद्यते । कालिदासादिग्रन्थेषु तत्तत्सर्गावसाने कर्तार उपलभ्यन्ते । तथा वेदस्यापि पौरुषेयत्वे तत्कर्तोपलभ्येत । न चोपलभ्यते । अतो वाक्यत्वहेतुः प्रतिकूलतर्कपराहतः। तस्मादपौरुषेयो वेदः । तथा सति पुरुषबुद्धिदोषकृतस्याप्रामाण्यस्यानाशङ्कनीयत्वाद्विधिवाक्यस्य धर्मे प्रामाण्यं सुस्थितम् ॥ ५३ ॥ ५४ ॥

इति श्रीमाधवीये जैमिनीयन्यायमालाविस्तरे
प्रथमाध्यायस्य प्रथमः पादः ॥ १ ॥

| | अत्र पादे | आदितः । |
|---|---|---|
| अधिकरणानि | ८ | ८ । |
| सूत्राणि | ३२ | ३२ । |

---

( अथ द्वितीयः पादः ) ।

( प्रथमेऽर्थवादाधिकरणे सूत्राणि १—१८ )

**आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानाम्, तस्मादनित्यमुच्यते ॥ १ ॥ शास्त्रदृष्टविरोधाच्च ॥ २ ॥ तथा फलाभावात् ॥ ३ ॥ अन्यानर्थक्यात् ॥ ४ ॥ अभागिप्रतिषेधाच्च ॥ ५ ॥**

---

१ ङ. °स्यातम् । तद्वे° । २ ख. ग. घ. ङ. °त्यस्मिन्नर्थे । ३ क. °पत्तौ ।

अनित्यसंयोगात् ॥ ६ ॥ विधिना त्वेकवाक्यत्वात्स्तुत्यर्थेन विधीनां स्युः ॥ ७ ॥ तुल्यं च सांप्रदायिकम् ॥ ८ ॥ अप्राप्ता चानुपपत्तिः प्रयोगे हि विरोधः स्याच्छब्दार्थस्त्वप्रयोगभूतस्तस्मादुपपद्येत ॥ ९ ॥ गुणवादस्तु ॥ १० ॥ रूपात्प्रायात् ॥ ११ ॥ दूरभूयस्त्वात् ॥ १२ ॥ अपराधात्कर्तुश्च पुत्रदर्शनम् ॥ १३ ॥ आकालिकेप्सा ॥ १४ ॥ विद्याप्रशंसा ॥ १५ ॥ सर्वत्वमाधिकारिकम् ॥ १६ ॥ फलस्य कर्मनिष्पत्तेस्तेषां लोकवत्परिमाणतः फलविशेषः स्यात् ॥ १७ ॥ अन्त्ययोर्यथोक्तम् ॥ १८ ॥

द्वितीयपादस्य प्रथमाधिकरणमारचयति—

वायुर्वा इत्येवमादेरर्थवादस्य मानता ।
न विधेयेऽस्ति धर्मे किं किंवाऽसौ तत्र विद्यते ॥ १ ॥
विध्यर्थवादशब्दानां मिथोपेक्षापरिक्षयात् ।
नास्त्येकवाक्यता धर्मे प्रामाण्यं संभवेत्कुतः ॥ २ ॥
विध्यर्थवादौ साकाङ्क्षौ प्राशस्त्यपुरुषार्थयोः ।
तेनैकवाक्यता तस्माद्वादानां धर्ममानता ॥ ३ ॥

काम्यपशुकाण्डे विध्यर्थवादौ श्रूयेते । 'वायव्यं श्वेतमालभेत भूतिकामः' इति विधिः । 'वायुर्वै क्षेपिष्ठा देवता, वायुमेव स्वेन भागधेयेनोपधावति, स एवैनं भूतिं गमयति' इत्यर्थवादः । तत्र विधिवाक्यगता वायव्यादिशब्दा अर्थवादशब्दैनैरपेक्ष्येणैव विशिष्टमर्थं विदधति । अर्थवादशब्दाश्चेतरनैरपेक्ष्येणैव भूतार्थमन्वाचक्षते । 'क्षिप्रगामी वायुः स्वोचितेन भागेन तोषितो भागप्रदायैश्वर्यं प्रयच्छति' इत्युक्ते रामायणभारतादाविव वृत्तान्तः कश्चित्प्रतीयते, नत्वनुष्ठेयं किंचित् । अत एकवाक्यत्वाभावान्नास्त्यर्थवादस्य धर्मे प्रामाण्यमिति प्राप्ते—

१ क. प्रमाणं । २ क. °मर्थमभिद° । ३ क. °र्थमाच° । ४ ख. °न भागधेयेन भा° । ५ क. °तादिवद्वृत्ता° ।

ब्रूमः—मा भूत्पदैकवाक्यता, वाक्यैकवाक्यता तु विद्यते। विधिवाक्यं तावत्पुरुषं प्रेरयितुं विधेयार्थस्य प्राशस्त्यमपेक्षते। अर्थवादवाक्यं च फलवदर्थावबोधपर्यवसिताध्ययनविधिपरिगृहीतत्वेन पुरुषार्थमपेक्षते। तत्र पुरुषार्थपर्यवसितविध्यपेक्षितं प्राशस्त्यं लक्षणावृत्त्या समर्पयदर्थवादवाक्यं विधिवाक्येन सहैकवाक्यतामापद्यते। 'यतः क्षिप्रगामिस्वभावतया शीघ्रफलप्रदो वायुरस्य पशोर्देवता। ततः प्रशस्तमिमं वायव्यं पशुमालभेत' इति वाक्ययोरन्वयः। तस्मादर्थवादा धर्मे प्रमाणम् ॥ १ ॥ २ ॥ ३ ॥

अस्मिन्नेवाधिकरणे मतान्तरमनुसृत्य पूर्वोत्तरपक्षावाह—

वादोक्तहेत्वपेक्षत्वान्न विधेर्मानतेति चेत्।
सत्यन्वये स्तुतिद्वारा नापेक्षेति गुरुर्जगौ ॥ ४ ॥

'यतो वायुः क्षिप्रमेव फलप्रदः, अतो वायव्यमालभेत' इत्येवमर्थवादोक्तहेतुमपेक्ष्य विधिः पुरुषं नियुङ्क्ते। ततः सापेक्षत्वादप्रामाण्यमिति पूर्वपक्षः।

'विमतं कर्मानुष्ठेयम्, फलप्रददेवतोपेतत्वात्, राजसेवादिवत्' इत्यनुमानं यद्यर्थवादे विवक्ष्यते, तदानीमागमप्रमाणस्य विधिवाक्यस्य प्रमाणान्तरसापेक्षत्वं स्यात्। नत्वेवं विवक्षितम्। किंतु फलप्रददेवताबोधकत्वोपन्यासमुखेन कर्मप्राशस्त्यमुपलक्ष्यते। तथा सति 'प्रशस्तं कर्मानुष्ठेयम्' इत्यस्मिन्नर्थे सार्थवादस्य विधेः पर्यवसानादेकवाक्यता लभ्यते। तत्र कुतः सापेक्षत्वम्। तस्मात् 'विधिः प्रमाणम्' इति सिद्धान्तः ॥ ४ ॥

(द्वितीये विधिवन्निगदाधिकरणे सूत्राणि १९–२५)

विधिर्वा स्यादपूर्वत्वाद्वादमात्रं ह्यनर्थकम् ॥ १९ ॥
लोकवदिति चेत् ॥ २० ॥ न पूर्वत्वात् ॥ २१ ॥
उक्तं तु वाक्यशेषत्वम् ॥ २२ ॥ विधिश्चानर्थकः क्वचित्, तस्मात्स्तुतिः प्रतीयेत, तत्सामान्यादितरेषु तथात्वम् ॥ २३ ॥ प्रकरणे संभवन्नपकर्षो न कल्प्येत, विध्यानर्थक्यं हि तं प्रति ॥ २४ ॥
विधौ च वाक्यभेदः स्यात् ॥ २५ ॥

द्वितीयाधिकरणमारचयति—

---

१ क. ब. °धेयस्य। २ ख. ग. घ. ङ. ततः। ३ ख. ग. घ. ङ. °क्षितप्रा°। ४ क. मिदं वा°। ५ क. वेदो°। ६ क. °प्रफलदः। ७ ग. °पेक्षवि°। ८ ख. °ति प्राप्ते ब्रूमः। वि°। ९ ख. °मप्रामाण्यस्य। १० ख. ग. घ. ङ. °स्य मानान्त°। ११ ख. °लक्ष्येत।°। १२ घ. तत्तु। ङ. तत्कुतः। १३ ख. घ. ङ. राद्धान्तः।

ऊर्जोऽवरुध्या इत्येष विधिवन्निगदो न किम् ।
यूपौदुम्बरतां[1] स्तौति स्तौति वा तद्विधित्सया ॥ ५ ॥
चतुर्थ्या फलतालाभाद्यूपौदुम्बरता[2] फलम् ।
ऊर्जोऽवरोधं कथयंन्कथं[3] स्तुतिपरो भवेत् ॥ ६ ॥
अस्तुतौदुम्बरत्वस्याविधानात्[4]कस्य तत्फलम् ।
अर्थद्वैधे[5] वाक्यभेदस्तेन स्तावक एव सः ॥ ७ ॥

इदमाम्नायते—'औदुम्बरो यूपो भवति, ऊर्ग्वा उदुम्बरः, ऊर्क्पशवः, ऊर्जैवास्मा ऊर्जं पशूनाप्नोति, ऊर्जोऽवरुध्यै ' इति[6] । अमृतशब्दाभिधेयोऽत्यन्तसारभूतः सूक्ष्मोऽन्नरसं[7] ऊर्गुच्यते । उदुम्बररूपयोर्जा[8] यजमानार्थमध्वर्युः पशुरूपामूर्जमाप्नोति[9] । ततो यूपस्यौदुम्बरत्वमूर्जः संपादनाय भवतीत्यर्थः । अत्र ' अवरुध्यै ' इति तादर्थ्ये चतुर्थी । तया फलत्वं गम्यते । ' धनलाभाय राजसेवा ' इत्यादौ तद्दर्शनात् । न च फलपरस्य वचनस्य स्तावकत्वं युज्यते । अन्यथा स्वर्गकाम इत्यत्र[10] स्वर्गशब्दस्यापि ज्योतिष्टोमे[11]स्तावकत्वप्रसङ्गादिति प्राप्ते—

ब्रूमः—अयमूर्जोऽवरोधः कस्य फलं[12] स्यात्—किमविहितस्यौदुम्बरत्वस्य[13], उत विहितस्य । नाऽऽद्यः । अनुष्ठानमन्तरेण द्रव्यमात्रात्फलानुत्पत्तेः । द्वितीये किमत्र विधिः प्रत्यक्षः, उतोन्नेयः । नाऽऽद्यः । 'औदुम्बरो यूपो भवति' इत्यत्र लिङ्प्रत्ययाश्रवणात् । द्वितीये[14] स्तुत्या स[15] उन्नेयः । न चात्र स्तुतिमङ्गी करोषि[16] । अथोच्येत ' विधानायौदुम्बरत्वं[17] स्तूयते तत्फलं चावबोध्यते ' इति । तर्हि वाक्यं भिद्येत । ततः फल[18]विधिवन्निगद्यमानमप्येतद्वाक्यं स्तावकमेव ॥ ५ ॥ ६ ॥ ७ ॥

अत्रैव[19] गुरुमतेन पूर्वोत्तरपक्षावाह—

आप्नोतीति विधित्वस्य वादत्वस्याप्यनिर्णयात् ।
न प्रमा चोदनेत्येतन्न वादो ह्येकवाक्यतः ॥ ८ ॥

' ऊर्जं पशूनाप्नोति' इत्यपूर्वार्थत्वाद्विधित्वं प्रतिभासते । लिङाद्यभावादर्थवादत्वम् । अतः संदिग्धत्वान्न[20] प्रामाण्यं चोदनाया इति पूर्वपक्षः ।

एकवाक्यत्वलाभेनार्थवादत्वं[21] निर्णीयते । अतः[22] 'प्रमाणं चोदना 'इति राद्धान्तः ।

१ क. ख. यूपोदु° । २ क. ख. °यूपोदु° । ३ ख. ग. °यत्कथं । ४ क. अस्तुतौ° । ५ क. अथ वैधेन वाक्येन तेन । ६ क. °ति । ऊर्कशब्दा° । ७ क. °स उच्य° । ८ क. °रयूपयोर्यज° । ९ ग. घ. °पया जात्या य° । १० ख. ग. घ. ङ. इत्यस्यापि । ११ ख. °मस्य स्ता° । १२ ख. ग. घ. ङ. °लम्—कि° । १३ घ. उदुम्बरस्य । १४ ग. °तीयस्तु° । १५ ङ. समुन्ने° । १६ ख. °रोति । अ° । १७ ङ. विधिना यूपोदु° । १८ क. °लवन्नि° । १९ क. अस्मिन्नेवाधिकरणे मतान्तरेण पू° । २० क. °त्वादप्रा° । २१ क. °लभावेना° । २२ क. ततः । ख. घ. अत इति ।

( तृतीये हेतुवन्निगदाधिकरणे सूत्राणि २६–३० )

हेतुर्वा स्यादर्थवत्त्वोपपत्तिभ्याम् ॥ २६ ॥
स्तुतिस्तु शब्दपूर्वत्वात्, अचोदना तस्य ॥२७॥
अर्थे स्तुतिरन्याय्येति चेत् ॥ २८ ॥ अर्थस्तु
विधिशेषत्वाद्यथा लोके ॥ २९ ॥ यदि च
हेतुरवतिष्ठेत निर्देशात्, सामान्यादिति चेद-
व्यवस्था विधीनां स्यात् ॥ ३० ॥

तृतीयाधिकरणमारचयति—

तेन ह्यन्नमिति प्रोक्तो वादो हेतुरुत स्तुतिः ।
हिना श्रुता हेतुताऽतः शूर्पादन्यच्च साधनम् ॥ ९ ॥
शूर्पसाधनता श्रौती नाश्रौतैः सा विकल्प्यते ।
अतो निरर्थको हेतुः स्तुतिस्तस्मात्प्रवर्तिका ॥ १० ॥

इदमाम्नायते—'शूर्पेण जुहोति तेन ह्यन्नं क्रियते'। अयमर्थवादो विधेये शूर्पे हेतुत्वेनान्वेति । हिशब्दस्य हेतुवाचित्वात् । 'यस्मादन्नसाधनं, तस्माच्छूर्पेण होतव्यम्' इत्युक्ते 'यद्यदन्नसाधनं दर्वीपिठरादिकं तेन सर्वेण होतव्यम्' इति लभ्यते । ततः 'पिठरादयः शूर्पेण सह विकल्प्यन्ते' इति प्राप्ते—

**ब्रूमः**—शूर्पस्य होमसाधनत्वं श्रौतम्, तृतीयया तदवगमात् । पिठरादीनां त्वानुमानिकम् । अतोऽसमानबलत्वान्न विकल्पो युक्तः । ततो हेतुर्व्यर्थः । स्तुतिः प्ररोचनायोपयुक्ता, तस्मात्स्तुतित्वेनान्वयः ॥ ९ ॥ १० ॥

---

( चतुर्थे मन्त्रलिङ्गाधिकरणे सूत्राणि ३१–५३ )

तदर्थशास्त्रात् ॥ ३१ ॥ वाक्यनियमात् ॥ ३२ ॥
बुद्धशास्त्रात् ॥ ३३ ॥ अविद्यमानवचनात् ॥ ३४ ॥
अचेतनेऽर्थबन्धनात् ॥ ३५ ॥ अर्थविप्रति-

---

१ ख. प्राप्तो । २ क. नहि । ३ ख. स्तुता । ४ क. शूर्पाद्यन्नत्वसा° । ग. घ. ङ. शूर्पादन्य° । ५ ख. ग. घ. ङ. °कल्पते । ६ घ. °ते चातुर्मास्येषु—शू° । ७ ख. ग. घ. ङ. °दि तं° । ८ क. ख. °नां चानु° । ९ क. °कल्प्यते । त° । १० ख. अतो । ११ ग. ङ. स्तुतिस्तु प्र° । १२ क. तस्याः स्तु° ।

षेधात् ॥ ३६ ॥ स्वाध्यायवद्वचनात् ॥ ३७ ॥ अविज्ञेयात् ॥ ३८ ॥ अनित्यसंयोगान्मन्त्रानर्थक्यम् ॥ ३९ ॥ अविशिष्टस्तु वाक्यार्थः ॥ ४० ॥ गुणार्थेन पुनः श्रुतिः ॥ ४१ ॥ परिसंख्या ॥ ४२ ॥ अर्थवादो वा ॥ ४३ ॥ अविरुद्धं परम् ॥ ४४ ॥ संप्रैषे कर्मगर्हानुपलम्भः संस्कारत्वात् ॥ ४५ ॥ अभिधानेऽर्थवादः ॥ ४६ ॥ गुणादप्रतिषेधः स्यात् ॥ ४७ ॥ विद्यावचनसंयोगात् ॥ ४८ ॥ सतः परमविज्ञानम् ॥ ४९ ॥ उक्तश्चानित्यसंयोगः ॥ ५० ॥ लिङ्गोपदेशश्च तदर्थत्वात् ॥ ५१ ॥ ऊहः ॥ ५२ ॥ विधिशब्दाश्च ॥ ५३ ॥

चतुर्थाधिकरणमारचयति—

मन्त्रा उरु प्रथस्वेति किमदृष्टैकहेतवः ।
यागेषूत पुरोडाशप्रथनादेश्च भासकाः ॥ ११ ॥
ब्राह्मणेनापि तद्भानान्मन्त्राः पुण्यैकहेतवः ।
न तद्भानस्य दृष्टत्वाद्दृष्टं वरमदृष्टतः ॥ १२ ॥

'उरु प्रथस्व' इत्ययं कश्चिन्मन्त्रः । तस्यायमर्थः—भोः पुरोडाश, त्वमुरु विपुलता यथा भवति तथा प्रसर' इति । एवमादयो मन्त्रा यागप्रयोगेषूच्चार्यमाणा अदृष्टमेव जनयन्ति । नत्वर्थप्रकाशनाय तदुच्चारणम् । पुरोडाशप्रथनलक्षणस्यार्थस्य ब्राह्मणवाक्येनापि भासनात् । 'उरु प्रथस्वेति पुरोडाशं प्रथयति' इति हि ब्राह्मणवाक्यम्, [ इति चेत् ]।

नैतद्युक्तम् । अर्थप्रत्यायनस्य दृष्टप्रयोजनस्य संभवे सति केवलादृष्टस्य कल्पयितुमशक्यत्वात् । तस्माद्दृष्टमर्थानुस्मरणमेव यागप्रयोगे मन्त्रोच्चारणस्य प्रयोजनम् । ब्राह्मणवाक्येनाप्यर्थानुस्मरणसंभवे 'मन्त्रेणैवानुस्मरणीयम्' इति यो नियमः, तस्य दृष्टासंभवाददृष्टं प्रयोजनमस्तु ।

१ क. 'गेषु तु पु° । २ क. वाचकाः । ३ ख. ग. घ. तज्ज्ञानान्म° । ४ ग. तज्ज्ञान° । ५ क. 'ति । प्रथनान्मान्त्रा । ६ क. भासमानत्वात् । ङ. प्राप्तत्वात् । ७क. दृष्टानुस्मरणाद° ।

अत्रैव मतान्तरेण पूर्वोत्तरपक्षावाह—

मन्त्रब्राह्मणयोर्यद्वा कलहो विनियोजने ।
न मन्त्रलिङ्गसिद्धार्थमनुवक्तीतरद्यतः ॥ १३॥

अस्य मन्त्रस्य लिङ्गेन विनियोगे ब्राह्मणवाक्यमविवक्षितार्थं स्यात् । वाक्येन विनियोगे मन्त्रलिङ्गं न विवक्ष्येत । इत्युभयोर्विरोधादप्रामाण्यं चोदनाया इति पूर्वः पक्षः ।

नायं विरोधः, प्रबलेन हि लिङ्गेन विनियोगसिद्धौ वाक्यस्यानुवादकत्वादिति- राद्धान्तः ॥ १३ ॥

इति श्रीमाधवीये जैमिनीयन्यायमालाविस्तरे
प्रथमाध्यायस्य द्वितीयः पादः ॥ २ ॥

| | अत्र पादे | आदितः |
|---|---|---|
| अधिकरणानि | ४ | १२ |
| सूत्राणि | ५३ | ८५ |

( अथ तृतीयः पादः )

( प्रथमे स्मृतिप्रामाण्याधिकरणे सूत्रे १—२)

धर्मस्य शब्दमूलत्वादशब्दमनपेक्ष्यं स्यात् ॥ १ ॥

अपि वा कर्तृसामान्यात्प्रमाणमनुमानं स्यात् ॥ २ ॥

तृतीयपादस्य प्रथमाधिकरणमारचयति—

अष्टकादिस्मृतेर्धर्मे न मात्वं मानताऽथवा ।
निर्मूलत्वान्न मानं सा वेदार्थोक्तौ निरर्थता ॥ १ ॥
वैदिकैः स्मर्यमाणत्वात्संभाव्या वेदमूलता ।
विप्रकीर्णार्थसंक्षेपात्सार्थत्वादस्ति मानता ॥ २ ॥

"अष्टकाः कर्तव्याः" इत्यादि स्मृतिवाक्यं न धर्मे प्रमाणम्, पौरुषेयवाक्यत्वे सति मूलप्रमाणरहितत्वात्, विप्रलम्भकवाक्यत्वात् । अथ मूलप्रमाणत्वाय वेदार्थ एव स्मृतिभिरुच्यत इति मन्येथास्तर्हि वेदेनैव तदर्थस्यावगतत्वादियं स्मृतिरनर्था स्यात् । तदानीमनुवादकत्वादप्रामाण्यमिति प्राप्ते—

ब्रूमः—'विमता स्मृतिर्वेदमूला, वैदिकमन्वादिप्रणीतस्मृतित्वात्, उपनयनाध्य-

१ क. अस्मिन्नेवाधिकरणे म° । २ ग. यद्वत्क° । ३ क. विप्रयोजने । ४ क. °सिद्ध्यर्थं° । ५ क. °स्य वि° । ६ ख. °दि वा° । ७ क. °णत्वाय । ८ क. °तिरव्यर्था । ९ क. पूर्वपक्षः ।

पनादिस्मृतिवत्'। न च वैयर्थ्यं शङ्कनीयम्। अस्मदादीनां प्रत्यक्षेषु परोक्षेषु च नानावेदेषु विप्रकीर्णस्यानुष्ठेयार्थस्यैकत्र संक्षिप्य प्रमाणत्वात्। तस्मादियं स्मृतिर्धर्मे प्रमाणम् ॥ १ ॥ २ ॥

अस्मिन्नेव मतान्तरेण पूर्वोत्तरपक्षावाह—

न मा स्मार्ताष्टकाङ्गत्वाद्यां जना इति मन्त्रगीः।
तन्न स्मृतेर्मूलवेदेऽनुमिते मात्वसंभवात् ॥ ३ ॥

'यां जनाः प्रतिनन्दन्ति' इत्ययं मन्त्रोऽष्टकाश्राद्धस्याङ्गम्। तच्च श्राद्धं स्मार्तम्। न हि तस्य प्रतिपादकं वेदवाक्यमुपलभामहे। तस्मादिदं मन्त्रवाक्यं न धर्मे प्रमाणमिति चेत्।

न। तन्मूलस्य वेदस्यानुमेयत्वात्। अनुमानं च दर्शितम्। तस्मादसौ मन्त्रो धर्मे प्रमाणम् ॥ ३ ॥

———

( द्वितीये श्रुतिप्राबल्याधिकरणे सूत्रम् )।

विरोधे त्वनपेक्ष्यं स्यात्, असति ह्यनुमानम् ॥ ३ ॥

द्वितीयाधिकरणमारचयति—

औदुम्बरी वेष्टनीया सर्वेत्येषा स्मृतिर्मितिः।
अमितिर्वेति संदेहे मितिः स्यादष्टकादिवत् ॥ ४ ॥
औदुम्बरीं स्पृशन्गायेदिति प्रत्यक्षवेदतः।
विरोधान्मूलवेदस्याननुमानादमानता ॥ ५ ॥

ज्योतिष्टोमे सदोनामकस्य मण्डपस्य मध्ये काचिदौदुम्बरी शाखा निखन्यते। तस्याश्च वाससा वेष्टनं स्मर्यते—'औदुम्बरी सर्वा वेष्टयितव्या' इति। सा स्मृतिः प्रमाणम्, अष्टकादिस्मृतिष्विव मूलवेदस्यानुमातुं शक्यत्वादिति प्राप्ते—

ब्रूमः—'औदुम्बरीं स्पृष्ट्वोद्गायेत्' इति प्रत्यक्षवेदवचनेन स्पर्शो विधीयते। न च सर्ववेष्टने स्पर्शः संभवति। अतो मूलवेदानुमानं कालात्ययापदिष्टम्। अतो विप्रलम्भकवाक्यवन्निर्मूला स्मृतिरप्रमाणम् ॥ ४ ॥ ५ ॥

अस्मिन्नेवाधिकरणे मतान्तरमाह—

---

१ ख. ग. घ. °यर्थ्यम्, अ°। २ क. च वे°। ३ क. °न्नेवाधिकरणे म°। ४ क. °त्वदर्शनात्। ५ क. तत्र। ख. घ. तच्च स्मार्तश्राद्धम्। ६ क. °तमेव। न। ७ ख. सर्वा छाया। ८ ख. ग. घ. ङ. °नान्न मा°। ९ ख. ग. घ. छ. सा पूर्वन्यायेन प्रमाणमिति प्राप्ते १० ख. ग. घ. ङ. इत्यनेन। ११ ख. ग. घ. ङ. अत्रैव म°।

प्रत्यक्षानुमितश्रुत्योर्यद्वा व्याघातदर्शनात्।
अमात्वे शङ्किते बाधोऽनुमानस्यात्र वर्ण्यते ॥ ६ ॥
परप्रत्यक्षवेदोऽत्र मूलं चेद्वेष्टनस्य तत्।
अस्त्वेवमप्यनुष्ठानं स्वप्रत्यक्षानुरोधतः ॥ ७ ॥

स्पर्शसर्ववेष्टनविषययोः प्रत्यक्षानुमितश्रुत्योः परस्परविरोधादुभयोरप्यप्रामाण्यमिति पूर्वपक्षः।

अनुमानस्य कालात्ययापदिष्टतया विरुद्धश्रुत्यभावेन स्पर्शश्रुतिः स्वार्थे प्रमाणम्। यदि पुरुषान्तरप्रत्यक्षवेदः सर्ववेष्टनस्मृतेर्मूलमित्युच्यते, तर्हि मा भूत्तस्या अप्रामाण्यम्। तथाऽपि परप्रत्यक्षात्स्वप्रत्यक्षस्याभ्यर्हितत्वेन स्पर्श एवात्रानुष्ठेयो नतु सर्ववेष्टनम् ॥ ६ ॥ ७ ॥

( तृतीये दृष्टमूलकस्मृत्यप्रामाण्याधिकरणे सूत्रम् )।

हेतुदर्शनाच्च ॥ ४ ॥

[३] तृतीयाधिकरणमारचयति—

वैसर्जनाख्यहोमीयवासमो ग्रहणस्मृतिः।
प्रमा न वा श्रुत्यबाधात्प्रमा स्यादष्टकादिवत् ॥ ८ ॥
दृष्टलोभैकमूलत्वसंभवे श्रुत्यकल्पनात्।
सर्ववेष्टनवद्बाधहीनाऽप्येषा न हि प्रमा ॥ ९ ॥

ज्योतिष्टोमेऽग्नीषोमीयस्य पशोस्तन्त्रे प्रक्रान्ते वैसर्जनहोमो विहितः। तत्र यजमानं पत्नीं पुत्रांश्च भ्रातृंश्चाहतेन वाससा प्रच्छाद्य वाससोऽन्ते स्रुग्दण्डमुपनिबध्य जुहोति। तस्मिन्वाससेवं स्मर्यते—'वैसर्जनहोमीयं वासोऽध्वर्युर्गृह्णाति' इति। सेयं स्मृतिः सर्ववेष्टनस्मृतिवत्प्रत्यक्षश्रुत्या न बाध्यते। अतोऽष्टकादिस्मृतिवत्प्रमाणमिति प्राप्ते—

ब्रूमः—कदाचित्कश्चिदध्वर्युर्लोभादेतद्वासो जग्राह। तन्मूलैवैषा स्मृतिरित्यपि कल्पना संभवति। दृष्टानुसारिणी चैषा कल्पना, दक्षिणया परिक्रीतानामृत्विजां लोभदर्शनात्। तथा सत्यस्याः स्मृतेरन्यथाऽप्युपपत्तावष्टकादिश्रुतिवन्न मूलश्रुतिः कल्पयितुं शक्यते। अतो बाधाभावेऽपि मूलभेदाभावान्नेयं स्मृतिः प्रमाणम् ॥

१ ख. ज. °तस्मृत्यो°। २ क. अमेत्याश°। ३ क. अस्त्येव°। ४ ख. ग. घ. ङ. °तयोः श्रु°। ५ ख. ग. घ. ङ. °ष्टत्वेन वि°। ६ ख. ग. घ. ङ. अथ। ७ ख. ग. घ. ङ. °वासोग्रहणसंस्मृ°। ८ क. °त्रांश्चा°। ९ ख. ग. घ. ङ. संछाद्य। १० ख. ग. घ. ङ. °वर्तीति। इ°। ११ क. ख. ग. घ. ङ. चेयं। १२ ख. यथा। १३ क. ग. घ. °दिस्मृति°। ङ. °दिव°। १४ ग. घ. ङ. °वान्न प्रमा°। ख. °वान्नाप्रामाण्यम्।

( चतुर्थे पदार्थप्राबल्याधिकरणे सूत्राणि ५–७ )।

शिष्टाकोपे विरुद्धमिति चेत् ॥ ५ ॥ न, शास्त्रपरिमाणत्वात् ॥ ६ ॥ अपि वा कारणाग्रहणे प्रयुक्तानि प्रतीयेरन् ॥ ७ ॥

चतुर्थाधिकरणं भाष्यमतेनाऽऽरचयति—

आचान्तेनेत्यमा मा वा स्मृतिरेषा न मा भवेत् ।
वेदं कृत्वेति यः श्रौतः क्रमस्तेन विरोधतः ॥ १० ॥
आचान्त्यादिः पदार्थोऽत्र क्रमो धर्मः पदार्थगः ।
धर्मस्य धर्म्यपेक्षत्वादबाधादस्ति मानता ॥ ११ ॥

'क्षुत आचामेत्' इति विहितं पुरुषार्थमाचमनम् । यदा तु क्रतुमध्ये क्षुतादि निमित्तं प्राप्नोति तदा नैमित्तिकमाचमनं क्रत्वङ्गत्वेन स्मृत्या विधीयते । 'आचान्तेन कर्तव्यम्' इति । सेयं स्मृतिर्न प्रमाणम् । कुतः । विरुद्धत्वात् । 'वेदं कृत्वा वेदिं करोति' इति श्रुतौ पूर्वकालवाचिना क्त्वाप्रत्ययेन क्रमः प्रतीयते । वेदो नाम दर्भमयं संमार्जनसाधनम् । वेदिराहवनीयगार्हपत्यमध्यवर्तिनी चतुरङ्गुलखाता भूमिः । तयोर्मध्ये यदि क्षुतादिनिमित्तमाचमनं कुर्यात्, तदा श्रुत्युक्तं नैरन्तर्यं विरुध्येत । तस्माद्वेष्टनस्मृतिवदाचमनस्मृतिर्न प्रमाणमिति प्राप्ते—

ब्रूमः—वेदवेद्यादिश्रुत्युक्तपदार्थवदाचमनादयः स्मृत्युक्ता अनुष्ठेयपदार्थाः । क्रमस्तु पदार्थनिष्ठो धर्मः । स च पदार्थानुपजीवति । तत उपजीव्यविरोधात्क्रम एव बाध्यते । नतु क्रमेणाऽऽचमनस्य बाधोऽस्ति । तस्मादियं स्मृतिः प्रमाणम् ।

अस्मिन्नेव वार्तिककारः प्रकारान्तरेण विचारद्वयं चकार। तत्र प्रथमं विचारं दर्शयति—

शाक्योक्ताहिंसनं धर्मो न वा धर्मः श्रुतत्वतः ।
न धर्मो नहि पूतं स्याद्गोक्षीरं श्वदृतौ धृतम् ॥ १२ ॥

'ब्रह्मचर्यमहिंसां चापरिग्रहं च सत्यं च यत्नेन रक्षेत्' इति श्रुतावहिंसादिर्धर्मत्वेनोक्तः । स एव धर्मः शाक्येनाप्युक्तः । तस्माच्छाक्यस्मृतिर्धर्मे प्रमाणमिति चेत् ।

न । स्वरूपेण धर्मस्यापि गोक्षीरन्यायेन शाक्यसंबन्धे सत्यधर्मत्वप्रसङ्गात् । तदीयग्रन्थेनाहिंसादिर्नावगन्तव्यः । तस्मान्न सा स्मृतिर्धर्मे प्रमाणम् ॥ १२ ॥

विचारान्तरं दर्शयति—

---

१ ग. घ. °चान्तादिः । २ ङ. तु म° । ३ घ. °नस्य सा° । ४ ग. ङ. यदा । ५ ख. °मस्त्वनुष्ठेयप° । ६ ख. ग. ङ. सा धर्मे ।

सदाचारोऽप्रमा मा वा निर्मूलत्वादमानता।
अष्टकादेरिवैतस्य समूलत्वात्प्रमाणता ॥ १३ ॥

होलाकोत्सवादिसदाचारस्य मूलभूतवेदाभावादप्रामाण्यमिति चेत्।

न। वैदिकैः शिष्टैः परिगृहीतत्वेनाष्टकादिवद्वेदमूलत्वात्। अत एव मन्वादिभिर्ग्रन्थगौरवभयाद्विशेषाकारेणानुपदिष्टोऽपि सदाचारः सामान्याकारेणोपदिष्टः। "श्रुतिः स्मृतिः सदाचारः" इत्येवं धर्मे प्रमाणोपन्यासात्। तस्माच्छिष्टाचारः प्रमाणम्।

(पञ्चमे शास्त्रप्रसिद्धार्थप्रामाण्याधिकरणे[आर्यम्लेच्छाधिकरणे]सूत्रे८–९)

तेष्वदर्शनाद्विरोधस्य समा विप्रतिपत्तिः स्यात्।
॥ ८ ॥ शास्त्रस्था वा तन्निमित्तत्वात् ॥ ९ ॥

पञ्चमाधिकरणमारचयति—

यवादिशब्दाः किं द्व्यर्था नो वाऽऽर्यम्लेच्छसाम्यतः।
दीर्घशूकप्रियंग्वाद्या द्वयेऽप्यर्था विकल्पिताः ॥१४॥
यत्रान्या इति शास्त्रस्था प्रसिद्धिस्तु बलीयसी।
शास्त्रीयधर्मे तेनात्र प्रियंग्वादि[1] न गृह्यते ॥ १५ ॥

'यवमयश्चरुर्भवति' 'वाराही उपानहावुपमुञ्चते' इति श्रूयते। तत्र यवशब्दमार्या दीर्घशूकेषु प्रयुञ्जते वराहशब्दं च सूकरे। म्लेच्छास्तु यवशब्दं प्रियंगुषु, वराहशब्दं च कृष्णशकुनौ। तथा सति लोकव्यवहारेण निश्चेतव्येषु शब्दार्थेष्वार्यम्लेच्छप्रसिद्ध्योः समानबलत्वादुभयविधा अप्यर्था विकल्पेन स्वीकार्या इति प्राप्ते—

ब्रूमः—शास्त्रीयधर्मावबोधे शास्त्रप्रसिद्धिर्बलीयसी। प्रत्यासन्नत्वादविच्छिन्नपारम्पर्यागतत्वाच्च। शास्त्रे यवविष्यर्थवाद एवं श्रूयते—'यत्रान्या ओषधयो म्लायन्ते, अथैते मोदमाना इवोत्तिष्ठन्ति' इति। इतरौषधिविनाशकालेऽभिवृद्धिर्दीर्घशूकेषु दृश्यते, न तु प्रियंगुषु। तेषामितरौषधिपरिपाकात्पूर्वं पच्यमानत्वात्। वाराहोपानद्विध्यर्थवादश्चैवं भवति—'वराहं गावोऽनुधावन्ति' इति। गवामनुधावनं शूकरे संभवति न तु कृष्णशकुनौ। तस्माद्दीर्घशूकादिर्यवादिशब्दार्थः।

अत्र वार्तिककारः पीलुशब्दमुदाजहार। तं च म्लेच्छा हस्तिनि प्रयुञ्जते, आर्यास्तु वृक्षे। तत्राविप्लुतव्यवहारस्याऽऽर्येषु संभवाद्वृक्ष एव पीलुशब्दार्थः।

अस्मिन्नेवाधिकरणे गुरुमतमाह—

---

१ ख. °लवे°। २ क. घ. °स्त्रप्र° । ख. °स्त्रस्य प्र°। ङ. °स्त्रस्थप्र°। ३ घ. ङ. °दिर्म गृ°। ४ ख. °मुञ्चते इ°। ५ ख. °यंग्वादिषु । ६ ख. घ. °धिपा°। ७ ख. घ. ङ. °द्वात्। अपा°। ८ क. ख. ग. °यवश°। ९ क. ख. तं म्ले°। १० घ. °र्येष्वेव सं°।

यवाद्यर्थानिर्णयेन तद्वाक्यं न प्रमेति चेत् ।
न शास्त्रस्य बलित्वेन तत्प्रसिद्ध्याऽर्थनिर्णयात् ॥ १६ ॥

स्पष्टोऽर्थः ।

अस्मिन्नेवाधिकरणे वार्तिककारमतेन वर्णकान्तरमारचयति—

यो मातुलविवाहादौ शिष्टाचारः स मा न वा ।
इतराचारवन्मात्वममात्वं स्मार्तबाधनात् ॥ १७ ॥
स्मृतिमूलो हि सर्वत्र शिष्टाचारस्ततोऽत्र च ।
अनुमेया स्मृतिः स्मृत्या बाध्या प्रत्यक्षया तु सा ॥ १८ ॥

केषुचिद्दाक्षिणदेशेषु मातुलस्य दुहितरं शिष्टाः परिणयन्ति । सोऽयमाचारः प्रमाणं[1], शिष्टाचारत्वात्, होलाकाद्याचारवत्, इति चेत् ।

न । स्मृतिविरुद्धत्वेन कालात्ययापदिष्टत्वात् । तथा च स्मृतिः—

" मातुलस्य सुतामूढ्वा मातृगोत्रां तथैव च ।
समानप्रवरां चैव त्यक्त्वा चान्द्रायणं चरेत् " ॥ इति ।

न च स्मृत्याचारयोर्मूलवेदानुमापकसाम्यात्समबलत्वमिति शङ्कनीयम् । होलाकादिसदाचारस्य मन्वादिस्मृतिवद्वेदानुमापकत्वायोगात् । नहीदानींतनाः शिष्टा मन्वादिवद्देशकालविप्रकृष्टं वेदं दिव्यज्ञानेन साक्षात्कर्तुं शक्नुवन्ति । येन शिष्टाचारो मूलवेदमनुमापयेत् । शक्नोति चेद्यः कोऽपि शिष्टो यत्र क्वापि देशविशेषे कालविशेषे च यं कंचनापि होलाकाद्याचारस्य मूलभूतं स्मृतिग्रन्थमवलोकयितुम् । तस्माच्छिष्टाचारेण स्मृतिरेवानुमातुं शक्यते, नतु श्रुतिः । अनुमिता च स्मृतिर्विरुद्धया प्रत्यक्षया स्मृत्या बाध्यते । अत एवाऽऽहुः—

" आचारात्तु स्मृतिं ज्ञात्वा स्मृतेश्च श्रुतिकल्पनम् ।
तेन द्व्यन्तरितं तेषां प्रामाण्यं विप्रकृष्यते " ॥ इति ।

तस्मादीदृशस्याऽऽचारस्याप्रामाण्यमभ्युपेयम् ॥ १७॥ १८॥

तत्रैवापरं वर्णकमारचयति—

लौकिको वाक्यगो वाऽर्थस्त्रिवृदादेः समत्वतः ।
उभौ विध्यर्थवादैकवाक्यत्वादस्त्विहान्तिमः ॥ १९ ॥

' त्रिवृद्बहिष्पवमानम् ' इति श्रुतौ त्रिवृच्छब्दस्य[1] त्रैगुण्यं लोकसिद्धोऽर्थः ।

---

१ ख. घ. °सिद्धार्थ° । २ ख. °णप्रदे° । ३ ख. °णं विशि° । ४ क. ख. ग. घ. °द्धका° । ५ ग. °गत्वा । ६ ख. ग. ङ. वाच्यम् । ७ ख. ग. °विशिष्टं । ८ क. °पयितुं श° । ९ ख. ग. घ. ङ. तु । १० क. °क्षस्मृ° । ११ ख. ग. ङ. °स्मादाप्रामाण्यमीदृशस्याऽऽचारस्यावसेय° । १२ ख. घ. °सिद्धार्थः ।

वाक्यशेषादृक्त्रयात्मकेषु त्रिषु सूक्तेष्ववस्थितानां बहिष्पवमानात्मकस्तोत्रनिष्पादनक्षमाणाम् ' उपास्मै गायता नरः '—इत्यादीनामृचां नवकमर्थः । तत्र धर्मनिर्णये वेदस्य प्रबलत्वेऽपि पदपदार्थनिर्णये लोकवेदयोः समानबलत्वादुभावप्यर्थौ[1] विकल्पेन ग्रहीतव्याविति चेत् ।

मैवम् । लौकिकार्थस्वीकारपक्षे विधिवाक्येऽर्थ[2]वैगुण्यम्, अर्थवादवाक्ये स्तोत्रियाणा[3]मृचां नवकम्, इत्येवं विध्यर्थवादयोर्वैयधिकरण्यादेकवाक्यत्वं न स्यात् । अत एकवाक्यत्वाय स्तोत्रियाणां नवक[4]मित्येव विधिवाक्ये नियतोऽर्थः ॥१९॥

( षष्ठे म्लेच्छप्रसिद्धार्थप्रामाण्याधिकरणे सूत्रम् ) ।

चोदितं तु प्रतीयेताविरोधात्प्रमाणेन ॥ १० ॥

षष्ठाधिकरणमारचयति—

कल्प्यः पिकादिशब्दार्थो ग्राह्यो वा म्लेच्छरूढितः ।
कल्प्य[5] आर्येष्वसिद्धत्वादनार्याणामनादरात् ॥ २० ॥

ग्राह्या म्लेच्छप्रसिद्धि[6]स्तु विरोधादर्शने सति ।
पिकनेमादिशब्दानां कोकिलाद्यर्थता ततः ॥ २१ ॥

आर्याः पिकादिशब्दं न क्वाप्यर्थे प्रयुञ्जते, म्लेच्छाश्च न प्रमाणभूताः । तस्मान्निगमनिरुक्तव्याकरणैः पिकनेमादिशब्दानामर्थः कल्पनीय इति चेत् ।

मैवम् । आर्यप्रसिद्धिविरोधस्यादृष्टत्वेनेदृशे विषये म्लेच्छप्रसिद्धेरप्यादरणीयत्वात् । कल्प्यमानादव्यवस्थितादर्थाद्वरं[7] म्लेच्छरूढिः । यत्रेदृश्या अपि रूढेरभावस्तत्र निरुक्तादयश्चरितार्थाः । तस्मादनार्यप्रसिद्ध्या पिकः कोकिलः, नेमशब्दोऽर्धवाची, तामरसशब्दः पद्मवाची, इत्येवं द्रष्टव्यम् ॥ २० ॥ २१ ॥

अस्मिन्नेवाधिकरणे गुरुमतमाह—

अर्थाबोधादप्रमाणं पिकालम्भनचोदना ।
मैवं म्लेच्छप्रसिद्ध्याऽपि तद्बोधाद्विरुद्धया ॥ २२ ॥

स्पष्टोऽर्थः ॥ २२ ॥

---

१ ख. ग. घ. ङ. °वर्थौ । २ क. °वाक्यार्थ° । ३ क. ग. घ. ङ. स्तोतीया° । ४ ङ. ग. घ. ङ. °कमेव । ५ क. ग. घ. ङ. कल्प्यो ह्यार्ये° । ६ क. °द्धिश्च वि° । ७ क. °रं व्यवस्थिता म्ले° ।

( सप्तमे कल्पसूत्रास्वतःप्रामाण्याधिकरणे सूत्राणि ११–१४ )।

**प्रयोगशास्त्रमिति चेत् ॥ ११ ॥ नासंनियमात् ॥ १२ ॥ अवाक्यशेषाच्च ॥ १३ ॥ सर्वत्र च प्रयोगात्संनिधानशास्त्राच्च ॥ १४ ॥**

सप्तमाधिकरणमारचयति—

**अपौरुषेयाः कल्पाद्याः कृत्रिमा वा न कृत्रिमाः ।**
**श्रुतिस्मृत्योर्धर्मबुद्धेः स्वतो मात्वं यतः समम् ॥ २३ ॥**
**पुंनामोक्तेः पौरुषेयाः काठकाद्यसमत्वतः ।**
**तत्रोपलेभिरे केचिदापस्तम्बादिकर्तृताम् ॥ २४ ॥**

बौधायनापस्तम्बाश्वलायनकात्यायनादिनामाङ्किताः कल्पसूत्रग्रन्थाः, निगमनिरुक्तादिषडङ्गग्रन्थाः, मन्वादिस्मृतयश्चापौरुषेयाः, धर्मबुद्धिजनकत्वात्, वेदवत्। न च मूलप्रमाणसापेक्षत्वेन वेदवैषम्यमिति शङ्कनीयम्। उत्पन्नाया बुद्धेः स्वतःप्रामाण्याङ्गीकारेण निरपेक्षत्वात् ।

मैवम् । उक्तानुमानस्य कालात्ययापदिष्टत्वात् । बौधायनसूत्रम्, आपस्तम्बसूत्रम्, इत्येवं पुरुषनाम्ना ते ग्रन्था उच्यन्ते । न च काठकादिसमाख्यावत्प्रवचनानिमित्तत्वं युक्तम् । तद्ग्रन्थनिर्माणकाले तदानींतनैः कैश्चिदुपलब्धत्वात् । तच्चाविच्छिन्नपारम्पर्येणानुवर्तते । ततः कालिदासादिग्रन्थवत्पौरुषेयाः। तथाऽपि वेदमूलत्वात्प्रमाणम् ॥ २३ ॥ २४ ॥

अत्रैव गुरुमतमाह—

**कल्पे सर्वतिथौ दर्शकार्यतोक्तेः श्रुतिर्न मा ।**
**न कल्पे साध्यवेदत्वप्रहाणाद्दुर्बलत्वतः ॥ २५ ॥**

सर्वतिथौ दर्शयागकर्तव्यतां कल्पसूत्रकार आह—“ सर्वासु तिथिष्वमावास्या कर्तव्या ” इति । श्रुतिस्त्वमावास्यायामेव तिथौ कर्तव्यतां ब्रूते । ततः कल्पसूत्ररूपेण वेदेन विरुद्धत्वादियं श्रुतिर्न मानमिति चेत् ।

मैवम् । कल्पस्य वेदत्वं नाद्यापि सिद्धम् । किंतु यत्नेन साध्यम् । न च तत्साधयितुं शक्यम् । पौरुषेयत्वस्य समाख्यया तत्कर्तुरुपलम्भेन च साधितत्वात् । अतः कल्पसूत्रस्य दुर्बलतया न श्रुतेरप्रामाण्यम् ॥ २५ ॥

१ क. वा अकृ° । २ ख. ग. घ. ङ. °सूत्रादिग्र° । ३ ख. ग. घ. ङ. °रुक्तष° । ४ ख. देवदत्तवत् । ५ ख. °णाप्यनु° । ६ ख. °लकत्वा° । ७ क. ग. घ. ङ. °तु प्रय° । ८ ख. ग. घ. ङ. साधनीयम् । ९ क. °त्वात् । कृ° ।

( अष्टमे होलाकाधिकरणे सूत्राणि १५—२३ )

अनुमानव्यवस्थानात्तत्संयुक्तं प्रमाणं स्यात्॥१५॥
अपि वा सर्वधर्मः स्यात्तन्न्यायत्वाद्विधानस्य॥१६॥
दर्शनाद्विनियोगः स्यात्॥ १७ ॥ लिङ्गाभावाच्च
नित्यस्य ॥१८॥ आख्या हि देशसंयोगात् ॥१९॥
न स्याद्देशान्तरेष्विति चेत् ॥२०॥ स्याद्योगाख्या
हि माथुरवत् ॥२१॥ ×एकधर्मो वा प्रवणवत्॥२२॥
तुल्यं तु कर्तृधर्मेण ॥२३॥

अष्टमाधिकरणमारचयति—

होलाकादेर्व्यवस्था स्यात्साधारण्यमुताग्रिमः।
देशभेदेन दृष्टत्वात्साम्यं मूलसमत्वतः॥ २६ ॥

होलाकादि[1]शिष्टाचाराणां हारीतादिस्मृतिविशेषाणां चानुष्ठातृपुरुषभेदेन व्यवस्थितं प्रामाण्यम्। कुतः? देशविशेषे तेषां दृष्टत्वात्। होलाकादयः प्राच्यैरेव क्रियन्ते। वसन्तोत्सवो होलाका। आह्नीनैबुकादयो दाक्षिणात्यैः स्वस्वकुलागतं करञ्जार्कादिस्थावरदेवतापूजादिकमाह्नीनैबुकशब्देनोच्यते। उद्वृषभयज्ञादय उदीच्यैः। ज्येष्ठमासस्य पौर्णमास्यां बलीवर्दानभ्यर्च्य धावयन्ति सोऽयमुद्वृषभयज्ञः। एवं हारीतादिस्मृतिः काचित्क्वचि[2]द्देशविशेषे दृश्यते। तस्माद्व्यवस्थितं प्रामाण्यमिति चेत्।

मैवम्। तन्मूलत्वेनानुमितस्य वेदस्य सर्वसाधारणत्वेन तेषामपि सर्वसाधारणत्वात्।

अत्रैव गुरुमतमाह—

प्राच्यादिपदयुक्तायाः श्रुतेरनुमितौ[3] पदे।
अर्थाबोधा[4]दमात्वं चेन्न सामान्यानुमानतः॥ २७ ॥

प्राच्यादिभिर्व्यवस्थया होलाकादिष्वनुष्ठीयमानेषु तन्मूलश्रुतिरपि प्राच्यादिपदयुक्तैवानुमातव्या। तत्र प्राच्यादिपदस्यार्थो न बुध्यते। ये पुरुषाः कंचित्कालं प्राच्यां[5] निवसन्ति, त एव कालान्तरे प्रतीच्यां[6] निवसन्त उपलभ्यन्ते। तत्र श्रौतप्राच्यादिपदस्यार्थाबोधादप्रमाणं श्रुतिरिति चेत्।

× कलिकातानगरमुद्रितशाबरभाष्यपुस्तके " कर्मधर्मो वा " इति दृश्यते।

१ ङ. °दिविशि°। २ घ. °चिद्देश°। ३ क. °मिते प°। ४ क. °र्थाबाधा°। ५ क. °च्यां दिशि नि°। ६ ख. घ. ङ. °च्यां दिशि नि°।

नैवम् । अनुष्ठानसामान्यस्य मूलश्रुतिकल्पकत्वात् । अतः प्राच्यादिपदराहित्ये सत्यर्थबोधादनुमिता श्रुतिः प्रमाणम् ॥ २७ ॥

( नवमे साधुपदप्रयुक्त्यधिकरणे सूत्राणि २४–२९ )।

प्रयोगोत्पत्त्यशास्त्रत्वाच्छब्देषु व्यवस्था स्यात् ॥२४॥ शब्दे प्रयत्ननिष्पत्तेरपराधस्य भागित्वम् ॥ २५ ॥ अन्यायश्चानेकशब्दत्वम् ॥ २६ ॥ तत्र तत्त्वमभियोगविशेषात्स्यात् ॥ २७ ॥ तदशक्तिश्चानुरूपत्वात् ॥२८॥ एकदेशत्वाच्च विभक्तिव्यत्यये स्यात् ॥२९॥

नवमाधिकरणमारचयति—

गोगाव्यादिषु साधुत्वे प्रयोगे वा न कश्चन ।
नियमोऽत्राऽस्ति वा नास्ति व्याकृतेर्मूलवर्जनात् ॥ २८ ॥

साधूनेव प्रयुञ्जीत गवाद्या एव साधवः ।
इत्यस्ति नियमः पूर्वपूर्वव्याकृतिमूलतः ॥ २९ ॥

व्याकरणाभिज्ञैः सास्नादिमद्वस्तुनि 'गौः' इत्येष शब्दः प्रयुज्यते । तदनभिज्ञैस्तु स्वस्वदेशीयभाषामनुसृत्य गावी, गोणी, गोपोतलिका, इत्येवमादयः शब्दाः प्रयुज्यन्ते । तत्र—'ईदृश एव शब्दः साधुः, नेदृशः'—इत्यस्मिन्नर्थे नियामकं नास्ति । तथा प्रयोगेऽपि तन्नास्ति—'ईदृश एव शब्दः प्रयोक्तव्यः, नेदृशः' इति न तावद्वृद्धव्यवहारो नियामकः। तस्य सर्वेषु शब्देषु समानत्वात् । नापि व्याकरणस्मृतिर्नियामिका । तस्या निर्मूलत्वेनाप्रमाणत्वात् । न ह्यभियुक्तप्रयोगस्तन्मूलम् । अन्योन्याश्रयत्वप्रसङ्गात् । व्याकरणस्मृतेः प्रामाण्यसिद्धौ तदनुसारेण प्रयोक्तॄणामभियुक्तत्वसिद्धिः। तत्सिद्धौ तत्प्रयोगमूलतया व्याकरणस्य प्रामाण्यम् । तस्मान्नास्ति साधुत्वप्रयोगयोर्नियमः, इति प्राप्ते—

ब्रूमः—'साधूनेव प्रयुञ्जीत, न त्वपभ्रंशान् ' इत्यस्ति नियमः । उभयत्र क्रमेण दोषगुणवादिनोर्वेदवाक्ययोः श्रवणात् । "एकः शब्दः सम्यग्ज्ञातः सुप्रयुक्तः

१ ग. घ. गोगव्या° । २ क. गोपुत° । ३ क. नेतरः । ४ क. °व्यः, न त्वन्याह° । ५ ङ. °द्धव्याहा° । ६ क. वेदेषु । ७ ख. ग. घ. ङ. °पशब्दान् । ८ ग. °नौर्वाक्य° ।

स्वर्गे लोके कामधुग्भवति " इति गुणवाक्यम्। " तस्माद्ब्राह्मणेन न म्लेच्छितवै[1] नापभाषितवै, म्लेच्छो ह वा एष यदपशब्दः " इति दोषवाक्यम्। यथा प्रयोगे नियमस्तथा साधुत्वेऽपि नियमो द्रष्टव्यः—' गवाद्या एव साधवः, न तु गाव्यादयः ' इति। अस्मिन्नर्थे व्याकरणस्य नियामकत्वात्। न च निर्मूलत्वम्, पूर्वपूर्वव्याकरणस्य तन्मूलत्वात्। एतदेवाभिप्रेत्योक्तम्—' तत्र यूपाधिकरणवद्व्याकरणपरम्परानादित्वादनुपालम्भः:' इति व्याकरणप्रामाण्यं वेदेनैव साक्षादुपन्यस्तम्[2]। तथाऽऽचाथर्वणिका आमनन्ति—" द्वे विद्ये वेदितव्ये इति ह स्म यद्ब्रह्मविदो वदन्ति परा चैवापरा च। तत्रापरा—ऋग्वेदो यजुर्वेदः सामवेदोऽथर्ववेदः शिक्षा कल्पो व्याकरणं निरुक्तं छन्दो ज्योतिषम" इति। तैत्तिरीयकब्राह्मणेऽपि व्याकरणस्योपादेयता श्रूयते—'वाग्वै पराच्यव्याकृताऽवदत्[3]। ते देवा इन्द्रमब्रुवन्—'इमां नो वाचं व्याकुरु, इति[4]। तामिन्द्रो मध्यतोऽपक्रम्य व्याकरोत्[5]। तस्मादियं व्याकृता वागुद्यते ' इति। व्याकर्तारश्च पाणिनिकात्यायनपतञ्जलयो मन्वादिसमानाः। तस्मात्साधूनामेव प्रयोगे, गवादीनामेव साधुत्वे व्याकरणस्मृतिः प्रमाणम्॥२८॥२९॥

अत्रैव गुरुमतमाह—

अश्वालम्भनशास्त्रस्य दन्त्यतालव्यसंशयात्।
अमात्वेऽदन्त्यनिर्णीतिराप्तोक्तव्याकृतेर्बलात्[6] ॥ ३० ॥

" अश्वमालभेत " इत्यत्राकारवकारयोर्मध्यवर्तिनो वर्णस्य दन्त्यत्वे 'स्वं धनम्, तद्रहितं दरिद्रमालभेत' इत्यर्थो भवति। तालव्यत्वे तुरंगमवाचित्वम्। ततः संशयादप्रामाण्यमिति चेत्।

न। व्याकरणानुसारेण "अशू व्याप्तौ" इत्यस्माद्धातोरौणादिके वप्रत्यये सति तालव्यत्वनिर्णयात्। तस्मादश्वालम्भनशास्त्रं प्रमाणम् ॥ ३० ॥

(दशमे लोकवेदयोः शब्दैक्याधिकरण आकृत्यधिकरणे वा सूत्राणि ३०-३५)॥

प्रयोगचोदनाभावादर्थैकत्वमविभागात् ॥ ३० ॥
अद्रव्यशब्दत्वात् ॥ ३१ ॥ अन्यदर्शनाच्च
॥ ३२ ॥ आकृतिस्तु क्रियार्थत्वात् ॥ ३३ ॥

---

१ ख. ग. घ. 'वै म्ले°। २ ग. घ. ङ. °ण्यं साक्षादेव वेदेनोप°। ख. °ण्यं साक्षादेव वेदेनोक्तम्। ३ ख. ग. घ. ङ. °यन्ना°। ४ ख. ग. घ. °दन्। ते। ५ ङ. इति। सोऽब्रवीत्—' वरं वृणै ह्यम चैवैष वायवे च सह गृह्याते ' इति। तस्मादैन्द्रवायवः। सह प्रगृह्यते। ६ क. अमा नो अन्त्य°।

न क्रिया स्यादिति चेदर्थान्तरे विधानं न द्रव्यमिति चेत् ॥ ३४ ॥ तदर्थत्वात्प्रयोगस्याविभागः ॥ ३५ ॥

दशमाधिकरणे प्रथमं वर्णकमारचयति—

लोके पदापदार्थौ यौ न तौ वेदेऽथवाऽत्र तौ ।
रूपभेदात्पदं भिन्नमुत्तानादिभिदा स्फुटा ॥ ३१ ॥
वर्णैकत्वात्पदैकत्वं क्वाचित्की रूपभिन्नता ।
प्रायिकेण पदैक्येन तदर्थैक्यं तथाविधम् ॥ ३२ ॥

वैदिकौ पदपदार्थौ लौकिकाभ्यां पदपदार्थाभ्यामन्यौ । कुतः । रूपभेदात् । पदे तावद्रूपभेदो दृश्यते । आत्मशब्द आकारादित्वेन लोके नियतः । वेदे तु क्वचिदाकाररहितः पठ्यते—" प्रयतं पुरुषं त्मना " इति । ' ब्राह्मणाः ' इति लोके । वेदे त्वन्यथा पठ्यते—" ब्राह्मणासः पितरः सोम्यासः " इति । अर्थभेदोऽपि स्फुटः । " उत्ताना वै देवगवा वहन्ति " इति श्रूयते । मनुष्यगवास्त्वर्वाञ्चो वहन्ति । वेदे वनस्पतिर्हिरण्यपर्णः । तथा च श्रूयते—देवेभ्यो वनस्पते हवींषि हिरण्यपर्ण प्रदिवस्ते अर्थम् " इति । तस्मात् ' लोकवेदयोः पदपदार्थावन्यौ ' इति प्राप्ते—

ब्रूमः—य एव लौकिकाः पदार्थाः, त एव वैदिकाः । तथा हि—वर्णानां तावन्नित्यत्वं प्रथमपादे साधितम् । यथा प्रयोक्तॄणां पुरुषाणां भेदेऽप्येकैकस्य पुरुषस्य बहुकृत्व उच्चारणभेदेऽपि ' त एवामी वर्णाः ' इति प्रत्यभिज्ञानाद्वर्णैक्यम् । तथा ' यानि लोके गवादिपदानि, तान्येव वेदेऽधीयमानानि ' इत्यबाधितप्रत्यभिज्ञया पदैकत्वमभ्युपेयम् । ' त्मना, देवासः ' इत्यादिपदभेदस्तु क्वाचित्कः । नैतावता बहुतरप्रत्याभिज्ञावगतं पदैक्यमपोढुं शक्यम् । अन्यथा ' सोऽयं देवदत्तः ' इति प्रत्यभिज्ञातं देवदत्तैक्यमपि देशादिभेदमात्रेणापोह्येत । पदैक्ये चार्थैकत्वमवश्यंभावि । अन्यथा वेदे पृथग्व्युत्पत्त्यभावादबोधकत्वं प्रसज्येत । एतदेवाभिप्रेत्योक्तम्—

" लोकावगतसामर्थ्यः शब्दो वेदेऽपि बोधकः " इति ।

स्वरुयूपाहवनीयादिशब्दानां तदर्थानां चालौकिकत्वेऽपि प्रसिद्धपदसमभिव्याहाराद्व्युत्पत्तिः संभवति । उत्तानवहनादिकं त्वर्थवादः । अस्तु वा तथा-

---

१ घ. भिन्नरूपता । २ क. प्राकृतेन । ३ क. ख. °रुषात्म° । ४ क. °स्त्वधो व° । ५ ख. ग. घ. °भ्यो ह° । ६ क. ख. ग. °णां भे° । ७ क. °वाग्न्यादि° । ८ ख. घ. ङ. °दे विधी° । ९ क. °देकत्वम° । १० क. ख. °ज्ञानं दे° । ११ क. °यैक्यम° । १२ क. सिध्यति ।

वहनम् , तथाऽप्युत्तानादिशब्दास्तदर्थाश्च लोकप्रसिद्धा एव । तस्माद्य एव लौकिकाः पदपदार्थास्त एव वैदिकाः ॥ ३१ ॥ ३२ ॥

द्वितीयवर्णकमारचयति—

> व्यक्तिर्व्रीह्यादिशब्दार्थ आकृतिर्वा क्रियान्वयात् ।
> व्यक्तिर्व्युत्पत्तिवेलायामाकृत्या सोपलक्ष्यते ॥ ३३ ॥
> शक्तिग्रहादियुक्तिभ्य आकृतेरर्थतोचिता ।
> क्रियापर्यवसानाय व्यक्तिस्तत्रोपलक्ष्यताम् ॥ ३४ ॥

"व्रीहीनवहन्ति" "पशुमालभेत" "गामानय" "ब्राह्मणो न हन्तव्यः" इत्यादिप्रयोगेषु व्रीह्यादिशब्दानां व्यक्तिरर्थः । कुतः । अवहननादिक्रियाभिर्व्यक्तेरन्वेतुं शक्यत्वात् । नह्याकृतिरवहन्तुमालब्धुमानेतुं वा योग्या । नन्वानन्त्यव्यभिचाराभ्यां न व्यक्तौ व्युत्पत्तिः संभवति । अनन्ता हि व्यक्तयः । अतीतानागतानामनेकदेशवर्तिनां गवामियत्ताया अनवधारणात् । किंच शुक्लव्यक्तौ व्युत्पन्नो गोशब्दः कृष्णव्यक्तौ प्रयुज्यमानः स्वार्थं व्यभिचरेत् । तत्र कथं व्युत्पत्तिरिति चेत् । एवं तर्हि व्युत्पत्तिकाले सा व्यक्तिराकृत्योपलक्ष्यतामिति प्राप्ते—

**ब्रूमः**—अन्वयव्यतिरेकाभ्यामाकृतेः शक्तिग्रहणनिमित्तत्वाच्छब्दार्थत्वं तस्या एवोचितम् । किंच गोशब्द उच्चारिते व्यक्तिवादिनः संशयो भवेत् । तस्मादाकृतेरेवाभिधेयत्वम् । यद्याकृतावहननादिक्रिया न पर्यवस्येत्तर्हि व्यक्तिस्तत्रोपलक्षणीया । किंच "श्येनचितं चिन्वीत" इत्यादावाकृतेरेव सादृश्यप्रतियोगितया कार्यान्वयो दृश्यते । तस्मात्—आकृतिः शब्दार्थः ॥३३॥३४॥

अत्रैव गुरुमतमाह—

> गवादिचोदना नो मा जातिव्यक्त्योरनिर्णयात् ।
> आनन्त्यव्यभिचाराभ्यां न व्यक्तिरिति निर्णयः ॥ ३५ ॥

स्पष्टोऽर्थः ॥३५॥

**इति श्रीमाधवीये जैमिनीयन्यायमालाविस्तरे प्रथमाध्यायस्य तृतीयः पादः ॥ ३ ॥**

| | अत्र पादे | आदितः |
|---|---|---|
| अधिकरणानि | १० | २१ |
| सूत्राणि | ३५ | १२० |

१ क. °र्थाश्चालौकिकाः पदपदार्था ए° । २ क. ङ. °क्तिःवीह्या° । ३ क. ख. °क्तिव्युत्प° । ४ क. °र्थता चि° । ङ. °र्थनोचि° । ५ क. योग्यत्वात् । ६ ङ. °ब्धुमपने° । ७ क. ग. घ. ङ. हि गोव्य° । ८ ग. घ. ङ. °नामनाग° । ९ ङ. °ताने° । १० क. अभावात् । ११ क. °व्यक्तिव्युत्पत्तौ व्यु° । १२ क. °चितिं चि° ।

( अथ चतुर्थः पादः )

( प्रथम उद्भिदादिशब्दानां यागनामतया प्रामाण्याधिकरणे सूत्रम् )।

उक्तं समाम्नायैदमर्थ्यं, तस्मात्सर्वं तदर्थं स्यात् ॥ १ ॥

चतुर्थपादस्य प्रथमाधिकरणं *वार्तिककारोन्नीतमारचयति—

उद्भिदादिपदं धर्मे किममानमुत प्रमा ।
विध्यर्थवादमन्त्रांशेष्वनन्तर्भावतो न मा ॥ १ ॥
अन्तर्भावो विधावुद्भिदा यजेतेति दृश्यते ।
नामत्वेनान्वयो वाक्ये वक्ष्यतेऽतः प्रमैव तत् ॥ २ ॥

"उद्भिदा यजेत" "बलभिदा यजेत" "विश्वजिता यजेत" इत्येवं समाम्नायते। तत्रोद्भिदादिपदं न धर्मे प्रमाणम्। कुतः। प्रमाणत्वेनाभिमतेषु त्रिषु वेदविभागेष्वनन्तर्भावात्। तथा हि-विधिः साक्षात्प्रमाणम्। अर्थवादमन्त्रौ तु विध्यन्वयेन। तत्र न तावदुद्भिदादिपदं विधावन्तर्भवति। विध्यर्थरूपाया भावनाया अंशेषु भाव्यकरणेतिकर्तव्यतारूपेषु कस्याप्यवाचकत्वात्। नाप्यर्थवादत्वम्। स्तुतिबुद्धेरभावात्। नापि मन्त्रत्वम्। उत्तमपुरुषादीनां मन्त्रलिङ्गानामभावात्। तथा चोक्तम्—

"उत्तमामन्त्रणास्यन्तत्वान्तरूपाद्यभावतः।
मन्त्रप्रसिद्ध्यभावाच्च मन्त्रतैषां न युज्यते" ॥इति।

"अग्नये जुष्टं निर्वपामि" इत्युत्तमपुरुषः। "अग्ने यशस्विन्यशसे समर्पय" इत्यामन्त्रणम्। "उर्वी चासि, वस्वी चासि" इत्यस्यन्तरूपम्। "इषे त्वा, ऊर्जे त्वा" इति त्वान्तरूपम्। आदिशब्देन—आशीर्देवताप्रतिपादनादयः। एवमाद्यनन्तर्भावादमानमिति चेत्। न। विध्यंशे करणेऽन्तर्भावात्। यद्यपि लिङ्प्रत्ययेन समानपदोपात्तो यजिधात्वर्थः करणम् तथाऽपि तस्य यजेर्नामत्वेनोद्भिदादिपदमन्वेति। तस्मात्प्रमाणम् ॥१॥२॥

( द्वितीय उद्भिदादिशब्दानां यागनामधेयताधिकरणे सूत्रम् )।

अपि वा नामधेयं स्याद्यदुत्पत्तावपूर्वमविधायकत्वात् ॥ २ ॥

द्वितीयाधिकरणमारचयति—

---

* भाष्यकारस्तु प्रथमसूत्रं पूर्वपक्षत्वेनोपन्यस्य द्वितीयसूत्रं सिद्धान्तत्वेनोपन्यस्य सूत्रद्वयेनैकमेवाधिकरणमङ्गीकृतवान्।

---

१ क. °र्मे किं प्रमाणमुताप्रमा। २ ख. ग. घ. छ. °त" "विं। ३ क. °ध्यर्थत्वेन। ४ क. °नां तल्लिङ्गा°। ५ ख. ग. घ. छ. लिङ्पदेन।

गुणोऽयं नामधेयं वा खनित्रेऽस्य निरुक्तितः।
ज्योतिष्टोमं समाश्रित्य पश्वर्थं गुणचोदना ॥ ३ ॥
फलोद्भेदात्समानैषा निरुक्तिर्यागनाम्न्यपि।
नामत्वमुचितं यागसामानाधिकरण्यतः ॥ ४ ॥

" उद्भिदा यजेत पशुकामः " इत्यत्र तृतीयान्तेनोद्भित्पदेन योऽर्थो विवक्षितः सोऽयं यागे कश्चिद्गुणः स्यात्। " दध्ना जुहोति " इत्यनेन गुणविधिना समानत्वात्। अथोच्येत—' दधिशब्दार्थो लोकप्रसिद्धः, उद्भिच्छब्दार्थस्त्वप्रसिद्धः ' इति। तन्न। रूढ्यभावेऽप्यवयवार्थनिरुक्त्या तत्प्रसिद्धेः। ' उद्भिद्यते भूमिरनेन ' इति व्युत्पत्त्या खनित्रवाच्यसौ शब्दः। न चात्र पशुफलकः कश्चिद्यागो विधीयत इति वाच्यम्। पशूनां गुणफलत्वात्। यथा " गोदोहनेन पशुकामस्य " इत्यत्र पशवो गोदोहनगुणस्य फलम्। तथेह खनित्रगुणस्य फलमस्तु। यदि " चमसेनापः प्रणयेत् " इति विहितं प्रकृतमपां प्रणयनमाश्रित्य गोदोहनं विधीयते, तर्ह्यत्रापि " ज्योतिष्टोमेन यजेत " इति विहितं प्रकृतं ज्योतिष्टोममाश्रित्य खनित्रं विधीयताम्। तस्माद्गुणविधिरिति प्राप्ते,—

ब्रूमः—" पशुकामो यजेत " इत्यस्य पदद्वयस्यायमर्थः—' पशुरूपं फलं यागेन कुर्यात् ' इति। तत्र ' केन यागेन ' इत्यपेक्षायाम् ' उद्भिदा ' इति तृतीयान्तं पदं यागनामत्वेनान्वेति। ' उद्भिद्यते पशुफलमनेन यागेन ' इति निरुक्त्या नामत्वमुद्भित्पदस्योपपद्यते। एवमपि गुणविधिनामधेयत्वयोः शब्दनिर्वचनसाम्यान्न निर्णय इति चेत्। मैवम्। सामानाधिकरण्यस्य निर्णायकत्वात्। ' उद्भिन्नामकेन यागेन फलं कुर्यात् ' इत्युक्ते सामानाधिकरण्यं लभ्यते। गुणत्वे तु ' खनित्रेण साध्यो यो यागः, तेन '—इत्येवं वैयधिकरण्यं स्यात्। यदि ' खनित्रवता यागेन ' इति सामानाधिकरण्यं योज्येत तदा मत्वर्थलक्षणा प्रसज्येत। तस्मादुद्भिदादिपदं नामधेयम्। ' दध्ना जुहोति ' ' व्रीहिभिर्यजेत ' इत्यादिषु द्रव्यविशेषे दध्यादिशब्दानामत्यन्तरूढतया यागनामत्वासंभवाद्गत्या गुणत्वमाश्रितम्। ' सोमेन यजेत ' इत्यत्रापि ' अप्रसिद्धार्थनामधेयत्वकल्पनातो वरं प्रसिद्धार्थद्वारेण लक्षणाश्रयणम् ' इत्यभिप्रेत्य ' सोमद्रव्यवता यागेन ' इति मत्वर्थलक्षणा स्वीकृता। उद्भिच्छब्दस्य तु लोकप्रसिद्धार्थाभावादुक्तरीत्या नामत्वं युक्तम्। प्रयोजनं तु नाम्नः सर्वत्र व्यवहार एव। न ह्यन्तरेण नाम-

---

१ ख. 'लोद्भानसमा°। २ क. समत्वा°। ३ क. °थोच्यते—' द°। ४ क. ङ. °न करणेन कु°। ५ ख. ग. °क्षायां तु°। ६ ख. °ग्नेन सा°। ७ ङ. °होतीत्या°। ८ ग. °गत्वा°।

धेयमृत्विग्वरणादिषु 'अनेनाहं यक्ष्ये' इत्याख्यानोपायो लघुः कश्चिदस्ति। तस्मात्–उद्भिदादिकं नामधेयम् ॥ ३ ॥ ४ ॥

अत्रैव गुरुमतमाह—

**लौकिके गणयागेऽस्य विधेः सापेक्षतेति चेत् ।**
**निरुक्त्या श्रौतयागस्य नामत्वान्निरपेक्षता ॥ ५ ॥**

'उद्भिदा यजेत' इत्ययं गुणविधिः। न चास्य कश्चिच्छ्रौत आश्रयो लभ्यते। ततो लौकिको मातृगणयागादिराश्रयत्वेनापेक्षणीयः। तस्मिन्यागे गुणोऽयं विधीयते। तथा सति सापेक्षत्वादप्रामाण्यमस्याश्चोदनाया इति चेत्। नैवम्। पूर्वोक्तनिरुक्त्या श्रौतयागनामत्वे सति निरपेक्षत्वात् ॥ ५ ॥

**( तृतीये चित्रादिशब्दानां यागनामधेयताधिकरणे सूत्रम् ) ॥**

**यस्मिन्गुणोपदेशः प्रधानतोऽभिसंबन्धः ॥ ३ ॥**

तृतीयाधिकरणमारचयति—

**यच्चित्रया यजेतेति तद्गुणो नाम वा भवेत् ।**
**चित्रस्त्रीत्वगुणो रूढेरग्नीषोमीयके पशौ ॥ ६ ॥**
**द्वयोर्विधौ वाक्यभेदो वैशिष्ट्ये गौरवं ततः ।**
**स्यान्नाम पृष्ठाज्यबहिष्पवमानेषु तत्तथा ॥ ७ ॥**

"चित्रया यजेत पशुकामः" इत्याम्नायते। तत्र चित्राशब्दो नोद्भिच्छब्दवद्यौगिकः, किंतु रूढ्या चित्रत्वं स्त्रीत्वं चाभिधत्ते। ततो न पूर्वन्यायेन नामत्वम्। तथा सति "अग्नीषोमीयं पशुमालभेत" इति विहितं पशुयागमात्रं 'यजेत' इत्यनेन पदेनानूद्य तस्मिन्पशौ चित्रत्वस्त्रीत्वे गुणौ विधीयेते इति प्राप्ते—

**ब्रूमः**—चित्रत्वं स्त्रीत्वं चेति द्वावेतौ गुणौ। तयोर्द्वयोर्विधाने वाक्यं भिद्येत। तथा चोक्तम्—

"प्राप्ते कर्मणि नानेको विधातुं शक्यते गुणः ।
अप्राप्ते तु विधीयन्ते बहवोऽप्येकयत्नतः" ॥ इति ।

अथ वाक्यभेदपरिहाराय गुणद्वयाविशिष्टं पशुद्रव्यरूपं कारकं विधीयते तदा गौरवं स्यात्। तस्माच्चित्राशब्दः पूर्ववद्याजिसामानाधिकरण्येन यागनामधेयं

१ ङ. °ख्यातोपा°। २ क. इत्येवं। ३ क. °गे गुणाश्रयत्वेन गु°। ४ क. °भेदे वै°। ५ ख. °त्रत्वस्त्रीत्वयोरभिधायकः। त°। ६ ख. ग. घ. ङ. °गमात्र य°। ७ क. ख. चित्रत्वस्त्रीत्वगुणो विधीयते। ग. चित्रस्त्रीत्वे गुणो विधीयते। ८ ख. ग. घ. ङ. °धीयतेऽत्राह°।

भवति । चित्रत्वं तु तस्य विलक्षणद्रव्यद्वारेणोपपद्यते । 'दधि, मधु, घृतम्, आपः, धानाः, तण्डुलाः, तत्संसृष्टं प्राजापत्यम्' इति दध्यादीनि विचित्राणि प्रदेयद्रव्याणि यद्याम्नातानि । यदेतच्चित्रानामकस्य यागस्योत्पत्तिवाक्यम् । यागस्वरूपभूतयोर्दध्यादिद्रव्यप्रजापतिदेवतयोरत्रोपदिश्यमानत्वात् । उत्पन्नस्य तस्य यागस्य 'चित्रया यजेत पशुकामः' इत्येतत्फलवाक्यम् । एवं सति प्रकृतार्थो लभ्यते । अग्नीषोमीयपश्वनुवादेन गुणविधाने प्रकृतहानाप्रकृतप्रक्रिये प्रसज्येयाताम् । लिङ्गप्रत्ययस्यानुवादकत्वाङ्गीकारान्मुख्यो विध्यर्थो बाध्येत । तस्माच्चित्रापदं नामधेयम् ।

यथा चित्राशब्दे नामधेयत्वम् । तथा बहिष्पवमानशब्दे, आज्यशब्दे, पृष्ठशब्दे च तन्नामधेयत्वं योजनीयम् । एवं हि श्रूयते—"त्रिवृद्बहिष्पवमानम्" "पञ्चदशान्याज्यानि" "सप्तदशानि पृष्ठानि" इति । अस्य वाक्यत्रयस्यार्थो विविच्यते—सामगानामुत्तराग्रन्थे तृचात्मकानि सूक्तान्याम्नातानि । तत्र "उपास्मै गायता नरः" इत्याद्यं सूक्तम् । "दविद्युतत्या रुचा" इति द्वितीयम् । "पवमानस्य ते कवे" इति तृतीयम् । ज्योतिष्टोमस्य प्रातःसवनानुष्ठाने तेषु त्रिषु सूक्तेषु गायत्रं साम गातव्यम् । तदिदं सूक्तत्रयगानसाध्यं स्तोत्रं बहिष्पवमाननामित्युच्यते तत्रावस्थितानामृचां पवमानार्थत्वात् । बहिःसंबन्धाच्च । न खल्विदं स्तोत्रमितरस्तोत्रवत्सदोनामकस्य मण्डपस्य मध्य औदुम्बर्याः स्तम्भशाखायाः संनिधौ प्रयुज्यते, किंतु सदसो बहिः प्रसर्पद्भिः प्रयुज्यते । तस्य च बहिष्पवमानस्य त्रिवृन्नामकः स्तोमो भवति । तस्य च स्तोमस्य विधायकं ब्राह्मणवाक्यमेवमाम्नायते—"तिसृभ्यो हिं करोति स प्रथमया, तिसृभ्यो हिं करोति स मध्यमया तिसृभ्यो हिं करोति स उत्तमया, उद्यती त्रिवृतो विष्टुतिः" इति । अयमर्थः—'सूक्तत्रयपठितानां नवानामृचां गानं त्रिभिः पर्यायैः कर्तव्यम् । तत्र प्रथमे पर्याये—त्रिषु सूक्तेष्वाद्यास्तिस्र ऋचः, द्वितीये पर्याये—मध्यमाः, तृतीये पर्याये चोत्तमाः । तिसृभ्य इति तृतीयार्थे पञ्चमी । हिं करोति गायति' इत्यर्थः। सेयं यथोक्तप्रकारोपेता गीतिस्त्रिवृत्स्तोमस्य विष्टुतिः स्तुतिप्रकारविशेषः । तस्या विष्टुतेरुद्यती नाम, इति । एवं परिवर्तिनी कुलायिनीति द्वे विष्टुती । तयोः परिवर्तिन्येवमाम्नायते—"तिसृभ्यो हिं करोति स पराचीभिः, तिसृभ्यो हिं करोति स पराचीभिः, तिसृभ्यो हिं करोति स पराचीभिः, परिवर्तिनी त्रिवृतो विष्टुतिः" इति । पराचीभिरनुक्रमेणाऽऽम्नाताभिरित्यर्थः । कुलायिन्येवमाम्नायते—"तिसृभ्यो हिं करोति स

१ क. ग. घ. ङ. च । २ क. ग. ङ. लभ्येत । ३ क. घ. °दत्वा° । ४ क. ख. °क्यस्या° । ५ क. ख. विधीयते । ६ क. इत्येकं । ७ ङ. °षु सू° । ८ क. पु गा । ९ क. °न इत्यु° । १० क. °त्रमन्यस्तो° । ११ क. क. क. ग. ङ. °स्तम्भशा° । १२ क. ख. ग. घ. °यणता° ।

पराचीभिरिति तिसृभ्यो हिं करोति, या मध्यमा सा प्रथमा, योत्तमा सा मध्यमा, या प्रथमा सोत्तमा, तिसृभ्यो हिं करोति योत्तमा सा प्रथमा, या प्रथमा, सा मध्यमा या मध्यमा सोत्तमा, कुलायिनी त्रिवृत्तो विष्टुतिः" इति। अत्र प्रथमसूक्ते पाठक्रम एव। द्वितीये मध्यमोत्तमप्रथमाः। तृतीये तूत्तमप्रथममध्यमा इत्येवं व्यत्ययेन मन्त्रा गातव्याः। तदिदं विष्टुतित्रयं विकल्पितम्। त्रिवृच्छब्दस्येदृशं स्तोमस्वरूपमर्थो, न तु त्रैगुण्यमिति पूर्वपादे निर्णीतम्।

उत्तराग्रन्थे बहिष्पवमानसूक्तेभ्यस्त्रिभ्य ऊर्ध्वं चत्वारि सूक्तान्याम्नातानि—अग्न आ याहि वीतये"—इत्याद्यं सूक्तम्। "आ नो मित्रावरुण"—इति द्वितीयम्। आ याहि सुषुमा हि ते"—इति तृतीयम्। "इन्द्राग्नी आ गतं सुतम्"—इति चतुर्थम्। तान्येतानि प्रातःसवने गायत्रसाम्ना गीयमानानि चत्वार्याज्यस्तोत्राणीत्युच्यन्ते। तन्निर्वचनं च श्रूयते—"यदाजिमीयुः, तदाज्यानामाज्यत्वम्" इति। तेष्वाज्यस्तोत्रेषु पञ्चदशनामकः स्तोमो भवति। तस्य स्तोमस्य विष्टुतिरेवमाम्नायते—"पञ्चभ्यो हिं करोति स तिसृभिः स एकया स एकया पञ्चभ्यो हिं करोति स एकया स तिसृभिः स एकया, पञ्चभ्यो हिं करोति स एकया स एकया स तिसृभिः" इति। एकं सूक्तं त्रिरावर्तनीयम्। तत्र प्रथमावृत्तौ प्रथमाया ऋचस्त्रिरभ्यासः। द्वितीयावृत्तौ मध्यमायाः। तृतीयावृत्तावुत्तमायाः। सोऽयं पञ्चदशस्तोमः।

उक्तेभ्यश्चतुर्भ्यः सूक्तेभ्य ऊर्ध्वमुत्तराग्रन्थे त्रीणि माध्यंदिनपवमानसूक्तान्याम्नाय तत ऊर्ध्वं चत्वारि सूक्तान्याम्नातानि—तेषु "अभि त्वा शूर नोनुम"—इत्याद्यम्, "कया नश्चित्र आभुवत्" इति द्वितीयम्। "तं वो दस्ममृतीषहम्" इति तृतीयम्। "तरोभिर्वो विदद्वसुम्" इति चतुर्थम्। एतानि क्रमेण रथंतरवामदेव्यनौधसकालेयसामभिर्माध्यंदिनसवने गीयमानानि पृष्ठस्तोत्राणीत्युच्यन्ते। "स्पर्शनात्पृष्ठानि" इत्येवं निरुक्तिर्द्रष्टव्या। तेषु स्तोत्रेषु सप्तदशस्तोमो भवति। तस्य स्तोमस्य विष्टुतिरेवमाम्नायते—"पञ्चभ्यो हिं करोति स तिसृभिः स एकया स एकया, पञ्चभ्यो हिं करोति स एकया स तिसृभिः स एकया, सप्तभ्यो हिं करोति स एकया स तिसृभिः स तिसृभिः" इति। अत्र प्रथमावृत्तौ प्रथमाया ऋचस्त्रिरभ्यासः, द्वितीयावृत्तौ मध्यमायाः, तृतीयावृत्तौ मध्यमोत्तमयोः सोऽयं सप्तदशस्तोमः। अत्र त्रिष्वपि वाक्येषु त्रिवृत्पञ्चदशसप्तदशशब्दा गुणविधायकत्वेन संमताः। यदि बहिष्पवमानाज्यपृष्ठशब्दा अपि गुणविधायकाः स्युस्तदा प्रत्युदाहरणम्। गुणद्वयविधानाद्वाक्यभेदः स्यात्। तस्माद्बहिष्पवमानादिशब्दाः स्तोत्रनामधेयानि। तैर्नामभिः कर्माण्यनूद्य त्रिवृदादिगुणा विधीयन्ते ॥ ६ ॥ ७ ॥

---

१ ख. °रूपार्थो २ ग. घ. °यन्ते। त° । ३ क. °त्याद्यं सूक्तम्, क° । ४ ख. प्रगीयमाणानि। ५ ख. लोकेषु। ६ घ. °पि वि°।

चतुर्थेऽग्निहोत्रादिशब्दानां यागनामधेयताधिकरणे(मत्प्रख्यन्याये) सूत्रम् )।

तत्प्रख्यं चान्यशास्त्रम् ॥ ४ ॥

चतुर्थाधिकरणमारचयति—

अग्निहोत्रं जुहोत्याघारमाघारयतीत्यमू ।
विधेयौ गुणसंस्कारावाहोस्वित्कर्मनामनी ॥ ८ ॥
अग्नये होत्रमत्रेति बहुव्रीहिगतोऽनलः ।
गुणो विधेयो नामत्वे रूपं न स्यात्क्षरद्घृते ॥ ९ ॥
संस्क्रियाऽऽघारमाघारयतीत्युक्ता द्वितीयया ।
आघारेत्यग्निहोत्रेति यौगिके कर्मनामनी ॥ १० ॥
अग्निर्ज्योतिरिति प्राप्तो मन्त्राद्देवस्तथा घृतम् ।
चतुर्गृहीतवाक्योक्तं द्वितीयायास्त्वियं गतिः ॥ ११ ॥
नासाधिते हि धात्वर्थे करणत्वं ततोऽस्य सा ।
साध्यतां वक्ति संस्कारो नैवाऽऽशङ्क्यः क्रियात्वतः ॥१२॥

"अग्निहोत्रं जुहोति" "आघारमाघारयति" इत्यत्राग्निहोत्रशब्दस्य कर्मनामत्वे द्रव्यदेवतयोरभावाद्यागस्य स्वरूपमेव न सिध्येत् । तस्मादग्निदेवतारूपो गुणोऽनेन दर्विहोमे विधीयते । आघारशब्दश्च "घृ क्षरणदीप्त्योः" इत्यस्माद्धातोरुत्पन्नः क्षरद्घृतमाचष्टे। तस्मिंश्च घृते द्वितीयाविभक्त्या संस्कार्यत्वं प्रतीयते । तच्च संस्कृतं घृतमुपांशुयाजा(ग)द्रव्यं भवति। तस्मात् 'अग्निहोत्राघारशब्दौ गुणसंस्कारयोर्विधायकौ' इति प्राप्ते--

ब्रूमः—"अग्निर्ज्योतिर्ज्योतिरग्निः स्वाहेति सायं जुहोति, सूर्यो ज्योतिर्ज्योतिः सूर्यः स्वाहेति प्रातः" इति विहितेन मन्त्रेण प्राप्तत्वाद्देवता न विधेया । ततोऽग्निसूर्यदेवताकस्य सायंप्रातःकालयोर्नियमेनानुष्ठेयस्य कर्मणः 'अग्निहोत्रम्' इति यौगिकं नामधेयम् । योगश्च बहुव्रीहिणा दर्शितः। "चतुर्गृहीतं वा एतदभूत्तस्याऽऽघारमाघार्यं" इत्यनेनैवाऽऽज्यद्रव्यस्य प्राप्ततया क्षरद्घृतसंस्कारस्याविधेयत्वादाघारशब्दोऽपि यौगिकं कर्मनामधेयम् । 'यस्मिन्कर्मणि नैर्ऋतीं दिशमारभ्यैशानीं दिशमवधिं कृत्वा संतत्या घृतं क्षार्यते' तस्य कर्मण एतन्नाम । ननु नामधेयत्वे सति "उद्भिदा यजेत" "ज्योतिष्टोमेन यजेत" इत्यादाविव धात्वर्थेन करणेन समानाधिकरण्याय 'अग्निहोत्रेण जुहोति' 'आघारेणाऽऽघारयति' इति तृतीयया भवितव्यम् । नैष दोषः । अनुष्ठानादूर्ध्वं धात्वर्थस्य सिद्धत्वाकारेण

१ ध. ङ. प्रोक्तो । २ क. नैव शक्यः क्रि° । ३ क. ख. ग. घ. °ति" इत्य° । ४ क. ख. ग. ततोऽग्नि° । ५ ख. गुणो विधी° । ६ क. °न हविर्होमे । ७ ख. °न प्रा° । ८ क. °घारयति" इ° । ९ ध. °वधीकृत्य सं° । १० ख. एव न° । ११ ध. ङ. °त" इ° ।

करणत्वेऽपि ततः पूर्वं साध्यत्वाकारं वक्तुम् 'अग्निहोत्रम्' 'आघारम्' इति द्वितीयाया युक्तत्वात् । न चात्र द्वितीयानुसारेण 'व्रीहीन्प्रोक्षति' इत्यदाविव संस्कारः शङ्कनीयः । व्रीहिशब्दवदग्निहोत्राघारशब्दयोः प्रसिद्धद्रव्यवाचकत्वाभावेन क्रियावाचित्वाभ्युपगमात् । तस्मात्—अग्निहोत्राघारशब्दौ दर्विहोमोपांशुयाजयोर्गुणसंस्कारविधायिनौ न भवतः, किंतु कर्मान्तरयोर्नामनी ॥८॥९॥१०॥११॥१२॥

(पञ्चमे श्येनादिशब्दानां यागनामधेयताधिकरणे(तद्व्यपदेशन्याये)सूत्रम्)

तद्व्यपदेशं च ॥ ५ ॥

पञ्चमाधिकरणमारचयति—

श्येनेनाभिचरन्मर्त्यो यजेतेति श्रुतौ गुणः ।
विधीयते पक्षिरूपो नाम वा तस्य कर्मणः ॥ १३ ॥
श्येनेनेति गुणः काम्यः सौमिकः सोमबाधया ।
न चित्रावद्वाक्यभेदो, रूढेश्चैवमनुग्रहः ॥ १४ ॥
यथा वै श्येन इत्युक्त्या ह्युपमानोपमेयता ।
नैकस्मिंस्तेन गौण्याऽस्य वृत्त्या स्यात्कर्मनामता ॥ १५ ॥

"श्येनेनाभिचरन्यजेत" इत्यत्र कर्मनामत्वे द्रव्यदेवतयोरभावाद्यागस्वरूपमपि न सिध्येत् । ततः सोमयागे नित्यं सोमद्रव्यं बाधित्वा सोमस्य स्थाने पक्षिद्रव्यरूपो गुणः काम्यो विधीयते । तथा सति श्येनशब्दस्य पक्षिणि लोकसिद्धा रूढिरनुगृह्यते । न च गुणविधित्वे चित्रायामिव वाक्यभेद आपादयितुं शक्यः । चित्रत्वस्त्रीत्ववद्गुणद्वयाभावादिति प्राप्ते—

ब्रूमः—"यथा वै श्येनो निपत्याऽऽदत्ते, एवमयं द्विषन्तं भ्रातृव्यं निपत्याऽऽदत्ते यमभिचरति श्येनेन" इति वाक्येनोक्त उपमानोपमेयभावः पक्षिण्येकस्मिन्न युज्यते । तस्मात्पक्षिण उपमानस्य गुण उपमेये कर्मण्यस्तीति श्येनशब्दस्याभिचारकर्मनामत्वम् । "संदंशेनाभिचरन्यजेत" "*गवाऽभिचर्यमाणो यजेत" इत्यत्र

* शाबरभाष्ये तु 'अथैष गवाऽभिचरन्यजेत' इत्येतादृशपाठ उपलभ्यते ।

१ क. श्रुतो । २ क. °ता ॥ १५ ॥ नैकस्य शक्यते वक्तुं नाम गौण्या ततो भवेत् । "श्ये° । ३ ख. ग. घ. ङ. °त्र ना° । ४ क. ततो लतासोमरूपं बाधित्वा पक्षिमांसगुणो विधीयते । ५ क. °रभ्युपेता भवति । न । घ. °रभ्युपेया न । ङ. °रभ्युपगता न । ६ ख. ग. घ. ङ. °तृव्यमाद° ।

संदंशगोशब्दयोर्नामत्वं श्येनशब्दवद्द्रष्टव्यम्। "यथा संदंशेन दुरादानमादत्ते" "यथा गावो गोपायन्ति" इति वाक्यशेषाभ्यामुपमानोपमेयभावाभिधानात्॥ १३॥ १४॥ १५॥

(षष्ठे वाजपेयादिशब्दानां नामधेयताधिकरणे सूत्राणि)।

नामधेये गुणश्रुतेः स्याद्विधानमिति चेत्। तुल्यत्वात्क्रिययोर्न॥ ७॥ ऐकशब्द्ये परार्थवत्॥ ८॥

षष्ठाधिकरणमारचयति—

यजेत वाजपेयेन स्वाराज्यार्थीत्यसौ गुणः।
नाम वा गुणता तन्त्रयोगाद्गुणफलद्वये॥ १५॥
साधारणयजेः कर्मकरणत्वेन तन्त्रता।
त्रिकद्वयं विरुद्धं स्यात्तन्त्रतायां फलं प्रति॥ १६॥
उपादेयविधेयत्वगुणत्वाख्यं त्रिकं यजेः।
उद्देश्यानुक्तिमुख्यत्वात्रिकं तस्य गुणं प्रति॥ १७॥
त्यक्त्वा तन्त्रं तदावृत्तौ वाक्यं भिद्यते तेन सः।
वाजपेयेतिशब्दोऽपि कर्मनामाग्निहोत्रवत्॥ १८॥

"वाजपेयेन स्वाराज्यकामो यजेत" इत्यत्र वाजपेयशब्देन गुणो विधीयते। अन्नवाची वाजशब्दः। तच्चान्नं पेयं सुराद्रव्यम्। तच्चात्र गुणः। सुराग्रहाणामनुष्ठेयत्वात्। ननु गुणत्वे 'वाजपेयगुणवता यागेन स्वाराज्यं भावयेत्' इति मत्वर्थलक्षणा प्रसज्येत। मैवम्। सकृदुच्चरितस्य, यजेत, इत्याख्यातस्य वाजपेयगुणे स्वाराज्यफले च तन्त्रेण संबन्धाङ्गीकारात्। वाजपेयेन द्रव्येण स्वाराज्याय यजेत, इत्येवमुभयसंबन्धः। ननु गुणसंबन्धे सति वाजपेयगुणेन यागं कुर्यात्, इति यजेः कर्मकारकत्वं भवति, फलसंबन्धे तु 'यागेन स्वाराज्यं संपादयेत्' इति करणकारकत्वम्। तत्कथं तदुभयसंबन्ध इति चेत्। नायं दोषः। यजेः साधारणत्वेन द्विरूपत्वसंभवात्। 'यजेत' इत्यत्र प्रकृत्या याग उक्तः, प्रत्ययेन भावनोक्ता, तयोस्तु समभिव्याहारात्संबन्धमात्रं गम्यते। तच्च कर्मत्वकरणत्वयोः साधारणम्। न खलु तत्र कर्मत्वस्य करणत्वस्य वा साक्षादभिधायिका काचिदसाधारणी विभक्तिः श्रूयते। अतः साधारणस्य यजेरुभाभ्यां युगपत्संबन्धे सति यथोचितसंबन्धविशेषः पर्यवस्यति। एवं तन्त्रेण संबन्धाङ्गीकारे 'वाजपेयद्रव्येण यागं कुर्यात्' इत्यर्थस्य लभ्यमानत्वाद्गुणविधित्वेऽपि नास्ति मत्वर्थलक्षणा। उद्भिद्भिदादिष्वप्येवं गुणविधिः स्यात्, तर्हि तान्यपि वाक्यान्यत्रोदाहृत्य तदीयः सिद्धान्तः पुनराक्षिप्यतामिति प्राप्ते—

१ क. °पादानवि°। २ क. °यत्रव्यत°। ३ क. ततः कथं। ४ क. यद्भिद्°।

ब्रूमः–यजेस्तन्त्रेणोभयसंबन्धे सति विरुद्धत्रिकद्वयापात्तिः स्यात् । उपादेयत्वं, विधेयत्वं, गुणत्वं चेत्येकं त्रिकम् । उद्देश्यत्वम् , अनुवाद्यत्वं, मुख्यत्वं चेत्यपरं त्रिकम् । तत्रोद्देश्यत्वादयस्त्रयः स्वाराज्यफलनिष्ठा धर्माः । उपादेयत्वादयस्त्रयः साधनभूतयजिनिष्ठा धर्माः । फलमुद्दिश्य याजिरुपादीयते । फलमनूद्य याजिर्विधीयते । फलं प्रधानम् । यजिरुपसर्जनम् । फलस्योद्देश्यत्वं नाम मानसापेक्षी विषयत्वाकारः । यजेरुपादेयत्वं नामानुष्ठीयमानताकारः । तावुभौ मनःशरीरोपाधिकौ धर्मौ । अनुवाद्यत्वविधेयत्वधर्मौ तु शब्दोपाधिकौ । ज्ञातस्य कथनमनुवादः । अज्ञातस्यानुष्ठेयत्वकथनं विधिः । फलयागयोः साध्यसाधनत्वरूपतया प्रधानत्वोपसर्जनत्वे । एवं सति फलतत्साधनयोः स्वाराज्ययागयोः स्वभावपर्यालोचनायां यथा फलस्योद्देश्यत्वादित्रिकं यागस्योपादेयत्वादित्रिकं व्यवतिष्ठते तथा यागस्य वाजपेयस्य च साध्यसाधनभावपर्यालोचनायां यागस्योद्देश्यत्वादित्रिकम्, वाजपेयद्रव्यस्योपादेयत्वादित्रिकं च पर्यवस्यति । ततो यागस्य फलद्रव्याभ्यां युगपत्संबन्धे सति विरुद्धं त्रिकद्वयमापद्यते । ननु तर्हि मा भूत्तन्त्रेणोभयसंबन्धः, पृथक्संबन्धाय यजिरावर्त्यतामिति चेत् । वाक्यभेदप्रसङ्गात् । 'द्रव्येण यागं कुर्यात् ' इत्येकं वाक्यम् । ' यागेन फलं कुर्यात् ' इत्यपरम् । तस्माद्वाजपेयशब्दो न गुणविधायकः, किंतु यथोक्तं द्रव्यं निमित्तीकृत्याग्निहोत्रशब्दवत्कर्मनामधेयम् ॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥

( सप्तम आग्नेयादीनामनामताधिकरणे सूत्रम् ) ।

**तद्गुणास्तु विधीयेरन्नविभागाद्विधानार्थे न चेदन्येन शिष्टाः ॥९॥**

सप्तमाधिकरणमारचयति–

**यदाग्नेयोऽष्टाकपाल इति नाम गुणोऽथवा ।**
**नामाग्निहोत्रवन्मैवं नामत्वे देवता नहि ॥ १९ ॥**
**मन्त्रोऽपि नेह प्रत्यक्षस्तद्धिताद्देवताविधिः ।**
**देवद्रव्यविशिष्टस्य विधानादेकवाक्यता ॥ २० ॥**

दर्शपूर्णमासयोः श्रूयते–" यदाग्नेयोऽष्टाकपालोऽमावास्यायाम् , पौर्णमास्यां चाच्युतो भवति " इति । तत्र यथाऽग्निहोत्रशब्दः ' अग्नये होत्रमत्र ' इत्यमुमर्थं निमित्तीकृत्य कर्मनामधेयम् , तथाऽऽग्नेयशब्दोऽग्निसंबन्धं निमित्तीकृत्य कर्मनाम स्यादिति चेत् ।

१ क. यजतेस्त° । २ ख. घ. ङ. °पेक्षावि° । ३ क. घ. °कारता । ता° । ४ ङ. ५ च ङ. °तू । न वा° ।

मैवम्। नामत्वे देवताराहित्यप्रसङ्गात्। अग्निहोत्रे तु "अग्निर्ज्योतिर्ज्योतिरग्निः स्वाहेति सायं जुहोति" इत्यनेन वचनेन विहितो मन्त्रः प्रत्यक्षविहित इति मान्त्रवर्णिकी देवता लभ्यते। इह तु न तादृशो मन्त्रोऽस्ति। आग्नेयशब्दस्तु देवतां विधातुं शक्नोति। 'अग्निर्देवताऽस्य' इत्यस्मिन्नर्थे तद्धितस्योत्पन्नत्वात्। न च द्रव्यदेवतयोरुभयोर्गुणयोर्विधानाद्वाक्यभेद इति शङ्कनीयम्। कर्मणोऽप्राप्तत्वेन गुणद्वयविशिष्टस्य कर्मण एकेन वाक्येन विधानात्। तस्मात्—आग्नेयशब्देन देवतागुणो विधीयते ॥ १९ ॥ २० ॥

अत्र गुरुमतमाह—

यदाग्नेय इति प्रोक्तं न मानं विध्यसंभवात्।
इति चेन्न विशिष्टार्थविधौ सत्यप्रमा कुतः ॥ २१ ॥

उदाहृतवाक्ये देवताराहित्यप्रसङ्गेन नामत्वाभावाद्गुणयोर्विधौ वाक्यभेदाच्च विध्यसंभवादप्रामाण्यमिति पूर्वपक्षः। गुणद्वयविशिष्टकर्मविधिसंभवात्प्रामाण्यमिति सिद्धान्तः ॥ २१ ॥

( अष्टमे बर्हिरादिशब्दानां जातिवाचिताधिकरणे सूत्रम् )।

बर्हिराज्ययोरसंस्कारे शब्दलाभादतच्छब्दः ॥ १० ॥

अष्टमाधिकरणमारचयति—

बर्हिराज्यपुरोडाशशब्दाः संस्कारवाचिनः।
जात्यर्था वा शास्त्ररूढेस्ते स्युः संस्कारवाचिनः ॥ २२ ॥
जातिं त्यक्त्वा न संस्कारे प्रयुक्ता लोकवेदयोः।
विनाऽपि संस्कृतिं लोके दृष्टत्वाज्जातिवाचिनः ॥ २३ ॥

दर्शपूर्णमासयोः श्रूयते—"बर्हिर्लुनाति" "आज्यं विलापयति" "पुरोडाशं पर्यग्नि करोति" इति। अत्र बर्हिरादिशब्दानां शास्त्रे सर्वत्र संस्कृतेषु तृणादिषु प्रयोगात्, पील्वादिशब्देषु शास्त्रीयरूढिप्राबल्यस्योक्तत्वात्, यूपाहवनीयादिशब्दवत्संस्कारवाचिनो बर्हिरादिशब्दा इति चेत्। मैवम्। अन्वयव्यतिरेकाभ्यां जातिवाचित्वात्। यत्र यत्र बर्हिरादिशब्दप्रयोगः, तत्र तत्र जातिः' इत्यस्या व्याप्तेर्लोके वेदे च नास्ति व्यभिचारः। संस्कारव्याप्तेर्लौकिकप्रयोगे व्यभिचारो दृश्यते। क्वचिद्देशविशेषे लौकिकव्यवहारो जातिमात्रमुपजीव्य विना संस्कारं ते शब्दाः प्रयुज्यन्ते—'बर्हिरादाय गावो गताः' इति, 'क्रय्यमाज्यम्' इति, 'पुरोडाशेन मे माता प्रहेलकं ददाति' इति च। तस्माज्जातिवा-

१ ख. 'द्रव्यदेव च त'। २ घ. 'द्वाक्यभे'। ३ ख. 'भेदप्रसङ्गाच्च। ४ क. 'तेष्वेव तृ'। ५ ख. ङ. 'तस्तु लौकि'।

चिनः । प्रयोजनं तु "बर्हिषा यूपावटमवस्तृणाति" इत्यत्र विना संस्कारेणं स्तरणसिद्धिः ॥ २२ ॥ २३ ॥

अथ गुरुमतमाह-

बर्हिरादौ निमित्तस्य दुर्वचत्वान्न मेति चेत् ।
जातेस्तत्र निमित्तत्वात्तद्युक्ता चोदना प्रमा ॥ २४ ॥

स्पष्टोऽर्थः ॥ २४ ॥

( नवमे प्रोक्षण्यादिशब्दानां यौगिकताधिकरणे सूत्रम् ) ।

प्रोक्षणीष्वर्थसंयोगात् ॥ ११ ॥

नवमाधिकरणमारचयति-

प्रोक्षणीः संस्कृतिर्जातिर्योगो वा सर्वभूमिषु ।
तथोक्तेः संस्कृतिर्जातिः स्याद्रूढेः प्रबलत्वतः ॥ २५ ॥
अन्योन्याश्रयतो नाऽऽद्यो न जातिः कल्प्यशक्तितः ।
योगः स्यात्क्लृप्तशक्तित्वात्क्लीप्तव्याकरणाद्भवेत् ॥ २६ ॥

दर्शपूर्णमासयोः श्रूयते- "प्रोक्षणीरासादय" इति । तत्र प्रोक्षणीशब्दस्याभिमन्त्रणासादनादिसंस्कृतिः प्रवृत्तिनिमित्तम् । कुतः-सर्वेषु वैदिकप्रयोगप्रदेशेषु संस्कृतानामेवापां प्रोक्षणीशब्देनोच्यमानत्वादित्येकः पक्षः । लोके जलक्रीडायां 'प्रोक्षणीभिरुद्वेजिताः स्मः' इत्यसंस्कृतास्वप्सु प्रयोगाद्बर्हिरादिशब्दवज्जातौ रूढत्वादुदकत्वजातिः प्रवृत्तिनिमित्तम् । न च 'प्रकर्षेणोक्ष्यत आभिः' इति योगोऽत्र शङ्कनीयः रूढेः प्रबलत्वादिति पक्षान्तरम् । तत्र न तावत्संस्कारो युक्तः । अन्योन्याश्रयत्वात् । विहितेष्वभिमन्त्रणादिषु संस्कारेष्वनुष्ठितेषु पश्चात्संस्कृतास्वप्सु प्रोक्षणीशब्दप्रवृत्तिः । तत्प्रवृत्तौ सत्यां प्रोक्षणीशब्देनापोऽनूद्याभिमन्त्रणसिद्धिरिति । नापि जातिपक्षो युक्तः । उदकजातौ प्रोक्षणीशब्दस्य वृद्धव्यवहारे पूर्वमक्लृप्तत्वेनेतः परं शक्तेः कल्पनीयत्वात् । ततो गोशब्दवदश्वकर्णशब्दवच्च रूढो न भवति । योगस्तु व्याकरणेन क्लृप्तः । सोपसर्गाद्धातोः करणे ल्युट्प्रत्ययेन व्युत्पादनात् । तस्मात्-प्रोक्षणीशब्दो यौगिकः । घृतादेः प्रोक्षणत्वं प्रयोजनम् ॥ २५ ॥ २६ ॥

---

१ ङ. °रेणास्त° । २ क. घ. °क्षणीः सं° । ३ क. घ. °थोक्ते सं° । ४ ख. ङ. °न्त्रणादिविधिः । ना° ।

( दशमे निर्मन्थ्यशब्दस्य यौगिकताधिकरणे सूत्रम् ) ।

तथा निर्मन्थ्ये ॥ १२ ॥

दशमाधिकरणमारचयति—

रूढिर्योगो योगरूढिर्वा निर्मन्थ्यस्य वर्तनम् ।
आद्यौ पूर्ववदन्त्योऽचिरजातेर्नावनीतवत् ॥ २७ ॥

अग्निचयने श्रूयते—"निर्मन्थ्येनेष्टकाः पचन्ति " इति । तत्र निर्मन्थ्यशब्दस्य स्वार्थे कीदृशी वृत्तिः, इति संशये बर्हिरादिशब्दवल्लौकिकवैदिकसाधारण्याद्वह्निजातौ रूढिरित्येकः पक्षः । प्रोक्षणीशब्दवद्रूढेरक्लृप्तत्वादरणीनिर्मन्थनजन्यत्वाद्योग इति पक्षान्तरम् । लौकिकनिर्मन्थनेन चिरनिर्मन्थनेन च जन्यं वारयितुं योगरूढिः पङ्कजादिवदाश्रयणीया । आधानकाले निर्मथ्य गार्हपत्ये नित्यं धृतोऽग्निश्चिरनिर्मथितः। चयनकाले निर्मथ्योखासु धृतोऽग्निराचिरनिर्मथितः। तत एव लौकिकमथनेन जातोऽग्निरचिरनिर्मथितः । तेनेष्टकाः पच्यन्ते । यथा पुराणनूतनयोर्घृतयोर्नवनीतजन्यत्वे समानेऽपि योगरूढ्या नूतनमेव 'नावनीतम्' इति व्यवह्रियते तद्वत् ॥ २७ ॥

( एकादशे वैश्वदेवादिशब्दानां नामधेयताधिकरणे सूत्राणि १३-१६) ।

वैश्वदेवे विकल्प इति चेत् ॥ १३ ॥ न वा प्रकरणात्प्रत्यक्षविधानाच्च, नहि प्रकरणं द्रव्यस्य ॥१४॥ मिथश्चानर्थसंबन्धः ॥१५॥ परार्थत्वाद्गुणानाम् ॥ १६ ॥

एकादशाधिकरणमारचयति—

चातुर्मास्याद्यपर्वप्रोक्ताग्नेयाद्यष्टकान्तिके ।
वैश्वदेवेति शब्दोक्तो गुणः संघस्य नाम वा ॥२८॥
नामत्वे रूपराहित्यादविधिर्गुणता सतः ।
अग्न्यादिभिर्विकल्प्यन्ते विश्वदेवास्तु सप्तसु ॥२९॥
अनूयाष्टौ यजेतेति तत्संघे नाम वर्णितम् ।
अविधित्वेऽप्यर्थवत्स्यान्नाम प्राक्प्रवणादिषु ॥ ३० ॥

---

१ क. घ. °न्थ्यप्रव° । २ क. °दन्त्याचि° । ३ क. °मन्थ्य गा° । ४ क. ग. ङ. °तः । ष्ठ° । ५ ग. °श्वदेवे° । ६ क. रूढिग° ।

इज्यन्तेऽत्र यजन्ते वा विश्वे देवा इतीदृशी ।
निरुक्तिर्न विकल्पः स्यादुत्पत्त्युत्पन्नशिष्टितः ॥ ३१ ॥

चातुर्मास्ययागस्य चत्वारि पर्वाणि---वैश्वदेवः, वरुणप्रघासः, साकमेधः, शुनासीरीयश्चेति । तेषु प्रथमे पर्वण्यष्टौ यागा विहिताः---आग्नेयमष्टाकपालं निर्वपेति, सौम्यं चरुम्, सावित्रं द्वादशकपालम्, सारस्वतं चरुम्, पौष्णं चरुम्, मारुतं सप्तकपालकम्, वैश्वदेवीमामिक्षाम्, द्यावापृथिव्यमेककपालम्, इति । तेषामष्टानां यागानां संनिधाविदमाम्नायते---"वैश्वदेवेन यजेत' इति । तत्राऽऽग्नेयादीन्यागान् ' यजेत ' इत्यनूद्य वैश्वदेवशब्देन देवतारूपो गुणस्तेषु विधीयते । यद्यपि वैश्वदेव्यामिक्षायां विश्वे देवाः प्राप्ताः, तथाऽप्याग्नेयादिषु सप्तसु यागेष्वप्राप्तत्वाद्विधीयन्ते । तेष्वप्यग्न्यादिदेवताः सन्तीति चेत्, तर्हि गत्यभावात्तेषु देवता विकल्प्यन्ताम् । नामधेयत्वे तु नाममात्रस्याभिधेयत्वाद्द्रव्य-देवतयोरभावेन यागस्यात्र स्वरूपासंभवाच्छ्रूयमाणो विधिरनर्थकः स्यात्---तस्मात् ' गुणविधिः '--इति प्राप्ते--'

ब्रूमः--उत्पत्तिवाक्यैर्विहितानाग्नेयादीनष्टौ यागान् ' यजेत ' इत्यनूद्याष्टानां संघे वैश्वदेवशब्दो नामत्वेनोपवर्ण्यते । न च विधित्वासंभवेऽपि नामोपदेशवैय-र्थ्यम्, ' प्राचीनप्रवणे वैश्वदेवेन यजेत ' इत्यादिषु वैश्वदेवशब्देनैकेनैवाष्टानां संघस्य व्यवहर्तव्यत्वात् । नामप्रवृत्तिनिमित्तभूता निरुक्तिर्द्विधा--आमिक्षायागे विश्वेषां देवानामिज्यमानतया तत्सहचरितार्थानां सर्वेषां छत्रिन्यायेन वैश्वदेवत्वम् । अथवा ' विश्वे देवा अष्टानां कर्तारः ' इति वैश्वदेवत्वम् । तथा च ब्राह्मणम्--"यद्विश्वे देवाः समयजन्त, तद्वैश्वदेवस्य वैश्वदेवत्वम् " इति । देवताविकल्पस्तु समानबलत्वाभावान्न युज्यते । अग्न्यादय उत्पत्तिशिष्टत्वात्प्रबलाः, विश्वे देवा उत्पन्नशिष्टत्वाद्दुर्बलाः । तस्मात्--वैश्वदेवशब्दः कर्मनामधेयम् ॥२८॥२९॥३० ॥ ३१ ॥

अत्र गुरुमतमाह--

गुणनामत्वसंदेहादप्रमा चोदनेति चेत् ।
नोक्तन्यायेन संघस्य नामधेयत्वनिर्णयात् ॥ ३२ ॥

स्पष्टोऽर्थः ॥ ३२ ॥

---

१ क. ख. ग. घ. °द्दता ॥ ३० ॥ चा° । २ क. घ. °र्वपेदिति । ३ ख. ग. घ. ङ. °स्याविधे° । ४ ख. ग. ङ. °त्वाभावे° । ५ ख. °षां क्षत्रि° ।

( द्वादशे वैश्वानरेऽष्टत्वाद्यर्थवादताधिकरणे सूत्राणि १७–२२ )

पूर्ववन्तोऽविधानार्थास्तत्सामर्थ्यं समाम्नाये ॥१७॥ गुणस्य तु विधानार्थे तद्गुणाः प्रयोगे स्युरनर्थका न हि तं प्रत्यर्थवत्ताऽस्ति ॥ १८ ॥ तच्छेषो नोपपद्यते ॥ १९ ॥ अविभागाद्विधानार्थे स्तुत्यर्थे नोपपद्येरन् ॥ २० ॥ कारणं स्यादिति चेत् ॥ २१ ॥ आनर्थक्यादकारणं, कर्तुर्हि कारणानि, गुणार्थो विधीयते ॥ २२ ॥

द्वादशाधिकरणमारचयति–

यद्द्वादशकपालेष्टैर्वैश्वानर्या अनन्तरम् ।
श्रुतमष्टाकपालादि तद्गुणो नाम वा स्तुतिः ॥ ३३ ॥
अन्तर्भावादष्टतादेर्नाम स्यादग्निहोत्रवत् ।
द्रव्यं द्रव्यान्तरे नो चेद्गुणस्तर्हि फले त्वसौ ॥ ३४ ॥
वाक्यैक्यमुपसंहाराद्विस्पष्टं तत्तु बाध्यते ।
नानागुणविधौ तस्माद्ंशद्वारांशिसंस्तुतिः ॥ ३५ ॥

काम्येष्टिकाण्डे श्रूयते–"वैश्वानरं द्वादशकपालं निर्वपेत्पुत्रे जाते" "यदष्टाकपालो भवति गायत्र्यैवैनं ब्रह्मवर्चसेन पुनाति, यन्नवकपालस्त्रिवृतैवास्मिंस्तेजो दधाति, यद्दशकपालो विराजैवास्मिन्नन्नाद्यं दधाति, यदेकादशकपालस्त्रिष्टुभैवास्मिन्निन्द्रियं दधाति, यद्द्वादशकपालो जगत्यैवास्मिन्पशून्दधाति, यस्मिञ्जात एतामिष्टिं निर्वपति पूत एव स तेजस्व्यन्नाद इन्द्रियावी पशुमान्भवति" इति। अत्राष्टत्वादिसंख्यासामान्यात्पुरोडाशादीनां गायत्र्यादिरूपत्वकल्पना कृता। इष्टिविधायके वाक्ये येयं द्वादशसंख्या तस्यामष्टत्वादिसंख्यानामन्तर्भावात्ताः संख्या निमित्तीकृत्याग्निहोत्रशब्दवदष्टाकपालादिशब्दाः कर्मनामधेयानीत्येकः पक्षः। नात्र द्वादशकपालशब्दः संख्यापरः, किंतु पुरोडाशद्रव्यपरः। 'द्वादशसु कपालेषु संस्कृतः' इति व्युत्पत्तेः। एवमष्टाकपालादिशब्दा अपि । तथा सति द्रव्यस्य द्रव्यान्तरेऽनन्तर्भावान्नामधेयस्य निमित्तं नास्तीति चेत्, एवं तर्हि पुरोडाशद्रव्यरूपो गुणो विधीयताम्। न चोत्पत्तिशिष्टद्वादशकपालपुरोडाशावरुद्धत्वादष्टकपालादेरनवकाश इति वाच्यम्। ब्रह्मवर्चसादिफलाय तद्विध्युपपत्तेरित्यपरः पक्षः। अयमप्युपपन्नः। बहूनां गुणानां विधौ वाक्यभेदापत्तेः। न च भिन्ना-

१ क. ख. घ. °क्यैकमु°। २ क. °रांशसं°। ३ क. घ. कामेष्टि°। ४ ख. °ख्यातस्यासा°।

न्येवैतानि वाक्यानीति वाच्यम् । "वैश्वानरं द्वादशकपालं निर्वपेत्" इति विहितस्य "यस्मिञ्जात एताम्"—इत्युपसंहारेण वाक्यैकत्वावगमात् । तस्मादंशैरष्टाकपालादिभिरंशी द्वादशकपालः स्तूयते ॥ ३३ ॥ ३४॥ ३५ ॥

अत्र गुरुमतमाह—

अगुणत्वादनामत्वादमन्त्रत्वादनन्वये ।
अष्टत्वाद्यप्रमाणं चेन्नार्थवादतयाऽन्वयात् ॥ ३६ ॥

उक्तरीत्या गुणत्वं नामत्वं च न संभवति । उत्तमपुरुषामन्त्रणाद्यभावाच्च मन्त्रत्वम् । अतोऽष्टाकपालादीनामनन्वयादप्रामाण्यं वाक्यस्येति चेत् । मैवम् । स्तावकत्वेनान्वयस्योक्तत्वात् ॥ ३६ ॥

( त्रयोदशे यजमानशब्दस्य प्रस्तरादिस्तुत्यर्थत्वाधिकरणे सूत्रम् )।

तत्सिद्धिः ॥ २३ ॥

त्रयोदशाधिकरणमारचयति—

यजमानः प्रस्तरोऽत्र गुणो वा नाम वा स्तुतिः ।
सामानाधिकरण्येन स्यादेकस्यान्यनामता[1] ॥ ३७ ॥
गुणो वा यजमानोऽस्तु[2] कार्ये प्रस्तरलक्षिते ।
अंशांशित्वाद्यभावेन पूर्ववन्नात्र संस्तुतिः ॥ ३८ ॥
अर्थभेदादनामत्वं गुणश्चेत्प्राह्वियेत सः ।
यागसाधकताद्वारा विधेयप्रस्तरस्तुतिः ॥ ३९ ॥

इदमाम्नायते—"यजमानः प्रस्तरः" इति । तत्र यजमानस्य प्रस्तरशब्दो नामधेयम्, प्रस्तरस्य वा यजमानशब्दो नामधेयम् । कुतः—'उद्भिदा यजेत' इत्यादाविव सामानाधिकरण्यादित्येकः पक्षः । गुणविधिरित्यपरः पक्षः । तदाऽपि यजमानकार्ये जपादौ प्रस्तरस्याचेतनस्य[3] सामर्थ्याभावाद्[4]गुणत्वं नास्ति । प्रस्तरकार्ये स्रुग्धारणादौ यजमानस्य शक्तत्वाद्यजमानरूपो गुणो विधीयते । एवं सति पश्चाच्छ्रुतस्य प्रस्तरशब्दस्य कार्यलक्षकत्वेऽपि प्रथमश्रुतो यजमानशब्दो मुख्यवृत्तिर्भवति । न चात्र पूर्वन्यायेन स्तुतिः संभवति । अष्टाकपालद्वादशकपालयोरिव प्रस्तरयजमानयोरंशांशित्वाभावात्[5] । "वायुर्वै क्षेपिष्ठा देवता" "ऊर्जोऽवरुध्यै" इत्यादिवत्स्तुतिरिति चेत् । न । क्षिप्रत्वादिधर्मवत्कस्यचिदुत्कर्षस्याप्रतीतेः । तस्मात्—'नामगुणयोरन्यतरत्वम्' इति प्राप्ते,—

१ क. ख. °शी श्रूयते द्वा° । २ ख. °न्यता मता । ग. °यनामता । ३ क. च. °मानस्तु । ४ क. च. °नस्यासा° । ५ क. ख. ग. घ. °वात् । प्र° । ६ ग. ङ. °र्भविष्यति ।

ब्रूमः—गोमहिषयोरिवार्थभेदस्यात्यन्तप्रसिद्धत्वान्नामत्वं न युक्तम्। गुणपक्षे तु—अग्नौ प्रहरणस्य प्रस्तरकार्यत्वाद्यजमाने प्रहृते सति कर्मलोपः स्यात्। तस्मात्—विधेयः प्रस्तरो यजमानशब्देन स्तूयते। यथा 'सिंहो देवदत्तः' इत्यत्र सिंहगुणेन शौर्यादिनोपेतो देवदत्तः सिंहशब्देन स्तूयते, तथा यजमानगुणेन यागसाधनत्वेन युक्तः प्रस्तरो यजमानशब्देन स्तूयते।

एवं "यजमान एककपालः" इत्यादिषु द्रष्टव्यम् ॥३७॥३८॥३९॥

( चतुर्दशे आग्नेयादिशब्दानां ब्राह्मणादिस्तुत्यर्थताधिकरणे सूत्रम् )।

जातिः ॥ २४ ॥

चतुर्दशाधिकरणमारचयति—

आग्नेयो ब्राह्मणोऽत्रापि पूर्ववत्सर्वनिर्णयः।
द्वारं तु मुखजन्यत्वसाम्येयत्वेन संस्तवे ॥ ४० ॥

इदमाम्नायते—"आग्नेयो वै ब्राह्मणः" इति। अत्रात्यन्तप्रसिद्धार्थभेदादाग्नेयशब्दो न ब्राह्मणस्य नामधेयम्। नाप्यग्निदेवतारूपो गुणो विधीयते। 'आग्नेयं सूक्तम्' 'आग्नेयं हविः' इत्येवं देवतातद्धितस्य सूक्तहाविर्विषयत्वात्। नहि ब्राह्मणः सूक्तम्, नापि हविः। अतः संबन्धवाचितद्धितान्ताग्नेयशब्देन ब्राह्मणः स्तूयते। यद्यपि ब्राह्मणे नाग्निसंबन्धः, तथाऽप्यग्निसंबन्धो मुखजन्यत्वगुणो ब्राह्मणे विद्यते। तथा चाग्निब्राह्मणयोर्मुखजन्यत्वं क्वचिदर्थवादे समाम्नायते—"प्रजापतिरकामयत, प्रजाः सृजेय, इति। स मुखतस्त्रिवृतं निरमिमीत, तमग्निर्देवताऽन्वसृज्यत, गायत्री छन्दः, रथंतरं साम, ब्राह्मणो मनुष्याणाम्, अजः पशूनाम्, तस्मात्ते मुख्या मुखतो ह्यसृज्यन्त" इति। तस्मात्—आग्नेयशब्दः स्तावकः। एवम् "ऐन्द्रो राजन्यः" "वैश्यो वैश्वदेवः" इत्यादिषु द्रष्टव्यम्॥४०॥

( पञ्चदशे यूपादिशब्दानां यजमानस्तुत्यर्थताधिकरणे सूत्रम् )।

सारूप्यात् ॥ २५ ॥

पञ्चदशाधिकरणमारचयति—

आदित्यो यूप इत्यत्र स्तुतिरादित्यशब्दतः।
द्वारं चाक्षुषसारूप्यं घृताक्ते तैजसेऽस्ति तत् ॥ ४१ ॥

---

१ क. घ. स्यादिति। त°। २ ख. इति दे°। ३ क. घ. °चिमा त°। ४ क. ख. ग. °ह्मणो नाग्निसंबद्धः, त°।

आदित्ये यच्चक्षुर्गम्यं तेजस्वित्वं तद्यूपेऽप्यस्ति। घृताक्तस्य यूपस्य तेजस्वित्वा-ध्यवसायात्। ततः–आदित्यशब्देन यूपः स्तूयते।

एवं "यजमानो यूपः" इत्यत्र चक्षुर्गम्यस्योर्ध्वत्वस्य समानत्वाद्यजमानश-ब्देन यूपः स्तूयते ॥ ४१ ॥

( षोडशेऽपश्वादिशब्दानां गवादिप्रशंसार्थत्वाधिकरणे सूत्रम् )।

प्रशंसा ॥ २६ ॥

षोडशाधिकरणमारचयति–

पशवोऽन्ये गवाश्वेभ्योऽपशवो वा इति श्रुतम्।
अजादिष्वपशुत्वं यद्गुणो वादोऽथवाऽस्तु तत् ॥ ४२ ॥
स्तुत्यभावाद्गुणस्तेषु पशुकार्यनिषेधनम्।
अशक्यत्वान्निषेधस्य घटाद्यर्थाभिधायिना ॥ ४३ ॥
पशवोऽपशुशब्देन प्राशस्त्याभावसाम्यतः।
लक्ष्यास्तत्र निमित्तं तु प्रशंसैव गवाश्वयोः ॥ ४४ ॥

इदमाम्नायते–"अपशवो वा अन्ये गोश्वेभ्यः, पशवो गोअश्वाः" इति। तत्राजादिषु श्रूयमाणं यदपशुत्वं तस्यार्थवादत्वं न संभवति। पशुत्वनिषेधमात्रेण स्तुतेरप्रतिभानात्। ततः पशुकार्यनिषेधरूपो गुणो विधीयत इति चेत्। मैवम्। अजादिपशुविधिवैयर्थ्यप्रसङ्गेन निषेद्धुमशक्यत्वात्। अपशुशब्दः पशुव्यति-रिक्तं घटादिपदार्थजातमभिदधाति। तस्मिन्घटादौ गवाश्ववत्प्राशस्त्यं नास्ति। सोऽयं प्राशस्त्याभावोऽजादिषु पशुष्वस्तीत्यनेनाभिप्रायेण पशव एव सन्तोऽप्य-जाद्यो घटादिसाम्यादपशुशब्देन लक्ष्यन्ते। पूर्वत्र यजमानकार्यसिद्धिः, आग्नेये ध्रुवजन्यत्वम्, आदित्यवत्तेजस्वित्वं च यजमानादिशब्दानां प्रस्तराद्यर्थेषु प्रवृ-त्तिनिमित्तम्। तत्प्रवृत्तिफलं प्रस्तरादिप्रशंसा। इह त्वपशुशब्दस्याजादिषु प्रवृत्तौ गवाश्वयोः प्रशंसैव निमित्तं फलं च। द्विप्रकारा प्रशंसा-वस्तुनि विद्यमा-नगुणोत्कर्ष एकः प्रकारः। स्तावकेन शब्देन संपादितो गुणोत्कर्षोऽपरः प्रकारः। गवाश्वयोरजादिभ्य उत्कर्षो लोकसिद्धो यः सोऽत्र निमित्तम्। 'अजादयः स्वभावतः पशवोऽपि सन्तो गवाश्वौ प्रत्यपशवः संपन्नाः। ईदृशो गवाश्वयोर्म-हिमा' इति स्तुतिफलम्। तस्मात्–"अपशवो वै" इत्ययमर्थवादः।

अयमेव न्याय उदाहरणान्तरेऽपि योजनीयः–"अयज्ञो वा एष योऽसाम"

---

१ क. °त्वाज्ञावभासनात्। २ क. घ. °धायिता। ३ ख. ग. ङ. गोअश्वे°। ४ ग. ध्रुवपत्रा°। ५ ख. ग. ङ. °रभावात्। ६ ख. °वकश°। ७ क. घ. यः स्तोत्रनि°।

इत्येकमुदाहरणम्। "असत्रं वा एतद्यच्छन्दोगम्" इत्यपरमुदाहरणम्। "अग्निहोत्रदर्शपूर्णमासादिर्यज्ञोऽपि सामहीनत्वादयज्ञो भवति। ईदृशः साम्नो महिमा। छन्दोगशब्देन चतुर्विंशः, चतुश्चत्वारिंशः, अष्टचत्वारिंश इत्येते त्रयः स्तोमा उच्यन्ते। अक्षरसंख्यासाम्येन गायत्रीत्रिष्टुब्जगतीछन्दोभिर्गीयमानत्वात्। तेषां च विष्टुतिः सामब्राह्मणे द्रष्टव्या। अतः सत्रमपि चतुर्दशरात्रादिकं छन्दोगरहितत्वादसत्रं भवति। ईदृशश्छन्दोगानां महिमा। इत्येवं स्तावकत्वादर्थवादत्वम् ॥४२॥ ४३॥४४॥

( सप्तदशे भूमाधिकरणे बाहुल्येन सृष्टिव्यपदेशाधिकरणे सूत्रम्)।

भूमा ॥ २७ ॥

सप्तदशाधिकरणमारचयति—

सृष्टीरुपदधातीति ये मन्त्राः सृष्टिलिङ्गकाः।
विधेयास्ते गुणत्वेन वादो वाऽत्र गुणे विधिः ॥ ४५ ॥
आख्यातेनाभिसंबन्धादविध्यन्तरयोगतः।
लिङ्गप्रकरणप्राप्तेर्मन्त्राणां विध्यसंभवात् ॥ ४६ ॥
ताननूद्येष्टकाधानं विदध्यात्स्तोष्यते यतः।
यथासृष्टेत्यनेनातः सृष्टीरित्यर्थवादगीः ॥ ४७ ॥
एकयाऽस्तुवतेत्यादौ मन्त्रसंघे क्वचिन्नहि।
सृष्टिशब्दस्तथाऽप्युक्तिः सृष्टिशब्देन भूमतः ॥ ४८ ॥

अग्निचयने श्रूयते—"सृष्टीरुपदधाति" इति। सृष्टिशब्दोपेता मन्त्रा यासामिष्टकानामुपधाने विद्यन्ते ता इष्टकाः सृष्टय उच्यन्ते। 'सृष्टिमानासामुपधानो मन्त्रः' इति विगृह्य "तद्वानासामुपधानः" [ पा० सू० ४।४।१२५ ] इत्यादिव्याकरणसूत्रसिद्धप्रक्रियया तन्निष्पादनात्। सृष्टिशब्दोपेताश्चोपधानमन्त्राः "एकयाऽस्तुवत" इत्यस्मिन्ननुवाके समाम्नाताः। "ब्रह्मासृज्यत, भूतान्यसृज्यन्त" इत्यादिना सृजतिधातोस्तेषु प्रयुक्तत्वात्। ते मन्त्रा अत्र सृष्टिशब्देनोपधाने गुणत्वेन विधीयन्ते। कुतः—'उपदधाति' इत्यनेनाऽऽख्यातेनाभिसंबन्धात्। न चार्थवादत्वमस्य संभवति। विध्यन्तरेण सहैकवाक्यत्वाभावादिति प्राप्ते,—

ब्रूमः—अग्निचयनप्रकरणे पठितत्वात्तेषां मन्त्राणां सामान्यतश्चयनसंबन्धोऽवगम्यते। विशेषसंबन्धः सृजतिलिङ्गादवगन्तव्यः। तथा सति प्राप्तत्वान्न ते मन्त्रा अत्र विधीयन्ते, किंतु—तान्मन्त्राननूद्येष्टकोपधानं विधीयते। सृष्टिश-

१ क. घ. गुणो। २ख. सृष्टश°। ३ ख. °पेतम°। ४ क. °त्रऽसि°। ५ क. घ. °त। तन्मन्त्रा।

ब्देनानुवादस्तु वक्ष्यमाणार्थवादोपपत्त्यर्थः । " यथासृष्टमेवावरुन्धे " इति हि वक्ष्यमाणोऽर्थवादः । यदि विधिवाक्ये मन्त्राणामनुवादकः सृष्टिशब्दो न स्यात्, तदानीमर्थवादे सृष्टिशब्दप्रयोगाद्विध्यर्थवादयोर्वैयधिकरण्यभ्रमः स्यात् । तस्मान्मन्त्रानुवादी सृष्टिशब्दो न गुणविधायकः, किंत्वर्थवादः । ननु प्रथममन्त्रे सृजतिधातुर्न प्रयुक्तः, किंतु दधातिधातुः प्रयुक्तः । "एकयाऽस्तुवत" "प्रजा अधीयन्त" इति तत्पाठात् । बाढम् । तथाऽपि द्वितीयतृतीयादिषु बहुषु मन्त्रेषु सृजतिधातुप्रयोगाद्भूमरूपं सादृश्यमस्ति । यत्र सर्वाणि वाक्यानि सृष्टिशब्दोपेतानि तत्र यथा सृष्टिभूमता, तथाऽत्रापि । इति भूमगुणयोगेन सृष्टयसृष्टिसंघे सृष्टिशब्दप्रयोगः ॥ ४५ ॥ ४६ ॥ ४७ ॥ ४८ ॥

(अष्टादशे लिङ्गसमवायन्याये(प्राणभृदादिशब्दानां स्तुत्यर्थत्वाधिकरणे) सूत्रम् )।

**लिङ्गसमवायात्** ॥ २८ ॥

अष्टादशाधिकरणमारचयति—

सृष्टिवत्प्राणभृत्तत्र सादृश्यं लिङ्गभूमतः ।
अत्रैकमन्त्रगो लिङ्गसमवायो विशिष्यते ॥ ४९ ॥

" प्राणभृत उपदधाति " इत्यत्रापि सृष्टिन्यायेन मन्त्रविधिरिति पूर्वपक्षः ।

लिङ्गप्रकरणप्राप्तमन्त्रानुवादेनेष्टकोपधानविधिः । "एतस्यैव प्राणान्दधाति " इत्यस्य वक्ष्यमाणार्थवादस्योपपत्तये प्राणभृच्छब्देन मन्त्रानुवादः। पूर्वत्र—द्वितीयादिमन्त्रेषु सृष्टिलिङ्गानां बाहुल्यम् । इह तु—प्रथममन्त्र एव प्राणभृल्लिङ्गमाम्नायते—"अयं पुरोभुवस्तस्य प्राणो भौवायनः " इति । एकस्यैव मन्त्रस्य प्राणभृत्वेऽपि ' छत्रिणो गच्छन्ति ' इतिवत्तत्सहचरिताः सर्वे मन्त्राः प्राणभृच्छब्देन लक्ष्यन्ते । तदेवं यजमानकार्यसिद्ध्यादयो गुणवृत्तिहेतवो निर्णीताः । तथा चोक्तम्—

" तत्सिद्धिजातिसारूप्यप्रशंसालिङ्गभूमभिः ।
षड्भिः सर्वत्र शब्दानां गौणी वृत्तिः प्रकल्पिता " ॥ इति ।

( एकोनविंशे वाक्यशेषेण संदिग्धार्थनिरूपणाधिकरणे सूत्रम् ) ।

**संदिग्धेषु वाक्यशेषात्** ॥ २९ ॥

एकोनविंशाधिकरणमारचयति—

---

१ क. ख. घ. ङ. °ति व° । २ क. ख. °माणार्थ° । ३ ख. °द्विसृष्ट° । ४ ङ. °क्तः । प्र° । ५ क. ख. घ. °भूमिभिः ।

शर्करा उपधत्तेऽक्तास्तेजो वै घृतमत्र किम् ।
तैलादिनाऽञ्जिता अक्ता घृतेनैवाथवाऽञ्जनम् ॥ ५० ॥
तैलादिनाऽपि मुख्यत्वादसंजातविरोधनात् ।
अप्राप्तार्थत्वतश्चास्य विधेर्वादाद्वलित्वतः ॥ ५१ ॥
सामान्यमननुष्ठेयं विशेषस्तु विधौ नहि ।
घृतेनैवाञ्जनं वाक्यशेषात्संदिग्धनिर्णयात् ॥ ५२ ॥
अर्थवादगता चेयं स्तुतिर्घृतमुपेयुषी ।
बोधयन्ती विधेयत्वं घृतस्य गमयेद्विधिम् ॥ ५३ ॥

"अक्ताः शर्करा उपदधाति" "तेजो वै घृतम्" इति श्रूयते। मृत्तिकामिश्राः क्षुद्रपाषाणाः शर्कराः। ताश्च घृततैलवसादीनामन्यतमेन द्रव्येणाञ्जनीयाः। कुतः। अञ्जनसामान्यबोधकस्य विधिवाक्यस्य घृतविशेषबोधकादर्थवादात्प्रबलत्वात्। तत्प्राबल्ये च मुख्यत्वादयस्त्रयो हेतवः। स्वार्थतया विधेर्मुख्यत्वम्, प्रथमश्रुतत्वाच्चासंजातविरोधित्वम्, अनधिगतार्थबोधकत्वादप्राप्तार्थत्वम्, अर्थवादस्तु—विधिस्तावकत्वान्न मुख्यः, चरमश्रुतत्वात्संजातविरोधी, ज्ञातार्थानुवादित्वात्प्राप्तार्थः। तस्मात्—'येन केनाप्यञ्जनम्' इति प्राप्ते,—

ब्रूमः—विधिवाक्येन किमञ्जनसाधनसामान्यं विधीयते, तद्विशेषो वा। नाऽऽद्यः। सामान्यस्याननुष्ठेयत्वात्। न द्वितीयः। घृततैलादिविशेषवाचकशब्दाभावात्। तत उक्तरीत्या प्रबलमपि विधिवाक्यमनुष्ठानयोग्ये विशेषे संदेहजनकतया निर्णयहेतुमर्थवादमपेक्षते, न तु तेन सह विरुध्यते। अर्थवादेऽपि घृतस्य विधिर्नास्तीति चेत्। न। विधेरुन्नेयत्वात्। 'तेजो वै घृतम्' इत्येवं तेजस्त्वेन घृतस्य स्तूयमानत्वाद्विधेयत्वं गम्यते। "स्तूयते स विधीयते" इति न्यायात्। तेन च विधेयत्वेन विधायकः शब्दः कल्प्यते—घृतेनाक्ता इति। तस्मात्—घृतेनैवाञ्जनम् ॥ ५० ॥ ५१ ॥ ५२ ॥ ५३ ॥

(विंशे सामर्थ्येनाव्यवस्थितानां व्यवस्थाधिकरणे सूत्रम्)।

अर्थाद्वा कल्पनैकदेशत्वात् ॥ ३० ॥

विंशाधिकरणमारचयति—

स्रुवेणाथ स्वधितिना हस्तेनावद्यतीत्यमी ।
आज्ये मांसे पुरोडाशे संकीर्णा वा व्यवस्थिताः ॥ ५४ ॥

---

१ ख. °प्रधानेऽक्ता°। २ ख. ग. °त्वादमु°। ३ ख. °तैलवसादीनां वि°। ४ क. घ. ङ. °कत्वान्निर्ण°। ५ क. ग. घ. °ते। "यः स्तू°। ६ ख. °स्थितिः ॥ ५३ ॥ व्य°।

व्यवस्थापकराहित्यात्स्रुवाद्या अव्यवस्थिताः ।
व्यवस्थापकताशक्तेस्तद्वशेन व्यवस्थितिः ॥ ५५ ॥

" स्रुवेणावद्यति " " स्वधितिनाऽवद्यति " हस्तेनावद्यति " इति श्रूयते[1] । तत्रावदेयेष्वाज्यमांसपुरोडाशेषु हविःष्वमी स्रुवाद्या अवदानहेतवः संकीर्णाः । कुतः । व्यवस्थापकस्य शब्दस्याभावादिति चेत् ।

नैवम् । शक्तेर्व्यवस्थापकत्वात् ।

" आख्यातानामर्थं ब्रुवतां शक्तिः सहकारिणी "

इति न्यायात् । ' कटे भुङ्क्ते ' ' कांस्यपात्र्यां भुङ्क्ते ' इत्यत्र लौकिकास्तत्तद्वस्तुशक्त्यनुसारेण व्यवस्थां कल्पयन्ति—' कट आसीनः, ' कांस्यपात्र्यामोदनं निधाय ' इति । वेदेऽपि—" अञ्जलिना सक्तून्प्रदाय जुहुयात् " इत्यत्र यद्यपि द्विहस्तसंयोगोऽञ्जलिः, तथाऽपि गुरुदेवतादिप्रसादनार्थाञ्जलिर्वच्छिद्रसंयोगो[2] न भवति । तादृशेऽञ्जलौ सक्तूनामवकाशाभावात् । अतः सापृथ्यात्संयुक्तप्रसृतिद्वयात्मको मध्यगतावकाशोपेतोऽञ्जलिर्गृहीतः । एवमत्रापि द्रवद्रव्यस्याऽऽज्यस्य स्रुवो योग्यः, छेदनीयमांसस्य शस्त्रविशेषः स्वधितिः । संहतस्य पुरोडाशस्य हस्तः, इत्यनेन प्रकारेण स्रुवाद्या व्यवस्थिताः ॥ ५४ ॥ ५५ ॥

इति श्रीमाधवीये जैमिनीयन्यायमालाविस्तरे प्रथमाध्यायस्य चतुर्थः पादः ॥ ४ ॥

| | अत्र पादे | आदितः । |
|---|---|---|
| अधिकरणानि | २० | ४२ |
| सूत्राणि | ३० | १५० |

समाप्तश्च प्रथमोऽध्यायः ॥ १ ॥

———

१ क. °ते । अत्रा° । २ क. °वत्रछिद्र° । घ. °वच्छिद्र° ।

॥ श्रीः ॥

# अथ द्वितीयोऽध्यायः ।

## ( तत्र प्रथमः पादः )

प्रमाणमुपजीव्यत्वात्प्रथमेऽध्याय ईरितम् ।

मानाधीनस्य धर्मस्य द्वितीये भेद उच्यते ॥ १ ॥

अनेन प्रथमद्वितीययोरध्याययोः पूर्वोत्तरभाव उपपादितः ॥ १ ॥

( प्रथमेऽपूर्वस्याऽऽख्यातप्रतिपाद्यत्वाधिकरणे सूत्राणि १–४ ) ।

भावार्थाः कर्मशब्दाः, तेभ्यः क्रिया प्रतीयेत, एष ह्यर्थो विधीयते ॥ १ ॥ सर्वेषां भावोऽर्थ इति चेत् ॥ २ ॥ येषामुत्पत्तौ स्वे प्रयोगे रूपोपलब्धिस्तानि नामानि, तस्मात्तेभ्यः पराकाङ्क्षा भूतत्वात्स्वे प्रयोगे ॥ ३ ॥ येषां तूत्पत्तावर्थे स्वे प्रयोगो न विद्यते तान्याख्यातानि, तस्मात्तेभ्यः प्रतीयेताऽऽश्रितत्वात्प्रयोगस्य ॥ ४ ॥

द्वितीयाध्यायस्य प्रथमे पादे प्रथमाधिकरणे प्रथमं वर्णकमारचयति—

विधिवाक्ये पदैः सर्वैरपूर्वं प्रतिपाद्यते ।
प्रत्येकमथवैकेन, सर्वैस्तत्प्रतिपादनम् ॥ २ ॥
फलान्वयित्वात्सर्वेषां प्रधानान्वयलाभतः ।
लाघवादेकबोध्यत्वं तच्छेषस्तु पदान्तरम् ॥ ३ ॥

विधिवाक्यमदृष्टार्थमखिलमत्रोदाहरणम् । विधिवाक्ये यावन्ति पदानि सन्ति तानि सर्वाणि क्रियाकारकसंबन्धमनादृत्य प्रत्येकमपूर्वस्य प्रतिपादकानि । कुतः । अपूर्वस्य फलत्वेन सर्वेषां पदानां फलान्वयित्वात् । अपूर्वप्रतिपादनाभावेऽपि क्रियाकारकयोः परस्परान्वयोऽस्त्येवेति चेत् । सत्यम् । तथाऽपि प्रधानान्वयो लभ्येत । फलं हि प्रधानम् । पुरुषार्थतया साध्यमानत्वादिति प्राप्ते,

ब्रूमः—अपूर्वस्यात्यन्तमदृष्टत्वादेककल्पनयैव वाक्यस्योपपत्तावनेककल्पने गौरवं

---

१ ख. पूर्वापर° । २ ख. ङ. लभ्यत । ग. लभेत ।

स्यात् । तस्मादेकमपूर्वमेकेन शब्देन प्रतिपाद्यते । पदान्तरं तु तच्छेषतयाऽन्वेति । ननु यस्य पदस्यार्थोऽपूर्वस्य कल्पकस्तत्पदार्थस्य फलसाधनतया फलं प्रत्युपादेयत्वविधेयत्वगुणत्वान्यभ्युपगन्तव्यानि । तथा तस्यैव शेषभूतपदान्तरार्थं प्रत्युद्देश्यत्वानुवाद्यत्वप्रधानत्वानामपि प्राप्तत्वाद्विरुद्धत्रिकद्वयापत्तिरिति चेत् । मैवम् । "उद्भिदा यजेत पशुकामः" "श्येनेनाभिचरन्यजेत" इत्यादावुद्भिदादिशब्दानां नामत्वेनान्वये सति यागसाधनवाचित्वाभावेन यजतावुद्देश्यत्वादित्रिकापादकत्वाभावात् । तस्मादेकमेव पदमपूर्वप्रतिपादकम् । न च धर्मभेदचिन्तायां प्रस्तुतायां परित्यज्य किमित्यपूर्वं चिन्त्यत इति वाच्यम् । अपूर्वस्यैव धर्मत्वात् ॥ २ ॥ ३ ॥

द्वितीयं वर्णकमारचयति—

द्रव्यादिशब्दतोऽपूर्वधीर्भावार्थपदादुत ।
द्रव्यादीनां फलार्थत्वात्तच्छब्देन ह्यपूर्वधीः ॥ ४ ॥
क्रियाद्वारमृते द्रव्यं फलेन नहि युज्यते ।
भावनावाचिनोऽपूर्वमाख्यातादवगम्यते ॥ ५ ॥
धात्वर्थव्यतिरेकेण भावना नेति चेन्न तत् ।
सर्वधात्वर्थसंबद्धः करोत्यर्थो हि भावना ॥ ६ ॥
धात्वर्थः करणं तस्यां समानपदवर्णितः ।
द्रव्याद्युपकृतिर्दृष्टा धात्वर्थोत्पादनात्मिका ॥ ७ ॥

इदमाम्नायते—"सोमेन यजेत" "हिरण्यमात्रेयाय ददाति" "तस्मात्सुवर्णं हिरण्यं धार्यम्" "श्येनेनाभिचरन्यजेत" "चित्रया यजेत पशुकामः" इत्यादि । तत्र सोमहिरण्यशब्दौ द्रव्यवाचिनौ, सुवर्णशब्दो गुणवाची, श्येनचित्राशब्दौ[1] कर्मवाचिनौ[2]। तैरेतैर्द्रव्यादिशब्दैरपूर्वं प्रत्येति[3] कुतः। द्रव्यादीनां सिद्धरूपाणां साध्यं फलं प्रति साधनत्वसंभवात् । यागदानादिरूपस्तु भावार्थः स्वयमपि फलवत्साध्यरूपत्वान्न साधनं भवितुमर्हति । ततो द्रव्यादीनां फलं प्रति करणत्वाद्द्रव्यादिशब्दा अपूर्वप्रत्यायका इति प्राप्ते—

ब्रूमः—क्रियां विना द्रव्याणि फलं साधयितुं न क्षमन्ते । पचिक्रियामन्तरेण काष्ठस्थाल्यादीनामोदनसाधकत्वादर्शनात् । अतो भावनावाचिना यजति ददातीत्याख्यातेनापूर्वं प्रतीयते । [4]ननु धात्वर्थ एव भावना, तदन्या वा । न तावद्धात्वर्थः। तस्य तां प्रति करणत्वोक्तेः। न द्वितीयः। धात्वर्थव्यतिरिक्तायाः क्रियाया

१ क. ख. ग. °बन्धः क° । २ क. °ब्दौ नामवा° । ३ क. ख. ग. °नौ । तैनैतैर्द्र° ।
४ क. ननु केयमाख्यातप्रत्ययवाच्या क्रियारूपा भावना, किं यागदानादिरूपा किंवा ततोऽतिरिक्ता । नाऽऽद्यः । तस्य धात्वर्थत्वात् । न द्वितीयः । क्रियाया दुर्लक्ष्यत्वादिति ।

दुर्लक्ष्यत्वादिति चेत्। मैवम्। सर्वधात्वर्थसंबद्धस्य करोतिरूपस्य लक्षयितुं शक्यत्वात्। तदुक्तमाचार्यैः—

"धात्वर्थव्यतिरेकेण यद्यप्येषा न लक्ष्यते।
तथाऽपि सर्वसामान्यरूपेणैवावगम्यते" इति।

अन्यैरप्युक्तम्—

"सिद्धसाध्यस्वभावाभ्यां धात्वर्थो द्विविधस्तयोः।
अन्योत्पादानुकूलात्मा भावना साध्यरूपिणी" इति।

'पचति' इत्युक्ते 'पाकं करोति' इत्येतमर्थं सर्वे जनाः प्रतियन्ति। तत्र पाकः, पाकिः पचनम्, इत्येतैः शब्दैर्व्यवह्रियमाणो लिङ्गकारकसंख्यायोग्यो धात्वर्थः सिद्धस्वभावः। 'करोति' इत्यनेन व्यवह्रियमाणो लिङ्गाद्यपेतः साध्यस्वभावः। तत्र सिद्धस्वभावद्योतनाय यथा घञ्प्रत्ययादयो विहिताः, तथा साध्यस्वभावद्योतनायाऽऽख्यातप्रत्ययविधिः। स चाऽऽख्यातप्रत्ययार्थ ओदनोत्पत्तेरनुकूलः। ततो भवितुरोदनस्य प्रयोजकव्यापारत्वाण्णिजन्तेन भावनाशब्देनोच्यते—इति। अन्ये भावनापक्षा अयुक्ताः। प्रयत्नो भावनेति चेत्। न। 'रथो गच्छति' इत्यत्र तदभावप्रसङ्गात्। स्पन्द इति चेत्। न। मानसत्यागरूपे यजतावव्याप्तेः। उभयसाधारणमुदासीनत्वविच्छेदसामान्यं भावनेति चेत्। न। शब्दभावनायामव्याप्तेः। न हि शब्दस्य विभोरचेतनस्य स्पन्दः प्रयत्नो वाऽस्ति। लिङ्-लेट्-लोट्तव्यप्रत्ययमात्रगता शब्दभावना। सर्वाख्यातगताऽर्थभावना। तदुक्तम्—

"अभिधां भावनामाहुरन्यामेव लिङादयः।
अर्थात्मभावना त्वन्या सर्वाख्यातेषु गम्यते" इति॥

किंच स्पन्दादिवादिनोऽपि न स्वरूपेण स्पन्दादीनां भावनात्वमाहुः, किंत्वन्योत्पादानुकूलं स्वरूपम्। तस्मादस्मदुक्तैव भावना। यथा 'पचति, इत्यत्रौदनफलोत्पत्त्यनुकूला, तथा 'यजति' इत्यत्र स्वर्गादिफलोत्पत्त्यनुकूला। तस्यां च फलभावनायां प्रत्ययवाच्यायामेकपदोपात्तत्वेन प्रत्यासन्नत्वात्प्रकृत्यर्थः करणम्, न तु द्रव्यादि। तस्य पदान्तरोपात्तत्वेन विप्रकृष्टत्वात्। साध्यरूपोऽपि प्रकृत्यर्थः स्वसाधननिष्पादितः सञ्शक्नोति फलं साधयितुम्। द्रव्यादीनां तु प्रकृत्यर्थोत्पादनेन दृष्ट एवोपकारः। द्रव्यादिनिष्पादितेन धातुवाच्येन यागादिकरणेन स्वर्गादिफलोत्पत्तौ सत्यां येयमनुकूलव्यापारात्मा कृतिशब्दाभिधेया फलोत्पादना सेयं

१ ख. ग. ङ. °द्धरूपेण ल°। २ क. ङ. °प्रसङ्गः। स्प°। ३ क. °व्याप्तिः। उ°। ४ क. °र्थात्मा। भा°। ५ ख. °ञ्शक्तोऽपि फ°।

यज्यादिधातूनामन्यतमेन केनापि नाभिधीयते । सर्वधात्वर्थानुयायित्वात् । अतो न भावनायाः प्रकृत्यर्थत्वमाशङ्कितुं शक्यम् । अस्तु तर्हि—धात्वर्थसामान्यमेव भावनेति चेत् । न । प्रतिधात्वर्थं विलक्षणरूपत्वात् । अन्यद्धि पाकस्यौदनं प्रत्यानुकूल्यम् । अन्यच्च चलनस्य संयोगविभागौ प्रति । अन्यथा फलविभागानुपपत्तेः । भिन्नासु भावनाव्यक्तिषु भावनात्वसामान्यमनुवर्ततां नाम । नैतावता प्रकृत्यर्थसामान्यं तद्भवति । तस्माद्विशेषरूपात्सामान्यरूपाच्च यज्यादिधातुवाच्यादन्यैवाऽऽख्यातप्रत्ययवाच्या भावना । तथासति ‘ यजेत ’ इत्यत्राऽऽख्यातस्य ‘ भावयेत् ’ इत्यर्थो भवति । तत्र ‘ किं भावयेत्, केन भावयेत्, कथं भावयेत्, इत्याकाङ्क्षायां ‘ स्वर्गं भावयेत् ’ यागेन भावयेत्, अग्न्यन्वाधानप्रयाजावघातादिभिरुपकारं संपाद्य भावयेत्, इत्येवं भाव्यकरणेतिकर्तव्यतासमर्पणेनाऽऽकाङ्क्षापूरणात्प्रकरणाम्नातः सकलः शब्दसंदर्भो भावनावाचिन आख्यातस्यैव प्रपञ्चः । भाव्याद्यंशत्रयवती सेयमार्थी भावनेत्युच्यते । सा सर्वाऽपि शब्दभावनाया भाव्या, विधायको लिङ्गादिः करणम् । अर्थवादसंपादिता स्तुतिरितिकर्तव्यता । सेयं शब्दभावना लिङ्गादिभिरेव गम्यते । ‘ अर्थभावना सर्वैराख्यातप्रत्ययैर्गम्यत इत्युक्तम् । तस्यां चार्थभावनायां स्वर्गस्य भाव्यत्वं कर्मियोगादवगम्यते । प्रकृत्यर्थस्य करणत्वं तृतीयाश्रुत्या । तथा च श्रूयते— “ दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत ” ‘ चित्रया यजेत पशुकामः ” इति । तच्च करणत्वमपूर्वकल्पनामन्तरेण न संभवतीत्यभिधास्यते । तस्मादाख्यातप्रत्ययान्ताद्भावार्थपदादपूर्वं गम्यते । चिन्ताप्रयोजनं तु—‘पूर्वपक्षे द्रव्याद्यपचारे प्रतिनिध्यभावः । सिद्धान्ते तु तत्सद्भावः’ इति ॥ ४॥५ ॥ ६ ॥ ७ ॥

( द्वितीयेऽपूर्वस्यास्तित्वाधिकरणे सूत्रम् ) ।

चोदना पुनरारम्भः ॥ ५ ॥

द्वितीयाधिकरणमारचयति—

अपूर्वसदसद्भावसंशये सति नास्ति तत् ।
मानाभावात्फलं यागात्सिध्येच्छास्त्रप्रमाणतः ॥ ८ ॥
क्षणिकस्य विनष्टस्य स्वर्गहेतुत्वकल्पनम् ।
विरुद्धं मान्तरेणातः श्रेयोऽपूर्वस्य कल्पनम् ॥ ९ ॥
अवान्तरव्यापृतिर्वा शक्तिर्वा यागजोच्यते ।
अपूर्वमिति तद्भेदः प्रक्रियातोऽवगम्यताम् ॥ १० ॥

पूर्वाधिकरणे वर्णकाभ्यां यदिदमुक्तम्—‘अपूर्वस्यैकमेव पदं प्रत्यायकम् ’ तच्च

१ क. °ना तु स° । २ क. °स्यैवमे° ।

‘यजेत’ इत्याख्यातान्तभावार्थपदम्, इति। तदनुपपन्नम्। अपूर्वसद्भावे मानाभावात्। ‘यजेत’ इत्याभ्यां प्रकृतिप्रत्ययाभ्यां करणभावनयोरभिधानात्। अपूर्वाभावे कालान्तरभाविस्वर्गसाधनत्वं विनश्वरस्य यागस्यानुपपन्नमिति चेत्। न। शास्त्रप्रामाण्येन तदुपपत्तेरिति प्राप्ते—

ब्रूमः—‘दर्शपूर्णमासाभ्याम्’ इति तृतीयाश्रुत्या तावद्यागस्य स्वर्गसाधनत्वं प्रमितम्। तद्यथोपपद्यते तथाऽवश्यं भवताऽपि कल्पनीयम्। तत्र किं यावत्फलं यागस्यावस्थानं कल्प्यते, किंवा विनष्टस्यापि स्वर्गोत्पादनम्। नाऽऽद्यः। यागे क्षणिकत्वस्य प्रत्यक्षसिद्धत्वात्। न द्वितीयः। मृतयोर्दंपत्योः पुत्रोत्पत्त्यदर्शनात्। अतो मानान्तरविरुद्धाद्भवदीयकल्पनादस्मदीयमविरुद्धमपूर्वकल्पनं न्यायः। कल्पितेऽप्यपूर्वे तस्यैव स्वर्गसाधनत्वाद्यागस्य स्वर्गसाधनत्वश्रुतिर्विरुध्येतेति चेत्। न। ‘यागावान्तरव्यापारोऽपूर्वम्’ इत्यङ्गीकारात्। न ह्युद्यमननिपतनयोरवान्तरव्यापारयोः सत्त्वे कुठारस्य साधनत्वमपैति। यदि व्यापारवतो यागस्य नाशे व्यापारो न तिष्ठेत्तर्हि यागजन्या काचिच्छक्तिरपूर्वमस्तु। शक्तिव्यवधानेऽपि यागस्य साधनत्वमविरुद्धम्। औष्ण्यव्यवहितेऽप्यग्नौ दाहकत्वाङ्गीकारात्। यथाऽङ्गारजन्यमौष्ण्यं शान्तेष्वप्यङ्गारेषु जलेऽनुवर्तते, तथा यागजन्यमपूर्वं नष्टेऽपि यागे कर्तर्यात्मन्यनुवर्तताम्। तस्मादस्त्यपूर्वम्। तद्विशेषस्तु संप्रदायसिद्धयागप्रक्रिययाऽवगन्तव्यः। तथा हि—प्रक्रिया पूर्वाचार्यैरित्थं दर्शिता—“प्रथमं तावत्फलवाक्येन कर्मणः फलसाधनता बोध्यते—‘यागेन स्वर्गं कुर्यात्’ इति। ‘कथं विनश्वरेण फलं कर्तव्यम्’ इत्यपेक्षायाम् ‘अपूर्वं कृत्वा’ इत्युच्यते। ‘कथमपूर्वं क्रियते’ इत्यपेक्षायां ‘यागानुष्ठानप्रकारेण’ इति। तच्चापूर्वं दर्शपूर्णमासयोरनेकविधम्—फलापूर्वम्, समुदायापूर्वम्, उत्पत्त्यपूर्वम्, अङ्गापूर्वं चेति। येन स्वर्ग आरभ्यते तत्फलापूर्वम्। अमावास्यायां त्रयाणां यागानामेकः समुदायः, पौर्णमास्यामपरः, तयोर्भिन्नकालवर्तिनोः संहत्य फलापूर्वारम्भायोगात्तदारम्भाय समुदायद्वयजन्यमपूर्वद्वयं कल्पनीयम्। तयोरेकैकस्याऽऽरम्भायैकैकसमुदायवर्तिनां त्रयाणां यागानां भिन्नक्षणवर्तित्वेन संघातात्पत्त्यभावाद्यागत्रयजन्यानि त्रीण्युत्पत्त्यपूर्वाणि कल्पनीयानि। तेषां चाङ्गोपकारमन्तरेणानिष्पत्तेरङ्गानां चानेकक्षणवर्तिनां संघातासंभवादङ्गापूर्वाणि कल्पनीयानि। तत्र स्वयं

१ क. ख. °तान्तं भा°। २ क. ख. °पद्यते, तथा°। ३ ख. °ष्ण्यं शीतेष्व°। ४ क. ख. ग. °या प्र°। ५ क. ततो भिन्न°। ६ क. ख. °नलक्ष°। ७ क. ग. °णि आरादुपकारकाणि क°।

विभागः—संनिपत्योपकारकाण्यवघातादीनि द्रव्यदेवतासंस्कारद्वारेण यागस्वरूपस्यैवातिशयाधानेन तदुत्पत्त्यपूर्वनिष्पत्तौ व्याप्रियन्ते। तद्द्वारेण फलापूर्वे। आराद्दुपकारकाणि तु प्रयाजादीन्युत्पत्त्यपूर्वेभ्यः फलापूर्वनिष्पत्तौ साक्षादेव व्याप्रियन्ते। एवं प्रकारभेदे सत्यपि सर्वाण्यङ्गान्यपूर्वनिष्पत्तावनुग्राहकाणि—इत्येकरूपेणोत्थंभावेन स्वी क्रियन्ते। अनयैव दिशा सर्वत्रापूर्वप्रक्रियाऽवगन्तव्या॥८॥९॥१०॥

अथ गुरुमतमाह—

यागक्रिया सूक्ष्मरूपा परमाण्वात्मसंश्रिता।
यावत्फलं नियोगाख्यं नापूर्वमिति चेन्न तत्॥ ११॥
मानहीनं क्रियासौक्ष्म्यं नियोगस्तु लिङादिना।
अभिधेयः पृथग्यागादपूर्वं कार्यमस्त्यतः॥ १२॥

गुरुणा यन्नियोगाख्यमपूर्वमभिप्रेयते तन्नास्ति। कुतः। अन्तरेणैव तदपूर्वं फलनिष्पत्तेः। न च यागनाशात्कथं फलसिद्धिरिति वाच्यम्। न हि यागक्रिया सर्वात्मना नश्यति, किंतु सूक्ष्मरूपत्वेनादृश्या सती स्वर्गदेहारम्भकेषु यागसंबन्धिद्रव्यगतपरमाणुषु यागकर्तर्यात्मनि वाऽवस्थाय फलमारभत इति पूर्वपक्षः।

नैतद्युक्तम्। उक्तेऽर्थे प्रमाणाभावात्। न च नियोगेऽपि[2] प्रमाणाभावः शङ्कनीयः। वैदिकलिङादीनां तदभिधायकत्वात्। ततो धात्वर्थातिरिक्तं कालान्तरभाव्यकाम्यफलसाधनमपूर्वमस्तीति॥ ११॥ १२॥

( तृतीये कर्मणां गुणप्रधानभावविभागाधिकरणे सूत्राणि ६—८ )।

तानि द्वैधं गुणप्रधानभूतानि॥ ६॥ यैर्द्रव्यं न चिकीर्ष्यते तानि प्रधानभूतानि द्रव्यस्य गुणभूतत्वात्॥ ७॥ यैस्तु द्रव्यं चिकीर्ष्यते गुणस्तत्र प्रतीयेत, तस्य द्रव्यप्रधानत्वात्॥ ८॥

तृतीयाधिकरणमारचयति—

अवघातादिनाऽपूर्वमुत्पाद्यं विद्यते न वा।
यजत्यादिवदस्त्येव वाक्यवैयर्थ्यमन्यथा॥ १३॥
दृष्टे तुषविमोके तु नापूर्वं द्रव्यतन्त्रतः।
स्याद्यजत्यादिवैषम्यं नियमापूर्वकृद्वचः॥ १४॥

दर्शपूर्णमासयोः श्रूयते—"व्रीहीनवहन्ति" "तण्डुलान्पिनष्टि" इति। तत्र अवघातपेषणे अपूर्वजनके, विहित[3]धात्वर्थत्वात्, यजत्यादिधात्वर्थवत्'। विपक्षे—विधिवाक्यवैयर्थ्यरूपो बाधकस्तर्कोऽवगन्तव्यः। तुषविमोकचूर्णत्वयोर्दृष्ट-

१ ग. इत्यैकरूप्येणे°। २ ख. ग. घ. ङ. °पि मानाभा°। ३ क. °हितेन धा°।

प्रयोजनयोर्लोकसिद्धत्वेन तादर्थ्येऽवघातपेषणयोर्विधिर्व्यर्थः स्यात्। तस्मात्—अस्त्यपूर्वमिति प्राप्ते,

ब्रूमः—दृष्टफले संभवत्यपूर्वं न कल्पनीयम्। यजत्यादिदृष्टान्तस्तु विषमः। तत्र हि क्रियाप्राधान्येन द्रव्यपारतन्त्र्याभावादपूर्वसाधनत्वं क्रियाया युक्तम्। इह तु 'व्रीहीन्' इति कर्मकारकविभक्त्या व्रीहीणामीप्सिततमत्वेन प्राधान्यावगमाद्द्रव्यपरतन्त्रोऽवघातो द्रव्य एवातिशयं कुर्यात्, न त्वपूर्वं जनयति। न च विधिर्वैयर्थ्यम्। नखनिर्भेदनादिना तुषविमोकसंभवेऽपि 'अवघातेनैवासौ कर्तव्यः' इति यो नियमस्तस्य नियमस्यापूर्वहेतुत्वेन विधेयत्वात्। तस्मान्नास्त्यवघातादिजन्यमपूर्वम् ॥ १४ ॥

अत्र गुरुमतमाह—

द्वितीयां सक्तुवद्भङ्क्त्वा नियोगेऽन्वयिता क्रिया।
साक्षादिति न मन्तव्यं दृष्टस्यात्रोपपत्तितः ॥ १५ ॥

"सक्तूञ्जुहोति" इत्यत्र द्रव्यप्राधान्यं परित्यज्य द्वितीयाया भङ्गं कृत्वा क्रियाप्राधान्याय "सक्तुभिर्जुहोति" इति तृतीयात्वेन विपरिणामो वक्ष्यते। तथा "व्रीहिभिरवहन्ति" इति विपरिणामेन प्रधानभूता क्रिया द्रव्यव्यवधानमन्तरेण साक्षादेव नियोगेऽन्वेतव्येति चेत्।

मैवम्। वैषम्यात्। तत्र "होमेन सक्तुषु संस्कारो न भवति' भस्मीभूतानामन्यत्र विनियोगासंभवात्, इत्यभिप्रेत्य संस्कारकर्मत्वं परित्यक्तम्। इह दृष्टस्तुषविमोकसंस्कार उपपद्यते। वितुषाणां तेषां पुरोडाशे विनियोगसंभवात्॥१५॥

(चतुर्थे संमार्जनादीनामप्रधानताधिकरणे सूत्राणि ९—१२)।

धर्ममात्रे तु कर्म स्यादनिर्वृत्तेः प्रयाजवत् ॥ ९ ॥
तुल्यश्रुतित्वाद्वेतरैः सधर्मः स्यात् ॥ १० ॥ द्रव्योपदेश इति चेत् ॥ ११ ॥ न तदर्थत्वाल्लोकवत्तस्य च शेषभूतत्वात् ॥ १२ ॥

चतुर्थाधिकरणमारचयति—

संमार्ष्टि स्रुच इत्यत्र किं प्रधानाख्यकर्मता।
गुणकर्मत्वमथवा दृष्टाभावेऽवघातवत् ॥ १६ ॥
गुणत्वं नहि संभाव्यं प्राधान्यं तु प्रयाजवत्।
अदृष्टकल्पनेनापि गुणत्वं स्याद्द्वितीयया ॥ १७ ॥

---

१ क. दृष्टिफ°। २ क. °त्वेनावि°। ३ ग. ङ. °न्वेत्विति। ४ क. विरोषाणां।

दर्शपूर्णमासयोर्जुह्वादीनां दर्भैः संमार्जनमाम्नातम्—"स्रुचः संमार्ष्टि" इति। तत्र संमार्जनं प्रधानकर्म। कुतः। गुणकर्मलक्षणरहितत्वात्, प्रधानकर्मलक्षणयुक्तत्वाच्च। सूत्रकारो हि कर्मणां राशिद्वयं प्रतिज्ञाय तयोर्लक्षणं पृथक्सूत्रयामास—"तानि द्वैधं गुणप्रधानभूतानि" "यैस्तु द्रव्यं चिकीर्ष्यते, गुणस्तत्र प्रतीयेत, तस्य द्रव्यप्रधानत्वात्" "यैस्तु द्रव्यं न चिकीर्ष्यते, तानि प्रधानभूतानि, द्रव्यस्य गुणभूतत्वात्" [पू०मी०सू०२।१।६–८] इति। यैः कर्मभिर्द्रव्यमुत्पादयितुं संस्कर्तुं वेष्यते, तेषु कर्मसु गुणत्वम्। कुतः। तस्य कर्मणो द्रव्यप्रधानत्वात्। द्रव्यं प्रधानमस्य, इति बहुव्रीहिः। "यूपं तक्षति" "आहवनीयमादधाति" इत्यादौ यूपाहवनीयादिद्रव्यमुत्पादयितुमिष्यते। "व्रीहीनवहन्ति" "तण्डुलान्पिनष्टि" इत्यादौ व्रीह्यादिद्रव्यं संस्कर्तुमिष्टम्। प्रयाजादिषूक्तवैपरीत्यात्प्रधानकर्मत्वम्। एवं सत्यवघातेन यथा व्रीहीणां तुषविमोको दृष्टः संस्कारः, तथा संमार्जनेन जुह्वादिषु कंचिदतिशयं न पश्यामः। अतोऽवघातवद्गुणकर्मत्वाभावात्प्रयाजादिवत्प्रधानकर्मत्वमिति प्राप्ते—

ब्रूमः—'स्रुच' इति द्वितीया कर्मकारके विहिता। कर्मत्वं चेप्सिततमत्वे सति भवति। "कर्तुरीप्सिततमं कर्म" [पा०सू०१।४।४९] इति कर्मसंज्ञाविधानात्। क्रतुसाधनत्वेन च स्रुचां युक्तमीप्सिततमत्वम्। अतः प्रधानभूताः स्रुचः। तथासति संमार्जनक्रियाया गुणकर्मत्वमवघातवद्भविष्यति। यदि स्रुक्षु दृष्टोऽतिशयो न स्यात्, तर्ह्यपूर्वं कल्पनीयम्॥ १६॥ १७॥

(पञ्चमे स्तोत्रादिप्राधान्याधिकरणे सूत्राणि १३–२९)।

स्तुतशस्त्रयोस्तु संस्कारो याज्यावद्देवताभिधानत्वात्॥ १३॥ अर्थेन त्वपकृष्येत देवतानामचोदनार्थस्य गुणभूतत्वात्॥ १४॥ वशावद्वा गुणार्थं स्यात्॥ १५॥ न श्रुतिसमवायित्वात्॥ १६॥ व्यपदेशभेदाच्च॥ १७॥ गुणश्चानर्थकः स्यात्॥ १८॥ तथा याज्यापुरोरुचोः॥ १९॥ वशायामर्थसमवायात्॥ २०॥ यत्रेति वाऽर्थवत्त्वात्स्यात्॥ २१॥

---

१ क. ग. ङ. °म्नायते—"स्रु°। २ ग. °धानं क°।

न त्वाम्नातेषु ॥ २२ ॥ दृश्यते ॥ २३ ॥ अपि वा श्रुतिसंयोगात्प्रकरणे स्तौतिशंसती क्रियोत्पत्तिं विदध्याताम् ॥ २४ ॥ शब्दपृथक्त्वाच्च ॥ २५ ॥ अनर्थकं च तद्वचनम् ॥ २६ ॥ अन्यश्चार्थः प्रतीयते ॥ २७ ॥ अभिधानं च कर्मवत् ॥ २८ ॥ फलनिर्वृत्तिश्च ॥ २९ ॥

पञ्चमाधिकरणमारचयति—

प्रउगं शंसतीत्यादौ गुणतोत प्रधानता ।
दृष्टा देवस्मृतिस्तेन गुणता स्तोत्रशस्त्रयोः ॥ १८ ॥
स्मृत्यर्थत्वे स्तौतिशंस्योर्धात्वोः श्रौतार्थबाधनम् ।
तेनादृष्टमुपेत्यापि प्राधान्यं श्रुतये मतम् ॥ १९ ॥

ज्योतिष्टोमे श्रूयते—“ प्रउगं शंसति ” “ निष्केवल्यं शंसति ” “ आज्यैः स्तुवते ” “ पृष्ठैः स्तुवते ” प्रउगनिष्केवल्यशब्दौ शस्त्रविशेषनामनी । आज्यपृष्ठशब्दौ तु व्याख्यातौ । अप्रगीतमन्त्रसाध्या[1] स्तुतिः शस्त्रम् । प्रगीतमन्त्रसाध्या स्तुतिः स्तोत्रम् । तयोः स्तुतशस्त्रयोर्गुणकर्मत्वं युक्तम् । कुतः । तुषविमोकवद्दृष्टार्थलाभात् । पठ्यमानेषु मन्त्रेष्वनुस्मरणेन देवता संस्क्रियत इति प्राप्ते—

ब्रूमः—स्तोतव्याया देवतायाः स्तावकैर्गुणैः संबन्धकीर्तनं स्तौतिशंसतिधात्वोर्वाच्योऽर्थः । यदि मन्त्रवाक्यानि गुणसंबन्धाभिधानपराणि, तदा धात्वोर्मुख्यार्थलाभाच्छ्रुतिरनुगृहीता भविष्यति । यदा तु गुणद्वारेणानुस्मरणीयदेवतास्वरूपप्रकाशनपराणि मन्त्रवाक्यानि स्युः, तदा धात्वोर्मुख्योऽर्थो न स्यात् । लोके हि ‘ देवदत्तश्चतुर्वेदाभिज्ञः’ इत्युक्ते स्तुतिः प्रतीयते । तस्य वाक्यस्य गुणसंबन्धपरत्वात् । यदा तु देवदत्तरूपपरता ‘ यश्चतुर्वेदी तमानय, इत्यादौ, तत्र न स्तुतिप्रतीतिः । तस्य चतुर्वेदसंबन्धद्वारेण देवदत्तस्वरूपोपलक्षणपरत्वेन गुणसंबन्धपरत्वाभावात् । ततश्च—‘आज्यैर्देवं प्रकाशयेत्, ‘ पृष्ठैर्देवं प्रकाशयेत्, इत्येवं विध्यर्थपर्यवसानाद्धात्वोर्मुख्यार्थो बाध्येत । ततो धातुश्रुतिमबाधितुं स्तोत्रशस्त्रयोः प्रधानकर्मत्वमभ्युपेतव्यम् । तत्र दृष्टं प्रयोजनं नास्तीति चेत् । तर्ह्यपूर्वमस्तु ॥ १८ ॥ १९ ॥

---

१ क. °साध्यस्तु° । २ ख. °ताप्र° । ३ क. ग. °त् । तत° । ४ °र्मुख्योऽर्थो ।

( षष्ठे मन्त्राविधायकत्वाधिकरणे सूत्रे ३०—३१ ) ।

विधिमन्त्रयोरैकार्थ्यमैकशब्द्यात् ॥३०॥ अपि वा प्रयोगसामर्थ्यान्मन्त्रोऽभिधानवाची स्यात् ॥३१॥

षष्ठाधिकरणमारचयति—

देवांश्च याभिर्यजत इत्याख्यातं तु मन्त्रगम् ।
विधायकं न वाऽन्येन समत्वात्तद्विधायकम् ॥ २० ॥
यच्छब्दादेः क्षीणशक्तिर्न विधिस्त्रिविधं ततः ।
आख्यातमभिधानं च प्रधानगुणकर्मणी ॥ २१ ॥

अयं मन्त्र आम्नायते—“ देवांश्च याभिर्यजते ददाति च ज्योगित्ताभिः सचते गोपतिः सह ” इति । अयमर्थः—गोपतिर्यजमानो याभिर्गोभिर्देवान्यजते याश्च गा ब्राह्मणेभ्यो ददाति चिरमेव ताभिः सह परलोकेऽवतिष्ठते' इति । तत्र यथा ब्राह्मणगतमाख्यातपदं प्रधानगुणकर्मणोरन्यन्तरस्य विधायकम् , तथा मन्त्रगतमपीति चेत् । मैवम् । यच्छब्दादिना[1] विधिशक्तेः क्षीणत्वात् । सति हि यच्छब्दे तस्य वाक्यस्यानुवादकत्वं प्रतीयते, न तु विधायकत्वम् । ‘ यच्छब्दादेः ’ इत्यादिशब्देनोत्तमपुरुषामन्त्रणादयः । ‘ बर्हिर्देवसदनं दामि ’ इत्युत्तमपुरुषः । ‘ अग्नीदग्नीन्विहर ’ इत्यामन्त्रणम् । एवं ब्राह्मणेऽपि—‘ यस्योभयं हविरार्तिमार्च्छेत् ’ इत्युदाहरणीयम् । तस्मात्—‘ आख्यातस्य प्रधानकर्मविधायत्वं, गुणाविधायकत्वं वा[2]’ इत्येवं द्वावेव प्रकारौ न भवतः, किंतु—‘ अभिधापकत्वम् ’ इत्यप्यस्ति तृतीयः प्रकारः । ततो[3] न मन्त्रगताख्यातस्य[4] विधायकत्वम् ॥ २० ॥ २१ ॥

( सप्तमे मन्त्रनिर्वचनाधिकरणे सूत्रम् ) ।

तच्चोदकेषु मन्त्राख्या ॥ ३२ ॥

सप्तमाधिकरणमारचयति—

‘अहे बुध्निय मन्त्रं म इति मन्त्रस्य लक्षणम् ।
नास्त्यस्ति वाऽस्य नास्त्येतदव्याप्त्यादेरवारणात् ॥ २२ ॥
याज्ञिकानां समाख्यानं लक्षणं दोषवर्जितम् ।
तेऽनुष्ठानस्मारकादौ मन्त्रशब्दं प्रयुञ्जते ॥ २३ ॥

आधान इदमाम्नायते—“ अहे बुध्निय मन्त्रं मे गोपाय ” इति । तत्र मन्त्रस्य

१ ख. °ब्दादीनां वि° । २ ख. ग. ङ. च । ३ क. °तो म° । ४ क. °तस्यावि° । ५ ख. °स्यातं ल° ।

लक्षणं नास्ति, अव्याप्त्यतिव्याप्त्योर्वारयितुमशक्यत्वात्। 'विहितार्थाभिधायको मन्त्रः' इत्युक्ते 'वसन्ताय कपिञ्जलानालभेत' इत्यस्य मन्त्रस्य विधिरूपत्वादव्याप्तिः। 'मननहेतुर्मन्त्रः' इत्युक्ते—ब्राह्मणेऽतिव्याप्तिः। एवम्—'असिपदान्तो मन्त्रः' 'उत्तमपुरुषान्तो मन्त्रः' इत्यादिलक्षणानां परस्परमव्याप्तिरिति चेत्। मैवम्। याज्ञिकसमाख्यानस्य निर्दोषलक्षणत्वात्। तच्च समाख्यानमनुष्ठानस्मारकादीनां मन्त्रत्वं गमयति। 'उरु प्रथस्व'—इत्यादयोऽनुष्ठानस्मारकाः। 'अग्निमीळे पुरोहितम्' इत्यादयः स्तुतिरूपाः। 'इषे त्वा'—इत्यादयस्त्वान्ताः। 'अग्न आ याहि वीतये' इत्यादय आमन्त्रणोपेताः। 'अग्नीदग्नीन्विहर'—इत्यादयः प्रैषरूपाः। 'अधः स्विदासीदुपरि स्विदासीत्' इत्यादयो विचाररूपाः। 'अम्बे अम्बिके अम्बालिके न मानयति कश्चन'—इत्यादयः परिदेवनरूपाः। 'पृच्छामि त्वा परमन्तं पृथिव्याः' इत्यादयः प्रश्नरूपाः। 'वेदिमाहुः परमन्तं पृथिव्याः' इत्यादय उत्तररूपाः। एवमन्यदप्युदाहर्तव्यम्। ईदृशेष्वत्यन्तविजातीयेषु समाख्यानमन्तरेण नान्यः कश्चिदनुगतो धर्मोऽस्ति, यस्य लक्षणत्वमुच्येत। लक्षणस्योपयोगश्च पूर्वाचार्यैर्दर्शितः—

"ऋषयोऽपि पदार्थानां नान्तं यान्ति पृथक्त्वशः।
लक्षणेन तु सिद्धानामन्तं यान्ति विपश्चितः" ॥ इति।

तस्मात्—अभियुक्तानाम् 'मन्त्रोऽयम्' इति समाख्यानं लक्षणम् ॥२२॥२३॥

( अष्टमे ब्राह्मणनिर्वचनाधिकरणे सूत्रम् )।

शेषे ब्राह्मणशब्दः ॥ ३२ ॥

अष्टमाधिकरणमारचयति—

नास्त्येतद्ब्राह्मणेत्यत्र लक्षणं विद्यतेऽथवा।
नास्तीयन्तो वेदभागा इति क्लृप्तेरभावतः ॥ २४ ॥
मन्त्रश्च ब्राह्मणं चेति द्वौ भागौ तेन मन्त्रतः।
अन्यद्ब्राह्मणमित्येतद्भवेद्ब्राह्मणलक्षणम् ॥ २५ ॥

चातुर्मास्येष्विदमाम्नायते—'एतद्ब्राह्मणान्येव पञ्च हवींषि' इति। तत्र—ब्राह्मणस्य लक्षणं नास्ति। कुतः। वेदभागानामियत्तानवधारणेन ब्राह्मणभागेष्वन्यभागेषु च लक्षणस्याव्याप्त्यतिव्याप्त्योः शोधयितुमशक्यत्वात्। पूर्वोक्तो मन्त्रभाग एकः। भागान्तराणि च कानिचित्पूर्वैरुदाहर्तुं संगृहीतानि—

---

१ क. ख. ङ. °लभते" इ°। २ ख. °न्त्रस्यावि°। ३ क. कृतं। ४ क. नास्तेवन्तो।

"हेतुर्निर्वचनं निन्दा प्रशंसा संशयो विधिः ।
परक्रिया पुराकल्पो व्यवधारणकल्पना*" इति ।

'तेन ह्यन्नं क्रियते' इति हेतुः । 'तद्दध्नो दधित्वम्' इति निर्वचनम् । 'अमेध्या वै माषाः' इति निन्दा । 'वायुर्वै क्षेपिष्ठा देवता' इति प्रशंसा । 'तद्‌व्यचिकित्सज्जुहवानि, मा हौषम्' इति संशयः । 'यजमानेन संमितौदुम्बरी भवति' इति विधिः । 'माषानेव मह्यं पचत' इति परकृतिः । 'पुरा ब्राह्मणा अभैषुः' इति पुराकल्पः । 'यावतोऽश्वान्प्रतिगृह्णीयात्, तावतो वारुणांश्चतुष्कपालान्निर्वपेत्' इति विशेषावधारणकल्पना । एवमन्यदप्युदाहार्यम् । न च 'हेत्वादीनामन्यतमं ब्राह्मणम्' इति लक्षणम् । मन्त्रेष्वपि हेत्वादिसद्भावात् । तथा हि—'इन्दवो वामुशन्ति हि' इति हेतुः । 'उदानिषुर्महीरिति तस्मादुदकमुच्यते' इति निर्वचनम् । 'मोघमन्नं विन्दते अप्रचेताः' इति निन्दा । 'अग्निर्मूर्धा दिवः ककुत्पतिः' इति प्रशंसा । 'अधः स्विदासीदुपरि स्विदासीत्' इति संशयः । 'कपिञ्जलानालभेत' इति विधिः । 'सहस्रमयुतं ददत्' इति परकृतिः । 'यज्ञेन यज्ञमयजन्त देवाः' इति पुराकल्पः । 'इतिकरणबहुलं ब्राह्मणम्' इति चेत् । न । 'इत्यददा इत्ययजथा इत्यपच इति ब्राह्मणो गायेत्' इत्यस्मिन्ब्राह्मणेन गातव्ये मन्त्रे अतिव्याप्तेः । 'इत्याहेत्यनेन वाक्येनोपनिबद्धं ब्राह्मणम्' इति चेत् । न । 'राजा चिद्यं भगं भक्षीत्याह' 'यो वा रक्षाः शुचिरस्मीत्याह' इत्यनयोर्मन्त्रयोरतिव्याप्तेः । 'आख्यायिकारूपं ब्राह्मणम्' इति चेत् । न । यमयमीसंवादसूक्तादावतिव्याप्तेः । तस्मात्—'नास्ति ब्राह्मणस्य लक्षणम्' इति प्राप्ते—

ब्रूमः—'मन्त्रब्राह्मणरूपौ द्वावेव वेदभागौ' इत्यङ्गीकारान्मन्त्रलक्षणस्य पूर्वमभिहितत्वात् 'अवशिष्टो वेदभागो ब्राह्मणम्' इत्येतल्लक्षणं भवति—इति ॥२४॥

( नवम ऊहाद्यमन्त्रताधिकरणे सूत्रम् ) ।

अनाम्नातेष्वमन्त्रत्वमाम्नातेषु हि विभागः ॥ ३४ ॥

नवमाधिकरणमारचयति—

ऊहप्रवरनाम्नां किं मन्त्रताऽस्त्यथवा न हि ।
मन्त्रास्तदेकवाक्यत्वान्न तल्लक्षणवर्जनात् ॥ २६ ॥

* एतदुक्तम्—'उपमानं दर्शते तु विधयो ब्राह्मणस्य तु । एतद्वै सर्ववेदेषु नियतं विधिलक्षणम्' इत्यधिकं शाबरभाष्ये वर्तते ।

१ क. ग. ङ. °ह्या" इ° । २ ख. ग. °सा । "स व्यचि° । ३ क. ख. ग. घ. ङ. °त्वतमकृत्स्ना° । ४ ख. ग. ङ. ककुदिति । ५ क. व्याप्तिः । इ° ।

" अग्नये जुष्टं निर्वपामि " इत्यस्य सौर्ये चरौ ' सूर्याय जुष्टं निर्वपामि ' इत्येवं पदान्तरप्रक्षेप ऊहः । ' अदीक्षिष्टायं ब्राह्मणः ' इत्यस्य मन्त्रस्य शेषत्वेन प्रयोगकाले ब्राह्मणनामधेयविशेषं तदीयप्रवरं चैवं पठन्ति—" असौ देवदत्तोऽमुष्य पुत्रोऽमुष्य पौत्रोऽमुष्य नप्ताऽमुष्याः पुत्रोऽमुष्याः पौत्रोऽमुष्या नप्ता " इति । ' आङ्गिरसबार्हस्पत्यभारद्वाजगोत्रः ' इति च । एतेषामूहप्रवरनामधेयानां मन्त्रत्वमस्ति । कुतः। मन्त्रेण सहैकवाक्यत्वादिति चेत् । मैवम् । याज्ञिकप्रसिद्धिरूपस्य मन्त्रलक्षणस्यैतेष्वभावात् । न ह्यध्येतार ऊहादीन्मन्त्रकाण्डेऽधीयते । तस्मात्—नास्ति मन्त्रत्वम् ॥ २६ ॥

( दशम ऋग्लक्षणाधिकरणे सूत्रम् )।

तेषामृग्यत्रार्थवशेन पादव्यवस्था ॥ ३५ ॥

( एकादशे सामलक्षणाधिकरणे सूत्रम् )।

गीतिषु सामाख्या ॥ ३६ ॥

( द्वादशे यजुर्लक्षणाधिकरणे सूत्रम् )।

शेषे यजुःशब्दः ॥ ३७ ॥

दशमैकादशद्वादशाधिकरणमारचयति—

नर्क्सामयजुषां लक्ष्म सांकर्यादिति शङ्किते ।
पादश्च गीतिः प्रश्लिष्टपाठ इत्यस्त्वसंकरः ॥ २७ ॥

इदमाम्नायते—' अहे बुध्निय मन्त्रं मे गोपाय यमृषयस्त्रैविदा विदुः । ऋचः सामानि, यजूंषि ' इति । " त्रीन्वेदान्विदन्ति ' इति त्रिविदः, त्रिविदां संबन्धिनोऽध्येतारस्त्रैविदाः। ते च यं मन्त्रभागमृगादिरूपेण त्रिविधमाहुः, तं गोपाय, इति योजना । तत्र त्रिविधानामृक्सामयजुषां व्यवस्थितं लक्षणं नास्ति। कुतः । सांकर्यस्य दुष्परिहरत्वात् । ' अध्यापकप्रसिद्ध्यर्ग्वेदादिषु पठितो मन्त्र ऋगादिः' इति हि लक्षणं वक्तव्यम् । तच्च संकीर्णम् । ' देवो वः सवितोत्पुनात्वच्छिद्रेण पवित्रेण वसोः सूर्यस्य रश्मिभिः ' इत्ययं मन्त्रो यजुर्वेदे संपातियज्ञयजुषां मध्ये पठितः । न च तस्य यजुष्ट्वमस्ति । तद्ब्राह्मणे ' सावित्र्यर्चा ' इत्युक्तत्वेन व्यवहृतत्वात् । ' एतत्साम गायन्नास्ते ' इति प्रतिज्ञाय किंचित्साम यजुर्वेदे

---

१ ख. °स्य सूर्यच° । २ क. ब्रह्मण. । ३ ख. ग. ङ. °दीयं प्र° । ४ ख. ग. ङ. त्वावगमात् । ५ ङ. °णस्योहादिष्व° । ६ क. °ष्वागवे° । ७ क. परिच्छितो । ८ ख. ग. ङ. मन्त्रः । इ° । ९ ङ. °पक्षो य° । १० क. °न्नाह्म° ।

गीतम् । 'अक्षितमसि ' ' अच्युतमसि ' 'प्राणसंशितमसि ' इति त्रीणि यजूंषि सामवेदे समाम्नातानि । तथा गीयमानस्य साम्न आश्रयभूता ऋचः सामवेदे समाम्नायन्ते । तस्मात्—नास्ति लक्षणम्—इति चेत् ।

न । पादादीनामसंकीर्णलक्षणत्वात् । ' पादेनार्थेन चोपेता वृत्तबद्धा मन्त्रा ऋचः । गीतिरूपा मन्त्राः सामानि । वृत्तगीतिवर्जितत्वेन प्रश्लिष्टपठिता मन्त्रा यजूंषि ' इत्युक्ते न क्वापि संकरः ॥ २७ ॥

( त्रयोदशे निगदानां यजुष्ट्वाधिकरणे सूत्राणि ३८–४५ ) ।

निगदो वा चतुर्थं स्याद्धर्मविशेषात् ॥ ३८ ॥
व्यपदेशाच्च ॥३९॥ यजूंषि वा तद्रूपत्वात्॥४०॥
वचनाद्धर्मविशेषः ॥ ४१ ॥ अर्थाच्च ॥ ४२ ॥
गुणार्थो व्यपदेशः ॥ ४३ ॥ सर्वेषामिति चेत् ॥
४४ ॥ न ऋग्व्यपदेशात् ॥ ४५ ॥

त्रयोदशाधिकरणमारचयति–

प्रोक्षणीरासादयेति निगदस्त्रिविधाद्बहिः ।
यजुर्वोच्चैस्त्वधर्मस्य भेदादस्य चतुर्थता ॥ २८ ॥
परप्रत्यायनार्थत्वादुच्चैस्त्वं यजुरेव सः ।
तल्लक्षणेन युक्तत्वात्त्रैविध्यमिति सुस्थितम् ॥ २९ ॥

' प्रोक्षणीरासादय ' ' इध्मं बर्हिरुपसादय ' ' अग्नीदग्नीन्विहर ' ' बर्हिः स्तृणीहि ' ' इन्द्र आगच्छ ' ' हरिव आगच्छ ' इत्यादयो निगदा आम्नाताः । परप्रत्यायनार्था मन्त्रा निगदाः । एते च पूर्वोक्तेभ्य ऋग्यजुः-सामभ्यो बहिर्भूताश्चतुर्थप्रकाराः । कुतः । पादगीत्योर्ऋक्सामलक्षणयोरभावात् । प्रश्लिष्टपाठस्य यजुर्लक्षणस्य सत्त्वेऽपि धर्मभेदेन यजुष्यन्तर्भावानुपपत्तेः । 'उपांशु यजुषा ' 'उच्चैर्निगदेन' इति हि धर्मभेदः—इति प्राप्ते–

ब्रूमः–' बहिर्ब्राह्मणा भोज्यन्ताम् ' 'परिव्राजकास्त्वन्तः' इत्यत्र सत्येव परिव्राजकानां ब्राह्मण्ये पूजानिमित्तो विशेषो यथा तथा निगदानां यजुर्लक्षणोपेतत्वेन यजुषामेव सतां परप्रत्यायननिमित्तमुच्चैस्त्वधर्मः । ततो मन्त्राणां त्रैविध्यं सुस्थितम् ॥ १८ ॥ २९ ॥

---

१ क. ग. °णशंसित° । २ ख. °चैस्तु ध° । ३ ख. ग. इध्माबर्हिं° । ४ क. °स्य स° ।

( चतुर्दश एकवाक्यत्वलक्षणाधिकरणे सूत्रम् )।

अर्थैकत्वादेकं वाक्यं साकाङ्क्षं चेद्विभागे स्यात् ॥ ४६ ॥

चतुर्दशाधिकरणमारचयति—

देवस्य त्वेति वाक्यस्य भिन्नत्वमथवैकता।
ऐक्यप्रयोजकस्यात्र दुर्बोधत्वेन भिन्नता ॥ ३० ॥
विभागे सति साकाङ्क्षस्यैकार्थत्वं प्रयोजकम्।
तस्माद्वाक्यैक्यमेतेन यजुरन्तोऽवधार्यते ॥ ३१ ॥

दर्शपूर्णमासयोराम्नायते—"देवस्य त्वा सवितुः प्रसवे, अश्विनोर्बाहुभ्याम्, पूष्णो हस्ताभ्याम्, अग्नये जुष्टं निर्वपामि" इति। तत्र वाक्यानि भिन्नानि भवितुमर्हन्ति। कुतः। एकत्वनियामकस्य दुर्बोधत्वात्। अर्थैक्यं वाक्यैक्ये प्रयोजकमिति चेत्। न। एकस्मिन्पदेऽतिव्याप्तेः। पदसमूहस्य वाक्यत्वे, समूहानामत्र बहूनां संभवाद्वाक्यभेदः स्यात्—इति चेत्।

मैवम्। 'यद्विभागे साकाङ्क्षमविभागे चैकार्थम्, तदेकं वाक्यम्' इति प्रयोजकस्य बोद्धुं शक्यत्वात्। 'विभागे साकाङ्क्षम्' इत्युक्तेऽतिव्याप्तिः स्यात्। "स्योनं ते सदनं कृणोमि घृतस्य धारया सुसेवं कल्पयामि, तस्मिन्सीदामृते प्रतितिष्ठ व्रीहीणां मेध सुमनस्यमानः" इत्यत्र 'तस्मिन्'—इत्यादिपदसमूहस्य विभागे सति प्रकृतवाचितच्छब्दार्थनिर्णयाय पूर्वपदसमूहसाकाङ्क्षत्वमस्ति, अतस्तद्व्यवच्छेत्तुम् 'एकार्थम्' इत्युच्यते। नहि तत्रैकार्थत्वमस्ति। पूर्वसमूहस्य सदनकरणमर्थः, उत्तरसमूहस्य पुरोडाशप्रतिष्ठापनम्। स्योनं समीचीनम्। सुसेवं सुष्ठु सेवितुं योग्यम्। मेध सारभूतपुरोडाशेत्यर्थः। अत्र द्वयोः समूहयोर्वाक्यद्वयमुभयवादिसिद्धम्। तत् 'एकार्थम्' इत्यनेन व्यावर्त्यते। 'एकार्थम्' इत्युक्तेऽतिव्याप्तिः स्यात्। "भगो वां विभजतु, पूषा वां विभजतु" इत्यनयोर्विभजनमन्त्रत्वेन संमतयोः पदसमूहयोस्तात्पर्यविषयस्य द्रव्यविभागरूपस्यार्थस्यैकत्वात्, तद्व्यवच्छेत्तुं 'विभागे साकाङ्क्षम्' इत्युक्तम्। प्रकृते तु 'अग्नये जुष्टम्' इत्यादिसमूहे पृथक्कृते पूर्वो 'देवस्य त्वा' इति समूहः साकाङ्क्षो भवति। एकीकृते तु कृत्स्नस्यैक एव निर्वापोऽर्थः। एतेनैकवाक्यत्वनिर्णयेनानियतपरिमाणस्य यजुषोऽवसानं निश्चेतुं शक्यम् ॥ ३० ॥ ३१ ॥

विभिन्न

---

१ ख. °र्यताम् ॥३१॥ द°। २ क. बहुत्वसं° ३ क. ग. सुशेवं। ४ क. ख. ग. तत्रैतत्।

( पञ्चदशे वाक्यभेदाधिकरणे सूत्रम् ) ।

समेषु वाक्यभेदः स्यात् ॥ ४७ ॥

पञ्चदशाधिकरणमारचयति–

इषे त्वादिर्मन्त्र एको भिन्नो वैकः क्रियापदे ।
असत्यर्थास्मारकत्वादेकादृष्टस्य कल्पनात् ॥ ३२ ॥
छेदने मार्जने चैतौ विनियुक्तौ क्रियापदे ।
अध्याहृते स्मारकत्वान्मन्त्रभेदोऽर्थभेदतः ॥ ३३ ॥

" इषे त्वोर्जे त्वा " इति श्रूयते । सोऽयं पदसमुदाय एको मन्त्रः । कुतः ? अस्य मन्त्रस्यादृष्टत्वे त्वेकस्यैवादृष्टस्य कल्पने लाघवात् । न च "उरु प्रथस्व" इत्यादिमन्त्रवदनुष्ठेयार्थस्मारकत्वं संभवति । क्रियापदाभावेन तदर्थप्रतीत्यभावात्–इति प्राप्ते,

ब्रूमः–' इषे त्वेति च्छिनत्ति, ऊर्जे त्वेत्यनुमार्ष्टि ' इति पलाशशाखायाश्छेदनमार्जनयोरेतौ विनियुक्तौ । ततस्तदनुसारेण ' छिनद्मि ' इति क्रियापदेऽध्याहृते सत्यनुष्ठेयार्थस्मारकत्वादर्थभेदेन वाक्यभेदाद्यजुर्मन्त्रभेदः । इष्यमाणायान्नाय भोः पलाशशाखे त्वा छिनद्मि ' ' ऊर्जे रसाय बलाय वा त्वामनुमार्ज्मि ' इत्यर्थभेदः । एवम् " आयुर्यज्ञेन कल्पताम् " " प्राणो यज्ञेन कल्पताम् " इत्यादौ क्लृप्तिसामान्यरूपस्यार्थस्यैकत्वेऽप्यायुरादिभिर्भिन्नत्वादर्थभेदवाक्यभेदयोः स्पष्टत्वात्, ' क्लृप्तीर्वाचयति ' इति क्लृप्तिबहुत्वस्य चोदितत्वाच्च यजुर्भेदो द्रष्टव्यः ॥३२॥३३॥

( षोडशे ( सप्तदशे च ) अनुषङ्गाधिकरणे सूत्रम् ) ।

अनुषङ्गो वाक्यसमाप्तिः सर्वेषु तुल्ययोगित्वात् ॥ ४८ ॥

षोडशाधिकरणमारचयति–

या ते अग्ने रजेत्यध्याहारो यद्वाऽनुषञ्जनम् ।
तनूरित्यन्यशेषत्वादध्याहारोऽत्र लौकिकः ॥ ३४ ॥
वेदाकाङ्क्षा पूर्णाया वेदेनेत्यनुषञ्जनम् ।
अन्यशेषोऽपि बुद्धिस्थो लौकिकस्तु न तादृशः ॥ ३५ ॥

ज्योतिष्टोमे उपसद्धोमेष्वेवमाम्नायते–"या ते अग्नेऽयाशया तनूर्वर्षिष्ठा गह्वरेष्ठा । उग्रं वचो अपावधीत्त्वेषं वचो अपावधीत्स्वाहा । या ते अग्ने रजाशया,

---

१ ख. ग. ङ. अस्या° । २ ख. °ष्टोमे. ह्युप° ।

या ते अग्ने हराशया" इति। अयमर्थः—'अयसा रजतेन हिरण्येन च निर्मिता अग्नेस्तिस्रस्तनवः, तास्वाद्या येयमुक्ता तनूः साऽतिशयेन वृद्धा, गह्वरे तीक्ष्णे[1] द्रव्ये लोहेऽ[2]वस्थिता तया तन्वा क्षुत्पिपासे उपघातकम्, वीरहत्यादि महापातकं च हतवानस्मि' इति। तथा च ब्राह्मणम्, "यदुग्रं वचो अपावधीत्त्वेषं वचो अपावधीत्स्वाहेति। अशनायापिपासे ह वा उग्रं वचः। एनश्च वैरहत्यं च त्वेषं वचः" इति। तत्र स्वाहान्तः प्रथमो मन्त्रः संपूर्णवाक्यत्वान्निराकाङ्क्षः। द्वितीयतृतीय[3]मन्त्रयोराकाङ्क्षां पूरयितुमुचितो लौकिको वाक्यशेषोऽध्याहर्तव्यः। न हि 'तनूर्वर्षिष्ठा' इत्यादिभागस्तयोरन्वेतुं योग्यः। तस्य प्रथममन्त्रशेषत्वात्, इति प्राप्ते,

ब्रूमः—वैदिकयोर्मन्त्रयोराकाङ्क्षा वैदिकेनैव वाक्यशेषेण पूरणीया। ततः 'तनूर्वर्षिष्ठा' इत्यादिभाग उत्तरयोर्मन्त्रयोरनुषज्यते। यद्यप्यन्यमन्त्र[4]शेषः, तथाऽपि बुद्धिस्थः सन्कल्पनीयादध्याहार्यात्सन्निकृष्यते। तस्मात्—अनुषङ्गः कर्तव्यः ॥ ३४ ॥ ३५ ॥

*सप्तदशाधिकरणमारचयति—

नानुषङ्गोऽनुषङ्गो वाऽच्छिद्रेणेत्यस्य शेषिणौ।
चित्पतिस्त्वेत्यनाकाङ्क्षावतौ नात्रानुषज्यते ॥ ३६ ॥
करणत्वं क्रियापेक्षं क्रिया चैका पुनात्विति।
मन्त्रत्रयेऽतस्तद्द्वारा सर्वशेषोऽनुषज्यते ॥ ३७ ॥

ज्योतिष्टोमे दीक्षाप्रकरणे पठ्यते—"चित्पतिस्त्वा पुनातु" "वाक्पतिस्त्वा पुनातु" "देवस्त्वा सविता पुनात्वच्छिद्रेण पवित्रेण वसोः सूर्यस्य रश्मिभिः" इति। तत्र तृतीयमन्त्रशेषः 'अच्छिद्रेण'—इत्यादिभागः प्रथमद्वितीय[5]योर्मन्त्रयोर्नानुषज्यते। कुतः। निराकाङ्क्षत्वात्। न हि "चित्पतिस्त्वा पुनातु" "वाक्पतिस्त्वा पुनातु" इत्यनयोः शेषिणोः संपूर्ण[6]वाक्ययोः काचिच्छेषाकाङ्क्षाऽस्ति—इति प्राप्ते—

ब्रूमः—'मा भूच्छेषिणोराकाङ्क्षा, तथाऽपि शेषस्याऽऽकाङ्क्षाऽस्ति' इति। 'पवित्रेण रश्मिभिः' इत्युक्तं करणत्वं हि क्रियामपेक्षते। क्रिया च 'पुनातु' इत्येषा त्रिष्वपि मन्त्रेष्वेका। तया क्रियया संबद्धः शेषः क्रियाद्वारा तृतीयमन्त्रे निरपेक्षोऽपि यथाऽन्वेति, तथा पूर्वयोरप्यन्वेतुमर्हति। तस्मात्—अस्त्यनुषङ्गः ॥ ३६ ॥ ३७ ॥

* 'वर्णकान्तरमारचयति' इति तु युक्तम्। अत एव शाबरभाष्य—शास्त्रदीपिकयोरप्यस्यार्थस्य षोडशाधिकरणोदाहरणत्वमेवाङ्गीकृतम्।

१ क. तीक्ष्णद्र°। २ क. °वसिता। ३ ख. ग. ङ. °ययो°। ४ ङ. °न्यमन्त्रस्य शे°। ५ ख. ग. घ. ङ. °यमन्त्रा°। ६ ख. °र्णयोर्वाक्य°।

( अष्टादशे (सप्तदशे) व्यवेताननुषङ्गाधिकरणे सूत्रम् )।

व्यव(वा)यान्नानुषज्येत ॥ ४९ ॥

अष्टादशा(सप्तदशा)धिकरणमारचयति-

गच्छतामितिशब्दस्यानुषङ्गोऽस्ति न वोपरि ।
सं यज्ञपतिरित्यत्र योग्यत्वात्सोऽस्ति पूर्ववत् ॥ ३८ ॥

तदेकवचनं मध्यमन्त्रेऽङ्गानीत्यनेन हि ।
नान्वेति तद्व्यवायेन नोपर्यप्यनुषज्यते ॥ ३९ ॥

अग्नीषोमीयपशौ श्रूयते—"सं ते+प्राणो वातेन गच्छताम्, समङ्गानि यजत्रैः, सं यज्ञपतिराशिषा" इति । अयमर्थः—'भोः पशो तव प्राणो[१] वातेन बाह्येन वायुना संगच्छताम्, तव हृदयाद्यङ्गानि यागविशेषैः संयुज्यन्ताम्, यज्ञपतिराशिषा संयुज्यताम्' इति । तत्र "यज्ञपतिः" इत्यस्मिंस्तृतीये[२] मन्त्रे 'सम्' इत्युपसर्गस्य क्रियापदाकाङ्क्षत्वात्प्रथममन्त्रगतस्य 'गच्छताम्' इति पदस्यैकवचनान्तस्य यज्ञपतिशब्देनान्वेतुं योग्यत्वात्पूर्ववद्बुद्धिस्थत्वेन संनिहितत्वादाकाङ्क्षा[३]संनिधियोग्यतानां[४] सद्भावेन क्रियापदमनुषज्यते—इति प्राप्ते,—

ब्रूमः—मध्यममन्त्रे बहुवचनान्तेन 'अङ्गानि' इत्यनेनान्वेतुमयोग्यत्वात्तद्व्यवायेन बुद्धिसंनिध्य[५]भावान्नास्त्यनुषङ्गः । ततो द्वितीयतृतीयमन्त्रयोर्यथोचितं[६] वाक्यशेषोऽध्याहर्तव्यः ॥३८॥३९॥

इति श्रीमाधवीये जैमिनीयन्यायमालाविस्तरे
द्वितीयाध्यायस्य प्रथमः पादः ॥ १ ॥

---

| | अत्र पादे | आदितः । |
|---|---|---|
| अधिकरणानि | १८ | ६० । |
| सूत्राणि | ४९ | १९९ । |

---

+'क' पुस्तके शावरभाष्ये च 'ते वायुर्वातेन' इति दृश्यते ।

---

१ क. °णो °वायुर्बाह्यवा° । २ ख. ग. घ. ङ. °तीयमन्त्रे । ३ ख. °क्षायोग्यतासंनिधिस° । ४ ग. घ. °तास° । ५ ख. °द्धिसांनिध्याभा° । ६ क. °चितो वा° ।

(अथ द्वितीयाध्यायस्य द्वितीयः पादः)

(प्रथमेऽङ्गापूर्वभेदाधिकरणे सूत्रम्)।

शब्दान्तरे कर्मभेदः कृतानुबन्धत्वात् ॥ १ ॥

द्वितीयपादस्य प्रथमाधिकरणमाचरयति—

ददाति यजतीत्यादौ भावनैक्यमुतान्यता।
आख्यातैक्यात्तदेकत्वं धातुभेदोऽप्रयोजकः ॥ १ ॥
धातुभेदेन भिन्नत्वमाख्याते श्रूयते ततः।
उत्पत्त्येकानुरक्तत्वाद्भिद्यन्ते भावना मिथः ॥ २ ॥

इहैकप्रकरणगतान्यपर्यायधातुनिष्पन्नान्याख्यातानि यजति, ददाति, जुहोति, इत्यादीन्युदाहरणम्। तानि चैवं श्रूयते—"सोमेन यजेत" "हिरण्यमात्रेयाय ददाति" "दाक्षिणानि जुहोति" इति। तेषु भावनावाचिन आख्यातस्यैकत्वाद्भावनाया एकत्वं युक्तम्। न च धातुभेदाद्भावनाभेदः। तद्वाचित्वाभावेन धातोस्तस्यामप्रयोजकत्वात्—इति प्राप्ते,

ब्रूमः—अस्त्वाख्यातमेव भावनायाः प्रयोजकम्। तच्चाऽऽख्यातं प्रतिधातु भिन्नम्। न हि बहूनां धातूनामुपर्येक आख्यातप्रत्ययः श्रूयते। नापि व्याकरणे धातुसमूहादेकमाख्यातं विहितम्। तत आख्यातानां बहूनामेकैकधातुविशेषानुरक्तत्वेनैवोत्पन्नानां भावनावाचित्वेन यागदानहोमभावनाः परस्परं भिद्यन्ते ॥ १ ॥ २ ॥

अत्र गुरुमतमाह—

नियोगैकत्वतः शास्त्रमभिन्नमिति चेन्न तत्।
धातुभेदाच्छास्त्रभेदे नियोगो भिद्यते बलात् ॥ ३ ॥

'कर्मभेदचिन्ता नाध्यायार्थः, किंतु शास्त्रभेदचिन्ता' इति गुरोर्मतम्। तत्र 'यजेत, दद्यात्, जुहुयात्' इत्येतेषु लिङ्प्रत्ययवाच्यस्य नियोगस्यैकत्वाद्धातूनां नियोगवाचकत्वाभावेनाप्रयोजकत्वादेकनियोगार्थं कृत्स्नं शास्त्रमेकम्—इति पूर्वपक्षः।

प्रतिधातु लिङ्प्रत्ययस्य भिन्नत्वाद्धात्वर्थानुबन्धभेदेन तद्विशिष्टे नियोगेऽपि भेदस्य वारयितुमशक्यतया नियोगानुसारि शास्त्रं भिन्नम्—इति सिद्धान्तः॥३॥

---

१ क. °न्यथा। आ° २क. °तप्रत्ययस्यै°। ३ क. °समाहारादे°। ४ ख. ग. घ. ङ. °त्वेनोत्प°। ५ क. °भेद्यो नि°। ६ ख. ग. °क्यत्वान्नियो°।

( द्वितीये समिदाद्यपूर्वभेदाधिकरणे सूत्रम् ) ।

एकस्यैवं पुनःश्रुतिरविशेषादनर्थकं हि स्यात् ॥ २ ॥

द्वितीयाधिकरणमारचयति—

समिधो यजतीत्यादावेकत्वमुत भिन्नता ।
धातुप्रत्यययोरैक्यादेकत्वं भिन्नता कुतः ॥ ४ ॥
अभ्यासात्कर्मभेदोऽत्र, नामत्वान्न विधिर्गुणे ।
विधित्वं श्रुतितो भाति संनिधेरनुवादता ॥ ५ ॥

दर्शपूर्णमासयोः श्रूयते—"समिधो यजति" 'तनूनपातं यजति' 'इडो यजति" "बर्हिर्यजति" "स्वाहाकारं यजति" इति । तत्र पञ्चकृत्वः श्रूयमाणे यजतिपदे पूर्वोक्तेषु 'यजति ददाति' इत्यादिपदेष्विव धातुभेदो नास्ति, येन भावनाभेद आशङ्क्येत। तस्मादाख्यातैक्यप्रयुक्तं भावनैक्यमनिवार्यमिति चेत्। मैवम् । यजतिपदाभ्यासेन कर्मभेदावगमात् । कर्मैकत्वेऽभ्यासो निरर्थकः स्यात् । अथोच्येत—'समिधो यजति' इत्यनेन प्रथमश्रुतेन वाक्येन विहितं समिन्नामकं यागमुपरितनैश्चतुर्भिर्यजतिपदैरनूद्य तनूनपादादयो देवतारूपा द्रव्यरूपा वा गुणाश्चत्वारो विकल्पिता विधीयन्ते, ततोऽनुवादार्थत्वान्नाभ्यासवैयर्थ्यम्—इति । तन्न । तनूनपादादिशब्दानां यागनामत्वेन गुणविधित्वाभावात् । न तावदत्र देवताविधिः । चतुर्थीतद्धितयोरश्रवणात् । नापि द्रव्यविधिः, तृतीयान्तत्वाभावात् । ततः 'अग्निहोत्रं जुहोति' इत्यादाविव द्वितीयान्तानां युक्तं नामत्वम् । यत्तु—चतुर्णामुपरितानां यजतिपदानामनुवादत्वम् । तदसत् । तेषां विधायकत्वात् । यथा 'समिधो यजति' इत्यत्र यजतिपदे विधित्वं श्रुत्या प्रतीयते, तथाऽन्येष्वपि चतुर्षु पदेषु विधित्वं श्रौतम् । अनुवादत्वं तु पुरोवादरूपस्य 'समिधो यजति' इत्यस्य संनिधिनाऽवगम्यते । संनिधिश्च श्रुतेर्दुर्बलः । विधित्वे च पूर्ववाक्यविहितस्य समिन्नामकस्य यागस्य पुनर्विधानायोगात्तनूनपादादिनामकानि यागान्तराणि विधीयन्ते । नन्वेवं सति संज्ञाभेदात्कर्मभेदः संपद्यते, न त्वभ्यासात् । तथासति वक्ष्यमाणेनाधिकरणेन संकीर्येत । मैवम् । वैषम्यात् । 'अथैष ज्योतिः' इत्यस्मिन्वक्ष्यमाणोदाहरणे यागावगमात्प्रागेव संज्ञात्वावगमात्संज्ञायाः कर्मभेदहेतुत्वम् । इह तु विधायकैर्यजतिपदैर्यागेष्ववगतेषु, भेदे चाभ्यासादवगते, भिन्नानां यागानां समित्संज्ञाया अन्याः संज्ञा अपेक्षिताः इति तनूनपादादीनां संज्ञात्वं पश्चादवगम्यते । तस्मात्—अभ्यास एवात्र भेदहेतुः ।

१ ख. ग. °कत्वे भि° । २ ग. °थोच्यते—स° । ३ ग. °दकत्व° । ४ क. °माणाधि° । ५ ग. ङ. °कीर्येत । मै° ।

( तृतीय आघाराद्याग्नेयादीनामङ्गाङ्गिभावाधिकरणे सूत्राणि ३-८)।

प्रकरणं तु पौर्णमास्यां रूपावचनात् ॥ ३ ॥
विशेषदर्शनाच्च सर्वेषां समेषु ह्यप्रवृत्तिः स्यात्
॥ ४ ॥ गुणस्तु श्रुतिसंयोगात् ॥ ५ ॥ चोदना
वा गुणानां युगपच्छास्त्राच्चोदिते हि तदर्थत्वा-
त्तस्य तस्योपदिश्येत ॥ ६ ॥ व्यपदेशश्च तद्वत्
॥ ७ ॥ लिङ्गदर्शनाच्च ॥ ८ ॥

तृतीयाधिकरणमारचयति—

एवं विद्वान्पौर्णमासीममावास्यामितीरितम् ।
कर्मान्यदुत पूर्वोक्तसमुदायानुवादकम् ॥ ६ ॥
कर्मान्तरं स्यादभ्यासाद्ध्रौवं द्रव्यं हि देवता ।
वार्त्रघ्नीत्यादितो लभ्याऽनुवादस्तु न युज्यते ॥ ७ ॥
वार्त्रघ्नीत्याज्यभागाङ्गव्यवस्थोक्तेर्न देवता ।
पौर्णेत्यनूद्यते पौर्णमासीयुक्तं त्रिकं तथा ॥ ८ ॥
अमेत्यपि समूहस्य द्वित्वसिद्धिः प्रयोजनम् ।
सहस्थितिः पौर्णमास्यामित्युक्तिभ्यां त्रिके त्रिके ॥९॥
विद्वद्वाक्यविधौ विध्यावृत्तिराग्नेयकादिना ।
विहितस्य फलित्वेन प्राधान्यमितरे गुणाः ॥ १० ॥

इदमाम्नायते—'य एवं विद्वान्पौर्णमासीं यजते' 'य एवं विद्वानमावास्यां यजते' इति । अत्र यजतिना कर्मान्तरं विधीयते, न तु प्रकृता आग्नेयादयः षड्यागा अनूद्यन्ते । आग्नेयादयश्च कालसंयुक्तास्तस्मिन्प्रकरण एवमाम्नायन्ते—'यदाग्नेयोऽष्टाकपालोऽमावास्यायां पौर्णमास्यां चाच्युतो भवति' इति, 'तावब्रूतामग्नीषोमावाज्यस्यैव+ नावुपांशु पौर्णमास्यां यजन्' इति, ताभ्यामेतमग्नीषोमीयमेकादशकपालं पूर्णमासे मायच्छत्' इति, 'ऐन्द्रं दध्यमावास्यायाम्' इति, 'ऐन्द्रं पयोऽमावास्यायाम्' इति । एतेभ्यः प्रकृतेभ्यः षड्भ्य आग्नेयादिभ्यो विद्वद्वाक्यविहितस्य, कर्मणोऽन्यत्वे सति पूर्वाधिकरणन्यायेन विध्यभ्यास उपपद्यते । न च कर्मान्तरे द्रव्यदेवतयोरभावः, ध्रौवाज्यसद्भावात् । अत एवोक्तम्—

+ °स्यैवोपांश्विति पुस्तकान्तरे ।

१ क. °यां च पौ° । २ ग. पौर्णमासे । ३ क. °वादिस° । ३ग. °वाज्यादिस° ।

" ध्रौवं साधारणं द्रव्यं देवता मान्त्रवर्णिकी ।
रूपवन्तौ ततो यागौ विधीयेते पृथक्कया " इति ।

" सर्वस्मै वा एतद्यज्ञाय गृह्यते यद्ध्रुवायामाज्यम् " इति ध्रौवस्य साधारणत्वं श्रुतम् । देवताया मान्त्रवर्णिकत्वमित्थमुन्नेतव्यम्—" तस्माद्वार्त्रघ्नी पौर्णमास्यामनूच्येते, वृधन्वती अमावास्यायाम् " इति वार्त्रघ्न्यौ वृधन्वत्यौ चर्चौ क्रमेण कालद्वयोपेते कर्मणि विधीयेते । तत्र—" अग्निर्वृत्राणि जङ्घनत् " इत्येको वार्त्रघ्नो मन्त्रः ' त्वं सोमासि सत्पतिस्त्वं राजोत वृत्रहा ' इत्यपरः । तयोरुक्तावग्नीषोमौ पौर्णमासदेवते । एवमन्तराम्नातयोर्वृधिधातुयुक्तयोर्मन्त्रयोरुक्तावग्नीषोमावमावास्यादेवते । आभ्यां द्रव्यदेवताभ्यां रूपवत्त्वाद्यागान्तरमत्र विधीयते । षड्यागानुवादत्वे तदनुवादेन विधेयान्तरस्य कस्याचि[4]द्दर्शनाद्विद्वद्वाक्यमनर्थकं स्यात् । न केवलं तदानर्थक्यम्, किंतु "पौर्णमास्यां पौर्णमास्या यजेत, अमावास्यायाममावास्यया यजेत ' इत्येतदपि व्यर्थं स्यात् । न चैतत्कालविधायकम्, "यदाग्नेयः"—इत्याद्युत्पत्तिवाक्यैरेव तद्विधानात् । कर्मान्तरत्वे तु कालं विधास्यति । तस्मात्कर्मान्तरविधिः—इति प्राप्ते,

ब्रूमः—आस्तां तावद्द्रव्यम् । देवता तु विधित्सितस्य कर्मान्तरस्य सर्वथा न लभ्यते । वार्त्रघ्न्योर्वृधन्वत्योश्चाऽऽज्यभागदेवताप्रतिपादकत्वात् । हौत्रे मन्त्रकाण्डे सामिधेनीरावाहननिगदं प्रयाजमन्त्रांश्चाऽऽम्नाय प्रयाजानन्तरभाविनोराज्यभागयोः क्रमे वार्त्रघ्न्यौ वृधन्वत्यौ चाऽऽम्नाते, लिङ्गं चाग्निविषयं सोमविषयं च तत्रोपलभ्यते । ततो लिङ्गक्रमाभ्यामाज्यभागविषयत्वमवगम्यते । यत्तु—"वार्त्रघ्नी पौर्णमास्याम्"—इत्यादि वाक्यम्, तल्लिङ्गक्रमवत्तयोराज्यभागाङ्गयोर्मन्त्रयुगलयोः कालद्वये व्यवस्थामाचष्टे । न तु नूतनकर्माङ्गत्वमनयोर्विदधाति । अतो रूपराहित्याद्विद्वद्वाक्यं कर्मान्तरविधायकं न भवति, किं तर्हि—पूर्वप्रकृतेष्वाग्नेयादिषु षट्सु त्रिकरूपौ द्वौ समुदायावनुवदति । न च कालवाचिभ्यां पौर्णमास्यमावास्याशब्दाभ्यां यागानुवादानुपपत्तिः । तत्कालविहितयोर्यागत्रिकयोरुपलक्षितत्वात् । न चानुवादो व्यर्थः । समुदायद्वित्वसिद्धेस्तत्प्रयोजनत्वात् । तत्सिद्धौ च " दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत " इत्यस्मिन्फलवाक्ये षड्यागविवक्षया द्विवचननिर्देश उपपद्यते । यदप्युक्तम्—अनुवादपक्षे " पौर्णमास्याम् " इत्यादिवाक्यवैयर्थ्यम्—इति । तदयुक्तम् । कालविधानासंभवेऽप्येकस्य त्रिकस्य सहप्रयोगविधानात् । आग्नेयोपांशुयाजाग्नीषोमीयाणां त्रयाणां पौर्णमासीकालविहितानां सहप्रयोगः ' पौर्णमास्या ' इत्यनेन तृतीयैकवचनान्तेन विधीयते । एवमितरत्रापि । ननु—विद्वद्वाक्यस्य कर्मान्तरविधायकत्वाभावेऽपि नानुवादकत्वम् । तस्य यागा-

१ क. ख. ग. °वता । ए° । २ ख. ग. °वता । आ° । ३ ङ. °पत्वाद्या° । ४ ङ. °च्चिद्दर्श° । ५ क. यजते । ६ क. यजते । ७ ख. ङ. °भागयो° । ८ क. °स्तत्र प्रयो° । ९ ख. °द्वत्वम् ।

विधायकत्वाभ्युपगमात् । "आग्नेयोऽष्टाकपालः" इत्यादिवाक्यानि तु विहित-यागानुवादेन द्रव्यदेवतालक्षणगुणविधायकानि—इति चेत् । न । तथासत्येकेन वाक्येनानेकगुणविध्यसंभवात् । प्रतिगुणं च यागविधौ विध्यावृत्तिः प्रसज्येत । आग्नेयादिवाक्यानां विधायकत्वे तु विशिष्टविधित्वान्नास्ति विध्यावृत्तिदोषः । तस्मादाग्नेयादिवाक्यविहितानां विद्वद्वाक्यमनुवादकम् । किंचानुवादत्वमभ्युपगम्य कर्मान्तरविधिं वदतः प्रयाजादीनामाग्नेयादीनां च गुणप्रधानभावो न सिध्येत् । तथा हि—'समिधो यजति' 'आघारमाघारयति' इत्यादयः कालयोगरहिताः केचिद्विधय आम्नाताः । 'यदाग्नेयोऽष्टाकपालोऽमावास्यायां च पौर्णमास्यां च' इत्यादयः कालयुक्ता अपरे । तेषामुभयेषां प्रकृतत्वात् "दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत" इति वाक्ये सर्वेषां फलसंबन्धो बोधनीयः । 'दर्शपूर्णमासाभ्याम्, इति द्विवचनं बहुवचनत्वेन परिणेतव्यम् । विद्वद्वाक्यविहिते तु कर्मान्तरे प्रयाजादय आग्नेयादयश्चेति एतेषु द्वित्वासंभवात् । सर्वेषां च फलसंबन्धे राजसूयगतेष्टिपशुसोमवत्समप्राधान्यात्प्रयाजादीनां गुणभावो न स्यात् । तदभावे चानङ्गत्वात्सौर्यादिविकृतिष्वाग्नेयादीनामिवातिदेशो न स्यात् । अनुवादपक्षे तु त्रिकयोः कालयोगेन दर्शपूर्णमासशब्दार्हत्वात् । समुदायद्वित्वेन द्विवचनार्हत्वाच्चाऽऽग्नेयादीनामेव फलसंबन्धेन प्राधान्यम् । प्रयाजादीनां तु गुणभाव इति न कोऽपि दोषः । तस्मात्—विद्वद्वाक्यमनुवादकम् ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥

( चतुर्थे उपांशुयाजापूर्वताधिकरणे सूत्राणि ९—१२ ) ।

पौर्णमासीवदुपांशुयाजः स्यात् ॥ ९ ॥ चोदना वाऽप्रकृतत्वात् ॥ १० ॥ गुणोपबन्धात् ॥ ११ ॥ ×प्राये वचनाच्च ॥ १२ ॥

चतुर्थाधिकरणमारचयति—

उपांशुयाजमित्येषोऽनुवादोऽथवा विधिः ।
विष्ण्वादिवाक्ये विस्पष्टविधेरस्यानुवादता ॥ ११ ॥
जामित्वोक्तेरन्तराल उपांशुगुणकं विधौ ।
सत्यर्थवादो विष्ण्वादिस्तद्रूपं ध्रौवमन्त्रतः ॥ १२ ॥

इदमाम्नायते—'जामि वा एतद्यज्ञस्य क्रियते । यदन्वञ्चौ पुरोडाशावुपांशुयाजमन्तरा यजति । विष्णुरुपांशु यष्टव्योऽजामित्वाय । प्रजापतिरुपांशु यष्टव्योऽ-

× प्रायवचनाच्चेति पुस्तकान्तरे ।

१ ख. °कत्ववि° । २ क. ख. ग. °त्वमनभ्यु° । घ. °दकम° । ३ क. °स्तत्र रूपं च म°

जामित्वाय । अग्नीषोमावुपांशु यष्टव्यावजामित्वाय " इति । तत्र विष्णवादि-वाक्येषु विहितस्य यागत्रयसमुदायस्यानुवादः—इति चेत् ।

मैवम् । आग्नेयाग्नीषोमीयपुरोडाशद्वयनैरन्तर्यकृतस्य जामित्वदोषस्य वाक्योपक्रम उपन्यासात्पुरोडाशयोरन्तराले किंचिद्विधित्सितम् । न ह्यन्तरालगुणविशिष्टं विधेयं विष्णवादिवाक्येषु प्रतीयते । पूर्ववाक्ये तु तत्प्रतीयत इति विधायकं तद्वाक्यम् । न चात्र 'यजति' इति वर्तमानापदेशः शङ्कनीयः । पञ्चमलकारस्याऽऽश्रयणात् । अन्तरालकालवदुपांशुत्वगुणस्यापि विशेषणत्वात्तद्विशिष्टकर्मण उपांशुयाजनामकत्वम् । सत्येवं गुणद्वयविशिष्टकर्मण्याद्येन वाक्येन विहिते विष्णवादिवाक्यमर्थवादः स्यात् । न चात्र विहितयागानुवादेन देवताविधिः शङ्कनीयः । समाधातव्येन जामित्वदोषेणोपक्रमात्, अजामित्वेन समाधानेनोपसंहाराच्च 'जामि वै ' इत्यादेः ' अजामित्वाय ' इत्यन्तस्य सर्वस्य महावाक्यस्यैकत्वप्रतीतेः । न खल्वेकस्मिन्वाक्ये विधेयबाहुल्यं संभवति । न चात्र विधित्सितस्योपांशुयाजस्य द्रव्याभावः । ध्रौवस्य तद्द्रव्यत्वात् । नापि देवताया अभावः । नानाशाखासूपांशुयाजक्रमे पठितैर्वैष्णवप्राजापत्याग्नीषोमीयमन्त्रैर्विकल्पेन देवतात्रयस्य प्रतीयमानत्वात् । तस्मात्—यजतीत्येतद्विधायकम् ॥ ११ ॥ १२ ॥

( पञ्चम आघाराद्यपूर्वताधिकरणे सूत्राणि १३–१६ ) ।

आघाराग्निहोत्रमरूपत्वात् ॥ १३ ॥ संज्ञोपबन्धत्वात् ॥ १४ ॥ अप्रकृतत्वाच्च ॥ १५ ॥ चोदना वा शब्दार्थस्य प्रयोगभूतत्वात्, तत्संनिधेर्गुणार्थेन पुनः श्रुतिः ॥ १६ ॥

पञ्चमाधिकरणमारचयति—

अग्निहोत्राघारवाक्यमनुवादोऽथवा विधिः ।
अरूपत्वात्तु दध्यूर्ध्ववाक्येनोक्तमनूद्यते ॥ १३ ॥
गुण्यसिद्धौ न दध्यादिर्गुणो दुष्टा विशिष्टता ।
रूपं दध्यादिमन्त्राभ्यामतोऽसौ गुणिनो विधिः ॥ १४ ॥

इदमाम्नायते—'अग्निहोत्रं जुहोति' 'दध्ना जुहोति' 'पयसा जुहोति' इति च । इदमपरमाम्नायते—' आघारमाघारयति ' ' ऊर्ध्वमाघारयति ' ' ऋजुमाघारयति' इति च । तत्राग्निहोत्रवाक्यं दध्यादिवाक्यविहितस्य कर्मसमुदायस्यानुवादः ।

---

१ क. °वस्य समुदायार्थोऽस्या° । २ ख. °शुनामत्वम् । ३ ख. °शिष्टे क° ।

आघारवाक्यं चोर्ध्वादिवाक्यविहितस्य । न त्विद्वाक्यद्वयं कर्मविधायकम् । कुतः। द्रव्यदेवतालक्षणस्य यागरूपस्याभावात्—इति चेत् ।

तत्र वक्तव्यम्—किं दध्यादिवाक्येन गुणमात्रं विधीयते, किंवा गुणविशिष्ट-[1] कर्म । नाऽऽद्यः । अग्निहोत्रादिवाक्यस्य त्वन्मते कर्मविधायकत्वाभावेन गुणिनः कस्यचिदसिद्धौ गुण्यनुवादपुरःसरस्य गुणमात्रविधानस्यासंभवात् । द्वितीये विधि-गौरवं स्यात् । तच्च सत्यां गतावयुक्तम्[2] । अतोऽग्निहोत्रादिवाक्यं कर्मविधा-यकम् । तत्र द्रव्यं दध्यादिवाक्यैर्लभ्यते । देवता तु मान्त्रवर्णिकी । आघारेऽप्येवं द्रव्यदेवते उन्नेतव्ये ॥ १३ ॥ १४ ॥

( षष्ठे पशुसोमापूर्वताधिकरणे सूत्राणि १७—२० ) ।

द्रव्यचोदना पशुसोमयोः, प्रकरणे ह्यनर्थको द्रव्यसंयोगो न हि तस्य गुणार्थेन ॥ १७ ॥ अचोदकाश्च संस्काराः ॥ १८ ॥ तद्भेदात्कर्म-णोऽभ्यासो द्रव्यपृथक्त्वादनर्थकं हि स्याद्भेदो द्रव्यगुणीभावात् ॥ १९ ॥ संस्कारस्तु न भिद्येत, परार्थत्वाद्द्रव्यस्य गुणभूतत्वात् ॥ २० ॥

षष्ठाधिकरणमारचयति—

यजत्यालभतीत्येतावनुवादौ विधी उत ।
गृह्णात्यवद्यतीत्याभ्यां विहितेऽर्थेऽनुवादिनौ ॥ १५ ॥
नानुवादोऽपुरोवादे यज्यालभ्योरतो विधिः ।
ग्रहणे[3] सोमसंस्कारोऽवदाने पशुसंस्क्रिया ॥ १६ ॥

'सोमेन यजेत' इति श्रूयते । तत्र 'ऐन्द्रवायवं गृह्णाति, मैत्रावरुणं गृह्णाति' इत्यादीन्यपि श्रुतानि । एवम् 'अग्नीषोमीयं पशुमालभेत' इति श्रूयते । तत्र 'हृदयस्याग्रेऽवद्यति । अथ जिह्वायाः । अथ वक्षसः' इत्या-दीन्यपि श्रुतानि । तत्रैन्द्रवाय्वादिवाक्यैर्यागा विधीयन्ते । इन्द्रवाय्वादिप्रातिप-दिकैर्देवतानां, तद्धितेन सोमरसद्रव्यस्य च प्रतीयमानत्वात् । एतेषां ग्रहणवाक्य-विहितानां यागानां समुदायः 'सोमेन यजेत' इत्यनेनानूद्यते । तथाऽवदा-नवाक्येषु[4] हृदयादिद्रव्यं श्रुतम् । ततो द्रव्यविशिष्टा यागास्तत्र विधीयन्ते ।

१ ख. ग. °शिष्टं क° । २ ख. ग. °म् । अग्नि° । ३ क. ख. ग. ग्रहणं । ४ क. °दानं प°

तदनुवादेन पश्वालम्भवाक्येऽग्नीषोमरूपा देवता विधीयते । तस्मात्—अवदानवाक्यविहितानां यागानां समुदायः "पशुमालभेत" इत्यनेनानूद्यते—इति प्राप्ते—

ब्रूमः—सति हि पुरोवादेऽनुवादो भवति । न चात्र पुरोवादोऽस्ति । 'सोमेन यजेत' इत्यनेन प्रतीतस्यार्थस्य ग्रहणवाक्येष्वप्रतीतेः । नहि ग्रहणं यजनं भवति । नापि तद्धितप्रत्ययोक्तो रसः सोमलता । न च—तद्धितप्रत्ययः सर्वनामार्थे विहितः प्रकृतं ब्रूते, न तु रसम्—इति शङ्कनीयम् । 'धारया गृह्णाति' इति रसस्यैव प्रकृतत्वात् । तथा "पशुमालभेत" इत्यनेन प्रतीतोऽर्थो नावदानवाक्येषु प्रतीयते । ततः पुरोवादाभावेनानुवादासंभवाद्यजत्यालभतिभ्यां कर्मणी विधीयेते । ग्रहणवाक्यैस्तु देवताविशिष्टः सोमसंस्कारो विधीयते । अवदानवाक्यैश्च पशुसंस्कारः ॥ १५ ॥ १६ ॥

(सप्तमे संख्याकृतकर्मभेदाधिकरणे सूत्रम्) ।

पृथक्त्वनिवेशात्संख्यया कर्मभेदः स्यात् ॥ २१ ॥

सप्तमाधिकरणमारचयति—

आहुतीस्तिस्र इत्यत्र कर्मैक्यमुत भिन्नता ।
एकत्वं सकृदाख्यातात्संख्यावृत्त्या प्रयाजवत् ॥ १७ ॥
आख्यातमात्रं नो मानं संख्यया बहुकर्मता ।
आवृत्त्यैकादशत्वं तु प्रयाजे गत्यभावतः ॥ १८ ॥
पशून्सप्तदश प्राजापत्यानित्यत्र भाष्यकृत् ।
विचारमाह, पूर्वत्र क्रियात्रित्वस्फुटत्वतः ॥ १९ ॥
बहुत्वोपेतपशुभिर्देवयोगादभिन्नता ।
रूपस्य, तेन कर्मैक्यं संख्या नात्र क्रियागता ॥ २० ॥
देवतासंगतस्यैव तद्धितार्थस्य पश्चिमः ।
बहुत्वसंगमो, रूपसंख्यया तत्क्रियाभिदा ॥ २१ ॥

'तिस्र आहुतीर्जुहोति' इति श्रूयते । तत्र 'जुहोति' इत्येतदाख्यातं 'समिधो यजति' इत्यादिवन्नाभ्यस्तम्, किंतु सकृदेवाऽऽम्नातम् । तत एकमिदं कर्म । त्रित्वसंख्या तु तस्यैव कर्मण आवृत्त्या नेतव्या । यथा प्रयाजेष्वेकादशत्वसंख्या पञ्चानामेव प्रयाजानामावृत्त्या नीता, तद्वत्—इति प्राप्ते—

ब्रूमः—किमिदमाख्यातं पदान्तरनिरपेक्षमेव कर्मैक्ये प्रमाणम्, उत पदान्तरान्वितम् । नाऽऽद्यः। वाक्यांशस्य पदमात्रस्य प्रमितिजनकत्वाभावात् । द्वितीये-त्रि-

१ क. ख. °मार्थवि° । २ ख. प्रकृतो° । ३ ख. ग. ङ. °वेऽनु° ।

त्वसंख्यया विशेषितेनाऽऽख्यातेन कर्मबहुत्वं गम्यते। प्रयाजानां तु पूर्वमेव पञ्च-संख्यावरुद्धत्वादावृत्तिमन्तरेणैकादशत्वं दुःसंपादम्। इह त्वेतद्विधितः पूर्वं कर्मण एकत्वसंख्यावरोधो नास्तीति वैषम्यम्।

तदेतद्वृत्तिकारोदाहरणं भाष्यकारो नानुमन्यते। कर्मवाचिन आहुतिशब्दस्य विशेषणेन त्रिशब्देन कर्मबहुत्वस्य स्फुटतया पूर्वपक्षानुत्थानात्। इदं त्वत्रोदाहरणम्-'सप्तदश प्राजापत्यान्पशूनालभते' इति। अत्र 'प्रजापतिर्देवता येषां पशूनां ते प्राजापत्याः' इति तद्धितव्युत्पत्तौ बहुत्वोपेताः पशव एकं द्रव्यम्। ततो द्रव्यैक्याद्देवतैक्याच्च यागस्य रूपमभिन्नमित्येकमिदं कर्म। या तु 'सप्तदश', इति संख्या, सा पशुद्रव्यगता, न तु पूर्वोदाहृतत्रित्वसंख्येव क्रियागता। तस्मात्—'न कर्मभेदमापादयति' इति प्राप्ते—

**ब्रूमः**—अत्र 'प्रजापतिर्देवता यस्य पशोः स प्राजापत्यः' इति तद्धितान्तं प्रातिपदिकं व्युत्पाद्य पश्चात्तद्धितान्तप्रातिपादिकार्थस्य प्रजापतिदेवताविशिष्टपशोः कर्मत्वबहुत्वविवक्षायामुत्पन्ने इमे द्वितीयाविभक्तिबहुवचने। तत्र प्रथमभाविन्या द्वितीयाविभक्तेरेव तद्धितोत्पत्तिवेलायामन्वयो नास्ति, कुतः पश्चाद्भाविनो बहुवचनस्यान्वयः। एवं सति 'प्राजापत्यः' इत्यनेन तद्धितान्तप्रातिपदिकेनैकपशुद्रव्यमेकदेवतोपेतं यागस्य रूपं समर्प्यते। तादृशानां रूपाणां बहुत्वाय बहुवचनम्। बहुत्वविशेषश्च 'सप्तदशः' इति निर्दिश्यते। तस्मात् अत्र संख्यया कर्मभेदः। एवं च सति, अष्टमे वक्ष्यमाणं सप्तदशपशूनामेकादशिनपशुगणविकृतित्वमुपपद्यते (८-१-४) ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥ २१ ॥

( अष्टमे संज्ञाकृतकर्मभेदाधिकरणे सूत्रम् )।

संज्ञा चोत्पत्तिसंयोगात् ॥ २२ ॥

अष्टमाधिकरणमारचयति—

अथैष ज्योतिरित्यत्र गुणो वा कर्म वा पृथक्।
गुणः सहस्रदानाख्या ज्योतिष्टोमे ह्यनूदिते ॥ २२ ॥
अथेति प्रकृते छिन्न एतच्छब्दोऽन्यगं वदेत्।
संख्ययेवान्यकर्मत्वमिह नूतनसंज्ञया ॥ २३ ॥

"अथैष ज्योतिः, अथैष विश्वज्योतिः, अथैष सर्वज्योतिः, अनेन सहस्रदक्षिणेन

---

१ क. ख. ग. एषां। २ ख. ग. ङ. 'मत्र°। ३ ख. ग. ङ. °नैकं प°। ४ क. ङ. °मर्प्यते। ५ ख. °संख्यया।

यजेत' इति श्रूयते। अत्र प्रकृतं ज्योतिष्टोमम् 'एष ज्योतिः' इत्यनूद्य तस्मिन्सहस्रदानलक्षणो गुणो विधीयते—इति चेत्।

न। प्रकृतस्य ज्योतिष्टोमस्य 'अथ' इत्यनेन विच्छिन्नत्वात्। न चैवं सति 'अथैष ज्योतिः' इत्युक्त एतच्छब्दोऽनुपपन्न इति वाच्यम्। संनिहितवाचिनैतच्छब्देनातीतसंनिहितस्येवाऽऽगामिसंनिहितस्यापि परामर्शसंभवात्। आगामिसंनिहितश्च ज्योतिःशब्दार्थः। स च ज्योतिःशब्दोऽतीतमपरामृशन्नपूर्वसंज्ञारूपत्वान्नूतनं किंचित्कर्माभिधत्ते। ततो यथा पूर्वत्र संख्यया कर्मभेदः, तथाऽत्रापि संज्ञया कर्म भिद्यते। विश्वज्योतिःसर्वज्योतिःशब्दयोरप्ययं न्यायो द्रष्टव्यः ॥२२॥२३॥

( नवमे देवताभेदकृतकर्मभेदाधिकरणे सूत्रम् )।

**गुणश्चापूर्वसंयोगे वाक्ययोः समत्वात् ॥ २३ ॥**

नवमाधिकरणमारचयति—

**गुणः कर्मान्तरं वा स्याद्वाजिभ्यो वाजिनं त्विति।**
**गुणो देवाननूद्योक्तसमुच्चयविकल्पतः ॥ २४ ॥**
**आमिक्षोत्पत्तिशिष्टत्वात्प्रबला तत्र वाजिनम्।**
**गुणोऽप्रविश्य कर्मान्यत्कल्पयेद्वाजिदेवकम् ॥ २५ ॥**

'तप्ते पयसि दध्यानयति, सा वैश्वदेव्यामिक्षा, वाजिभ्यो वाजिनम्' इति श्रूयते। घनीभूतः पयःपिण्ड आमिक्षा, जलं वाजिनम्। तत्र—आमिक्षाद्रव्यभाजो ये विश्वे देवा उक्ताः, ते 'वाजिभ्यः' इत्यनेनानूद्यन्ते। 'वाजोऽन्नमामिक्षारूपमेषामस्ति' इति तन्निष्पत्तेः।ताननूद्य वाजिनद्रव्यरूपो गुणो विधीयते। तच्च द्रव्यमामिक्षाद्रव्येण सह समुच्चितं विकल्प्यतां वा, इति प्राप्ते—

ब्रूमः—उत्पत्तिशिष्टेनाऽऽमिक्षाद्रव्येणावरुद्धे वैश्वदेवयागे वाजिनद्रव्यस्योत्पन्नशिष्टस्य प्रवेशाभावाद्वाजिनं वाजिशब्दार्थस्य देवतान्तरमापादयति। ततो द्रव्यदेवतालक्षणस्य रूपस्य भिन्नत्वात्कर्मान्तरम् ॥ २४ ॥ २५ ॥

( दशमे द्रव्यविशेषानुक्तिकृतकर्मैक्याधिकरणे सूत्रम् )।

**अगुणे तु कर्मशब्दे गुणस्तत्र प्रतीयेत ॥ २४ ॥**

दशमाधिकरणमारचयति—

---

१ क. ख. °णो वि°। २ ख. ग. ङ. °न च्छि°। ३ ख. ङ. °योक्तः स°। ४ ख. °ला तत्र। ५ ख. ग. ङ. °तः पि°।

दधिहोमेऽन्यकर्मत्वं गुणो वाऽन्यस्तु पूर्ववत्।
निर्गुणत्वादग्निहोत्रे युक्तो दध्यादिको गुणः ॥ २६ ॥

"दध्ना जुहोति" इति श्रूयते। तत्र—"अग्निहोत्रं जुहोति" इत्येतस्मात्प्रकृतात्कर्मणोऽन्यद्दधिहोमरूपं कर्म—इति पूर्वन्यायेनावगम्यते। यथा पूर्वत्र वाजिनद्रव्येण कर्म भिद्यते, तथा दधिद्रव्येणेति चेत्।

न। वैषम्यात्। यथा वैश्वदेवो याग आमिक्षागुणावरुद्धः, तथाऽग्निहोत्रं न गुणान्तरावरुद्धम्। प्रत्युत—निर्गुणत्वाद्गुणमाकाङ्क्षति। तस्मादयं गुणविधिः। एवं "पयसा जुहोति" इत्यादिषु द्रष्टव्यम्। पयोदध्यादीनां सर्वेषामुत्पन्नशिष्टतया समबलत्वादेकैकेन द्रव्येणाग्निहोत्रनिष्पत्तेश्च व्रीहियववद्विकल्पः ॥ २६ ॥

(एकादशे दध्यादिद्रव्यसफलत्वाधिकरणे सूत्रे २५—२६)

फलश्रुतेस्तु कर्म स्यात्फलस्य कर्मयोगित्वात् ॥ २५ ॥
अतुल्यत्वात्तु वाक्ययोर्गुणे तस्य प्रतीयेत ॥ २६ ॥

एकादशाधिकरणमारचयति—

दध्नेन्द्रियकामस्य जुहुयादिति तत्पृथक्।
गुणो वा, भिद्यते कर्म धात्वर्थस्य फलित्वतः ॥ २७ ॥
मत्वर्थगौरवादिभ्यो नान्यत्कर्म, फलाय तु।
गुणे विधेये धात्वर्थो विहितत्वादनूद्यते ॥ २८ ॥

"दध्नेन्द्रियकामस्य जुहुयात्" इति श्रूयते। तदिदं प्रकृतादग्निहोत्रादन्यत्कर्म। न गुणविधिः। कुतः। 'इन्द्रियकामस्य' इत्युक्तस्य फलस्य धात्वर्थमन्तरेण द्रव्यमात्रादसिद्धेः—इति चेत्।

नैवम्। कर्मान्तरविधौ 'दधिमता होमेनेन्द्रियं भावयेत्' इति मत्वर्थलक्षणाप्रसङ्गात्। गुणविशिष्टक्रियाविधौ, गौरवात्। प्रकृतहानाप्रकृतप्रक्रियाप्रसङ्गाच्च। गुणमात्रं तु फलाय विधीयते। यद्यपि 'दध्ना जुहोति' इति प्राप्तम्, तथाऽपि फलसंबन्धो न प्राप्तः। धात्वर्थाभावे फलासंभव इति चेत्। न। 'अग्निहोत्रं जुहोति' इति विहितस्य धात्वर्थस्यानूद्यमानत्वात् ॥ २७ ॥ २८ ॥

---

१ ग. °मे सक°। २ क. °या प्रव°। ३ ख. ङ. गुणो विषयो वा°।

( द्वादशे वारवन्तीयादीनां कर्मान्तरताधिकरणे सूत्रम् ) ।

समेषु कर्मयुक्तं स्यात् ॥ २७ ॥

द्वादशाधिकरणमारचयति—

उक्त्वाऽग्निष्टुतमेतस्य वारवन्तीयसाम हि ।
रेवतीष्वृक्षु कृत्वेति श्रुतं पशुफलाप्तये ॥ २९ ॥
रेवत्यादिर्गुणः कर्म पृथग्वा पूर्ववद्गुणः ।
रेवतीवारवन्तीयसंबन्धाख्यः पशुप्रदः ॥ ३० ॥
साम्नोऽत्र फलकर्मभ्यां संबन्धे वाक्यभिन्नता ।
तेनोक्तगुणसंयुक्तमन्यत्कर्मोच्यते फले ॥ ३१ ॥

'त्रिवृदग्निष्टुदग्निष्टोमस्तस्य वायव्यास्वृक्ष्वेकविंशमग्निष्टोमसाम कृत्वा ब्रह्मवर्चसकामो यजेत' इत्यस्य संनिधौ श्रूयते—'एतस्यैव रेवतीषु वारवन्तीयमग्निष्टोमसाम कृत्वा पशुकामो ह्येतेन यजेत' इति। अस्यायमर्थः—'अग्निष्टोमस्य विकृतिरूपः कश्चिदेकाहोऽग्निष्टुन्नामकः। स च पृष्ठस्तोत्रे त्रिवृत्स्तोमयुक्ततया 'त्रिवृत्' इत्युच्यते। अग्निष्टोमोक्थादीनां सप्तानां सोमसंस्थानां मध्येऽग्निष्टोमसंस्थारूपत्वात् 'अग्निष्टोमः' इत्यप्युच्यते। प्रकृतौ तृतीयसवन आर्भवपवमानस्योपरि यज्ञायज्ञीयं साम गीयते। तेन च साम्नाऽग्निष्टोमयागस्य समाप्यमानत्वात् 'अग्निष्टोमसाम' इत्युच्यते। तच्च प्रकृतौ 'यज्ञायज्ञा वो अग्नये' इत्याद्याग्नेयीष्वृक्षु गीयते। अस्मिंस्त्वग्निष्टुति ब्रह्मवर्चसकामेन वायव्यास्वृक्षु तत्साम गातव्यम्। तच्च प्रकृताविवैकविंशस्तोमयुक्तम्। पशुकामस्य तु 'रेवतीर्नः सधमाद'—इत्यादिषु रेवतीष्वृक्षु वारवन्तीयं साम गायेत्, इति। तत्र रेवतीनामृचां वारवन्तीयनामकेन साम्ना यः संबन्धः, सोऽयं पशुफलायाग्निष्टुति विधीयते। 'एतस्यैव' इति प्रकृतपरामर्शकेनैतच्छब्देन, अन्यव्यावर्तकेनैवकारेण चाग्निष्टुतः संनिध्यभावात्। यथा पूर्वाधिकरण इन्द्रियफलाय प्रकृतेऽग्निहोत्रे दधिगुणो विहितः, तद्वत्। इति प्राप्ते,

ब्रूमः—विषमो दृष्टान्तः। दध्नो होमजनकत्वं न शास्त्रेण बोधनीयम्। तस्य लोकतोऽवगन्तुं शक्यत्वात्। फलसंबन्ध एक एव शास्त्रबोध्य इति न तत्र वाक्यभेदः। इह तु—रेवत्यृगाधारकवारवन्तीयसाम्नोऽग्निष्टुत्कर्मसाधनत्वं फलसाधनत्वं चेत्युभयस्य शास्त्रैकबोध्यत्वाद्दुर्वारो वाक्यभेदः। तेन पशुफलकं यथोक्तगुणविशिष्टं कर्मान्तरमत्र विधीयते। एतच्छब्द एवकारश्च विधीयमानकर्मान्तरविषयतया योजनीयौ ॥ २९ ॥ ३० ॥ ३१ ॥

१ ख. ङ. उक्ताग्नि°। २ क. °द्विगुणः। ३ ख. °मो ह्यतेन य°। ४ क. °मोक्थ्यपा-द्री°। ५ ख. ग. क. इत्युच्य°। ६ ग. °यं फलप°। ७ क. समाप्यगानत्वा°।

(त्रयोदशे सौभरनिधनयोः कामैकत्वाधिकरणे सूत्रे २८–२९)

सौभरे पुरुषश्रुतेर्निधनं कामसंयोगः॥ २८॥

सर्वस्य वोक्तकामत्वात्तस्मिन्कामश्रुतिः स्यात्,
निधनार्था पुनःश्रुतिः॥ २९॥

त्रयोदशाधिकरणमारचयति—

वृष्ट्यन्नस्वर्गकामानां सौभरं स्तोत्रमीरितम्।
निधनान्यपि हीषूर्गू इति वृष्ट्यादिकामिनाम्॥ ३२॥
फलान्तरं किं वृष्ट्यादि हीशादीनामुतोदिते।
सौभरे फलसंभिन्ने निधनं विनियम्यते॥ ३३॥
फलान्तरं चतुर्थ्योक्तं वृष्टिकामाय हीषिति।
सौभरस्य फलं वृष्टिर्हीषित्युक्त्या विवर्धते॥ ३४॥
नोक्तवृष्ट्यन्नकामानामन्यत्वं प्रत्यभिज्ञया।
नियमेऽपि चतुर्थ्येषा तादर्थ्यादुपपद्यते॥ ३५॥

'यो वृष्टिकामो योऽन्नाद्यकामो यः स्वर्गकामः स सौभरेण स्तुवीत, सर्वे वै कामाः सौभरे' इति समाम्नाय पुनः समाम्नातम्—हीषिति वृष्टिकामाय निधनं कुर्यात्, ऊर्गित्यन्नाद्यकामाय, ऊ इति स्वर्गकामाय' इति। सौभरं नाम सामविशेषः। निधनं नाम पञ्चभिः सप्तभिर्वा भागैरुपेतस्य साम्नोऽन्तिमो भागः। तस्मिन्निधने हीषादयो विशेषाः सौभरसामसाध्यस्तोत्रफलेभ्यो वृष्ट्यादिभ्योऽन्यानि वृष्ट्यादिफलानि जनयितुं विधीयन्ते। कुतः। हीषादिविधिवाक्ये 'वृष्टिकामाय' इत्यादिना चतुर्थीश्रवणात्। तादर्थ्यं ब्रुवती [चतुर्थी] हीषादीनां वृष्ट्यादिकामपुरुषशेषत्वं गमयति। तच्छेषत्वं च पुरुषाभिलषितफलसाधनत्वे सत्युपपद्यते। ततः सौभरस्य हीषितिनिधनविशेषस्य च फलभूते द्वे वृष्टी भवतः। वद्भयमेलनान्महती वृष्टिः—इति प्राप्ते,

ब्रूमः—सौभरविधौ यो वृष्ट्यादिकामः स एव हीषादिविधौ प्रत्यभिज्ञायते। ततः सौभरस्य फलभूता ये वृष्ट्यादयः, त एव हीषादिवाक्येष्वनूद्यन्ते, इति न फलान्तरम्। अथोच्येत—नूतनफलान्तराभावात्, हीषादीनां च नानाशाखाध्ययनादेव सौभरे प्राप्तत्वादनर्थकोऽयं विधिः—इति। तन्न। फलत्रयकामानां त्रयाणामनियमेनैव हीषादिषु मध्ये यस्य कस्यचिन्निधनस्य प्राप्तौ विधेर्नियमा-

१ क. °र्थ्योक्तंवृष्टि°। २ क. °मोतेति स°। ३ ख. ग. तादर्थ्यं शेषत्वं गमयति। ४ क. °त्वेन पु°। ५ क. °षितं फ°। ६ क. तत्र। ७ ग. प्राप्तेर्विधे°।

र्थत्वात् । तादर्थ्ये तु फलान्तराभावेऽपि सौभरवाक्योक्तवृष्ट्यादिफलसाधने सौभरे हीषादीनां नियम्यमानत्वादुपपद्यते । तस्मात्—अयं निधनविशेषनियमनाविधिः ॥ ३२ ॥ ३३ ॥ ३४ ॥ ३५ ॥

इति श्रीमाधवीये जैमिनीयन्यायमालाविस्तरे
द्वितीयाध्यायस्य द्वितीयः पादः ॥ २ ॥

| | अत्र पादे | आदितः । |
|---|---|---|
| अधिकरणानि | १३ | ७३ । |
| सूत्राणि | २९ | १२८ । |

( अथ द्वितीयाध्यायस्य तृतीयः पादः ) ।

(प्रथमे ग्रहाग्रताया ज्योतिष्टोमाङ्गताधिकरणे सूत्रे १—२) ।
गुणस्तु क्रतुसंयोगात्कर्मान्तरं प्रयोजयेत्संयोगस्याशेषभूतत्वात् ॥ १ ॥ एकस्य तु लिङ्गभेदात्प्रयोजनार्थमुच्येतैकत्वं गुणवाक्यत्वात् ॥ २ ॥

तृतीयपादस्य प्रथमाधिकरणमारचयति—

रथंतरं साम सोमे भवेत्तद्वद्बृहज्जगत् ।
ऐन्द्रवायवशुक्राग्रयणाग्राश्च ग्रहाः श्रुताः ॥ १ ॥
रथंतरादिसंयुक्तमन्यत्कर्माथवा गुणः ।
गायत्र्यादियुतात्पूर्वादन्यदव्यावृत्तितो गुणैः ॥ २ ॥
सोमशब्दप्रकरणे ज्योतिष्टोमसमर्पके ।
ग्रहाग्रत्वं गुणस्तत्र व्यावृत्तिस्तु परस्परम् ॥ ३ ॥

ज्योतिष्टोमप्रकरणे श्रूयते—"यदि रथंतरसामा सोमः स्यादैन्द्रवायवाग्रान्ग्रहान्गृह्णीयात् । यदि बृहत्सामा शुक्राग्रान् । यदि जगत्सामाऽऽग्रयणाग्रान्" इति । तत्र—सोमशब्देन सोमलतासाधनको यागोऽभिधीयते । तस्मिंश्च यागे माध्यंदिने सवने पृष्ठस्तोत्रे रथंतरबृहज्जगन्नामकानि सामानि विकल्पेन विहितानि । "अभि त्वा शूर"—इत्येतस्यां योनावुत्पन्नं रथंतरम् । "त्वामिद्धि हवामहे"—इत्येतस्यामुत्पन्नं बृहत् । जगतीछन्दस्कायामृच्युत्पन्नं जगत् । ऐन्द्रवायवः, मैत्रावरुणः, आश्विनः, शुक्रः, मन्थी, आग्रयणः, उक्थ्यः, ध्रुवः, इत्या-

---

१ क. ख. ग. °यज्यादि° । २ क. °को योगो° । ३ क. °श्च योगे ।

द्विनाडिका ग्रहाः प्रातःसवने गृह्यन्ते । तावत्स्वेषु सोमरसस्य ग्रहणादग्रग्रहा भवन्ति । सोमयागस्य रथंतरसामोपेतत्वपक्ष एतेषु ग्रहेष्वैन्द्रवायवः प्रथमं ग्रहीतव्यः । बृहत्सामोपेतत्वपक्षे शुक्रः । जगत्सामोपेतत्वपक्ष आग्रयणः प्राथमिकः—इति विधिवाक्यार्थः । तत्र प्रकृतो ज्योतिष्टोमो गायत्र्यादिसामोपेतः, तद्व्यावृत्त्यर्थमिह रथंतरादयो गुणाः कीर्त्यन्ते । तस्मात्—ऐन्द्रवायवादिगुणोपेतानि कर्मान्तराण्यत्र विधीयन्ते—इति प्राप्ते,

ब्रूमः—“यदि रथंतरसामा सोमः स्यात्” इत्युक्तो यः सोमशब्दः, तेन प्रकरणेन चात्र ज्योतिष्टोमः समर्प्यते । समर्पिते तस्मिन्यथोक्तग्रहाग्र्यत्वं गुणो विधीयते । न च रथंतरादिगुणानुवादेन ज्योतिष्टोमस्य व्यावृत्तिः संभवति । तस्य प्रातःसवनादौ गायत्र्यादिसामोपेतत्वेऽपि पृष्ठस्तोत्रे रथंतरादियोगस्यापि सद्भावात् । किं तर्हि व्यावर्त्यत इति चेत् । रथंतरबृहज्जगतां परस्परव्यावृत्तिः—इति वदामः। रथंतरादयः पृष्ठस्तोत्रे विकल्पिताः । तत्र रथंतरानुवादेनेतरौ पक्षौ व्यावर्त्येते । एवमितरत्रापि । तस्मात्—गुणविधिः । ननु यः प्रकृतो ज्योतिष्टोमः सोऽन्येषां सोमयागानां प्रकृतिः । नहि प्रकृतौ जगत्यामुत्पन्नं साम विहितमस्ति । अत एव दशमाध्याये पञ्चमपादस्य पञ्चदशाधिकरणे प्रथमवर्णके “यदि जगत्सामा” इति वाक्योक्तमाग्रयणाग्रत्वं विकृतौ विषुवन्नामके मुख्येऽहनि व्यवस्थापितम् । बाढम् । तथाऽपि नात्र कश्चिद्विरोधः । आग्रयणाग्रत्ववाक्यं न कर्मान्तरविधायकम्, किंतु ‘अन्येन विहिते सोमयागे यत्र जगत्साम संभवति तत्र गुणविधायकम्—’ इत्येता[4]वन्मात्रस्यात्र प्रतिपाद्यत्वात् ॥ १ ॥ २ ॥ ३ ॥

( द्वितीयेऽष्टेः क्रत्वन्तरताधिकारताधिकरणे सूत्रम् ) ।

अवेष्टौ यज्ञसंयोगात्क्रतुप्रधानमुच्यते ॥ ३ ॥

द्वितीयाधिकरणमारचयति—

राजसूयं प्रकृत्येष्टिरवेष्ट्याख्या श्रुताऽत्र तु ।
विप्रक्षत्रियविड्भेदाद्धविषां व्यत्ययः क्रमे ॥ ४ ॥
विप्रादेरनुवादः स्यात्प्रापणं वाऽनुवादगीः ।
व्यत्ययादन्ययागानां च राजत्वाप्राप्तिरस्ति हि ॥ ५ ॥
न राज्ययोगाद्राजत्वं क्षत्रियत्वं तु तत्त्वतः ।
अप्राप्तप्रापणं तस्मान्न रथंतरतुल्यता ॥ ६ ॥

राजसूयप्रकरणे काचिदिष्टिरवेष्टिनामिका श्रूयते—“आग्नेयमष्टाकपालं निर्वपेत्, हिरण्यं दक्षिणा । ऐन्द्रमेकादशकपालम्, ऋषभो दक्षिणा । वैश्वदेवं चरुम्,

१ क. ख. ग. °यद्यादि° । २ क. ख. ग. °यद्यादि° । ३ क. °केऽह° । ४ क. °वदेवात्र प्र° ।

पिशङ्गी पष्ठौही दक्षिणा । मैत्रावरुणीमामिक्षाम्, वशा दक्षिणा । बार्हस्पत्यं चरुम्, शितिपृष्ठो दक्षिणा " इति । तस्यामेवेष्टौ हविषां क्रमव्यत्ययः श्रूयते— " यदि ब्राह्मणो यजेत, बार्हस्पत्यं मध्ये निधायाऽऽहुतिं हुत्वा तमभिघारयेत् । यदि राजन्य ऐन्द्रम् । यदि वैश्यो वैश्वदेवम् " इति । तत्र यथा पूर्वाधिकरणे— ऐन्द्रवायवाग्रत्वं व्यवस्थापयितुं यदिशब्दयुक्तेन वाक्येन रथंतरं निमित्तत्वेनानूदितम्, एवमत्रापि पञ्चमस्थाने श्रूयमाणं बार्हस्पत्यं चरुं मध्ये तृतीयस्थाने स्थापयितुं ' यदि ब्राह्मणः ' इत्यादि निमित्तत्वेनानूद्यते । द्वितीयस्थाने श्रुतस्यैन्द्रस्य तृतीयस्थानेऽवस्थापयितुं ' यदि राजन्यः ' इत्यनुवादः । वैश्वदेवस्य तु स्वत एव तृतीयस्थाने श्रवणात्तत्र मध्ये निधानविधिर्नित्यानुवादः । ननु राजकर्तृके राजसूये ब्राह्मणवैश्ययोः प्राप्त्यभावान्नानुवादो युक्तः—इति चेत् । न । तयोरपि राज्ययोगहेतुराजशब्दार्थत्वात्, इति प्राप्ते,—

ब्रूमः—राजशब्दः क्षत्रियजातौ रूढः, न तु राज्ययोगस्तस्य प्रवृत्तिनिमित्तम् । प्रत्युत—राज्यशब्दस्य राजयोगः प्रवृत्तिनिमित्तम् । ' राज्ञः कर्म ' इति विगृह्य राजप्रातिपदिकस्योपरि *प्रत्ययविशेषविधानात् । ब्राह्मणवैश्ययोः प्रजापालनेन राज्यशब्द उपचरितः । तस्मात्—अवेष्टौ ब्राह्मणवैश्यौ पूर्वमप्राप्तावनेन वचनेन प्राप्येते । ननु राजसूयस्य राजकर्तृकत्वात्तदन्तर्गताया अवेष्टेरपि तथात्वात्तस्यां ब्राह्मणवैश्ययोः प्रापणमयुक्तम्—इति चेत् । मैवम् । अन्तरवेष्टौ तदसंभवेऽपि राजसूयाद्बहिः प्रयुज्यमानायामवेष्टौ तत्संभवात् । तस्मात्—अत्र ब्राह्मणादिकर्तृकं यथोक्तगुणविशिष्टं कर्मान्तरं विधीयत इति न रथंतरादितुल्यत्वम् । यदिशब्दस्तु निपातत्वादनर्थकोऽर्थान्तरवाची वेत्युन्नेयम् ॥ ४ ॥ ५ ॥ ६ ॥

( तृतीय आधानस्य विधेयत्वाधिकरणे सूत्रम् ) ।

आधाने सर्वशेषत्वात् ॥ ४ ॥

तृतीयाधिकरणमारचयति—

वसन्ते विप्र आदध्यात्तत्रैवोपनयीत तम् ।

अनुवादः प्रापणं वाऽनुवादः कालसिद्धये ॥ ७ ॥

*"पत्यन्तपुरोहितादिभ्यो यक्" (पा० सू० ५।१।१२८)इत्यत्र "राजाऽसे" इति गणसूत्रेण यक्प्रत्ययोऽसमासे समासे च प्राप्तस्य ष्यञो बाधक इति यक् । एतेन ष्यञ्प्रत्ययं वदन्भाष्यकारः शबरः प्रत्युक्तः ।

१ क. ख. ग. पष्ठौही । २ ख. ग. °याऽऽहुतिमाहुतिं । ३ ग. इत्येतन्निमि° । ४ क. °जप्रतिपादक° । ५ ङ. °पचारि° । ६ क. °वेष्टेस्तद° ।

अन्तरेणाग्निविद्याभ्यां कर्मानुष्ठित्यसंभवात्।
क्लृप्ते आधानोपनीती प्राप्ता विप्रादयस्ततः॥ ८॥
लौकिकाग्नेः पुस्तकाच्च तत्सिद्धेर्नास्ति कल्पनम्।
कालविप्रादिसंयुक्तमतोऽप्राप्तं विधीयते॥ ९॥

"वसन्ते ब्राह्मणोऽग्नीनादधीत। ग्रीष्मे राजन्यः। शरदि वैश्यः" इति श्रूयते। "वसन्ते ब्राह्मणमुपनयीत। ग्रीष्मे राजन्यम्। शरदि वैश्यम्" इति च। तत्र वसन्तादिकालविशेषं विधातुं ब्राह्मणादयोऽनूद्यन्ते। न च तेषां प्राप्त्यभावः। क्रत्वनुष्ठानान्यथानुपपत्त्या क्लृप्तत्वात्। न ह्याहुत्याधारभूतमग्निम्, अनुष्ठानप्रकारज्ञापिकां विद्यां च विना कर्मानुष्ठानं संभवति। अग्निश्च नाऽऽधानमन्तरेणास्तीति ब्राह्मणादिकर्तृकमाधानं कल्पयति, विद्या चोपनयनपूर्वकाध्ययनमन्तरेणासंभवन्ती ब्राह्मणाद्युपनयनं कल्पयति—इति तत्र प्राप्तिः—इति चेत्। मैवम्। लौकिकाग्नौ होतुं, पुस्तकपाठेनाधिगन्तुं च शक्यत्वेनाऽऽधानोपनयनयोरकल्पने ब्राह्मणादीनामप्राप्तेः। तस्मात्—वसन्तादिकालविशिष्टे ब्राह्मणादिकर्तृके आधानोपनयने अत्र विधीयेते॥ ७॥ ८॥ ९॥

(चतुर्थे दाक्षयणादीनां गुणताधिकरणे सूत्राणि ५–११)।

अयनेषु चोदनान्तरं संज्ञोपबन्धात्॥ ५॥
अगुणाच्च कर्मचोदना॥ ६॥ समाप्तं च फले
वाक्यम्॥ ७॥ विकारो वा प्रकरणात्॥ ८॥
लिङ्गदर्शनाच्च॥ ९ गुणात्संज्ञोपबन्धः॥ १०॥
समाप्तिरविशिष्टा॥ ११॥

चतुर्थाधिकरणमारचयति—

यद्दाक्षायणयज्ञेन स्वर्गकामो यजेत तत्।
कर्मान्तरं गुणो वोक्तदर्शादौ फलसिद्धये॥ १०॥
गुणस्यास्याप्रसिद्धत्वात्कर्मभेदोऽत्र संज्ञया।
गुणो व्युत्पत्तिशेषाभ्यामावृत्त्याख्यो न नाम तत्॥ ११॥

दर्शपूर्णमासप्रकरणे श्रूयते—"दाक्षायणयज्ञेन स्वर्गकामो यजेत" इति। तत्र—दाक्षायणशब्दवाच्यस्य कस्यचिद्गुणस्य लोके प्रसिद्ध्यभावादुद्भिदादिवद्यजिसामानाधिकरण्येन कर्मनामत्वात्। "अथैष ज्योतिः" इत्यादिवदपूर्वसंज्ञायां कर्मान्तरविधिः—इति चेत्। न। दाक्षायणशब्दस्याऽऽवृत्तिवाचकत्वात्। तच्च शब्दनिर्वचनाद्वाक्यशेषाद्वाऽवगम्यते। तथा हि—'अयनम्' इत्यावृत्तिरुच्यते।

'दक्षस्येमे दाक्षाः, तेषामयनम्' इति तद्धितवचनम् । दक्ष उत्साही पुनः पुनरावृत्तावनलस इत्यर्थः । तदीयानां प्रयोगाणामावृत्तिर्दाक्षायणशब्दार्थः । तथा चाऽऽवृत्त्या युक्तः प्रकृतो दर्शपूर्णमासात्मको यज्ञो दाक्षायणयज्ञः । आवृत्तिप्रकारस्तु "द्वे पौर्णमास्यौ यजेत । द्वे अमावास्ये" इत्यादिवाक्यशेषादवगम्यते । ततो दध्यादिवत्प्रसिद्धार्थत्वाद्दर्शपूर्णमासयोः प्रकृतयोरयं स्वर्गफलसिद्ध्यर्थमावृत्त्याख्यगुणविधिः, न तूद्भिदादिवत्कर्मनामधेयम् ।

एवं "साकंप्रस्थाय्येन यजेत पशुकामः" इत्यत्रापि द्रष्टव्यम् । अमावास्यायागे द्वौ द्वौ दोहौ संपाद्य चतसृणां दधिपयसोः कुम्भीनां सह प्रस्थापनं साकं प्रस्थाय्यः । तद्युक्तो यागः साकंप्रस्थाय्यः । तथासति प्रकृते दर्शयागे पशुफलाय साकंप्रस्थाय्याख्यो गुणो विधीयते ॥ १० ॥ ११ ॥

( पञ्चमे द्रव्यदेवतायुक्तानां यागान्तरताधिकरणे सूत्राणि १२—१५ )।

संस्कारश्चाप्रकरणेऽकर्मशब्दत्वात् ॥ १२ ॥
यावदुक्तं वा कर्मणः श्रुतिमूलत्वात् ॥ १३ ॥
यजतिस्तु द्रव्यफलभोक्तृसंयोगादेतेषां कर्मसंबन्धात् ॥ १४ ॥ लिङ्गदर्शनाच्च ॥ १५ ॥

पञ्चमाधिकरणमारचयति—

वायव्यः श्वेत आलभ्यो भूत्यै सौर्यं चरुं तथा ।
निर्वपेद्ब्रह्मतेजोऽर्थी षामुष्टिनिरूप्तयोः ॥ १२ ॥
गुणौ श्वेतं चरुं किंवा यावत्कथितकर्मणी ।
फलार्थे अथवा यागौ विशिष्टौ विहिताविह ॥ १३ ॥
श्वैत्यं वायुस्पृगीषायामाश्रये च रविप्रभे ।
चरुर्गुणश्चरुः स्थाली, निर्वापस्तु तदाश्रितः ॥ १४ ॥
फलाहानेर्न तत्किं तु यावच्चोदितकर्म तत् ।
द्रव्यादिरूपसंपत्तेरवार्यौ यागताऽऽर्थिकी ॥ १५ ॥

अनारभ्येदमाम्नायते—'वायव्यं श्वेतमालभेत भूतिकामः' इति, 'सौर्यं चरुं निर्वपेद्ब्रह्मवर्चसकामः' इति च । तथा—दर्शपूर्णमासयोरिदमाम्नायते—"ईशा-

१ ङ. °स्थौ । द्वे । २ ङ. °स्थायीयेन । ३ ग. °स्थाय्यः । त° । ङ. °स्थायः । त° । ४ ग. ङ. °स्थायीयः । त° । ५ ग. °स्थाय्याख्यो । ङ. °स्थायाख्यो । ६ क. ग. °पेद्ब्राह्म° । ७ ग. चतुर्गणश्चतुःस्था° । ८ ग. ङ. °म्नातम्—ई° ।

मालभेत" इति, "चतुरो मुष्टीन्निर्वपति" इति च। ईषा शकटगतो लाङ्गलदण्डवद्दीर्घः काष्ठविशेषः। तस्या आलम्भः स्पर्शः। तमेतं दर्शपूर्णमासगतमीषालम्भमनूद्य तस्यामालभ्यमानायामीषायां श्वेतत्वगुणो विधीयते। तस्य च श्वेतकाष्ठस्य वायुना स्पृश्यमानत्वाद्वायव्यता संभवति। तथा—चतुर्मुष्टिनिर्वपणमनूद्य चरुर्गुणत्वेन विधीयते। चरुः स्थाली। सा च निर्वापस्याऽऽश्रयः। निरुप्तस्य हविष आग्नेयतया सूर्यवत्प्रभासंबन्धात्सौर्यत्वम्। भूतिब्रह्मवर्चसे फले च सर्वकामिकयोर्दर्शपूर्णमासयोः पूर्वसिद्धे एवानूद्येते। तस्मात्—गुणविधी—इत्येकः पूर्वपक्षः।

नहि फलपदयोर्नित्यवच्छ्रुतयोः संभवत्प्रयोजनयोश्च पाक्षिकानुवादत्वम्, आनर्थक्यं वा युक्तम्। तस्मात्—गुणफलविशिष्टे कर्मान्तरे विधीयेते। तदाऽपि यागस्याश्रवणादालम्भनिर्वापयोरेव श्रवणात्तावदुक्तकर्मविधिः—इति द्वितीयः पूर्वपक्षः।

श्वेतपशुचरुद्रव्ययोः, वायुसूर्यदेवतयोश्च स्पष्टं प्रतीयमानतया रूपवतोर्यागयोरार्थिकयोर्वारयितुमशक्यत्वाद्द्रव्यदेवताविशिष्टयोर्यागयोर्विधिरभ्युपगन्तव्यः। 'भूतिकामो वायव्येन श्वेतेन पशुना यजेत' 'ब्रह्मवर्चसकामः सौर्येण चरुणा यजेत' इत्येवंविधोऽर्थसिद्धो विधिः। द्रव्यदेवतासंबन्धकल्पितस्य यागस्य लिङ्प्रत्ययेन कर्तव्यताविधावालम्भनिर्वापयोः श्रौतयोरर्थयोः का गतिः—इति चेत्। 'अनुवादः' इति ब्रूमः। तत्प्राप्तिरत्रार्थिकी। निर्वापालम्भावन्तरेण तत्तद्यागासिद्धेः। तस्मात्—यागविधिः—इति सिद्धान्तः ॥१२॥१३॥१४॥१५॥

( षष्ठे वत्सालम्भादीनां संस्कारताधिकरणे सूत्रे १६–१७ )।

विशये प्रायदर्शनात् ॥ १६ ॥

अर्थवादोपपत्तेश्च ॥ १७ ॥

षष्ठाधिकरणमारचयति—

वत्सालम्भो यजिः स्पर्शो वा वायव्यादिवद्यजिः।
स्पर्शः स्याद्देवराहित्यात्संस्कारः प्रायपाठतः ॥ १६ ॥

अग्निहोत्रदोहाधिकारे श्रूयते—"वत्समालभेत" इति। तत्र 'विमतो वत्सालम्भो यजिः स्यात्, प्राणिद्रव्यकालम्भत्वात्, वायव्यालम्भवत्' इति चेत्। न। देवतासाहित्येन तद्वैषम्यात्। किंच—'अयं वत्सालम्भोऽग्निहोत्राङ्गसंस्कारः, तत्प्राये पठितत्वात्, इतरसंस्कारवत्'। तस्मात्—अयं स्पर्शमात्रविधिः ॥ १६ ॥

---

१ क. स्पर्शस्य देव°। २ ग. °म्भनत्वा°। ३ ग. ङ. °तासहितत्वेन। ४ क. °रः, तत्प्रा°।

( सप्तमे नैवारचरोरुपधानार्थताधिकरणे सूत्रम् ) ।

संयुक्तस्त्वर्थशब्देन तदर्थः श्रुतिसंयोगात् ॥ १८ ॥

सप्तमाधिकरणमारचयति-

चरुर्भवति नैवार उपधत्ते चरुं त्विति ।
यागः स्यादुपधानं वा यागः शेषोक्तदैवतः ॥ १७ ॥
यागत्वानिश्चये शेषो नापेक्ष्योऽतो यजिः कुतः ।
किंतूपधानमात्रत्वं यावदुक्तं चरौ स्थितम् ॥ १८ ॥

अग्नौ श्रूयते-'नैवारश्चरुर्भवति' इति, 'चरुमुपदधाति' इति च । तत्र-नीवारचरुद्रव्यको यागो विधीयते । न चात्र देवताया अभावः । 'बृहस्पतेर्वा एतदन्नं यन्नीवाराः' इति वाक्यशेषेण देवतासिद्धेः । उपधानं तु यागोपयुक्तस्य प्रतिपत्तिः स्विष्टकृदादिवत्-इति प्राप्ते,

ब्रूमः-'यागविधौ निश्चिते सति पश्चाद्देवतायामपेक्षितायां वाक्यशेषबलाद्देवताक्लृप्तिः, इह तु देवताक्लृप्त्या यागविधित्वनिश्चयः' । इत्यन्योन्याश्रयः । तस्मात्-इहोपधानमात्रं विधीयते ॥ १७ ॥ १८ ॥

( अष्टमे पात्नीवतस्य पर्यग्निकरणगुणकत्वाधिकरणे सूत्रम् ) ।

पात्नीवते तु पूर्वत्वादवच्छेदः ॥ १९ ॥

अष्टमाधिकरणमारचयति-

पर्यग्निकृतः पात्नीवत उत्सृज्यत इत्यसौ ।
यागो गुणो वा यागः स्यादन्वयान्यवधानतः ॥ १९ ॥
प्रत्यभिज्ञातमालभ्यमनूद्योत्सर्गशब्दतः ।
गुणं पर्यग्निकृत्याख्यं वक्त्युत्तरनिवृत्तये ॥ २० ॥
न दुष्टा परिसंख्याऽत्र चोदकात्प्राग्विधौ सति ।
पर्यग्निकरणान्ताङ्गरीतिः क्लृप्तोपकारतः ॥ २१ ॥

'त्वाष्ट्रं पात्नीवतमालभेत' इति प्रकृत्येदमाम्नातम्-'पर्यग्निकृतं पात्नीवतमुत्सृजन्ति' इति । तत्र-पर्यग्निकृतशब्देन संस्कृतपशुद्रव्यस्य पात्नीवतशब्देन पत्नीवन्नामकदेवतासंबन्धस्य च प्रतीयमानत्वादयं यागविधिः । एवं सति पर्यग्निकृतपात्नीवतशब्दयोरव्यवहितान्वयो लभ्यते । सिद्धान्ते तु 'पर्यग्निकृतमुत्सृजन्ति' इत्यन्वयं

१ ख. म्नायते 'प' ।

धाक्ष्छन्ति । तदा दशविधान्वयो दुर्वारः । तस्मात्—[illegible]—इति प्राप्ते,

ब्रूमः—अनारभ्याधीतत्वेऽप्यस्ति वाक्ये प्रकृतप्रत्यभिज्ञा । इह ह्यालभ्यमानेन प्रकृतः पशुः पात्नीवतशब्देन प्रत्यभिज्ञायते । तमनूद्य पर्यग्निकृतशब्दाभिहितेन 'उत्सृजन्ति' इत्याख्यातेन पर्यग्निकरणाङ्गको गुणो विधीयते । न च प्रकृतिगतस्य पर्यग्निकरणस्य विकृतौ चोदकेन प्राप्तत्वादनर्थकोऽयं विधिरिति वाच्यम् । उपरितनाङ्गाननुवृत्तेर्विधिप्रयोजनत्वात् । नन्वेवं सति परिसंख्या स्यात् । सा च दोषत्रयदुष्टा । स्वार्थत्यागः, अन्यार्थस्वीकारः, प्राप्तबाधश्चेति त्रयो दोषाः । पर्यग्निकरणवाक्ये स्वार्थो विधिस्त्यज्येत, अन्यार्थो निषेधः स्वीक्रियेत, चोदकप्राप्तान्युपरितनाङ्गानि बाध्येरन् । मैवम् । 'पर्यग्निकरणोत्तरभावीन्यङ्गानि नानुष्ठेयानि' इत्येतस्याः परिसंख्याया अनङ्गीकारात् । कथं तर्हि तन्निवृत्तिः—'आर्थिकी' इति ब्रूमः । चोदकप्रवृत्तेः प्रागेवायं विधिः प्रवर्तते, प्रत्यक्षोपदेशस्य शीघ्रबुद्धिजनकतया कल्प्यातिदेशात्प्रबलत्वात् । तथासत्युपरिष्टैरेवाङ्गैर्निराकाङ्क्षायां विकृतौ चोदकप्राप्तमपि तदुपरि तान्यङ्गानि न प्राप्यन्ते । न चानेन न्यायेन पर्यग्निकरणात्प्राचीनानामप्यप्राप्तिरिति वाच्यम् । विधीयमानस्य पर्यग्निकरणस्य नूतनत्वे तदुपकारकल्पनायां प्रकृतौ क्लृप्तोपकारं पर्यग्निकरणं, तदवस्थापन्नस्यैवात्र विधेयत्वात् । प्रकृतौ च प्राचीनाङ्गसन्निधावेव एवोपकारः क्लृप्त इत्यत्रापि प्राचीनानामेव विधानात्पर्यग्निकरणान्तमङ्गरीतिः सिध्यति । एवं च सति 'उत्सृजन्ति' इत्याख्यातेन पर्यग्निकपर्यग्निकरणावसानार्थत्वेन उपरितनाङ्गोत्सर्गो धातुना सूच्यते । तदेवमत्र गुणविधिः ॥१९॥२०॥२१॥

( नवमे, अदाभ्यादीनां ग्रहनामताधिकरणे सूत्रम् ) ।

अद्रव्यत्वात्केवले कर्मशेषः स्यात् ॥ २० ॥

नवमाधिकरणमारचयति—

यददाभ्यं गृहीत्वेति गृह्णात्यंशुमिति श्रुतम् ।
तद्यागो वा गुणो यागः स्याद्दाभ्यांशुनामतः ॥ २१ ॥
ग्रहयोरेव नाम स्याद्यागस्यार्थाद्विधिस्तयोः ।
गुणोऽतस्तस्य वाक्येन ज्योतिष्टोमाभिगामिना ॥ २२ ॥

अनारभ्य श्रूयते—'एष वै हविषा हविर्यजते, योऽदाभ्यं गृहीत्वा सोमाय यजते' इति, 'परा वा एतस्यायुः प्राण एति, योंऽशुं गृह्णाति' इति च ।

१ क. °ति प्राप्ते ब्रू° । २ ख. विधीयमानत्वात् । ३ ख. शुभानतः ।

तत्र—अदाभ्यशब्दस्य ज्योतिरादिवदपूर्वनामत्वात्तन्नामको यागो 'यजते' इत्याख्यातेन विधीयते । 'अंशुम्' इत्यत्र यजतेरश्रवणेऽपि नामविशेषवशादेव अपूर्वयागविधिः । न चात्र द्रव्यदेवतयोरभावः ग्रहणलिङ्गेन ज्योतिष्टोमविकृतित्वादगतौ तदीयविध्यन्तातिदेशेन तत्सिद्धेः—इति प्राप्ते,

ब्रूमः—भवत्वदाभ्यांशुशब्दयोर्नामत्वम् । ते च नामनी ग्रहयोरेव स्याताम् , न तु यागयोः । 'गृहीत्वा' इतिशब्दस्यानन्तरमेव पाठात् । यजतिस्तु व्यवहितः । तादृशोऽपि यजिरंशुवाक्ये नास्ति । तस्माद्ग्रहयोरेवात्र विधिः ग्रहणं च ज्योतिष्टोमगतस्य सोमरसस्य संस्काररूपो गुणः, ऐन्द्रवायवादिग्रहणसमानत्वात् । यद्यप्यत्र न प्रकृतो ज्योतिष्टोमः, तथाऽपि तत्संबन्धिग्रहणद्वारा वाक्यस्य ज्योतिष्टोमगामित्वम् । अत एव 'सोमायादाभ्यं गृहीत्वा' इति निर्दिश्यते । अथवा—तैत्तिरीयाणां षष्ठकाण्डे षष्ठे प्रपाठके प्राकरणिकं विनियोजकं वाक्यं द्रष्टव्यम् । तस्मात्—ज्योतिष्टोमे गुणविधिः ॥ २१ ॥ २३ ॥

( दशमे अग्निचयनस्य संस्कारताधिकरणे सूत्राणि२१–२३ ) ।

**अग्निस्तु लिङ्गदर्शनात्क्रतुशब्दः प्रतीयेत ॥ २१ ॥**

**द्रव्यं वा स्याच्चोदनायास्तदर्थत्वात् ॥२२॥ तत्संयोगात्क्रतुस्तदाख्यः स्यात्तेन धर्मविधानानि ॥२३॥**

दशमाधिकरणमारचयति—

**अग्निं चिनुत इत्यत्र यागो वा संस्कृतिर्यजिः ।**
**लिङ्गेन यागनामत्वाद्यजिना चानुवादतः ॥ २४ ॥**

**रूढ्या द्रव्यस्य नामैतद्वह्नेराधानवच्चितिः ।**
**संस्कारः संस्कृते वह्नावग्निष्टोमो विधीयते ॥ २५ ॥**

' य एवं विद्वानग्निं चिनुते ' इत्येवं विधाय श्रूयते—'अथातोऽग्निमाग्निष्टोमेनानुयजति, तमुक्थ्येन तं षोडशिना, तमतिरात्रेण, इत्यादि । अत्र—अग्निशब्दो यागवाची । स्तोत्रशस्त्रादेः क्रतुलिङ्गस्य श्रूयमाणत्वात् । तच्च लिङ्गमेवं श्रूयते—' अग्नेः स्तोत्रं, अग्नेः शस्त्रम् ' इति, 'षडुपसदोऽग्नेश्चित्यस्य भवन्ति ' इति च । यदि लिङ्गं प्रापकापेक्षम्, तर्हि यजिना तदनुवादः प्रापकेऽस्तु । आग्निमग्निष्टोमेनानुयजति ' इत्येतस्मिन्वाक्ये ' अग्निं यजति ' इति यजिसामानाधिकर-

१ ख. °तिरत्वव्य° । २ ग. °नरूपत्वा° । ३ ख. ग. °जकवा° । ४ क. ग. ङ. संस्कृतिः । ५ ख. °ष्टोमे वि° । ६ क. ख. ग. °जतीति ।

ण्यात् ‘ उपांशु यजति ’ इतिवद्यागनामत्वम् । अथोच्येत—अनुशब्दस्याग्नि-शब्देनान्वयाद्यज्यन्वयोऽग्निष्टोमस्य, इति । तथाऽप्यग्नेः पुरोयजने सत्यग्नि-ष्टोमस्यानुयजनं संभवति । ‘ देवदत्तमनुगच्छति यज्ञदत्तः ’ इत्यत्र देवदत्ते पुरोगमनदर्शनात् । तस्मात् ‘ अग्निं चिनुते ’ इत्यत्राग्निनामको याग आख्यातेन विधीयते । चिनोतिस्तु ‘ इष्टकाभिरग्निं चिनुते ’ इति वाक्यप्रा-प्तस्य चयनस्य सोमयागविकृतित्वेन प्राप्तस्य ग्रहरामुदायस्येवानुवाद.—इति प्राप्ते,

ब्रूमः—अग्निशब्दो रूढ्या वह्निद्रव्यमाचष्टे । रूढिश्च क्लृप्तया उद्भिदादि-कल्प्यायागवाचित्वाद्बलीयसीति न यागनामत्वम् । न चात्र यागरूपमस्ति । द्रव्यदेवतयोरसिद्धेः । अतः ‘ अग्निमादधीत ’ इत्युक्ताग्निनिर्वृत्तौ ‘ अग्निं चिनुते ’ इत्युक्तं चयनमग्निद्रव्यसंस्कारः । न च संस्कृतस्य विनियोगाभावः । ‘ अग्नि-मग्निष्टोमेन यजते ’ इत्यादिवाक्यैरग्निष्टोमादौ विनियोगात् । तस्मात्—संस्का-रविधिः ॥ २४ ॥ २५ ॥

( एकादशे मासाग्निहोत्रादीनां क्रत्वन्तरताधिकरणे सूत्रम् ) ।

प्रकरणान्तरे प्रयोजनान्यत्वम् ॥ २४ ॥

एकादशाधिकरणमारचयति—

मासं जुहोत्यग्निहोत्रं गुणोऽन्यत्कर्म वा गुणः ।
अनूद्य प्राप्तकर्मात्र मासोऽप्राप्तो विधीयते ॥ २६ ॥
उपसद्भिश्चरित्वेति नित्ये तासामसंभवात् ।
अनेकस्याविधेश्चान्यत्कर्म प्रकरणान्तरात् ॥ २७ ॥

कुण्डपायिनामयने श्रूयते—‘ उपसद्भिश्चरित्वा ’ ‘ मासमग्निहोत्रं जुहोति ’ ‘ मासं दर्शपूर्णमासाभ्यां यजेत ’ इति । अत्र—प्राप्तं नित्याग्निहोत्रमनूद्य मास-लक्षणो गुणोऽप्राप्तत्वाद्विधीयते—इति चेत् ।

नैवम् । किं मास एव विधीयते, ‘ उपसद्भिश्चरित्वा ’ इत्युक्तोपसदोऽपि । नाऽऽद्यः । उपसदामपि नित्याग्निहोत्रमात्रिरहितानां त्वन्मते विधातव्यत्वात् । न द्वितीयः । प्राप्ते कर्मण्यनेकगुणविधौ वाक्यभेदापत्तेः । ननु मा भूत्तर्हि गुणविधिः । कर्मान्तरत्वे किं प्रमाणम्—इति चेत् । ‘प्रकरणान्तरम्’—इति ब्रूमः । न ह्येतन्नि-त्याग्निहोत्रस्य प्रकरणम् । असंनिहितत्वात् । अर्थनैस्येवैतत्प्रकरणम् । अयनमा-म्न्यात्वधीतत्वात् । का तर्हि नित्याग्निहोत्रे गुणविधिशङ्का—इति चेत् । प्रकरण-

१ क. ‘तेनाभिधी° । २ ख. ग. ङ. °तित्वप्रा° । ३ क. °त्युक्त्वा प्रा° । ४ क. °कस्य वि° । ५ ख. ग. घ. ङ. °ते “भा° । ६ ख. °होमम° । ७ क. ग. ङ. °त्युक्ता उप° । ८ क. ख. °ति प्राप्ते क्रू° । ९ ङ. °यनं त्वेत° । १० ख. नस्यैत° । ११ ग. °स्य त्वेत°

स्यासमर्पकत्वेऽप्यग्निहोत्रशब्देनैतत्समर्पणादेषा शङ्का भवति । सा च वाक्यभेदापत्त्या निराकृता । तथा सति स्वतःसिद्धं प्रकरणभेदं निराकृत्य प्रकरणैक्यापादनेन गुणं विधापयितुं प्रवृत्तस्याग्निहोत्रशब्दस्य शक्तौ निरुद्धायां तदवस्थः प्रकरणभेदो नित्याग्निहोत्रादिदं कर्म भिनत्ति । अग्निहोत्रशब्दो धर्मातिदेशार्थ इति सप्तमे वक्ष्यते । ननूपसन्मासाभ्यां विशिष्टमिदं कर्म विधीयते । ततो वाजिनन्यायेन गुणभेदात्कर्मभेदः, न प्रकरणभेदादिति चेत् । न । वैषम्यात् । 'उपादेयतया विधेयो गुणो वाजिनम् । मासस्त्वनुपादेयः' इत्येकं वैषम्यम् । 'द्रव्यत्वेन रूपान्तर्गतं वाजिनम् । मासो न तथा' इत्यपरं वैषम्यम् । परमार्थतस्त्वत्र प्रथमतरप्रतीतेन प्रकरणभेदेन सिद्धं कर्मभेदं गुणभेद उपोद्बलयति । ततः प्रकरणान्तरमेवात्र भेदहेतुः ॥ २६ ॥ २७ ॥

(द्वादशे, आग्नेयादिकाम्येष्ट्यधिकरणे सूत्रम्) ।

फलं चाकर्मसंनिधौ ॥ २५ ॥

द्वादशाधिकरणमारचयति—

अष्टाकपालमाग्नेयं रुक्कामः प्राकृते फलम् ।
कर्मान्यद्वा फलं भानात्पूर्वन्यायाप्रवेशनात् ॥ २८ ॥
मा भूदिदं प्रकरणं कर्मान्तरमसंनिधेः ।
अनारभ्याधीतमेतद्रूपं त्वन्यूनमीक्षते ॥ २९ ॥

अनारभ्य श्रूयते—'आग्नेयमष्टाकपालं निर्वपेद्रुक्कामः' इति । रुक्कामस्तेजस्कामः । अत्र—इष्टीनां प्रकृतिभूतदर्शपूर्णमासगतमाग्नेययागमनूद्य तत्र तेजस्कामत्वं फलं विधीयते । कुतः । वाक्येनाऽऽग्नेयफलसंबन्धस्य भासमानत्वात् । न च पूर्वोक्तमासाग्निहोत्रन्यायेन कर्मान्तरत्वम् । वैषम्यात् । तत्रायनमारभ्याधीतत्वादस्ति प्रकरणान्तरत्वम् । इह त्वनारभ्याधीतत्वेन प्रकरणमेव तावन्नास्ति, कुतोऽत्र प्रकरणान्तरत्वम् । किंच मासोऽनुपादेयः । अग्निहोत्रानुसारेण संपादयितुमशक्यत्वात् । फलं तूपादेयम्, दार्शपौर्णमासिकाग्नेयानुसारेण तेजसः कामयितुं शक्यत्वात् । तस्मात्—फलविधिः—इति प्राप्ते,

ब्रूमः—प्रकरणान्तरत्वाभावेऽप्यनारभ्याधीतत्वादसंनिधिरस्त्येव । स एवात्र कर्म भिनत्ति । न चात्र वाजिनन्यायेन कर्मभेदः, अष्टाकपालद्रव्याग्निदेवतात्मनो

---

१ ग. °दिकं क° । २ क. दर्शपूर्ण° । ग. दर्शपूर्णमासाग्नेयानु° । ३ क. °न्तराभा°

रूपस्योभयत्रैकविधत्वात् । यदि प्रकरणान्तरत्वमप्यसंनिधिकृतमित्यसंनिधिरेव मासाग्निहोत्रकर्मभेदहेतुः, तर्हि तस्यैवायं प्रपञ्चोऽस्तु । फलं च मासवदनुपादेयम् । अन्यथा साधनत्वफलत्वप्रसङ्गात् । कामना च विषयसौन्दर्यज्ञानात्स्वत एवोत्पद्यते । न तु विधिश्रवणात्संपद्यते । पूर्वाधिकरणयोर्न्यायभेदः, यदि वा न्यायैक्यम् । सर्वथा तेजस्कामेष्टिः कर्मान्तरम् । काम्येष्टिकाण्डपठितेषु 'ऐन्द्राग्नमेकादशकपालं निर्वपेत्प्रजाकामः' इत्यादिष्वयमेव न्यायो द्रष्टव्यः ॥ २८ ॥ २९ ॥

( त्रयोदशे—अवेष्टेरन्नाद्यफलकत्वाधिकरणे सूत्रम् ) ।

सांनिधौ त्वविभागात्फलार्थेन पुनःश्रुतिः ॥ २९ ॥

त्रयोदशाधिकरणमारचयति—

यजेतमे पौर्णमास्यां यावज्जीवं तयैतया ।
अन्नाद्यकाम इत्यादौ कर्मभेदोऽथवा गुणः ॥ ३० ॥
विध्युपादानयोरैक्याद्देशादेरनु×पादितः ।
आवश्यके कर्मविधौ तद्भेदः पुनरुक्तितः ॥ ३१ ॥
देशादियोगस्याप्राप्तेर्विधिर्न ह्येकता तयोः ।
पुंशब्दयोर्व्यापृतत्वात्पुनरुक्त्या त्वनूद्यते ॥ ३२ ॥

दर्शपूर्णमासप्रकरणे देशकालनिमित्तान्याम्नायन्ते—'समे यजेत' 'पौर्णमास्यां यजेत' 'यावज्जीवं दर्शपूर्णमासाभ्यां यजेत' इति । अवेष्टिप्रकरणे फलमाम्नातम्—'एतयाऽन्नाद्यकामं याजयेत्' इति । आदिशब्देन संस्कारो गृहीतः । स च दर्शपूर्णमासप्रकरणे समाम्नातः—'शेषं स्विष्टकृते समवद्यति' इति । तत्र—देशकालनिमित्तफलसंस्कारा अननुष्ठेयत्वादनुपादेयाः । अत एव न विधेयाः । उपादानविधिशब्दयोः पर्यायत्वात् । ततः—कर्मविधिः—इत्यवश्यमभ्युपेयम् । तत्र—प्रकरणिनो दर्शादेः पूर्वविहितस्यैवैभिर्वाक्यैः पुनर्विधाने 'समिधो यजति' इत्यादिवदभ्यासादेव कर्मभेदः—इति प्राप्ते,

ब्रूमः—देशादीनामविधेयत्वेऽपि विहितकर्मणा सह तेषां संबन्धो विधीयताम् । स च कर्मवत्पूर्वं न विहित इत्यप्राप्तत्वाद्विधिमर्हति । यदुक्तम्—उपादानविधिशब्दौ पर्यायौ—इति । तदसत् । 'अप्रवृत्तप्रवर्तनं विधानम्, तच्च पुरुषविषयः

×पुस्तकान्तरे °नुपादितः ।

१ ख. °विध्यात् । २ ग. °नत्वत्र° । ३ क. ख. °योः । पुरुषशब्दव्यापृतत्वा° । ग. °योः पुरुषशब्दस्याऽऽवृतत्वा° । ४ ग. °स्यैभि° ।

शब्दव्यापारः । अननुष्ठितस्यानुष्ठानमुपादानम्, तच्च कर्मविषयः पुरुषव्यापारः’ इति महान्भेदः । योऽपि—दर्शादीनां पुनर्विधिः सोऽपि देशादिसंबन्धं विधातुं कर्मानुवादः—इति न कर्मभेदमावहति । समिधो ‘यजति’ इत्यादौ विधेयगुणान्तराभावेनानुवादासंभवात्पुनर्विधानं भेदहेतुः—इति वैषम्यम् ॥३०॥३१॥३२॥

( चतुर्दशे, आग्नेयद्विरुक्तेः स्तुत्यर्थताधिकरणे सूत्राणि २७—२९ )

आग्नेयस्तूक्तहेतुत्वादभ्यासेन प्रतीयेत ॥ २७ ॥

अविभागात्तु कर्मणा द्विरुक्तेर्न विधीयते ॥ २८ ॥

अन्यार्था वा पुनःश्रुतिः ॥ २९ ॥

चतुर्दशाधिकरणमारचयति—

दर्शपूर्णमासप्रोक्त आग्नेयः केवलोऽप्यसौ ।
दर्शे यदिति वाक्याभ्यां कर्मान्यद्वाऽनुवादगीः ॥ ३३ ॥
अभ्यासादन्यकर्मत्वं दर्शेष्टौ द्विः प्रयुज्यताम् ।
एकत्वप्रत्यभिज्ञानादनूक्तयैन्द्राग्नसंस्तुतिः ॥ ३४ ॥

यदाग्नेयोऽष्टाकपालोऽमावास्यायां पौर्णमास्यां चाच्युतो भवति । इति कालद्वये विहितम् । ‘यदाग्नेयोऽष्टाकपालोऽमावास्यायां भवति’ इत्येकस्मिन्काले पुनर्विहितम् । तत्र—अविशेषपुनःश्रुतिलक्षणेनाभ्यासेन प्रयाजानामिव भेदः । तथा सत्याग्नेययागस्य दर्शकाले द्विःप्रयोगः—इति चेत् ।

न । प्रत्यभिज्ञानादाग्नेयस्यैकत्वे सत्येककालवाक्यस्यानुवादकत्वात् । न चानुवादो व्यर्थः । विधेयैन्द्राग्नस्तुत्यर्थत्वात् । यद्यप्याग्नेयोऽष्टाकपालोऽमावास्यायां भवति, तथाऽपि न केवलेनाग्निना साधुर्भवति । इन्द्रसहितोऽग्निः समीचीनतरः । तस्मात्—

‘ऐन्द्राग्नः कर्तव्यः’ इति विधेयस्तुतिः । प्रयाजवैषम्यं तूक्तमेवानुसंधेयम् ॥ ३३ ॥ ३४ ॥

इति श्रीमाधवीये जैमिनीयन्यायमालाविस्तरे
द्वितीयाध्यायस्य तृतीयः पादः ॥ ३ ॥

| | अत्र पादे | आदितः । |
|---|---|---|
| अधिकरणानि | १४ | ८७ । |
| सूत्राणि | २९ | २५७ । |

१ ग. °पूर्णिमयोः प्रो° । २ क. ख. °णमासयोः । प्रो° । ३ क. यदेति । ४ ख. ग. सदा ।

( अथ द्वितीयाध्यायस्य चतुर्थः पादः ) ।

( प्रथमे यावज्जीविकाग्निहोत्राधिकरणे सूत्राणि १–७ ) ।

यावज्जीविकोऽभ्यासः कर्मधर्मः प्रकरणात् ॥ १ ॥ कर्तुर्वा श्रुतिसंयोगात् ॥ २ ॥ लिङ्गदर्शनाच्च कर्मधर्मे हि प्रक्रमेण नियम्येत तत्रानर्थकमन्यत्स्यात् ॥ ३ ॥ अपवर्गं च दर्शयति, कालश्चेत्कर्मभेदः स्यात् ॥ ४ ॥ अनित्यत्वात्तु नैवं स्यात् ॥ ५ ॥ विरोधश्चापि पूर्ववत् ॥ ६ ॥ कर्तुस्तु नियमात्कालशास्त्रं निमित्तं स्यात् ॥ ७ ॥

चतुर्थपादस्य प्रथमाधिकरणमारचयति—

यावज्जीवं जुहोतीति धर्मः कर्मणि पुंसि वा ।
कालत्वात्कर्मधर्मोऽतः काम्य एकः प्रयुज्यताम् ॥ १ ॥
न कालो जीवनं तेन निमित्तप्रविभागतः ।
काम्यप्रयोगो भिन्नः स्याद्यावज्जीवप्रयोगतः ॥ २ ॥

बह्वृचब्राह्मणे श्रूयते—'यावज्जीवमग्निहोत्रं जुहोति' इति । तत्र यावज्जीवशब्दो मरणावधिकालपरः । तत्कालसंबन्धश्च प्रकृते काम्याग्निहोत्रे पूर्वमप्राप्तत्वात् ' जुहोति ' इत्यनूदिते कर्मणि विधीयते । तथा सत्यस्य वाक्यस्य नित्यप्रयोगविधायकत्वाभावेन वाक्यान्तरविहितः काम्यप्रयोग एक एवाग्निहोत्रस्य पर्यवस्यति । स च काम्यप्रयोगोऽभ्यसितव्यः । सकृदनुष्ठानस्य ' अग्निहोत्रं जुहुयात्स्वर्गकामः ' इत्यनेनैव सिद्धत्वात् । ' यावज्जीवम् ' इत्यस्य कालविधेर्वैयर्थ्यप्रसङ्गात् । तस्मात्—अयं काम्यकर्मणोऽभ्याससिद्धये कालरूपधर्मविधिः । इति प्राप्ते,—

ब्रूमः—यावज्जीवशब्दो न कालस्य वाचकः, किंतु लक्षकः । वाच्यार्थस्तु—कृत्स्नजीवनम् । न च-जीवनं कर्मधर्मत्वेन विधातुं शक्यम् , तस्य पुरुषधर्मत्वात् । तं च पुरुषधर्मं निमित्तीकृत्याग्निहोत्रप्रयोगो विधीयते । न च—अत्र कर्मभेदः । तद्धेतूनां शब्दान्तरादीनामभावात् । न च—अभ्यासस्तद्धेतुः । निमित्तविशेषसत्त्वात्रेनाविशेषपुनःश्रुतेरभावात् । अतः प्रयोगभेदः पर्यवस्यति । जीवनस्यात्र निमित्तत्वात् । सति निमित्ते नैमित्तिकस्य त्यागायोगान्नित्यत्वमर्थसिद्धम् । न च—

१ ख. °दितक° । २ क. °यं क° । ३ क. तेन ।

जीवननिमित्तैरन्तर्येण प्रयोगैरन्तर्योपपत्तिः । सायंप्रातःकालयोर्विहितत्वात् । तस्मात्--जीवनस्य पुरुषधर्मत्वान्नित्यकाम्यप्रयोगौ भिन्नौ ॥ १ ॥ २ ॥

( द्वितीये सर्वशाखाप्रत्ययैककर्मताधिकरणे सूत्राणि ८—३२ ) ।

नामरूपधर्मविशेषपुनरुक्तिनिन्दाशक्तिसमाप्तिवचनप्रायश्चित्तान्यार्थदर्शनाच्छाखान्तरेषु कर्मभेदः स्यात् ॥ ८ ॥ एकं वा संयोगरूपचोदनाख्याविशेषात् ॥ ९ ॥ न नाम्ना स्यादचोदनाभिधानत्वात् ॥ १० ॥ सर्वेषां चैककर्म्यं स्यात् ॥ ११ ॥ कृतकं चाभिधानम् ॥ १२ ॥ एकत्वेऽपि परम् ॥ १३ ॥ विद्यायां धर्मशास्त्रम् ॥ १४ ॥ आग्नेयवत्पुनर्वचनम् ॥ १५ ॥ अद्विर्वचनं वा श्रुतिसंयोगाविशेषात् ॥ १६ ॥ अर्थासंनिधेश्च ॥ १७ ॥ न चैकं प्रति शिष्यते ॥१८॥ समाप्तिवच्च संप्रेक्षा ॥१९॥ एकत्वेऽपि पराणि निन्दाशक्तिसमाप्तिवचनानि ॥२०॥ प्रायश्चित्तं निमित्तेन ॥२१॥ प्रक्रमाद्वा नियोगेन ॥२२॥ समाप्तिः पूर्ववत्त्वाद्यथाज्ञाते प्रतीयेत ॥२३॥ लिङ्गमविशिष्टं सर्वशेषत्वान्न हि तत्र कर्मचोदना तस्माद्द्वादशाहस्याऽऽहारव्यपदेशः स्यात् ॥२४॥ द्रव्ये चाचोदितत्वाद्विधीनामव्यवस्था स्यान्निर्देशाद्व्यवतिष्ठेत तस्मान्नित्यानुवादः स्यात् ॥२५॥ विहितप्रतिषेधात्पक्षेऽतिरेकः स्यात्

॥२६॥ सारस्वते विप्रतिषेधाद्यदेति स्यात् ॥२७॥
उपहव्येऽप्रतिप्रसवः ॥२८॥ गुणार्था वा पुनःश्रुतिः
॥२९॥ प्रत्ययं चापि दर्शयति ॥३०॥ अपि वा
क्रमसंयोगाद्विधिपृथक्त्वमेकस्यां व्यवतिष्ठेत॥३१॥
विरोधिना त्वसंयोगादैककर्म्ये तत्संयोगाद्विधीनां
सर्वकर्मप्रत्ययः स्यात् ॥ ३२ ॥

द्वितीयाधिकरणमारचयति—

शाखाभेदात्कर्मभेदो न वा, कर्मात्र भिद्यते ।
दृष्टं काठकनामादि बहु भेदस्य कारणम् ॥ ३ ॥
अन्यद्वारादिना ह्येते युज्यन्ते भेदहेतवः ।
रूपादिप्रत्यभिज्ञानादभिन्नं कर्म गम्यते ॥ ४ ॥

काठककाण्वमाध्यंदिनतैत्तिरीयादिशाखासु दर्शपूर्णमासाख्यं कर्माऽऽम्नातम् । तत्र शाखाभेदात्कर्म भिद्यते । कुतः । भेदकारणानां नामभेदादीनां बहूनामुपलम्भात् । काठक—काण्वादिको नामभेदः । कारीरीवाक्यान्यधीयानाः केचिच्छाखिनो भूमौ भोजनमाचरन्ति, शाखान्तराध्यायिनो नाऽऽचरन्ति, इति धर्मभेदः । एकस्यां शाखायामधीताः 'इषे त्वा' इत्यादयो मन्त्राः, पलाशशाखाच्छेदादयः क्रियाश्च, शाखान्तरेऽप्यधीयन्त इति पुनरुक्तिः । एव×नशवत्यादयो भेदहेतव उदाहार्याः । न ह्यल्पायुषा मनुष्येण सर्वशाखाध्ययनपूर्वकं कर्मानुष्ठानं कर्तुं शक्यम् । तस्मात्—शाखाभेदेन कर्मभेदः । इति प्राप्ते—

× रूपभेदः—एकस्यां शाखायामग्नीषोमीयमेकादशकपालम्, एकस्यां द्वादशकपालमिति निन्दावचनम्—केषांचिदनुदितहोमस्य, केषांचिदुदितहोमस्य, इति समाप्तिवचनम्—केषांचित् 'अग्नावस्माकमग्निः परिसमाप्यते, अपरेषां त्वन्यत्र परिसमाप्तिः', इति प्रायश्चित्तवचनम्—केषांचिदनुदितहोमव्यतिक्रमे, केषांचिदुदितहोमव्यतिक्रमे, इति । अन्यार्थदर्शनम्—"यदि पुरा दिदीक्षाणाः स्युः, यदि वैषां गृहपतिर्गृहपतेर्वा नसास्त्रिगः" इति, "त एतमेव बृहत्सामानं क्रतुमुपेयुः, उपेतं ह्येषां रथन्तरम्, अथ यदि "अदिदीक्षाणाः" इति, इष्टवतामनिष्टपूर्वाणां च द्वादशाहे दर्शनम् । इति शाबरभाष्ये विस्तरः ।

१ ख. °रीयशा° । २ ख. ग. छ. बहुलम्° । ३ ख. °भेदनाद° ।

उत्तमः—रूपाद्यभेदादेकं कर्म । आग्नेयाष्टाकपालादियागरूपं यदेवैकस्यां शाखायाम्, तदेवान्यत्राप्युपलभ्यते । 'दर्शपूर्णमासाभ्यां यजेत' इति यागरूपः पुरुषव्यापारश्चैकविधः । 'दर्शपूर्णमासौ' इति कर्मनामाप्येकम् । 'स्वर्गकामः' इति फलसंबधोऽप्येकः । तस्मात्—अभिन्नं कर्म । पूर्वपक्षहेतवस्त्व*न्यथा संगच्छन्ते । काठकादिकं ज्योतिरादिवन्न कर्मनाम, 'काठकेन यजेत' इत्यश्रवणात् । 'काठकमधीते' इति प्रयोगाद्ग्रन्थनामेत्यवगन्तव्यम् । भूभोजनादिरध्ययनधर्मः । पुनरुक्तिरध्येतृभेदान्न दुष्यति¹ । अल्पायुषाऽपि शाखान्तरस्थोपसंहारन्यायेन कर्मानुष्ठातुं शक्यते । तस्मात्—अनन्यथासिद्धरूपप्रत्यभिज्ञानाच्छाखाभेदेऽपि कर्म न भिद्यते ॥ ३ ॥ ४ ॥

इति श्रीमाधवीये जैमिनीयन्यायमालाविस्तरे द्वितीयाध्यायस्य चतुर्थः पादः ॥ ४ ॥

द्वितीयोऽध्यायश्च समाप्तः ॥ २ ॥

| | अत्र पादे | आदितः । |
|---|---|---|
| अधिकरणानि | ९ | ९९ । |
| सूत्राणि | ३२ | २८९ । |

---

( अथ तृतीयाध्यायस्य प्रथमः पादः ) ।

द्वितीये कर्मणां भेदे सिद्धे भिन्नक्रियास्वयम् ।
बुभुत्सितः शेषशेषिभावोऽतोऽत्राभिधीयते ॥ १ ॥

अनेन द्वितीयतृतीययोरध्याययोः पौर्वापर्यं निरूपितम् ॥ १ ॥

---

* नहि निन्दा निन्द्यं निन्दितुं प्रयुज्यते । किं तर्हि—निन्दितादितरत्प्रशंसितुम् । तत्र न निन्दितस्य प्रतिषेधो गम्यते । किंतु—इतरस्य विधिः । तत्रैकस्मिन्नग्निहोत्रे द्वौ कालौ विहितौ विकल्प्येते । अतो न कश्चिद्दोषः । तथा—असमर्थानामेकस्मिन्वेदे विहितकृत्स्नमङ्गजातमुपसंहर्तुमशक्तिरस्ति, समर्थानां तु सर्वशाखाभ्योऽप्यागमितमाधिकं विधिमुपसंहर्तुं शक्तिरस्ति, इति तेनैककर्मत्वेऽपि न विरुद्धम् ॥ तथा, एकस्मिन्नपि कर्मणि किंचिद्वस्तु समाप्तमिति कृत्वा समाप्तिशब्दः प्रयुज्यते । यथा—आध्वर्यवे समाप्ते ज्योतिष्टोमस्य 'समाप्तो ज्योतिष्टोमः' इति भवति । "उदिते होष्यामि" इति प्रक्रान्ते, अन्यथा क्रियमाणे भवति दोषः । तत्र प्रायश्चित्तस्य विषयो भविष्यतीति कर्मैकत्वेऽपि न दोषः—इत्यादि शाबरभाष्ये विस्तरः ।

---

१ क. ख. °ति । अल्पा° ।

(प्रथमे प्रतिज्ञाधिकरणे सूत्रम्– )।

अथातः शेषलक्षणम् ॥ १ ॥

तृतीयाध्यायस्य प्रथमपादे प्रथमाधिकरणमारचयति–

अशाब्दी शेषता शाब्दी वा न शाब्द्यप्रतीतितः।
क्रियाकारकसंसर्गमात्रे व्युत्पत्तिसंभवात् ॥ २ ॥
गुणप्रधानभावेन संसर्गेऽन्तर्भवत्यसौ।
व्युत्पत्तिसंभवात्तत्र शाब्दता स्यात्क्रियादिवत् ॥ ३ ॥

यदिदमस्मिंस्तृतीयाध्याये प्रतिपाद्यं शेषत्वम्, न तच्छाब्दम्। कुतः। केनापि शब्देन शेषत्वस्याप्रतीयमानत्वात्। व्युत्पन्नो हि शब्दः प्रत्यायकः। व्युत्पत्तिश्च न शेषशेषिभावे क्वचिद्दृष्टा। लोके सर्वत्र क्रियाकारकान्वयस्यैव व्युत्पत्तिप्रयोजकत्वदर्शनात्। अतः शेषताया अशाब्दत्वान्नायमध्याय आरम्भणीय इति चेत्।

मैवम्। अन्वये शेषशेषिभावस्यान्तर्भावात्। न हि गुणप्रधानभावमन्तरेणान्वयः संभवति। द्वयोर्गुणयोः परस्पराकाङ्क्षारहितत्वेनान्वययोग्यत्वाभावात्। एवं द्वयोः प्रधानयोरपि। अतो व्युत्पत्तिसंभवात्क्रियाकारकतदन्वया[1] यथा शाब्दाः, तथा तदन्वयान्तर्गतः शेषशेषिभावोऽपि शाब्दः। तस्मादयमध्याय आरम्भणीयः॥ २ ॥ ३ ॥

( द्वितीये शेषलक्षणाधिकरणे सूत्रम्– )।

शेषः परार्थत्वात् ॥ २ ॥

द्वितीयाधिकरणमारचयति–

स्वरूपहेतू न स्तोऽत्र स्तो वा नेवानिरूपणात् ॥३॥
पारार्थ्यं शेषताहेतू रूपं तेनोपलक्षितम् ॥ ४ ॥

न तावदत्र शेषत्वस्य स्वरूपं निरूपयितुं शक्यते। तथा हि–शेषत्वं नाम किम्–अविनाभूतत्वम्, प्रयोज्यत्वं वा, विध्यन्तविहितत्वं वा। नाऽऽद्यः। षड्यागानामविनाभूतानां परस्परशेषत्वप्रसङ्गात्। न द्वितीयः। 'पुरोडाशकपालेन तुषानुपवपति' इत्यत्र तुषोपवापं[3] प्रति शेषस्यापि कपालस्य तत्प्रयोज्यत्वाभावात्। न तृतीयः। विध्यादिविहितस्य पलाशशाखाच्छेदस्य सत्यपि शेषत्वे विध्यन्तविहितत्वाभावात्। तस्मान्नास्ति शेषतायाः स्वरूपम्। नापि हेतुरस्ति। 'विमतः शेषः, एवंत्वात्, इति कस्यचिद्धेतोरनिरूपणात्–इति प्राप्ते,–

१ ङ. प्रतिपादितम्। २ ङ. °न्वयो यथा शाब्दः, त°। ३ क. तुषधारणम्। ख. ग. तुषोपवनम्।

ब्रूमः-'विमतः प्रयाजादिः शेषः, परार्थत्वात्, भृत्यादिवत्' इति हेतुः सुनिरूपः। अविनाभूतत्वादीनां लक्षणानां दुष्टत्वेऽपि 'परार्थः शेषः' इति लक्षणस्यादुष्टत्वात्। तेन लक्षित आकारः स्वरूपम्। न च पारार्थ्यस्यैव हेतुत्वे लक्षणत्वे च सांकर्यम्। आकारभेदेन तद्भेदात्। दृष्टान्ते गृहीतव्याप्तिं सहायीकृत्य बोधक आकारो हेतुः। इतरव्यावृत्त्या बोधक आकारो लक्षणम्। तस्माच्छेषताया हेतुस्वरूपे विद्येते ॥ ४ ॥

( तृतीये शेषलक्षणाधिकरणे सूत्राणि ३–६)।

**द्रव्यगुणसंस्कारेषु बादरिः ॥ ३ ॥ कर्माण्यपि जैमिनिः फलार्थत्वात् ॥ ४ ॥ फलं च पुरुषार्थत्वात् ॥ ५ ॥ पुरुषश्च कर्मार्थत्वात् ॥ ६ ॥**

तृतीयाधिकरणमारचयति—

किं द्रव्यगुणसंस्कारमात्रं शेषोऽथवा फलम्।
पुमान्कर्म च पक्षौ द्वावाद्यो मतभेदतः ॥ ५ ॥
शेषत्वमुपकारित्वं द्रव्यादावाह बादरिः।
पारार्थ्यं शेषता तच्च सर्वेष्वस्तीति जैमिनिः ॥ ६ ॥

स्फ्यकपालादिकं द्रव्यम्, अरुणिमादिको गुणः, अवघातप्रोक्षणादिकः संस्कारः। एतेषु त्रिष्वेव शेषत्वम्। स्वर्गः फलम्, तत्कामी पुरुषः, दर्शपूर्णमासौ कर्म। न हि फलादीनां त्रयाणां शेषत्वमस्ति। उपकारित्वस्य शेषत्वलक्षणस्य फलादिष्वभावात्—इति बादरेर्मतम्। पारार्थ्यं लक्षणमभिप्रेत्य 'फलादयोऽपि शेषाः' इति जैमिनेर्मतम्। तथा च त्रीणि सूत्राणि पठ्यन्ते—'कर्माण्यपि जैमिनिः फलार्थत्वात्' 'फलं च पुरुषार्थत्वात्' 'पुरुषश्च कर्मार्थत्वात्' इति। तत्रोपकारित्वमतिव्याप्तम्। प्रधानभूतेऽपि स्वामिनि गर्भदासोपकारित्वदर्शनात्। तस्माज्जैमिनिमतमेव मुख्यः सिद्धान्तः ॥ ५ ॥ ६ ॥

(चतुर्थे निर्वपणादीनां व्यवस्थितविषयताधिकरणे सूत्राणि ७–१०)।

**तेषामर्थेन संबन्धः ॥ ७ ॥ विहितस्तु सर्वधर्मः स्यात्संयोगतोऽविशेषात्प्रकरणाविशेषाच्च ॥ ८ ॥ अर्थलोपादकर्म स्यात् ॥ ९ ॥ फलं तु सह चेष्टया**

---

१ ख. ङ. °रूपितः। अ° । ग. °रूप्यः। अ° । २ क. ग. °कत्वाका° ।

शब्दार्थोऽभावाद्विप्रयोगे स्यात् ॥ १० ॥

चतुर्थाधिकरणमारचयति—

श्रुता व्रीह्याज्यसांनाय्यधर्माः सांकर्यगामिनः ।
व्यवस्थिता वा सांकर्यं फलापूर्वेण संगतेः ॥ ७ ॥
अवान्तरापूर्वसत्त्वात्साक्षात्तेनैव संगतौ ।
श्रुत्या व्यवस्थापितास्ते सा हि प्रकरणोत्तमा ॥ ८ ॥

व्रीहिधर्मा अवघातप्रोक्षणादयः, आज्यधर्मा उत्पवनावेक्षणादयः, सांनाय्यधर्मा दोहनातञ्चनादयः। ते सर्वे फलहेतुतया दर्शपूर्णमासापूर्वेण संगच्छन्ते । अवान्तरापूर्वस्य कस्यचिदभावात् । एकेनैवापूर्वेण फलसिद्धावपूर्वान्तरस्य कल्पकाभावात् । फलापूर्वप्रयुक्त्या चानुष्ठीयमाना धर्मा यस्मिन्कस्मिन्नपि द्रव्येऽनुष्ठिताः फलापूर्वं जनयन्त्येव—इति सांकर्ये प्राप्ते,—

ब्रूमः—आग्नेयादयः षड्यागा भिन्नक्षणवर्तिनो विनश्वराः संभूय फलापूर्वं जनयितुं न शक्नुवन्ति । ततस्तज्जननसमर्थान्याग्नेयादिजन्यानि षडवान्तरापूर्वाणि कल्प्यानि । तेषु पुरोडाशद्रव्यकयागजन्यापूर्वं व्रीहिधर्माणां प्रयोजकं, प्रत्यासन्नत्वात् । फलापूर्वं तु तेन व्यवहितम् । एवम्—आज्यधर्माणां सांनाय्यधर्माणां च तत्तद्द्रव्यकयागजन्यावान्तरापूर्वेणैव साक्षात्संगतिः । तथा सति तत्तदपूर्वप्रयुक्ताः संस्कारास्तत्तदपूर्वसाधनप्रकृतिद्रव्येष्वेव व्यवतिष्ठन्ते । ननु दर्शपूर्णमासप्रकरणमत्र संस्काराणां विनियोजकम् । तच्च सर्वप्रकृतिद्रव्यसाधारणमिति तदवस्थमेव सांकर्यम् । अथोच्येत—'तुषविमोकस्य व्रीहिष्वेव संभवात्तेष्वेवावघातः, न त्वाज्यसांनाय्ययोः । एवं विलापनमाज्य एव । दोहनादिकं सांनाय्य एव'—इति । बाढम् । दृष्टार्थानां धर्माणां व्यवस्थितत्वेऽप्यदृष्टार्थाः प्रोक्षणादयः संकीर्येरन्—इति चेत् । मैवम् । 'व्रीहीन्प्रोक्षति' 'आज्यमवेक्षते' इत्यादिद्वितीयाश्रुत्या व्यवस्थापितत्वात् । श्रुतिश्च प्रकरणाद्बलीयसी । तस्माद्व्यवस्थिता धर्माः ॥ ७ ॥ ८ ॥

( पञ्चमे स्फ्यादीनां संयोगानुसारेण व्यवस्थितत्वाधिकरणे सूत्रम् )।

द्रव्यं चोत्पत्तिसंयोगात्तदर्थमेव चोद्येत ॥ ११ ॥

पञ्चमाधिकरणमारचयति—

---

१ ख. °ह्याज्यसां° । २ ख. °त्तमा ॥ ८ ॥ ३ ग. °व्येषु सांनाय्यधाव्येष्वेव । ४ ग. °र्णं प्रत्यक्षं° ।

द्रव्यस्य स्फ्यकपालादेः सांकर्यं वा व्यवस्थितिः ।
यज्ञायुधत्वं सर्वेषां समं तेनात्र संकरः ॥ ९ ॥
वाक्यस्योद्धननादेः स्याद्वैयर्थ्यं संकरे सति ।
अनुवादो ह्यायुधोक्तिर्व्यवस्था तेन पूर्ववत् ॥ १० ॥

दर्शपूर्णमासयोः श्रूयते—' स्फ्यश्च कपालानि चाग्निहोत्रहवणी च शूर्पं च कृष्णाजिनं च शम्या चोलूखलं च मुसलं च दृषच्चोपला चैतानि वै दश यज्ञायुधानि ' इति । स्फ्यशब्देन खड्गाकारं काष्ठमुच्यते । अग्निहोत्रहवणी निर्वापसाधनं काष्ठपात्रम् । शम्या मुसलाकारकाष्ठम् । तत्र—व्रीह्यादिद्रव्येष्ववघातादिसंस्काराणां सांकर्ये निराकृतेऽपि स्फ्यकपालादिद्रव्याणामुद्धननपुरोडाशश्रपणाद्यङ्गक्रियासु सांकर्यं निराकर्तुमशक्यम्। येन केनापि द्रव्येण यस्यां कस्यांचित्क्रियायां कृतायामपि श्रूयमाणस्य यज्ञायुधत्वस्याविरोधात् । नह्यव्यवस्थामात्रेण यज्ञसाधनत्वमपैति—इति प्राप्ते,—

ब्रूमः—'स्फ्येनोद्धन्ति ' ' कपालेषु श्रपयति ' ' अग्निहोत्रहवण्या हवींषि निर्वपति ' ' शूर्पेण विविनक्ति ' ' कृष्णाजिनमधस्तादुलूखलस्यावस्तृणाति ' ' शम्यया * दृषदमुपदधाति ' ' उलूखलमुसलाभ्यामवहन्ति ' ' दृषदुपलाभ्यां पिनष्टि' इत्येतेषां विशेषसंयोगबोधकानां वाक्यानां वैयर्थ्यं सांकर्यपक्षे प्रसज्येत । व्यवस्थापक्षेऽपि संबन्धसामान्यबोधकं यज्ञायुधवाक्यमनर्थकम्—इति चेत् । न । उद्धननादिवाक्यसिद्धार्थानुवादत्वात् । न च वैपरीत्येनोद्धननादिवाक्यानामेवानुवादत्वमिति वाच्यम् । बहुवैयर्थ्यस्य जघन्यत्वात् । न चात्यन्तं यज्ञायुधानुवादस्य वैयर्थ्यम् । ' यज्ञायुधानि संभरन्ति ' इत्यासादनविधानायोपयुक्तत्वात् । तस्मात्—अवघातादिसंस्कार इव स्फ्यकपालादिद्रव्याणि व्यवस्थितानि ॥९॥१०॥

( षष्ठे, आरुण्यादिगुणानामसंकीर्णताधिकरणे सूत्रम्—) ।
अर्थैकत्वे द्रव्यगुणयोरैककर्म्यान्नियमः स्यात् ॥ १२ ॥

षष्ठाधिकरणमारचयति—

क्रीणात्यरुणयेत्येतत्संकीर्णं वा क्रयैकभाक् ।
क्रमेणानन्वयात्कीर्णः सर्वद्रव्येषु रक्तिमा ॥ ११ ॥
द्रव्यद्वारा क्रये योगात्सङ्गागे चान्वयः पुनः ।
साक्षात्क्रये गुणस्यार्थाद्द्रव्ये संनिहिते त्वसौ ॥१२॥

* ' शम्यां दृषदुपदधाति ' इति शबरभाष्ये पाठः ।

१ क. ख. ग. सर्वाङ्गस° । २ ङ. °कारका° । ३ ग. शम्यायां । ४ क. ख. ग. °वादित्वा° । ५ क. ख. ग. वादित्व° ।

ज्योतिष्टोमे श्रूयते—'अरुणया पिङ्गाक्ष्यैकहायन्या सोमं क्रीणाति' इति। तत्र—अरुणाशब्दोऽरुणिमानं गुणमाचष्टे। गुणिविषयतया प्रयुज्यमानस्यापि 'नागृहीतविशेषणा विशिष्टे बुद्धिः' इति न्यायेन गुणबोधकत्वात्। अन्वयव्यतिरेकाभ्यां गुणमात्रे तद्व्युत्पत्तेश्च। तस्य चारुणिमगुणस्य तृतीयाश्रुत्या सोमक्रयसाधनत्वं प्रतीयते तच्चानुपपन्नम्। अमूर्तस्य गुणस्य वासोहिरण्यादिवत्क्रयसाधनत्वासंभवात्। ततस्तृतीयाश्रुतेर्विनियोजकत्वाभावेन प्रकरणस्यात्र विनियोजकत्वं वक्तव्यम्। प्रकरणं च ग्रहचमसाद्यखिलद्रव्येष्वरुणिमानं निवेशयति। न चानेन न्यायेन पिङ्गाक्ष्येकहायनीशब्दार्थयोरपि सर्वद्रव्यगामित्वं शङ्कनीयम्। तयोः शब्दयोर्द्रव्यवाचित्वात्। पिङ्गलवर्णे अक्षिणी यस्याः सा गौः पिङ्गाक्षी। एवमेकहायनी। यद्यप्येकगोवाचिनौ शब्दौ, तथाऽपि विशेषणभूतधर्मभेदाच्छब्दद्वयम्। तच्च युगपत्प्रवृत्तं सद्धर्मद्वयविशिष्टं गोद्रव्यं क्रयसाधनत्वेन विदधाति। न चेतरद्द्रव्यमितरद्रव्ये निवेशयितुं शक्यम्। अरुणिमगुणस्तु द्रव्येषु विशेषणत्वेनान्वेतुं योग्यत्वात्तेषु निवेश्यते। तत्रैषाऽक्षरयोजना—'अरुणया' इत्येतत्पृथग्वाक्यम्। तत्र तृतीयाश्रुत्या प्राकरणिकानि साधनद्रव्याणि सर्वाण्यनूद्य प्रातिपदिकेन गुणो विधीयते—'यानि ज्योतिष्टोमे साधनद्रव्याणि, तानि सर्वाण्यरुणानि कर्तव्यानि' इति। तस्मात्—गुणः संकीर्णः—इति प्राप्ते,—

ब्रूमः—यद्यप्यमूर्तो गुणः, तथाऽपि हायनवदक्षिवच्च गोद्रव्यमवच्छिनत्ति। तच्च द्रव्यं साधनमिति तद्द्वारा गुणस्य क्रयेणान्वयो भवति। एवं सति वाक्यभेदो न भविष्यति। ननु वाक्यभेदाभावेऽपि लक्षणा दुर्वारा। गुणवाचिनः शब्दस्य गुणिद्रव्यपरत्वाङ्गीकारात्। मैवम्। गुणस्यैवात्र तृतीयाश्रुत्या साधनत्वमुच्यते। तच्च द्रव्यद्वारमन्तरेण न संभवतीत्यर्थापत्त्या द्रव्यावच्छेदकत्वं कल्प्यते। तर्हि ग्रहचमसादिद्रव्यमप्यवच्छिद्यताम्—इति चेत्। न। तस्य द्रव्यस्य क्रयसाधनत्वाभावेन तदवच्छेदे गुणस्य श्रूयमाणक्रयसाधनत्वासिद्धेः। तर्हि—'वाससा क्रीणाति' 'अजया क्रीणाति' इति वस्त्रादीनां क्रयसाधनत्वात्तदवच्छेदोऽस्तु—इति चेत्। न। तेषां क्रयान्तरसाधनत्वात्। न हि तत्राग्निहोत्रे पयोदध्यादिविकल्पवत्क्रयानुवादेन वस्त्रादिद्रव्यविकल्पो विधीयते। अनुवाद्यस्य क्रयमात्रस्याग्निहोत्रवदन्यत्राविधानात्। ततो वस्त्रादिद्रव्यविशिष्टाः क्रयान्तरविषयः। न हि स्ववाक्यगतमेकहायनीद्रव्यमुपेक्ष्य वस्त्राद्यवच्छेदो युक्तः। तस्मात्क्रयेण साक्षादन्वितयोर्द्रव्यगुणयोः पश्चादर्थापत्त्या परस्परावच्छेदकत्वेनान्वयः।

१ ङ. °शिष्टगु°। २ ग. °क्रयणा रु°। ३ ग. भवति। ४ क. ननूक्तवा°। ५ ख. ङ. °च्छेदकगु°।

तथा सति 'आरुण्यविशिष्टैकहायन्या क्रीणाति' इत्यर्थः पर्यवस्यति । तस्मात्—आरुण्यगुणः क्रयहेतुमेकहायनीमेव भजते ॥ ११ ॥ १२ ॥

( सप्तमे ग्रहसंमार्जनाधिकरणे ( ग्रहैकत्वन्याये ) सूत्राणि १३–१५) ।

एकत्वयुक्तमेकस्य श्रुतिसंयोगात् ॥ १३ ॥ सर्वेषां वा लक्षणत्वादविशिष्टं हि लक्षणम् ॥ १४ ॥ चोदिते तु परार्थत्वाद्यथाश्रुति प्रतीयेत ॥ १५ ॥

सप्तमाधिकरणमारचयति—

संमार्ष्टि ग्रहमित्येको ग्रहः शोध्य उताखिलः ।
एक उद्देश्यसंख्याया उपादेयवदादरात् ॥ १३ ॥
प्राधान्यात्तद्गुणावृत्तेरेकत्वमनपेक्षितम् ।
तद्विधौ वाक्यभेदोऽतो द्रव्योक्त्या सर्वशोधनम् ॥१४॥

सोमे श्रूयते—'दशापवित्रेण ग्रहं संमार्ष्टि' इति । दशापवित्रं वासःखण्डः । तत्र—यथा 'पशुना यजेत' इत्यत्रोपादेयपशुगतमेकत्वं विवक्षितम्, तद्वदुद्देश्यग्रहगतमप्येकत्वं विवक्षितव्यम् । किंच ग्रहशब्दस्य जातिवाचित्वेन जातेः संस्कार्यत्वे सति तदाश्रयभूते यस्मिन्कस्मिन्नपि द्रव्येऽनुष्ठितेन संस्कारेण जातिः संस्कृता भवति । तस्मात्—एक एव ग्रहः शोधनीयः—इति प्राप्ते,—

ब्रूमः—'ग्रहम्' इति द्वितीयया ग्रहस्योद्देश्यतया प्रयोजनवत्तया च प्राधान्यं गम्यते । ग्रहं प्रति गुणः संमार्गः । 'प्रतिप्रधानं च गुण आवर्तनीयः' इति न्यायेन यावन्तो ग्रहाः सन्ति, ते संमार्जनीयाः । एवं निश्चये सति संमार्जयितव्यग्रहेयत्ताया अबुभुत्सितत्वादुद्देश्यगतमेकत्वं श्रूयमाणमप्यविवक्षितम् । अथोच्येत—नेदमुद्देश्यगतम्, किंतु इदं विधेयम्—इति । तन्न । वाक्यभेदापत्तेः । 'ग्रहं संमृज्यात्, तं चैकम्' इत्येवं विधेयार्थभेदाद्वाक्यभेदः । 'पशुना यजेत' इत्यत्र तु यागं प्रति गुणभूतः पशुः । न हि 'प्रतिगुणं प्रधानस्याऽऽवृत्तिः' इति कश्चिन्न्यायोऽस्ति । तत इयत्ताया बुभुत्सितत्वाच्छ्रूयमाणमेकत्वं विवक्ष्यत इति वैषम्यम् । न च जातिः संस्कार्या । तस्या अमूर्तत्वात् । ततो जातिद्वारा द्रव्यं लक्षको गुणशब्दः । तत्र चाऽऽवृत्तिरुक्ता । तस्मात्—सर्वे ग्रहाः संमार्जनीयाः ॥ १३ ॥ १४ ॥

( अष्टमे चमसादौ संमार्गाद्यप्रयोगाधिकरणे सूत्रे १६–१७ ) ।

संस्काराद्वा गुणानामव्यवस्था स्यात् ॥ १६ ॥

---

१ ख. ग. °खिलाः । ए° । २ क. ग. ङ. च. स्वयं । ३ ख. ग. ङ. च. वक्षितमिति ग. च. °व्यलाक्षणिको ।

व्यवस्था वाऽर्थस्य श्रुतिसंयोगात्,
तस्य शब्दप्रमाणत्वात् ॥ १७ ॥

अष्टमाधिकरणमारचयति—

चमसादि च संमृज्यान्नो वा तस्यास्ति मार्जनम् ।
एकत्ववद्ग्रहत्वस्याप्यनादरणसंभवात् ॥ १५ ॥
अबाधोऽत्राऽऽदरे हेतुर्वाक्यभेदस्तु नैव हि ।
चमसादौ न संमार्गः श्रुत्या तद्विषयार्पणात् ॥ १६ ॥

'ग्रहम्' इत्यत्र प्रत्ययार्थभूतमेकत्वं यथा न विवक्षितम्, तथा प्रातिदिकार्थस्य ग्रहत्वस्याप्यविवक्षा संभाव्यते। ततो ग्रहशब्दस्य सोमपात्रोपलक्षकत्वाद्ग्रहाणामिव चमसानामपि संमार्गेण सोमावसेकनिर्हरणप्रयोजनसंभवाच्चमसादयोऽपि मार्जनीयाः—इति प्राप्ते,—

ब्रूमः—एकत्वं वाक्यभेदेन दुष्टत्वादविवक्षितम्। अदुष्टं तु ग्रहत्वं कुतो न विवक्ष्येत। ततः सत्यपि प्रयोजने प्रमाणाभावाच्चमसादौ नास्ति संमार्गः। न च विषयापेक्षया तत्कल्पनम्। ग्रहश्रुत्यैव तद्विषयसमर्पणात्। तस्मान्नास्ति संमार्गः ॥ १५ ॥ १६ ॥

( नवमे सप्तदशारत्नितायाः पशुधर्मताधिकरणे सूत्रम् )।
आनर्थक्यात्तदङ्गेषु ॥ १८ ॥

नवमाधिकरणमारचयति—

अस्ति सप्तदशारत्निर्वाजपेयस्य यूपकः ।
उन्मानं द्रव्यगं वाजपेयस्याङ्गं पशोरुत ॥ १७ ॥
आनन्तर्यात्प्रकरणात्कर्माङ्गं षोडशिन्यदः ।
ऊर्ध्वपात्रे खादिरेऽग्रे संयुज्यान्वेति कर्मणा ॥ १८ ॥
यूपद्वारा पशोरङ्गं पशुद्वारा च कर्मणः ।
सौमिकत्वाद्वाजपेये यूपो नास्ति पशुं विना ॥ १९ ॥

वाजपेयप्रकरणे श्रूयते—'सप्तदशारत्निर्वाजपेयस्य यूपो भवति' इति। तत्र—यूपद्रव्यगतं सप्तदशारत्निशब्दोदितं यदूर्ध्वमानं तद्वाजपेयकर्मणोऽङ्गम्। सप्तदशारत्निशब्दवाजपेयशब्दयोरानन्तर्यात्। प्रकरणं चैवमनुगृह्यते। यदि कर्मणः

१ क. च। २ ख. क. सोमरसेक°।

साक्षादूर्ध्वमानं न संभवेत्, तर्हि वाजपेयगतं खादिरमूर्ध्वं यत्षोडशिपात्रं तस्मिन्नद उन्मानं प्रथमं संबध्य तद्द्वारा कर्मणाऽन्वेति-इति प्राप्ते,-

ब्रूमः-'सप्तदशारत्निर्यूपः' इति सामानाधिकरण्याद्यूपेन साक्षात्संबध्यते। तस्य यूपस्य पश्वङ्गत्वादुन्मानं यूपद्वारा पशोरङ्गं भवति। तस्यापि पशोर्वाजपेयाङ्गत्वात्पशुद्वारा कर्मणोऽङ्गम्। यद्यपि वाजपेययूपशब्दयोरानन्तर्यमस्ति, तथाऽपि वाजपेयस्य सोमयागतया साक्षाद्यूपसंबन्धाभावात्पशुव्यवधानमभ्युपेयम्। 'वाजपेयस्य' इति षष्ठ्याः संबन्धमात्रवाचित्वेन व्यवहितसंबन्धमप्यसावभिधत्ते। 'देवदत्तस्य नप्ता' इति प्रयोगात्। यत्तु-सप्तदशारत्निवाजपेयशब्दयोरानन्तर्यम्, पश्च प्रकरणम्' तदुभयमप्यविरुद्धम्। पश्वङ्गत्वेऽप्यन्ततो वाजपेयाङ्गत्वाङ्गीकारात्। किंच-पूर्वपक्षे यूपशब्देन षोडशिपात्रं लक्षणीयम्। सिद्धान्ते तु नासौ दोषः॥१७॥ १८॥ १९॥

( दशमे, अभिक्रमणादीनां प्रयाजमात्राङ्गताधिकरणे सूत्रे १९-२०)।

कर्तृगुणे तु कर्मासमवायाद्वाक्यभेदः स्यात्॥ १९॥

साकाङ्क्षं त्वेकवाक्यं स्यादसमाप्तं हि पूर्वेण॥ २०॥

दशमाधिकरणमारचयति-

अभिक्रामं जुहोतीति युक्तं कर्त्राऽखिलस्य तत्।
किंवा प्रयाजमात्रस्य कृत्स्नकर्तृयुतं भवेत्॥ २०॥
प्रयाजाभिक्रमणयोः क्रियात्वादुभयोरपि।
मिथः संबन्धराहित्यान्मैवं तेऽपि समत्वतः॥ २१॥
कर्तृयोगाददोषश्चेत्समानेयं समाहितिः।
ततः प्रयाजसांनिध्यात्तत्कर्त्रैवास्य संयुतिः॥ २२॥

दर्शपूर्णमासयोः प्रयाजसमीपे श्रूयते-'अभिक्रामं जुहोति' इति। तत्र होमकाले यदेतदाहवनीयमभितः संचरणं, तत्कृत्स्नदर्शपूर्णमासकर्त्रा संबध्यते, न तु प्रयाजमात्रकर्त्रा। कुतः। अभिक्रमणस्य क्रियारूपस्य कारकत्वाभावेन प्रयाजक्रियया संबन्धासंभवात्-इति चेत्।

नैवम्। क्रियारूपत्वादेव दर्शपूर्णमासक्रिययाऽपि संबन्धासंभवात्। अथोच्येत-अभिक्रमणं कर्तृकारकेण साक्षात्संबध्यते, तद्द्वारा कृत्स्नदर्शपूर्णमासकर्मणा संब-

१ ङ. संयुज्य। २ ख. °त्वान्मा°। ग. च. °त्वात्तन्मा°। ३ ग. ङ. च. °योगात्। ४ ग. च. °डशीपा°। ५ ङ. °मानैव स°। ६ क. ग. च. °यस्यापि°। ७ क. ख. °बध्येत, त°। ग. च. °बध्य, त°।

ध्यते—इति । तदेतत्समाधानं प्रयाजसंबन्धेऽपि समानम् । अतः संनिधिबलात्प्रयाजकर्त्रा संबध्यते ॥ २० ॥ २१ ॥ २२ ॥

एतदेवाधिकरणं वार्तिककारमतेनाऽऽवरयति—

यद्वा बलित्वं सांनिध्यादस्ति प्रकरणे ततः ।
दर्शादिप्रक्रियाधीते क्रमणे स्यात्तदङ्गता ॥ २३ ॥
अवान्तरप्रकरणं समिधो यजतीत्यतः ।
तन्मध्यपाठात्तस्याङ्गं तद्द्वारा दर्शशेषता ॥ २४ ॥

अस्मिन्नपि मते तावेव विषयसंशयौ । पूर्वोत्तरपक्षहेतुमात्रमन्यत् । प्रयाजसंनिधितोऽपि दर्शपूर्णमासप्रकरणस्य प्रबलत्वात्प्राकरणिकेषु कृत्स्नेष्वप्यभिक्रमणं निविशते—इति पूर्वः पक्षः ।

"समिधो यजति" इत्यारभ्याऽऽम्नातमवान्तरप्रयाजप्रकरणम् । तन्मध्येऽभिक्रमणमाम्नातम् । तस्य चाभिक्रमणविधेरुभयतः प्रयाजविषयैर्वाक्यैः संदष्टत्वादभिक्रमणं प्रयाजमात्रे निविशते—इति राद्धान्तः । अस्मिन्नपि पक्षे महाप्रकरणं न विरुध्यते । प्रयाजद्वारा दर्शपूर्णमासयोर्निवेशात् ॥ २३ ॥ २४ ॥

(एकादशे, उपवीतस्य प्राकरणिकाङ्गताधिकरणे सूत्रम्) ।

संदिग्धे तु व्यवायाद्वाक्यभेदः स्यात् ॥ २१ ॥

एकादशाधिकरणमारचयति—

उपव्ययत इत्यस्य सामिधेन्यङ्गताऽथवा ।
दर्शाङ्गता प्रक्रियैषाऽवान्तराऽतोऽस्त्विहाग्रिमः ॥ २५ ॥
लिङ्गादग्नेरङ्गभूतैर्निवित्संज्ञकमन्त्रकैः ।
विच्छेदे सति दर्शाङ्गं महाप्रकरणोक्तितः ॥ २६ ॥

दर्शपूर्णमासप्रकरणे 'विश्वरूपो वै त्वाष्ट्रः"—इत्यस्मिन्प्रपाठके सप्तमाष्टमयोरनुवाकयोः—सामिधेनीब्राह्मणमाम्नातम् । नवमे—निवित्संज्ञकानाम् "अग्ने महाँ असि ब्राह्मणभारत"—इत्यादीनां मन्त्राणां ब्राह्मणम् । दशमे—काम्याः सामिधेनीपक्षाः । एकादशे तु—उपवीतमेवं विहितम्—'निवीतं मनुष्याणाम्, प्राचीनावीतं पितॄणाम्, उपवीतं देवानाम्, उपव्ययते देवलक्ष्ममेव तत्कुरुते" इति । तत्र—पूर्वन्यायेन सामिधेनीप्रकरणस्यावान्तरस्याङ्गीकारात्सामिधेन्यङ्गमुपवीतम्—इति चेत् ।

१ ग. च. °धीने क्र° । २ ग. च. °पातादस्या° । ३ ग. च. पक्षे । ४ ग. च. °नेऽभिनि° ।

न। निविद्ब्राह्मणेन सामिधेनीप्रकरणस्य विच्छेदितत्वात्। न च—निविदामपि सामिधेन्यङ्गतया तत्प्रकरणपाठादविच्छेदकत्वम्—इति वाच्यम्। लिङ्गेन निविदामग्न्यङ्गत्वावगमात्। आहुत्यधिकरणभूतमग्निं संबोध्य "महानसि"—इत्यादिभिर्निविद्वाक्यैरग्नेरुत्साहजननाय तद्गुणा अभिधीयन्ते। अत एव निर्वचनमेवं श्रूयते—"निविद्भिर्न्यवेदयेत्, तन्निविदां निवित्त्वम्" इति। ननु—'सम्यगिध्यतेऽग्निर्याभिर्ऋग्भिस्ताः सामिधेन्यः' इति व्युत्पत्त्या ता अप्यत्र ज्वलनद्वारेणाग्न्यर्था एव—इति चेत्। सन्तु नाम। नैतावता परस्परमङ्गाङ्गिभावः। ननु विच्छिद्यतां सामिधेनीप्रकरणम्, निवित्प्रकरणेनोपवीतस्य निविदङ्गत्वं स्यात्—इति चेत्। न। पूर्वोत्तरानुवाकयोर्निविदामश्रवणेन प्रकरणाभावात्। संनिधिना तदङ्गत्वम्—इति चेत्। न। काम्यसामिधेनीभिर्व्यवधानात्। न च काम्यसामिधेन्यङ्गता शङ्कनीया। संनिधितः प्रकरणस्य प्रबलत्वात्। तस्मात्—इह प्रयाजन्यायाभावान्महाप्रकरणेन दर्शपूर्णमासाङ्गमुपवीतम्॥ २५॥ २६॥

(द्वादशे गुणानां मिथोऽसंबन्धाधिकरणे सूत्रम्)।

गुणानां च परार्थत्वादसंबन्धः समत्वात्स्यात्॥ २२॥

द्वादशाधिकरणमारचयति—

वैकङ्कतादिकं पात्रं पवमानहविःष्वथ।

यज्ञेऽखिले प्रकरणादाधानेऽन्वितमत्र तत्॥ २७॥

अनर्थकं तदङ्गेषु हविःष्वेवावतिष्ठते।

नाऽऽधानहविषां साम्याद्वाक्याद्यज्ञेऽखिले भवेत्॥ २८॥

**आधानप्रकरणे** दारुपात्रं होमार्थं यज्ञार्थं च श्रूयते—"तस्माद्वारणो यज्ञावचरः स्यान्नत्वेतेन जुहुयात्, वैकङ्कतो यज्ञावचरः स्याज्जुहुयादेवैतेन" इति। यज्ञावचरो यज्ञप्रचारहेतुः। तत्र—वारणवैकङ्कतादिपात्रं प्रकरणबलादाधाने प्रथममन्वेति। एतेन पात्रेणाऽऽधाने प्रयोजनाभावादाधानाङ्गेषु पवमानहविःष्वेव तत्पात्रं निविशते। अस्ति हि पवमानहविषामाधानाङ्गत्वम्। तत्प्रकरणे पाठात्। 'कृत्तिकास्वग्निमादधीत' इत्यस्मिन्प्रकरणे 'प्रजापतिर्वाचः सत्यमपश्यत्' इत्यस्मिन्ननुवाके 'त्रीणि हवींषि निर्वपति' इत्यादिना तानि विहितानि। ततो यथा सप्तदशारत्नित्वं वाजपेये साक्षादसंभवत्तदङ्गभूतेऽङ्गे निविशते, तद्वदिदमपि—इति प्राप्ते,—

---

१ ग. च. °वच्छिन्नत्वात्। २ ख. ङ. °वाहर्षी°। ३ ख. ङ. °मस्तु त°। ४ ख. ङ. प्रवाच°।

ब्रूमः—अग्निमुद्दिश्याऽऽधानं यथा विहितं, तथा पवमानहवींष्यपि । 'यदाहवनीये जुह्वति तेन सोऽस्याभीष्टः प्रीतः' इत्याहवनीयोद्देशेन पवमानहविर्होमविधानात् । तस्मादग्निसंस्कारत्वेन समाम्नातानामाधानहविषां नास्ति परस्परमङ्गाङ्गिभावः । तथा सति प्रकरणस्य पात्रं प्रति विनियोजकत्वाभावात् । 'वैकङ्कतो यज्ञावचरः' इति वाक्येन दर्शपूर्णमासादिसर्वयज्ञेषु तद्विनियुज्यते ॥२७॥२८॥

(त्रयोदशे वार्त्रघ्न्यधिकरणे सूत्रम्—)।

मिथश्चानर्थसंबन्धात् ॥ २३ ॥

त्रयोदशाधिकरणमारचयति—

वार्त्रघ्न्यौ पूर्णमासे स्तो वृधन्वत्यौ तु दर्शगे ।
इति प्रधानशेषत्वमुक्तं किंवा व्यवस्थितिः ॥ २९ ॥
क्रमेण प्रापिता मन्त्राश्चत्वारोऽप्याज्यभागयोः ।
क्रमाद्वाक्यं बलीयोऽत एषां दर्शादिशेषता ॥ ३० ॥
न मुख्ये सोम एकोऽस्ति नाऽऽधारत्वादिकालयोः ।
दर्शादिरव्यवस्थित्याऽप्राप्तौ वाक्याद्व्यवस्थितिः ॥३१॥

दर्शपूर्णमासप्रकरणे श्रूयते—'वार्त्रघ्नी[3] पूर्णमासेऽनूच्येते, वृधन्वती अमावा-
[6] स्यायाम्' इति । तत्र—इदं वार्त्रघ्नीयुगलं वृधन्वतीयुगलं च हौत्रकाण्ड आज्यभागयोः क्रमे 'अग्निर्वृत्राणि जङ्घनत्—' इत्यनुवाकेनाऽऽम्नातम् । उदाहृतेन तु ब्राह्मणवाक्येन दर्शपूर्णमासयागयोस्तद्विधिरवगम्यते । तत्र वाक्यस्य प्रबलत्वादेषां मन्त्राणां दर्शपूर्णमासयागाङ्गत्वम्, न त्वाज्यभागाङ्गत्वम्—इति प्राप्ते,—

ब्रूमः—'अग्निर्वृत्राणि जङ्घनत्' इत्याग्नेयी प्रथमा वार्त्रघ्नी, 'त्वं सोमासि सत्पतिः' इति सौम्या द्वितीया वार्त्रघ्नी । 'अग्निः प्रत्नेन जन्मना[4]'—इत्याग्नेयी प्रथमा वृधन्वती, 'सोम गीर्भिष्ट्वा वयम्' इति सौम्या द्वितीया वृधन्वती । तत्र मुख्ययोर्दर्शपूर्णमास[5]यागयोराग्नेयपुरोडाशसद्भावादाग्नेयीद्वयस्य विकल्पेन पुरोनुवाक्यात्वं कथंचिद्भवतु । सौम्ययोस्तु तन्न संभवति । सोमदेवताया अभावात् । नह्यग्नीषोमीयेऽपि केवलः सोमो विद्यते । किंच 'पूर्णमासे, अमावास्यायाम्' इति सप्तमीभ्यामाधारत्वं गम्यते । तच्च यागवाचित्वे यागस्य मुख्यत्वान्न संभवति । कालस्य तूपसर्जनत्वात्तद्वाचित्वं युक्तम् । किंच—प्रयाजमन्त्रानुवाकस्यानन्तरमेवायमनुवाकः पठितः । स चाऽऽज्यभागयोरङ्गयोः क्रमः । न तु मुख्ययोर्दर्श-

---

१ ख. ङ. °मानाना° । २ ग. ङ. पौर्णमासे । ३ ग. च. °घ्नी पूर्ण° । ४ ख. ग. ङ. च. मन्मना । ५ ङ. °सयोर्याग° । ६ ख. तत्र ।

पूर्णमासयोः । तस्मान्न मन्त्रचतुष्टयस्य मुख्ययागाङ्गत्वम्, किं त्वाज्यभागाङ्गत्वम् । ननु—एतत्क्रमेणैव लब्धम् । तथापि 'आग्नेये प्रथमाज्यभागे मन्त्रोऽप्याग्नेयः । सौम्ये द्वितीये सौम्यः' इत्येषा व्यवस्था लिङ्गेनैव लभ्यते । बाढम् । तथाऽपि 'वार्त्रघ्नीयुगलं पौर्णमासीकाले, वृधन्वतीयुगलममावास्यायाम्' इत्येषा व्यवस्था पूर्वमप्राप्ता ब्राह्मणवाक्येनाभिधीयते—इति न वैयर्थ्यम् ॥ २९ ॥ ३० ॥ ३१ ॥

(चतुर्दशे हस्तावनेजनादीनां कृत्स्नप्राकरणिकाङ्गताधिकरणे सूत्रे २४-२५)

आनन्तर्यमचोदना ॥२४॥ वा-
क्यानां च समाप्तत्वात् ॥२५॥

चतुर्दशाधिकरणमारचयति—

हस्तौ द्वाववनेनिक्ते स्तृणात्युलपराजिकाम् ।
दर्भास्तरण एवाङ्गं हस्तशुद्धिरुताखिले ॥ ३२ ॥
तन्मात्राङ्गत्वमत्र स्यादानन्तर्यात्मकात्क्रमात् ।
लिङ्गप्रकरणाभ्यां तु सर्वानुष्ठानशेषता ॥ ३३ ॥

दर्शपूर्णमासप्रकरणे श्रूयते—'हस्ताववनेनिक्ते,' 'उलपराजिं स्तृणाति' इति । वेद्यामास्तरितुं संपादितस्तृणस्तम्ब उलपराजिः । तत्र—हस्तशुद्धिदर्भास्तरणवाक्ययोर्नैरन्तर्येण पठितत्वात्क्रमप्रमाणेन हस्तशुद्धिरास्तरणमात्रस्याङ्गम्—इति चेत् ।

मैवम् । अवनेजनं हस्तसंस्कारः । 'संस्कृतौ च हस्तौ सर्वानुष्ठानयोग्यौ' इत्येतादृशं सामर्थ्यं लिङ्गम् । प्रकरणं च दर्शपूर्णमासयोः स्फुटम् । अतः प्रबलाभ्यां लिङ्गप्रकरणाभ्यां क्रमबाधात्सर्वशेषो हस्तशुद्धिः ।

अयं न्यायो वाग्यमेऽपि द्रष्टव्यः । तथा चाग्नीषोमीये ज्योतिष्टोमप्रकरणे श्रुतः—'मुष्टी करोति' 'वाचं यच्छति' इति । तदनन्तरमेवेदं श्रुतम्—'दीक्षितमावेदयति' इति । आवेदनप्रकारश्चैवं श्रुतः—'अदीक्षिष्टायं ब्राह्मण इति त्रिरुपांश्वाह देवेभ्य एवैनं प्राह, त्रिरुच्चैरुभयेभ्य एवैनं देवमनुष्येभ्यः प्राह' इति । अत्र मुष्टीकरणवाङ्नियमाभ्यां हस्तजिह्वागतचापले निवारिते सति मनस एकाग्रस्य सर्वकर्मसु योग्यत्वं लिङ्गम् । तेन क्रमो बाध्यते ॥ ३२ ॥ ३३ ॥

(पञ्चदशे चतुर्धाकरणादीनामाग्नेयमात्राङ्गताधिकरणे सूत्रे २६-२७) ।

शेषस्तु गुणसंयुक्तः साधारणः प्रतीयेत

१ ख. ग. घ. °जिकम् । २ ख. ग. ङ. च. °ष्ठाने यो° । ३ ङ. °श्रूयत । ४ ग. तत्र ।

मिथस्तेषामसंबन्धात् ॥ २६ ॥ व्यवस्था वाऽर्थसंयोगाल्लिङ्गस्यार्थेन संबन्धाल्लक्षणार्था गुणश्रुतिः ॥ २७ ॥

पञ्चदशाधिकरणमारचयति—

चतुर्धा कार्य आग्नेयः पुरोडाश इतीरितम् ।
चतुर्धाकरणं सर्वशेषो वाऽऽग्नेयमात्रगम् ॥ ३४ ॥
उपलक्षणताऽऽग्नेये युक्ताऽतः सर्वशेषता ।
अग्नीषोमीय ऐन्द्राग्ने यतोऽस्त्याग्नेयता ततः ॥३५॥
नाऽऽग्नेयत्वं तयोर्मुख्यं केवलाग्न्यनुपाश्रयात् ।
तेनैकस्मिन्पुरोडाशे चतुर्धाकरणस्थितिः ॥ ३६ ॥

दर्शपूर्णमासयोः श्रूयते—'आग्नेयं चतुर्धा करोति' इति । तत्र—आग्नेयवदैन्द्राग्नाग्नीषोमीययोरपि पुरोडाशयोरग्निसंबन्धादाग्नेयशब्देन पुरोडाशत्रयमुपलक्ष्यते । ततस्त्रयाणां शेषः—इति चेत् ।

नैवम् । नहि 'आग्नेयः' इत्ययं तद्धितः संबन्धमात्रे विहितः, किंतु देवतासंबन्धे । अग्निश्च केवलो द्विदेवत्ययोः पुरोडाशयोर्न देवता । ततो देवतैकदेशेन कृत्स्नदेवतोपलक्षणत्वादाग्नेयत्वं तयोर्न मुख्यमिति मुख्य एवाऽऽग्नेये चतुर्धाकरणं व्यवतिष्ठते ॥ ३४ ॥ ३५ ॥ ३६ ॥

इति श्रीमाधवीये जैमिनीयन्यायमालाविस्तरे
तृतीयाध्यायस्य प्रथमः पादः ॥ १ ॥

| | अत्र पादे | आदितः । |
|---|---|---|
| अधिकरणानि | १५ | १०४ । |
| सूत्राणि | २७ | २१६ । |

---

( अथ तृतीयाध्यायस्य द्वितीयः पादः ) ।

( प्रथमे मुख्ये विनियोगाधिकरणे ( बर्हिर्न्याये ) सूत्रे १—२ ) ।

अर्थाभिधानसामर्थ्यान्मन्त्रेषु शेषभावः स्यात्तस्मादुत्पत्तिसंबन्धोऽर्थेन नित्यसंयोगात् ॥ १ ॥
संस्कारकत्वादचोदितेन स्यात् ॥ २ ॥

द्वितीयपादे प्रथमाधिकरणमारचयति—

देवोपसदनं बर्हिर्दामिमिगीर्मुख्यगौणयोः।
तल्लिङ्गमर्थयोर्मन्त्रं नियुङ्क्ते मुख्य एव वा ॥ १ ॥
शब्दार्थत्वाद्द्वयोस्तत्र युज्यते विनियोजनम्।
प्रथमावगतत्वेन मुख्ये तद्विनियम्यते ॥ २ ॥

"बर्हिर्देवसदनं दामि' इति लवनप्रकाशको मन्त्र आम्नातः। तत्र—लवन-प्रकाशनसामर्थ्यलक्षणेन लिङ्गेनायं मन्त्रो लवनक्रियायां विनियुज्यते। लवि-तव्यं च बर्हिर्द्विविधम्—मुख्यं गौणं च। मुख्यं—कुशकाशादिदशविधदर्भरूपम्। गौणं तु—तत्सदृशं तृणान्तरम्। तस्मिन्बर्हिःशब्दस्य माणवकेऽग्निशब्दवद्गुण-योगेन प्रवृत्तत्वात्। तथा सति मुख्यवद्गौणस्यापि शब्दार्थत्वेन दर्भस्य तृणान्त-रस्य च लवने मन्त्रविनियोगः—इति—प्राप्ते—

ब्रूमः—मुख्यस्य शीघ्रप्रतीतत्वेन मुख्ये मन्त्रं विनियुज्य चरितार्थं लिङ्गं विलम्बप्रतीततया गौणप्रतीक्षां न करोति। तस्मात्—मुख्यस्यैव लवने मन्त्रो नियम्यते ॥ १ ॥ २ ॥

( द्वितीये (ऐन्द्रीन्याये) ऐन्द्र्या गार्हपत्ये विनियोगाधिकरणे सूत्रे ३-४)।

वचनात्त्वयथार्थमैन्द्री स्यात् ॥ ३ ॥ गुणाद्वाऽप्य-
भिधानं स्यात्संबन्धस्याशास्त्रहेतुत्वात् ॥ ४ ॥

द्वितीयाधिकरणमारचयति—

ऐन्द्र्या निवेशनेत्यग्निं गार्हपत्यं भजेदिति।
प्रकाश्ये मुख्य इन्द्रे वा गौणे मुख्येऽस्तु पूर्ववत् ॥ ३ ॥
एकस्य गौणताध्रौव्ये मन्त्रस्यैवानुवादतः।
गौणताऽतोऽग्न्युपस्थाने मन्त्रः श्रुत्या नियुज्यते ॥ ४ ॥

अग्निचयने—' निवेशनः संगमनः '—इत्यादिका काचिदैन्द्री समाम्नाता। तस्या उत्तरार्धे ' इन्द्रो न तस्थौ ' इति पठ्यमानत्वात्। तन्मन्त्रविषयं ब्राह्मणं चैवमाम्नायते—' निवेशनः संगमनो वसूनामित्यैन्द्र्या गार्हपत्यमुपतिष्ठते ' इति। एतेन ब्राह्मणेन गार्हपत्योपस्थाने विनियुज्यमानो मन्त्रोऽर्थं प्रकाशयन्मुख्यमिन्द्रं प्रकाशयति। मुख्यश्चेन्द्रः स्वर्गाधिपतिः सहस्राक्षः। तत्रेन्द्रशब्दस्य रूढत्वात्।

१ ग. च. °ख्यशी°। २ क. ख. ग. च. प्रकाशो। ३ङ. मुख्योऽस्तु। ४°ग. च. °स्य मुख्यता°। ५ ख. श्रुत्वा। ६ ग. च. °त्यादिः का°। ७ क. ङ. तस्योत्त° ८ ग. च. विधा-यकं ब्रा°।

गौणस्त्विन्द्रो गार्हपत्यः। तस्यैश्वर्यगुणयोगेन यज्ञसाधनत्वेन वा मुख्येन्द्रसदृशत्वात्। तत्र पूर्वन्यायेन शीघ्रप्रतीत्या मुख्येन्द्रे मन्त्रेण प्रकाशिते सति मन्त्रब्राह्मणयोर्विसंवादं वारयितुं गार्हपत्यशब्देन मुख्येन्द्रो गार्हपत्यसमीपदेशो वा लक्षणीयः—इति प्राप्ते,—

ब्रूमः—इन्द्रगार्हपत्यशब्दयोरन्यतरस्य गौणत्वेऽवश्यंभाविनि सति ब्राह्मणवाक्यस्य विधायकत्वादप्राप्तार्थत्वेन विधौ लक्षणाया अन्याय्यत्वात्प्राप्तार्थत्वेनानुवादको मन्त्र एवेन्द्रशब्देन वह्निं लक्षयिष्यति । ततो गार्हपत्यप्रकाशने समर्थमेव मन्त्रम् 'ऐन्द्र्या' इति तृतीयाश्रुतिर्गार्हपत्योपस्थाने विनियुङ्क्ते ॥३।४॥

( तृतीये, आह्वानविनियोगाधिकरणे सूत्राणि ५–९ )।

तथाऽऽह्वानमपीति चेत् ॥ ५ ॥ न कालविधिश्चोदितत्वात् ॥ ६ ॥ गुणाभावात् ॥ ७ ॥ लिङ्गाच्च ॥ ८ ॥ विधिकोपश्चोपदेशे स्यात् ॥ ९ ॥

तृतीयाधिकरणमारचयति—

हविष्कृदेहीत्यामन्त्र्य त्रिरवघ्नन्समाह्वयेत् ।
विनियोगोऽवघाते स्यादाह्वाने वाऽवघातके ॥ ५ ॥
ऐन्द्रीवन्मान्त्रमाह्वानं गौणं हन्तिर्वृथाऽन्यथा ।
पाठेन प्रापितं त्रित्वं ह्वयतेरुपचारगीः ॥ ६ ॥
त्रिरभ्यासो विधातव्यो नित्यप्राप्तेरभावतः ।
हन्तिना लक्ष्यते कालः प्राप्तोऽसौ ह्वयतिस्तथा ॥ ७ ॥
विनियोगे वाक्यभेदो लिङ्गादाह्वानशेषता ।
ऐन्द्रीन्यायः श्रुत्यभावाद्धन्तिर्न्यायेन मुख्यगः ॥ ८ ॥

दर्शपूर्णमासयोः श्रूयते—'हविष्कृदेहीति त्रिरवघ्नन्नाह्वयति' इति । देवानामर्थे या हविः संपादयति सा हविष्कृत् । तामेनां संबोध्याध्वर्युः 'एहि' इति ब्रूते । तथा चायं मन्त्रो ब्राह्मणेन व्याख्यायते—'हविष्कृदेहीत्याह या एव देवानां हविष्कृतस्ताना ह्वयति' इति । तमिमं मन्त्रमुच्चार्याध्वर्युस्त्रिवारमवघातं कुर्वन्नाह्वयतीत्यर्थः । अनेन वाक्येन मन्त्रोऽवघाते विनियुज्यते । ननु—आह्वाने समर्थः, न त्ववघाते—इति चेत् । न । तस्यावघातलक्षकत्वात् । यथा पूर्वोदाहृताया-

१ ग. °हीतिमन्त्रात्त्रिर° । २ ग. °वन्मन्त्र आह्वाने गौणो ह° । ३ क. नित्यं प्रा° ।
४ ग. च. °स्तान्ह्वय° ।

भेदाभावार्थमिन्द्रशब्दो गौणः, तद्वत् 'एहि' इति पदं मन्त्रगतत्वेनावघाते गौणं भविष्यति। अन्यथा मन्त्रब्राह्मणयोराह्वानपरत्वाच्छ्रूयमाणम् 'अवघ्नन्' इति पदमनर्थकं स्यात्। प्राप्तमवघातमुद्दिश्य मन्त्रस्य त्रित्वस्य च विधौ वाक्यभेदः—इति चेत्। न। त्रित्वस्य प्राप्तत्वेनानुवादकत्वात्। कस्यांचिच्छाखायामयं मन्त्रो मन्त्रकाण्डे त्रिवारमभ्यस्याऽऽम्नातः। आह्वयतिपदं तु 'एहि' इतिवदवघातपरतयोपचरणीयम्—इति प्राप्ते—

ब्रूमः—त्रिरभ्यासस्य नित्यवत्प्राप्तिः पाठमात्रेण न सिध्यति। कस्यांचिच्छाखायां त्रिःपाठात्। कस्यांचित्सकृत्पाठात्। अतोऽसौ नित्यवद्विधीयते। न च 'अवघ्नन्' इत्यस्य वैयर्थ्यम्। तस्य काललक्षकत्वात्। कालस्यापि विधौ वाक्यभेदः-इति चेत्। न। प्राप्तत्वात्। न ह्यवघाते सत्याह्वानमन्यस्मिन्काले भवति। ततोऽर्थप्राप्तः कालः। आह्वानमपि मन्त्रसामर्थ्यादेव प्राप्तत्वान्न विधेयम्। न हि 'एहि' इति मन्त्रपाठ आह्वानमन्तरेणोपपद्यते। मन्त्रव्याख्यानं चोदाहृतम्। तत्रायं वाक्यार्थः संपन्नः—'अवघातकाले यदाह्वानं तस्य त्रिरभ्यासः कर्तव्यः' इति। अत एव शाखान्तरे विस्पष्टमाह्वानानुवादेनाभ्यासो विधीयते। 'त्रिराह्वयति त्रिःसत्या हि देवाः' इति। एवंसति मन्त्रस्यापि विनियोगे वाक्यभेदः स्यात्। लिङ्गेन त्वाह्वाने विनियुज्यते, नावघाते। न चैन्द्रीन्यायोऽत्र प्रसरति। तृतीयाश्रुत्यभावात्। 'बर्हिर्देवसदनं दामि' इत्यत्रोक्तेन तु न्यायेन मुख्य एवाऽऽह्वाने लिङ्गेन मन्त्रविनियोगः, न त्ववघातरूपे गौणाह्वाने। तस्मात्—आह्वानशेषोऽयं मन्त्रः ॥ ५॥६॥७॥८॥

( चतुर्थे—अग्निविहरणादिप्रकाशकमन्त्रविनियोगाधिकरणे सूत्रम् )।

तथोत्थानविसर्जने ॥ १० ॥

चतुर्थाधिकरणमारचयति—

उत्तिष्ठन्प्रवदेदेदमग्नीदग्नीनित्यादिकं तथा ।
कृणुत व्रतमित्येवं पठन्वाचं विमुञ्चति ॥ ९ ॥
मन्त्रौ विधेयौ कालो वा मन्त्रावुत्थानमोकयोः ।
विनियोज्यौ न कालस्य लक्षणा युज्यते विधौ ॥ १० ॥
मन्त्रार्थानन्वयात्तत्र तद्विधिर्नैव शक्यते ।
अगत्या लक्षणाऽप्यस्तु तेन कालो विधीयते ॥ ११ ॥

ज्योतिष्टोमे समामनन्ति—' उत्तिष्ठन्नन्वाहाग्नीदग्नीन्विहर ' इति । तथा—

---

१ क. °पर एवोप° । २ क. न कालस्य प्रा° । ३ क. ग. च. त्रिसत्या । ख. त्रिसत्या । ४ ख. °देराज्ञी° ।

'व्रतं कृणुतेति वाचं विसृजति' इति । तेन आग्नीध्रं संबोध्याग्निविहरणादिप्रेषरूपो मन्त्रोऽनेन वाक्येनोत्थानशेषतया विनियुज्यते । तथा—मुष्टिं कृत्वा नियमितवाचो दीक्षितस्य वाग्विमोके 'व्रतं कृणुत' इति मन्त्रो विनियुज्यते । न चात्र पूर्वोक्तावघातवाक्यवदुत्थानविमोकशब्दौ काललक्षकौ । तत्कालयोरवघातकालवदर्थप्राप्त्यभावेन विधेयत्वे सति लक्षणाया अन्याय्यत्वात्—इति प्राप्ते,

ब्रूमः—अग्निविहरणप्रैषे पयःपानरूपव्रतसंपादनप्रैषे चान्वितावेतौ मन्त्रौ, न तूत्थाने वाग्विमोके च । अतोऽनर्थयोर्विनियोगासंभवादगत्या लक्षणामप्यङ्गीकृत्य कालो विधीयते ॥ ९ ॥ १० ॥ ११ ॥

( पञ्चमे—{ सूक्तवाकस्य प्रस्तरप्रहरणाङ्गताधिकरणं (प्रस्तरप्रहरणन्याये) }—सूत्राणि ११—१४)॥

सूक्तवाके च कालविधिः परार्थत्वात् ॥ ११ ॥
उपदेशो वा याज्याशब्दो हि नाकस्मात् ॥ १२ ॥
स देवतार्थस्तत्संयोगात् ॥ १३ ॥ प्रतिपत्तिरिति
चेत्स्विष्टकृद्वदुभयसंस्कारः स्यात् ॥ १४ ॥

पञ्चमाधिकरणमारचयति—

प्रस्तरं सूक्तवाकेन प्रहरेदिति कालधीः ।
अङ्गाङ्गिता वा स्यात्कालोऽश्रुतेरप्यनन्वयात् ॥ १२ ॥
प्रहृतेरिष्टदेवार्थसंस्कारत्वात्तदन्वयः ।
संपाद्यो देवताद्वारा तृतीयाश्रुतितोऽङ्गता ॥ १३ ॥

दर्शपूर्णमासयोराम्नायते—'सूक्तवाकेन प्रस्तरं प्रहरति' इति । 'इदं द्यावापृथिवी भद्रमभूत्' इत्यादिको मन्त्रः सूक्तवाकः । तस्मिन्मन्त्रेऽग्निं संबोध्य 'त्वं सूक्तवागसि' इत्याम्नानात् । प्रस्तरो दर्भमुष्टिः, तस्य प्रहरणमग्नौ प्रक्षेपः । तत्र—'सूक्तवाकेन' इत्येतत्पदं कालं लक्षयति । होत्रा मन्त्रेऽस्मिन्पठ्यमाने तस्मिन्कालेऽध्वर्युः प्रस्तरं प्रहरेत् । न त्वत्र प्रहरणे मन्त्रोऽयं विनियोक्तुं शक्यः । पूर्वोक्तप्रैषमन्त्रवदत्रान्वयाभावात् । 'अग्निरिदं हविरजुषतावीवृधत महो ज्यायोऽकृत'—इत्यादिकं मन्त्रे पठ्यते । 'पुरोडाशसेवया वृद्धोऽग्निरस्मिन्यजमाने तेजोबाहुल्यं कृतवान्' इति तस्यार्थः । न चासौ प्रस्तरप्रहरणेऽन्वेतुं शक्यः—इति प्राप्ते,—

---

१ ग. अत्र । २ ख. °प्रैषविनि° । ३ क. ख. °ति । होमम° । ४ क. °न्त्रो वि° ।

ब्रूमः—'सूक्तवाकेन' इति तृतीयाश्रुत्या प्रहरणे मन्त्रो विनियुज्यते । न चात्यन्तमन्वयाभावः । मन्त्रो ह्ययं पूर्वमिष्टानग्न्यादिदेवाननुस्मारयति । प्रस्तरप्रहरणं चेष्टदेवतासंस्कारः । अतो देवताद्वारा मन्त्रप्रहरणयोरन्वयान्मन्त्रो विनियुज्यते । ननु—प्रहरणं नाम प्रक्षेपमात्रम्, न तु देवतोद्देशेन प्रक्षेपः । यजिधातोरश्रवणात् । तथा सति देवतानामत्राभावात्तद्द्वाराऽपि नान्वयः—इति चेत् । मैवम् । देवतानां सद्भावात् । अग्न्यादिदेवताप्रकाशकस्य सूक्तवाकस्य तृतीयाश्रुत्या प्रहरणाङ्गत्वं बोध्यते । यदि प्रकरणेऽग्न्यादयो देवता भवेयुः, तदा तत्प्रकाशनेन दृष्टोऽर्थो मन्त्रस्य लभ्येत । ततो देवताकल्पनेन तदुद्देशपूर्वकस्य प्रक्षेपस्य यागत्वं सिध्यति । तस्मात्—देवताद्वाराऽस्त्येवान्वयः ॥ १२ ॥ १३ ॥

षष्ठे— {सूक्तवाकानामर्थानुसारेण विनियोगाधिकरणे (सूक्तवाकन्याये)} —सूत्राणि १५—१८)।

कृत्स्नोपदेशादुभयत्र सर्ववचनम् ॥ १५ ॥
यथार्थं वा शेषभूतसंस्कारात् ॥ १६ ॥
वचनादिति चेत् ॥ १७ ॥ प्रकरणविभागादुभे प्रति कृत्स्नशब्दः ॥ १८ ॥

षष्ठाधिकरणमारचयति—

प्रहृतेरखिलः सूक्तवाकोऽङ्गं स्याद्विभज्य वा ।
समाख्या कृत्स्नगा तेन विभक्तस्याङ्गता नहि ॥ १४ ॥
दर्शपूर्णिमयोर्देवाननुस्मृत्य विभज्यताम् ।
आख्यां लिङ्गेन बाधित्वा भागे नाम निरुच्यते ॥ १५ ॥

पूर्वोदाहृते मन्त्रे सूक्तवाकसमाख्या कृत्स्नमन्त्रविषया । याज्ञिकैः कृत्स्ने तच्छब्दप्रयोगात् । ततः सर्वोऽपि प्रहरणाङ्गम्—इति चेत् ।

न । लिङ्गेन समाख्याया बाधितत्वात् । तस्मिन्मन्त्रे पूर्णमासदेवताम्नानं कस्मिंश्चिद्भागे दृश्यते—'अग्नीषोमाविदं हविरजुषेताम्' इति । भागान्तरे तु दर्शदेवताम्नानम्—'इन्द्राग्नी इदं हविरजुषेताम्' इति, 'इन्द्र इदं हविरजुषत' इति, 'महेन्द्र इदं हविरजुषत' इति च । इन्द्राग्नीन्द्रमहेन्द्राः पुरुषभेदेन दर्शे व्यवस्थिताः ।

---

१ ख. °त्रासद्भावा° । २ ङ. दृष्टार्थो । ३ ख. °नुस्मृत्य विभज्य ताम् । आ° । ४ ख. भागो नाम निरुच्यते ॥ १५॥

तथा सति मन्त्रलिङ्गेन तत्तद्भागवत्तत्तत्काले व्यवतिष्ठते । सूक्तवाकशब्दश्च भागे यौगिकः । ' सूक्तं वक्ति ' इति तद्व्युत्पत्तेः । यागकाले तत्तन्मन्त्रेण सम्यगुक्तं देवं वक्तीत्यर्थः । अत एव ब्राह्मणेन व्याख्यातम्—'अग्निरिदं हविरजुषतेत्याह, या अयाक्ष्म देवतास्ता अरीरधामेति वावैतदाह ' इति । अरीरधामाऽऽराधितांस्तुष्टानकुर्मेत्यर्थः । तस्मादयं विभज्य विनियुज्यते ॥ १४ ॥ १५ ॥

(सप्तमे काम्ययाज्यानुवाक्यानां काम्यमात्राङ्गताधिकरणे सूत्रम्—)।

लिङ्गक्रमसमाख्यानात्काम्ययुक्तं समाम्नातम् ॥ १९ ॥

सप्तमाधिकरणमारचयति—

ऐन्द्राग्नादीष्टयः काम्या याज्या अप्युदिताः क्रमात् ।
काण्डयोस्ता यथालिङ्गं संचार्या नियमोऽथवा ॥ १६ ॥
लिङ्गं क्रमसमाख्याभ्यां प्रबलं तद्वशादमूः ।
अकाम्यास्वपि संचार्या याज्याः सर्वत्र का क्षतिः ॥ १७ ॥
समाख्यानात्काण्डयोगः क्रमादिष्टिषु योजनम् ।
अपेक्षते देवमात्रं शक्तिः काम्यैकगास्ततः ॥ १८ ॥

काम्येष्टयस्तत्काण्डे क्रमेणाऽऽम्नाताः—'ऐन्द्राग्नमेकादशकपालं निर्वपेत्, यस्य सजाता वीयुः ' इत्यादिना । सजाता ज्ञातयः । वीयुर्विगता विप्रतिपन्ना इत्यर्थः । 'इन्द्राग्नी रोचन '—इत्यादिके मन्त्रकाण्डे याज्यानुवाक्याः क्रमेणाऽऽम्नाताः । तत्र 'इदं काम्ययाज्यानुवाक्याकाण्डम्' इति याज्ञिकानां समाख्ययोऽवगम्यते । तयोरिष्टिकाण्डमन्त्रकाण्डयोः प्रथमायामिष्टौ प्रथमपठिते याज्यानुवाक्ये इत्यादिव्यवस्था क्रमेण क्रियते । मन्त्रगतं त्वैन्द्राग्नलिङ्गं काम्यायां नित्यायां चैन्द्राग्नेष्टौ ते याज्यानुवाक्ये विनियुङ्क्ते । लिङ्गं च प्रबलमिति सर्वत्र तयोर्विनियोगः—इति प्राप्ते,—

ब्रूमः—नात्र लिङ्गेन क्रमसमाख्ये बाधितुं शक्येते । उपजीव्यत्वात् । इन्द्राग्निदेवतारूपमात्रप्रकाशनं लिङ्गम् । न च तावन्मात्रेण मन्त्रकर्मणोरङ्गाङ्गिभावः । ततः समाख्याबलान्मन्त्रकाण्डकर्मकाण्डयोः संबन्धावगतौ सामान्येन मन्त्रकर्मणोः संबन्धोऽवगम्यते । विशेषतस्तु ' अस्मिन्प्रथमे कर्मण्ययं मन्त्रः प्रथमः ' इति क्रमादवगम्यते । ननु—' ऐन्द्राग्नेष्टावैन्द्राग्नमन्त्रः, वैश्वानरेष्टौ वैश्वानरमन्त्रः ' इत्येतादृशो विशेषो लिङ्गेनैवावगम्यते—इति चेत् । न । लिङ्गसाधारण्ये क्रमापेक्षणात् । " ऐन्द्राग्नमेकादशकपालं निर्वपेद्भ्रातृव्यवान् " इति द्वितीयेष्टिरपि ।

---

१ क. गवांस्तत्त° । २ ख. याश्चान्या दे° । ङ. याश्च दे° । ३ ग. च. अभ्युदि° । ४ख. रोचत । ५ क. ग. च. °या ग° । ६ङ. °न्त्रः। न वैश्वानरम° । ७ ग. च. °ण्येन क्र°

तत्रैन्द्राग्नी पठितौ। मन्त्रकाण्डेऽपि "इन्द्राग्नी नवतिम्" इत्यादिकमपरमै-न्द्राग्नं याज्यानुवाक्यायुगलमाम्नातम्। न हि तत्र क्रममन्तरेण निर्णेतुं शक्यम्। न च क्रमेणैव तत्सिद्धेर्लिङ्गमप्रयोजकमिति वाच्यम्। क्वचिल्लिङ्गस्यैव व्यवस्थाप-कत्वात्। ऐन्द्राबार्हस्पत्येष्टिरेकैवाऽऽम्नाता-'यं कामयेत राजन्यमनपरोद्धो जायेत वृत्रा-ञ्घ्नंश्चरेत्-इति तस्मा एतमैन्द्राबार्हस्पत्यं चरुं निर्वपेत्' इति। यं राजपुत्रं जायमानं प्रति राज्ञः पुरोहितस्य च काम एवं भवति-'अयं मातृगर्भे देवकृतविघ्नेन केना-प्यप्रतिबद्धो जायताम्। जातश्च शत्रून्मारयन्संचरेत्' इति। तद्राजपुत्रार्थेयमिष्टिः। मन्त्रकाण्डे तदिष्टिक्रमे याज्यापुरोनुवाक्ये इन्द्राबृहस्पतिदेवताके द्विविधे आम्नाते। 'इदं वामास्ये हविः-'-इत्येकं युगलम्। 'अस्मे इन्द्राबृहस्पती'-इत्यादि-कमपरम्। तयोः प्रथमयुगलस्य क्रमेण विनियोगेऽपि द्वितीययुगलं लिङ्गेनैव विनियोक्तव्यम्। तस्मात्---क्रमसमाख्यासहकृतेन काम्येष्टिष्वेवैता याज्या नियम्यन्ते ॥ १६ ॥ १७ ॥ १८ ॥

( अष्टमे, आग्नीध्रोपस्थाने प्राकृतानां मन्त्राणां विनियोगा-धिकरणे सूत्राणि २०—२३)।

अधिकारे च मन्त्रविधिरतदाख्येषु शिष्टत्वात् ॥ २० ॥ तदाख्यो वा प्रकरणोपपत्तिभ्याम् ॥ २१ ॥ अनर्थक-श्चोपदेशः स्यादसंबन्धात्फलवता ॥ २२ ॥ सर्वेषां चोप-दिष्टत्वात् ॥ २३ ॥

अष्टमाधिकरणमारचयति-

आग्नेय्याऽऽग्नीध्रमित्यग्निदेवताका ऋचोऽखिलाः
उपस्थाने प्रयोक्तव्याः प्रकृता एव ता उत ॥ १९ ॥
साधारण्येन शब्दोक्तेः सर्वाभिस्तदुपस्थितिः।
विशेषे विधिसंक्रान्त्या प्रकृताभिरितीष्यताम् ॥ २० ॥

ज्योतिष्टोमे श्रूयते-'आग्नेय्याऽऽग्नीध्रमुपतिष्ठते' इति। तत्र-आग्नीध्र-नामकस्य मण्डपस्य यदुपस्थानं तत्, यया च कयाचिदृचा दाशतयीगतयाऽ-ग्निसंबन्धिन्या कर्तव्यम्। 'अग्निर्देवता यस्या ऋचः साऽऽग्नेयी' इति साधा-रणोक्तावृग्विशेषस्याप्रतीतेः-इति चेत्।

१ ग. पठिता। २ ग. च. °रेकाऽऽम्ना°। ३ ग. °योद्धा का°। ४ ख. °मेण या°। ५ क्ये ऐन्द्राग्नदे°।

मैत्रम्। क्रतुप्रकरणपठितानामाग्नेयीनामृचां क्रतुप्रयुक्तव्यापारसाधनत्वं प्रकरणादेवावगतम्। 'कोऽसौ व्यापारः' इति विशेषबुभुत्सायाम् 'अग्नीध्रोपस्थानरूपोऽयम्, इति बोधयन्नयं विधिर्विशेषमात्रं संक्रामतीति लाघवम्। अप्रकृतानां क्रतुप्रयुक्तव्यापारसाधनत्वं तद्व्यापारविशेषश्चेत्युभयमनेन बोध्यत इति गौरवम्। तस्मात्प्रकृताभिराग्नेयीभिस्तदुपस्थानम्। एवम् 'ऐन्द्र्या सदो वैष्णव्या हविर्धानम्' इत्यत्र सदोहविर्धाननामकयोर्मण्डपयोरुपस्थाने प्रकृतानामेवैन्द्रीणां वैष्णवीनां च प्रयोग इति द्रष्टव्यम्॥ १९॥ २०॥

(नवमे भक्षमन्त्राणां यथालिङ्गं ग्रहणादौ विनियोगाधिकरणे सूत्रे २४–२५)।

लिङ्गसमाख्यानाभ्यां भक्षार्थताऽनुवाकस्य॥ २४॥ तस्य रूपोपदेशाभ्यामपकर्षोऽर्थस्य चोदितत्वात्॥ २५॥

नवमाधिकरणमारचयति—

भक्षेहीत्यनुवाकोऽयं सर्वो भक्षणगाम्युत।
ग्रहणादौ यथायोगं विभज्य व्यवतिष्ठते॥ २१॥
अविधेर्ग्रहणादीनां भक्षणे निखिलोऽस्तु सः।
अर्थाक्षिप्तेषु तेष्वेव यथालिङ्गं विभज्यते॥ २२॥

ज्योतिष्टोमे हुतस्य सोमस्य शेषभक्षणं विहितम्। अत एवाऽऽम्नातम्—'अभिषुत्याऽऽहवनीये हुत्वा प्रत्यञ्चः परेत्य सदसि सोमं भक्षयन्ति' इति। तस्मिन्भक्षणे ग्रहणावेक्षणनिगरणसम्यग्जरणरूपाश्चत्वारो व्यापाराः सन्ति। मन्त्रश्च 'भक्षेहि'—इत्याद्यनुवाके समाम्नातः। तत्र भक्षणं यथा साक्षाच्चोदितं, न तथा ग्रहणावेक्षणनिगरणसम्यग्जरणानि चोदितानि। न चाविहितेषु मन्त्रो विनियोगमर्हति। समाख्या तु 'भक्षानुवाकः' इत्येवंरूपा भक्षणमात्रविषया। तस्मात्कृत्स्नस्याप्यनुवाकस्य भक्षण एव विनियोगः—इति प्राप्ते,—

ब्रूमः—अविहितान्यपि ग्रहणादीन्यर्थाक्षिप्तानि। तद्व्यतिरेकेण भक्षणासंभवात्। अतस्तेष्वनुवाको यथालिङ्गं विभज्य विनियोक्तव्यः। तत्र 'भक्षेहि'—इत्यारभ्य 'अश्विनोस्त्वा बाहुभ्यां सघ्यासम्' *इत्यन्तो ग्रहणं प्रकाशयति। 'एहि' इत्याह्वानस्य बाहुभ्यां स्वीकरवाणि' इत्येतस्य च दर्शनात्। 'नृचक्षसं

* 'भक्षेहि मा विश दीर्घायुत्वाय शंतनुत्वाय रायस्पोषाय वर्चसे सुप्रजास्त्वाय। एहि वसो पुरो वसो प्रियो मे हृदोऽस्यश्विनोस्त्वा बाहुभ्यां सघ्यासम्' इति शाबरभाष्ये मन्त्रपाठः।

१ ख. °ग्नेयादीना°। २ ग. च. अप्राकृ°। ३ ग. घ. °थारोग्यं वि°।

त्वा देव सोम नृचक्षा अवख्येषम्' इत्ययं भागोऽवेक्षणं प्रकाशयति। 'शोभन-चक्षुरहं मनुष्येषु प्रख्यातं त्वामवेक्षिषीय' इत्यभिधानात्। 'हिन्व मे गात्रा'—इत्यादिः 'मा मेऽवाङ्नाभिमतिगाः'+इत्यन्तः सम्यग्जरणं प्रकाशयति। गात्र-प्रीणनेनाधोभागे नाभ्यतिक्रमणनिषेधेन च तदवगमात्। जरणं नार्थाक्षिप्तम्, तेन विनाऽपि भक्षासिद्धेः—इति चेत्। न। जरणपर्यन्तस्यैव सार्थकभक्षणत्वात्। न च—जरणे पुरुषव्यापाराभावः। सम्यगुपवेशनादेर्जरणार्थत्वात्। 'मन्द्राभिभूतिः'—इत्यादिः 'भक्षयामि' इत्यन्तो भक्षणं प्रकाशयति। तस्मात्—लिङ्गेन समाख्यां बाधित्वा विनियोगः कर्तव्यः॥ २१॥ २२॥

( दशमे मन्द्राभिभूतिरित्यादेरेकमन्त्रताधिकरणे सूत्रम्— )।

गुणाभिधानान्मन्द्रादिरेकमन्त्रः
स्यात्तयोरेकार्थसंयोगात्॥२६॥

दशमाधिकरणमारचयति—

मन्द्रेति वसुमद्वेति द्वयं तर्पणभक्षयोः।
विभक्तव्यमुताशेषं तृप्तिसंयुक्तभक्षणे॥ २३॥
लिङ्गाद्विभागो मैवं नो तृप्तिर्भक्षणतोऽन्यतः।
लिङ्गस्यासंभवे वाक्यशेषात्सर्वोऽस्तु भक्षणे॥ २४॥

'मन्द्राभिभूतिः'—इत्यादिः'जुषाणा सोमस्य तृप्यतु' इत्यन्तो भागो दृष्टाया अरुचि-मभिभवन्त्याः सोमं सेवमानाया जिह्वायास्तृप्तिं प्रकाशयति। 'वसुमद्गणस्य'—इत्यादिः 'भक्षयामि' इत्यन्तो भागो भक्षणप्रकाशकः। तत्र पूर्ववल्लिङ्गेन विभज्य विनियोगः—इति चेत्।

मैवम्। न खलु तृप्तिर्भक्षणादन्येन व्यापारेण जायते। किं तर्हि—भक्षणानु-निष्पादिनी हि सा। तथा सति कस्मिन्व्यापारे तृप्तिप्रकाशको भागो विनियु-ज्येत। ततो लिङ्गेन विनियोगासंभवाद्भक्षणवाक्यस्य शेषस्तृप्तिप्रकाशकभागो भविष्यति। उपयुक्तश्च तत्रायं भागः। तृप्तिसहितभक्षणप्रकाशनेन पुरुषोत्साह-जननात्। तस्मान्मन्द्रादिः ×सर्वो भक्षणे विनियुज्यते॥ २३॥ २४॥

---

+ 'हिन्व मे गात्रा हरिवो गणान्मे मा वितीतृषः। शिवो मे सप्तर्षीनुपतिष्ठस्व मा मेऽवाङ्नाभिमतिगाः' इति शबरभाष्ये मन्त्रपाठः।

×' मन्द्राभिभूतिः केतुर्यज्ञानां वाग्जुषाणा सोमस्य तृप्यतु, वसुमद्गणस्य सोमदेवते मतिविदः प्रातःसवनस्य गायत्रच्छन्दसोऽग्निहुत इन्द्रपीतस्य मधुमत उपहूतस्योपहूतो भक्ष-यामि' इति शबरभाष्ये लिखितः।

---

१ क. ङ. °मद्वेति। २ ग. च. नैवं। ३ ग. च. °शेषः सर्वो°। ४ क. ख. विनि-युज्येत। ५ क. °णमात्रवा°। ख. ङ. °णमन्त्रवा°। ६ ग. च. °न मन्त्रेण पु°।

(एकादशे, इन्द्रपीतस्येत्यादिमन्त्राणां विनियोगाधिकरणे सूत्रे२७-२८)।

लिङ्गविशेषनिर्देशात्समानविधानेष्वनैन्द्राणाममन्त्र-त्वम् ॥२७॥ यथादेवतं वा तत्प्रकृतित्वं हि दर्शयति ॥२८॥

एकादशाधिकरणमारचयति—

इन्द्रपीतस्येति भक्षमन्त्रांशः किमिहैन्द्रके ।
केवलेऽन्यत्र वोहाच्च सर्वत्रोत यथाश्रुतम् ॥ २५ ॥
ऐन्द्र एव समर्थत्वात्तूष्णीमेवान्यभक्षणम् ।
ऊहो वाऽन्येषु कर्मैक्येऽप्यस्त्यूहो भक्षभेदतः ॥ २६ ॥
इन्द्रेण यस्मिन्सवने सोमः पीत इतीरणात् ।
सवनस्थेषु सर्वेषु मन्त्रोऽनूहेन पठ्यताम् ॥ २७ ॥

भक्षमन्त्रे कश्चिदंशः 'इन्द्रपीतस्य' इत्येवंविधः श्रूयते । तत्र—'इन्द्रेण पीतस्य सोमस्य शेषं भक्षयामि' इत्यर्थो भवति। तथा सत्यस्य मन्त्रस्येन्द्रप्रदानशेषभक्षण एव समर्थत्वात्तत्रैवायं मन्त्रो विनियुज्यते, न तु मैत्रावरुणादिशेषभक्षणे। तस्मा-दमन्त्रकमेव तद्भक्षणम्, इत्येकः पूर्वपक्षः ।

'इन्द्रपीतस्य' इति पदस्यासमर्थत्वेऽपि 'मित्रावरुणपीतस्य' इत्येवमूहे सति सामर्थ्यं भविष्यति । ननु—आग्नेययागस्य प्रकृतित्वात्तद्गतस्य 'अग्नये जुष्टम्' । इति मन्त्रस्य विकृतौ सौर्ये चरौ 'सूर्याय जुष्टम्' इत्येवमूहः क्रियते। इह तु क-र्मैक्यान्नोहः—इति चेत् । न । कर्मभेद इव भक्षभेदेऽप्यूहितुं शक्यत्वात् । इति द्वितीयः पूर्वपक्षः ।

'इन्द्रपीतस्य' इत्यत्र बहुव्रीहिर्द्रष्टव्यः । तत्पुरुषत्वे 'समासस्य' (पा० सू० ६। १।२२३]इति सूत्रेणान्तोदात्तत्वप्रसङ्गात् । आद्युदात्तं ह्येतत्पदमाम्नातम् । इन्द्र-प्रतिपादिकं तु स्वत आद्युदात्तम् । तथा सति 'बहुव्रीहौ प्रकृत्या पूर्वपदम्'[पा० सू० ६।२।१]इति सूत्रेण पूर्वपदप्रकृतिस्वरविधानात्समस्तपदमप्याद्युदात्तमेव संप-द्यते । 'इन्द्रेण पीतः सोमो यस्मिन्सवने' इति विग्रहात्सवनपरत्वे सति 'ऐन्द्रभक्षण एव'इति नियन्तुमसमर्थत्वात्सर्वभक्षणेष्वनूहेनैवायं मन्त्रः प्रयोक्तव्य इति राद्धान्तः ॥ २५ ॥ २६ ॥ २७ ॥

(द्वादशे, अभ्युन्नीतसोमभक्षणाधिकरणे सूत्राणि २९-३१ )।

पुनरभ्युन्नीतेषु सर्वेषामुपलक्षणं द्विशेषत्वात् ॥ २९ ॥

१ ग. च. 'चोहाद्वा'। २ ख. 'थाक्रमम्।

अपनयाद्वा पूर्वस्यानुपलक्षणम् ॥ ३० ॥

ग्रहणाद्वाऽपनयः स्यात् ॥ ३१ ॥

द्वादशाधिकरणमारचयति—

ऊहपक्षे यदूह्यं तच्चिन्त्यते न्यायपञ्चके ।
इन्द्रे हुतेऽथ तच्छेषे हौत्रकैश्चमसास्थिते ॥ २८ ॥
सोमोऽभ्युन्नीय देवेभ्यो हुत्वा संभक्ष्यते तदा ।
इन्द्रो न लक्ष्यो लक्ष्यो वा न शेषेऽन्यार्थता यतः ॥ २९॥
उन्नीत एव संबद्धो न पूर्वो देवतान्तरैः ।
अत इन्द्रस्य सिद्ध्यर्थं लक्ष्योऽसावितरैः सह ॥ ३० ॥

पूर्वाधिकरणे योऽयमूहरूपो द्वितीयः पूर्वपक्षः, तत्प्रसङ्गात्कत्वाचिन्तारूपेण न्यायपञ्चकेनोहविषयश्चिन्त्यते। मैत्रावरुणब्राह्मणाच्छंसिपोत्राद्य ऋत्विजो होत्रकाः। तेषां च सन्ति चमसाः। पात्रविशेषस्थिताः सोमरसाश्चमसाः। तैर्वषट्कारानुवषट्कारयोर्होतव्यम्। चमसानामैन्द्रत्वाद्धोतुर्वषट्कारे प्रथममिन्द्रो हुतः। अनन्तरं चमसेस्थिते हुतशेषे पुनः सोमान्तरमभ्युन्नीय देवतान्तरेभ्यो होत्रका अनुवषट्कारे जुह्वति। तत्र मैत्रावरुणः 'मित्रं वयं हवामहे'-इति मन्त्रेण मित्रावरुणौ यजति। ब्राह्मणाच्छंसी 'इन्द्र त्वा वृषभं वयम्'—इति मन्त्रेणेन्द्रं यजति। पोता 'मरुतो यस्य हि क्षये'—इति मन्त्रेण मरुतो यजति ×। एवं हुत्वा पश्चात्सोमो भक्ष्यते। तस्मिन्भक्षणे 'मित्रावरुणपीतस्य' इति मन्त्र ऊहनीयः। तदानीम् 'इन्द्रमित्रावरुणपीतस्य' इत्येवं मित्रावरुणाभ्यां सह नेन्द्र उपलक्षणीयः। कुतः। इन्द्रशेषे पुनरभ्युन्नीतस्य तेन सह मित्रावरुणाद्यर्थत्वे सति तस्य शेषस्येन्द्रसंबन्धराहित्यात्। पुनरुन्नीतस्यैवान्यार्थत्वम्, न पूर्वस्य—इति चेत्। न। उन्नयनकाले 'मित्रावरुणाद्यर्थोऽयम्' इति संकल्पाभावात्। प्रदानकाले तु पूर्वशेषेण सहैव मित्रावरुणादिभ्यः प्रदीयते। तस्मात्—इन्द्रसंबन्धराहित्यान्नेन्द्रो लक्षणीयः—इति प्राप्ते—

ब्रूमः—मा भूत्संकल्पः, तथाऽप्युन्नयनं करिष्यमाणं मैत्रावरुणादियागार्थमेव। न तु तस्य पूर्वानुष्ठितेन्द्रयागार्थत्वं संभवति। तस्मादुन्नीतो मित्रावरुणादिसंबद्धशेष इन्द्रसंबद्ध एवेत्युभयभक्षणे मित्रावरुणादिभिः सहेन्द्रोऽप्युपलक्षणीयः॥ ॥ २८ ॥ २९ ॥ ३० ॥

---

× नेष्टा त्वष्टारं पत्नीश्च "अग्ने पत्नीरिहाऽऽवह"—इति (मन्त्रेण यजति)। आग्नीध्रोऽग्निम् " उक्षां नायवशांनाय "—इति (मन्त्रेण यजति—) इति शाबरभाष्येऽधिकमुपलभ्यते।

---

१ क. ख. ङ. ऐन्द्रे। २ ख. ग. च. संबन्धो। ३ ग. च. °विषयश्चिन्त्यन्ते। मै°। ४ ख. ग. ङ. च. °सस्ये हु°। ५ क. ख. प्रतीयते। ६ क. ग. च. °बन्धः शे°। ख. °बन्धशे°। ७ ङ. च. °के मैत्रा।

(त्रयोदशे पात्नीवतभक्षण इन्द्रादीनामनुपलक्षणाधिकरणे सूत्रे ३२-३३)।

पात्नीवते तु पूर्ववत् ॥ ३२ ॥ ग्रहणाद्वाऽपनीतं स्यात् ॥ ३३ ॥

त्रयोदशाधिकरणमारचयति—

द्विदेवशेष आदित्यस्थाल्या आग्रयणाभिधाम् ।
स्थालीं प्राप्तस्ततः पात्नीवतस्य ग्रहणे सति ॥ ३१ ॥
तद्भक्षणे द्विदेवाः किं सार्धं पात्नीवतेन ते ।
उपलक्ष्या न वा पूर्वन्यायेनास्तूपलक्षणम् ॥ ३२ ॥
अन्य आग्रयणात्पात्नीवतो नैतस्य विद्यते ।
आकाङ्क्षा पूर्वदेवेषु पत्नीवानेव लक्ष्यते ॥ ३३ ॥

ऐन्द्रवायवादयो द्विदेवत्याः तेषां शेष आदित्यस्थालीमागच्छति, पुनरपि तस्याः स्थाल्या आग्रयणस्थालीमागच्छति । तस्या आग्रयणस्थाल्याः पात्नीवतो गृह्यते । तस्य पात्नीवतस्य भक्षण इन्द्रवाय्वादय उपलक्षणीयाः । पूर्वाधिकरणे यथा मित्रावरुणादिभिः सहेन्द्र उपलक्षितः, तद्वत्—इति प्राप्ते,—

ब्रूमः—'यदुपांशुपात्रेण पात्नीवतमाग्रयणाद्गृह्णाति' इत्याग्रयणपात्रस्यादानत्वश्रवणात्ततो निःसृतसोमरसस्य तत्संबन्धेऽपेते सति पश्चात्पत्नीवद्देवतार्थे ग्रहणं भवति । तथा सत्यत्यन्तभिन्नस्य पात्नीवतस्य पूर्वदेवेष्वाकाङ्क्षा नास्ति । पुनरभ्युन्नीतस्तु सोमे ऐन्द्रशेषेण संसृष्टः । तस्य संसृष्टस्य भक्षणे मैत्रावरुणादीनामिवेन्द्रस्यापि संबन्धो नापैतीति वैषम्यम् । तस्मात्पात्नीवतभक्षण इन्द्रवाय्वादयो नोपलक्षणीयाः ॥ ३१ ॥ ३२ ॥ ३३ ॥

(चतुर्दशे पात्नीवतशेषभक्षे त्वष्टुरनुपलक्षणीयताधिकरणे सूत्रे ३४-३५)।

त्वष्टारं तूपलक्षयेत् ॥ ३४ ॥ अतुल्यत्वात्तु नैवं स्यात् ॥ ३५ ॥

चतुर्दशाधिकरणमारचयति—

सह पत्नीवता त्वष्टा तद्ग्रहे लक्ष्यते न वा ।
सह त्वष्ट्रा पिबेत्युक्तेर्देवत्वात्सोऽपि लक्ष्यते ॥ ३४ ॥
सहत्वमात्रं त्वष्टुः स्यान्न पातृत्वमशब्दनात् ।
चोदनाया अभावाच्च न देवोऽतो न लक्ष्यते ॥३५॥

तस्मिन्नेव पात्नीवतग्रहे शेषभक्षणमन्त्रे पत्नीवता सह त्वष्टाऽप्युपलक्षणीयः। कुतः। त्वष्टुरपि तद्देवत्वात्। तच्च होममन्त्राद्गवगतम्। 'अग्ना३इ पत्नीवन्त्सजू-

१ ख. ग. ङ. च. °तस्य सो° । २ ग. च. °म इन्द्र° । ३ ख. ग. च. °के देव° । ४ ख. °व्वतः । चो° । ग. च. °व्वत् । ५ ख. °तोऽत्र द° । ६ ख. अस्मि° । ७ ङ. ह्रत्व° चू° । ख. °वन्सजू° ।

देवेन त्वष्ट्रा सोमं पिब स्वाहा' इत्यस्मिन्मन्त्रे पत्नीवन्तमग्निं प्लुतान्तेन संबोध्य 'त्वष्ट्रा देवेन सह पिब ' इत्यभिधानात्पातृत्वेन पत्नीवत इव त्वष्टुस्तद्देवत्वम् । ततः–' पत्नीवत्त्वष्टृपीतस्य ' इत्युपलक्षणम्–इति प्राप्ते–

ब्रूमः–पानकाले सहावस्थानमात्रं त्वष्टुः 'सजूः' इत्यनेन पदेन प्रतीयते, न तु पातृत्वम् । असंबोधितस्य त्वष्टुः 'पिब' इत्यनेन शब्देन सामानाधिकरण्याभावात् । न च पातृसहभावमात्रेण पातृत्वम्–

"सहैव दशभिः पुत्रैर्भारं वहति गर्दभी" ।

इत्यत्र पुत्राणां वोढृत्वादर्शनात् । आस्तां मन्त्रः । विधिबलात्त्वष्टुर्देवत्वम्–इति चेत् । न । 'पात्नीवतमाग्रयणाद्गृह्णाति " इत्यत्र त्वष्टुरप्रतीतेः । तस्मात्–अदेवत्वात्त्वष्टा नोपलक्षणीयः ॥ ३४ ॥ ३५ ॥

( पञ्चदशे पात्नीवतशेषभक्षे त्रिंशतामनुपलक्षणाधिकरणे सूत्रम् ) ।

त्रिंशच्च परार्थत्वात् ॥३६॥

पञ्चदशाधिकरणमारचयति–

पत्नीवन्तस्त्रयस्त्रिंशद्देवास्तान्मादयेत्यमी ।
लक्ष्या न वा याज्ययोक्तेर्देवत्वादुपलक्षणम् ॥ ३६ ॥
एकोऽग्निर्यजमानेन मादितोऽन्ये तु वह्निना ।
अतोऽग्नेरेव देवत्वान्नान्येषामुपलक्षणम् ॥ ३७ ॥

तस्यैव पात्नीवतग्रहस्य याज्यायामग्निं संबोध्य 'पत्नीवन्नामधारिणस्त्रयस्त्रिंशद्देवान्मादय' इत्यभिधीयते–' पत्नीवतस्त्रिंशतं त्रींश्च देवाननुष्वधमावह मादयस्व' इति । अनुष्वधमनुमदानम् । अत्र हूयमानेन सोमरसेन मादनीयत्वात्त्रयस्त्रिंशतां तद्देवत्वम् । अतस्तेऽपि भक्षणे लक्षणीयाः–इति चेत् ।

न । यजमानेन मादनीयस्याग्नेरेव तद्देवत्वात् । त्रयस्त्रिंशद्देवास्तु वह्निना मायन्त इति न तेषामत्र देवत्वम् । तस्मान्नोपलक्षणम् ॥ ३६ ॥ ३७ ॥

( षोडशे भक्षणेऽनुवषट्कारदेवताया अनुपलक्षणाधिकरणे सूत्रम् ) ।

वषट्कारश्च पूर्ववत् ॥३७॥

षोडशाधिकरणमारचयति–

---

१ ग. च. मन्त्रवि° । २ ग. च. भक्षे ।

सोमस्याग्न इति प्रोक्ताऽनुवषट्कारदेवता ।
लक्ष्या न वा देवतात्वाल्लक्ष्या त्रिंशाद्विलक्षणा ॥ ३८ ॥
प्रकृतौ विद्यमानोऽग्निरनुद्देशादलक्षितः ।
उद्देश्येन्द्रो लक्षितोऽतो विकृतावपि तत्तथा ॥ ३९ ॥

"सोमस्याग्ने वीही*"त्यनुयजति" इति श्रूयते । तत्र—अनुवषट्कारस्य याज्यार्थिकोऽग्निर्देवता । न च याज्यार्थिनामिव वह्नेरदेवतात्वम् । मन्त्रे वह्निं संबोध्य सोमपातृत्वाभिधानात् । तस्मात्—अग्निर्लक्षणीयः—इति चेत् ।

न । प्रकृतावलक्षितत्वात् । ऐन्द्रग्रहस्तः प्रकृतिः । इतरे विकृतिरूपाः । तथा हि—ऐन्द्रेऽग्रे सोमो गृह्यते भीयते च । तेनैन्द्रेष्वेव सोमः, अनैन्द्रेषु सोम एव, नास्तीति सर्वे सोमधर्मा ऐन्द्रेष्वेव । अनैन्द्रा अधर्मकाः । धर्मताकाङ्क्षाप्यादृकेन सधर्मका इति विकृतित्वम् । गृह्यमाणस्य भीयमानस्य च सोमस्यैन्द्रत्वम् 'इन्द्राय त्वा वसुमते' इत्यादिग्रहणमन्त्रादवगम्यते । तस्य प्रकृतिभूतस्यैन्द्रयागस्य भक्षणेऽग्निरनुवषट्कारदेवो नोपलक्षितः । कुतः । ग्रहणे तदुद्देशाभावात् । इन्द्रस्तूद्देश्यत्वादुपलक्षितः । एवं विकृतावप्युद्देश्यदेवानामेवोपलक्षणं न्याय्यम् । तस्मात्—अग्निर्नोपलक्ष्यः ॥ ३८ ॥ ३९ ॥

(सप्तदशे(कृत्वाचिन्तारूपे)अनैन्द्राणाममन्त्रकभक्षणाधिकरणे सूत्रम् ) ।

छन्दःप्रतिषेधस्तु सर्वगामित्वात् ॥ ३८ ॥

सप्तदशाधिकरणमारचयति—

अमन्त्रपक्षमाश्रित्य कृत्वाचिन्तान्तरं त्वयम् ।
ऊहोऽस्ति नो वा सोऽस्त्यत्र विकृतौ तस्य संभवात् ॥ ४० ॥
सोमेनेति विधेः सर्वप्रदानेषु समत्वतः ।
अविकारेऽप्यनूहोऽतो नैन्द्रे निर्मन्त्रभक्षणम् ॥ ४१ ॥

उक्ताभ्यः पञ्चभ्यः कृत्वाचिन्ताभ्यः पूर्वस्मिन्नेवाधिकरणे योऽयम् 'अनैन्द्रेष्वमन्त्रकं भक्षणम्' इत्येवंरूपः प्रथमः पूर्वपक्षः, तमेव मनसि निधाय पुनः कृत्वाचिन्तान्तरं, नयमभिधीयते—अनैन्द्रपूकरीत्या विकृतित्वेनोहसंभवादस्त्यूहः—इति चेत् ।

न । अनैन्द्राणां विकृतित्वासंभवात् । 'सोमेन यजेत' इत्युत्पत्तिश्रुतः सोमः कर्मणोऽङ्गम्, न तु प्रदानविशेषस्य कस्यचिदङ्गम् । स एव सोमः सर्वप्रदाने-

* 'त्यनुवषट्करोति' इति शाबरभाष्यधृतपाठः ।

१ ख. ग. घ. °न्द्रस्य: सो° । ङ. °न्द्रस्य सो° । २ ग. घ. °षु च सो° । ३ ख. ग. घ. °रेष्वनू° । ४ ख. °न्द्रम° । ग. घ. °न्द्रमन्त्रक° । ङ. °न्द्रम° ।

त्वम्प्रस्यत इति सर्वाणि समप्रधानानि । अत ऐन्द्राणामनैन्द्राणां च प्रकृतिविकृतिभावासंभवान्नास्त्यप्यूहः । 'इन्द्राय त्वा वसुमते' इत्यादिमन्त्रो लिङ्गादैन्द्रविषयोऽस्तु । नैतावता प्रकृतिविकृतिभावः सिध्यति । तस्मादुक्तमन्त्रस्य लिङ्गादैन्द्रविषयत्वादनैन्द्रेष्वमन्त्रकं भक्षणम् ॥ ४० ॥ ४१ ॥

( अष्टादशे, ऐन्द्राग्नभक्षस्यामन्त्रकताधिकरणे सूत्रे—३९—४० ) ।

ऐन्द्राग्ने तु लिङ्गभावात्स्यात् ॥ ३९ ॥

एकस्मिन्वा देवतान्तराद्विभागवत् ॥४०॥

अष्टादशाधिकरणमारचयति—

समन्त्रकममन्त्रं वा स्यादैन्द्राग्नादिभक्षणम् ।
ऐन्द्राग्नेऽतीन्द्रपीतत्वसंभवात्तत्समन्त्रकम् ॥ ४२ ॥
न पानमशरीरस्य युक्तं दानं तु मिश्रगम् ।
मन्त्रोऽयं तु न मिश्रार्हस्तस्मादेतदमन्त्रकम् ॥ ४३ ॥

यदेतत् 'ऐन्द्राग्नं गृह्णाति' इति विहितं शेषभक्षणम्, तत्र—'इन्द्राग्निभ्यां पीतः सोम इन्द्रेणापि पीतो भवति' इति लिङ्गेनैव विनियोगात्समन्त्रकं भक्षणम्—इति चेत् ।

नैवम् । नवमाध्याये वक्ष्यमाणदेवताधिकरणन्यायेनाशरीरस्येन्द्रस्य पानासंभवात् । अथ—पीतशब्देन दानं विवक्ष्येत, तदानीम् 'इन्द्राय दत्तः सोमः' इति मन्त्रार्थो भवति । न चात्र यजमान इन्द्रमुद्दिश्य ददौ, किंत्विन्द्राग्नी उद्दिश्य । तस्मात् 'दानं मिश्रविषयम् । मन्त्रस्तु न मिश्रविषयः' इत्यमन्त्रकं भक्षणम् ॥ ४२ ॥ ४३ ॥

( एकोनविंशे 'गायत्रच्छन्दसः' इत्यादिमन्त्रविनियोगाधिकरणे सूत्राणि ४१—४३ ) ।

छन्दश्च देवतावत् ॥ ४१ ॥ सर्वेषु वाऽभावादेकच्छन्दसः ॥ ४२ ॥ स×र्वेषां वैकमन्त्र्यमैतिशायनस्य भक्तिपायनत्वात्सवनाधिकारो हि ॥ ४३ ॥

एकोनविंशाधिकरणमारचयति—

× शास्त्रदीपिकायां तु—एकादशाधिकरणोपसंहाराधिकरणत्वमस्य सूत्रस्याऽऽश्रित्य विंशतिरधिकरणान्यस्मिन्पादे स्वीकृतानीव सन्ति ।

१ क. ख. ङ. विहिते । २ ध्यायस्य व° ।

ऐन्द्रदानेऽपि गायत्रमात्रयुक्तेऽथवेतरैः।
छन्दोभिरपि युक्ते स्यादाद्यो मन्त्रे तथोक्तितः ॥ ४४ ॥
द्वयोः समो बहुव्रीहिरेकच्छन्दास्तु न क्वचित्।
नानाच्छन्दस्यैन्द्र एव क्त्वाचिन्तेयमीरिता ॥ ४५ ॥
सवनार्थेन्द्रपीतोक्तिरित्युद्घटनमीरितम्।
तेन सर्वप्रदानेषु मन्त्रपाठो यथा स्थितः ॥ ४६ ॥

तस्मिन्नेव भक्षमन्त्रे 'गायत्रच्छन्दस इन्द्रपीतस्य' इति श्रूयते। 'गायत्र-मेव छन्दो यस्य' इति मन्त्रपदे समासाभिधानादेकच्छन्दोयुक्त ऐन्द्रे सोमे भक्षमन्त्रः—इति चेत्।

मैवम्, बहुच्छन्दोयुक्तेऽपि बहुव्रीहेः समानत्वात्। एवकारं परित्यज्य 'गायत्रं छन्दो यस्य' इति विग्रहसंभवात्। एकच्छन्दस्कस्तु सोमो न क्वाप्यस्ति। तस्मान्नानाछन्दस्के सोम ऐन्द्रप्रदान एव मन्त्रः, नान्यत्र।

तदेवं क्त्वाचिन्तापर्यं समाप्तम्। द्विविधक्त्वाचिन्तोद्घाटना तु प्रागेव सिद्धा-न्तिना दर्शिता ॥ ४४ ॥ ४५ ॥ ४६ ॥

इति श्रीमाधवीये जैमिनीयन्यायमालाविस्तरे तृतीयाध्यायस्य
द्वितीयः पादः ॥ २ ॥

---

| | अत्र पादे | आदितः। |
|---|---|---|
| अधिकरणानि | १९ | १२३। |
| सूत्राणि | ४३ | ३५९। |

(अथ तृतीयाध्यायस्य तृतीयः पादः)।

(प्रथमे—उच्चैस्त्वादीनां वेदधर्मताधिकरणे सूत्राणि १–८)।

श्रुतेर्जाताधिकारः स्यात् ॥१॥ वेदो वा प्रायदर्श-नात् ॥२॥ लिङ्गाच्च ॥३॥ धर्मोपदेशाच्च नहि द्र-व्येण संबन्धः ॥४॥ त्रयीविद्याख्या च तद्विदि ॥५॥

---

१ क. ख. ऐन्द्राद्या॰। २ ग. च. ॰रभियु॰। ३ ग. ॰न्तेत्यमी॰। ४ ग. घ. ॰साग्रभि। ५ क. ख. ॰क्षणम॰।

व्यतिक्रमे यथाश्रुतीति चेत् ॥६॥ न सर्वस्मिन्निवेशात् ॥७॥ वेदसंयोगान्न प्रकरणेन बाध्येत ॥ ८ ॥

तृतीयपादे प्रथमाधिकरणमारचयति—

कर्तव्यमुच्चैः सामग्भ्यामुपांशु यजुषेत्यमी ।
मन्त्राणां वाऽथ वेदानां धर्मा मन्त्रगता यतः ॥ १ ॥
विध्युद्देशे मन्त्रवाचिशब्दाः प्रोक्ता ऋगादयः ।
ऋग्वेदोऽग्नेः समुत्पन्न इत्युपक्रमवेदगीः ॥ २ ॥
असंजातविरोधाऽतस्तद्वशादुपसंहृतेः ।
नयने सति वाक्येन धर्माणां वेदगामिता ॥ ३ ॥

ज्योतिष्टोमे श्रूयते—'उच्चैर्ऋचा क्रियते । उपांशु यजुषा । उच्चैः साम्ना' इति । तत्र विधिवाक्ये मन्त्रवाचिनामृगादिशब्दानां प्रयोगान्मन्त्रधर्मा उच्चैस्त्वादयः । तथा सति यजुर्वेदोत्पन्ना अध्वर्युणा प्रयुज्यमाना अप्यृच उच्चैरेव पठितव्याः—इति चेत् ।

मैवम् । असंजातविरोधित्वेन प्रबलमुपक्रममनुसृत्य तद्वशेनोपसंहारस्य नेतव्यत्वात् । उपक्रमे हि वेदशब्दः श्रुतः—'त्रयो वेदा असृज्यन्त । अग्नेर्ऋग्वेदः । वायोर्यजुर्वेदः। आदित्यात्सामवेदः' इति । अत उपक्रमगतवेदानुसारेण विध्युद्देशगतानामप्यृगादिशब्दानां वेदपरत्वे सत्यृचोऽपि यजुर्वेदोत्पन्ना उपांशु पठनीयाः । ननु—उपक्रमोऽगार्थवादत्वाद्दुर्बलः। उपसंहारो विध्युद्देशत्वात्प्रबलः—इति चेत् । बाढम् । लब्धात्मनो हि विध्युद्देशस्य प्राबल्यम् । इह तु प्रथमतो बुद्ध्युत्पादक उपक्रमः । तदानीमलब्धात्मत्वान्न तस्य बाधकत्वम् । पश्चात्तु वाक्यैकत्वाय तदविरोधेनैवाऽऽत्मानं लप्स्यते । तदेवमुपक्रमोपसंहारैकवाक्यताबलेन निर्णयाद्वाक्यविनियोगोऽयम् ॥ १ ॥ २ ॥ ३ ॥

( द्वितीये—आधाने गानस्योपांशुताधिकरणे सूत्रम् ) ।

गुणमुख्यव्यतिक्रमे तदर्थत्वान्मुख्येन वेदसंयोगः ॥ ९ ॥

द्वितीयाधिकरणमारचयति—

---

१ ग. च. तृतीयेऽध्याये तृतीयपा° ।

यजुर्वेदस्थमाधानं तदङ्गं साम तत्र किम्।
उच्चैरुपांशु वा गानमुच्चैः शीघ्रप्रतीतितः॥ ४॥
उत्पत्तेर्विनियोगोऽत्र प्रबलोऽनुस्मृतिर्यतः।
मुख्यस्याङ्गेन कर्तव्या तस्माद्गान उपांशुता॥ ५॥
आधानस्यात्र मुख्यत्वं गानस्य गुणताऽथवा।
विनियोगस्य मुख्यत्वमुत्पत्तेर्गुणताऽस्त्विह॥ ६॥

आधाने वामदेव्यादिसामान्यङ्गत्वेन विहितानि। तत्र—यद्यप्येतानि यजुर्वेदगतस्याऽऽधानस्याङ्गानि, तथाऽपि सामवेदे तेषामुत्पन्नत्वात्, उत्पत्तेश्च शीघ्रबुद्धिहेतुत्वात्सामवेदधर्मेण गेयानि—इति चेत्।

न। विनियोगस्य प्रबलत्वात्। स च यजुर्वेदे श्रुतः—'य एवं विद्वान्वामदेव्यं गायति' इति। गुणेन हि मुख्यस्यानुसरणं न्याय्यम्। को गुणः, किं मुख्यम्—इति चेत्। अत्राङ्गित्वादाधानं मुख्यम्, सामगानमङ्गत्वेन गुणः। तथा सति 'धर्मः शिरः'—इत्यादय आधानाङ्गभूता मन्त्रा यथोपांशु पठ्यन्ते, तथा सामान्यप्याधानानुसारेणोपांशु गेयानि। अथवा विनियोगोऽनुष्ठापकविधित्वान्मुख्यः। उत्पत्तिविधिस्तथाविधत्वाद्गुणः। तस्मात्—अत्र विनियोगवेदानुसारेणोपांशु गेयानि॥ ४॥ ५॥ ६॥

(तृतीये ज्योतिष्टोमस्य याजुर्वेदिकताधिकरणे सूत्रम्—)।

भूयस्त्वेनोभयश्रुति॥ १०॥

तृतीयाधिकरणमारचयति—

ज्योतिष्टोमो यजुःसामवेदयोरस्ति तत्र किम्।
उच्चैस्त्वमुत नीचैस्त्वं हेत्वभावादनिर्णयः॥ ७॥
यजुष्यधिगते द्रव्यदेवते तत्र तद्विधिः।
तद्वशात्स्वरनिर्णीतिरुपांशु स्यादनुष्ठितिः॥ ८॥

'ज्योतिष्टोमेन स्वर्गकामो यजेत' इत्येतद्वाक्यं वेदद्वये समाम्नातम्। तत्र—'को विधिः, कश्च गुणविधानायानुवादः, इति जिज्ञासायां नियामकहेतोरप्रतिभानात् 'एतस्य वेदस्य धर्मोऽनुष्ठेयः' इत्यनिर्णयः—इति चेत्। न। सोमद्रव्यस्य, इन्द्रवाय्वादिदेवतायाश्च यजुर्वेदेऽधिगतत्वादङ्गबाहुल्यश्रवणाच्च तत्रैव विधिः, इति—उपांशुप्रयोगः॥ ७॥ ८॥

---

१ ख. °नुस्मृति°। २ क. ख. घर्मः। ३ ग. च. °नाङ्गानु°।

( चतुर्थे प्रकरणस्य विनियोजकताधिकरणे सूत्रम्- ) ।

असंयुक्तं प्रकरणादितिकर्तव्यतार्थित्वात् ॥ ११ ॥

चतुर्थाधिकरणमारचयति-

न क्रत्वङ्गं प्रयाजादि क्रत्वङ्गं वा न चाङ्गता ।

प्रक्रियाया अमानत्वान्नैराकाङ्क्ष्येण वाक्ययोः ॥ ९ ॥

प्रयाजादेः फलेऽपेक्षा कथंभावेऽपि च क्रतोः ।

तेन प्रकरणाम्नानं तस्मादङ्गाङ्गिता तयोः ॥ १० ॥

सार्धपादद्वये विनियोजकत्वेनोक्तानि यानि श्रुतिलिङ्गवाक्यानि, तेभ्योऽतिरिक्तं प्रकरणनामकं किंचित्प्रमाणं न वेदे पश्यामः । नहि पदतत्सामर्थ्यान्वयैरसंसृष्टः कश्चिद्वेदभागः केनचिदाम्नायते । एकवाक्यतामापन्नो वाक्यसमूहः प्रकरणम्-इति चेत् । न । वाक्ययोः सतोः पश्चादेकवाक्यताया अभावात् । न हि 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' 'समिधो यजति' इत्यनयोर्वाक्ययोः परस्पराकाङ्क्षाऽस्ति, येन वाक्यैकवाक्यता कल्प्येत । तस्मात्-न प्रयाजादीनां दर्शपूर्णमासाङ्गत्वम्-इति प्राप्ते,-

ब्रूमः-प्रयाजादयः फलहेतवः, पुरुषप्रवृत्तिरूपत्वात्, सेवादिवत् । दर्शपूर्णमासावुपकरणैरुपकार्यौ, करणत्वात्, प्रदीपोपकृतचक्षुर्वत् । तथा सति 'किं प्रयाजादेः फलम्, किंवा दर्शपूर्णमासयोरुपकरणम्' इत्याकाङ्क्षायां संपन्नवाक्यैकवाक्यतारूपं प्रकरणम् । तेन च प्रयाजादीनामङ्गत्वं प्रतीयते ॥ ९ ॥ १० ॥

( पञ्चमे क्रमस्य विनियोजकत्वाधिकरणे सूत्रम्- ) ।

क्रमश्च देशसामान्यात् ॥ १२ ॥

पञ्चमाधिकरणमारचयति-

दब्धिर्नामेति मन्त्रोऽङ्गमुपांशुयजतेर्न वा ।

साधारणत्वाल्लिङ्गादेर्मानाभावादनङ्गता ॥ ११ ॥

मन्त्राणां कर्मणां चात्र क्रमेणाऽऽम्नानमीक्ष्यते ।

प्रक्रियावत्क्रमो मानं यथासंख्यं ततोऽङ्गता ॥ १२ ॥

क्रमः समानदेशत्वं पाठादर्थाच्च पाठतः ।

यथासंख्यं संनिधिश्च यथासंख्यमुदाहृतम् ॥ १३ ॥

शुन्धत्वमिति सांनाय्यपात्राङ्गं संनिधेर्मतम् ।

पशुधर्मोऽयंसादेश्यादग्नीषोमीयतो भवेत् ॥ १४ ॥

---

१ ग. ङ. च. 'पन्नं वा' । २ ग. ङ. च. प्रमीयते । ३ ग. च. 'त्राणां सं' ।

दर्शपूर्णमासयोर्याजमाने—मन्त्रकाण्डे कश्चिन्मन्त्र आम्नायते—'दब्धिरस्यदब्धो भूयासम्, अमुं दभेयम्' इति। अस्य मन्त्रस्योपांशुयाजाङ्गतायां श्रुतिवाक्ये न विद्येते। ब्राह्मणे विनियोगमनाम्नायार्थविवरणस्यैवाऽऽम्नानात्। 'एतया वै दब्ध्या देवा असुरानदभ्नुवन्। तयैव भ्रातृव्यं दभ्नोति' इति ब्राह्मणम्। दब्धिर्धातुकमायुधम्। आग्नेयाग्नीषोमीययोरप्यनिष्टनिवारकत्वाल्लिङ्गं साधारणम्। प्रकरणं च त्रयाणामेकमेव। ततो मानाभावादयं मन्त्रो नोपांशुयाजाङ्गम्—इति प्राप्ते,—

ब्रूमः—आध्वर्यवे काण्ड आग्नेयोपांशुयाजाग्नीषोमीयकर्माणि क्रमेणाऽऽम्नातानि। याजमाने च काण्डे तद्विषया मन्त्राः क्रमेणाऽऽम्नाताः—'अग्नेरहं देवयज्ययाऽन्नादो भूयासम्', 'दब्धिरस्यदब्धो भूयासममुं दभेयम्', 'अग्नीषोमयोरहं देवयज्यया वृत्रहा भूयासम्' इति। तत्र यथा वाक्यद्वयानुसंधानसंपन्नं प्रकरणं पृथक्प्रमाणम्, तथा प्रकरणद्वयानुसंधानसंपन्नः क्रमः कुतो न मानं स्यात्। न ह्यस्य प्रकरणेऽन्तर्भावः। द्वयोर्वाक्ययोरिव प्रकरणयोरेकवाक्यत्वाभावात्। तस्मात्क्रमप्रमाणेन मध्यवर्तिन उपांशुयाजस्य मध्यवर्ती मन्त्रोऽङ्गम्। 'समानदेशत्वं क्रमः' इति क्रमस्य स्वरूपम्। तच्च द्विविधम्—पाठकृतमर्थकृतं च। तत्र पाठकृतमपि द्विविधम्—यथासंख्यं संनिधिश्चेति। तयोराद्यस्य दब्धिमन्त्र उदाहरणम्। "शुन्धध्वं दैव्याय कर्मणे"—इत्ययं मन्त्रः शोधनीयेषु वस्तुषु साधारणो भासते। तत्र सांनाय्यपात्राणि कुम्भीशाखापवित्रादीन्यनन्तरेषु 'मातरिश्वनः'—इत्यादिमन्त्रेष्ववभासन्त इति संनिधिना तत्पात्रप्रोक्षणे 'शुन्धध्वम्' इति मन्त्रो विनियुज्यते। अनुष्ठानसादेश्यात्पशुधर्माणामग्नीषोमीयाङ्गत्वम्। तदेवं क्रमस्य त्रैविध्यं द्रष्टव्यम् ॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥

(षष्ठे समाख्याया विनियोजकताधिकरणे सूत्रम्—)।

आख्या चैवं तदर्थत्वात् ॥ १३ ॥

षष्ठाधिकरणमारचयति—

वेदत्रयोक्तधर्माणामृत्विग्भिः संगतिस्त्रिभिः।
अनियत्या नियत्या वा नियतिर्नानिरूपणात् ॥ १५ ॥
हौत्रत्वादिसमाख्यानं नियतेर्गमकं स्वतः।
निर्बाधं चान्यवत्तच्च तेनात्र विनियोजकम् ॥ १६ ॥

याज्यापुरोनुवाक्यापाठादयो धर्मा ऋग्वेदे प्रोक्ताः। दोहननिर्वापादयो यजुर्वेदे। आज्यस्तोत्रपृष्ठस्तोत्रादयः सामवेदे। तत्र 'अस्यैवैते धर्माः' इति नियाम-

१ घ. च. °न्त्रेष्वाभा°। २ ग. च. °क्याद्°। ३ ङ. °पृष्ठाद°।

कस्य दुर्निरूपत्वाद्येन केनाप्यृत्विजा यः कोऽपि धर्म इच्छया संगच्छते—इति चेत् । मैवम् । 'हौत्रम्, आध्वर्यवम्, औद्गात्रम्' इति समाख्यानेन नियतिर्बोध्यते । न च समाख्यानस्य बाधकं किंचित्पश्यामः । तस्माद्बोधकत्वबाधितत्वयोरप्रामाण्यकारणयोरभावाच्छ्रुतिलिङ्गादिप्रत्यक्षवत्प्रमाणेन समाख्यानेन धर्मा व्यवस्थाप्यन्ते ॥ १५ ॥ १६ ॥

( श्रुत्यादीनां पूर्वपूर्वबलीयस्त्वाधिकरणेषु [ ७–१२ ] सूत्रम् ) ।

श्रुति-लिङ्ग-वाक्य-प्रकरण-स्थान-समाख्यानां समवाये पारदौर्बल्यमर्थविप्रकर्षात् ॥ १४ ॥

सप्तमा( श्रुतिप्राबल्या)धिकरणमारचयति--

ऐन्द्र्योपस्थीयतां वह्निरितीन्द्राग्न्योर्विकल्पनम् ।
समुच्चयो वोत शक्र एवाग्निः केवलोऽथवा ॥ १७ ॥
विकल्पः श्रुतिलिङ्गाभ्यां गुणावृत्त्या समुच्चयः ।
श्रुतिः शक्त्यनुसारेति शक्र एकोऽत्र लिङ्गतः ॥ १८ ॥
शक्तिरुक्ता श्रुतिः शीघ्रा लिङ्गं श्रुत्यनुमापकम् ।
नैराकाङ्क्ष्यात्मके बोधे श्रुत्याऽग्नौ केवले स्थितिः ॥१९॥

'ऐन्द्र्या गार्हपत्यमुपतिष्ठते ' इति श्रूयते । ' कदाचन स्तरीरसि नेन्द्र सश्चसि दाशुषे' इत्यसावृगैन्द्री । तत्रेन्द्रस्य प्रकाशनात् । 'भो इन्द्र, कदाचिदपि घातको न भवसि । किंत्वाहुतिं दत्तवते यजमानाय प्रीयसे ' इत्यर्थः । तत्र—इन्द्रप्रकाशनसामर्थ्यरूपाल्लिङ्गान्मन्त्रस्येन्द्रविषयक्रियासाधनत्वं गम्यते । यद्यसौ मन्त्र इन्द्रप्रधानकक्रियायाः साधको न भवेत् , तदानीमनेन मन्त्रेणेन्द्रप्रकाशनं व्यर्थं स्यात् । तस्मात् ' एतन्मन्त्रकरणकक्रियां प्रतीन्द्रः प्रधानम् ' इत्येतादृशबुद्ध्युत्पादनं लिङ्गविनियोगः । ' काऽसौ क्रिया ' इति विशेषजिज्ञासायाम् ' ऐन्द्र्योपतिष्ठते ' इत्यनेनाविरुद्धपदद्वयरूपेण वाक्येनोपस्थानक्रियायां पर्यवसानं क्रियते । तथा सति ' ऐन्द्रमन्त्रेणेन्द्रमुपतिष्ठेत' इत्ययमर्थः पर्यवस्यति । तथा ' गार्हपत्यम् ' इति द्वितीयान्तपदरूपया श्रुत्या गार्हपत्यस्य प्राधान्यं गम्यते । तच्च गुणभूतां यत्किंचित्करणकक्रियामन्तरेण न संभवति । ततः ' तादृशीं कांचित्क्रियां प्रति गार्हपत्यः प्रधानम् ' इत्येतादृशबुद्ध्युत्पादनं श्रुतिविनियोगः । ' ऐन्द्र्या, उपतिष्ठते ' इति पदद्वयेन मन्त्रविशेषक्रियाविशेषयोः पर्यवसानं भवति ।

---

१ ग. च. °त शब्दादेवा° । २ ग. च. साधनं । ३ ख. ग. च. विषयाभि° । ४ ख. °वस्यते । ५ ख. ग. ङ. च. इत्यनया द्वि° ।

तथा सति 'ऐन्द्रेण मन्त्रेण गार्हपत्यमुपतिष्ठते' इत्यर्थो भवति। तदेवं श्रुति-लिङ्गयोर्विरोधे सति प्रमाणत्वाविशेषाद्व्रीहियववद्विकल्पः—इत्येकः पूर्वपक्षः।

इन्द्रगार्हपत्ययोः प्रधानत्वाविशेषादुपस्थानस्य च गुणत्वात् 'प्रतिप्रधानं गुणः' इति न्यायेनोपस्थानावृत्त्या श्रुतिलिङ्गयोः समुच्चयः—इति द्वितीयः पूर्वपक्षः।

श्रुतिर्विनियुञ्जाना वस्तुसामर्थ्यमनुसृत्यैव विनियुङ्क्ते। अन्यथा 'वह्निना सिञ्चेत्' 'वारिणा दहेत्' इत्यपि विनियुज्येत। तत उपजीव्यत्वेन लिङ्गस्य प्रबलत्वादिन्द्र एव मन्त्रेणोपस्थेयः—इति तृतीयः पूर्वपक्षः।

ऐन्द्रमन्त्रस्य गार्हपत्ये मुख्यवृत्त्या शक्त्यभावेऽपि गौणवृत्त्या शक्तिरस्तीति 'निवेशनः'—इत्यस्मिन्नुदाहरणे पूर्वमेव दर्शितम्। तथा सति सामर्थ्याभावकृत-प्रतिबन्धाभावान्निर्विघ्ना श्रुतिः शीघ्रं विनियुङ्क्ते, लिङ्गं तु विलम्बते। मन्त्रप-दान्यादौ स्वाभिधेयमर्थं प्रतिपादयन्ति। तत ऊर्ध्वं मन्त्रस्य सामर्थ्यं निरूप्यते। पश्चात्तत्सामर्थ्यवशात्साधनत्ववाचिनी प्राधान्यवाचिनी च श्रुतिः कल्प्यते। सा च श्रुतिः 'मन्त्रेणेन्द्रमुपतिष्ठेत' इति विनियुङ्क्ते। तथा सति प्रत्यक्षश्रुतौ स्वाभिधे-यप्रतिपादनविनियोगयोर्मध्यवर्तिनौ सामर्थ्यनिरूपण—श्रुतिकल्पनव्यापारौ न स्त इति प्राबल्यात्तया लिङ्गं बाध्यते। न च—प्रत्यक्षश्रुतिविनियोगवेलायामलब्धा-त्मकत्वेनाप्राप्तं लिङ्गं कथं बाध्येत—इति शङ्कनीयम्। भविष्यत्प्राप्तिप्रतिबन्ध-स्यैवात्र बाधत्वात्। श्रुत्या विनियुक्तस्य मन्त्रस्य पुनर्विनियोगाकाङ्क्षाया अनुदयात्कथं विनियोजकं लिङ्गं प्राप्स्यति। तस्मात्—गार्हपत्योपस्थाने मन्त्रः प्रत्यक्षश्रुत्या विनियुज्यते॥ १८॥ १९॥

अष्टमा (वाक्याद्यपेक्षया लिङ्गस्य प्राबल्या) धिकरणमारचयति—

स्योनं त इति पूर्वार्धं तस्मिन्त्सीदेति चोत्तरम्।
सदने सादने चार्थं सर्वो बाऽधे व्यवस्थिते॥ २०॥
तच्छब्दादेकवाक्यत्वे भवेद्बाधः श्रुतिं प्रति।
लिङ्गस्य संनिकृष्टत्वाद्वाक्यैर्बाधे व्यवस्थितिः॥२१॥
उदाहृतिरियं वाक्यबाधे न त्वैन्द्रियेत्यसौ।
बाधादूर्ध्वं निरर्थत्वादप्रामाण्यप्रसङ्गतः॥ २२॥

दर्शपूर्णमासयोः श्रूयते—'स्योनं ते सदनं कृणोमि घृतस्य धारया सुशेवं कल्पयामि। तस्मिन्त्सीदामृते प्रतितिष्ठ व्रीहीणां मेध सुमनस्यमानः' इति। 'भोः पुरोडाश, तव समीचीनं स्थानं करोमि। तच्च स्थानं घृतस्य धारया सुष्ठु सेवितुं योग्यं कल्पयामि। भो व्रीहिसारभूत, त्वं समाहितमनस्कस्तस्मिन्स-

१ ख. ग. ङ. च गुणावृत्ति" इ°। २ ङ. °लम्बेन प्र°। ३ ख. ग. घ. बा। ४ ग. ङ. च. कल्प्यते। ५ ख. प्रथमं श्रुतिर्विनि°। ६ ख. बाधेत। ७क. °कस्यैव प्र°। ८ क. ख. ङ. °र्वोऽधार्थे। ९ख. °क्यस्य प्र°। ग. च. °क्यत्वं प्र°। १० ख. °क्यभेदे व्य°। ११ क. ग. च. सुशेवं।

मीचीने स्थान उपविश । तत्र स्थिरो भव' इत्यर्थः । तत्र—'तस्मिन्' इत्यनेन तच्छब्देन प्रकृतपरामर्शिना पूर्वोत्तरार्धयोरेकवाक्यत्वे सति मन्त्रद्वयाभावात्सर्वोऽप्ययं मन्त्रः स्थानकरणेऽङ्गं स्यात् । मन्त्रविनियोजिका श्रुतिरेवं कल्पनीया—'सर्वेणानेन मन्त्रेण स्थानं कर्तव्यम्' इति । तथा 'सर्वेण मन्त्रेण पुरोडाशः स्थापनीयः, इत्यपि कल्पनीया । सदनाङ्गत्ववत्प्रतिष्ठापनाङ्गत्वस्यापि तद्वाक्यबोधितत्वात् । तथा सति सदनस्थापनयोरस्य मन्त्रस्य विकल्पः समुच्चयो वा निजेच्छया भविष्यति—इति प्राप्ते,—

ब्रूमः—यदेतत्पूर्वोत्तरार्धयोः परस्परान्वयेन संपन्नमेकं वाक्यम्, तदेतदुत्तरार्धस्य सदनकरणे शक्तिमकल्पयित्वा कृत्स्नं मन्त्रं सदने विनियोक्तुं नार्हति । तथा पूर्वार्धस्य स्थापने शक्तिमकल्पयित्वा न तत्र प्रभवति । अतो लिङ्गकल्पनव्यवधानेन वाक्यं श्रुतिं प्रति विप्रकृष्यते । प्रत्यक्षं तु लिङ्गद्वयं संनिकृष्यते । तथा सति लिङ्गेन वाक्यबाधादर्धद्वयमुभयोर्व्यवस्थितम् । ननु-'ऐन्द्या गार्हपत्यम्' इत्यत्रापि पदद्वयान्वयरूपस्य वाक्यस्य विनियोजकत्वप्रतीतेर्लिङ्गवाक्यविरोधाय तदेवोदाह्रियताम्—इति चेत् । न । तत्र लिङ्गेन वाक्ये बाधिते सत्येकैकपदस्यार्थप्रत्यायकत्वाभावेन श्रुतिकृतविनियोगस्याप्यसिद्धेरप्रामाण्यमेवोदाहृतस्य प्रसज्येत । इह तु महावाक्ये बाधितेऽप्यवान्तरवाक्ययोरर्थप्रतीतौ लिङ्गविनियोगः सिध्यतीत्येतदेवोदाहरणम् ॥ २० ॥ २१ ॥ २२ ॥

नवमा( वाक्यस्य प्रकरणाद्यपेक्षया प्राबल्या )धिकरणमारचयति—

> अग्नीषोमाविदं हव्यमजुषेतामितीरितात् ।
> अपच्छिद्येदमित्यादिः सर्वशेषो भवेन्न वा ॥ २३ ॥
> प्रक्रियातो भवेन्मैवं प्रक्रियाऽन्तरिता त्रिभिः ।
> वाक्यं द्व्यन्तरितं तेन भवेत्प्रकरणाद्बलि ॥२४॥

सूक्तवाके श्रूयते—'अग्निषोमाविदं हविरजुषेताम्, अवीवृधेताम्, महो ज्यायोऽक्राताम् । इन्द्राग्नी इदं हविरजुषेताम्, अवीवृधेताम्, महो ज्यायोऽक्राताम्' इति । तत्र—देवतावाचकमग्नीषोमादिपदं पौर्णमास्यादिकाले यथादेवतं विभज्य प्रयोक्तव्यम्—इति पूर्वपादे निर्णीतम् । यत्तु 'इदं हविः'—इत्यादिकमवशिष्टं पदजातं, तदग्नीषोममन्त्रगतमप्यमावास्यायामग्नीषोमपदपरित्यागेन पठनीयम् । एवम्—इन्द्राग्निमन्त्रगतमपि पौर्णमास्यामिन्द्राग्निपदपरित्यागेन पठनीयम् । तथा सत्येषां मन्त्रभागानां सर्वशेषत्वबोधको दर्शपूर्णमासप्रकरणपाठोऽनुगृह्यते-इति प्राप्ते,

१ ख. ग. ङ. °रणस्याङ्गत्व° । २ क. °मेकवा° । ३ ख. ग. च. °तीरणा । अ° । ४ ख. ग. ङ. च. °न्द्राग्नी ।

ब्रूमः—अग्नीषोममन्त्रशेषस्येन्द्राग्निपदान्वयाश्रवणात्। प्रकरणेन प्रथमं तद-न्वयरूपं वाक्यं कल्पनीयम्। तेन च वाक्येनेन्द्रादिप्रकाशनसामर्थ्यरूपं लिङ्गं कल्प्यते। तच्च लिङ्गम् 'अनेन मन्त्रभागेणेन्द्राग्निविषयक्रियाऽनुष्ठेया' इति विनियोजिकां तृतीयाश्रुतिं कल्पयति। ततः प्रकरणविनियोगयोर्मध्ये त्रिभिर्व्यवधानं भवति। अग्नीषोमपदान्वयरूपं तु वाक्यं श्रूयमाणत्वाल्लिङ्गश्रुतिभ्यामेव व्यवधीयते। तस्माद्वाक्येन प्रकरणस्य बाधितत्वात्तच्छेषस्तत्रैव व्यवतिष्ठते ॥ २३ ॥ २४ ॥

दशमा(प्रकरणस्य क्रमाद्यपेक्षया प्राबल्या)धिकरणमारचयति—

राजसूयेऽभिषेच्यांख्ययागे ये देवनादयः।
तच्छेषास्तेऽखिलार्था वा तच्छेषास्तस्य संनिधेः ॥ २५ ॥
राजसूयकथंभावानुवृत्तेः सर्वशेषता।
कल्प्याकाङ्क्षाऽभिषेच्यस्य प्रक्रिया प्रबला ततः ॥ २६ ॥

राजसूये पश्चिष्टिसोमयागा बहवः प्रधानभूताः। तत्राभिषेचनीयाख्यः कश्चित्सोमयागः। तस्य संनिधौ देवनादयः श्रूयन्ते—'अक्षैर्दीव्यति। राजन्यं जिनाति। शौनःशेपमाख्यापयति' इति। जिनाति जयति। बह्वृचब्राह्मणे समाम्नातं शुनःशेपविषयमुपाख्यानं शौनःशेपम्। तत्र संनिधिबलाद्देवनादयोऽभिषेचनीयाङ्गम्—इति चेत्।

मैवम्। राजसूयस्य कथंभावाकाङ्क्षायामनुवृत्तायां विहिता देवनादयः प्रकरणेन राजसूयशेषाः। राजसूयश्च बहुयागात्मक इति तत्रत्यसर्वयागशेषत्वम्। न चाभिषेचनीयस्य काचिदाकाङ्क्षा देवनादिष्वस्ति। ज्योतिष्टोमविकृतित्वेनातिदिष्टैः प्राकृताङ्गैरेव तदाकाङ्क्षानिवृत्तेः। संनिहितविधिबलादाकाङ्क्षोत्थाप्यते—इति चेत्। अत एवाऽऽकाङ्क्षारूपमवान्तरप्रकरणमादौ परिकल्प्य तद्द्वारा वाक्यलिङ्गश्रुतिकल्पनया संनिधिर्विप्रकृष्यते। राजसूयाकाङ्क्षारूपं तु महाप्रकरणं क्लृप्तत्वादेकया कक्षया संनिकृष्यते। तस्मात्—प्रकरणेन संनिधिबाधात्सर्वशेषा देवनादयः ॥ २५ ॥ २६ ॥

एकादशा(क्रमस्य समाख्यापेक्षया प्राबल्या)धिकरणमारचयति—

शुन्धध्वमिति मन्त्रोऽङ्गं पौरोडाशिकशोधने।
सांनाय्यपात्रशुद्धौ वा प्रथमोऽस्तु समाख्यया ॥ २७ ॥
पौरोडाशिकमित्यत्र प्रकृत्या तद्धितेन वा।
संनिध्यनुक्तितः कल्प्यः क्लृप्तत्वाच्चरमः क्रमात् ॥ २८ ॥

१ ख. ग. ङ. च. °षया क्रि°। २ ग. च. °तत्तच्छेषस्तत्र तत्रै°। ३ क. °च्याख्ये या°। ४ ग. च. तत्संनि°। ५ ग. च. °स्य कदाचि°। ६ ख. °याऽऽकाङ्क्षया। ७ क. मन्त्रेण पौ°। ङ. °मन्त्रोऽयं पौ°। ८ ख. प्रकृता।

'शुन्धध्वं दैव्याय कर्मणे' इत्ययं मन्त्रः 'पौरोडाशिकम्' इति याज्ञिकैः समाख्याते काण्डे पठितत्वात्समाख्यया पुरोडाशकाण्डोक्तानामुलूखलजुह्वादीनामपि शोधनेऽङ्गम्-इति चेत्। नैवम्। 'पौरोडाशिकम्' इति समाख्यायां प्रकृतिः पुरोडाशमात्रमभिधत्ते। तद्धितप्रत्ययश्च काण्डम्। न चैतावता कृत्स्नपुरोडाशपात्राणां मन्त्रसंनिधिः प्रत्यक्षो भवति, किंत्वर्थापत्त्या कल्प्यते। यद्युक्तसंनिधिर्न स्यात्, तदा मन्त्रप्रतिपादकग्रन्थस्य पौरोडाशिकसमाख्या न स्यात्। न ह्यन्यसंनिहितानाम् 'इषे त्वा-'दिमन्त्राणामाग्नेयकाण्डसमाख्या भवति। संनिहितानां तु 'युञ्जानः प्रथमं मनः'-इत्यादिमन्त्राणां भवत्येषा समाख्या। तस्मात्-काण्डसमाख्यया संनिधिं परिकल्प्य तत्संनिध्यन्यथाऽनुपपत्त्या परस्पराकाङ्क्षारूपं कृत्स्नं पात्रप्रकरणं कल्पयित्वा तद्द्वारा वाक्यलिङ्गश्रुतीः कल्पयित्वा तया श्रुत्या विनियोग इति समाख्याया विप्रकर्षः। सांनाय्यपात्राणां शोधने मन्त्रसंनिधिस्तु प्रत्यक्षः। इध्माबर्हिःसंपादनस्य मुष्टिनिर्वापस्य चान्तराले सांनाय्यपात्राणां देश उक्तः। मन्त्रश्चेध्माबर्हिर्निर्वापविषययोर्मन्त्रानुवाकयोर्मध्येऽनुवाके पठ्यते। तेन च प्रत्यक्षसंनिधिना प्रकरणादीनां चतुर्णामेव कल्पनात्संनिधिः संनिकृष्यते। तस्मात्-क्रमेण समाख्यां बाधित्वा 'सांनाय्यपात्रशोधनशेषो मन्त्रः' इत्ययं चरमः पक्षोऽभ्युपेयः॥ २७॥ २८॥

द्वादशा(बाधयोग्यता)धिकरणमारचयति-

बाधो न युक्तो युक्तो वा प्राप्त्यप्राप्त्योर्न युज्यते।
अप्रवृत्तं प्रसक्तं यद्धिया तस्यास्तु बाध्यता॥ २९॥
प्रमाणतः प्रसक्तस्य बाधो दाशमिकोऽत्र तु।
विभ्रमेण प्रसक्तस्य तस्मादभ्रान्तबाधनम्॥ ३०॥

प्राप्तस्य प्रवृत्तिरस्तीति न तन्निवारणं शक्यम्। अप्राप्तस्य बाधविषयत्वेनावस्थानमेव नास्ति। तस्मात्-न युक्तो बाधः-इति चेत्। नैवम्। बुद्ध्या विषयीकृतस्य वारयितुं शक्यत्वात्। न चैतदत्यन्तं प्रवृत्तम्। अनुष्ठानरूपफलपर्यवसानाभावात्। नाप्यत्यन्तमप्रवृत्तम्। तद्बुद्धेरुत्पन्नत्वात्। अतो नोक्तदोषद्वयम्। दशमे चोदकप्रमाणेनावबुद्धोऽर्थो बाध्यत इति प्रासङ्गिकः। इह तु पूर्वपूर्वप्रमाणाविरुद्धैरुत्तरोत्तरैः प्रमाणाभासैरवबुद्धस्यैवार्थस्य प्राप्तबाधः॥२९॥३०॥

१ ख. ग. च. °युक्तः सं°। २ ग. च. °ग्रन्थे पौ°। ३ ख. ग. च. °पेतव्यः। द्वा°। ४ ग. च. विशेषणाप्र°। ५ क. ख. ग. °स्तीतिति। ६ क. ख. °ह्यन्ते प्र°। ७ क. ग. ङ. च. पर्यव°।

( त्रयोदशे द्वादशोपसत्ताया अहीनाङ्गताधिकरणे (अहीनन्याये) सूत्रे-
१५-१६ )।

अहीनो वा प्रकरणाद्गौणः ॥ १५ ॥ असंयोगात्तु
मुख्यस्य तस्मादपकृष्येत ॥ १६ ॥

त्रयोदशाधिकरणमारचयति-

तिस्र एव हि साह्ने स्युरहीने द्वादशेत्यतः ।
ज्योतिष्टोमे द्वादशत्वमथवाऽहर्गणे भवेत् ॥ ३१ ॥
अस्तु प्रकरणादाद्यो नाहीनत्वं विरुध्यते ।
प्रकृतित्वान्न केनापि हीनोऽतोऽत्र विकल्प्यताम् ॥३२॥
साह्नाद्भिन्नाऽहीनसंज्ञा रूढेषाऽहर्गणे[१] भवेत् ।
षष्ठीश्रुत्या द्वादशत्वं प्रक्रियातोऽपकृष्यताम् ॥ ३३ ॥

ज्योतिष्टोमप्रकरणे श्रूयते-'तिस्र एव साह्नस्योपसदो द्वादशाहीनस्य' इति । एकेनाह्ना निष्पाद्यत्वात्साह्नो ज्योतिष्टोमः । दीक्षादिवसादूर्ध्वं सोमाभिषव-दिवसात्पूर्वं कर्तव्या होमा उपसदः । तासां द्वादशत्वं प्रकरणबलाज्ज्योतिष्टोमे निर्विशते[२]। अहीनशब्दश्च तस्मिन्नेव कल्पते। ज्योतिष्टोमस्य निखिलसोमयागप्रकृतित्वेन सर्वेषामङ्गानां तत्रोपदेशे सति तदुपदेशविकलविकृतीनामिव[३] हीनत्वाभावात् । अतो द्वादशत्वत्रित्वयोर्विकल्पः-इति प्राप्ते,-

ब्रूमः-आवृत्तसोमयागरूपो द्विरात्रत्रिरात्रादिरहर्गणः[४] । तस्मिन्नहीनशब्दो रूढः । यौगिकत्वे तु 'न हीनः' इति विगृह्य समासे कृते सत्यमज्ञादिशब्दवदाद्युदात्तः स्यात् । मध्योदात्तस्त्वाम्नायते । रूढिश्च विग्रहनिरपेक्षत्वाच्छीघ्रबुद्धिहेतुः । अतो ज्योतिष्टोमवाचिनः साह्नशब्दाद्भिन्नेयमहीनसंज्ञा ज्योतिष्टोमाद्भिन्नमहर्गणमभिधत्ते । तस्मिन्नहर्गणे षष्ठीश्रुत्या तदुक्तं द्वादशत्वं निवेश्यते । तत्सिद्धये प्रकरणादिदमपनेतव्यम् ॥ ३१ ॥ ३२ ॥ ३३॥

( चतुर्दशे कुलायादौ प्रतिपदोरुत्कर्षाधिकरणे सूत्राणि १७-१९)।

द्वित्वबहुत्वयुक्तं वा चोदनात्तस्य ॥ १७ ॥
पक्षेणार्थकृतस्येति चेत् ॥ १८ ॥ न प्रकृतेरेकसंयोगात् ॥ १९ ॥

चतुर्दशाधिकरणमारचयति-

१ ग. च. °णेऽत्र तत् । २ ग. च. निर्वेशिते । ३ ङ. °नामेव हीनत्वात् । ४ ङ. °रात्रादि° ।

युवं हीति द्वयोः कर्त्रोर्बहूनां चैत इत्यमूम् ।
कुर्यात्प्रतिपदं ज्योतिष्टोमे साहर्गणेऽथवा ॥ ३४ ॥
एकस्य शक्तिराहित्ये द्वाभ्यां बहुभिरेव वा ।
ज्योतिष्टोमस्य कार्यत्वात्प्रकृतेऽत्रैव सा भवेत् ॥ ३५ ॥
यजमानस्य नानात्वं साक्षाद्विकृतिषु श्रुतम् ।
उत्कृष्य प्रतिपत्तेन कुलायादिषु नीयताम् ॥ ३६ ॥

ज्योतिष्टोमे श्रूयते-'युवं हि स्थः स्वर्पती'-इति द्वयोर्यजमानयोः प्रतिपदं कुर्यात् । एते असृग्रमिन्दवः'-इति बहुभ्यो यजमानेभ्यः' इति । स्तोत्रस्योपक्रमे पठनीयामृचं प्रतिपच्छब्दोऽभिधत्ते । सा चोदाहृता प्रतिपत्प्रकरणाज्ज्योतिष्टोमे निविशते । न च तत्र यजमानद्वित्वबहुत्वयोरसंभवः । एकस्य यजमानस्य द्रव्यलाभादिना तदशक्तौ नित्यकर्मणः परित्यागासंभवेन द्वाभ्यां बहुभिर्वा तस्यावश्यकर्तव्यत्वात्-इति प्राप्ते,-

ब्रूमः-यजमानद्वित्वं कुलायनामके यज्ञे साक्षादाम्नातम्-'एतेन राजपुरोहितौ सायुज्यकामौ यजेयाताम्' इति । यजमानबहुत्वं सत्रेष्वाम्नातम्-'चतुर्विंशतिपरमाः सत्रमासीरन्' इति । ततो द्विशब्दबहुशब्दरूपाभ्यां श्रुतिभ्यां प्रकरणं बाधित्वा कुलायादिषु यथोक्तप्रतिपदोरुत्कर्षः कर्तव्यः । न चाशक्तावपि यजमानद्वित्वबहुत्वे संभवतः । अशक्तेन स्वीकृतस्य पुरुषान्तरस्य प्रतिनिधित्वे यजमानत्वाभावात् । 'यजमानस्य प्रतिनिधिर्नास्ति' इति वक्ष्यते । यद्यन्यः पुरुषः स्वयमेव प्रवर्तते तदानीं स्वकीयमेव प्रयोगं कुर्यात्, नत्वशक्तस्य साहाय्यमाचरेत् । तस्मात्-श्रूयमाणस्य यजमानैकत्वस्य कालादिवदनुपादेयाङ्गत्वेन त्यक्तुमशक्यत्वान्न ज्योतिष्टोमे यजमानस्य द्वित्वबहुत्वे संभवतः ॥३४॥३५॥३६॥

(पञ्चदशे जाघन्या अनुत्कर्षाधिकरणे सूत्राणि २०-२३) ।

जाघनी चैकदेशत्वात् ॥ २० ॥ चोदना वाऽपूर्वत्वात् ॥ २१ ॥ एकदेश इति चेत् । ॥ २२ ॥ न प्रकृतेरशास्त्रनिष्पत्तेः ॥ २३ ॥

पञ्चदशाधिकरणमारचयति-

---

१ ख. ग. च. °रणबलाज्ज्योति° । २ क. °जन्यपु° । ३ ङ. °त्वं मन्त्रेष्वा° । ४ क. °र्भो स्वीय° ।

संयाजयन्ति जाघन्या पत्नीरेतत्पशावुत।
दर्शादौ तत्पशौ युक्तं जाघन्याः समवायतः॥ ३७॥
जाघनी नाम भागोऽसौ दर्शादौ समवैति हि।
नोत्कष्टव्यं न संस्कार्या साधनत्वात्तृतीयया॥ ३८॥

दर्शपूर्णमासप्रकरणे श्रूयते—'जाघन्या पत्नीः संयाजयन्ति' इति। जाघनी पशोः पुच्छम्। पत्नीशब्दोऽत्राऽऽहुतिचतुष्टयात्मकस्य कर्मणो नामधेयैकदेशः। अत एव श्रूयते—'पञ्च प्रयाजा इज्यन्ते, चत्वारः पत्नीसंयाजाः' इति। तत्र तृतीयाहुतौ देवपत्नीनां देवतात्वात्तद्द्वारा कर्मनाम्नः पत्नीसंयाजशब्दस्य प्रवृत्तिः। तत्र जाघनीमुद्दिश्य पत्नीसंयाजसंस्कारो विधीयते। जाघनी च पशौ समवेता न तु दर्शपूर्णमासयोः। अतः प्रकरणादुत्कृष्य पशौ निवेशनम्—इति प्राप्ते,—

ब्रूमः—जाघनीशब्देन पशोर्भागोऽभिधीयते। स च दर्शपूर्णमासयोः पश्वयागत्वाभावेऽपि क्रयादिना संपादयितुं शक्यते। न चात्र पशौ विद्यमानायां जाघन्यां पत्नीसंयाजैः संस्कार्यत्वम्। तृतीयया साधनत्वावगमात्। तस्मात्—न प्रकरणादुत्कर्षः॥ ३७॥ ३८॥

( षोडशे संतर्दनस्य संस्थानिवेशाधिकरणे सूत्राणि २४—३१ )।

संतर्दनं प्रकृतौ क्रयणवदनर्थलोपात्स्यात्॥ २४॥
उत्कर्षो वा ग्रहणाद्विशेषस्य॥ २५॥ कर्तृतो वा
विशेषस्य तन्निमित्तत्वात्॥ २६॥ क्रतुतो वाऽर्थ-
वादानुपपत्तेः स्यात्॥ २७॥ संस्थाश्च कर्तृवद्धार-
णार्थाविशेषात्॥ २८॥ उक्थ्यादिषु वाऽर्थस्य
विद्यमानत्वात्॥ २९॥ अविशेषात्स्तुतिर्व्यर्थेति
चेत्॥ ३०॥ स्यादनित्यत्वात्॥ ३१॥

षोडशाधिकरणमारचयति—

संतृद्येद्दीर्घसोमे तत्प्रकृतौ विकृतावुत।
दीर्घस्य सोम इत्युक्ते प्रकृतावस्तु तर्दनम्॥ ३९॥
सामानाधिकरण्यस्य षष्ठीतो बलवत्त्वतः।
दैर्घ्ययुक्तोक्थ्यसंस्थादावुत्कर्षोऽन्यत्र बाधनात्॥ ४०॥

१ क, ख. इत्यन्ते। २ ख. ग. ङ. च. °नाया जाघन्याः प°। ३ क, ख. दर्शनम्।

ज्योतिष्टोमे श्रूयते—‘दीर्घसोमे संतृद्ये+धृत्यै’ इति । सोमयागविशेषो दीर्घसोमः । तस्मिन्सोमाभिषवाधारयोरधिषवणफलकयोः संतर्दनं कार्यम् । अन्योन्यवियोगेन शैथिल्यं मा भूदिति दृढसंश्लेषः संतर्दनम् । तदेतत्प्रकरणबलात्प्रकृतौ निविशते । न च तत्र दीर्घसोमत्वानुपपत्तिः । ‘दीर्घस्य सोमः’ इत्येवं दीर्घशब्दस्य यजमानविशेषणत्वेनाप्युपपत्तेः—इति प्राप्ते—

ब्रूमः—‘षष्ठीसमासात्कर्मधारयो बलीयान्’ इति (निषादस्थपत्यधिकरणे) वक्ष्यते। तथा सति दीर्घत्वं सोमस्य धर्मः, न तु यजमानस्य । नन्वेवमपि प्रकृतिभूतस्य सोमस्येष्टिपश्वपेक्षया दीर्घत्वमस्त्येव—इति चेत् । न । सोमशब्देनैव तदवगतौ दीर्घशब्दस्य वैयर्थ्यात् । न हीष्टिपश्वपेक्षया ह्रस्वः कश्चित्सोमोऽस्ति, यस्य व्यावृत्तये दीर्घशब्दः प्रयुज्येत । तस्मात्प्रकृतिरूपं ह्रस्वं सोमं व्यावर्तयितुमयं दीर्घशब्दः । विकृतिषूक्थ्यादिषु ग्रहाधिक्याद्दीर्घत्वम् । द्विरात्रादिषु चाऽऽवृत्त्या दीर्घत्वम् । तस्माद्वाक्येन प्रकरणं बाधित्वा विकृतिषु तन्निवेशः । प्रकृतौ तु दीर्घशब्दस्य बाधः पूर्वमुक्तः । संतर्दनबाधश्च साक्षाच्छ्रूयते—‘हनू वा एते यज्ञस्य यदधिषवणे न संतृणत्ति, असंतृण्णे हि हनू’ इति । तस्मात्—न प्रकृतौ निवेशः ॥ ३९ ॥४०॥

( सप्तदशे प्रवर्ग्यनिषेधाधिकरणे सूत्रे ३२—३३ ) ।

संख्यायुक्तं क्रतोः प्रकरणात्स्यात् ॥ ३२ ॥ नैमित्तिकं वा कर्तृसंयोगाल्लिङ्गस्य तन्निमित्तत्वात् ॥ ३३ ॥

सप्तदशाधिकरणमारचयति—

न प्रवृञ्ज्यादाद्ययज्ञे क्रतौ सोऽनुष्ठितावुत ।
प्रतिषेधः क्रतौ युक्त उक्ता ह्यस्याऽऽद्ययज्ञता ॥ ४१ ॥
प्रवृणक्त्युपसद्भ्यः प्रागिति वाक्यात्क्रतौ विधेः ।
आद्यप्रयोगे प्राथम्यान्निषेधः क्वचिदेव सः ॥ ४२ ॥

ज्योतिष्टोमे प्रवर्ग्याख्यं कर्म प्रकृत्य श्रूयते—‘न प्रथमयज्ञे प्रवृञ्ज्यात्’ इति । सोऽयं प्रतिषेधो ज्योतिष्टोमक्रतौ द्रष्टव्यः’ न तु तदीयप्रथमप्रयोगे । कुतः । ‘एष

+ ‘संतृन्यात’ इति शाबरभाष्यपाठः साधीयान् ।

१ ख. ग. ङ. °विक्येन दीर्घ° । २ ग. च. °वृञ्ज्याद्दप° ।

यव प्रथमो यज्ञो यज्ञानां यज्ज्योतिष्टोमः' इति तस्य प्रथमयज्ञत्वाभिधानात्-इति चेत् मैवम्। 'पुरस्तादुपसदां प्रवर्ग्येण प्रवृणक्ति' इति वाक्येन क्रतौ प्रवर्ग्यस्य विहितत्वात्। न च विधिनिषेधवाक्ययोः समानबलत्वादनिर्णयः। निषेधवाक्ये प्रथमशब्देन निषेधस्य प्रयोगपरत्वनिर्णयात्। प्रथमद्वितीयादिशब्दाः क्रियाया आवृत्तौ मुख्याः, तत्संबन्धाद्वस्तुषूपचर्यन्ते। प्रथममध्येतव्यत्वात्प्रथमं काण्डम्, तदनन्तरमध्येतव्यत्वाद्द्वितीयं काण्डम्। एवम्-आदावुत्पन्नत्वात्प्रथमः पुत्रः, तदनन्तरमुत्पन्नत्वाद्द्वितीयः। तथा सति प्रयोगक्रियाया आवृत्तिविशेषे प्रथमशब्दो मुख्यः। तदावृत्तिविषयतया यज्ञे लाक्षणिकः। त्वत्पक्षेऽपि क्रतौ मुख्यो यज्ञशब्दः, प्रयोगे लाक्षणिकः स्यात्-इति चेत्। बाढम्। तथाऽप्यसंजातविरोधिनि लाक्षणिकत्वकल्पनादुत्तरपदे तत्कल्पनम्। तस्माज्ज्योतिष्टोमस्य प्रथमप्रयोगे प्रवर्ग्यनिषेधः। ननु-सप्तसंस्थायुक्तस्य ज्योतिष्टोमस्य प्रथमसंस्थारूपोऽग्निष्टोमः, तत्रायं निषेधः पर्यवस्यति। विधिश्च तत्र श्रूयते-'अग्निष्टोमे प्रवृणक्ति' इति। एवं तर्ह्यधिकारिभेदेन विधिनिषेधयोर्व्यवस्थाऽस्तु। तथा हि श्रूयते-'कामं तु योऽनूचानः स्यात्, तस्य प्रवृञ्ज्यात्' इति। तस्मात्-अनूचानव्यतिरिक्तकर्तृकेऽग्निष्टोमप्रथमप्रयोग एवायं निषेधः॥ ४१॥ ४२॥

( अष्टादशे पौष्णपेषणस्य विकृतौ विनियोगाधिकरणे सूत्रम्- )।

पौष्णं पेषणं विकृतौ प्रतीयेताचोदनात्प्रकृतौ॥ ३४॥

अष्टादशाधिकरणमारचयति-

प्रपिष्टभागः पूषेति प्रकृतौ विकृतावुत।
दृष्टिप्रकरणादेव प्रकृतावितिं युज्यते॥ ४३॥
श्रौतर्दन्नादिवद्वाक्याद्विकृतौ पूषसंभवात्।
सिद्धस्य पुनरुक्तिरपिकस्य विवक्षया॥ ४४॥

दर्शपूर्णमासप्रकरणे श्रूयते-'तस्मात्पूषा प्रपिष्टभागोऽदन्तको हि' इति। तत्र-दन्तरहितस्य पूष्णः पिष्टभागत्वं संवर्धनमतिसिद्धादिवतितव्यम्। तथाऽप्युत्तरा*धिकरणे तस्मिन्नेव विषये विशेषं वक्तुमिह प्रस्तूयते॥ ४३॥ ४४॥

---

* जातविकल्पवचनम्।

---

१ ग. च. °मो यज्ञा°। २ क. °न प्र°। ३ ग. च. °षेऽयं प्र°। ४ ख. °शे तु ला°। ५ ग. च. °कारभे°। ६ ख. ग. ङ. च. °कृतौ विनियु°। ७ क. ख. ग. च °रणेषु त°।

(एकोनविंशे पौष्णपेषणस्य चरावेव निवेशाधिकरणे-सूत्राणि ३५-३८)।

तत्सर्वार्थमविशेषात् ॥ ३५ ॥ चरौ वाऽर्थोक्तं पुरोडाशेऽर्थविप्रतिषेधात्पशौ स्यात् ॥ ३६ ॥ चरावपीति चेत् ॥३७॥ न पक्तिनामत्वात्॥३८॥

एकोनविंशाधिकरणमारचयति-

चरौ पशौ पुरोडाशे चरावेवोत पेषणम् ।
विशेषादर्शनादेतत्सर्वेष्वपि विधीयते ॥ ४५ ॥
प्राप्तत्वान्न पुरोडाशे हृदाद्याकारनाशनात् ।
न पशौ पारिशेष्येण चरावेव हि पेषणम् ॥ ४६ ॥

'पौष्णं चरुमनुनिर्वपेत्' इति चरुर्विहितः । 'पौष्णं श्याममालभेतान्नकामः' इति पशुविधिः । 'पशुमालभ्य पुरोडाशं निर्वपति' इत्येतच्चोदकेन पौष्णपशौ प्राप्तम् । तत्र-'यद्देवत्यः पशुस्तद्देवत्यः पुरोडाशः' इति न्यायेन पुरोडाशस्य पूषा देवता । तत्र पूर्वोक्तं पेषणं विषयीकृत्योच्यमानाः संशयपूर्वोत्तरपक्षा विस्पष्टाः ॥ ४५ ॥ ४६ ॥

( विंशे पौष्णपेषणस्यैकदेवत्ये निवेशाधिकरणे सूत्राणि ३९-४६ )।

एकस्मिन्नेकसंयोगात् ॥ ३९ ॥ धर्मविप्रतिषेधाच्च ॥ ४० ॥ अपि वा सद्वितीये स्याद्देवतानिमित्तत्वात् ॥ ४१ ॥ लिङ्गदर्शनाच्च ॥ ४२ ॥ वचनात्सर्वपेषणं तं प्रति शास्त्रवत्त्वादर्थाभावाद्द्विचरावपेषणं भवति ॥ ४३ ॥ एकस्मिन्वाऽर्थधर्मत्वादैन्द्राग्नवदुभयोर्न स्यादचोदितत्वात् ॥ ४४ ॥ हेतुमात्रमदन्तत्वम् ॥ ४५ ॥ वचनं परम् ॥ ४६ ॥

विंशाधिकरणमारचयति-

द्विदेवकेऽपि किं पिंष्यादुत पूषैकदैवके ।
द्विदेवकेऽपि तत्पूष्णः सत्त्वात्पेषणभागिनः ॥ ४७ ॥
देवता विफलत्वेन पेषणं न प्रयोजयेत् ।
यागस्य तत्त्वे भागोक्तेर्न यागान्तरगामि तत् ॥ ४८ ॥

---

१ ग. च. चरुं नि° । २ ग. च. °त्र तावत्-' य° । ३ ग. तेन ।

राजसूये श्रूयते—'सौमापौष्णं चरुं निर्वपति, ऐन्द्रापौष्णं चरुम्' इति। तत्र द्विदेवकेऽपि चरौ पिष्टभाजः पूष्णः सत्त्वात्तत्पेषणं पूषार्थं कर्तव्यम्—इति चेत्। तत्र वक्तव्यम्—किं पेषणस्य देवता प्रयोजिका, किंवा यागः। नाऽऽद्यः। याग-मन्तरेण केवलदेवता फलजनकत्वाभावेन पेषणं प्रयोक्तुं न प्रभवति। पौष्णस्य यागस्य पेषणप्रयोजकत्वे तु तत्पेषणं द्विदेवके यागान्तरे गन्तुं नार्हति। —'पूषा प्रपिष्टभागः' इत्यत्र यागो न श्रुतः—इति चेत्। मैवम्। भागशब्दान्यथानुपपत्त्या यागस्य कल्प्यत्वात्। नहि देवतात्वमन्तरेण पिष्टद्रव्यभाक्त्वं सिध्यति। सति च देवतात्वे द्रव्यदेवतयोर्लाभाद्यागः कल्प्यते। तस्मात्—एकदेवकयागस्य पेषणप्रयो-जकत्वात्, न द्विदेवकयागे पेषणमस्ति॥ ४७॥ ४८॥

इति श्रीमाधवीये जैमिनीयन्यायमालाविस्तरे

तृतीयाध्यायस्य तृतीयः पादः॥ ३॥

| | अत्र पादे | आदितः। |
|---|---|---|
| अधिकरणानि | २० | १४३। |
| सूत्राणि | ४६ | ४०५। |

---

(अथ तृतीयाध्यायस्य चतुर्थः पादः)।

(प्रथमे निवीतस्यार्थवादत्वाधिकरणे सूत्राणि १—९)।

निवीतमिति मनुष्यधर्मः शब्दस्य तत्प्रधान-त्वात्॥ १॥ अपदेशो वाऽर्थस्य विद्यमान-त्वात्॥ २॥ विधिस्त्वपूर्वत्वात्स्यात्॥ ३॥ स प्रायात्कर्मधर्मः स्यात्॥ ४॥ वाक्यशेष-त्वात्॥ ५॥ तत्प्रकरणे यत्तत्संयुक्तमविप्र-तिषेधात्॥ ६॥ तत्प्रधाने वा तुल्यवत्प्रसंख्या-नादितरस्य तदर्थत्वात्॥ ७॥ अर्थवादो वा प्रकरणात्॥ ८॥ विधिना चैकवाक्यत्वात्॥ ९॥

चतुर्थपादस्य प्रथमाधिकरणमारचयति—

१ ग. च. °ति। 'नान्त्यः' पौ°। २ ख. °ष्टदेवत्वाक्यं सि°।

निवीतं तु मनुष्याणां विधिर्वैशेषोऽर्थवादकः ।
अपूर्वत्वात्प्रकरणात्तुः क्रतोर्वा विधीयते ॥ १ ॥
प्राप्तं निवीतं मर्त्येषु प्रायेणैतस्य दर्शनात् ।
उपवीतविधावेकवाक्यत्वादर्थवादता ॥ २ ॥

दर्शपूर्णमासप्रकरणे श्रूयते—' निवीतं मनुष्याणाम् । प्राचीनावीतं पितृणाम् । उपवीतं देवानाम् । उपव्ययते देवलक्ष्ममेव तत्कुरुते ' इति । तत्र—निवीतस्य पूर्वं मानान्तरेणाप्राप्तत्वाद्विधेयत्वमभ्युपेतव्यम् । तच्च निवीतं ' मनुष्याणाम् ' इतिषष्ठ्या पुरुषार्थत्वेन विधीयते—इत्येकः पूर्वपक्षः । अस्मिन्पक्षे मनुष्यसंबन्धो द्विविधः—सुवर्णधारणवत्सर्वपुरुषसंबन्धः, इत्येकः प्रकारः । ' उपवीतप्राचीनावीतयोः क्रतुप्रवेशरहितयोः स्वतन्त्रदैविकपैतृककर्मणोरपि दर्शनात्तत्साहचर्येण स्वतन्त्र आचार्यातिथ्यादिमनुष्यविषये कर्मणि निवीतम् ' इत्यपरः प्रकारः । प्रकरणबलात्प्रयाजादिवद्यागधर्मः—इति द्वितीयः पूर्वपक्षः । अस्मिन्पक्षे मनुष्यग्रहणं कर्तृसंबन्धानुवादः । ' षष्ठीश्रुतिप्रकरणयोरविरोधादुभयावलम्बनेन क्रतुसंबन्धिमनुष्यधर्मः ' इति पक्षान्तरमुदेति । तच्च द्विविधम्—' लोहितोष्णीषादिवदृत्विग्धर्मः, इत्येकः प्रकारः । ' क्रतावेव यन्मनुष्यप्रधानं कर्मान्वाहार्यदानादि, तद्धर्मत्वे सत्युपवीतसाहचर्यमप्यनुगृह्यते ' इत्यपरः । सर्वथाऽपि निवीतं नार्थवादः—इति प्राप्ते,—

ब्रूमः—अत्र प्रतीयमानं निवीतादिकं वासोविषयम्, न तु त्रिवृत्सूत्रविषयम् । ' अजिनं वासो वा दक्षिणत उपवीय ' इत्यनेन सदृशत्वात् । वस्त्रस्य च निवीतं सौकर्याय प्राप्तम् । प्राचीनावीतोपवीतयोरवश्यमेकस्मिन्पार्श्वे वस्त्रमधः पतेत् । अतः प्राप्तेऽर्थे ' मनुष्याणाम् ' इति षष्ठीश्रुतिर्न विधायिका । न च प्रकरणात्क्रत्वङ्गत्वेन विधिः । वाक्यभेदप्रसङ्गात् । उपवीतं तावद्विधीयते । अन्यथा ' देवलक्ष्ममेव तत्कुरुते ' इति प्रशंसावैयर्थ्यापत्तेः । तस्मिंश्चोपवीतविधावर्थवादत्वेन निवीतप्राचीनावीतयोरेकवाक्यत्वसंभवे पृथग्विधानमयुक्तम् । निवीतप्राचीनावीते मनुष्यपितृविषयत्वाद्दैविके कर्मण्ययोग्ये, उपवीतं तु योग्यम्—इति व्यतिरेकमुखेन स्तावकं निवीतम् । तस्मात्—अर्थवादः ॥ १ ॥ २ ॥

( द्वितीये, उपवीतस्य दर्शपूर्णमासाङ्गताधिकरणे सूत्रे १०—११)।

उपवीतं लिङ्गदर्शनात्सर्वधर्मः स्यात् ॥ १० ॥

१ ग, ख. 'तत्प्राचीनावीतप्रा' । २ ङ. 'साया वे' ।

न वा प्रकरणात्तस्य दर्शनम् ॥ ११ ॥

द्वितीयाधिकरणमारचयति—

सर्वार्थमुत दर्शार्थमुपव्ययत इत्यदः ।
सर्वार्थमाग्निहोत्रे स्यादुपवीतीति लिङ्गतः ॥ ३ ॥

दर्शाद्यर्थं प्रकरणाल्लिङ्गं स्यात्सिद्धिरन्यथा ।
दोहं मृताग्निहोत्रस्य स्तोतुमेतदनूदितम् ॥ ४ ॥

'यज्ञोपवीती हि देवेभ्यो दोहयति' इत्येवमग्निहोत्रे यज्ञोपवीतस्य सिद्धवदनुवादेन लिङ्गेन सर्वकर्मार्थमुपवीतम्—इति चेत् ।

न । लिङ्गस्यान्यथोपपत्तेः । मृताग्निहोत्रं तस्मिन्दिनेऽन्येन हूयते । तत्र 'प्राचीनावीती दोहयेत्' इति विधाय तस्य स्तुतये 'यज्ञोपवीती'—इत्याद्यनूदितम् । अतो लिङ्गाभासेन बाधासंभवात्प्रकरणाद्दर्शपूर्णमासाङ्गमुपवीतम् ॥३॥४॥

( तृतीये, उपवीतस्य विधित्वाधिकरणे सूत्रम् ) ।

विधिर्वा स्यादपूर्वत्वात् ॥ १२ ॥

तृतीयाधिकरणमारचयति—

उपव्यानेऽनुवादो वा विधिर्वाऽऽद्यो यतः स्मृतौ ।
प्राप्तं मैवमपूर्वत्वात्क्रतौ लेटा विधीयते ॥ ५ ॥

'नित्योदकी नित्ययज्ञोपवीती' इति स्मृत्या प्राप्तस्य 'उपव्ययते' इत्ययमनुवादः—इति चेत् ।

मैवम् । पुरुषार्थस्य प्राप्तावपि क्रत्वर्थस्य प्राप्त्यभावात्पञ्चमलकारेण दर्शपूर्णमासाङ्गतया विधीयते ॥ ५ ॥

( चतुर्थे—उपवीतोदगग्रत्वयोरनुवादताधिकरणे सूत्रे १३–१४ ) ।

उदक्त्वं चापूर्वत्वात् ॥१३॥ सतो वा लिङ्गदर्शनम् ॥१४॥

चतुर्थाधिकरणमारचयति—

---

१ क. 'धानस्य स्तु' । २ क. ख. ग. घ. 'र्वाद्यो य' । ३ ग. घ. प्राप्तमेवम' ।

उपवीती हि देवेभ्यः पुरोदञ्चो द्वयं विधिः ।
वादो वाऽस्यान्यतोऽप्राप्तेरपूर्वार्थो विधीयते ॥ ६ ॥
हियच्छब्दद्वयाद्वादः स्मृत्युपव्यानतो द्वयम् ।
संप्राप्तं दक्षिणाग्रत्वप्राचीनावीतयोः स्तुतिः ॥ ७ ॥

प्रेताग्निहोत्रे श्रूयते—'प्राचीनावीती दोहयेद्यज्ञोपवीती हि देवेभ्यो दोहयति' इति । 'ये पुरोदञ्चो दर्भाः, तान्दक्षिणाग्रान्स्तृणीयात्' इति । तत्र—मृतस्याग्निहोत्रे दोहने प्राचीनावीतम्, दर्भास्तरणे दक्षिणाग्रत्वं च यथा विधीयते, तथा मरणात्पूर्वं जीवतोऽग्निहोत्रे दोहनाङ्गमुपवीतम्, दर्भास्तरणाङ्गमुत्तराग्रत्वं विधातव्यम् । 'देवेभ्यो यज्ञोपवीती दोहयेत्' 'मरणात्पुरा ये दर्भास्त उदञ्चः कार्याः' इति वचनव्यक्तिः । नह्येतदुभयमन्यतः प्राप्तम् । तस्मात्-अपूर्वार्थौ विधीयताम्—इति चेत्।

मैवम् । हिशब्देन यच्छब्देन चोभयत्रानुवादत्वप्रतीतेः । अस्ति च तयोः प्राप्तिः। 'अग्रवन्त्युदगग्राणि'—इति स्मृत्या सर्वस्मिन्दैविके कर्मणि प्राप्तमुत्तराग्रत्वमनूद्य विधेयं दक्षिणाग्रत्वं स्तूयते । तथा—दर्शपूर्णमासयोः 'उपव्ययते' इत्यनेन विधिना प्राप्तं दैविकमुपवीतमनूद्य विधेयं प्राचीनावीतं स्तूयते । तस्माद्-अनुवादः॥६॥७॥

( पञ्चमे समिद्धारणस्य विधिताधिकरणे सूत्रम् ) ।

विधिस्तु धारणेऽपूर्वत्वात् ॥ १५ ॥

पञ्चमाधिकरणमारचयति—

धारयत्युपरिष्टाद्धि देवेभ्य इति संस्तवः ।
विधिर्वाऽऽद्यो धृतेः पित्र्ये प्रोक्तायाः पूर्ववत्स्तुतिः ॥ ८ ॥
ऊर्ध्वं विधारणं प्राप्तं समिधो नान्यमानतः ।
अतो हिशब्दसंत्यागादपूर्वार्थो विधीयते ॥ ९ ॥

प्रेताग्निहोत्र एवं श्रूयते—'अधस्तात्समिधं धारयन्ननुद्रवेत्, उपरि हि देवेभ्यो धारयति' इति । अत्र—'पित्र्यं हविर्होतुं हस्ते धारयन्यदा मन्त्रं पठति, तदानीं स्रुग्दण्डस्याधस्तात्समिधं धारयेत्—इति यद्विधीयते, तदेतद्दैविकेनोपरिधारणेन स्तूयते । हिशब्देन पूर्वाधिकरण इवानुवादत्वप्रतीतेः—इति चेत् ।

मैवम् । दैविके हविषि स्रुग्दण्डस्योपरि समिद्धारणस्यापूर्वार्थत्वेन विधातव्यत्वात् । अनुवादत्वगमको हिशब्दोऽसंभवादुपेक्षणीयः ॥ ८ ॥ ९ ॥

---

१ ग. च. °तीति दे° । २ ख. °धिः । वाद्यो वास्याश्वतो° । ३ ग. च. °तिः ॥ ७ ॥ मृता° । ४ क. ग. च. °वादो धृ° । ५ क. तत्र° ।

( षष्ठे दिग्विभागस्यार्थवादताधिकरणे सूत्रम्- )।

दिग्विभागश्च तद्वत्संबन्धस्यार्थहेतुत्वात् ॥ १६ ॥

षष्ठाधिकरणमारचयति-

दिशं प्रतीचीं मनुजा व्यभजन्तेत्यसौ विधिः।
वादो वाऽत्र पुराकल्पस्तुत्यर्थो[1] विधिमर्हति ॥ १० ॥
प्राचीनवंशवाक्योक्तेर्विधावस्यैकवाक्यतः।
दिग्विभागोऽर्थवादोऽयमुपवीते निवीतवत् ॥ ११ ॥

ज्योतिष्टोमे श्रूयते-'प्राचीनवंशं करोति। देवमनुष्या दिशो व्यभजन्त-प्राचीं देवाः, दक्षिणां पितरः, प्रतीचीं मनुष्याः, उदीचीं रुद्राः, यत्प्राचीनवंशं करोति देवलोकमेव तद्यजमान उपावर्तते' इति। तत्र-देवादीनां कर्मानधिकारान्न तत्र विधिशङ्का। 'मनुष्याः प्रतीचीं विभजेयुः' इत्येवं विधिः स्यात्। कुतः। पुराकल्परूपेणार्थवादेन स्तूयमानत्वात्। पूर्वपुरुषाचरितत्वाभिधानं पुराकल्पः। 'व्यभजन्त' इत्यनेन भूतार्थवाचिना तदभिधीयते। तस्मात्-विधिः-इति पूर्वपक्षः। यस्य मण्डपविशेषस्योपरिवंशाः प्रागग्रा भवन्ति स प्राचीनवंशः। तद्विध्येकवाक्यत्वावगमादर्थवादः। सायंकालीनाप्त्यादौ प्रतीची प्राप्ता ॥ १० ॥ ११ ॥

( सप्तमे परुषि दितादीनामनुवादताधिकरणे सूत्रम्- )।

परुषि दितपूर्णघृतविदग्धं च तद्वत् ॥ १७ ॥

सप्तमाधिकरणमारचयति-

परुषि च्छिन्नमित्युक्त्या बर्हिषस्तु समूलताम्।
घृतं देवं मस्तु पित्र्यमित्युक्त्या नवनीतकम् ॥ १२ ॥
यो विदग्धः स इत्युक्त्या पुरोडाशस्य पक्वताम्।
स्तौति पूर्वोत्तरौ पक्षौ योजनीयौ निवीतवत् ॥ १३ ॥

दर्शपूर्णमासयोः पिण्डपितृयज्ञे श्रूयते-'यत्परुषि दितं तद्देवानाम्, यदन्तरा तन्मनुष्याणाम्, यत्समूलं तत्पितृणाम्, समूलं बर्हिर्भवति व्यावृत्त्यै' इति। परुः पर्व। दितं खण्डितम्। तथा ज्योतिष्टोमे दीक्षार्थाभ्यङ्गे श्रूयते-'घृतं देवानां, मस्तु पितृणाम्, निष्पक्वं मनुष्याणाम्, तद्वा एतत्सर्वदेवत्यं[2] यन्नवनीतम्, यन्नवनीतेनाभ्यङ्क्ते सर्वा एव देवताः प्रीणाति' इति। मस्तु दधिभवं मण्डम्। निष्पक्वं शिरसि

१ ग. च. 'स्तुत्योऽर्थो। २ ख. 'र्वदैवत्यं य'। ग. च 'र्वदेवत्यं य'।

प्रक्षेप्तुमीषद्विलीनं नवनीतं तक्रं वा। दर्शपूर्णमासयोः पुरोडाशश्रपणे श्रूयते-"यो विदग्धः स नैर्ऋतः, योऽशृतः स रौद्रः, यः शृतः स दैवः, तस्मादविदहता श्रपयितव्यः स दैवत्वाय" इति। विदग्धोऽत्यन्तपक्वः। अशृतोऽपक्वः। तत्र-बर्हिषि समूलच्छेदस्य, अभ्यङ्गे नवनीतस्य पुरोडाशे यथोचितपाकस्य च विधेयतया सर्वमवशिष्टं स्तावकम्। निर्वर्तितविचारस्यैवायं प्रपञ्चः। एवम् 'यत्पूर्णं तन्मनुष्याणाम्' इत्यत्रापि द्रष्टव्यम्। तच्च चातुर्मास्येषु महापितृयज्ञे 'पितृभ्योऽग्निष्वात्तेभ्योऽभिवान्या गोर्दुग्धे मन्थम्'इत्यत्र वत्सरहिताया अभिवानीशब्दाभिधेयाया धेन्वा दुग्धे पिष्टं प्रक्षिप्य क्रियमाणे मन्थने श्रूयते-'यत्पूर्णं तन्मनुष्याणामुपरि, अर्धो देवानाम्, अर्धः पितॄणाम्, अर्ध उपमन्थति, अर्धो हि पितॄणाम्' इति। तत्र पात्रस्याधोभागरूपेणार्धेन परिमिते दुग्धे मन्थनस्य कर्तव्यत्वात्सोऽर्धो विधीयते। स च पूर्णादिवाक्येन स्तूयते ॥ १२ ॥ १३ ॥

( अष्टमे-अनृतवदननिषेधस्य क्रतुधर्मताधिकरणे सूत्रे- )।

अकर्म क्रतुसंयुक्तं संयोगान्नित्यानुवादः स्यात् ॥ १८ ॥

विधिर्वा संयोगान्तरात् ॥ १९ ॥

अष्टमाधिकरणमारचयति-

अनृतं न वदेद्धर्मः पुंधर्मो वाऽनुवादगीः।
सक्रतौ पुंसि शुद्धे वा क्रतौ यद्वा विधिः क्रतौ ॥ १४ ॥
अनृतोक्तेः पुमर्थत्वात्तन्निषेधस्तथाविधः।
स्मार्तानुवादः पुंस्क्रत्वोः+ श्रुतिप्रक्रिययोर्वशात् ॥ १५ ॥
नाऽऽख्यात पुरुषार्थोक्तिः क्रतावेव प्रयाजवत्।
सत्योक्तिनियमादन्यः संयोगोऽतः क्रतौ विधिः ॥ १६ ॥

दर्शपूर्णमासप्रकरणे श्रूयते-'नानृतं वदेत्' इति। तत्र-पुरुषधर्मत्वेनायं प्रतिषेधो विधीयते। कुतः। प्रतियोगिनोऽनृतवदनस्य पुरुषधर्मतया तन्निषेधस्यापि पुरुषधर्मत्वेनैव विधातव्यत्वात्। 'वदेत्' इत्याख्यातं तावत्कर्तृवाचकम्। तेनाऽऽख्यातेन कर्तुः प्रतीयमानत्वात्। पुरुषस्याऽऽख्यातप्रत्ययवाच्यत्वे सति प्रकृत्यर्थस्य वदनस्य पुरुषधर्मत्वं युक्तम्। 'प्रकृतिप्रत्ययौ प्रत्ययार्थं सह ब्रूतः, तयोस्तु प्रत्ययः प्राधान्येन' इति शाब्दिकैरुद्घोषणात्। वदनस्य पुरुषधर्मत्वे तन्निषेधस्यापि

+पुंक्रत्वोः, इति पाठः सर्वत्रोपलभ्यमानोऽपि रुत्वस्य नित्यत्वादसंगतः।

१ ख. ङ. °त्सोऽर्धो वि°। २ ग. च. पुमर्थो। ३ ग. च. धर्मो। ४ ग. च. °षेधे तथा°। ५ग. च. विधिः। स्मा°। ६ ग. च. °नुक्तेः क्र°। ७ ग. च. °त्वयाबधे प्र°। ८ ख. तत्प्रतिषे°

पुरुषधर्मत्वं युक्तम् । अन्यथा भिन्नविषयत्वे बाधकत्वं न स्यात् । तस्मात्पुरुषवाचकाख्यातश्रुत्या प्रकरणं बाधित्वा पुरुषार्थोऽयं प्रतिषेधो विधीयते । अस्त्येव स्मार्तः प्रतिषेधः—इति चेत् । तर्हि तस्यैतच्छ्रुतिवाक्यं मूलमस्तु । तस्मात्—पुरुषार्थः—इत्येकः **पूर्वपक्षः** । आख्यातश्रुतेः प्रकरणस्य चाविरोधाय क्रतुयुक्तपुरुषधर्मोऽस्तु । नह्येतद्वाक्यं स्मृतेर्मूलम्[1] भिन्नविषयत्वात् । स्मृतिश्चोपनयनमारभ्याऽऽमरणं पुरुषस्यानृतं प्रतिषेधति । तन्मध्यपतितत्वात्क्रतावपि स्मार्तो निषेधः प्राप्त एव । तत उभयार्थोऽप्ययं प्रतिषेधो न विधीयते, किंत्वनूद्यते—इति **द्वितीयः पूर्वपक्षः** । आख्यातेन भावनाऽभिधीयते । कर्ता तु तदविनाभूतोऽर्थात्प्रतीयते । अतः श्रुत्यभावात्केवलेन प्रकरणेन प्रयाजादिवदारादुपकारकः क्रतावेव निविशते । न च तत्रापि विधीयते, किंतु सार्वत्रिकस्य निषेधस्य क्रतावपि प्राप्तत्वादनूद्यते—इति **तृतीयः पूर्वपक्षः** । 'सत्यमेव वदेत्[2], नत्वनृतम्' इति योऽयं स्मार्तनियमरूपः पुरुषार्थः संयोगः, तस्मादयमन्यः क्रत्वर्थः संयोगः । अतोऽप्राप्तत्वाद्विधीयते । एतद्व्यतिक्रमे क्रतोरेव वैगुण्यम्, न तु पुरुषस्य प्रत्यवायः । अतोऽत्र क्रतुगामि प्रायश्चित्तम् । पुरुषार्थनियमातिक्रमे तु पुरुषस्यैव प्रत्यवायो न क्रतोर्वैगुण्यम् । तत्र स्मार्तं प्रायश्चित्तम्—इति विशेषः ॥१४॥१५॥१६॥

(नवमे जञ्जभ्यमानधर्माणां प्रकरणे निवेशाधिकरणे सूत्राणि २०-२२)।

**अहीनवत्पुरुषस्तदर्थत्वात्॥२०॥प्रकरणविशेषाद्वा तद्युक्तस्य संस्कारो द्रव्यवत् ॥ २१ ॥ व्यपदेशादपकृष्येत ॥ २२ ॥**

नवमाधिकरणमारचयति—

**जञ्जभ्यमानमन्त्रोक्तिः पुंसो धर्मः क्रतोरुत ।**
**वाक्यादाद्यः प्रक्रियया द्वितीयोऽस्त्वविरुद्धया ॥ १७ ॥**

दर्शपूर्णमासप्रकरणे श्रूयते-'प्राणो वै दक्षः । अपानः क्रतुः । तस्माज्जञ्जभ्यमानो ब्रूयात्—मयि दक्षक्रतू—इति, प्राणापानावेवाऽऽत्मन्धत्त' इति । गात्रविनामेन विदारितमुखः पुरुषो जञ्जभ्यमानः । तस्य वाक्यान्मन्त्रोक्तिः प्रतीयते । वाक्यं च प्रकरणाद्बलीयः । तस्मात्—केवलं पुंधर्मः—इति चेत् ।

मैवम् । कदाचिदपि जञ्जभ्यमानपुरुषसंभवेन वाक्यप्रकरणयोर्विरोधाभावे सत्युभाभ्यां क्रतुयुक्तपुरुषसंस्कारत्वावगमात् ॥ १७ ॥

---

१ क. स्मृतिमूल° । २ ख. °कमि । ३ क. °त्, नानृ° । ४ क. ग. ख. °तद्विष्याति° । ५ ख. °भे तु तु । ६क. °मधर्मोक्तिः ।

( दशमे—अवगोरणादीनां पुमर्थताधिकरणे सूत्रम्— ) ।

शंयौ च सर्वपरिदानात् ॥ २३ ॥

दशमाधिकरणमारचयति—

विप्रायावगुरेन्नेति क्रत्वर्थो वा पुमर्थता ।
फलवत्क्रतुसांनिध्यात्क्रत्वर्थः पूर्वमन्त्रवत् ॥ १८ ॥
यातनापरिहारस्य निषेधफलतोचिता ।
निषेधोऽयं पुमर्थत्वात्प्रक्रियातोऽपकृष्यताम् ॥ १९ ॥

दर्शपूर्णमासप्रकरणे श्रूयते—'यो ब्राह्मणायावगुरेत्तं शतेन यातयेत्। तस्माद्ब्राह्मणाय नावगुरेत' इति। तत्र—यथा पूर्वाधिकरणे मन्त्रपाठस्य फलरहितस्य फलवति क्रतावङ्गत्वं प्रकरणेनावगम्यते, एवमत्रापि ब्राह्मणावज्ञानिषेधस्य क्रत्वङ्गत्वम्—इति चेत् ।

न । वैषम्यात् । पूर्वत्र हि—आत्मनि प्राणापानधारणं मन्त्रोच्चारणफलं न संभवति। तस्य प्रागेव सिद्धत्वात्। इह तु—अवगोरणे शतसंवत्सरयातनामुपन्यस्यावगोरणनिषेधाद्यातनापरिहारस्य निषेधफलत्वमुचितम् । तस्मात्—निषेधस्य केवलपुरुषार्थतया प्रकरणादुत्कर्षो युक्तः ॥ १८ ॥ १९ ॥

( एकादशे मलवद्वासःसंवादनिषेधाधिकरणे सूत्रे २४—२५)॥

प्रागपरोधान्मलवद्वाससः ॥२४॥ अन्नप्रतिषेधाच्च ॥२५॥

एकादशाधिकरणमारचयति—

न संवदेत मलवद्वाससेत्यपि पूर्ववत् ।
पुमर्थः स्यात्क्रतौ क्वापि संवादस्याप्रसक्तितः ॥ २० ॥

दर्शपूर्णमासप्रकरणे श्रूयते—'मलवद्वाससा न संवदेत' इति । —अस्य निषेधस्य प्रकरणात्क्रत्वङ्गत्वम्—इति चेत् ।

नैवम् । अप्रसक्तप्रतिषेधप्रसङ्गात् । 'यस्य व्रत्येऽहनि पत्न्यनालम्भुका भवति, तामपरुध्य यजेत' इति रजस्वलाया निःसारणेन क्रतौ तत्संवादस्याप्रसक्तिः । तस्मात्—केवलपुरुषार्थस्यास्य प्रकरणादुत्कर्षः ॥ २० ॥

(द्वादशे सुवर्णधारणादीनां पुरुषधर्मताधिकरणे सूत्राणि २६—३०)॥

अप्रकरणे तु तद्धर्मस्ततो विशेषात् ॥ २६ ॥

---

१ ग. घ. 'थोऽथ पु' । २ ख. 'सयोः प्र' । ३ ख. ङ. भावत्वात् ।

अद्रव्यत्वात्तु शेषः स्यात् ॥२७॥वेदसंयोगात् ॥२८॥
द्रव्यसंयोगाच्च ॥२९॥ स्याद्वाऽस्य संयोगवत्फलेन
संबन्धस्तस्मात्कर्मैतिशायनः ॥ ३० ॥

द्वादशाधिकरणमारचयति—

हिरण्यं वर्णवद्धार्यं क्रत्वङ्गं भरणं भवेत्।
हिरण्यसंस्कृतिर्वाऽत्र वर्णो वोत पुमर्थता ॥ २१ ॥
वैदिकत्वात्क्रतुस्मृत्या तदङ्गं कर्मकारके।
प्राधान्यात्संस्कृतिर्वर्णो गुणोऽस्तु विधिलाघवात् ॥ २२ ॥
अनारभ्य श्रुतत्वेन नियता न क्रतुस्मृतिः।
अतः पुमर्थता स्वर्गः कल्प्योऽन्यद्वाऽस्तु रात्रिवत् ॥ २३ ॥

अनारभ्य श्रूयते—'तस्मात्सुवर्णं हिरण्यं भार्यम्। सुवर्ण एव भवति। दुर्वर्णोऽस्य भ्रातृव्यो भवति' इति। तत्र—यदेतच्छोभनवर्णोपेतहिरण्यधारणं तस्य वैदिकक्रियारूपत्वेन क्रतुस्मारकत्वात्क्रत्वङ्गं धारणम्—इत्येकः पक्षः। क्रत्वङ्गत्वेऽपि नाऽऽरादुपकारकम्, किंतु क्रतुगतं हिरण्यं धारणेन संस्क्रियते। 'भार्यम्' इत्यत्र ण्यत्प्रत्ययस्य कर्मणि विहितत्वेन कर्मकारकस्य हिरण्यस्य प्राधान्यावगमात्—इति द्वितीयः पक्षः। वर्णविशिष्टधारणविधाने गौरवाद्धारणसहितं हिरण्यमनूद्य शोभनवर्णमात्रं विधेयम्—इति तृतीयः पक्षः। त्रेधाऽपि—क्रत्वर्थो विधिः, न तु पुरुषार्थः—इति प्राप्ते—

ब्रूमः—यदि क्रतुप्रकरणे श्रुतम्, तस्याऽस्तु नियमेन क्रतुस्मारकत्वम्। इदं त्वनारभ्याधीतम्। न चात्र हिरण्यं जुह्वादिवत्क्रतावव्यभिचारितम्, येन क्रतुस्मृतिर्नियम्येत। ननु संस्कार्यत्वान्यथानुपपत्त्या क्रतुप्रवेशः स्यात्। नहि धारणेन संस्कृतस्य हिरण्यस्य लौकिकः कश्चिदुपयोगोऽस्ति—इति चेत्। न। क्रतावप्युपयोगाभावात्।—क्रतूपयोगोऽपि कल्प्यते—इति चेत्। न। 'क्रतूपयोगित्वेन संस्कार्यत्वम्, तेन च क्रतूपयोगः' इत्यन्योन्याश्रयत्वात्। न च कर्मकारकत्वात्संस्कार्यत्वम्। परसमवेतक्रियाफलशालित्वमात्रस्य कर्मलक्षणत्वात्। अतः क्रतौ नियन्तुमशक्यत्वात्पुरुषार्थमिदं धारणम्। न चात्र फलाभावः। विश्वजिन्न्यायेन स्वर्गस्य कल्प्यत्वात्। अथवा रात्रिसत्रे यथा वाक्यशेषेणार्थवादेन श्रुता प्रतिष्ठा फलत्वेन कल्पिता तथाऽत्रापि 'सुवर्ण एव भवति, दुर्वर्णोऽस्य भ्रातृव्यः' इत्यर्थवादगतं फलमस्तु। तस्मात्—पुरुषार्थो धारणविधिः ॥२१॥२२॥२३॥

१ ख. °रकम्। प्रा°। २ ख. गुरुस्तु। ३ क. °त्वङ्गसाध°। ४ ख. ग. घ. °मयात्। ५ क. ख. °गतफ°।

( त्रयोदशे जयादीनां वैदिककर्माङ्गताधिकरणे सूत्राणि ३१-३३ ) ।

शेषाः प्रकरणेऽविशेषात्सर्वकर्मणाम् ॥३१॥ होमास्तु व्यवतिष्ठेरन्नाहवनीयसंयोगात् ॥३२॥ शेषश्च समाख्यानात् ॥३३॥

त्रयोदशाधिकरणमारचयति—

येनेत्सेत्कर्मणा तत्र जयाहोमेऽखिलार्थता ।
वैदिकेष्वेव वा सर्वशेषोऽसंकोचकत्वतः ॥ २४ ॥
होम आहवनीये स्यात्कृष्यादिषु न सोऽस्ति हि ।
तेनानारभ्यपाठेऽपि वैदिकेष्वेव ते जयाः ॥ २५ ॥

अनारभ्य श्रूयते—'येन कर्मणेर्त्सेत् । तत्र जयां जुहुयात् । राष्ट्रभृतो जुहोति । अभ्यातानाञ्जुहोति' इति । ईर्त्सेदाद्धिमिच्छेत् । 'चित्तं च स्वाहा ' इत्यादयो जयाः 'ऋताषाड्' इत्यादयो राष्ट्रभृतः । 'अग्निर्भूतानाम्'—इत्यादयोऽभ्यातानाः । तत्र—वैदिककर्मणेव लौकिककृष्यादिकर्मणाऽप्यृद्धेरिष्यमाणत्वात्, संकोचे कारणाभावाज्जयादिहोमः सर्वशेषः—इति चेत् । मैवम् । 'यदाहवनीये जुह्वति तेन सोऽस्याभीष्टः प्रीतः' इति वाक्येन होममुद्दिश्याऽऽहवनीयविधानात् । कृष्यादौ तदभावाद्वैदिकेष्वेव जयादिहोमः ॥ २४ ॥ २५ ॥

( चतुर्दशे वैदिकाश्वप्रतिग्रह इष्टिकर्तव्यताधिकरणे सूत्रे ३४-३५ ) ।

दोषात्त्विष्टिर्लौकिके स्यात्, शास्त्राद्धि वैदिके न दोषः स्यात् ॥३४॥ अर्थवादो वाऽनुपपातात्, तस्माद्यज्ञे प्रतीयेत ॥ ३५ ॥

चतुर्दशाधिकरणमारचयति—

अश्वप्रतिग्रहेष्टिस्तु दातुरित्यभिधास्यते ।
दानद्वये लौकिके वा वैदिके वा भवेदियम् ॥ २६ ॥
अविशेषाद्द्वयोर्यद्वा न देयः केसरीत्यतः ।
निषेधाल्लौकिकात्तत्र प्रायश्चित्तिरियं भवेत् ॥ २७ ॥
न जलोदरहेतुत्वं प्रमितं लौकिके क्वचित् ।
वैदिके तु श्रुतं तस्मात्तत्प्रायश्चित्तयेऽत्र सा ॥ २८ ॥

इदमाम्नायते—'यावतोऽश्वान्प्रतिगृह्णीयात्तावतो वारुणांश्चतुष्कपालान्निर्वपेत्' इति। तत्र 'प्रतिग्रहशब्दो दानपरः' इत्यनन्तरमेव वक्ष्यते। तत्र—विशेषाश्रवणा- ल्लौकिकवैदिकदानयोरुभयोरप्यसाविष्टिः—इत्येकः पक्षः। 'न केसरिणो ददाति' इति स्मृत्या मित्रदायादादिभ्यः प्रीत्या क्रियमाणं लौकिकमश्वदानं निषि- द्धम्। तदनुष्ठाने प्रायश्चित्तरूपेयमिष्टिः—इति द्वितीयः पक्षः।

'वरुणो वा एतं गृह्णाति योऽश्वं प्रतिगृह्णाति' इत्यश्वदाने जलोदरव्याधिरूपो दृष्टदोषो वरुणग्रहवाक्येनोच्यते। न च लौकिकस्याश्वदानस्य तद्धेतुत्वं प्रमितम्। वैदिकस्य तु जन्मान्तरविषयं दोषश्रवणम्। अतो वैदिकदाने सेष्टिः प्रायश्चित्तम्। अस्ति हि वैदिकमश्वदानम्। 'वडवा दक्षिणा' इत्यादिश्रवणात्॥२६॥२७॥२८॥

(पञ्चदशे दातुर्वारुणीष्ट्यधिकरणे सूत्रे ३६—३७)।

अचोदितं कर्मभेदात्॥ ३६॥ सा लिङ्गा- दार्त्विजे स्यात्॥ ३७॥

पञ्चदशाधिकरणमारचयति—

यावतः प्रतिगृह्णीयादश्वांस्तावत्य इष्टयः।
प्रतिग्रहीतुर्दातुर्वा स्यादाद्योऽस्तु यथाविधि॥ २९॥
असंजातविरोध्यर्थवादाद्दातुः प्रजापतेः।
इष्टिः श्रुता ततो दातुर्णिजर्थेऽपि विधिं नयेत्॥३०॥

पूर्वोदाहृते वाक्ये 'प्रतिगृह्णीयात्' इति विधिपदश्रवणात्प्रतिग्रहीतुरिष्टिः—इति चेत्। न। उपक्रमरूपेणार्थवादेन दातुस्तदिष्टिप्रतीतेः। उपक्रमश्चैवं श्रूयते—'प्र- जापतिर्वरुणायाश्वमनयत्, स स्वां देवतामार्छत्। स पर्यदीर्यत, स एतं वारुणं चतुष्कपालमपश्यत्, तं निरवपत्, ततो वै स वरुणपाशादमुच्यत' इति। अनय- द्दत्तवान्। स च दाता प्रजापतिः स्वकीयां वरुणदेवतां जलोदररोगप्रदां प्राप्तवान्। तेन च रोगेण ग्रस्तः स प्रजापतिर्विदीर्णो भूत्वा रोगपरिहारायेष्टिं कृत्वा रो- गादमुच्यत, इत्यत्र—दातुरिष्टिः—इत्यवगम्यते। असंजातविरोध्युपक्रमानुसारेण विधायकपदमपि 'प्रतिग्राहयेत्' इत्येवमन्तर्भावितणिजर्थपरतया व्याख्येयम्॥ २९॥ ३०॥

(षोडशे वैदिकपानव्यापदधिकरणे सूत्रे ३८—३९)।

पानव्यापच्च तद्वत्॥ ३८॥ दोषात्तु वैदिके

१ ग. च. °णाश्वात्°। २ ख. ङ. °वै व°। ३ ख. °यकं प°।

स्यादर्थाद्धि लौकिके न दोषः स्यात् ॥ ३९ ॥

षोडशाधिकरणमारचयति—

सोमवामिचरुर्लोके वेदे वेन्द्रियसंक्षयः ।
दृष्टदोषो लौकिकेऽतो वमने विहितश्चरुः ॥ ३१ ॥
अदोषो वमनायैव लोके पानं श्रुतौ पुनः ।
जरणाय ततो वान्तिदोषशान्त्यै भवेच्चरुः ॥ ३२ ॥

इदमाम्नायते—'सौमेन्द्रं चरुं निर्वपेच्छ्यामाकं सोमवामिनः" इति । तत्र—लौकिके सोमवमने विहितोऽयं चरुः । कुतः । 'वि वा एष इन्द्रियेण वीर्येण व्यृध्यते यः सोमं वमति' इति दृष्टदोषमुपन्यस्य तच्छान्त्यै चरुविधानात्—इति चेत् ।

मैवम् । लोके धातुसाम्यार्थिनो वमनायैव सोमस्य पाने सति वमनस्य दोषहेतुत्वाभावात् । वेदे तु 'हिन्व मे गात्रा हरिवः' इत्यनेन मन्त्रेण जरयितुं सोमः पीयते । तत्र वमनप्रायश्चित्तार्थोऽयं चरुः ॥ ३१ ॥ ३२ ॥

(सप्तदशे सौमेन्द्रचरोर्यजमानपानव्यापद्विषयताधिकरणे सूत्राणि ४०-४२)॥

तत्सर्वत्राविशेषात् ॥ ४० ॥ स्वामिनो वा तदर्थत्वात् ॥ ४१ ॥ लिङ्गदर्शनाच्च ॥ ४२ ॥

सप्तदशाधिकरणमारचयति—

ऋत्विजां वमनेऽप्येष कर्तुरेवोत वर्जनात् ।
विशेषस्याग्रिमो मैवं कर्तुरेव निरुप्तितः ॥ ३३ ॥

'ईदृशस्य सोमस्य वमने चरुः' इति विशेषस्याभावादृत्विजां यजमानस्य च वमने सर्वथासौ चरुः—इति चेत् ।

मैवम् । 'यो वमति स निर्वपति' इति निर्वप्तुर्वमनं चरुनिमित्तम् । निर्वप्ता च यजमानः । ऋत्विजो निर्वप्तुत्वेऽधिकार्यन्तरत्वप्रसङ्गात् । तस्मात्—यजमानस्यैव वमने चरुविधिः ॥ ३३ ॥

(अष्टादशे—आग्नेयाष्टाकपालचरोर्द्व्यवदानमात्रस्य होतव्यताधिकरणे सूत्राणि ४३—४७)।

सर्वप्रदानं हविषस्तदर्थत्वात् ॥ ४३ ॥ निरव-

---

१ ख. 'चरोर्लो' । २ क. पानात्क्रतो' । ख. पानं क्रतौ' । ३ ग. च. 'त्राणि इ' । ४ ग. ङ. च. 'त्विजो व' । ५ क. ख. ङ. 'रुक्तितः। ६ क. 'वणस्या' । ७ क. 'वप्तुर्पूर्वम'।

दानात्तु शेषः स्यात् ॥ ४४ ॥ उपायो वा तद्-
र्थत्वात् ॥ ४५ ॥ कृतत्वात्तु कर्मणः सकृत्स्याद्द्र-
व्यस्य गुणभूतत्वात् ॥ ४६ ॥ शेषदर्शनाच्च ॥ ४७ ॥

अष्टादशाधिकरणमारचयति—

यागे हविस्त्यजेत्कृत्स्नं कोऽप्यंशः शिष्यतेऽपि वा ।
देवार्थत्वाद्यजेत्सर्वं शिष्यते द्विरवत्ततः ॥ ३४ ॥

'आग्नेयोऽष्टाकपालः' इत्यत्र कृत्स्नोऽपि पुरोडाशोऽग्नये त्यक्तव्यः । तद्धितेन कृत्स्नस्याग्निदेवतासंबन्धावगतेः । त्यागमन्तरेणैतदनुपपत्तिः—इति चेत् ।

मैवम् । 'द्विर्हविषोऽवद्यति' इत्यवदानद्वयं श्रूयते । अवदेयं चाङ्गुष्ठपर्वमात्रम् । तथा च कल्पसूत्रकारः—'आग्नेयस्य पुरोडाशस्य मध्यादङ्गुष्ठपर्वमात्रमवदानं तिरश्चीनमवद्यति' इति । ततो हविषः सकाशादङ्गुष्ठपर्वद्वयमात्रं खण्डयित्वा त्यक्तव्यम् । इतरच्छेषणीयम् । देवतासंबन्धश्चांशद्वारेणाप्युपपद्यते ॥ ३४ ॥

( एकोनविंशे सर्वशेषैः स्विष्टकृदनुष्ठानाधिकरणे सूत्राणि ४८—५१ ) ।

अप्रयोजकत्वादेकस्मात्क्रियेरन्, शेषस्य गुणभूतत्वात्
॥ ४८ ॥ संस्कृतत्वाच्च ॥ ४९ ॥ सर्वेभ्यो वा कार-
णाविशेषात्, संस्कारस्य तदर्थत्वात् ॥ ५० ॥
लिङ्गदर्शनाच्च ॥ ५१ ॥

एकोनविंशाधिकरणमारचयति—

शेषात्स्विष्टकृदेकस्मात्सर्वेभ्यो वैकतः कृते ।
शास्त्रार्थसिद्धिः सर्वेभ्यः कार्यः संस्कारसाम्यतः ॥ ३५ ॥

दर्शपूर्णमासयोः श्रूयते—'शेषात्स्विष्टकृते समवद्यति' इति । तत्र—आग्नेयादीनां त्रयाणां हविषां मध्ये यस्य कस्यचिदेकस्य हविषः शेषादवदातव्यम् । तावतैव शास्त्रार्थानुष्ठानसिद्धेः—इति चेत् ।

मैवम् । उपयुक्तं हविः संस्कर्तुमिदमवदीयते । संस्कारश्च सर्वेष्वपि हविःषु समानः । तस्मात्—सर्वेभ्यो हविःशेषेभ्यः स्विष्टकृदनुष्ठेयः ॥ ३५ ॥

---

१ क. ग. ङ. च. °विर्यजे° । २ क. ख. ङ. °पत्तिः—इ° । ३ क. °साम्यतः । ४ ख. ग. च. °ष्ठानु° । ५ ख. ग. च. °सिद्धिः—इ° ।

( विंशे प्राथमिकशेषात्स्विष्टकृदनुष्ठानाधिकरणे सूत्रे ५२-५३ )।

एकस्माच्चेद्याथाकाम्यमविशेषात् ॥ ५२ ॥ मुख्याद्वा पूर्वकालत्वात् ॥ ५३ ॥

विंशाधिकरणमारचयति-

यदैकस्मात्तदा मुख्यनियातिर्नोत विद्यते ।
नाश्रुतेरस्ति मुख्यातिक्रमणे हेत्वभावतः ॥ ३५ ॥

' एकस्मादेव हविःशेषात्स्विष्टकृत् ' इति यः पूर्वाधिकरणे पूर्वपक्षः, तस्मिन्पक्षे नियामकस्याश्रुतत्वात्-यस्मात्कस्माच्चिद्धविःशेषात्-इति प्राप्ते,-

ब्रूमः-प्रथमातिक्रमे मानाभावात्प्रथमहविःशेषेणैव संस्कारसिद्धावितरत्र प्राप्त्यभावादस्ति नियतिः ॥ ३६ ॥

( एकविंशे पुरोडाशविभागस्य भक्षार्थताधिकरणे सूत्राणि ५४-५७ )।

भक्षाश्रवणाद्दानशब्दः परिक्रये ॥ ५४ ॥ तत्संस्तवाच्च ॥ ५५ ॥ भक्षार्थो वा द्रव्ये समत्वात् ॥ ५६ ॥ व्यादेशाद्दानसंस्तुतिः ॥ ५७ ॥

एकविंशाधिकरणमारचयति-

इदं ब्रह्मण इत्युक्तिः क्रयार्था भक्षणाय वा ।
भक्षाश्रुतेः क्रयार्थाऽतो यथेष्टं तैर्नियुज्यताम् ॥ ३७ ॥
देवतायै समस्तस्य कल्पतत्वात्स्वामिता न हि ।
शेषस्य प्रतिपत्त्यर्थं भक्षणं तत्र युज्यते ॥ ३८ ॥

चतुर्धाकृतपुरोडाशस्य भागान्यजमान एवं निर्दिशेत्-'इदं ब्रह्मणः, इदं होतुः, इदमध्वर्योः, इदमग्नीधः, इति। सोऽयं निर्देशो न भक्षणार्थः। भक्षणस्याश्रुतत्वात्। ततो भृतिदानेन तानृत्विजः परिक्रेतुमयं निर्देशः कृतः। क्रयश्च तदङ्गीकारानुसारेण स्वल्पेनाप्युपपद्यते । तस्मात्स्वकीया भागास्तैरिच्छयोपयोक्तुं शक्याः-इति प्राप्ते,-

ब्रूमः-' अग्नये जुष्टं निर्वपामि ' इति कृत्स्नस्य हविषो देवतार्थं संकल्पितत्वेन तत्र यजमानस्य स्वामित्वाभावान्न युक्तः परिक्रयः । भक्षणं तु प्रतिपत्त्यर्थत्वाद्युक्तम् । अवशिष्टस्य यः कोऽप्युपयोगः प्रतिपत्तिः । पुरोडाशस्य भक्षणार्हत्वाद्भक्षणेन कर्मकराणामुत्साहजननाच्च भक्षणार्थोऽयं निर्देशो युज्यते ॥ ३७ ॥ ३८ ॥

१ ख. 'क्षः, अस्मि' । २ ख. नियमः । ३ ङ. 'त्यर्थे भ' । ४ ख. भक्षणे । ५ क. न जातान्' । ६ क. 'र्थोऽयमुद्देशो । ख. ग. च. 'र्थो नि' ।

इति श्रीमाधवीये जैमिनीयन्यायमालाविस्तरे तृतीयाध्यायस्य चतुर्थः पादः ॥ ४ ॥

| | अत्र पादे | आदितः । |
|---|---|---|
| अधिकरणानि | २१ | १६४ । |
| सूत्राणि | ५७ | ४६२ । |

---

( अथ तृतीयाध्यायस्य पञ्चमः पादः )।

( प्रथमे ध्रुवाज्यादिभिः स्विष्टकृदादिशेषाननुष्ठानाधिकरणे सूत्राणि १—१२ )।

आज्याच्चँ सर्वसंयोगात् ॥ १ ॥ कारणाच्च ॥ २ ॥ एकस्मिन्समवत्तशब्दात् ॥ ३ ॥ आज्ये च दर्शनात्स्विष्टकृदर्थवादस्य ॥ ४ ॥ अशेषत्वात्तु नैवं स्यात्सर्वादानादशेषता ॥ ५ ॥ साधारण्यान्न ध्रुवायां स्यात् ॥ ६ ॥ अजकत्वाच्च जुह्वां तस्य च होमसंयोगात् ॥ ७ ॥ चमसवदिति चेत् ॥ ८ ॥ न चोदनाविरोधाद्धविः प्रकल्पनाच्च ॥ ९ ॥ उत्पन्नाधिकारात्सति सर्ववचनम् ॥ १० ॥ जातिविशेषात्परम् ॥ ११ ॥ अन्त्यमरेकार्थे ॥ १२ ॥

पञ्चमपादस्य प्रथमाधिकरणमारचयति—

उपांशुयाजद्रव्येण शेषकार्यं भवेन्न वा ।
भवेद्धविर्भ्यः सर्वेभ्य इत्युक्त्या प्रापितत्वतः ॥ १ ॥
उक्ताज्यद्रव्यशेषस्तु प्राश्युपस्तरणादिकृत् ।
अतो न प्रतिपत्त्यर्हः शेषकार्यं ततः कथम् ॥ २ ॥

ध्रौवादाज्यादुपांशुयाजार्थमवदाने कृते तच्छेषेण ध्रौवेण द्रव्येण स्विष्टकृदादिकं शेषकार्यं कर्तव्यम् । कुतः । 'तद्यत्सर्वेभ्यो हविर्भ्यः समवद्यति' इति वाक्येन प्रापितत्वात्—इति चेत् ।

---

१ ग. च. °पादे प्र° । २ ग. च. °तः ॥ १ ॥ घृताज्य° ।

मेवम् । कृतार्थद्रव्यशेषो ह्युपयोगापेक्षः प्रतिपत्तिमर्हति । नैवं त्वाज्यं न कृतार्थम् । तेन कर्तव्यानामुपस्तरणादीनां सद्भावात् । तस्मात्—न तेन शेषकार्यं भवति ॥ १ ॥ २ ॥

( द्वितीये साकंप्रस्थाय्ये शेषकर्माननुष्ठानाधिकरणे सूत्रम्— ) ।

साकंप्रस्थाय्ये स्विष्टकृदिडं च तद्वत् ॥ १३ ॥

द्वितीयाधिकरणमारचयति—

आक्रामन्सह कुम्भीभिरस्ति शेषक्रिया न वा ।
जुह्वाऽवदानात्प्रकृताविव शेषक्रियोचिता ॥ ३ ॥
कुम्भीषु शेषासंसिद्धेः साकंप्रस्थाय्यकर्मणि ।
न स्विष्टकृदिडं कार्यमग्नीधः स्रुक्प्रदानतः ॥ ४ ॥

'साकंप्रस्थायीयेन यजेत पशुकामः' इति विहिते कर्मणि श्रूयते—'सह कुम्भीभिरभिक्रामन्नाह' इति । तत्र चतसृभिर्दधिपयःकुम्भीभिः सहाऽऽहवनीयदेशेऽभिक्रमणमात्रं श्रुतम् । न तु तत्र कुम्भीभिर्होमः श्रुतः । तथा सत्यस्य कर्मणः सांनाय्यविकृतित्वाज्जुह्वा कुम्भीभ्योऽवदाय होतव्यम् । हुतशेषेण च स्विष्टकृदादिकं सांनाय्यशेषेणैव कर्तव्यम्—इति प्राप्ते,—

ब्रूमः—नात्र कुम्भीषु हुतशेषः सिध्यति । सांनाय्यवज्जुह्वा तदवदानाभावात् । 'अग्नीधे स्रुचौ प्रदाय सह कुम्भीभिरभिक्रामन्' इत्युक्त्या जुहूपभृतोः प्रदत्तत्वादभिक्रमणस्य होमार्थत्वाच्च कुम्भीभिरेव दधिपयसोर्होमे सति कुम्भीमात्रमवशिष्यते, न तु हविःशेषः । तत्र कुतः शेषकार्यम् ॥ ३ ॥ ४ ॥

( तृतीये सौत्रामण्यां शेषकर्माननुष्ठानाधिकरणे सूत्रे १४—१५ ) ।

सौत्रामण्यां च ग्रहेषु ॥ १४ ॥ तद्वच्च शेषवचनम् ॥ १५ ॥

तृतीयाधिकरणमारचयति—

सौत्रामण्यां ग्रहे स्विष्टकृदाद्यस्ति न वाऽस्ति तत् ।
शेषणाच्च सुराक्षीरयोरन्यत्रोपयोगतः ॥ ५ ॥

सौत्रामणिनामके यागे श्रूयते—'पयोग्रहाः सुराग्रहाश्च गृह्यन्ते' इति । तत्र प्रकृतिगतसोमग्रहेष्विव शेषकार्यं स्विष्टकृदादिकमस्ति । न चात्र पूर्ववच्छेषाभावः। 'उच्छिनष्टि, न सर्वं जुहोति' इत्यत्र शेषयितव्यत्वश्रवणात्—इति चेत् ।

१ ङ. °पत्तुम° । २ ग. च. °वं त्वाज्यं तु कृ° । ३ ङ. °स्थानक° । ४ ग. ङ. च. °दिडं का° । ५ ख. ग. च. °नाऽप इव जुहा° । ६ ख. प्रवृत्त° । ग. च. प्रदत्त° । ७ ग. च. °कृदिडादिक° ।

नैवम् । अवशिष्टस्यान्यत्रोपयोगश्रवणात् । 'ब्राह्मणं परिविवीषीयादुच्छेषणस्य पातारम्' इति श्रूयते । 'यदि ब्राह्मणं न विन्देत, वल्मीकवपायामवनयेत्' इति च। 'अवतूर्णायामवनयेत्' इति च । अवच्छिन्ना कुम्भी अवतूर्णा । तस्मात्—नास्ति स्विष्टकृदादिकम् ॥ ५ ॥

(चतुर्थे सर्वपृष्ठेष्टौ स्विष्टकृदादिडादीनां सकृदनुष्ठानाधिकरणे सूत्रे १६—१७)

द्रव्यैकत्वे कर्मभेदात्प्रतिकर्म क्रियेरन् ॥ १६ ॥ अवि-
भागाच्च शेषस्य सर्वान्प्रत्यविशिष्टत्वात् ॥ १७ ॥

चतुर्थाधिकरणमारचयति—

रथंतरादिभिर्भिन्ना इन्द्रास्तेषां न भिद्यते ।
पुरोडाशस्तत्र शेषकार्यं किं भिद्यते न वा ॥ ६ ॥
भिद्यते कर्मणां भेदाच्चोदकैः पृथगुक्तितः ।
शेषस्य सर्वतुल्यत्वात्तत्कार्यं सकृदिष्यताम् ॥ ७ ॥

'य इन्द्रियकामो वीर्यकामः स्यात्, तमेतया सर्वपृष्ठया याजयेत्' इति विहितायामिष्टौ षडिन्द्रा एवं श्रूयन्ते—'इन्द्राय राथंतराय, इन्द्राय बार्हताय, इन्द्राय वैराजाय, इन्द्राय शाक्वराय, इन्द्राय रैवताय' इति । तत्र स्वरूपेणैकोऽपीन्द्रः पृष्ठस्तोत्रेषु षट्सु विहितानां षण्णां रथंतरादिसाम्नां संबन्धेन विशेष्यमाणः षोढा भिद्यते । तेषां सर्वेषामिन्द्रदेवतानामेक एव पुरोडाशो विधीयते—'द्वादशकपालः पुरोडाशो भवति । वैश्वदेवत्वाय' इति । तस्मिंश्च पुरोडाशे षोढादेवताभ्यः पृथक्पृथक्प्रदानाय बहुभ्यः भेदेभ्योऽवदानं श्रूयते—'समन्तं पर्यवद्यति' इति । तत्र देवताभेदेन प्रदानभेदेन च कर्मणां भेदे सति पृथगतिदेशात्स्विष्टकृदिडादि शेषकार्यं षट्कृत्वः पृथक्कर्तव्यम्—इति चेत् ।

नैवम् । शेषस्यैकत्वेन तत्प्रतिपत्तेः पृथक्त्वासंभवात् । तस्मात्—सकृदेव कार्यम् ॥ ६ ॥ ७ ॥

(पञ्चमे—ऐन्द्रवायवग्रहे द्विःशेषभक्षणाधिकरणे सूत्रम्) ।

ऐन्द्रवायवे तु वचनात्प्रतिकर्म भक्षः स्यात् ॥ १८ ॥

पञ्चमाधिकरणमारचयति—

---

१ ग. च. 'तूर्णायां' । २ ख. भिद्यते । ३ ख. 'स्वतः षो' । ४ ख. 'ष्टं भिद्यते वा न वा । ५ ख. 'देवेभ्यो' ।

ऐन्द्रवायवशेषस्य सकृद्भक्ष उतासकृत् ।
पूर्वन्यायात्सकृत्प्राप्तौ द्विर्भक्षो वचनाद्भवेत् ॥ ८ ॥

ज्योतिष्टोमे योऽयमैन्द्रवायवग्रहः ' तत्र संस्कार्यस्य सोमस्यैकत्वात्सकृदेव शेषकार्यम्—इति चेत् ।

मैवम् । 'द्विरैन्द्रवायवस्य भक्षयति, द्विर्ह्येतस्य वषट्करोति' इति वचनाद्विर्भक्षणम् ॥ ८ ॥

( षष्ठे सोमे शेषभक्षणाधिकरणे सूत्राणि १९--२१ ) ।
सोमेऽवचनाद्भक्षो न विद्यते ॥ १९ ॥ स्याद्वाऽन्यार्थदर्शनात् ॥२०॥ वचनानि त्वपूर्वत्वात्तस्माद्यथोपदेशं स्युः ॥ २१ ॥

षष्ठाधिकरणमारचयति—

सोमेष्वभक्षो भक्षो वा न भक्षो ग्रहहोमतः ।
अल्पोक्तेरस्ति शेषोऽस्य भक्षोऽपूर्ववचोबलात् ॥ ९ ॥

सोमयागेषु शेषभक्षो नास्ति, 'यद्ग्रहाञ्जुहोति' इति कृत्स्नग्रहेणाऽऽहुतिश्रवणात्कुम्भीष्विव शेषाभावात्—इति चेत् ।

मैवम् । 'अल्पं जुहोति' इति विशेषवचनाच्छेषः सिध्यति । तद्भक्षणं त्वपूर्वार्थप्रतिपादकवचनेभ्योऽवगम्यते । 'आश्विनं भक्षयन्ति' 'द्विरैन्द्रवायवस्य भक्षयन्ति' 'सदसि भक्षयन्ति' इत्यादीनि वचनान्यपूर्वार्थं प्रतिपादयन्ति । ततो भक्षविधानादस्ति सोमेषु भक्षः ॥ ९ ॥

( सप्तमे चमसिनां शेषभक्षाधिकरणे सूत्रम्— ) ।
चमसेषु समाख्यानात्संयोगस्य तन्निमित्तत्वात् ॥ २२ ॥

सप्तमाधिकरणमारचयति—

किं प्रैतु होतुश्चमस इत्यभक्षोऽथ भक्षणम् ।
अभक्षोऽनुक्तितो होतुश्चमसेत्याख्ययाऽस्तु तत् ॥ १० ॥

ज्योतिष्टोमे श्रूयते—' प्रैतु होतुश्चमसः, प्र ब्रह्मणः, प्रोद्गातॄणां, प्र यजमानस्य, प्रयन्तु सदस्यानाम्' इति । तत्र—वचनाभावादभक्षः—इति चेत् ।

---

१ ख. ङ. 'ग्रह इष्यते त° । २ ग. च. °चकेभ्यो व° ।

नैवम्। समाख्यागते चमसशब्दे भक्षणस्य प्रतीयमानत्वात्। 'चम्यते भक्ष्यते सोमोऽस्मिन्पात्रविशेषे' इति हि तद्व्युत्पत्तिः। तस्मात्—अस्ति तद्भक्षणम्॥१०॥

( अष्टमे–उद्गातॄणां सह सुब्रह्मण्येन भक्षाधिकरणे सूत्राणि–२३–२६ )।

उद्गातृचमसमेकः श्रुतिसंयोगात्॥२३॥ सर्वे वा सर्वसंयोगात्॥२४॥ स्तोत्रकारिणां वा तत्संयोगाद्बहुश्रुतेः॥२५॥ सर्वे तु वेदसंयोगात्कारणादेकदेशे स्यात्॥२६॥

अष्टमाधिकरणमारचयति—

प्रोद्गातॄणामिति ह्येक उद्गाता भक्षयेदुत।
सर्वेऽपि किंवा सुब्रह्मण्येनोक्ताः सामगायिनः॥११॥
सहितास्तेन ते वाऽऽद्य उद्गातृश्रुतितोऽखिलाः।
बहुत्वाद्गानयोगेन तृतीयो रूढिबाधिते॥१२॥
योगे समाख्यया दण्डिन्यायादन्त्योऽत्र भाष्यगः।
सदसि स्थित्यभावेन तृतीयो वार्तिकोदितः॥१३॥

पूर्वोदाहृतवाक्ये 'प्रोद्गातॄणाम्' इत्यत्रैकस्यैव भक्षः। उद्गीथशब्दाभिधेयायाः सामभक्तेरुद्गातर्युद्गातृप्रातिपदिकस्य रूढत्वात्—इत्येकः पूर्वपक्षः। 'उद्गातॄणाम्' इत्येस्य बहुत्वस्यैकस्मिन्नसंभवादुद्गात्रोपलक्षिताः षोडशार्त्विजः सर्वेऽपि भक्षयेयुः—इति द्वितीयः। उद्गीथप्रस्तावप्रतिहाराख्यसामभागानुद्गातृप्रस्तोतृप्रतिहर्तारः प्रयोगकाले गायन्ति। 'उदुत्कर्षेण गायन्ति' इति योगेनोद्गातारस्त्रयो भक्षयेयुः—इति तृतीयः पक्षः।

'रूढिर्योगमपहरति' इति न्यायादेक एवोद्गाता। तेन च बहुवचनोपपत्तये प्रत्यासन्ना उपलक्ष्यन्ते। प्रत्यासत्तिश्च प्रस्तोतृप्रतिहर्त्रोरिव सुब्रह्मण्यस्याप्यस्ति। सामवेदाध्यायित्वेन सुब्रह्मण्याह्वानरूपे तैदीयकर्मण्यप्यौद्गात्रसमाख्यायाः सत्वात्। तस्मात्—'सुब्रह्मण्येन सहिताश्चत्वारः सामगा भक्षयेयुः'-इत्ययमन्त्यः पक्षो भाष्यकारस्याभिमतः।

वार्तिककारस्तु—सदसो भक्षणस्थानत्वात्सुब्रह्मण्यस्य सदस्यप्रवेशात्तेन विरहिता अवशिष्टाः सामगा भक्षयन्ति—इति तृतीयं पक्षमङ्गीचकार॥११॥१२॥१३॥

---

१ ग. घ. °यास्त्वन्त्यो°। २ ग. घ. °त्यत्र ब°। ३ क. ङ. °स्यास्ति। ४ क. ङ. °द्वीये क°।

(नवमे ग्रावस्तुतोऽपि सोमभक्षणाधिकरणे सूत्राणि २७-३०)।

ग्रावस्तुतो भक्षो न विद्यतेऽनाम्नानात् ॥२७॥ हारियोजने वा सर्वसंयोगात् ॥२८॥ चमसिनां वा संनिधानात् ॥२९॥ सर्वेषां तु विधित्वात्तदर्था चमसिश्रुतिः ॥ ३० ॥

नवमाधिकरणमारचयति—

किं स्याच्चमसिनामेव हारियोजनभक्षणम् ।
सर्वेषां वाऽग्रिमस्तेषां पूर्ववाक्येण संनिधिः ॥ १४ ॥
लिप्सन्ते सर्व एवेति हारियोजनवाक्यतः ।
ग्रावस्तुतोऽप्यस्ति भक्षश्चमसित्वमकारणम् ॥ १५ ॥

'हरिरसि हारियोजनः' इत्यनेन मन्त्रेण गृह्यमाणो ग्रहो हारियोजनः। होतृप्रभृतयश्चमसिनः । यस्तु चतुर्णां होतॄणां मध्ये चतुर्थो ग्रावस्तुन्नामकोऽस्ति, नासौ चमसी । तत्र चमसिनामेव हारियोजनभक्षणम् । कुतः--"यथाचमसमन्यांश्चमसांश्चमसिनो भक्षयन्ति, अथैतस्य हारियोजनस्य सर्व एव लिप्सन्ते' इत्यत्र पूर्ववाक्ये चमसिनां संनिहितत्वेनोत्तरवाक्ये सर्वशब्देन तेषामेवाभिधातव्यत्वात् । अतो नास्ति ग्रावस्तुतस्तत्र भक्षः--इति प्राप्ते—

ब्रूमः--सर्वशब्देनैवकारेण च चमसिमात्रशङ्कामपोद्य वाक्येन विहितस्य सर्वभक्षणस्य संनिधिमात्रेण संकोचायोगादस्ति ग्रावस्तुतोऽपि भक्षः । तस्मात्—चमसित्वं न भक्षणे कारणम् ॥१४॥१५॥

( दशमे वषट्करणस्य भक्षनिमित्तताधिकरणे सूत्रम्--) ।

वषट्काराच्च भक्षयेत् ॥ ३१ ॥

दशमाधिकरणमारचयति—

आद्यभक्षो वषट्कर्तुर्विधिः प्राथम्य एव किम् ।
किंवा तद्युक्तभक्षे स्याद्वषट्कारनिमित्तके ॥ १६ ॥
अप्राप्तेरग्रिमो मैवं समासस्थित्यसंभवात् ।
विशिष्टस्य विधिस्तस्माद्वषट्कारोऽपि कारणम् ॥१७॥

'वषट्कर्तुः प्रथमभक्षः' इत्येवं श्रूयते । वषट्कर्ता होता । तस्य भक्षणं समाख्यया प्राप्तम् । प्राथम्यं त्वप्राप्तमिति तदेवात्र विधीयते--इति चेत् ।

---

१ क. 'होत्र वा' । २ क. 'निहितमात्रं' । ३ क. 'भक्षे च' ।

नैवम्। 'प्रथमभक्षः' इत्यस्य समस्तपदत्वेन 'यो भक्षः, स प्रथमः' इत्येवं विच्छिद्यान्वेतुमयोग्यत्वात्प्राथम्यविशिष्टभक्षणमत्र विधीयते। तस्मिन्भक्षणे वषट्कारः कारणम् ॥१६॥१७॥

( एकादशे होमाभिषवयोरपि भक्षनिमित्तताधिकरणे सूत्रम्— )॥

होमाभिषवाभ्यां च ॥३२॥

एकादशाधिकरणमारचयति—

आख्यावचोवषट्कारा एव किं भक्षहेतवः।
किंवाऽभिषवहोमौ च तत्राऽऽद्योऽस्तूक्तया दिशा ॥ १८ ॥
हविर्धानेऽभिषुत्याथ हुत्वा सदसि भक्षयेत्।
इति श्रुतत्वतस्तौ च भक्षहेतू यथेतरे ॥ १९ ॥

'नेतु होतुश्चमसः' इत्यत्र समाख्या भक्षहेतुः। हारियोजने वाक्यम्। 'वषट्कर्तुः प्रथमभक्षः' इत्यत्र वषट्कारः। इत्येवमुक्तत्वात्त्रय एव भक्षहेतवः-इति चेत्।

नैवम्। 'हविर्धाने ग्रावभिरभिषुत्याऽऽहवनीये हुत्वा प्रत्यञ्चः परेत्य सदसि भक्षान्भक्षयन्ति' इति श्रूयते। उत्तरवेद्याः प्रतीचीने सदसः प्राचीने मण्डलेऽभिषवः। उत्तरवेद्यां होमः। सदसि भक्षणम्। तत्र—अभिषवहोमयोर्वचनान्तरप्राप्तयोरविधेयतया तौ निमित्तत्वेनानूद्य भक्षणं विधीयते। तस्मात्-समाख्यादिवदेतयोरपि[1] भक्षणहेतुत्वमस्ति ॥१८॥१९॥

( द्वादशे वषट्कर्त्रादीनां[2] चमसे सोमभक्षाधिकरणे सूत्राणि ३३—३५)।

प्रत्यक्षोपदेशाच्चमसानामव्यक्तः शेषे॥३३॥स्याद्वा कारणभावादनिर्देशश्चमसानां कर्तुस्तद्वचनत्वात् ॥३४॥ चमसे चान्यदर्शनात् ॥ ३५ ॥

द्वादशाधिकरणमारचयति—

हेतुसंघे विकल्पः किं बाधो वाऽथ समुच्चयः।
साम्याद्विकल्पो बाधन्तां सावकाशाः समाख्यया ॥ २० ॥
नैव वाचनिकं बाध्यं भक्षणेऽत्र विभागशः।
सिद्धे विकल्पो नो युक्तः स्वीकार्योऽतः समुच्चयः ॥ २१ ॥

---

१ ग. ख. 'वीनम'। २ क. ख. ङ. 'पि हे'।

'नैतु होतुश्चमसः, न भक्षणः'—इत्यत्र चमसिषु समाख्या भक्षणे हेतुः। 'वषट्कर्तुः प्रथमभक्षः' इत्यत्र वषट्कारो होतुर्भक्षहेतुः। 'हविर्धाने ग्रावभिरभिषुत्याऽऽहवनीये हुत्वा सदसि भक्षयन्ति' इत्यत्राभिषवसहितो होमोऽध्वर्योर्भक्षहेतुः। तत्र चमसवषट्कारयोः संबंधो होतरि प्राप्तः। चमसाभिषवसंबंधोऽध्वर्यौ प्राप्तः। तत्र हेतुद्वयस्य समानबलत्वाद्विकल्पे सत्यन्यतरानिमित्तकृतमेवं भक्षणम्—इत्याद्यः पक्षः। वषट्कारादिहेतोश्चमसेतरग्रहे साकाङ्क्षत्वान्निरवकाशया चमसितसमाख्यया तद्बाधे सति चमसिषु पाक्षिकमपि वषट्कारादिहेतुकं भक्षणं नास्ति—इति द्वितीयः पक्षः।

'वषट्कर्तुः' इत्यादिवाक्यस्य प्रबलत्वात्समाख्यया बाधो न युक्तः। निरवकाशतया साऽपि प्रबला—इति चेत्। तर्हि प्रमाणद्वयेन पृथग्भक्षणे विहिते समुच्चयोऽभ्युपेयः, न च व्रीहियववद्विकल्पः। तत्र पुरोडाशनिष्पादनस्य दृष्टप्रयोजनस्यैकत्वात्। इह तु नियमादृष्टार्थं भक्षणम्। तच्चादृष्टं यथावचनं द्विविधम्। तस्मात्समुच्चयः ॥२०॥२१॥

(त्रयोदशे होतुः प्रथमभक्षाधिकरणे सूत्राणि ३६—३९)।

एकपात्रे क्रमादध्वर्युः पूर्वो भक्षयेत् ॥३६॥ होता वा मन्त्रवर्णात् ॥ ३७ ॥ वचनाच्च ॥३८॥ कारणानुपूर्व्याच्च ॥ ३९ ॥

त्रयोदशाधिकरणमारचयति—

एकपात्रे किमध्वर्युरद्यात्पूर्वमुतेतरः।
तद्धस्ते पात्रसंस्थानात्तस्य प्रथमभक्षणम् ॥ २२ ॥
पाहि होतेव नः पूर्वमिति मन्त्रेण पूर्वता।
वषट्कर्तुस्तदुक्तेश्च न्यायबाध्यं वचो नहि ॥ २३ ॥

एकस्मिन्पात्रे बहूनां क्वचिद्विहितं भक्षणम्—तत्र—अध्वर्युः प्रथमं भक्षयेत्पात्रसंनिधानात्—इति चेत्।

मैवम्। लिङ्गवाक्याभ्यां होतुः प्रथमभक्षावगमात्। 'होतेव नः प्रथमः पाहि' इति ऋत्विजोऽध्वर्युं संबोध्यैवं प्रार्थयन्ते—'यथा होताऽस्मत्तः पूर्वं भक्षयित्वा शेषप्रदानेनास्मान्पालितवान्, तथा त्वमपि पाहि' इति। तदेतद्धोतुः प्रथमभक्षे

१ ख. भक्षे। २ क. ख. ग. च. °भिरित्यत्राभि°। ३ ग. च प्राप्नोति। ४ क. °ध्वर्योः [प्रा]°। ५ ग. च. °मेकमेव। ६ क. ख. ङ. °मसेषु। ७ क. ङ. °वं इति। ८ख. भक्षणे लि°।

लिङ्गम्। वाक्यं चैवमाम्नातम्—'वषट्कर्तुः प्रथमभक्षः' इति। तत्र विशिष्ट-विधानात्प्राथम्यमपि सिध्यति। न चैतद्वचनं पात्रसंनिधिरूपेण न्यायमात्रेण बाधितुं शक्यम्। तस्मात्—होता प्रथमं भक्षयेत् ॥ २२ ॥ २३ ॥

(चतुर्दशे भक्षस्यानुज्ञापूर्वकत्वाधिकरणे सूत्रम्—)।

वचनानुज्ञातभक्षणम् ॥ ४० ॥

चतुर्दशाधिकरणमारचयति—

नानुज्ञापूर्वको भक्षस्तत्पूर्वो वाऽत्र लाघवात्।
आद्यो नानुपहूतेन पेय इत्युक्तितोऽन्तिमः ॥ २४ ॥

अनुज्ञाभक्षयोर्द्वयोरनुष्ठितौ गौरवाद्भक्षमात्रम्—इति चेत्। मैवम्। 'तस्मात्सोमो नानुपहूतेन पेयः' इति वचनेनानुज्ञाया आवश्यकत्वात् ॥ २४ ॥

(पञ्चदशे वैदिकवचनेनानुज्ञापनाधिकरणे सूत्रम्)।

तदुपहूत उपह्वयस्वेत्यनेनानुज्ञापयेल्लिङ्गात् ॥ ४१ ॥

पञ्चदशाधिकरणमारचयति—

किमनुज्ञा लौकिकोक्त्या वेदोक्त्या वा यथा तथा।
अविशेषादुपह्वानमन्त्रलिङ्गात्तु वैदिकी ॥ २५ ॥

'उपहूत उपह्वयस्व'—इत्ययं मन्त्रो लिङ्गेन मन्त्रमनुज्ञायां विनियुङ्क्ते। तस्मात्—वैदिकोक्त्या तदनुज्ञानम् ॥ २५ ॥

(षोडशे वैदिकवाक्येन प्रतिवचनाधिकरणे सूत्रम्—)।

तत्रार्थात्प्रतिवचनम् ॥ ४२ ॥

षोडशाधिकरणमारचयति—

उपह्वयस्वोपहूत इत्यशेषो द्वयोर्भवेत्।
अनुज्ञानुज्ञापनयोरथवाऽसौ विभज्यते ॥ २६ ॥
विभागकरणाभावादशेषश्चेन्न लिङ्गतः।
उपह्वयेत्यनुज्ञाताऽनुज्ञाने तथेतरः ॥ २७ ॥

'उपहूत उपह्वयस्व' इत्यस्मिन्मन्त्रे मध्यमपुरुषैकवचनान्तो भागः पश्चात्पठि-

---

१ ख. °म्यमिति सि°। २ ग. घ. वाऽत्र। ३ ख. ग. घ. °क्षणयो°। ४ क, ख, ङ. °ह्वानं°।

सोऽपि मन्त्रसमवायात्प्रथमभाविन्यनुज्ञापने समर्थः। प्रथमैकवचनान्तस्तु प्रथमपठितोऽन्युत्तरसमानत्वात्पश्चाद्भाविन्यामनुज्ञायां समर्थः । तस्मात्–लिङ्गेन विभज्य विनियुज्यते ॥ २६ ॥ २७ ॥

( सप्तदशे–एकपात्राणामनुज्ञापनाधिकरणे सूत्रम्– ) ।

तदेकपात्राणां समवायात् ॥ ४३ ॥

सप्तदशाधिकरणमारचयति–

उपह्वानमशेषाणामुत स्यादेकपात्रिणाम् ।
अदृष्टहेतोराद्यः स्याद्दृष्टाधिक्यादितोऽन्तिमः ॥ २८ ॥

अनुज्ञापनस्यादृष्टं प्रयोजनम् । तच्च विभिन्नपात्रेष्वपि समानम्–इति चेत् । न । दृष्टप्रयोजनस्य सद्भावात् । साधारणे वस्तुनि कथंचिद्भागाधिक्येऽपवादो भवति । अतो न्यूनाधिकत्वपरिहारानिमित्तमनुज्ञापनमेकपात्रिणामेव ॥२८॥

( अष्टादशे स्वयंयष्टुर्भक्षास्तित्वाधिकरणे सूत्राणि ४४–४६ ) ।

याज्यापनयेनापनीतो भक्षः प्रवरवत् ॥ ४४ ॥
यष्टुर्वा कारणागमात् ॥४५॥ प्रवृत्तत्वात्प्रवरस्यानपायः ॥ ४६ ॥

अष्टादशाधिकरणमारचयति–

होतुर्याज्यापनीतौ किं न वषट्कारभक्षयोः ।
अपनीतिरुतापायो नापनीतिर्विभेदतः ॥ २९ ॥
यजमानेन यष्टव्यं न विनेष्टिर्वषट्कृतिम् ।
वषट्कारो याज्ययाऽतः सहापैत्यदनं तथा ॥ ३० ॥

ज्योतिष्टोम ऋतुयाजनामकेषु यागेष्वाम्नायते–"यजमानस्य याज्या सोऽभिप्रेष्यति–होतरेतद्यज–इति, स्वयं वा निषद्य यजति" इति[1] । हौत्रे काण्डे समाम्नाता याज्याः समाख्यया होतुः प्राप्ताः । तासु काचिद्याज्या होतुरपनीय यजमानस्य विधीयते । ततो यजमानः स्वेच्छया होतारं वा प्रेष्यति, स्वयं वा याज्यां पठति । तत्र स्वपाठपक्षे याज्या होतुरपनीयते, न तु वषट्कारभक्षावपनीयेते । तयोर्याज्यायामनन्तर्भावात् । अतो होता वषट्करोति भक्षयति च–इति प्राप्ते,–

१ ग. च. °पात्राणा° । २ ग. च. वा वषड्यज° । ३ ख. ग. च. °ति । होत्रक° । ४ ख. ग. ङ. च. याज्यैव हौ° ।

भ्रमः—'स्वयं वा निषद्य यजति' इतिपक्षस्वीकाराद्यजमानेन स्वयं यागः कर्तव्यः। स च यागो वषट्कारमन्त्रेण न संभवति। 'याज्याया अधि वषट्करोति' इति तद्विधानात्। ननु—यजमानो याज्यां पठतु, होता वषट्करोतु—इति चेत्। मैवम्। 'अनवानं यजति' इति याज्यावषट्कारयोर्मध्ये श्वासनिषेधेनैककर्तृकत्वावगमात्। अतो याज्यया सह वषट्कारो होतुरेवैति। तदपाये वषट्कारनिमित्तो भक्षश्च होतुरपेत्य यजमाने निविशते ॥ २९ ॥ ३० ॥

( एकोनविंशे फलचमसस्येज्याविकारताधिकरणे सूत्राणि ४७--५१ )।

फलचमसो नैमित्तिको भक्षविकारः श्रुतिसंयोगात् ॥ ४७ ॥ इज्याविकारो वा संस्कारस्य तदर्थत्वात् ॥ ४८ ॥ होमात् ॥ ४९ ॥ चमसैश्च तुल्यकालत्वात् ॥ ५० ॥ लिङ्गदर्शनाच्च ॥५१॥

एकोनविंशाधिकरणमारचयति—

न्यग्रोधपिष्टं सोमस्य स्थाने क्षत्रियवैश्ययोः।
भक्षमात्रे विकुर्यात्तत्सोमयागेऽपि वा तथा ॥ ३१ ॥
विभक्षयिषया वाक्यमुपक्रम्योपसंहृतम्।
भक्षं यच्छेदिति ततो विकारो भक्षमात्रगः ॥ ३२ ॥
फलाख्यचमसेनासौ यजेतेति श्रुतं ततः।
इज्यायां च विकारोऽस्ति यागार्था भक्षसंस्कृतिः ॥ ३३॥

ज्योतिष्टोमे श्रूयते—'यदि राजन्यं वैश्यं वा याजयेत्, स यदि सोमं बिभक्षयिषेत्, न्यग्रोधस्तिभिनीराहृत्य ताः संपिष्य दधन्युन्मृज्य तमस्मै भक्षं प्रयच्छेत्, न सोमम्' इति। स्तिभिन्यो मुकुलानि। तत्र—उपक्रमोपसंहारयोर्भक्षविषयत्वाद्भक्षमात्रे सोमः पिष्टेन विक्रियते—इति चेत्।

मैवम्। 'यदाऽन्यांश्चमसाञ्जुह्वति, अथैतस्य दर्भतरुणकेनोपहत्य जुहोति' इति श्रुतम्। तत्र फलचमसरूपेण यथोक्तपिष्टेन यागमङ्गीकृत्य भक्षणगुणो विधीयते। किंच—इष्टद्रव्यसंस्कारो हि भक्षः। स च यागमन्तरेणानुपपन्नः। तस्मात्—यागेऽपि विकारः ॥ ३१ ॥ ३२ ॥ ३३ ॥

---

१ क. ग. ङ. च. °न या°। २ क. ख. ङ. °तु। ब°। ३ क. ङ. °पहत्य।

(विंशे ब्राह्मणानामेव राजन्यचमसानुप्रसर्पणाधिकरणे सूत्रे ५२—५३)।

अनुप्रसर्पिषु सामान्यात् ॥ ५२ ॥

ब्राह्मणा वा तुल्यशब्दत्वात् ॥ ५३ ॥

विंशाधिकरणमारचयति—

राजसूये क्वचित्कर्तुश्चमसो दशभिर्जनैः ।
भक्ष्यः किं तत्र राजन्या भक्षका ब्राह्मणा उत ॥ ३४ ॥
आद्यो भानात्संख्ययैकजातेर्विप्राः शतं दश ।
चमसानन्वुरित्युक्त्या राजपात्रं च विप्रगम् ॥ ३५ ॥

राजसूये दशपेयनामके यागे श्रूयते—'दश दशैकैकं चमसमनुप्रसर्पन्ति' इति । तत्र यजमानस्य राजन्यस्य यश्चमसः, सोऽयं राजन्यैरेव दशभिर्भक्षणीयः। कुतः । 'दश' इति संख्यया जात्येकत्वप्रातिभानात् । तथा हि—दशपेयस्य ज्योतिष्टोमविकृतित्वात्प्राकृतं धर्मजातं चोदकेन प्राप्तम् । प्रकृतौ च—यजमानचमसस्य भिन्नजातिभिर्भक्षणं नास्ति, इत्यत्रापि तथैव प्राप्तम् । यदि—अत्र 'दश' इति विशेषो विधीयते, तर्हि प्राकृतं भक्षसंख्यामात्रं निवर्तताम् , नत्वेकजातित्वम् । तस्मात्—राजन्यो यजमानोऽन्यै राजन्यैर्नवभिः सह भक्षयेत्—इति प्राप्ते,—

ब्रूमः—प्रकृतितः प्राप्तेषु दशसु चमसेषु भक्षणायानुप्रसर्पतां पुरुषाणां 'दश, दश, इति वीप्सया प्रतिचमसं दशसंख्यां विधायार्थसिद्धां शतसंख्यामनूद्य संख्येयानां सर्वेषां ब्राह्मण्यं विधीयते—'×शतं ब्राह्मणाः पिबन्ति ' इति । तथा सति—यजमानस्यापि राजन्यस्य यत्र चमसभक्षो नास्ति, तत्र कुतोऽन्ये राजन्या भक्षयेयुः । तस्मात्—ब्राह्मणा एव भक्षकाः ॥ ३४ ॥ ३५ ॥

इति श्रीमाधवीये जैमिनीयन्यायमालाविस्तरे
तृतीयाध्यायस्य पञ्चमः पादः ॥ ५ ॥

---

| | अत्र पादे | आदितः । |
|---|---|---|
| अधिकरणानि | २० | १८४ । |
| सूत्राणि | ५३ | ५१५ । |

× " शतं ब्राह्मणाः सोमं भक्षयन्ति " इति शबरभाष्ये पाठः ।

१ ख. भक्षः । २ ख. °त्संज्ञये° । ३ क. जात्यैक° । ४ क. तथाऽपि । ५ ख. ग. च—विधीयते । ६ क. वीप्सायाः । ७ क. ख. ङ. °त्र भ° ।

( अथ तृतीयाध्यायस्य षष्ठः पादः )।

( प्रथमे स्रुवादिषु खादिरत्वादिविधेः प्रकृतिगामिताधिकरणे सूत्राणि १—८ )।

सर्वार्थमप्रकरणात् ॥ १ ॥ प्रकृतौ वाऽद्विरुक्तत्वात् ॥ २ ॥ तद्वर्जं तु वचनप्राप्ते ॥ ३ ॥ दर्शनादिति चेत् ॥ ४ ॥ न चोदनैकार्थ्यात् ॥ ५ ॥ उत्पत्तिरिति चेत् ॥ ६ ॥ न तुल्यत्वात् ॥ ७ ॥ चोदनार्थकार्त्स्न्यात्तु न मुख्यविप्रतिषेधात्प्रकृत्यर्थः ॥ ८ ॥

षष्ठपादस्य प्रथमाधिकरणमारचयति—

प्रकृतौ विकृतौ वा स्याद्यस्य पर्णेत्यसौ विधिः।
प्रकृतावेव वा तुल्याद्वचनादुभयोरसौ ॥ १ ॥
जुहूमाश्रित्य पर्णत्वविधिः प्रकृतिमात्रगः।
चोदकेनाप्यप्राप्तेर्विकृतौ विधिनाऽत्र किम् ॥ २ ॥

अनारभ्य श्रूयते—'यस्य पर्णमयी जुहूर्भवति, न स पापं श्लोकं शृणोति' इति। तत्र—अव्यभिचरितक्रतुसंबन्धवर्तीं जुहूमाश्रित्य तद्धेतुः पर्णवृक्षो वाक्येन विधीयते—'या जुहूः सा पर्णमयी' इति। वाक्यं च प्रकृतिविकृत्योस्तुल्यमेव प्रवर्तते। उभयत्राऽऽश्रयभूताया जुह्वाः सत्त्वात्। तस्मात्—प्रकृतिविकृत्योरुभयोरप्ययं विधिः—इति प्राप्ते,—

ब्रूमः—किमयं विधिर्विकृतौ चोदकात्पूर्वं निविशते, पश्चाद्वा। नाऽऽद्यः। आश्रयभूताया जुह्वाश्चोदकमन्तरेणासंभवात्। द्वितीये तु पर्णत्वमपि जुह्वा सहैव चोदकेनातिदिश्यते। तत्र पुनर्विधिवैयर्थ्यादयं विधिः प्रकृतिमात्रगः। एवं 'यस्य खादिरः स्रुवो भवति' इत्युदाहरणीयम् ॥१॥२॥

( द्वितीये सामिधेनीनां सप्तदशसंख्याया विकृतिगामिताधिकरणे सूत्रम्— )।

प्रकरणविशेषात्तु विकृतौ विरोधि स्यात् ॥ ९ ॥

द्वितीयाधिकरणमारचयति—

१ ग. घ. च। २ क. °र्णत्वे वि°। ३ क. °स्तुल्यं प्र°। ४ °त्र पर्णताया।

सामिधेनीः सप्तदश प्रकृतौ विकृतावुत ।
पूर्ववत्प्रकृतौ पाञ्चदश्येनैतद्विकल्प्यते ॥ ३ ॥
विकृतौ साप्तदश्यं स्यात्प्रकृतौ प्रक्रियाबलात् ।
पाञ्चदश्यावरुद्धत्वादाकाङ्क्षाया निवृत्तितः ॥ ४ ॥

अनारभ्य श्रूयते—'सप्तदश सामिधेनीरनुब्रूयात्' इति । 'प्रवो वाजा अभिद्यव'—इत्याद्या अग्निसमिन्धनार्था ऋचः सामिधेन्यः । तासां साप्तदश्यं पूर्वन्यायेन प्रकृतिगतम् । यदि प्रकृतौ 'पञ्चदश सामिधेनीरन्वाह' इति विधिः स्यात्, तर्हि पाञ्चदश्यसाप्तदश्ये विकल्पेयाताम्—इति प्राप्ते,—

ब्रूमः—विकृतावेव साप्तदश्यं निविशते । प्रकृतौ पाञ्चदश्येनावरुद्धानां सामिधेनीनां संख्याकाङ्क्षाया अभावात् । न च—पाञ्चदश्यसाप्तदश्यवाक्ययोः समानबलत्वादवरोधाभावः—इति शङ्कनीयम् । पाञ्चदश्ये प्रकरणानुग्रहस्याधिकत्वात् । तस्मात्—मित्रविन्दाध्वरकल्पादिविकृतौ साप्तदश्यमवतिष्ठते । न चात्र पूर्वन्यायोऽस्ति । साप्तदश्यस्य चोदकप्राप्त्यभावेन पुनर्विधाने दोषाभावात् ॥ ३ ॥ ४ ॥

( तृतीये नैमित्तिकसाप्तदश्यस्य प्रकृतिगामिताधिकरणे सूत्रम्— )

नैमित्तिकं तु प्रकृतौ, तद्विकारः संयोगविशेषात् ॥ १० ॥

तृतीयाधिकरणमारचयति—

साप्तदश्यं तु वैश्यस्य विकृतौ प्रकृतावुत ।
पूर्ववन्नेह संकोचान्नित्ये नैमित्तिकोक्तितः ॥ ५ ॥
गोदोहनेन प्रणयेत्कामीत्येतदुदाहरत् ।
भाष्यकारस्तदप्यस्तु न्यायस्यात्र समत्वतः ॥ ६ ॥

'सप्तदशानुब्रूयाद्वैश्यस्य' इति विहितं वैश्यनिमित्तं साप्तदश्यं पूर्वन्यायेन विकृतिगतम्—इति चेत् ।

नैवम् । नैमित्तिकेनानेन वचनेन प्रकृतिगतस्य नित्यस्य पाञ्चदश्यस्य वैश्यव्यतिरिक्तविषयतया संकोचनीयत्वात् । नित्यं सामान्यरूपतया सावकाशत्वेन च दुर्बलम् । नैमित्तिकं तु विशेषरूपत्वनिरवकाशत्वाभ्यां प्रबलम् । तस्मात्—वैश्यनिमित्तकं साप्तदश्यं प्रकृताववतिष्ठते ।

अत्र भाष्यकारोऽन्यदुदाजहार—'चमसेनापः प्रणयेद्गोदोहनेन पशुकामस्य' इति । तत्र-प्रकृतेश्चमसेनावरुद्धत्वाद्गोदोहनं विकृतौ-इति पूर्वपक्षः । कामनानि-

१ ग. च. 'धानवो' । २ स. 'नित्यमे' । ३ स. 'मित्तकं सा' । ४ क. 'त्यपा' ।

मित्तकेन गोदोहनेन नित्यस्य चमसस्य निष्कामविषयतया संकोचनीयत्वात्प्रकृतावेव गोदोहनम्–इति राद्धान्तः ॥ ५ ॥ ६ ॥

( चतुर्थे,–आधानस्य पवमानेष्ट्यनङ्गताधिकरणे सूत्राणि ११–१३ )।

इष्ट्यर्थमग्न्याधेयं प्रकरणात् ॥ ११ ॥ न वा तासां तदर्थत्वात् ॥ १२ ॥ लिङ्गदर्शनाच्च ॥ १३ ॥

चतुर्थाधिकरणमारचयति–

आधानं पवमानादेरिष्टेरङ्गं न वा भवेत् ।
अग्नीनामिष्टिशेषत्वात्तद्द्वाराऽस्य तदङ्गता ॥ ७ ॥
अनारभ्य विधानात्तु नाङ्गं कस्यचिदाहितिः ।
अग्न्यर्थत्वात्तत्समेष्टिरग्नयस्त्वग्निहोत्रगाः ॥ ८ ॥

इदमाम्नायते–' अग्नये पवमानायाष्टाकपालं निर्वपेत्, अग्नये पावकाय, अग्नये शुचये ' इति । 'वसन्ते ब्राह्मणोऽग्नीनादधीत' इति च । तत्र–आधानं पवमानादीष्टीनामङ्गं भवेत् । कुतः । दर्शपूर्णमासविकृतिषु पवमानादीष्टिषु चोदकप्राप्तानामाहवनीयाद्यग्नीनामिष्ट्यङ्गत्वे सत्यग्निद्वारा तत्संस्काररूपस्याऽऽधानस्यापि तदङ्गताया अनिवार्यत्वात्–इति चेत् ।

मैवम् । न ह्येतदाधानं कस्यचित्क्रतोः प्रकरणे पठितम् । किंतु–अनारभ्याधीतम् । अतो न कस्याप्येतदङ्गम्, किंत्वाधानवदिष्टीनामप्यग्निसंस्कारार्थत्वात्परस्परं नास्त्यङ्गाङ्गिभावशङ्का । ननु–पवमानेष्ट्यङ्गत्वाभावेऽग्निसंस्कारवैयर्थ्यादग्निद्वारा तदङ्गत्वं युक्तम्–इति चेत् । न । संस्कृतानामग्नीनामग्निहोत्राद्युत्तरक्रतुषु तत्तद्वाक्यैर्विनियोगावगमात् । तस्मात्–नाऽऽधानमङ्गम् ॥ ७ ॥ ८ ॥

( पञ्चमे,–आधानस्य सर्वार्थताधिकरणे सूत्रे १४–१५ )।

तत्प्रकृत्यर्थं यथाऽन्येऽनारभ्यवादाः ॥ १४ ॥
सर्वार्थं वाऽऽधानस्य स्वकालत्वात् ॥ १५ ॥

पञ्चमाधिकरणमारचयति–

---

१ ग. च. °मिष्टशे° । २ ग. च. °नामग्नि° । ३ ग. च. °नामुत्तरक° ।

आधानं किं प्रकृत्यर्थं वह्निमात्रेण वा युतम् ।
संस्कृताग्निप्रनाड्यैतत्पर्णवत्प्रकृतौ स्थितम् ॥ ९ ॥
लौकिकाकारमात्रत्वे विफलत्वात्कृतौ युतिः ।
पर्णस्याऽऽहवनीयादौ शास्त्रीयेऽस्तु स्वतन्त्रता ॥ १० ॥

अनारभ्याधीतं पर्णमयीत्वं यथा जुहूप्रनाड्या प्रकृतौ निविष्टं, तथैवाग्नि-प्रनाड्या तत्संस्काररूपमाधानं प्रकृतौ निविश्यते—इति चेत् ।

मैवम् । वैषम्यात् । द्विविधो हि जुह्वा आकारः—लौकिकः शास्त्रीयश्च । अरत्निमात्रदैर्घ्यहंसमुखत्वत्वग्बिलत्वादिरूपो दृश्यमानो लौकिकः । अपूर्वीयत्वा-कारस्तु शास्त्रीयः । तयोरपूर्वीयत्वं क्रतुप्रवेशमन्तरेण नास्ति । तत्र यदि लौकि-काकारमात्रे पर्यवस्यति, तदा पर्णमयीत्वं विफलं भवेत् । काष्ठान्तरेणापि तदा-कारस्य सुसंपादत्वात् । अतोऽपूर्वीयत्वाय पर्णः क्रतौ प्रविष्टः । आहवनीयादीनां त्वेक एव शास्त्रीयाकारः । स च विधिबलादाधानेनैव जन्यते, नान्यथा । तस्मादाधानस्य क्रतुप्रवेशं विनैव शास्त्रीयाहवनीयाद्याकारसंपादनसमर्थत्वादाग्निहो-त्रेण तत्संयुज्यते । तथा सति पर्णवैषम्यात्प्रकृतावप्रविश्याग्नीनुत्पाद्य क्रतुबरस्वा-तन्त्र्येणावतिष्ठते । ततो लौकिकोपायसंपादितसुवर्णव्रीह्यादिवदाधानसंपादितानां स्वतन्त्राणामेवाऽऽहवनीयाद्यग्नीनां पश्चाद्वाक्यैः क्रतुषु विनियोगोऽस्तु ॥९॥१०॥

( षष्ठ पवमानेष्टीनामसंस्कृतेऽग्नौ कर्तव्यताधिकरणे सूत्रे १६–१७ ) ।

तासामग्निः प्रकृतितः प्रयाजवत्स्यात् ॥ १६॥
न वा तासां तदर्थत्वात् ॥ १७ ॥

षष्ठाधिकरणमारचयति—

संस्कृते पवमानेष्ट्या वह्नौ सेष्टिर्न वेष्टयः ।
वह्नौ तत्संस्कृते कार्याश्चोदकस्यानुरोधतः ॥ ११ ॥
चोदकः पवमानेष्टौ न तां प्रापयितुं प्रभुः ।
अनङ्गत्वेष्ट्यसिद्धिभ्यामिष्टयस्तदसंस्कृते ॥ १२ ॥

पवमानादीष्टिभिराहवनीयाद्यग्नयः संस्क्रियन्ते । संस्कृतेष्वग्निष्वग्निहोत्रदर्शपूर्ण-मासादिक्रतवः प्रवर्तन्ते । तथा सति—विमताः पवमानेष्टयस्ताभिरिष्टिभिः संस्कृते वह्नौ कर्तव्याः, इष्टित्वात्, इतरेष्टिवत् । चोदकोऽप्येवं । सत्यनुगृहीतो भवति । एताभिरिष्टिभिः संस्कृते वह्नौ प्रकृत्यनुष्ठानात्—इति प्राप्ते—

१ ग. च. °बस्येत, त° । २ क. °दनास° । ३ क° तेष्वग्निहो° ।

ब्रूमः—यद्यपि पवमानेष्टिर्विकृतिः, तथाऽपि चोदको न तस्यां पवमानेष्टौ पवमानेष्टिमतिदेष्टुं प्रभवति । प्रकृतौ प्रयाजादिवत्पवमानेष्टेरङ्गत्वाभावात् । किंच—'एतस्याः पवमानेष्टेः संस्कृताग्निसिद्ध्यर्थं पवमानेष्ट्यन्तराङ्गीकारे तत्रापि तथा' इत्यनवस्थायामिष्टिरेव न सिध्येत् । तस्मात्—ताभिरिष्टिभिरसंस्कृते वह्नौ पवमानेष्टयः कर्तव्याः ॥ ११ ॥ १२ ॥

(सप्तमे—उपाकरणादीनामग्नीषोमीयधर्मताधिकरणे सूत्राणि १८—२७)।

तुल्यः सर्वेषां पशुविधिः प्रकरणाविशेषात् ॥१८॥ स्थानाच्च पूर्वस्य ॥१९॥ श्वस्त्वेकेषां तत्र प्राक्श्रुतिर्गुणार्था ॥ २० ॥ तेनोत्कृष्टस्य कालविधिरिति चेत् ॥ २१ ॥ नैकदेशत्वात् ॥ २२ ॥ अर्थेनेति चेत् ॥ २३ ॥ न श्रुतिविप्रतिषेधात् ॥ २४ ॥ स्थानात्तु पूर्वस्य संस्कारस्य तदर्थत्वात् ॥२५॥ लिङ्गदर्शनाच्च ॥२६॥ अचोदना वा गुणार्थेन ॥ २७ ॥

सप्तमाधिकरणमारचयति—

अग्नीषोमीयसवनीयानुबन्ध्यपशुष्वमी ।
उपाकरणमुख्यास्तु धर्माः साधारणा न वा ॥ १३ ॥
ज्योतिष्टोमप्रकरणे पाठात्साधारणा अमी ।
पशुधर्माग्रहात्सोमयागे ते स्युर्निरर्थकाः ॥ १४ ॥
अग्नीषोमीयधर्मत्वं तेषां स्थानात्प्रसिध्यति ।
द्वयोरितरयोः पश्वोः प्राप्यन्ते चोदकेन ते ॥ १५ ॥

अग्नीषोमीयः, सवनीयः, अनुबन्ध्यश्च, इत्येते त्रयः पशवो ज्योतिष्टोमप्रकरणे समाम्नाताः । पशुधर्माश्चोपाकरणपर्यग्निकरणादयस्तत्राऽऽम्नाताः । 'प्रजापतेर्जायमानाः' 'इमं पशुम्'—इत्याभ्यामृग्भ्यां पशोः स्पर्शनमुपाकरणम् । दर्भज्वालाभिः प्रदक्षिणीकरणं पर्यग्निकरणम् । त एते धर्माः त्रिष्वपि पशुषु साधारण्येन विधीयन्ते । त्रयाणामपि ज्योतिष्टोमप्रकरणपाठसाम्यात् । ननु ज्योतिष्टोमस्य प्रकरणे पठितानेतान्धर्मान्स एव ग्रहीष्यति, न तु पशवः—इति चेत् । न । तस्य सोमप्रधानत्वात् । सोमो ह्यभिषवादीन्धर्मानाकाङ्क्षति, न तु पूर्वानि-

१ क. ग. च. विकृतौ । २ क. ख. ङ. इति ते । ३ ख. °तेष्वोज्मा° । ४ ग. च. °ग्निष्वप्य° ।

योजनविशसनादीन् । तस्मात्—अङ्गिन्यनर्थकाः सन्तोऽङ्गेषु निविशमाना अविशेषतस्त्रिष्वपि पशुष्ववतिष्ठन्ते—इति प्राप्ते—

ब्रूमः—अस्त्यत्र विशेषः संनिधिलक्षणः । सौत्यनामकादह्नः प्राचीन औपवसथ्यनामकेऽह्नि धिष्ण्यनिर्माणादूर्ध्वमेते धर्मा आम्नाताः । अग्नीषोमीयस्यापि तदेव स्थानम् । सवनीयस्तु सौत्येऽहनि श्रूयते—'आश्विनं ग्रहं गृहीत्वा त्रिवृता यूपं परिवीयाऽऽग्नेयं सवनीयं पशुमुपाकरोति' इति । अनुबन्ध्यस्त्ववभृथान्ते समाम्नातः । ततः संनिधिना ते धर्मा अग्नीषोमीये संबध्यन्ते, सवनीयानुबन्ध्ययोस्तु चोदकादतिदिश्यन्ते ॥ १३ ॥ १४ ॥ १५ ॥

( अष्टमे शाखाहरणादीनामुभयदोहधर्मताधिकरणे सूत्रे २८–२९ )।

**दोहयोः कालभेदादसंयुक्तं शृतं स्यात् ॥ २८ ॥ प्रकरणाविभागाद्वा तत्संयुक्तस्य कालशास्त्रम् ॥२९॥**

अष्टमाधिकरणमारचयति—

**शाखाछेदादयो दोहे धर्माः सायं व्यवस्थिताः ।**
**प्रातश्च सन्ति वा सायं स्थानाचो पूर्ववत्स्थिताः ॥१६॥**
**आनर्थक्यप्रतिहतिः पूर्ववन्नेह विद्यते ।**
**बलिनोऽतः प्रकरणात्प्रातर्दोहेऽपि सन्ति ते ॥ १७ ॥**

दर्शपूर्णमासप्रकरणे—पलाशशाखाछेदनम्, तया शाखया वत्सापाकरणम्, इत्यादयो दोहधर्माः समाम्नाताः । दोहौ च द्वौ विद्येते—अमावास्यायां रात्रावेको दोहः । प्रतिपदि प्रातरपरो दोहः । तत्र पूर्वन्यायेन प्राथमिके सायंदोहे प्रथमश्रुतास्ते धर्मा व्यवतिष्ठन्ते—इति चेत् ।

नैवम् । वैषम्यात् । पूर्वत्र हि सोमे विशसनादिधर्माणामनन्वयात्प्रकरणमानर्थक्यप्रतिहतम् । इह तु नास्त्यानर्थक्यप्रतिहतिः । ततः प्रकरणेन स्थानं बाधित्वा द्वयोर्दोहयोस्ते धर्मा अभ्युपेयाः ॥ १६ ॥ १७ ॥

( नवमे सादनादीनां सवनत्रयधर्मताधिकरणे सूत्रम्— )।

**तद्वत्सवनान्तरे ग्रहाम्नानम् ॥ ३० ॥**

नवमाधिकरणमारचयति—

**ग्रहधर्माः सादनाद्याः प्रातःसवन एव ते ।**
**त्रिषु वा निश्चितस्थानादाद्यः पूर्ववदुत्तरः ॥ १८ ॥**

---

१ ग. घ. धिष्ण्यादिनि° । २ क. °णात्पूर्वमे° । ३ ग. च. °दयोः प्र° । ४ क. ख. ङ. पूर्व हि ।

ज्योतिष्टोमे प्रातःसवने सन्त्यैन्द्रवायवादयो ग्रहाः, माध्यंदिने सवने मरुत्वतीयादयः, तृतीयसवन आदित्यादयः । तत्र सादनसंमार्गादयो धर्माः प्रातःसवनीयग्रहसंनिधावाम्नायन्ते—' उपोप्तेऽन्ये ग्रहाः साद्यन्ते, अनुपोप्ते ध्रुवः ' इति । ' दशापवित्रेण ग्रहं संमार्ष्टि ' इति च । ध्रुवव्यतिरिक्तानां ग्रहाणामधस्तान्मृत्तिकोपवेशनं कृत्वा तत्र सादनम्, ध्रुवस्य तु न तथा । पूर्वाधिकरणे शाखाहरणादयः प्रधानयोर्दधिपयसोर्धर्माः समाम्नाताः । तत्र दधि पूर्वेद्युः सायंदोहमन्तरेण न सिध्यतीति तत्सिद्ध्यर्थं केवलं सायं दुह्यते, न तु सायंदोहस्यासाधारणत्वेन धर्मैः सहैकस्मिन्देशे पाठोऽस्तीति स्थानं न निश्चितम्, इह तु तन्निश्चितमिति प्रातःसवन एव ते धर्मा इति चेत् ।

मैवम् । सादनादीनां वाक्येन ग्रहधर्मत्वं, प्रकरणेन ज्योतिष्टोमधर्मत्वं चावगम्यते । तस्मिन्निश्चितमपि स्थानं वाक्यप्रकरणाभ्यां बाधित्वा त्रिषु सवनेषु सादनादयोऽवतिष्ठन्ते ॥ १८ ॥

( दशमे रशनात्रिवृत्त्वादीनां सर्वपशुधर्मताधिकरणे सूत्रम्— ) ।

रशना च लिङ्गदर्शनात् ॥ ३१ ॥

दशमाधिकरणमारचयति—

एकत्रैवोत सर्वत्र रशनावेष्टनादयः ।
अग्नीषोमीय एवैते क्रमाल्लिङ्गादितोऽन्तिमः ॥ १८ ॥

अग्नीषोमीयपशुसंनिधौ रशनया यूपस्य वेष्टनम्, रशनायास्त्रिवृत्त्वं दर्भमयत्वं च, इत्यादयो धर्मा आम्नाताः—' परिव्ययति, ऊर्ग्वै रशना ' इति, ' त्रिवृद्भवति ' इति, ' दर्भमयी भवति ' इति च । तत्र येयं रशना, ये च वेष्टनादयः, ते सर्वे संनिधेरवान्तरप्रकरणाद्वाऽग्नीषोमीय एव स्युः—इति चेत् ।

मैवम् । सवनीयपशावपि तत्सद्भावो लिङ्गादवगम्यते । ' त्रिवृता यूपं परिवीयाऽऽग्नेयं सवनीयं पशुमुपाकरोति ' इति त्रिवृत्त्वपरिव्याणयोः सिद्धवदनुवादो लिङ्गम् । किंच तृतीयाश्रुत्या वाक्येन च परिव्याणस्य यूपधर्मता, न तु पशुधर्मता । यूपश्च त्रयाणां पशूनां तन्त्रम्, इति वक्ष्यते । तस्मात्—सर्वेषु पशुष्वेते धर्माः स्युः ॥ १८ ॥

( एकादशे, अंश्वदाभ्ययोरपि सादनादिधर्मवत्त्वाधिकरणे सूत्राणि ३२-३४ ) ।

आराच्छिष्टमसंयुक्तमितरैः संनिधानात् ॥ ३२ ॥

---

१ ग. घ. 'दिनस°' । २ ख. ततश्च निश्चि° । ३ ख. येऽमी रशनावे° । ङ. ये रशनया वेष्ट° । ४ ख. ङ. °णाच्चाग्नी° । ५ ग. च. °मीये प° ।

संयुक्तं वा तदर्थत्वाच्छेषस्य तन्निमित्तत्वात्
॥ ३३ ॥ निर्देशाद्व्यवतिष्ठेत ॥ ३४ ॥

एकादशाधिकरणमारचयति—

ग्रहधर्मा अनारभ्योक्तांश्वदाभ्यद्वयेन हि ।
विद्यन्ते वा प्रकरणादाद्यो वाक्यादिहान्तिमः ॥ १९ ॥

अनारभ्य द्वौ ग्रहौ श्रुतौ—'अंशुं गृह्णाति' इति, 'अदाभ्यं गृह्णाति' इति च । तयोः सादनसंमार्गादयो ग्रहधर्मा न विद्यन्ते । कुतः । आरम्याधीतेष्वेन्द्रवायवादिष्वेव प्रकरणेन व्यवस्थापितत्वात्—इति चेत् ।

मैवम् । 'ग्रहाः साद्यन्ते' इत्यादिवाक्येन ग्रहधर्मत्वावगमे तयोरपि ग्रहयोरनिवार्यत्वात् । न चैन्द्रवायवादयः प्रकरणिनः । ज्योतिष्टोमो हि प्रकरणी । तस्मात्सन्ति तयोर्धर्माः ॥१९॥

( द्वादशे चित्रिण्यादीष्टकानामग्न्यङ्गताधिकरणे सूत्रम्— )।
अग्न्यङ्गमप्रकरणे तद्वत् ॥ ३५ ॥

द्वादशाधिकरणमारचयति—

अखण्डादीष्टकाधर्माश्चित्रिण्यादिषु नोचिताः ।
सन्ति वा वाक्यमप्यत्रानारभ्योक्तं ततो न ते ॥ २० ॥
प्रकृतापूर्वसंबन्धात्तादृशादपि वाक्यतः ।
अखण्डत्वादयोऽग्न्यर्थचित्रिण्यादिषु सन्ति ते ॥ २१ ॥

अनारभ्य श्रूयते—'चित्रिणीरुपदधाति' इति । अग्निप्रकरणे चेष्टकानां धर्माः श्रुताः—'अखण्डामकृष्णां कुर्यात्' इति । पूर्वत्र—अंश्वदाभ्ययोरुत्पत्तिवाक्यस्यानारभ्याधीतत्वेऽपि विनियोजकवाक्यं प्रकरणाधीतम् । चित्रिण्यादिनामकानां त्विष्टकाविशेषाणां विनियोजकं वाक्यमप्यनारभ्याधीतम् । तच्च चित्यन्तरे ताश्चित्रिणीर्विनियुङ्क्ते । अखण्डत्वादिधर्मास्तु पण्णां चितीनां मध्ये प्रथमचितावाम्नाताः । तस्मात्—ते चित्रिण्यादिषु नोचिताः—इति प्राप्ते,—

ब्रूमः—यद्यप्युत्पत्तिविनियोजकवाक्ययोरन्यतरस्यापि प्रकरणपाठो नास्ति, तथाऽपि 'य एवं विद्वानग्निं चिनुते' इति प्रकृतं यदेतदग्न्यपूर्वं तत्संबन्धित्वेनैव

१ ख. °न्ति वाक्यस्थन° । २ ग. च. °खण्डात्वादयोऽग्न्यर्थाश्चित्रि° । ३ ग. च. °धीतं चेष्टित्व° ।

चिन्निण्यादयोऽन्यप्रकरणपठितेनापि वाक्येन विनियुज्यन्ते। अखण्डत्वादयस्त्वा-ग्निसाधनभूतेष्टकाधर्माः, न तु प्रथमचितिधर्माः। तस्मात्—अग्निसाधनभूतासु चिन्निण्यादीष्टकास्वपि ते सन्ति ॥ २० ॥ २१ ॥

(त्रयोदशे—अभिषवादीनां सोममात्रधर्मताधिकरणे सूत्रम्—)।

नैमित्तिकमतुल्यत्वादसमानविधानं स्यात् ॥ ३६ ॥

त्रयोदशाधिकरणमारचयति—

विधयोऽभिषवाद्याः स्युः फलाख्ये चमसे न वा।
नैमित्तिकस्य नित्येन तुल्यत्वादस्ति तद्विधिः ॥ २२ ॥
नित्ये कृतार्थाः संस्काराः पश्चाद्भाविनिमित्तजे।
न विधेयाः किंतु तत्र प्राप्यन्तामतिदेशतः ॥ २३ ॥

न्यग्रोधमुकुलरूपस्य फलस्य पिष्टं चम्यते यत्र स फलचमसः। स च नैमि-त्तिकः। राजन्यवैश्यौ निमित्तीकृत्य विहितत्वात्। सोमस्तु नित्यः। उपाधिकम-प्यनुपजीव्यैव 'सोमेन यजेत' इति विहितत्वात्। तस्य च नित्यस्य सोमस्य यथा यागसाधनत्वम्, तथा फलचमसस्यापि तदस्ति। तस्मात् 'सोममभिषुणोति' 'सोमं क्रीणाति' इत्यादयो यागद्रव्यसंस्कारविधयः सोम इव फलचमसेऽपि प्रवर्तन्ते—इति प्राप्ते,—

ब्रूमः—नित्या अभिषवादिसंस्कारा नित्यं सोमं संस्कार्यं लब्ध्वा चरितार्थाः सन्तो नान्यं संस्कार्यमपेक्षन्ते। फलचमसस्तु सोमविकारत्वात्पश्चाद्भावी। ततो निरपेक्षाः संस्कारविधयो न तत्र प्रवर्तन्ते। न चैतावता संस्काराभावः। चोद-केन तत्सिद्धेः। तस्मात्—सोममात्रसंबन्धिनो विधयः ॥ २२ ॥ २३ ॥

(चतुर्दशे प्रतिनिधिष्वपि मुख्यधर्मानुष्ठानाधिकरणे सूत्राणि ३७–३९)।

प्रतिनिधिश्च तद्वत् ॥ ३७ ॥ तद्वत्प्रयोजनैक-त्वात् ॥ ३८ ॥ अशास्त्रलक्षणत्वाच्च ॥ ३९ ॥

चतुर्दशाधिकरणमारचयति—

नीवारादिप्रतिनिधेरतुल्यो वा विधिः समः।
पुरेवातुल्यता साम्यमाकाराद्व्रीहिता यतः ॥ २४ ॥

'व्रीहिभिर्यजेत' इति विहितानां व्रीहीणामसंभवे नीवाराः प्रतिनिधित्वेन

१ क. °यस्त्वग्नि°। २ ख. °धिमनु°। ३ ग. च. °त्यसो°।

स्वीकार्या इति वक्ष्यते। तत्र पूर्वन्यायेनावघातादिविषयो व्रीहिषु कृतार्थाः यथाऽऽम्नायिनि नीवारादौ न प्रवर्तन्ते—इति चेत्।

मैवम्। व्रीहिशब्दो हि जातिविशेषेणाऽऽकारविशेषेण [1]चोपेतं द्रव्यमाचष्टे। नीवारेषु जातितो व्रीहिशब्दार्थत्वाभावेऽप्याकारतो व्रीहिशब्दार्थत्वेन 'व्रीहीनवहन्ति' इति विधिः प्रवर्तते। यथा व्रीहिजातावेव समीचीनानां व्रीहीणामभावे[2] जलवह्न्याद्युपघातेन सारविकलेष्वपि विधिः, तथा जातिविकलेष्वपि व्रीहिषु मुख्यैकदेशरूपत्वाद्विधिरस्तु॥ २४॥

( पञ्चदशे श्रुतेष्वपि प्रतिनिधिषु मुख्यधर्मानुष्ठानाधिकरणे सूत्रम्—)।

नियमार्था गुणश्रुतिः॥ ४०॥

पञ्चदशाधिकरणमारचयति—

पूतीकाभिषवोऽतुल्यस्तुल्यो वा सोमतुल्यता।
नास्ति नैमित्तिकत्वेन तुल्यः प्रतिनिधित्वतः॥ २५॥

'यदि सोमं न विन्देत, पूति(ती)कानभिषुणुयात्' इति श्रूयते। तत्र सोमाभावं निमित्तीकृत्य पूतीकलताखण्डानां विहितत्वात्फलचमसवन्नैमित्तिकत्वेन सोमाभिषवक्रयादिविधिः पूतीकेषु न तुल्यः—इति चेत्। मैवम्। नीवारवत्प्रतिनिधित्वात्। ननु—प्रतिनिधित्वे स्वयमेवोपादित्सितत्वाद्विधिर्नापेक्षितः। अत एव नीवारेषु विधिर्न श्रुतः—इति चेत्। न। विधेर्नियमार्थत्वस्य षष्ठे वक्ष्यमाणत्वात्। तस्मात्—अभिषवक्रयादिविधिः सोमपूतीकयोस्तुल्यः॥ २५॥

( षोडशे दीक्षणीयादिधर्माणामग्निष्टोमाङ्गताधिकरणे सूत्राणि ४१—४७ )।

संस्थास्तु समानविधानाः प्रकरणाविशेषात्॥ ४१॥ व्यपदेशश्च तुल्यवत्॥ ४२॥ विकारास्तु कामसंयोगे नित्यस्य समत्वात्॥ ४३॥ अपि वा द्विरुक्तत्वात्प्रकृतेर्भविष्यन्तीति॥ ४४॥ वचनात्तु समुच्चयः॥ ४५॥ प्रतिषेधाच्च पूर्वलिङ्गानाम्॥ ४६॥ गुणविशेषादेकस्य व्यपदेशः॥ ४७॥

षोडशाधिकरणमारचयति—

---

१ ख. म. ङ. च. चोपेतं। २ ग. च. 'वेन ज'।

उक्थ्यादिषु समो दीक्षणीयाद्यङ्गविधिर्न वा।
एकप्रकरणत्वेन फलवत्त्वाच्च तुल्यता ॥ २६ ॥
उक्थ्यादयः कामयोगाद्विकाराः प्रक्रिया ततः।
अग्निष्टोमात्मके ज्योतिष्टोममात्रे च तद्विधिः ॥ २७ ॥

ज्योतिष्टोमः–स्वयमेकोऽपि समाप्तिभेदाद्भिद्यते। यज्ञायज्ञियस्तोत्रेण समाप्तौ 'अग्निष्टोमः' इत्युच्यते। तस्मादपि स्तोत्रादूर्ध्वमुक्थ्यस्तोत्रेण समाप्तौ 'उक्थ्यः' इत्युच्यते। एवं षोडश्यादयोऽपि। तादृशस्य सप्तसंस्थावतो ज्योतिष्टोमस्य प्रकरणे दीक्षणीयेष्टिप्रायणीयेष्ट्यादीनामङ्गानां विधिराम्नातः। स च विधिर्ज्योतिष्टोमस्य प्रथमसंस्थाविशेषेऽग्निष्टोमे यथा प्रवृत्तः, तथैवोक्थ्यादिष्वपि प्रवर्तते। कुतः। प्रकरणसंबन्धस्य समानत्वात्। किंच–यथाऽग्निष्टोमः फलत्वादङ्गविधिभिः संयुज्यते, एवमुक्थ्यादयोऽपि। तेषां च फलमेवमाम्नायते–'पशुकाम उक्थ्यं गृह्णीयात्' 'षोडशिना वीर्यकामः स्तुवीत' 'अतिरात्रेण प्रजाकामं याजयेत्' इति। तस्मात्–सप्तस्वपि संस्थासु समानोऽङ्गविधिः–इति प्राप्ते,–

ब्रूमः–यदेतदुक्थ्यादीनां फलमुदाहृतम्, तत्तु तेषां विकारत्वं गमयति। 'काम्यो गुणः श्रूयमाणो नित्यमर्थं विकृत्य निविशते' इति न्यायाद्यथा गोदोहनगुणो नित्यं चमससाधनकमपां प्रणयनं विकृत्य निविशते, एवमुक्थ्यगुणो नित्यामग्निष्टोमस्य संस्थां विकृत्य संस्थान्तरत्वं गमयति। ततोऽग्निष्टोमस्य गुणविकारा उक्थ्यादय इति न सर्वसंस्थासाधारणं प्रकरणम्, किंतु–अग्निष्टोमस्यैवासाधारणम्। ननु–'ज्योतिष्टोमेन यजेत' इत्युक्तत्वाज्ज्योतिष्टोमस्येदं प्रकरणम्, न त्वग्निष्टोमसंस्थायाः–इति चेत्। बाढम्। असौ ज्योतिष्टोमो न कदाचिदप्यग्निष्टोमं व्यभिचरति। उक्थ्यादीनामप्यन्तर्भावितामिष्टोमकत्वात्। उक्थ्यादींस्तु व्यभिचरति। विनाऽपि तैरग्निष्टोमदशायां ज्योतिष्टोमत्वसंभवात्। अतोऽग्निष्टोमसंस्थस्य ज्योतिष्टोमस्येदं प्रकरणं तत्रैव दीक्षणीयाद्यङ्गविधिं निवेशयति। उक्थ्यादिषु चोदकादङ्गान्यतिदिश्यन्ते ॥ २६ ॥ २७ ॥

इति श्रीमाधवीये जैमिनीयन्यायमालाविस्तरे तृतीयाध्यायस्य षष्ठः पादः ॥ ६ ॥

| | अत्र पादे | आदितः। |
|---|---|---|
| अधिकरणानि | १६ | २००। |
| सूत्राणि | ४७ | ५६२। |

१ क. ख. °मुक्थस्तो°। ग. घ. °मुक्थ्यास्तो°। २ क. °सु यूज्यमा°। ३ क. तत्सवृत्तरेषां। ४ ग. घ. °मसंस्थस्य गु°। ५ क. °सर्वसा°। ६ क. ख. °स्यैव सा°।

( अथ तृतीयाध्यायस्य सप्तमः पादः )।

(प्रथमे बार्हिरादीनां दर्शपौर्णमासतदङ्गोभयाङ्गताधिकरणे सूत्राणि १-५)।

प्रकरणविशेषादसंयुक्तं प्रधानस्य ॥१॥ सर्वेषां वा शेषत्वस्यातत्प्रयुक्तत्वात् ॥२॥ आरादपीति चेत्॥३॥ न तद्वाक्यं हि तदर्थत्वात्॥४॥लिङ्गदर्शनाच्च ॥ ५ ॥

सप्तमपादस्य प्रथमाधिकरणमारचयति–

मुख्याङ्गंनैव वेद्यादेः प्रयाजाद्यङ्गतोऽपि वा ।
तद्वाक्यं प्रक्रियायुक्तं मुख्याङ्गत्वस्य बोधकम् ॥ १ ॥
मुख्याङ्गस्यापि वेद्यादेः प्रयाजादिषु चाङ्गता ।
मुख्यार्थत्वात्प्रयाजादेः स्वापूर्वव्यवधानतः ॥ २ ॥

दर्शपूर्णमासयोः श्रूयते–'वेद्यां हवींष्यासादयति' 'बर्हिषि हवींष्यासादयति' इति । तथा तद्धर्माः श्रूयन्ते–'वेदिं खनति' 'बर्हिर्लुनाति'इत्यादयः। मुख्यहवींष्याग्नेयपुरोडाशादीनि, अमुख्यहवींषि तु प्रयाजाद्यर्थानि। तत्र–स्वस्वधर्मसहितानि वेद्यादीनि प्रकरणबलान्मुख्यहविषामेवाङ्गानि-'वेद्यां हवींष्यासादयति'इति वाक्यात्सर्वहविरङ्गता–इति चेत् । न । प्रकरणेन वाक्यस्य संकोचनीयत्वात् । यदि वाक्यं प्रकरणनैरपेक्ष्येण स्वतन्त्रं स्यात्, तदा सादनमात्रपर्यवसानेन यागाभावे वैयर्थ्यं स्यात्। सौमिकहविषामप्येतद्वेद्यासादनं प्रसज्येत । तस्मात्-मुख्यहविरङ्गं वेद्यादिकम्–इति प्राप्ते–

ब्रूमः–अस्तु वैयर्थ्यातिप्रसङ्गपरिहारेण प्रकृतापूर्वसाधनभूतहविःषु वेद्यादेरङ्गत्वम् । प्रयाजादिहवींष्यपि स्वकीयावान्तरापूर्वद्वारा मुख्यापूर्वसाधनान्येवेति तदङ्गत्वमपि वेद्यादेर्युक्तम् । एवं सति वाक्यस्यात्यन्तसंकोचो न भविष्यति ॥१॥ २ ॥

( द्वितीये स्वामिसंस्काराणां प्रधानार्थताधिकरणे सूत्रम् ) ।

फलसंयोगात्तु स्वामियुक्तं प्रधानस्य ॥ ६ ॥

द्वितीयाधिकरणमारचयति–

---

१ ग. च. °पादे प्र° । २ ग. च. °ङ्गताया वे° । ३ ग. च. °आदिषु वाऽङ्गता । त° । ४ ग. च. छ. मुख्यानि ह° । ५ ग. च. °यामासा° । ६ ग. च. °आद्यर्थानि ह° । ७ क. ग. घ. °वं च स° । ख. °वं च संभवति ।

वपनाद्युपकारः किं द्वयोर्मुख्याङ्गयोरुत।
मुख्य एव द्वयोरस्तु कृत्स्नकर्तृगतत्वतः॥ ३॥
युक्तः शास्त्रीयसंस्कारो मुख्यस्य फलभोगिनः।
विनाऽपि संस्कृतिं दृष्टं कर्तृत्वं तत्र नास्ति सः॥ ४॥

ज्योतिष्टोमे केशश्मश्रुवपनपयोव्रतादयो यजमानसंस्कारा आम्नाताः। महेः सोमहोमो ज्योतिष्टोमे मुख्यः। अग्नीषोमीयपश्वादिकमङ्गम्। तत्र—द्वयोर्मुख्याङ्गयोरेते वपनादय उपकुर्वन्ति। कुतः। कर्तृधर्मत्वात्। यजमानो हि कर्तृत्वया वपनादिभिः संस्क्रियते। कर्तृत्वं च यथा मुख्यं प्रति तस्य विद्यते, तथाऽङ्गं प्रत्यप्यस्ति। तस्मात्—उभयोरुपकारः—इति चेत्।

मैवम्। द्वौ हि यजमानस्याऽऽकारौ—क्रियाकर्तृत्वम्, फलभोक्तृत्वं चेति। तयोरदृष्टः फलभोगः, क्रियानिष्पत्तिश्च दृष्टा। तथा सति—वपनादिकृतोपकारस्याप्यदृष्टत्वाद्भोक्तृवेषा वपनादयः फलभोगसाधने मुख्य एव पर्यवस्यन्ति। वपनादिसंस्काररहितैरप्यृत्विग्भिः कृषीवलादिभिश्च क्रिया निष्पाद्यमाना दृश्यते। ततस्तत्र कर्तृत्वाकारे वपनादिकृतः स उपकारो नास्ति। तस्मात्—अदृष्टफलभोगिनोऽस्य यजमानस्य योऽयमदृष्टरूपः शास्त्रीयः संस्कारः सोऽयं मुख्ये कर्मणि युक्तो नाङ्गेषु। नात्र पूर्ववद्वाक्यमस्ति, येन परम्पराफलसाधनेष्वङ्गेषु वपनाद्युपकारः शङ्क्येत। प्रकरणं तु मुख्यस्यैव, न त्वङ्गानाम्। तस्मात्-न तेषूपकारः॥ ३॥ ४॥

(तृतीये सौमिकवेद्यादीनामङ्गप्रधानोभयाङ्गताधिकरणे सूत्रे ७–९)।

चिकीर्षया च संयोगात्॥ ७॥ तद्युक्ते तु
फलश्रुतिस्तस्मात्सर्वचिकीर्षा स्यात्॥९॥

तृतीयाधिकरणमारचयति—

मुख्यार्था सौमिकी वेदिरुभयार्थाऽथ मुख्यगा।
चिकीर्षितत्वान्मुख्यस्य वेद्या तत्कृतिसंभवात्॥ ५॥
मुख्यपौष्कल्यहेतुत्वात्साङ्गं च चिकीर्षितम्।
मुख्यवचेन तद्वेदिरङ्गेष्वप्युपकारिणी॥ ६॥

दार्शिकीं वेदिं मध्येऽतमोध्य प्राचीनवंशो मण्डपोऽवस्थितः। ततः पूर्वस्यां दिशि सदोहविर्धानादीनां पर्याप्तो भूभागविशेषः। तैः सदःप्रभृतिभिः सह सौमिकी

१ ख. यजमाना°। २ ग. ख. °ते यजमानाद्°। ३ छ. °त उ°। ४ छ. °चार्येति ह्°। ५ छ. °दनन्तरं चि°।

वेदिरित्युच्यते । सेयं मुख्यस्य सोमयागस्यैवोपकारं करोति, न त्वमुख्यानामग्नी-षोमीयाद्यङ्गानाम् । कुतः। मुख्यस्य चिकीर्षितत्वात् । न च—अङ्गान्यपि चिकी-र्षितानि—इति वाच्यम् । चिकीर्षास्वरूपस्य वेदेनैवाभिहितत्वात् । एवं श्रूयते—'षट्त्रिंशत्प्रक्रमा प्राची, चतुर्विंशतिरग्रेण, त्रिंशज्जघनेन, इयति शक्ष्यामहे' इति । अस्यायमर्थः—श्रूयमाणेनानेन दैर्घ्यप्रमाणेन तिर्यक्प्रमाणद्वयेन च प्रमिते भूभागे फलहेतुसोमयागं कर्तुं शक्ष्यामहे' इति निश्चित्य तथैव कुर्यात्—इति । सेयं चिकीर्षा मुख्यविषया। 'इयति शक्ष्यामहे' इति परिमाणस्य शक्तेश्चोपन्या-सात् । अङ्गानां तु पशूनामिष्टीनां च सदोहविर्धानादिमण्डपानिरपेक्षाणां यथो-क्तपरिमाणमन्तरेणाप्यनुष्ठातुं शक्यत्वात्स उपन्यासस्तत्र निरर्थकः । सोमस्य त्वनुष्ठानं यथोक्तवेद्यामेव संभवति, नत्वन्यत्र । तस्मात्—सा वेदिर्मुख्यस्यैवोपक-रोति—इति प्राप्ते,—

ब्रूमः—'इयति शक्ष्यामहे' इत्यत्र साङ्गप्रधानानुष्ठाने शक्तिरुक्ता। तादृशस्यैव फलं प्रति पुष्कलहेतुत्वात् ।अतो मुख्याङ्गयोश्चिकीर्षायास्तुल्यत्वाद्वेदिरुभयार्था। न च—अत्र वपनादिसाम्यं शङ्कनीयम् । दृष्टोपयोगाभावस्य तत्रोक्तत्वात् । इह तु—हविरासादनादिर्दृष्ट उपयोगः । स च मुख्याङ्गयोः सम इत्युभयार्थत्वम् ॥६॥

( चतुर्थे—अभिमर्शनस्याङ्गप्रधानोभयाङ्गताधिकरणे सूत्रे ८—१० ) ।

तथाऽभिधानेन ॥ ८ ॥ गुणाभिधा-

नात्सर्वार्थमभिधानम् ॥ १० ॥

चतुर्थाधिकरणमारचयति—

चतुर्होत्रा पौर्णमासीं मृशेदाज्यादिमर्शने ।
मन्त्रो मुख्य उताङ्गेऽपि मुख्ये तद्वाचिशब्दतः ॥ ७ ॥
शब्दस्य कर्मवाचित्वात्तत्र मर्शनवर्जनात् ।
विभक्तिव्यत्यये मन्त्रो मुख्याङ्गहविषोर्द्वयोः ॥ ८ ॥

दर्शपूर्णमासयोः श्रूयते—' चतुर्होत्रा पौर्णमासीमभिमृशेत् , पञ्चहोत्राऽमा-वास्याम् ' इति । पृथिवी होता'—इत्यादिको मन्त्रश्चतुर्होता । तस्मिन्मन्त्रे यज्ञा-ङ्गानां चतुर्णां श्रुतत्वात् । अथवा—तस्य मन्त्रस्याभिमानित्वेनाऽऽत्मभूतः कश्चि-त्पुरुषः प्रजापतिना चतुर्वारमामन्त्रितः प्रत्युत्तरमुवाचेति स पुरुषश्चतुर्हूतः । तदी-यनाम्ना मन्त्रोऽपि ' चतुर्हूतः ' इत्युच्यते । 'पूज्यानां प्रत्यक्षनामग्रहणमयुक्तम्' इत्यभिप्रायेण हूतशब्दस्थाने होतृशब्दः पठ्यते । अयमर्थः सर्वोऽपि तैत्ति-रीयब्राह्मणे श्रूयते—

१ छ. °ख्यसो° । २ ख. ङ. °हेतुं सो° । ग. च. °हेतुं सोमं या° । ३ ग. च. °विहृत° । ४ ग. च. °आ पूर्ण° ।

"आत्मैवात्मन्निरयामन्त्रयत। तस्मै चतुर्हूतः प्रत्यशृणोत्। स चतुर्हूतोऽभवत्। चतुर्हूतो ह वै नामैषः। तं वा एतं चतुर्हूतं सन्तं 'चतुर्होता' इत्याचक्षते परोक्षेण। परोक्षप्रिया इव हि देवाः" इति। 'अग्निर्होता'—इत्यादिको मन्त्रः पञ्चहोता। तत्राप्युक्तप्रकारो द्रष्टव्यः।—अत्र—योऽयमाज्यादिहविष उपस्पर्शनार्थो मन्त्रः, असौ मुख्य एव हविषि निविशते। पौर्णमास्यमावास्याशब्दयोर्मुख्यहविर्विषयत्वात्—इति प्राप्ते,—

ब्रूमः—पौर्णमास्यमावास्याशब्दौ कर्मवाचिनौ, न तु हविर्वाचिनौ। न च कर्मणोरुपस्पर्शनसंभवः। अथ कालविवक्षायां विभक्तिव्यत्ययेन सप्तम्यर्थो व्याख्यायेत, तदा कालसंबन्धस्य मुख्याङ्गयोरुभयोस्तुल्यत्वादुभयविधहविरुपस्पर्शने मन्त्रो विनियुज्यते ॥ ७ ॥ ८ ॥

(पञ्चमे दीक्षादक्षिणयोः प्रधानार्थताधिकरणे सूत्रे—११—१२)।

दीक्षादाक्षिणं तु वचनात्प्रधानस्य ॥ ११ ॥

निवृत्तिदर्शनाच्च ॥ १२ ॥

पञ्चमाधिकरणमारचयति—

दण्डदीक्षा दक्षिणा तु शतं द्वादशभिर्युतम्।
द्वयार्थमुत मुख्यार्थं सोमस्येत्युक्तिसंभवात् ॥ ९ ॥
मुख्याङ्गद्वयगं मैवं पारम्पर्यविडम्बना।
वचनस्य न युक्ताऽतः प्रधानार्थमिदं स्थितम् ॥ १० ॥

ज्योतिष्टोमे दीक्षादक्षिणं श्रूयते—'दण्डेन दीक्षयति' इति, 'तस्य द्वादशशतं दक्षिणा' इति च। तत्र दीक्षा मुख्याङ्गयोरुपकरोति, तथा दक्षिणाऽपि। न च—'दीक्षा सोमस्य, दक्षिणा सोमस्य' इति वाक्ये षष्ठ्या मुख्यसंबन्ध एवावगम्यते, न त्वङ्गसंबन्धः—इति वाच्यम्। दीक्षादक्षिणे सोमेनैव साक्षात्संबध्नीयाम्, स सोमः पुनरङ्गैः संबद्ध इति परम्परया दीक्षादक्षिणयोरङ्गैरपि संबन्धोऽस्ति। तस्मात्—उभयार्थं दीक्षादिकम्—इति प्राप्ते,—

ब्रूमः—अव्यवहितसंबन्ध एव षष्ठ्या अभिधेयोऽर्थः। तदसंभवे तु—परम्परासंबन्धः कथंचिद्गृह्यते। इह तु तत्संभवात्पारम्पर्यं न युक्तम्। तस्मात्—प्रधानार्थं दीक्षादिकम् ॥ ९ ॥ १० ॥

---

१ क. ख. °त्मानि°। २ छ. एव। ३ख. ग. घ. छ. °र्शनं संभवति। अ°। ४ ख. ग. घ. °वक्षया वि°। ५ क. °क्षिणा श्रू°। ग. घ. °क्षिणे श्रू°। ६ ख. ग. घ. छ. °योरुभयोर°। ७ छ. °बध्येयाताम्।

( षष्ठे–अन्तर्वेदियूपानङ्गताधिकरणे सूत्रे १३–१४ )।

तथा यूपस्य वेदिः ॥ १३ ॥ देशमात्रं वा शिष्येणैकवाक्यत्वात् ॥ १४॥

षष्ठाधिकरणमारचयति–

अन्तर्वेदि मिनोत्यर्धं यूपाङ्गमुत लक्षयेत् ।
देशं यूपाङ्गभावेन वेदिभागोऽत्र चोद्यते ॥ ११ ॥
बहिर्वेद्यर्धमित्येतद्वाक्यं भिद्येत तद्विधौ ।
मीयमानस्य यूपस्य तावान्देशोऽत्र लक्ष्यते ॥ १२ ॥

अग्नीषोमीयपशौ 'यूपं मिनोति' इति प्रकृत्य श्रूयते–'अर्धमन्तर्वेदि मिनोति, अर्धं बहिर्वेदि' इति । 'यूपं स्थापयितुं कियद्विस्तारवानवटोऽपेक्षितः' इति बुभुत्सायां तन्निर्णयाय यूपमूलस्य स्थौल्यमङ्गुल्यादिभिर्मातव्यम् । तस्य च मीयमानस्य यूपस्य वेदेरभ्यन्तरभागोऽङ्गत्वेन विधीयते–इति चेत् ।

मैवम् । यथा संस्कृतो वेदेरभ्यन्तरभागः 'अर्धमन्तर्वेदि' इत्यनेन वाक्येन विधीयते, तद्वदसंस्कृतो बहिर्भागो 'बहिर्वेदि'–इत्यनेन वाक्येन विधातव्यः । ततो वाक्यं भिद्येत । यदा तु वेदेरभ्यन्तरबाह्यभागाभ्यामुपलक्षितोऽसंस्कृतो लौकिको देशो मीयमानयूपोचितो विधीयते, तदा नास्ति वाक्यभेदः । तस्मात्–लौकिकदेश एवात्र यूपाङ्गत्वेन विधीयते, न तु संस्कृतवेदिभागः ॥ ११ ॥ १२ ॥

( सप्तमे हविर्धानस्य सामिधेन्यनङ्गताधिकरणे सूत्राणि १५–१७ )।

सामिधेनीस्तदन्वाहुरिति हविर्धानयोर्वचनात्सामिधेनीनाम् ॥ १५ ॥ देशमात्रं वा प्रत्यक्षं ह्यर्थकर्म सोमस्य ॥ १६ ॥ समाख्यानं च तद्वत् ॥ १७ ॥

सप्तमाधिकरणमारचयति–

हविर्धाने स्थितो ब्रूयात्सामिधेनीरिहाङ्गता ।
हविर्धानस्य तास्वाहो तद्देशोऽनेन लक्ष्यते ॥ १३ ॥
वाक्यात्स्यादङ्गता मैवं प्रकृत्या पार्श्विमेऽग्नितः ।
देशः प्राप्तो लाघवेन लक्ष्यः शाकटसंनिधिः ॥ १४ ॥

---

१ ख. °मुपव° । २ ङ. बोध्यते । ३ ग. च. °पस्य मूलस्थौ° । ४ क. °यन्तरामा° । ५ ख. ङ. °यन्तरभा° । ६ ग. च. °नस्योत आहो । ७ ग. च. वाक्यैक्याद° । ८ ङ. °मिमेोक्तिः ।

ज्योतिष्टोमे श्रूयते—'उत यत्सुन्वन्ति सामिधेनीस्तदन्वाहुः'—इति। हविर्धानमण्डपगतयोर्दक्षिणोत्तरभागावस्थितयोर्हविर्धाननामकयोः शकटयोर्मध्ये दाक्षिणं शकटमत्र यत्तच्छब्दाभ्यामभिधीयते। तस्य समीपे सोमस्याभिषवः। 'उत' इत्ययं शब्दोऽप्यर्थे वर्तते। 'अथ यस्मिन्हविर्धाने सोममभिषुण्वन्ति, तस्मिन्सामिधेनीरनु×ब्रूयुः'। +इह दक्षिणस्य हविर्धानस्य सामिधेनीष्वङ्गत्वं प्रतीयते। न चात्र पूर्ववद्वाक्यभेददोषः शङ्क्यः। एकवाक्यतायाः स्पष्टं प्रतिभासनात्—इति प्राप्ते—

ब्रूमः—सामिधेनीनामिष्टयङ्गतया दर्शपूर्णमासावत्र प्रकृतिः। प्रकृतौ चाऽऽहवनीयाग्नेः पश्चिमो देशः सामिधेनीनां स्थानम्। इहोत्तरवेदेराहवनीयत्वात्तदपेक्षया हविर्धानस्य पश्चिमदेशावस्थानात्। स देशश्चोदकेन प्राप्तः—इति न देशस्य सामिधेन्यङ्गत्वं विधातव्यम्। किंतु दक्षिणोत्तरहविर्धानसमीपदेशयोरनियमेन प्राप्तौ—दक्षिणस्यैव हविर्धानस्य समीपदेशः—इति नियन्तुं हविर्धानेन संनिधिर्लक्ष्यते। तथा सति नियममात्रविधानाल्लाघवं भवति। त्वत्पक्षे त्वभिषवोपलक्षितस्य दक्षिणस्य हविर्धानस्यात्यन्तमप्राप्तं सामिधेन्यङ्गत्वं विधीयत इति गौरवम्। तस्माद्देशलक्षणा ॥ १३ ॥ १४ ॥

(अष्टमे—अङ्गानामन्यद्वाराऽनुष्ठानाधिकरणे सूत्राणि १८—२०)।

शास्त्रफलं प्रयोक्तरि तल्लक्षणत्वात्, तस्मात्स्वयंप्रयोगे स्यात् ॥ १८ ॥ उत्सर्गे तु प्रधानत्वाच्छेषकारी प्रधानस्य, तस्मादन्यः स्वयं वा स्यात् ॥ १९ ॥ अन्यो वा स्यात्परिक्रयाम्नानाद्विप्रतिषेधात्प्रत्यगात्मनि ॥ २० ॥

अष्टमाधिकरणमारचयति—

यजमानेन कर्तव्यं निखिलं त्याग एव वा।
कर्तृगामिफलश्रुत्या युज्यते सर्वकर्तृता ॥ १५ ॥
प्रयोजकेऽपि कर्तृत्वमस्ति नो चेत्क्रयो वृथा।
कार्यं तेन त्यागमात्रमृत्विजोऽन्यत्र कर्तृता ॥ १६ ॥

'स्वर्गकामो यजेत' इति स्वर्गभोक्तृयागकर्त्रोः सामानाधिकरण्यादेकत्वं गम्यते। पाणिनिश्च 'स्वरितञितः कर्त्रभिप्राये क्रियाफले' [पा० सू० १।३।७२] इति

× 'ख' पुस्तके शास्त्रदीपिकायां च 'नुब्रूयात्'। + तत्र संशयः—किं हविर्धानं सामिधेन्यङ्गम्, उत तल्लक्षितो देशः—इति। इति शास्त्रदीपिका।

१ ख. उप। २ ख. ग. घ. छ. शङ्कितुं शक्यः। ३ ग. घ. 'मिष्टयङ्ग'। ४ङ. 'नीयाकरणत्वात्'। ५ ग. घ. 'निर्दिं' 'स्व'।

सूत्रेण क्रियाफलस्य कर्तृगामित्वे सत्यात्मनेपदं विदधाति। अतः साङ्गकर्मानुष्ठानमन्तरेण फलासंभवान्निखिलं यजमानेन कर्तव्यम्–इति प्राप्ते–

ब्रूमः–निखिलानुष्ठानाभावेऽपि प्रयोजकतया यजमानस्य सर्वकर्तृत्वमस्ति। 'पशुभिर्ईडे: कर्षति' इत्यत्र तथादर्शनात्। यदि स्वेनैव सर्वमनुष्ठीयेत, तदानीमृत्विजां परिक्रयो वृथा स्यात्। तस्मात्–यजमानेन त्यागमात्रं कार्यम्। अन्यत्र साङ्गप्रधाने क्रीतैर्ऋत्विजोऽनुष्ठानम्। तथा सति साक्षात्परम्परया च सर्वकर्तृत्वस्य यजमाने संभवात्तस्य फलं न विरुध्यते॥ १५॥ १६॥

( नवमे परिक्रीतानामृत्विजां संख्याविशेषनियमाधिकरणे सूत्राणि २१–२४ )।

तत्रार्थात्कर्तृपरिमाणं स्यादनियमोऽविशेषात् ॥२१॥ अपि वा श्रुतिभेदात्प्रतिनामधेयं स्युः ॥२२॥ एकस्य कर्मभेदादिति चेत् ॥२३॥ नोत्पत्तौ हि ॥२४॥

नवमाधिकरणमारचयति–

न क्रीतकर्तृसंख्याया नियमोऽस्त्यस्ति वा न हि।
अविशेषादस्ति यावत्कार्यं तावन्त एव हि॥ १७॥

ये यजमानेन क्रीताः कर्तार ऋत्विजः, तेषां संख्याविशेषो यद्यपि न श्रुतः। तथाऽपि कार्यानुसारेण सोऽवगन्तव्यः। ते च कार्यविशेषाः कर्तृसंयुक्ता एवं श्रूयन्ते–'पुरोऽध्वर्युर्विभजति, प्रतिप्रस्थाता मन्थिनं जुहोति, नेष्टा पत्नीमुदानयति, उन्नेता चमसाननुनयति, प्रस्तोता प्रस्तौति, उद्गातोद्गायति, प्रतिहर्ता प्रतिहरति, सुब्रह्मण्यः सुब्रह्मण्यामाह्वयति, होता प्रातरनुवाकमनुब्रूते, मैत्रावरुणः प्रेष्यति, अच्छावाको यजति, ग्रावस्तुद्ग्रावस्तोत्रीयमन्वाह' इति। एवं ब्रह्मब्राह्मणाच्छंस्याग्नीध्रपोतॄणां चतुर्णां कर्माण्युदाहार्याणि। तस्मात्–यावन्ति कर्माणि तावन्त ऋत्विजो वरीतव्याः॥ १७॥

( दशमे चमसाध्वर्यूणां पृथक्त्वाधिकरणे सूत्रम् )।

चमसाध्वर्यवश्च तैर्व्यपदेशात् ॥ २५॥

दशमाधिकरणमारचयति–

चमसाध्वर्यवो नान्य ऋत्विग्भ्योऽन्येऽथवाऽग्रिमः।
यौगिक्या संज्ञया नैवं षष्ठ्या तेभ्यो विभेदनात्॥ १८॥

---

१ ग. च. कुवंति। २ ग. च. ङ. तद्दर्श। ३ ख. ङ. 'र्त्विं'। ४ ङ. च्छावाकि।

ज्योतिष्टोमे श्रूयते—'चमसाध्वर्यून्वृणीते' इति। ये पूर्वत्र कार्यानुसारेणाध्वर्युप्रमुखा ऋत्विज उक्ताः, तेभ्यो न व्यतिरिक्ताश्चमसाध्वर्यवः। कुतः। यौगिकसंज्ञया तदभेदप्रतीतेः। त(य)था देवदत्त एव पचिक्रियायोगात्पाचको भवति, तथाऽध्वर्युप्रमुखा एव चमसयोगाच्चमसाध्वर्यवः—इति चेत्।

मैवम्। मध्यतःकारिणां चमसाध्वर्यवः, होत्रकाणां, चमसाध्वर्यव इति +षष्ठ्या भेदावभासात्। मध्यतःकारिणोऽध्वर्युहोत्रादयः। होत्रकाः प्रतिप्रस्थातृमैत्रावरुणादयः। तस्मादृत्विग्भ्योऽन्ये॥ १८॥

(एकादशे चमसाध्वर्यूणां बहुत्वनियमाधिकरणे सूत्रम्)।

उत्पत्तौ तु बहुश्रुते.॥२६॥

एकादशाधिकरणमारचयति—

तान्वृणीतेति बहुता नास्ति वाऽस्ति ग्रहैक्यवत्।
नेति चेन्नात्र वैषम्यादुत्पत्तौ बहुताश्रुतेः॥ १९॥

'चमसाध्वर्यून्वृणीत' इति यद्बहुत्वं श्रुतम्, तन्न विवक्षितम्। ग्रहैकत्ववदुद्देश्यगतत्वात्—इति चेत्। मैवम्। ग्रहवैषम्यात्। 'ग्रहं संमार्ष्टि' इत्येतद्ग्रहाणां नोत्पत्तिवाक्यम्। चमसाध्वर्यूणां त्वेतदेवोत्पत्तिवाक्यम्। ततस्तेषामुपादेयत्वात्तद्गतं बहुत्वं विवक्षितम्॥ १९॥

(द्वादशे चमसाध्वर्यूणां दशसंख्यानियमाधिकरणे सूत्रम्—)।

दशत्वं लिङ्गदर्शनात्॥ २७॥

द्वादशाधिकरणमारचयति—

नेयत्ताऽस्त्यस्ति वा तेषां न नियामकवर्जनात्।
चमसानां दशत्वेन चमसाध्वर्यवो दश॥ २०॥

स्पष्टोऽर्थः॥ २०॥

(त्रयोदशे शमितुरपृथक्त्वाधिकरणे सूत्रे २८–२९)।

शमिता च शब्दभेदात्॥ २८॥
प्रकरणाद्वोत्पत्त्यसंयोगात्॥ २९॥

---

+ शास्त्रदीपिकायां तु—'पृथक्श्रुतं वरणं तदभेदेऽचरितार्थं सदेषां तेभ्यो भेदं करिष्यति' इति प्रसाध्य "एतेन सदस्यो व्याख्यातः, तस्यापि वरणाम्नानात्" इत्युक्तम्।

---

१ ग. च. °तवृत्पारि°। २ ग. च. °क्यम्। अत°।

त्रयोदशाधिकरणमारचयति—

तेभ्योऽन्यः शमिताऽनन्यो वाऽन्यः संज्ञापृथक्त्वतः।
वरणाभावतो नान्यः संज्ञाभेदस्तु यौगिकः ॥ २१ ॥

'×शमितार उपेत न यज्ञम्' इत्यस्मिन्मन्त्रे श्रुतायाः शमितृसंज्ञायाः पृथक्त्वादुक्तेभ्योऽन्यः शमिता—इति चेत्।

नैवम्। पृथग्वरणाभावात्। संज्ञाभेदस्तु पशुसंज्ञपनयोगादुपपद्यते। यद्यप्ययं मन्त्रोऽध्वर्युकाण्डे पठितः, तथाऽप्यध्वर्योः परावृत्तिश्रवणादध्वर्युपुरुषाः प्रतिप्रस्थात्रादयः शमितारः। अत एव श्रूयते—'परावर्ततेऽध्वर्युः पशोः संज्ञप्यमानात्' इति ॥२१॥

( चतुर्दशे—उपगस्यापृथक्त्वाधिकरणे सूत्रम्— )।

उपगाश्च लिङ्गदर्शनात् ॥ ३० ॥

चतुर्दशाधिकरणमारचयति—

अन्ये स्युरुपगातार उदितेभ्यो न वा यथा।
लोकेऽत्रापि तथा नैवं नाध्वर्युरितिलिङ्गतः ॥ २२ ॥

यथा लोके मुख्येभ्यो गायकनायकादिभ्योऽन्ये पार्श्वस्था उपगातारः, तथाऽत्रापि—इति चेत्।

नैवम्। यद्युक्तेभ्यः पुरुषेभ्य उपगातारोऽन्ये भवेयुः, तदानीमध्वर्योः प्रसक्त्यभावात् 'नाध्वर्युरुपगायेत्' इति प्रतिषेधोऽनर्थकः स्यात्। तस्मादुक्तेष्वेव यौगिकः संज्ञाभेदः ॥ २२ ॥

( पञ्चदशे सोमविक्रेतुः पृथक्त्वाधिकरणे सूत्रम्— )।

विक्रयी त्वन्यः कर्मणोऽचोदितत्वात् ॥ ३१ ॥

पञ्चदशाधिकरणमारचयति—

सोमविक्रय्येक[4] एषु न वा वरणवर्जनात्।
एकः क्रत्वर्थता नास्ति विक्रयस्येति भिद्यते ॥ २३ ॥

क्रय एव ज्योतिष्टोमाङ्गत्वेन श्रुतः, न विक्रयः। न चाविहितमृत्विजः कुर्वन्ति। तस्माद्न्यो विक्रेता ॥२३॥

---

× 'शमितारमुपनयीत यज्ञम्' इति शाबरभाष्ये पाठः।

---

१ क. ग. च. °राज्ञाव°—शास्त्रदीपिकायामप्ययमेव पाठः। २ ग. च. °यकेभ्यो गायका अन्ये। ३ ग. च. °षोऽयमन°। ४ ख. °क्रयक ए°।

(षोडशे 'ऋत्विक्' इति नाम्नोऽसर्वगामिताधिकरणे सूत्राणि ३२-३५)।

कर्मकार्यात्सर्वेषामृत्विक्त्वमविशेषात् ॥ ३२ ॥
न वा परिसंख्यानात् ॥ ३३ ॥ पक्षेणेति चेत्
॥ ३४ ॥ न सर्वेषामाधिकारः ॥ ३५ ॥

षोडशाधिकरणमारचयति—

किमृत्विङ्नाम सर्वेषु समानमुत केषुचित् ।
ऋतौ यजनमेतेषां तुल्यमित्यास्ति नाम तत् ॥ २४ ॥

सौम्याध्वरस्य सप्त स्युर्दश चेत्यादिसंख्यया ।
न सर्वेषां समं नाम केषांचिद्योगरूढितः ॥ २५ ॥

ऋत्विक्शब्दस्य प्रवृत्तिनिमित्तमृतौ यजनम् । तच्च ब्रह्मादिष्विव चमसाध्वर्युष्वप्यस्ति । तस्मात्—सर्वेषामृत्विङ्नाम समानम्—इति चेत् ।

मैवम् । संख्याश्रुतिविरोधात् । 'सौम्यस्याध्वरस्य यज्ञक्रतोः सप्तदशर्त्विजः' इति श्रूयते । तस्मात्—योगमनतिक्रम्य पाङ्कजीयरूढिमप्याश्रित्य केषुचिदेवैतन्नामेत्यवगन्तव्यम् ॥ २४ ॥ २५॥

( सप्तदशे— { दीक्षादक्षिणावाक्ययोक्तब्रह्मादीनामेव सप्तदशर्त्विक्त्वाधिकरणे } —सूत्रे ३६–३७ )।

नियमस्तु दक्षिणाभिः श्रुतिसंयोगात् ॥ ३६ ॥
उक्त्वा च यजमानत्वं तेषां दीक्षाविधानात् ॥ ३७ ॥

सप्तदशाधिकरणमारचयति—

संख्याता अपि ये केचिन्नियता वाऽविशेषतः ।
आद्यो न दक्षिणादाने दीक्षायां च विशेषतः ॥ २६ ॥

ये सप्तदश संख्याताः, ते ब्रह्मादिषु चमसाध्वर्युषु च ये केचिदिच्छया ग्रहीतव्याः । विशेषस्याश्रवणात्—इति चेत् ।

मैवम् । दक्षिणावाक्ये दीक्षावाक्ये च विशेषश्रवणात् । 'ऋत्विग्भ्यो दक्षिणां ददाति' इत्युक्त्वा तद्विशेषः श्रूयते—'अग्नीधे ददाति' 'ब्रह्मणे ददाति' इत्यादिना । दीक्षावाक्यं च तत्र प्रकरणे 'ये यजमानास्त ऋत्विजः' इत्युक्त्वाऽनन्तरमेवमाम्नायते—'अध्वर्युर्गृहपतिं दीक्षयित्वा ब्रह्माणं दीक्षयति, तत उद्गातारम्, ततो होतारम्, ततस्तं प्रतिप्रस्थाता दीक्षयित्वाऽर्धिनो दीक्षयति—

1 ग. ङ. °प्रति° । 2 ख. °तत्राप्येन्य° । 3 क. °त्युक्त्यन° । ग. च. °त्युक्तान्° ।

ब्राह्मणाच्छंसिनं ब्रह्मणः, प्रस्तोतारमुद्गातुः, मैत्रावरुणं होतुः । ततस्तं नेष्टा दीक्षयित्वा तृतीयिनो दीक्षयति—अग्नीधं ब्रह्मणः, प्रतिहर्तारमुद्गातुः, अच्छावाकं होतुः । ततस्तमुन्नेता दीक्षयित्वा पादिनो दीक्षयति—पोतारं ब्रह्मणः, सुब्रह्मण्यमुद्गातुः, ग्रावस्तुतं होतुः । ततस्तमन्यो ब्राह्मणो दीक्षयति ' इति । अस्यायमर्थः—' अध्वर्युर्यजुर्वेदप्रोक्तं करोति, तस्य पुरुषास्त्रयः—प्रतिप्रस्थाता नेष्टोन्नेता चेति । एते चत्वारो दीक्षयितारः । ब्रह्मा वेदत्रयोक्तस्य प्रत्यवेक्षणं करोति । तस्य पुरुषास्त्रयः—ब्राह्मणाच्छंसी, अग्नीत्, पोता चेति । उद्गातोद्गानं करोति, तस्य पुरुषास्त्रयः—प्रस्तोता, प्रतिहर्ता, सुब्रह्मण्यश्चेति । होता शंसनं करोति, तस्य पुरुषास्त्रयः—मैत्रावरुणः अच्छावाकः, ग्रावस्तुदिति । चतुर्षु वर्गेषु ये प्रथमास्ते दक्षिणां संपूर्णां प्राप्नुवन्ति । ये द्वितीयास्ते तदर्धं प्राप्नुवन्ति—इत्यर्धिनः । ये तृतीयास्ते तृतीयांशं प्राप्नुवन्ति—इति तृतीयिनः । ये चतुर्थास्ते चतुर्थमंशं प्राप्नुवन्ति—इति पादिनः । तामेतानुक्रमेण स स पुरुषः संस्करोति ' इति । अत्र—दीक्षावाक्ये निर्दिष्टा अध्वर्युप्रभृतय ऋत्विजः षोडश, न तु चमसाध्वर्यवः—इति नियमो द्रष्टव्यः ॥ २६ ॥

( अष्टादशे—ऋत्विजां स्वामिसप्तदशत्वाधिकरणे सूत्रम्— )।

**स्वामिसप्तदशाः कर्मसामान्यात् ॥ ३८ ॥**

अष्टादशाधिकरणमारचयति—

**सदस्ये यजमाने वा साप्तदश्यं वृतत्वतः ।**
**सदस्ये कुरुते किंचिन्नासौ स्वामिनि तत्त्वतः ॥ २७ ॥**

अध्वर्युब्रह्मादिषु षोडशसु व्यवस्थितेषु सप्तदशसंख्यापूरकः कश्चिदृत्विगपेक्षितः । सोऽत्र सदस्यो भविष्यति । सदस्यवस्थितः सदस्यः । न च तस्य वरणाभावः । केषांचिच्छाखायां तद्वरणस्याऽऽम्नातत्वात् । ततः साप्तदश्यं सदस्ये पर्यवसितम्—इति चेत् ।

मैवम् । असौ सदस्यः किंचिदपि न करोति । ' सदस्य इदं कुर्यात् ' इति विध्यभावात् । न च विना क्रियामृतुयजननिमित्त ऋत्विक्शब्दस्तस्मिन्नवकल्पते । यजमानस्तु त्यागं करोतीति तस्मिन्नुपपद्यते । तस्मात्साप्तदश्यं यजमाने युक्तम् ।

---

१ ख. अग्नीध्रं । २ ग. च. °त्रयप्रोक्त° । ३ ख. गणेषु । ४ छ. °ष्टा एवाध्व° । ५ ग. ख. ङ. °द्विषो° । ६ क. ख. ग. च. °मित्तमृत्वि° । ७ ख. °स्मात्त्साप्तदश्यं ।

( एकोनविंशे—आध्वर्यवादिष्वध्वर्य्वादीनां कर्तृतानियमाधिकरणे,
( विंशे—अग्नेः प्रकृतिविकृतिसर्वार्थताधिकरणे, च सूत्राणि ३९-४२ )।

ते सर्वार्थाः प्रयुक्तत्वात्, अग्नयश्च स्वकालत्वात्
॥ ३९ ॥ तत्संयोगात्कर्मणो व्यवस्था स्यात्,
संयोगस्यार्थवत्त्वात् ॥ ४० ॥ तस्योपदेशसमाख्या-
नेन निर्देशः ॥ ४१ ॥ तद्वच्च लिङ्गदर्शनम् ॥४२॥

एकोनविंशाधिकरणमारचयति—

न कार्यं नियतं तेषां नियतं वाऽग्रिमो यतः।
शक्ताः केन किमित्यत्र नियतिः स्यात्समाख्यया ॥२८॥

तेषामध्वर्युप्रभृतीनां कार्यं न नियतम्। यतः सर्वे सर्वत्र शक्ताः। प्रकरणं च सर्वसाधारणत्वान्न नियामकम्—इति चेत्—

मैवम्। ×समाख्याया नियामकत्वात्। यस्मिन्कर्मणि 'आध्वर्यवम्' इति समाख्या तत्कर्माध्वर्योः। एवमितरत्रापि ॥२८॥

( विंशे—अग्नेः प्रकृतिविकृतिसर्वार्थताधिकरणे—उक्तसूत्रैकदेशः— )।

अग्नयश्च ( सर्वार्थाः ) स्वकालत्वात् ॥ ३९ ॥

विंशाधिकरणमारचयति—

प्रकृत्यर्थोऽथ सर्वार्थो वह्निरायोऽस्तु पर्णवत्।
पर्णन्यायोऽतिदिष्टे स्यादुपदिष्टे तु सर्वगः ॥ २९ ॥

यथा 'यस्य पर्णमयी जुहूर्भवति न स पापं श्लोकं शृणोति' इत्यसौ पर्णविधिः प्रकृत्यर्थः। एवमाधानस्याप्यनारभ्याधीतत्वादाहित आहवनीयाद्यग्निः प्रकृत्यर्थः—इति चेत्—

मैवम्। वैषम्यात्। पर्णवाक्यात्पर्णताया यावत्क्रतुप्रवेशो जुहूद्वारम्। सा च जुहूः प्रकृतावेव विहिता विकृतिषु सर्वत्रातिदिश्यते। आहवनीयाद्यग्नेस्तु क्रतुप्र-

× तथा किमेष एवोत्सर्गः—सर्वं हौत्रं होत्रा, आध्वर्यवमध्वर्युणा, इति। न। क्वचिदपोद्यते। यत्र प्रत्यक्षवचनं, यथा "मैत्रावरुणः प्रेष्यति चान्वाह च" इति, यत्र च विशेषसमाख्या, यथा 'पोत्रीयं, नेष्ट्रीयं, याजमानम्' इति, तत्र विशेषसमाख्याबलाद्वचनबलाच्च सामान्यसमाख्याऽपोद्यते। तदिदमुक्तम्—"तस्योपदेशसमाख्यानेन निर्देशः" इति। तदिदं समाख्याविनियोगस्यैवातिप्रसङ्गनिवारणेन शेषभूतं सूत्रम्। नाधिकरणान्तरम्—इति शास्त्रदीपिका।

१ ख. छ. सर्वशः। ग. च. सर्वगम्।

वेशे द्वारं होमः । स च क्वचित्प्रकृतावेव विहितः सन्विकृतावतिदिश्यते । तद्यथा-प्रयाजानारिष्ठादिहोमाः । तादृशे विषये 'यदाहवनीये जुह्वति' इति वाक्येनाग्निः प्रकृतावेव विधीयते । विकृतौ तु होमेन सहातिदिश्यते । तस्मात्तत्र पर्णन्यायः । यस्तु होमो विकृतावुपदिश्यते । तद्यथा—सांग्रहण्यामिष्टावामनहोमः । तत्र द्वारभूतस्य होमस्य विकृतावुपदिश्यमानतया द्वारिणोऽपि प्रकृताविव विकृतावपि वाक्येन विधिर्धारयितुमशक्यः । तस्मात्—सर्वार्थो वह्निः ॥२९॥

( एकविंशे समाख्याबाधनाधिकरणे सूत्राणि ४३–४५ ) ।

प्रैषानुवचनं मैत्रावरुणस्योपदेशात् ॥ ४३ ॥ पुरोनुवाक्याधिकारो वा प्रैषसंनिधानात् ॥ ४४ ॥ प्रातरनुवाके च होतृदर्शनात् ॥ ४५ ॥

एकविंशाधिकरणमारचयति—

यन्मैत्रावरुणः प्रेष्यत्यनु चाऽऽहेति बाधनम् ।
हौत्रादिकसमाख्यायास्तत्सर्वत्रोत कुत्रचित् ॥ ३० ॥
आद्योऽस्तु वचनान्नैवं साहित्योक्त्युपलम्भनात् ।
प्रैषानुवचने यत्र सहिते तत्र बाधनम् ॥ ३१ ॥

अग्नीषोमीयपशौ श्रूयते—'मैत्रावरुणः प्रेष्यति चानु चाऽऽह' इति । तदेतद्वाक्यं प्रैषानुवचनयोर्मैत्रावरुणकर्तृकत्वं विदधाति । तेन च वाक्येन समाख्या बाध्यते । 'अग्नये समिध्यमानायानुब्रूहि' 'यूपायाज्यमानायानुब्रूहि' इत्यादिप्रैषाणामध्वर्युकर्तृकत्वदर्शनात्—'आध्वर्यवाः प्रैषाः' इत्यस्ति याज्ञिकानां समाख्या । तथा । 'प्रवो वाजा अभिद्यवः'— 'अञ्जन्ति त्वामध्वरे देवयन्तः' इत्याद्यनुवचनानां होतृकर्तृकत्वदर्शनात् । 'अनुवचनानि हौत्राणि'—इति याज्ञिकसमाख्या । प्रैषानुवचने च द्विविधे—समस्ते व्यस्ते च । पूर्वोदाहृते व्यस्ते । 'होताऽयक्षदग्निं समिधम्'—इत्याद्यनुवचनमन्त्रस्यान्ते 'होतर्यज' इति प्रैष आम्नातः । एते प्रैषानुवचने समस्ते । तेषु च व्यस्तसमस्तप्रैषानुवचनेषु सर्वत्र प्रबलेन वाक्येन समाख्यां बाधित्वा होतृकर्तृकत्वमध्वर्युकर्तृकत्वं च परित्यज्य मैत्रावरुणकर्तृकत्वमेवाभ्युपेयम्—इति प्राप्ते—

अभिधीयते—'प्रेष्यति चानु चाऽऽह' इति चकारद्वयेन प्रैषानुवचनयोः समु-

१ ख. च. कश्चित्प्र° । २ ग. च. °णोऽग्नेरपि । ३ ख. तन्मै° । ४ ग. च. °हित्यै-स्तूप° । ५ ख. ग. च. °र्वप्र° । ६ घ. च, °त्वमभ्यु° । ७ छ. °पेतम् । ८ क. ग. च. विनीयते ।

यो वाक्येऽस्मिन्नुपलभ्यते। ततः समुच्चितयोरेव समाख्याबाधनम्। व्यस्तयोस्तु यथासमाख्यं होत्रादिकर्तृकत्वमेवाभ्युपेयम् ॥ ३० ॥ ३१ ॥

(द्वाविंशे चमसहोमेऽध्वर्युचमसाध्वर्युकर्तृकताधिकरणे सूत्राणि ४६—४९)।

चमसांश्चमसाध्वर्यवः समाख्यानात् ॥४६॥ अध्वर्युर्वा तन्न्यायत्वात् ॥४७॥ चमसे चान्यदर्शनात् ॥४८॥ अशक्तौ ते प्रतीयेरन् ॥ ४९ ॥

द्वाविंशाधिकरणमारचयति—

चमसैश्चमसाध्वर्युर्जुहोत्यध्वर्युरेव वा।
संज्ञाविशेषादाद्योऽस्तु मैवमध्वर्युसंज्ञया ॥ ३२ ॥
विशेषस्यानपेक्षत्वात्तेनान्यस्या अपेक्षणात्।
अध्वर्युर्जुहुयाच्छक्तेस्तदशक्तौ परोऽपि वा ॥ ३३ ॥

'चमसाध्वर्युः' इत्येवंविधसंज्ञाविशेषाच्चमसाध्वर्यव एव चमसैर्जुहुयुः—इति चेत्। मैवम्। अध्वर्युसंज्ञाया निरपेक्षत्वेन प्रबलत्वात्। केवलाध्वर्यौ चमसाध्वर्युषु चानुगतोऽध्वर्युशब्दः सामान्यरूपः। चमसशब्दस्तु चमसाध्वर्युष्वेवेति विशेषरूपः। तं च विशेषमनपेक्ष्यैवाध्वर्युशब्द क्वाचित्कसंज्ञारूपेण वर्तितुं प्रभवति। चमसशब्दस्तु सामान्यवाचिनमध्वर्युशब्दमपेक्ष्यैव पुरुषेषु संज्ञा भवति। तथा सति 'आध्वर्यवो होमः' इत्यनया निरपेक्षया प्रबलया समाख्ययाऽध्वर्युरेव सत्यां शक्तौ चमसैर्जुहुयात्। ग्रहहोमव्यापृतत्वेन कदाचिदशक्तौ चमसाध्वर्यवो जुहुयुः ॥३२॥३३॥

(त्रयोविंशे श्येनवाजपेययोरनेककर्तृकताधिकरणे सूत्रे ५०—५१)।

वेदोपदेशात्पूर्ववद्वेदान्यत्वे यथोपदेशं स्युः ॥ ५० ॥ तद्गुणाद्वा स्वधर्मः स्यादधिकारसामर्थ्यात्सहाङ्गैरव्यक्तः शेषे ॥५१॥

त्रयोविंशाधिकरणमारचयति—

श्येन उद्गातृवेदोक्तो वाजपेयो यजुष्यम्।
उद्गात्राऽध्वर्युणा कार्यौ यथाप्रकृति वाऽग्रिमः ॥ ३४ ॥
आख्याविशेषादाख्यायाः पूर्वभावी हि चोदकः।
प्रकृताविव कर्तारस्तत्तद्धर्मे व्यवस्थिताः ॥ ३५ ॥

१ ग. च. °त्वमभ्यु°। २ छ. °यास°। ३ छ. °क्त्वाद°। ४ ग. च. °मेव्व°।

श्येनयागः सामवेदे समाम्नात इति तत्रत्याः सर्वे पदार्था उद्गात्राऽनुष्ठेयाः, बहिष्पवमानाज्यपृष्ठादिस्तोत्रेष्विवोद्गातृत्वसमाख्यायाः श्येनेऽपि समत्वात्। तथा—यजुर्वेदे समाम्नातो वाजपेयः सर्वोऽप्यध्वर्युणैवानुष्ठेयः। समाख्याबलात्—इति प्राप्ते—

ब्रूमः—श्येनवाजपेयौ हि ज्योतिष्टोमविकारौ। तत्र चोदकस्तत्तत्पदार्थांस्तैस्तैः पुरुषैरनुष्ठेयतया समर्पयति। अङ्गेष्वतिदिष्टेषु पश्चात्साङ्गप्रधानानुष्ठापकस्य प्रयोगवचनस्य प्रवृत्तिः। प्रयोगवचनाधीना तु समाख्याऽत्यन्तजघन्या। ततः प्रबलचोदकवशात्प्रकृताविव नानाविधाः कर्तारः स्वस्वधर्मेषु व्यवतिष्ठन्ते॥३४॥३५॥

इति श्रीमाधवीये जैमिनीयन्यायमालाविस्तरे तृतीयाध्यायस्य सप्तमः पादः॥ ७॥

---

| | अत्र पादे | आदितः। |
|---|---|---|
| अधिकरणानि | २१ | २२३। |
| सूत्राणि | ५१ | ६१३। |

( अथ तृतीयाध्यायस्याष्टमः पादः )।

( प्रथमे क्रयस्य स्वामिकर्मताधिकरणे सूत्रम्— )।

स्वामिकर्म परिक्रयः कर्मणस्तदर्थत्वात्॥ १॥

अष्टमपादे प्रथमाधिकरणमारचयति—

दक्षिणादिपरिक्रीतिर्ऋत्विजः स्वामिनोऽथवा।
परिक्रयः समाख्यानादृत्विजः स्याद्यथेतरत्॥ १॥
परिक्रयात्पुराऽध्वर्युहोत्रादीनामभावतः।
परिक्रयणकर्तृत्वं यजमानस्य नर्त्विजः॥ २॥

दक्षिणादानेन कर्मकराः परिक्रेतव्याः। तत्र हविस्त्यागव्यतिरिक्तं सर्वमार्त्विज्यम्—इति निर्णीतम्। दक्षिणा च द्वादशशतरूपाऽध्वर्युवेद उद्गातृवेदे च समाम्नाता। अन्वाहार्यदक्षिणाऽध्वर्युवेदे। ततः समाख्यया परिक्रेतृत्वमृत्विजः—इति चेत्।

नैवम्। ऋत्विजां परिक्रयणोत्तरकालीनानां तत्कर्तृत्वासंभवेन यजमानस्यैव तत्कर्तृत्वात्॥ १॥ २॥

---

१ ग. ख. 'द्गातृत्व'। २ ग. ख. सत्त्वात्। ३ ग. ख। ४ क. 'विपक्ष'।

( द्वितीये वरदानस्याध्वर्युकर्मताधिकरणे सूत्रम्— )

वचनादितरेषां स्यात् ॥ २ ॥

द्वितीयाधिकरणमारचयति—

इष्टकावरदानं किं स्वामिनः स्यादुतर्त्विजः।
स्वामिनः पूर्ववन्नैवमध्वर्योर्वचनादयम् ॥ ३ ॥

'य एतामिष्टकामुपदध्यात्, स त्रीन्व+रान्दद्यात्' इत्युपधातुरध्वर्योर्गोवरदानं वाचनिकम्। नह्यस्ति वचनस्यातिभारः ॥ ३ ॥

( तृतीये वपनादिसंस्काराणां याजमानताधिकरणे सूत्राणि ३—८ )।

संस्कारास्तु पुरुषसामर्थ्ये यथावेदं कर्मवद्व्यवतिष्ठेरन् ॥ ३ ॥ याजमानास्तु तत्प्रधानत्वात्कर्मवत् ॥ ४ ॥ व्यपदेशाच्च ॥५॥ गुणत्वेन तस्य निर्देशः ॥ ६ ॥ चोदनां प्रति भावाच्च ॥ ७ ॥ अतुल्यत्वादसमानविधानाः स्युः ॥ ८ ॥

तृतीयाधिकरणमारचयति—

संस्कारा वपनाद्याः किमध्वर्योः स्वामिनोऽथवा।
अध्वर्योस्तत्र शक्तत्वात्तद्वेदोक्तेश्च तस्य ते ॥ ४ ॥
संस्कारैर्योग्यतां प्राप्य स्वकार्यं कर्तुमृत्विजः।
क्रीणात्यतः क्रिया तेषां संस्क्रिया यजमानगा ॥ ५ ॥

'आप उन्दन्तु जीवसे' इत्याद्याः संस्कारमन्त्राः। तद्विधयश्चाध्वर्युवेदे समाम्नाताः—'केशश्मश्रु वपते,' 'नखानि निकृन्तते' इति। शक्तश्चाध्वर्युर्वपनादौ। तस्मात्—तस्याध्वर्योस्ते वपनादिसंस्काराः—इति चेत्।

मैवम्। वपनादिसंस्कारा यजमानगतमालिन्यमपनीय यागयोग्यतामुत्पादयितुं क्रियन्ते। तथा च ब्राह्मणम्—'केशश्मश्रु वपते। मृता वा एषा त्वगमेध्या यत्केशश्मश्रु। मृतामेव त्वचममेध्यामपहत्य यज्ञियो भूत्वा मेधमुपैति' इति। नह्यध्वर्युवपनेन यजमानगता मृता त्वगपैति। योग्यस्य हि कर्माधिकारे सति पश्चात्प्रयासरूपेषु व्यापारेषु स्वयमशक्तः सन्कर्मकरानृत्विजः परिक्रीणाति। लोकेऽपि

+ "वरं गां तु विजानीयाच्चतुर्वर्षामिति स्थितिः" इति गृह्यसंग्रहः।

१ ख. °दधाति स। ग. °नावपः सं°।

रोगिणः स्वामिन औषधाद्यानयन एव भृत्यो जीवितदानेन परिक्रीयते। न तु तदौषधं भृत्यः सेवते। तस्मात्—इतरक्रियर्त्विजाम्, संस्कारस्तु यजमानस्य। क्वचित्तु*वचनादृत्विजामपि संस्कारोऽस्तु ॥ ४ ॥ ५ ॥

( चतुर्थे तपसो याजमानताधिकरणे सूत्राणि ९-११ )।

तपश्च फलसिद्धित्वाल्लोकवत् ॥ ९ ॥ वाक्यशेषश्च तद्वत् ॥ १० ॥ वचनादितरेषां स्यात् ॥ ११ ॥

चतुर्थाधिकरणमारचयति—

नाश्नाति द्व्यहमित्येतत्तपः कस्य तयोर्द्वयोः।
दुःखत्वाद्भोक्तृसंस्काराद्ध्वर्योर्युज्यते तपः ॥ ५ ॥
फलान्तरायपापस्य नाशकत्वेन संस्कृतिः।
लिङ्गात्तपः स्वामिगामि संस्कारान्तरवच्चतः ॥ ६ ॥

ज्योतिष्टोमे—'द्व्यहं नाश्नाति' 'त्र्यहं नाश्नाति' इत्यादिनोक्तं तपोऽध्वर्योर्युक्तम्। तस्य दुःखात्मकत्वेन परिक्रीतपुरुषैः कर्तुमुचितत्वात्। दुःखत्वादेव फलभोक्तृसंस्कारत्वाभावाद्यजमानस्य न युक्तम्—इति चेत्।

मैवम्। भाविनः सुखरूपस्य फलस्य प्रतिबन्धकं दुःखजनकं यत्पापं तस्य नाशकत्वेन दुःखरूपस्यापि तपसः स्वामिसंस्कारत्वसंभवात्। अस्मिन्नर्थे वाक्यशेषगतं लिङ्गं कल्पसूत्रकारेणैवमुदाहृतम्-'यदा वै दीक्षितः कृशो भवति, अथ मेध्यो भवति। यदाऽस्मिन्नन्तर्न किंचन भवति, अथ मेध्यो भवति। यदाऽस्य कृष्णं चक्षुषोर्नश्यति, अथ मेध्यो भवति। यदाऽस्य त्वचाऽस्थि संधीयते, अथ मेध्यो भवति। पीवा दीक्षते, कृशो यजते। यदस्याङ्गानां मीयते जुहोत्येव तदिति विज्ञायते' इति। न हि दुःखरूपं तपो विना दुःखप्रदं पापं नश्यति। यथा पाटनमन्तरेण विषव्रजानां नोपशान्तिः, तद्वत्। तस्मात्—वपनादिसंस्कारवत्तपोऽपि यजमानस्यैव × ॥ ५ ॥ ६ ॥

---

* "हिरण्यमालिन ऋत्विजः" इतिवत्—इति शास्त्रदीपिका। पञ्चमाधिकरणेऽत्रापि व्यक्ती भविष्यति। × वचनादृत्विजामपि स्यात्। यथा "ऋत्विज उपवसन्ति" इति—इति शास्त्रदीपिका। यत्र वचनं तत्र ऋत्विजाम्। यथा "सर्वे ऋत्विज उपवसन्ति" इति—इति शाबरभाष्यं च।

---

१ ख. जीवनदा°। २ क, ड. °न्धकदुः°। ३ क. °स्वत्वा°। ४ ड. °ङ्गानि हीयन्ते जुह°

( पञ्चमे लोहितोष्णीषतादीनां सर्वर्त्विग्धर्मताधिकरणे सूत्रम्- ) ।

गुणत्वाच्च वेदेन न व्यवस्था स्यात् ॥ १२ ॥

पञ्चमाधिकरणमारचयति-

हिरण्यमालितायास्तु संस्कारा वचनान्मताः ।
ऋत्विजां ते यथाख्यानं कर्तव्या निखिलैरुत ॥ ७ ॥
आद्य आख्यावशान्मैवं सर्वसंनिधिपाठतः ।
प्रतिमुख्यं गुणावृत्तेः कर्तव्या निखिलैरपि ॥ ८ ॥

वाजपेये श्रूयते—' हिरण्यमालिन ऋत्विजः प्रचरन्ति ' इति । श्येने श्रूयते—' लोहितोष्णीषा लोहितवसना निवीता ऋत्विजः प्रचरन्ति ' इति । यद्यपि हिरण्यमालित्वादीनां संस्कारत्वाद्यजमानविषयत्वं पूर्वन्यायेन प्राप्तम्, तथाऽपि वचनादयमृत्विक्संस्कारः । तत्र हिरण्यमालित्वं यजुर्वेदोक्तत्वादध्वर्यूणामेव, लोहितोष्णीषादिकं सामवेदोक्तत्वादुद्गातॄणामेव इति समाख्यावशादभ्युपेयम्—इति चेत् ।

मैवम् । ' हिरण्यमालिन ऋत्विजः प्रचरन्ति ' इति सर्वेषामृत्विजां संनिधौ पठ्यमानो हिरण्यमालित्वसंस्कारः संनिधिना समाख्यां बाधित्वा सर्वैरप्यृत्विग्भिः संबध्यते । किंच—संस्कार्यत्वादृत्विजां प्राधान्ये सति प्रतिप्रधानं गुणावृत्त्या सर्वेषामप्यृत्विजां हिरण्यमालित्वादिसंस्कारोऽभ्युपेतव्यः ॥ ७ ॥ ८ ॥

( षष्ठे वृष्टिकामनाया याजमानताधिकरणे सूत्रे—१३—१४ ) ।

तथा कामोऽर्थसंयोगात् ॥ १३ ॥
व्यपदेशादितरेषां स्यात् ॥ १४ ॥

षष्ठाधिकरणमारचयति—

वृष्टिकामी सदो नीचैर्मिनुयादिति कामना ।
अध्वर्योः स्वामिनो वाऽऽद्यो वाक्यान्मातुस्तदुच्यते ॥९॥
परस्मैपदतोऽध्वर्युव्यापारस्य परार्थता ।
प्रतीताऽतो वाक्यबाधे तयोवत्स्वामिनोऽस्तु तत् ॥ १० ॥

ज्योतिष्टोमे श्रूयते—'यदि कामयेत—वर्षुकः पर्जन्यः स्यात्—इति नीचैः सदो मिनुयात्' इति ।—यथा पुरस्तात्पश्चाच्चावस्थितौ हविर्धानप्राचीनवंशावुच्चैः, तथा सदो नोच्चं, किंतु नीचैः कार्यम्—इत्यर्थः । अत्र—वृष्टिकामनाऽध्वर्योर्युक्ता ।

१ क. ङ. °नात्मताः । २ ग. च. °स्तनि° । ३ ग. च. °ष्णीषत्वादि° । ४ ग. च. °भ्युपेयः । ५ ख. त्रदा ।

'यः कामयेत्, स मिनुयात्' इति वाक्येन कामयितृमात्रोरेकत्वावगमात्। मातृत्वं चाध्वर्योरित्याविवादम्। तस्मात्-स कामयिता-इति चेत्।

मैवम्। 'मिनुयात्' इति परस्मैपदेनाध्वर्युव्यापारफलस्य परगामिता प्रतीयते। ततो वृष्टिलक्षणफलस्य यजमानगामित्वात्परस्मैपदश्रुत्या वाक्यं बाधित्वा कामस्य यजमानकर्तृकत्वं द्रष्टव्यम्।-'यजमानकामितां वृष्टिं पर्जन्यः संपादयतु' इत्येव योऽध्वर्युः कामयते, स नीचैर्मिनुयात्, इति वाक्यं व्याख्येयम्।-'एवंविदुद्गाताऽऽत्मने वा यजमानाय वा यं कामं कामयते, तमागायति' इति ऋत्विजोऽपि कामः-इति चेत्। तर्हि तस्मिन्नुद्गीथोपासने वचनादृत्विजोऽपि फलमस्तु॥९॥१०॥

( सप्तमे, आयुर्दा इत्यादिमन्त्राणां याजमानताधिकरणे-सूत्रे १५-१६ )।

मन्त्राश्चाकर्मकरणास्तद्वत् ॥ १५ ॥

विप्रयोगे च दर्शनात् ॥ १६ ॥

सप्तमाधिकरणमारचयति-

आयुर्दा इति मन्त्रोक्तिः कस्याध्वर्योः समाख्यया।
तद्बाधे लिङ्गतः स्वामिगामिता कामवन्मता ॥ ११ ॥

इदमाम्नायते-'आयुर्दा अग्नेऽस्यायुर्मे देहि' इति। तस्यैतस्य मन्त्रस्य पाठोऽध्वर्योर्यजमानस्य वा-इत्ययं संशयः 'कस्य' इत्यनेन पदेन सूचितः।

अस्मिन्मन्त्रे 'आयुर्मे देहि' इति फलस्यं स्वात्मसंबन्धः प्रतीयते। स च यजमानस्य युक्तः, नाध्वर्योः। तस्मात्-कामवन्मन्त्रोऽपि याजमानः॥ ११ ॥

( अष्टमे द्व्याम्नातस्योभयप्रयोज्यताधिकरणे सूत्रम्- )।

द्व्याम्नातेषूभौ द्व्याम्नानस्यार्थवत्त्वात् ॥ १७ ॥

अष्टमाधिकरणमारचयति-

वाजस्य मेत्यमुं ब्रूयादेको द्वौ वा कृतार्थतः।
एकः काण्डद्वये पाठादध्वर्युस्वामिनावुभौ ॥ १२ ॥

दर्शपूर्णमासयोः-'वाजस्य मा प्रसवेन' इत्ययं मन्त्रोऽध्वर्युकाण्डे यजमानकाण्डे चाऽऽम्नातः। तत्रैकेन पठिते सति मन्त्रस्य चरितार्थत्वादितरस्तं न पठेत्-इति चेत्।

१ क. ख. ग. ङ. °तृत्वं। २ ग. च. द्रष्टम्। ३ ग. च. °म्।-य एवं°। ४ छ. °स्य आत्म°। ५ ख. °स्मान्मन्त्रो°। ६ ख. °त्वय मू°। ७ क. ख. ग. च. छ. °रस्तत्तं प°।

मैवम्। काण्डान्तरपाठवैयर्थ्यप्रसङ्गात्। तस्मादुभाभ्यां पठनीयः। तयोः पठतो-राशयभेदोऽस्ति। 'अनेन मन्त्रेण प्रकाशितमर्थमनुष्ठास्यामि' इत्यध्वर्युर्मनुते। 'अत्र न प्रमदिष्यामि' इति यजमानः॥ १२॥

( नवमे—अभिज्ञस्यैव वाचयितव्यताधिकरणे सूत्रम्—)।

ज्ञाते च वाचनं नह्यविद्वान्विहितोऽस्ति॥ १८॥

नवमाधिकरणमारचयति—

वाचयेत्स्वामिनं ज्ञाज्ञौ वाचनीयौ ज्ञ एव वा।
अविशेषादुभौ ज्ञस्य स्वामित्वाद्वाचयेदमुम्॥ १३॥

वाजपेये श्रूयते—'क्लृप्तीर्यजमानं वाचयति' इति। 'आयुर्यज्ञेन कल्पताम्' इत्यादयो मन्त्राः क्लृप्तयः। तत्र—मन्त्रतदर्थाभिज्ञमनभिज्ञं चोभावपि वाचयेत्। 'विद्वांसं वाचयेत्' इत्येवं विशेषस्याश्रवणात्। अनभिज्ञं तदैव शिक्षयित्वाऽपि वाचयितुं शक्यत्वात्—इति चेत्।

मैवम्। अध्ययनविधिबलादधीतवेदस्य विदितवेदार्थस्यैव यजमानत्वात्। तस्मात्—अभिज्ञमेव वाचयेत्॥ १३॥

( दशमे द्वादशद्वंद्वानामाध्वर्यवत्वाधिकरणे सूत्रे १९-२० )।

याजमाने समाख्यानात्कर्माणि याजमानं स्युः॥ १९॥ अध्वर्युर्वा तदर्थो हि न्यायपूर्वं समाख्यानम्॥ २०॥

दशमाधिकरणमारचयति—

वत्सं चोपसृजेत्तद्वदुखां चाधिश्रयेदिति।
द्वादशद्वंद्वकर्मैतत्स्वामिनो वेतरस्य वा॥ १४॥
आद्यः पाठात्स्वामिकाण्डे तादर्थ्येन परिक्रयात्।
महाकाण्डोक्तितोऽन्त्योऽस्तु[1] द्वंद्वतैवात्र कीर्त्यते॥ १५॥

दर्शपूर्णमासयोर्याजमाने[2] काण्डे श्रूयते—'द्वादश द्वंद्वानि दर्शपूर्णमासयो-स्तानि संपाद्यानि—इत्याहुः—वत्सं चोपावसृजति, उखां चाधिश्रयति' अवं च हन्ति[3], दृषदौ च समाहन्ति' इत्यादि। तत्र—पलाशशाखया वत्सापाकरणमेकं

१ ग. च. °तोऽन्योऽस्तु। छ. °तोऽप्यंम्त्यो द्वं°। २ ग. च. छ. °मानका°। ३ ख. ग. च. छ. वहन्ति। ४ ख. °त्सानपा°।

कर्म, दोहनेन संपादितं क्षीरं धारयितुं पिठरस्थापनमपरं कर्म, तदेतदुभयमेकं द्वंद्वम्। तथा व्रीहीणामवघातः, दृषदुपलयोः पाषाणान्तरेण समाघातः, इत्येतदुभयं द्वितीयं द्वंद्वम्। एवं द्वादश कर्मद्वंद्वान्यनुष्ठेयान्याम्नातानि। तेषां याजमाने काण्डे पठितत्वात्तत्समाख्यया यजमानेन तान्यनुष्ठेयानि—इति प्राप्ते—

ब्रूमः—यजमानस्य यानि कार्याणि, तान्यनुष्ठातुमेव परिक्रीता ऋत्विजः। किंच—यजुर्वेदे याजमानमिदमवान्तरकाण्डम्, महाकाण्डं त्वाध्वर्यवमेव। तत्रैवैते वत्सापाकरणादयो धर्मा आम्नाताः। तस्मादध्वर्युरेवताननुतिष्ठेत्। याजमाने तु काण्डे न तेषामनुष्ठानमकारम्भोदितः, किंतु परिगणनया द्वंद्वतासंपादनमात्रमाम्नातम्। तेन यजमानस्तामानुपूर्वीं मनसि निधायाध्वर्योरनुष्ठाने प्रमादराहित्यमनुसंधातुं प्रभवति। तस्मादध्वर्योरेवानुष्ठानम्॥ १४॥ १५॥

(एकादशे होतुराध्वर्यवकरणानुष्ठातृत्वाधिकरणे सूत्रम्—)।

विप्रतिषेधे करणः समवायविशेषादितरमन्यस्तेषां यतो विशेषः स्यात्॥ २१॥

एकादशाधिकरणमारचयति—

यो होताऽध्वर्युरेष स्यादित्याध्वर्यवमाचरन्।
होत्रं कुर्यान्न वा त्यागहेत्वभावात्करोति तत्॥ १६॥
होतैको युगपत्कर्मद्वयं कर्तुं नहि प्रभुः।
त्यजेच्चोदकतः प्राप्तं होत्रं वाचनिकार्थकृत्॥ १७॥

अग्नीषोमीयपशौ 'परिवीरसि' इत्यनेन करणमन्त्रेणाध्वर्युर्यूपस्य रशनया परिव्याणं करोति। तदानीं क्रियमाणं तत्परिव्याणं होता 'युवा सुवासाः'—इत्यनेन मन्त्रेणानुवदति। तदेतदुभयं चोदकपरम्परया कुण्डपायिनामयने प्राप्तम्। तत्राध्वर्योर्होतुश्च समास आम्नातः—'यो होता सोऽध्वर्युः' इति। होतारमनूद्याध्वर्युत्वविधानादध्वर्युकार्यं होत्राऽनुष्ठेयम्। ततः 'परिवीरसि' इत्यनेन करणमन्त्रेण होता यूपपरिव्याणं कुर्वीत। तदानीं स्वस्य चोदकतः प्राप्तं हौत्रमपि होता न त्यजेत्। नहि त्यागहेतुं कंचिन्निषेधं पश्यामः। तस्मात्क्रियमाणं तत्परिव्याणं 'युवा सुवासाः' इत्यनेन मन्त्रेण होताऽनुवदेत्—इति प्राप्ते—

ब्रूमः—द्वयोरध्वर्युहोत्रोरुचितं कर्मद्वयमेको होता युगपत्कर्तुं न शक्नोति।

१ क. ग. च. °यान्यत्राऽऽम्ना°। २ ग. च. °षां यजमानका°। ३ ख. °मादरात्। हो°। ४ ग. च. °न्न चात्या°। ५ छ. °भुःसृजे°। ६ ख. ग. च. छ. °न परिव्याणक°। ७ ग. च. °अस्य अा°।

ततोऽन्यतरस्यावश्यंभाविनि त्यागे चोदकतः प्राप्तं हौत्रमेव त्यजेत् । आध्वर्यवं तु 'यो होता सोऽध्वर्युः' इत्यनेन प्रापितत्वादनुष्ठेयम् ॥ १६ ॥ १७ ॥

( द्वादशे प्रोक्षण्यासादनादीनामनाध्वर्यवताधिकरणे सूत्रम् — ) ।

प्रैषेषु च पराधिकारात् ॥ २२ ॥

द्वादशाधिकरणमारचयति—

प्रोक्षण्यासादनं कुर्यादध्वर्युरितरोऽथवा ।
आख्ययाऽऽद्यः सादयेति प्रैषितोऽन्योऽस्तु लिङ्गतः ॥ १८ ॥

दर्शपूर्णमासयोः—प्रोक्षणीनां केनचित्पात्रेण वेद्यामासादनं श्रुतम् । तदेतद्यजुर्वेदोक्तत्वादाध्वर्यवम्—इति चेत् ।

नैवम् । प्रैषमन्त्रविरोधप्रसङ्गात् । 'प्रोक्षणीरासादय । इध्माबर्हिरुपसादय । अग्नीदग्नीन्विहर । बर्हिः स्तृणीहि' इत्यादिष्वाध्वर्यवेषु प्रैषमन्त्रेषु श्रूयमाणमाग्नीध्रसंबोधनं मध्यमपुरुषश्चान्येन तदनुष्ठाने सत्युपपद्यते । तस्मात्—नाऽऽध्वर्यवम् ॥ १८ ॥

(त्रयोदशे प्रैषमन्त्राणामाध्वर्यवत्वाधिकरणे सूत्रे २३–२४ ) ।

अध्वर्युस्तु दर्शनात् ॥ २३ ॥ गौणो वा कर्मसामान्यात् ॥ २४ ॥

त्रयोदशाधिकरणमारचयति—

अग्नीत्प्रैष्येद्वुताध्वर्युरग्नीदस्त्वविरोधतः ।
आख्याविरोधादध्वर्युः प्रैषद्वाराऽर्थकृत्वतः ॥ १९ ॥

यथा प्रोक्षणीराग्नीध्र आसादयति, तथा प्रैषमन्त्रानप्याग्नीध्र एव पठतु । विरोधाभावात्—इति चेत् ।

नैवम् । आध्वर्यवसमाख्यायाः पूर्वोदाहृतसंबोधनमध्यमपुरुषयोश्च विरोधात् । न च—प्रोक्षण्यासादनादीनामध्वर्युकर्तृकत्वाभावेऽपि समाख्याविरोधस्तदवस्थः—इति वाच्यम् । प्रैषद्वारा प्रयोजककर्तृत्वेऽपि तदविरोधात् । तस्मात्—अध्वर्योरेव प्रैषमन्त्रः ॥ १९ ॥

---

१ क. ख. ङ. °षु श्रू° । २ ख. °ग्नीदेव । ३ क. ख. °त्वस° । ४ क. °कर्तृता° । ५ ख. °कर्तृकत्वे°ऽ ।

( चतुर्दशे- { करणमन्त्रेषु स्वामिफलस्याऽऽशासितव्यताधिकरणे (वर्चोन्याये) } —सूत्राणि २५-२७)।

**आर्त्विक्फलं करणेष्वर्थवत्त्वात् ॥ २५ ॥ स्वामिनो वा तदर्थत्वात् ॥ २६ ॥ लिङ्गदर्शनाच्च ॥ २७ ॥**

चतुर्दशाधिकरणमारचयति—

**ममाग्न इति कस्याग्र फलं लिङ्गेन वक्तृगम् ।**
**श्रुत्या स्वामिनि न क्रीते लिङ्गं तत्रोपचर्यताम् ॥ २० ॥**

'ममाग्ने वर्चो विहवेष्वस्तु' इत्ययमाहवनीयस्यान्वाधाने करणभूतो मन्त्रोऽध्वर्युणा पठ्यते । 'विशिष्टं हवनं येषां यज्ञानां ते विहवास्तेषु वर्चस्तेजसोपलक्षितं यत्फलं तन्ममास्तु' इत्यनेन लिङ्गेन मन्त्रमुच्चारयितुरध्वर्योस्तत्फलम्-इति चेत् ।

नैवम् । 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' इत्यात्मनेपदश्रुत्या साङ्गप्रधानफलस्य यजमानगामित्वं प्रतीयते । न च परिक्रीतस्याध्वर्योर्दक्षिणातिरिक्तफलसंबन्धो न्याय्यः । तस्मात्—श्रुतिन्यायाभ्यां विरुद्धं तल्लिङ्गं यजमानपरत्वेनोपचरणीयम् । 'मदीययजमानस्य तद्वर्चोऽस्तु' इति ह्युपचारः । तस्मात्—यजमानेन पाठ्येषु 'आयुर्दा अग्नेऽस्यायुर्मे देहि' इत्यादिषु क्रियमाणानुवादिषु प्रत्यगाशीर्मन्त्रेषु श्रुतं फलं यथा याजमानम्, तथैवाध्वर्युणा पाठ्येषु करणमन्त्रेषु श्रुतमपि फलं याजमानमेव ॥ २० ॥

( पञ्चदशे करणमन्त्रेषु कर्मार्थफलस्यर्त्विग्धर्मताधिकरणे सूत्रम्- )।

**कर्मार्थं तु फलं तेषां स्वामिनं प्रत्यर्थवत्त्वात् ॥ २८ ॥**

पञ्चदशाधिकरणमारचयति—

**मा मा संताप्तमित्येतत्कस्मिन्स्वामिनि पूर्ववत् ।**
**अध्वर्यावस्तु तत्तेन स्वामिकर्मोपयोगतः ॥ २१ ॥**

दर्शपूर्णमासयोराघारहोमार्थमाज्यपूर्णौ स्रुक्स्रुवौ गृहीत्वा नाभिसमीपे हस्तेन धारयति । तत्रायं करणमन्त्रोऽध्वर्युणा पठ्यते—'अग्नाविष्णू मा वामवक्रमिषं विजिहाथां मा मा संताप्तं लोकं मे लोककृतौ कृणुतम्' इति । 'भो स्रुक्स्रुवरूपावग्नाविष्णू युवां नाभिदेशे धारयन्नहमध्वर्युर्मा वामवक्रमिषं युवयोरतिक्रमं न कृतवानास्मि । युवां च मत्तो वियुक्तौ मा भवतम् । ततो मां देहधारिणं मा संताप्तं मम देहे संतापं ज्वरादिरूपं मा कुरुतम् । स्थानकृतौ युवामाघारहोमाय स्थानं कुरुतम्'

१ ग. च. लिङ्गं । २ ग. च. इत्युप° । ३ ख. तत्त्वेन । ४ क. ख. ङ °पूर्णे स्रु° । ५ क. ख. °क्तौ भ° । ६ ग. च. मद्देहे ।

इत्यर्थः। तत्र पूर्वोक्तवर्चोन्यायेन संतापाभावोऽपि यजमानस्यैव,न त्वध्वर्योः—इति चेत्।

मैवम्। अध्वर्यावसंतप्ते सत्यविघ्नेन स्वामिनः कर्म समाप्यते। तस्मात्—अध्वर्युगतोऽपि संतापाभावो यजमानस्यैव फलम्—इति नाम मच्छब्दस्योपचारः॥२१॥

( षोडशे भद्रमित्यस्योभयगामिताधिकरणे सूत्रम्— )।

व्यपदेशाच्च ॥ २९ ॥

षोडशाधिकरणमारचयति—

भद्रं तन्नौ सहेत्येतत्कस्मिन्स्वामिनि युज्यते।
द्वित्वश्रुत्या द्वयोरेतदध्वर्युयजमानयोः ॥ २२ ॥

ज्योतिष्टोमे हविर्धानमण्डपे सोमाभिषवाधारयोः फलकयोरधस्तात्खातुष्वाग्नेय्यादिविदिक्षु चत्वार उपरवनामका गर्ता अरत्निमात्रखाता अधोभागे परस्परं मिलिता ऊर्ध्वभागे परस्परं प्रादेशमात्रव्यवहिता वर्तन्ते। तेष्वेकस्मिन्नुपरवे यजमानो दक्षिणहस्तं प्रसारयति, तथैवाध्वर्युरन्यस्मिन्स्वहस्तं प्रसार्याधस्ताद्यजमानहस्तं गृह्णाति। तदा यजमानः 'किमत्र' इत्यनेन मन्त्रेण फलं पृच्छति। अध्वर्युश्च 'भद्रम्—' इत्यनेन मन्त्रेणोत्तरं ब्रूते। ततो यजमानः 'तन्नौ सह—'इत्यनेन मन्त्रेण तत्फलं स्वकीयत्वेन स्वी करोति। तस्मात्—यजमानस्यैव तत्—इति चेत्।

मैवम्। 'नौ' इत्यनेन द्विवचनेन, 'सह' इत्यनेन चोभयगामितयैव स्वीकारात्॥२२॥

(सप्तदशे द्रव्यसंस्कारस्याङ्गप्रधानार्थताधिकरणे सूत्रे—३०—३१)।

द्रव्यसंस्कारः प्रकरणाविशेषात्सर्वकर्मणाम् ॥ ३० ॥
निर्देशात्तु विकृतावपूर्वस्यानधिकारः ॥ ३१ ॥

सप्तदशाधिकरणमारचयति—

धर्माणां प्रकृतिस्थानां विकृतावतिदेशतः।
प्राप्तिर्विशेषतो वाऽऽद्यो विशेषस्यानिरूपणात् ॥ २३ ॥
प्रकृतौ कार्यकृद्धर्मा विकृतौ स्युर्न चेतरे।
यूपावटास्तृतिः कार्यं न हि प्राकृतबर्हिषः ॥ २४ ॥

दर्शपूर्णमासयोर्वेदिधर्मा बर्हिर्धर्माश्च हविरासादनादयोऽङ्गप्रधानार्था इति पूर्वत्र

---

१ घ. च. °व, नाध्वर्योः। २ क. ख. ग. च. छ. °मेवादि°। ३ क. ख. °स्यैतद्। ४ क. ख. छ. °अविशेषतः। ५ ग. च. °र्मा हविरासादनादयो बर्हिर्धर्माश्चाङ्ग°।

निर्णीतम् । ते च धर्मा विकृतावतिदिश्यमाना नियामकाभावात्सर्वेऽप्यतिदिश्येरन्नाम्–इति प्राप्ते,–

ब्रूमः–कार्यमत्र नियामकम् । प्रकृतौ हि हविरासादनं वेदिकार्यम् । तच्च विकृतावपि प्राप्यमाणं सर्वसिद्धये खननादीन्वेदिधर्मान्प्रापयति । यूपावटास्तरणरूपं तु कार्यं न प्रकृतावस्ति । दर्शपूर्णमासयोर्यूपावटाभावात् । तस्याऽऽस्तरणकार्यं विकृतौ विधीयमानमप्यप्राकृतकार्यतया प्राकृताँल्लवनादीन्बर्हिःसंस्कारान्न प्रापयति । तस्मात्प्रकृतिगताः कार्यकृद्धर्मा एव विकृतौ प्राप्यन्ते ॥ २३ ॥ २४ ॥

( अष्टादशे पवित्रस्य परिभोजनीयबर्हिषा कर्तव्यताधिकरणे सूत्रम्)।

विरोधे च श्रुतिविशेषादव्यक्तः शेषे ॥ ३२ ॥

अष्टादशाधिकरणमारचयति–

यद्बर्हिस्तत्पवित्रार्थं न वाऽऽद्यस्तस्य संभवात् ।
संस्कृतं स्तरणे क्षीणं पावित्रं त्वन्यतो भवेत् ॥ २५ ॥

दर्शपूर्णमासयोरामनन्ति–'समावप्रच्छिन्नाग्रौ दर्भौ प्रादेशमात्रौ पवित्रे करोति' इति । तत्र–यदेतद्वेदिस्तरणार्थं लवनसंस्कृतं बर्हिः, तेन पवित्रसंभवादास्तरणवत्पवित्रमपि बर्हिषः कार्यम्–इति चेत् ।

नैवम् । आस्तरण एव संस्कृतस्य सर्वस्य बर्हिष उपक्षीणत्वात् । न हि 'वेदिं स्तृणाति' इति विहितस्य स्तरणस्याकस्माद्बर्हिरेकदेशे संकोचो युक्तः । तस्मात्–यथा यूपावटमसंस्कृतेन बर्हिषा स्तृणाति, तथा पवित्रनिष्पत्तिरपि शाखाप्रलवनादिसंस्काररहितैः परिभोजनीयनामकैर्दर्भैः संपादनीया ॥ २५ ॥

( एकोनविंशे प्राकृतपुरोडाशादीनां निधानाधिकरणे सूत्रम् )।

अपनयस्त्वेकदेशस्य विद्यमानसंयोगात् ॥ ३३ ॥

एकोनविंशाधिकरणमारचयति–

पुरोडाशस्य शकलमैन्द्रवायवपात्रके ।
अवदध्यात्पुरोडाशो नवोऽथ सवनीयकः ॥ २६ ॥
सिद्धस्य यजनार्थत्वान्नवं संपाद्य तत्क्रिया ।
सवनीयेन तत्कार्यं संस्कार्यत्वाद्द्वितीयया ॥ २७ ॥

---

१ ख. प्रसिद्धये । २ ख. ग. तच्च स्त° । ३ ग. च. हि 'बर्हिषा वे° । ४ ग. च. °तस्याऽऽस्त° । ५ क. ख. °हितेषु परिभोजनीयनामकेषु दर्भेषु सं° । ६ ग.च. सवनीयाः ।

ज्योतिष्टोमे श्रूयते—'पुरोडाशशकलमैन्द्रवायवस्य पात्रे निदधाति' इति। तत्र—सवनीयपुरोडाशस्य शकलं यद्यपि निष्पन्नम्, तथाऽपि तस्य यजनार्थत्वेन संस्कृतबर्हिर्वदुपक्षयाभूतनं कंचित्पुरोडाशं संपाद्य तदीयशकलस्यैन्द्रवायवपात्रप्रक्षेपक्रिया कर्तव्या—इति चेत्।

मैवम्। सवनीयपुरोडाशशकलेनैतन्निधानं कर्तव्यम्। कुतः। संस्कार्यत्वात्। 'शकलं निदधाति' इति द्वितीयया संस्कार्यत्वं गम्यते। इष्टशिष्टस्य हि प्रतिपत्तिरूपः संस्कारः। न चात्र कृत्स्नं यजनार्थम्। अवदानस्यैयत्तया पुरोडाशभागस्यावशेषितत्वात्। यथाऽत्र पूर्वसिद्धपुरोडाशशकलम्, तथा 'धाना आश्विनपात्रे' 'पयस्यां मैत्रावरुणपात्रे' इत्यत्रापि पूर्वशेषस्यैव प्रक्षेपः ॥२६॥ २७॥

( विंशे काम्येष्टिषूपांशुत्वधर्मस्य प्रधानार्थताधिकरणे सूत्रे—३४-३५)।

विकृतौ सर्वार्थः शेषः प्रकृतित्वात् ॥ ३४ ॥

मुख्यार्थो वाऽङ्गस्याचोदितत्वात् ॥ ३५ ॥

विंशाधिकरणमारचयति—

काम्या उपांशु यष्टव्याः किं तदङ्गप्रधानयोः।
प्रधान एव वा नात्र विशेषोक्तिरतो द्वयोः ॥ २८ ॥
मुख्यानामेव काम्यत्वात्तेष्वेव परिचोदना।
अङ्गानामतथाभावादुपांशुत्वं प्रधानगम् ॥ २९ ॥

इदमाम्नायते—'यज्ञाथर्वणं वै काम्या इष्टयः, ता उपांशु यष्टव्याः' इति। अथर्ववेदोक्तकर्मवद्यज्ञेषु काम्या इष्टयो गोप्याः। तस्मात्तासामुपांशुत्वं युक्तमित्यर्थः। यथा वेदिधर्माणां बर्हिर्धर्माणां चाङ्गप्रधानयोः समानो विधिः, तथोपांशुत्वस्यापि। नह्यत्र कश्चिद्विशेष आम्नातः—इति चेत्।

मैवम्। काम्यत्वस्यैवात्र विशेषनियामकत्वात्। न त्वङ्गानां काम्यत्वमस्ति। करणपौष्कल्यसंपादकानां तेषां फले साक्षात्संबन्धाभावात्। ततः—साक्षात्फलसाधने प्रधान एवोपांशुत्वम्। अङ्गेषु तु तत्तद्वेदानुसारेण ध्वनिविशेषः॥२८॥२९॥

---

१ ग. च. °वपा°। २ ख. संस्थात°। ३ छ. °लेन संनिधा°। ४ छ. निदध्यात्। ५ ग. च. इष्टिशि°। ६ क. °शस्य शेषित्वात्। ७ ग. च. °णस्य पा°। ८ क. °नियमात्। ९ क. ख. न ह्यङ्गानां। १० क. °वन ए°।

( एकविंशे श्येनाङ्गानां नवनीताज्यताधिकरणे सूत्राणि ३६-३८ ) ।

संनिधानविशेषादसंभवे तदङ्गानाम् ॥ ३६ ॥

आधानेऽपि तथेति चेत् ॥ ३७ ॥ नाप्रकरण-

त्वादङ्गस्य तन्निमित्तत्वात् ॥ ३८ ॥

एकविंशाधिकरणमारचयति—

नवनीतं श्येन आज्यं मुख्येऽङ्गे वाऽस्तु मुख्यगम् ।

विधेयमाज्यमप्राप्तं दृतिस्थमवनीतकम् ॥ ३० ॥

मुख्यः सोमविकारोऽङ्गे चोदकप्राप्तमाज्यकम् ।

अनूद्य दृतिसंस्थानं नवनीतगुणो विधिः ॥ ३१ ॥

श्येने श्रूयते—'दृतिनवनीतमाज्यं भवति' इति । दृतौ चिरं संगृहीतं नवनीतं यस्याऽऽज्यस्य प्रकृतिद्रव्यं तदेतदीदृशमाज्यं मानान्तरेण पूर्वमप्राप्तत्वात्प्रधानकर्मणि विधेयम्—इति चेत् ।

नैवम् । प्रधानश्येनस्य सोमयागविकारत्वेनाऽऽज्यापेक्षाया अभावात् । अङ्गेष्विष्टिविशेषेषु चोदकप्राप्तस्याऽऽज्यस्य प्रकृतिद्रव्यत्वेन यथोक्तनवनीतगुणो विधीयते ॥ ३० ॥ ३१ ॥

(द्वाविंशे सर्वश्येनाङ्गानां नवनीताज्यताधिकरणे सूत्राणि ३९-४१) ।

तत्काले वा लिङ्गदर्शनात् ॥ ३९ ॥ सर्वेषां वाऽविशे-

षात् ॥ ४० ॥ न्यायोक्ते लिङ्गदर्शनम् ॥ ४१ ॥

द्वाविंशाधिकरणमारचयति—

सुत्याकालगताङ्गेषु गुणः सर्वेषु वोदितः ।

आद्यो वैशेषिकाङ्गत्वाद्वाक्यात्सर्वाङ्गसंगतिः ॥ ३२ ॥

योऽयं श्येनस्याङ्गेषु दृतिनवनीतत्वगुणो विहितः सोऽयं सुत्याकालीनेष्वेव सवनीयपशुतत्पुरोडाशरूपेष्वङ्गेषु, न तु कालान्तरवर्तिदीक्षणीयाद्यङ्गेषु । विमतो गुणः सुत्याकालीनाङ्गमात्रगः, श्येनवैशेषिकत्वात्, पशुसाहित्यवत् । यथा 'सह पशूनालभते' इति विहितं पशुसाहित्यं श्येन एव विशेषत्वेनोच्यमानं सुत्याकालीनेष्वेव सवनीयपशुष्ववस्थितम्, तथा--नवनीतमपि--इति प्राप्ते--

१ ख. ग. च. छ. °तिस्थं न° । २ ग. च. °गुणो वि° । ३ छ. चिरसं° । ४ ख. ग. च. °नस्य श्ये° । ५ ग. च. °थोक्तं नवनीतं गु° । ६ ख. छ. चोदितः । ७ ग. च. °तगु° । ८ ख. न का° । ९ ख. ग. च. °ङ्गगतः, श्ये° ।

ब्रूमः--‘ यदाज्यं तद्घृतिनवनीतम् ’ इतिवाक्येन सर्वाङ्गत्वाप्यविषयत्वमती-तावनुमानं कालात्ययापदिष्टम् । तस्मात्--सर्वेष्वङ्गेषु तन्नवनीतम् ॥३२॥

( त्रयोविंशे सवनीयानां मांसमयताधिकरणे सूत्राणि ४२–४४ ) ।

मांसं तु सवनीयानां चोदनाविशेषात् ॥ ४२ ॥
भक्तिरसंनिधानान्याय्येति चेत् ॥ ४३ ॥ स्यात्प्र-
कृतिलिङ्गाद्वैराजवत् ॥ ४४ ॥

त्रयोविंशाधिकरणमारचयति–

शाक्यायने पुरोडाशास्तरसा इति मांसता ।
सर्वत्र सवनीये वा सर्वत्र नवनीतवत् ॥ ३३ ॥
तरसाः सवनीयाः स्युरिति तत्संनिधिः श्रुतः ।
पुरोडाशस्य मांसत्वं तेष्वेवातो नियम्यते ॥ ३४ ॥

षड्विंशात्तु संवत्सरेष्वनुष्ठेयं शाक्यायनम् । तत्र श्रूयते--संस्थितेऽहनि गृहप-तिर्मृगयां याति, स यान्मृगान्हन्ति, तेषां तरसाः सवनीयाः पुरोडाशा भवन्ति ’ इति । तत्र--यथा नवनीतं सर्वेष्वङ्गेषु निविष्टम्, तथा मांसत्वमपि सर्वेषु पुरो-डाशेषु निविशते--इति चेत् ।

नैवम् । तदा हि ‘ ये पुरोडाशास्ते तरसाः ’ इति वचनव्यक्तौ व्यवहिता-न्वयः स्यात् । तरसशब्दपुरोडाशशब्दयोर्मध्ये सवनीयशब्देन व्यवधानात् । इह तु ‘तरसाः सवनीयाः’ इत्यनयोः संनिधिः श्रूयते । तथा सति ‘ ये सवनी-यास्ते तरसाः ’ इत्यनेन संनिध्यनुगृहीतेन वाक्येन मांसत्वं सवनीयपुरोडाशेष्वेव नियम्यते ॥ ३३ ॥ ३४ ॥

इति श्रीमाधवीये जैमिनीयन्यायमालाविस्तरे तृतीया-ध्यायस्याष्टमः पादः ॥ ८ ॥

समाप्तश्चायं तृतीयोऽध्यायः ॥

| | अत्र पादे | आदितः । |
|---|---|---|
| अधिकरणानि | २३ | २४६ । |
| सूत्राणि | ४४ | ६५७ । |

१ ग. घ. छ. ‘क्यानामय’ । २ क. तारसाः ।

( अथ चतुर्थाध्यायस्य प्रथमः पादः ) ।

शेषशेषित्वसिद्धौ किं प्रयोज्यं किं प्रयोजकम् ।
इत्यपेक्षोदयाद्वक्ति चतुर्थे तत्प्रयुक्तये ॥ १ ॥

अनेन तृतीय-चतुर्थयोरध्याययोः पूर्वोत्तरभाव उपपादितः ॥१॥

( प्रथमे प्रतिज्ञाधिकरणे सूत्रम्- ) ।

अथातः क्रत्वर्थपुरुषार्थयोर्जिज्ञासा ॥ १ ॥

चतुर्थाध्यायस्य प्रथमपादे प्रथमाधिकरणमारचयति-

चिन्ता न कार्या कार्या वा क्रत्वर्थपुरुषार्थयोः ।
अफलत्वान्न कर्तव्या प्रयुक्तौक्रियतामियम् ॥ २ ॥
क्वचिदेतद्विचारेण क्वचित्फलविधेर्वशात् ।
क्वचित्साक्षादिहाध्याये प्रयुक्तिर्बहुधोच्यते ॥ ३ ॥

'क्रत्वर्थोऽयम्, पुरुषार्थोऽयम्' इति विवेकस्य प्रयोजनं किमपि न पश्यामः । तस्मात्--काकदन्तविचारवदयं विचार उपेक्षणीयः--इति चेत् ।

मैवम् । तेन विचारेण प्रयुक्तेर्ज्ञातुं शक्यत्वात् । साक्षाद्वा परम्परया वा प्रयुक्तिनिर्णयोपयुक्तं सर्वमिह चिन्तनीयम् ॥ २ ॥ ३ ॥

( द्वितीये क्रत्वर्थपुरुषार्थलक्षणाधिकरणे सूत्रम्- ) ।

यस्मिन्प्रीतिः पुरुषस्य तस्य लिप्सार्थलक्षणा-
विभक्तत्वात् ॥ २ ॥

द्वितीयाधिकरणे प्रथमवर्णकमारचयति-

क्रत्वर्थादेर्नास्ति वाऽस्ति लक्ष्म नास्त्यनिरूपणात् ।
क्रतवे यस्तदर्थोऽसाविति तस्य निरूपणम् ॥ ४ ॥

'क्रतावनुष्ठेयः क्रत्वर्थः' इत्युक्ते गोदोहनादावतिव्याप्तिः । 'पुरुषेणानुष्ठीयमानः पुरुषार्थः' इत्युक्ते प्रयाजादीनामप्यनुष्ठेयतया पुरुषेणानुष्ठीयमानत्वादतिव्याप्तिः । तस्मात्-तयोरदुष्टं लक्षणं दुर्निरूपम्-इति चेत् ।

मैवम् । क्रतुस्वरूपपौष्कल्यायैव यो विधीयते स क्रत्वर्थः । प्रयाजादयस्तादृशाः । नहि प्रयाजादिभिः पुरुषस्य कश्चित्प्रीतिविशेष उत्पद्यते, येनैते पुरुषार्थाः

१ ख. ग. च. छ. °यादुक्तिश्चतु° । २ ग. छ. °मिति ॥ २ ॥ क° । ३ ग. च. °नुष्ठेय ।

भवेयुः। दर्शपूर्णमासक्रतुस्तु तैः प्रयाजादिभिः फलजननसामर्थ्यलक्षणं पौष्कल्यं प्राप्नोति। तस्मात्—ते क्रत्वर्थाः।

पुरुषप्रीतये विधीयमानः पुरुषार्थः। दर्शपूर्णमासादयो गोदोहनादयश्च तादृशाः। न हि दर्शपूर्णमासाभ्यां कस्यचित्क्रतोः पौष्कल्यं भवति। तयोरेव क्रतुत्वात्। नापि गोदोहनं क्रत्वर्थम्। तदभावेऽपि चमसेन क्रतुपौष्कल्यसिद्धेः। तस्मात्—सुनिरूपणं तदुभयलक्षणम् ॥ ४ ॥

द्वितीयवर्णकमारचयति—

फलं विधेयं नो वाऽऽद्यो भावनांशत्वतोऽन्यवत्।
न भाव्यांशो विधेयः स्याद्रागात्तत्र प्रवर्तनात् ॥ ५ ॥

'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' इति स्वर्गः फलत्वेन श्रूयते। तत्र—विमतं फलं विधेयम्, भावनांशत्वात्, करणवत्, इतिकर्तव्यतावच्च—इति चेत्।

मैवम्। अप्रवृत्तप्रवर्तनं हि विधानम्। फलं तु पुरुषः सौन्दर्यं कामिन्यामिव रागादेव प्रवृत्तः—इति व्यर्थस्तत्र विधिः ॥ ५ ॥

तृतीयवर्णकमारचयति—

गोदोहनं क्रत्वर्थं स्यान्न वा भानाद्द्रव्यार्थता।
अन्यथाऽपि क्रतोः सिद्धेः केवलं पुरुषाय तत् ॥ ६ ॥

दर्शपूर्णमासयोः श्रूयते—'चमसेनापः प्रणयेद्गोदोहनेन पशुकामस्य' इति। तत्र—गोदोहनस्य क्रत्वर्थत्वं पुरुषार्थत्वं च, इत्याकारद्वयमस्ति पशुफलजननेन पुरुषप्रीतिर्भाति, अपां प्रणयनेन क्रतुपौष्कल्यमपि भाति—इति चेत्।

मैवम्। गोदोहनमन्तरेण फलासिद्धेर्भवतु पुरुषार्थत्वम्। क्रतुस्तु तदभावेऽपि चमसेन सिध्यतीति न क्रत्वर्थता ॥ ६ ॥

चतुर्थवर्णकमारचयति—

द्रव्यार्जनं स्यात्क्रत्वर्थं पुमर्थं वा क्रताविदम्।
नियतत्वात्पुमर्थत्वं दृष्टं क्रत्वर्थताऽऽर्थिकी ॥ ७ ॥

ब्राह्मणस्य द्रव्यार्जने प्रतिग्रहयाजनाध्यापनान्येव नियतानि तत्र तत्र श्रुतानि, राजन्यस्य जयादिकम्, वैश्यस्य कृष्यादिकम्, शूद्रस्य सेवादिकम्। तच्च यदेतैर्द्रव्यसंपादनं तदेतत्क्रत्वर्थम्। कुतः। अर्जनोपायानां नियतत्वात्। पुरुषप्रीतिस्तु येन केनापि द्रव्येण सिद्धत्वादर्जनोपायनियमस्तत्र निरर्थकः। क्रतौ तु नियमापूर्वं परमापूर्वोपयोगीति सार्थको नियमः—इति प्राप्ते।

१ क. °क्षणपौ°। २ क. ख. ग. च. °र्थः प्रधा—द्°। ३ ग. च. °नन्तरागा°। ४ ख. ग. च. °नकत्वेन। छ. °मने पु°। ५ क. °तुस्तद°। ६ ग. च. °तदेवं द्रव्य°।

ब्रूमः—द्रव्यार्जने रागः प्रवर्तको दृष्ट इति न विधिरपेक्ष्यते। फलं च कुक्षिपूरणादिरूपं दृष्टमेव। अत एव स्मर्यते—

'षण्णां तु कर्मणामस्य त्रीणि कर्माणि जीविका।
याजनाध्यापने चैव विशुद्धाच्च प्रतिग्रहः॥' इति।

क्रत्वर्थत्वे तु जीवनाभावात्क्रतुरेव न सिध्येत्। पुरुषार्थतायां त्वैहिकप्रीतिकारिभोजनादिवत्क्रतोरामुष्मिकप्रीतिकारितया पुरुषार्थेष्वन्तर्भावात्क्रत्वर्थताऽप्यार्थिकी सिध्यति। उपायनियमस्तूपायान्तरेषु प्रत्यवायविशेषायोपपद्यते। तस्मात्—द्रव्यार्जनं पुरुषार्थम्॥ ७॥

( तृतीये प्रजापतिव्रतानां पुरुषार्थताधिकरणे सूत्राणि ३–६ )।

तदुत्सर्गे कर्माणि पुरुषार्थाय, शास्त्रस्यानतिशङ्क्यत्वान्न च द्रव्यं चिकीर्ष्यते तेनार्थेनाभिसंबन्धात्क्रियायां पुरुषश्रुतिः ॥३॥ अविशेषात्तु शास्त्रस्य यथाश्रुतिफलानि स्युः॥४॥ अपि वा कारणाग्रहणे तदर्थमर्थस्यानभिसंबन्धात् ॥५॥ तथा च लोकभूतेषु ॥ ६ ॥

तृतीयाधिकरणमारचयति—

नेक्षेतोद्यन्तमादित्यं क्रत्वर्थं तत्र वाऽग्रिमः।
फलस्याकल्पनीयत्वात्क्रतौ प्राप्तं निषिध्यते ॥ ८ ॥
व्रतोक्त्या पर्युदासत्वे संकल्पोऽनीक्षणेऽत्र सः।
न क्रत्वङ्गत्वमानत्वात्पुमर्थः पापहानये ॥ ९ ॥

अनारभ्य श्रूयते—'नेक्षेतोद्यन्तमादित्यं नास्तं यन्तं कदाचन' इति। अत्र नञ्पदमभिधावृत्त्या प्रतिषेधं ब्रूते, न तु पर्युदासम्। प्रतिषेधश्च प्राप्तिपूर्वकः। प्राप्तिश्च वैदिकस्य निषेधस्य वैदिकी प्रत्यासन्ना। तथा सति क्रतौ यत्राऽऽदित्येक्षणं विहितम्, तत्रायं निषेध उदयास्तमयोद्देशेन प्रवर्तते। एवं च सति फलं न कल्पनीयम्। पर्युदासमाश्रित्य पुरुषार्थत्वाङ्गीकारेऽधिकारसिद्धये फलं कल्पनीयं स्यात्। तस्मात्—क्रत्वर्थो निषेधः—इति प्राप्ते—

१ ख. °त्वे श्री°। २ ख. °क्रतो चाऽऽमु°। ३ ख. °रुपकार्येष्व°। ४ क. ख. °स्य. कुं वमा°। ५ ख. यान्तं। ६ ख. °प्रपत्वात्। त°।

ब्रूमः—'तस्य व्रतम्' इत्युपक्रम्य 'नेक्षेतोद्यन्तमादित्यम्' इत्याम्नातत्वा-दनीक्षणरूपं किंचिदनुष्ठेयम् । तच्च पर्युदासत्वे सत्यवकल्पते । ईक्षणस्याभावः प्रतिषेधपक्षे नञर्थः । पर्युदासपक्षे त्वीक्षणादितरः संकल्पो नञ्पदेन लक्ष्यते । स च संकल्पोऽनानुष्ठेयव्रतत्वेन विधीयते । यद्यपीक्षणादितरे बहवो व्यापारा अनुष्ठानयोग्याः सन्ति, तथाऽपि कायिकवाचिकव्यापारविशेषस्याप्रतीयमानत्वात्, मानसव्यापारस्यावर्जनीयत्वाच्च संकल्प एव परिशिष्यते । संकल्पनीयश्चार्थः प्रत्यासत्त्या धात्वर्थनिषेधः । तथा सति 'उद्यन्तम्, अस्तं यन्तं चाऽऽदित्यं नेक्षिष्ये' इत्येवंरूपः संकल्पोऽनानुष्ठेयत्वेन विधीयते । न च तस्य संकल्पस्य क्रत्वङ्गत्वम् । तद्बोधकश्रुतिलिङ्गादिप्रमाणाभावात् । न च पुरुषार्थत्वेऽपि प्रमाणाभावः । 'एतावता हैनसा मुक्तो भवति' इत्यनेन वाक्येनेक्षितुः पुरुषस्य प्रत्यवायसंबन्धमुपन्यस्य तत्प्रत्यवायनिवारणफलकस्यानीक्षणसंकल्पस्य विधानेन पुरुषार्थत्वावगमात् । क्रत्वङ्गत्वविवक्षायां तु क्रतुवैकल्यरूपो विपक्षबाध उपन्यस्येत । तस्मात्—अनीक्षणसंकल्पादीनि प्रजापतिव्रतानि पुरुषार्थानि ॥८॥९॥

( चतुर्थे यज्ञायुधानामनुवादताधिकरणे सूत्राणि ७—१० )॥

द्रव्याणि त्वविशेषेणाऽऽनर्थक्यात्प्रदीयेरन् ॥ ७ ॥
स्वेन त्वर्थेन संबन्धो द्रव्याणां पृथगर्थत्वात्,
तस्माद्यथाश्रुति स्युः ॥ ८ ॥ चोद्यन्ते चार्थक-
र्मसु ॥ ९ ॥ लिङ्गदर्शनाच्च ॥ १० ॥

चतुर्थाधिकरणमारचयति—

दश यज्ञायुधानीति हविष्ट्वेन विधिर्न वा ।
आद्योऽप्राप्तेः पुरोडाशे समुच्चयविकल्पने ॥ १० ॥
सार्थमुत्पत्तिशिष्टेन विकल्पादिर्न युज्यते ।
स्फ्येनोद्धन्तीति यत्प्राप्तं तदत्रानूद्य संस्तवः ॥ ११ ॥

दर्शपूर्णमासयोः—'स्फ्यश्च कपालानि च—' इत्याद्युपक्रम्य 'एतानि वै दश यज्ञायुधानि' इत्याम्नातम् । तानि चात्र हविष्ट्वेन विधीयन्ते । कुतः । मानान्तरैरप्राप्तत्वेनापूर्वार्थत्वात् । यदि तत्र पुरोडाशो हविर्भवेत्, तदा तेन सहैतेषां समुच्चयो विकल्पो वाऽस्तु—इति प्राप्ते, ।

---

१ क. ख. ङ. °न्तमित्याम्ना° । २ ख. °रे व्या° । ३ ग. च. °रव° । ४ ग. च. °न पुरुषा° । ५ ख. °कल्पकस्या° । ६ ख. ग. च. आद्यः प्राप्ते पु° । ७ क. °नि इ° । ८ ख. ग. च. ङ. °न्तराप्रा° ।

ब्रूमः—'आग्नेयोऽष्टाकपालः' इत्युत्पत्तिशिष्टेन पुरोडाशेन सह पश्चाच्छ्रुतानामायुधानां विकल्पः समुच्चयो वा न संभवति । आयुधत्वं यज्ञसाधनत्वम् । तच्च 'स्फ्येनोद्धन्ति, कपालेषु श्रपयति' इत्यादिशास्त्रसिद्धमेवात्रानूद्य 'यज्ञायुधानि संभरति' इत्येष संभरणविधिः स्तूयते।तस्मात्—नास्ति हविष्ट्वम् ॥१०॥११॥

( पञ्चमे पश्वेकत्वाधिकरणे सूत्राणि ११–१६ )।

तत्रैकत्वमयज्ञाङ्गमर्थस्य गुणभूतत्वात् ॥ ११ ॥
एकश्रुतित्वाच्च ॥ १२ ॥ प्रतीयत इति चेत् ॥१३॥
नाशब्दं तत्प्रमाणत्वात्पूर्ववत् ॥ १४ ॥ शब्दवत्तूपलभ्यते, तदागमे हि तद्दृश्यते तस्य ज्ञानं हि यथाऽन्येषाम् ॥१५॥ तद्वच्च लिङ्गदर्शनम् ॥१६॥

पञ्चमाधिकरणमारचयति—

पशुरालभ्य इत्यत्र पश्वैक्ये यजनाङ्गता ।
नास्त्यस्ति वाऽऽद्यः स्वपदे श्रुत्या पश्वङ्गतागतेः ॥१२॥
आदौ स्वप्रत्ययोपात्त आसन्नतरकारके ।
योगः क्रतौ पशौ चेति क्रमे यागाङ्गतोचिता ॥ १३ ॥

'अग्नीषोमीयं पशुमालभेत' इत्यत्र पशोरेकत्वं यजनाङ्गं[1] न भवति । तस्य श्रुत्या पशुसंबन्धावगमात् । 'पशुम्' इत्येतस्मिन्नेव पदे पशुतदेकत्वयोः श्रवणात्पदान्तरनैरपेक्ष्येण परस्परसंबन्धोऽवगम्यते । यागस्तु 'आलभेत' इत्यनेन पदान्तरेणोपात्तः । तत्र वाक्येन संबन्धावगतिः । वाक्याच्च श्रुतिर्बलीयसी । तत एकत्वस्य यागाङ्गत्वाभावाद्द्वाभ्यां[2] बहुभिर्वा यागोऽनुष्ठातुं शक्यते—इति प्राप्ते,

ब्रूमः—'पशुम्' इति पदं यद्यप्येकम्, तथाऽपि प्रकृत्या पशुर्निर्दिष्टः । प्रत्ययेन कारकत्वम्, एकत्वं[3] च, इत्युभयं निर्दिष्टम् । तत एकत्वस्याऽऽसन्नतरे कारके प्रथमं संबन्धो भवति। कारकत्वं नाम क्रियाहेतुत्वम्। तथा सति कारकद्वारा क्रियायामपि संबन्धः प्रत्ययेनैवावगतः । क्रियाविशेषश्च संनिहितपदान्तरोपात्तो याग इति[4] यजनाङ्गत्वमेकत्वस्य सिध्यति[5] । तच्चैकत्वं स्वयममूर्तत्वा यागक्रियां निष्पादयितुमसमर्थं[6] सत्तत्र समर्थं पशुद्रव्यं पश्चादवच्छिनत्ति । तत एकत्वस्य यागाङ्गत्वान्न द्वाभ्यां त्रिभिर्वा यागसिद्धिः ।

---

१ ख. यजनाङ्गं भ° । २ ख. °वाद्बुभाभ्यां । ३ ग. च. °रकमेकत्वं । ४ ग. च. °ति यागाङ्ग° । ५ ग. च. °ति । नन्वेक° । ६ ग. च. सत्तत्र । तत्र ।

एवम्—'अनड्वाहौ युनक्ति' 'वसन्ताय कपिञ्जलानालभते' इत्यत्र द्वित्वबहुत्वयोर्विवक्षितत्वं द्रष्टव्यम् ॥ १२ ॥ १३ ॥

( षष्ठे पशुलिङ्गविवक्षाधिकरणे सूत्रम्— )।

तथा च लिङ्गम् ॥ १७ ॥

षष्ठाधिकरणमारचयति—

न पुंलिङ्गे विवक्षा वा विवक्षाऽनुपयोगतः।
आद्योऽनुष्ठित्यपेक्षत्वात्संख्यावत्तद्विवक्ष्यताम् ॥ १४ ॥

'पशुमालभेत' इत्यत्र पशुपदे पुंलिङ्गमविवक्षितम्। कुतः। शब्दार्थविचारेऽनुष्ठानविचारे च तदुपयोगादर्शनात्। अलिङ्गेऽपि वृक्षपदार्थे पुंलिङ्गो वृक्षशब्दः प्रयुज्यते। तथा पुंव्यक्तावपि स्त्रीलिङ्गो मक्षिकाशब्दः प्रयुक्तः। ततो न लिङ्गस्य शब्दार्थत्वेन विवक्षाऽस्ति। अनुष्ठानमपि पुंव्यक्तिस्त्रीव्यक्त्योः समानम्। एकत्वावच्छिन्नपशुत्वे वैषम्याभावात्। तस्मात्—अविवक्षितं लिङ्गम्—इति प्राप्ते,—

ब्रूमः—यथा पशुत्वजातिः, यथा वा—तदेकत्वम्, वृद्धव्यवहारेऽन्वयव्यतिरेकाभ्यामनन्यथासिद्धाभ्यां शब्दार्थः, तथा लिङ्गस्यापि कुतः शब्दार्थता न स्यात्। वृक्षमक्षिकाशब्दयोस्तु न वयमर्थतः साधुतां ब्रूमः, किंत्वभियुक्तप्रयोगमात्रबलेन साधुत्वम्। न चानुष्ठाने साम्यम्। +पुंस्पशौ विशेषसद्भावात्। 'वाक्त आप्यायताम्' इत्यादिभिर्मन्त्रैस्तत्तदवयवानामाप्यायनकाले 'मेढ्रं त आप्यायताम्' इति मन्त्रेण तदवयवस्याऽऽप्यायनश्रवणात्। तस्मात्—एकत्ववत्पुंलिङ्गमपि विवक्षितम् ॥१४॥

( सप्तमे—आश्रयिणामदृष्टार्थताधिकरणे सूत्राणि १८—२० )।

आश्रयिष्वविशेषेण भावोऽर्थः प्रतीयेत ॥ १८ ॥
चोदनायां त्वनारम्भो विभक्तत्वान्न ह्यनेन विधीयते ॥१९॥ स्याद्वा द्रव्यचिकिर्षायां भावोऽर्थे च गुणभूतत्वादाश्रयाद्धि गुणीभावः ॥ २० ॥

सप्तमाधिकरणमारचयति—

स्विष्टकृत्संस्कृतौ क्षीण उतापूर्वोपयोग्यपि।
प्रयोजनैक्यमेकस्मिन्युक्तं कर्मण्यतः क्षयः ॥ १५ ॥

+ 'पुंपशो' इति पाठः सर्वत्रोपलभ्यमानोऽपि रत्नाकरणाद्दसंगतः।

१ ख. ग. च. छ. °कत्वं शब्दार्थः। एवं वृ°। २ ख. ग. च. छ. °भ्या° लि°। ३ ग, च. °ह्मनसा°। ४ ग. च. °यवस्याऽऽ°।

मन्त्रेण देवसंस्कारः प्रक्षेपाद्द्रव्यसंस्कृतिः ।
त्यागादपूर्वमुत्पन्नं प्रधानापूर्वगं च तत् ॥ १६ ॥

योऽयं स्विष्टकृद्यागः सोऽयमुपयुक्तहविःसंस्कारः—इत्यविवादम् । तत्र संस्कारस्य दृष्टप्रयोजनत्वेनावश्यंभावे सति तावतैवोपक्षीणः स्विष्टकृद्यागो नापूर्वस्योपकरोति । न ह्येकस्मिन्कर्मणि प्रयोजनद्वयं युक्तम्—इति प्राप्ते,—

ब्रूमः—कर्मण एकत्वेऽप्यंशभेदात्प्रयोजनभेदो न विरुध्यते । मन्त्रपाठः, द्रव्यप्रक्षेपः, देवतोद्देशेन त्यागश्च, इति त्रयोंऽशाः । तत्र त्यागेन परमापूर्वोपयुक्तमवान्तरापूर्वमुत्पद्यते । तस्मात्—स्विष्टकृदुभयार्थः । एवम्—अन्त्यप्रयाजपशुपुरोडाशावप्युदाहार्यौ ॥१५॥१६॥

( अष्टमे प्रयुक्तिविचारप्रतिज्ञाधिकरणे सूत्रम्— ) ।

अर्थे समवैषम्यतो द्रव्यकर्मणाम् ॥ २१ ॥

अष्टमाधिकरणमारचयति—

शेषत्वमुपरिग्रन्थे चिन्तनीयमुतेतरत् ।
शेषो मानान्न तस्यात्र प्रयुक्त्याख्यफलेरणात् ॥ १७ ॥

वक्ष्यमाणेष्वधिकरणेषु शेषत्वमेव चिन्ताविषयः । यथा—अतीतेष्वधिकरणेषु क्रतुशेषोऽयम्, पुरुषशेषोऽयम्, इति चिन्तितम्, तद्वत् । कुतः । उपरितनग्रन्थेन तत्र तत्र पर्णादीनां शेषत्वविचारस्य भासमानत्वात्—इति चेत् ।

मैवम् । शेषत्वस्य यत्प्रयुक्तिरूपं फलं तदेव प्राधान्येन विचार्यते । शेषत्वं तु तदुपयोगित्वेनेति न तद्विचारः प्रधानभूतः ॥ १७ ॥

( नवमे—आमिक्षाप्रयुक्तताधिकरणे ( वाजिनन्याये )
सूत्राणि २२—२४ ) ।

एकनिष्पत्तेः सर्वं समं स्यात् ॥ २२ ॥

संसर्गरसनिष्पत्तेरामिक्षा वा प्रधानं स्यात्
॥ २३ ॥ मुख्यशब्दाभिसंस्तवाच्च ॥ २४ ॥

नवमाधिकरणमारचयति—

आमिक्षा वाजिनं च स्याद्द्व्यानीतेः प्रयोजकम् ।
उताऽऽमिक्षैव सामर्थ्यं द्वयोस्तुल्यं ततोऽग्रिमः ॥ १८ ॥

---

१ क. °तिः । यागा° । २ ग. च. °व्यपक्षे आपः । ३ क. ग. च. °त । कस्या° भाना° । ४ क. पर्णतादीनां । ५ ख. ग. च. °ति न° ।

आमिक्षी पय एवात्र तच्छब्दान्मन्त्रतो रसात्।
प्रयोजिकैका प्राधान्यादनुनिष्पादि वाजिनम् ॥ १९ ॥

इदमाम्नायते—'तप्ते पयसि दध्यानयति सा वैश्वदेव्यामिक्षा वाजिभ्यो वाजिनम्' इति। तत्र—पयसि दधिप्रक्षेपादामिक्षाद्रव्यं यथा निष्पद्यते, तथा वाजिनद्रव्यमपि' इति दध्यानयनस्य जनकत्वसामर्थ्यमुभयद्रव्यविषयं तुल्यमेव। तस्मात्—उभयमपि प्रयोजकम्—इति प्राप्ते,—

ब्रूमः—'न द्रव्यान्तरमामिक्षा, किं तु पय एव' इति तच्छब्दादिभिरवगम्यते। 'यस्मिन्पयसि दधिप्रक्षेपः, साऽऽमिक्षा' इति तच्छब्देन पयः परामृश्यते। आमिक्षायागस्य पुरोनुवाक्यायामेवमाम्नातम्—'जुषन्तां युज्यं पयः' इति। पयोरसश्च मधुर आमिक्षायामनुवर्तते, न तु वाजिने। ततः—प्राधान्येन पयसो घनीभावावस्थां जनयितुं दध्यानीतम्—इत्यामिक्षैव प्रयोजिका। अनुनिष्पाद्येव वाजिनम्, न तु प्रयोजकम् ॥ १९ ॥

( दशमे गवानयनस्य पदकर्माप्रयुक्तताधिकरणे सूत्रम्— )

पदकर्माप्रयोजकं नयनस्य परार्थत्वात् ॥ २५ ॥

दशमाधिकरणमारचयति—

सोमक्रयण्यानयने पदकर्म प्रयोजकम्।
न वाऽऽद्योऽक्षाञ्जनस्यापि क्रयवत्संनिकर्षतः ॥ २० ॥
तृतीयया क्रयार्था गौस्तद्द्वाराऽऽनयनस्य च।
तादर्थ्याचत्प्रयुक्तं तत्र प्रयोजकता पदे ॥ २१ ॥

ज्योतिष्टोमे सोमक्रय आम्नायते—'एकहायन्या क्रीणाति' इति। सैवमेकहायनी गौर्यदा सोमं क्रेतुमानीयते, तदाऽध्वर्युस्तस्याः पृष्ठतोऽनुगच्छति। तदप्याम्नातम्—'षट्पदान्यनुनिष्क्रामति' इति। ततः सप्तमे पदे हिरण्यं निधाय हुत्वा तत्पदगतं रजो गृह्णीयात्। एतदपि श्रूयते—'सप्तमं पदमध्वर्युरञ्जलिना गृह्णाति' इति। तदेतद्रजः संगृह्य हविर्धानयोः शकटयोरक्षे तेन रजसा संयुक्तमञ्जनं प्रक्षिपेत्। एतदपि श्रुतम्—'यज्ञं वा एतत्संभरन्ति यत्सोमक्रयण्यै पदम्' इति प्रस्तुत्य 'यर्हि हविर्धाने प्राची प्रवर्तयेयुः, तर्हि तेनाक्षमुपाञ्ज्यात्' इति। तत्र यथा क्रयः संनिकृष्टः, तथैव पदकर्माण्यक्षाञ्जनं संनिकृष्टम्। अथोच्येत—दध्यानयनमामिक्षया यथा संयुक्तम्, न तथाऽक्षाञ्जनं सोमक्रयण्यानयनेन संयु-

१ ग. च. °रक्षने°। २ ख. ग. च. छ. सा वु°। ३ ख. प्राची। ४ ख. °र्माक्षा°। ग. च. °र्माण्याञ्ज°। ५ ग. च. °मिक्षायां य°। ६ ग. च. °ब, त।

कम्—इति । तन्न । क्रयेऽपि तदसंयोगस्य तुल्यत्वात् । अथ—असंयुक्तोऽपि क्रयो गवानयनेन निष्पद्यते ।—तर्ह्यक्षाञ्जनमपि तेन निष्पद्यते—इति समानत्वात् । क्रयवत्तदङ्गमपि सोमक्रयण्यानयनस्य प्रयोजकम्—इति प्राप्ते,—

ब्रूमः—'एकहायन्या क्रीणाति' इति तृतीयाश्रुत्या गोः क्रयार्थता गम्यते । गोद्वारा तदानयनमपि क्रयार्थमेवेति क्रय एवाऽऽनयने प्रयोजकः । न च चक्षुकर्मार्थत्वं गोर्वा तदानयनस्य वा क्वचिच्छ्रुतम् । तस्मात्—तदप्रयोजकम् ॥ २० ॥ २१ ॥

( एकादशे कपालानां तुषोपवापाप्रयुक्तताधिकरणे सूत्रम्— ) ।

अर्थाभिधानकर्म च भविष्यता संयोगस्य
तन्निमित्तत्वात्तदर्थो हि विधीयते ॥ २६ ॥

एकादशाधिकरणमारचयति—

श्रपणं तुषवापश्च कपालस्य प्रयोजकौ ।
उत श्रपणमेवाऽऽद्यो वापार्थत्वात्तृतीयया ॥ २२ ॥
पुरोडाशकपालेतिनाम्ना स्याच्छ्रपणार्थता ।
प्रयुक्तस्य प्रयुक्तिर्नो तस्य वापे प्रसञ्जनम् ॥ २३ ॥

'कपालेषु श्रपयति' इति श्रपणं पुरोडाशस्य श्रुतम् । तथा—'पुरोडाशकपालेन तुषानुपवपति' इति कपाले तुषधारणं श्रुतम् । ते च तुषाः सकपालाः 'रक्षसां भागोऽसि' इति मन्त्रेण नैर्ऋत्यां दिश्यवस्थापनीयाः । तत्र श्रपणं यथा कपालसंपादनस्य प्रयोजकम्, तथा तुषवापोऽपि प्रयोजकः । 'एकहायन्या' इति तृतीययैकहायनीनयनस्य यथा क्रयार्थत्वावगमः तथा 'कपालेन' इति तृतीयया कपालस्य तुषवापार्थत्वावगमात्—इति चेत् ।

मैवम् । मात्र कपालमात्रस्य तुषोपवापसाधनत्वं श्रुतम् । किं तर्हि यत्कपालं पुरोडाशश्रपणायोपात्तमासादितं च, तस्य कपालस्य साधनत्वम् । एतच्च 'पुरोडाशकपालेन' इति सविशेषणनाम्ना तद्विधानादवगम्यते । तथा सति प्रथमं श्रपणेन कपालं प्रयुज्यते । न च प्रयुक्तस्य पुनस्तुषवापेन प्रयुक्तिः संभवति । तस्मात्—श्रपणेनैव प्रयुक्तं कपालं तुषोपवापेऽपि प्रसज्यतेति सिध्यति । ईदृशमेवाङ्गत्वं तृतीयाश्रुत्या बोध्यते ॥ २२ ॥ २३ ॥

---

१ ख. 'बे पद' । २ क. छ. निष्पद्येत । ३ ख. ग. घ. छ. निष्पाद्यम् । ४ ग. च. अगोऽसि । ५ क. 'यथा यथा । ६ क. क्रयार्थत्वम् । ७ क. 'लस्य । ८ क. तुषपा' । ९ छ. 'वना' । १० ग, घ. तुषका' ।

(द्वादशे शकृल्लोहितयोः पशावप्रयोक्तृताधिकरणे सूत्रम्–)।

पशावनालम्भाल्लोहितशकृतोरकर्मत्वम् ॥ २७ ॥

द्वादशाधिकरणमारचयति–

हृदादिः शकृदादिश्च पश्वालम्भप्रयोजकः।
हृदादिरेव वाऽऽद्योऽस्तु प्रकृतत्वेन साम्यतः ॥ २४ ॥
हविषो यागशेषत्वाद्धृदादेर्हविरात्मनः।
प्रयोजकत्वं तस्यैव नेतरस्यातथात्वतः ॥ २५ ॥

अग्नीषोमीयपशौ श्रुतम्–"हृदयस्याग्रेऽवद्यति, अथ जिह्वायाः, अथ वक्षसः," इति। तथाऽन्यदपि श्रुतम्–'शकृत्संप्रविध्यति' 'लोहितं निरस्यति' इति। तत्र हृदयादीनां शकृदादीनां च प्रकरणपाठसाम्यात्पशुसाध्यत्वसाम्याच्च हृदयादिवच्छकृदादिकमपि पश्वालम्भस्य प्रयोजकम्–इति चेत्।

मैवम्। पशुयागो हि हविःसाध्यः। हविष्ट्वं चात्र योग्यत्वाद्धृदयादीनामेव, नत्वयोग्ययोः शकृल्लोहितयोः। तस्मात्–हृदयादिरेव प्रयोजकः। शकृत्संप्रवेधो लोहितनिरसनं चेत्येतदुभयं शेषप्रतिपत्तिमात्रम्।

(त्रयोदशे पुरोडाशस्य स्विष्टकृदप्रयुक्तताधिकरणे सूत्राणि २८–३२)।

एकदेशद्रव्यश्चोत्पत्तौ विद्यमानसंयोगात् ॥ २८ ॥
निर्देशात्तस्यान्यदर्थादिति चेत् ॥ २९ ॥ न शेषसंनिधानात् ॥ ३० ॥ कर्मकार्यात् ॥ ३१ ॥
लिङ्गदर्शनाच्च ॥ ३२ ॥

त्रयोदशाधिकरणमारचयति–

प्रयोजकः स्विष्टकृत्किं पुरोडाशोत्तरार्धयोः।
यद्वा प्रयुक्तोपजीवी स्यादाद्यः स्वस्य सिद्धये ॥ २६ ॥
उत्तरार्धेतिशब्दस्य प्रकृताकाङ्क्षणे सति।
अन्याथ्यर्थं पुरोडाशमुपजीव्यैव वर्तताम् ॥ २७ ॥

दर्शपूर्णमासयोः श्रूयते–'उत्तरार्धात्स्विष्टकृते समवद्यति' इति। सोऽयं स्विष्टकृद्यागः कस्यचिन्नूतनस्य तदुत्तरार्धस्य च प्रयोजकः। तदुभयाभावे स्वसिद्ध्यभावात्–इति चेत्।

मैवम्। उत्तरशब्दोऽर्धशब्दश्च सर्वनामत्वात्सापेक्षत्वाच्च प्रकृतं कंचित्सा-

गिनमाकाङ्क्षतः। अग्न्यादिदेवतार्थः पुरोडाशः प्रकृतौ भागवांश्च। तस्मात्—अमेवोपजीव्य स्विष्टकृद्यागः प्रवर्तते। न त्वन्यस्य प्रयोजकः ॥ २६ ॥ २७॥

( चतुर्दशे—अभिघारणे शेषधारणतत्पात्रयोरननुष्ठानाधिकरणे सूत्राणि ३३–३९ )।

अभिघारणे विप्रकर्षादनुयाजवत्पात्रभेदः स्यात् ॥३३॥ न वाऽपात्रत्वादपात्रत्वं त्वेकदेशत्वात्॥३४॥ हेतुत्वाच्च सहप्रयोगस्य ॥ ३५ ॥ अभावदर्शनाच्च ॥३६॥ सति सव्यवचनम् ॥३७॥ न तस्येति चेत् ॥ ३८ ॥ स्यात्तस्य मुख्यत्वात् ॥ ३९ ॥

चतुर्दशाधिकरणमारचयति—

अभिघार्यं प्रयाजानां शेषेण हविरत्र किम्।
शेषधारणतत्पात्रे कार्ये नो वाऽभिघारणम् ॥ २८ ॥
नान्यथा तेन ते कार्ये न कार्ये प्रतिपत्तितः।
प्राजापत्यवपायाश्च न कोऽप्यर्थोऽभिघारणात् ॥ २९ ॥

प्रकृतौ श्रुतम्—' प्रयाजशेषेण हवींष्यभिघारयति ' इति। तदेतद्विकृतावतिदिष्टम्। विकृतयश्च वाजपेयगताः पशवः। ते च द्विविधाः—क्रतुपशवः प्राजापत्यपशवश्चेति। 'आग्नेयं पशुमालभते ' इत्यादिना विहिताः क्रतुपशवः। इतरे तु 'सप्तदश प्राजापत्यान्पशूनालभते' इति विहिताः। एते चोभयविधाः पशवः प्रातःसवने सहैवोपक्रम्यन्ते। अतः सर्वेषामर्थे सकृदेव प्रयाजा अनुष्ठीयन्ते। तत्र क्रतुपशूनां प्रातःसवन एवाऽऽलभ्यत्वात्तदीयहविषां प्रयाजशेषेणाभिघारणं निर्विघ्नमेव सिध्यति। प्राजापत्यपशूनां पर्यग्निकरणपर्यन्तमेव तदानीमनुष्ठानम्। आलम्भस्तु माध्यंदिने सवने, तत्कालादिशेषस्य ' ब्रह्मसाम्न्यालभते ' इति विधानात्। तेषां च प्राजापत्यादीनां हविषामभिघारणार्थं प्रातःकालीनः प्रयाजशेषो धारयितव्यः। न चात्र जुह्वां तद्धारणं संभवति। क्रतुपश्वनुष्ठाने जुह्वाया व्यापृतत्वात्। अतः पात्रान्तरं संपाद्य तस्मिन्नयं शेषो धारयितव्यः। अन्यथा प्राजापत्यहविषां प्रयाजशेषेणाभिघारणासिद्धिः। तस्मात्—शेषधारणतत्पात्रे संपादनीये—इति प्राप्ते—

ब्रूमः—ते उभे न कर्तव्ये। कुतः। अभिघारणस्य शेषप्रतिपत्तिरूपत्वेन हविःसंस्कारकत्वाभावात्। न हि दृष्टे प्रतिपादने सत्यदृष्टार्थः संस्कारो युक्तः। दृष्टं च

१ ख. ग. घ. छ. °नां तु प°। २ ख. ग. च. ङ. °त्यानां। ३ क. ग. च. छ. °सिद्धेः न°। ४ त. ग. °रत्वा°।

जुह्वा रिक्तीकरणम् । अन्यथा प्रयाजशेषोपेतायां जुह्वामाज्यमागार्थतया गृह्यमाणं संकीर्येत । ततो रिक्तीकरणरूपप्रतिपत्त्यर्थमेव प्रकृतौ शेषेणाभिघारणम् । अस्तु वा तत्र हविःसंस्कारोऽपि तथाऽपि प्राजापत्यवपायामभिघारणं व्यर्थम् । रूक्षत्वनिवारणाय ह्यभिघार्यते । न च प्राजापत्यवपाया रूक्षताऽस्ति । ब्रह्मसाम्नैव तद्रूक्षताया निवारितत्वात् । अत एव–श्रूयते–'शम्या वा एतर्हि वपा यदनभिघृता । ब्रह्म वै ब्रह्मसाम यद्ब्रह्मसाम्न्यालभते । तेनाशम्यास्तेनाभिघृताः' इति । शम्या रूक्षा इत्यर्थः । तस्मात्–शेषधारणमात्रे न कर्तव्ये॥२८॥२९॥

(पञ्चदशे समानयनस्याऽऽज्यधर्मप्रयोजकताधिकरणे सूत्रे ४०–४१) ।

समानयनं तु मुख्यं स्यात्, लिङ्गदर्शनात्
॥ ४० ॥ वचने हि हेत्वसामर्थ्यं ॥ ४१ ॥

पञ्चदशाधिकरणमारचयति–

चतुर्थस्य प्रयाजस्य होमायौपभृतं घृतम् ।
जुह्वामानयतीत्यौपभृतं नैषां प्रयोजयेत् ॥ ३० ॥
प्रयोजयेद्धुताऽऽनीतिः प्रयाजाद्यखिलार्थता ।
श्रुतौपभृत आज्येऽतो जौहवेन विकल्पनात् ॥ ३१ ॥
न प्रयोजकता मेवं नियतार्थं तु जौहवम् ।
अतिहायेड इत्युक्ते चतुर्थे सा प्रयोजयेत् ॥ ३२ ॥

दर्शपूर्णमासयोः श्रूयते–' अतिहायेडो बर्हिः प्रतिसमानयति जुह्वामौपभृतम् ' इति । अस्यायमर्थः–' पञ्चानां प्रयाजानां मध्ये तृतीयः प्रयाज इट्शब्देन बहुवचनान्तेनाभिधीयते । तं तृतीयं प्रयाजमतिक्रम्य बर्हिर्नामकं चतुर्थं प्रयाजं होतुमुपभृत्संज्ञकायां स्रुचि स्थितं घृतं जुह्वामानेतव्यम् ' इति । तदेतदानयनमुपभृत्याज्यग्रहणस्य न प्रयोजकम् । तथा हि–जुहूपभृद्ध्रुवासु तिसृषु स्रुक्ष्वाज्यग्रहणप्रकारस्तद्विनियोगश्चैवमाम्नायते–चतुर्जुह्वां गृह्णाति, अष्टावुपभृति, ' ' चतुर्ध्रुवायाम्, ' यज्जुह्वां गृह्णाति, प्रयाजेभ्यस्तत् ' ' यदुपभृति प्रयाजानुयाजेभ्यस्तत् ' ' सर्वस्मै वा एतद्यज्ञाय गृह्यते यद्ध्रुवायामाज्यम् ' इति । तत्र–जौहवं केवलप्रयाजार्थम् । औपभृतं तु प्रयाजानुयाजार्थमिति प्रयाजेषु जौहवमौपभृतं च विकल्प्यते । तथा सति यदा जौहवेन प्रयाजा इज्यन्ते तदानीमौपभृतस्याऽऽनयनमेव नास्ति, कुत आनयनस्य प्रयोजकत्वम् । यदा त्वौपभृतेन प्रयाजहोमः, तदानी-

१ क. °न तु क्रत्वर्थता° । २ ग. च. तेन श° । ३ क. ग. च. छ. अरूक्षा । ४ ख. विकल्पताम् । ५ ख. नियमार्थं । छ. त्रितआर्थं । ६ छ. °केऽभ्रतु° । ७ क. च. °चतुर्थप्र° । ८ छ. यच्च जुह्वां । ९ ग. च. °तं प्र° । १० ख. छ. °तं चोभयं वि° । ११ ग. च. छ. त्वमः प्र° ।

मौपभृतस्यार्धं पञ्चमप्रयाजार्थम्, इतरदनुयाजार्थम् । तयोः प्रयाजसाधनमर्धं प्रथमप्रयाजकाल एव जुह्वामानीतमिति न तस्य चतुर्थप्रयाजं प्रति समानयनं विधीयते । यत्त्वनुयाजार्थमितरदर्धमुपभृत्यवशिष्टम्, तन्मध्ये किंचिच्चतुर्थप्रयाजं प्रति समानेतव्यम् । तत्त्वनुयाजैरेव प्रयुक्तमिति न तस्याऽऽनयनं प्रयोजकम्- इति प्राप्ते-

ब्रूमः-' यज्जौहवं तत्प्रयाजत्रितयार्थम्, यत्त्वौपभृतं तदवशिष्टप्रयाजद्वयार्थमनुयाजार्थं च '-इत्येवं वाक्यद्वयस्य व्यवस्थायां संभवन्त्यामष्टदोषग्रस्तो विकल्पो नाऽऽश्रयितुं शक्यः । यदा जौहवस्वीकारः, तदानीमौपभृतवाक्यस्य प्राप्तं प्रामाण्यं परित्यज्येत, अप्राप्तमप्रामाण्यं स्वी क्रियेत, पुनरपि कदाचिदौपभृतस्वीकारे त्यक्तं प्रामाण्यं स्वी क्रियेत, स्वीकृतमप्रामाण्यं परित्यज्येत, इत्यौपभृतवाक्ये चत्वारो दोषाः । जौहववाक्येऽप्येवं चत्वारः, इत्यष्टौ दोषाः । यथोक्तव्यवस्था च ' अतिहायेड ' इतिवाक्यादध्यवसीयते । तथा सत्यौपभृतस्यानुयाजा यथा प्रयोजकाः, तथैव चतुर्थपञ्चमप्रयाजनिष्पादकमानयनमपि प्रयोजकमेव ॥ ३० ॥ ३१ ॥ ३२ ॥

( षोडशे-औपभृतजौहवयोः क्रमेणोभयानुभयार्थताधिकरणे सूत्राणि ४२-४५ )

तत्रोत्पत्तिरविभक्ता स्यात् ॥ ४२ ॥ तत्र
जौहवमनुयाजप्रतिषेधार्थम् ॥ ४३ ॥
औपभृतं तथेति चेत् ॥ ४४ ॥ स्याज्जु-
हूप्रतिषेधान्नित्यानुवादः ॥ ४५ ॥

षोडशाधिकरणमारचयति-

जुहूपभृद्ध्रुवास्वाज्यं सर्वार्थं वा व्यवस्थितिः ।
सर्वार्थमविशेषात्स्यात्प्रयाजार्थं हि जौहवम् ॥ ३३ ॥
प्रयाजानुयाजहेतुः स्यादौपभृतमाज्यकम् ।
ध्रौवमन्यार्थमित्येषा व्यवस्था वचनैर्मता ॥ ३४ ॥

' चतुर्जुह्वां गृह्णाति ' इत्यादिषु ग्रहणवाक्येषु ' एतदर्थम् ' इति विशेषनियामकस्याश्रवणात्पात्रत्रयगतमाज्यं सर्वार्थम्-इति चेत् ।

मैवम् । ' यज्जुह्वां गृह्णाति प्रयाजेभ्यस्तत् '-इत्यादिभिर्वाक्यैर्व्यवस्थावगमात् ॥ ३३ ॥ ३४ ॥

( सप्तदशे-उपभृति द्विचतुर्गृहीताचरणाधिकरणे सूत्राणि ४६-४८ )।

तदष्टसंख्यं श्रवणात् ॥ ४६ ॥ अनुग्र-
हाच्च जौहवस्य ॥ ४७ ॥ द्वयोस्तु हेतु-

---
१ ग. च. °मध्यं प्र° । २ ग. च. नेतव्यम् । ३ ग. च. °याजेनैव । ४ ख. ग. च. ङ. त

सामर्थ्यं श्रवणं च समानयने ॥ ४८ ॥

सप्तदशाधिकरणमारचयति—

अष्टावुपभृतीत्यत्र किमष्टैकग्रहे विधिः।
चतुर्द्वयग्रहे वाऽऽद्यः स्यादष्टश्रुतिमुख्यतः ॥ ३५ ॥
चतुर्गृहीतं होमाङ्गं फलवत्त्वान्न बाध्यते।
चतुर्द्वित्वं लक्ष्यतेऽतः सहानीत्यर्थमष्टता ॥ ३६ ॥

ग्रहणवाक्ये 'चतुर्जुह्वां गृह्णाति' इत्यत्र यथा चतुःसंख्याविशिष्टमेकं हविर्ग्रहणं विहितम्, तथैव 'अष्टावुपभृति' इत्यत्राप्यष्टसंख्याविशिष्टमेकं हविर्ग्रहणं विधातव्यम्[1] न तु चतुर्गृहीतद्वयम्। तथा सत्यष्टश्रुतेर्मुख्यत्वावगमात्। अष्टसंख्यावयवभूतयोर्द्वयोश्चतुःसंख्ययोर्विधाने सत्यष्टशब्दस्यावयवलक्षणा प्रसज्येत—इति प्राप्ते—

ब्रूमः—प्रसज्यतां नाम लक्षणा। मुख्यार्थस्वीकारे होमवाक्यविरोधापत्तेः। 'चतुर्गृहीतं जुहोति' इत्यनारभ्य श्रुतं वाक्यं होममात्रोद्देशेन चतुर्गृहीतं विदधाति। यद्यप्येतत्सर्वहोमविषयतया सामान्यरूपम्, औपभृतं तु प्रयाजानुयाजविषयतया विशेषरूपम्, तथाऽपि होमस्य फलवत्त्वेन प्राधान्यात्, ग्रहणस्य होमार्थत्वेनोपसर्जनत्वात्[2], प्रधानानुसारेण चतुर्गृहीतमेव युक्तम्, न तूपसर्जनानुसारेणाष्टगृहीतम्[3]। तस्मात्—उपभृति चतुर्गृहीतद्वयं विधीयते। तत्रैकं चतुर्गृहीतं हविश्चतुर्थपञ्चमप्रयाजार्थम्। अपरं त्वनुयाजार्थम्। नन्वेवं तर्हि चतुर्गृहीतस्यैव हविष्ट्वात् 'चतुरुपभृति' इत्येव विधातव्यम्, न तु 'अष्टावुपभृति' इति विधिर्युक्तः—इति चेत्। मैवम्। तथा सत्यनुयाजार्थं द्वितीयं चतुर्गृहीतं न सिध्येत्। अथ तदपि वाक्यान्तरेण विधीयते, तदानीमुपभृतः प्रथमेन चतुर्गृहीतेनावरुद्धत्वाद्द्वितीयस्मै पात्रान्तरमन्विष्येत। यदि 'उपभृति' इत्येव द्वितीयमपि चतुर्गृहीतं विधीयते, तदा चतुर्गृहीतद्वयस्य पृथगेवानुष्ठानादुपभृत्येकप्रयत्नेनाऽऽनयनं न सिध्येत्। अत उभयस्य समीपभूम्यानयनार्थम् 'अष्टावुपभृति' इत्युच्यते। तस्मात्साहित्यार्थमष्टशब्दप्रयोगेऽपि हविष्ट्वासिद्धये[6] चतुर्गृहीते अत्र विधीयेते ॥ ३५ ॥ ३६ ॥

इति श्रीमाधवीये जैमिनीयन्यायमालाविस्तरे चतुर्थाध्यायस्य प्रथमः पादः ॥ १ ॥

---

| | अत्र पादे | आदितः। |
|---|---|---|
| अधिकरणानि | १७ | २६३। |
| सूत्राणि | ४८ | ७०५। |

---

१ ख. °कश्रुतौ वि°। २ क. ख. °त्वाभावात्। ३ क. ख. ग. ङ. °त्। प्राधान्यानु°। ४ ख. तस्मान्चतु°। ५ ख. ङ. °भूतस्याऽऽन°। ६ ख. ङ. °ये द्वे च°।

( अथ चतुर्थाध्यायस्य द्वितीयः पादः )।

( प्रथमे स्वरोश्छेदनाद्यप्रयोजकताधिकरणे सूत्राणि १-६ ) ।

स्वरुस्त्वनेकनिष्पत्तिः स्वकर्मशब्दत्वात् ॥ १ ॥ जात्यन्तराच्च शङ्कते ॥२॥ तदेकदेशो वा स्वरुत्वस्य तन्निमित्तत्वात् ॥ ३ ॥ शकलश्रुतेश्च ॥ ४ ॥ प्रतियूपं च दर्शनात् ॥ ५ ॥ आदाने करोतिशब्दः ॥ ६ ॥

द्वितीये पादे प्रथमाधिकरणमारचयति-

स्वरुं कुरुत इत्यत्र स्वरुर्यूपात्पृथक्छिदाम् ।
प्रयोजयेन्न वाऽऽद्योऽस्तु विशिष्टस्य विधानतः ॥ १ ॥
आद्यस्य यूपखण्डस्य स्वरुत्वाख्यविशेषणे ।
विहिते लाघवं तस्मादनुनिष्पन्न एव सः ॥ २ ॥

अग्नीषोमीयपशौ श्रूयते-' यूपस्य स्वरुं करोति ' इति । तत्र यूपो यथा छेदनस्य प्रयोजकः, तथा स्वरुरपि च्छेदनं प्रयोजयति । कुतः-' करोति ' इत्यनेन विशिष्टविधिप्रतीतेः । करोतिधातोर्हि भावना मुख्योऽर्थः । तत्र यूपशब्दोपलक्षितः खादिरवृक्षः करणम् । छेदनादिरितिकर्तव्यता, ' छिन्नेन वृक्षेण स्वरुरुत्पादनीयः' इति विशिष्टविधिः । उत्पन्नस्य स्वरोर्विनियोग एवमाम्नातः- ' स्वरुणा पशुमनक्ति ' इति । तस्मात्-स्वरुश्छेदनस्य प्रयोजकः-इति प्राप्ते-

ब्रूमः-' छिद्यमानस्य यूपस्य यः प्रथमं पतितः शकलः स स्वरुः ' इति स्वरुत्वनाममात्रविधौ लाघवाद्यूपवत्स्वरुर्न च्छेदनस्य प्रयोजकः । किंतु यूपप्रयुक्ते छेदने स्वयमनुनिष्पद्यते ॥ १ ॥ २ ॥

( द्वितीये शाखाया आहार्यताधिकरणे सूत्रम् -) ।

शाखायां तत्प्रधानत्वात् ॥ ७ ॥

( द्वितीयाधिकरणमारचयति-

प्राचीमाहरतीत्यत्र दिक्शाखा वाऽस्तु दिक्श्रुतेः ।
आहार्यत्वं दिशो नास्ति शाखा तेनोपलक्ष्यते ॥ ३ ॥

---

१ ग. च. छ. °दर्शनि° । २ ग. च. यूपेप° । ३ ग. च. खदिरादिवृक्षः । ४ क. दिक्छ्रुतिः ।

दर्शपूर्णमासयोः 'यत्पलाशशाखया वत्सानपाकरोति' इति पलाशशाखां प्रकृत्य श्रूयते—'यत्प्राचीमाहरेत्, देवलोकमभिजयेत्' इति। तत्र प्राचीशब्दस्य दिग्वाचित्वाद्दिगाहरणं विधीयत इति चेत्।

मैवम्। अशक्यत्वात्। अतो वृक्षस्य प्राची शाखाऽत्रोपलक्ष्यते। तथा सति प्रकृतानुग्रहो भवति ॥ ३ ॥

( तृतीये छेदनस्य शाखाप्रयुक्तताधिकरणे सूत्रे ८–९ )।

शाखायां तत्प्रधानत्वादुपवेषेण विभागः स्याद्वैषम्यं तत् ॥ ८ ॥ श्रुत्यपायाच्च ॥ ९ ॥

तृतीयाधिकरणमारचयति—

शाखां छित्त्वोपवेषं ×च मूले कुर्वीत शाखया।
नुदेद्वत्सान्कपालानि स्थापयेदुपवेषतः ॥ ४ ॥
द्वयं प्रयोजकं छित्तेर्वत्सापाकृतिरेव वा।
आद्योऽग्रमूलयोरत्र विभज्य विनियोगतः ॥ ५ ॥
उपवेषं करोतीति साकाङ्क्षोऽन्यार्थमूलतः।
पूर्यतेऽतोऽनुनिष्पादी स तस्मादुज्यतेऽन्तिमः ॥ ६ ॥

दर्शपूर्णमासयोः श्रूयते—'मूलतः शाखां परिवास्योपवेषं करोति' इति। येयं पलाशशाखा छित्त्वा वृक्षादाहृता, तां पुनश्छित्त्वा मूलभागः प्रादेशपरिमित उपवेषः कार्यः। तयोरग्रमूलयोः शाखाभागयोः पृथग्विनियोग आम्नातः—'शाखया वत्सानपाकरोति। उपवेषेण कपालान्युपदधाति' इति। तदिदं कार्यद्वयं वृक्षच्छेदेन समाहृतया शाखया निष्पद्यते। तस्मात्—उभयमपि च्छेदनाहरणादेः प्रयोजकम्—इति चेत्।

मैवम्। 'उपवेषं करोति' इत्युक्ते 'केन द्रव्येण' इत्याकाङ्क्षायां 'मूलतः' इति वक्तव्यम्। पुनरपि 'कस्य मूलम्' इत्याकाङ्क्षायां 'वत्सापाकरणार्थं छिन्नायाः पलाशशाखाया मूलम्' इत्याकाङ्क्षा पूरणीया। तस्माच्छेदने वत्सापाकरणमेव प्रयोजकम्। उपवेषस्त्वनुनिष्पादी। ननु—आद्यच्छेदने तथाऽस्तु, द्वितीयच्छेदनस्योपवेषः प्रयोजकः। परिवासनसंपन्नेन मूलेनोपवेषकर्तव्यतावि-

× ग. च. छ. पुस्तकेषु सर्वत्रोपवेषशब्दस्थले तालव्यान्तोपवेशशब्द उपलभ्यते।

१ ग. च. °त्पर्णशा°। २ ख. °च्छिनश°। ३ छ. °तो मूलभागः प्रादेशपरिमाणकः। उपवेशोऽनु°। ४ ग. च. छ. °रोतीति। ५ क. °च्छेदनस°।

धानात् । अन्यथा ' परिवास्योपवेषं करोति ' इति समानकर्तृत्वपूर्वकालत्ववाचिनो ल्यप्प्रत्ययस्यानुपपत्तेः, इति चेत् । मैवम् । परिवासनस्योपवेषसंबन्धो वाक्येन प्रतीयते । शाखासंबन्धस्तु ' शाखाम् ' इति द्वितीयाश्रुत्या । पूर्वंच्छिन्नाया अपि शाखायाः पुनर्मूलापादानकश्छेदोऽपेक्षितः । अन्यथा समूलां शाखां हस्तेनोद्यम्य वत्सापाकरणं दुःशकं स्यात् । अत एव ' मूलतः ' इत्यपादाने पञ्चमी श्रुता । तथा सति प्रथमच्छेदनापादानभूतो वृक्षोऽसंस्कृतत्वाद्यथा लौकिकः, तथा द्वितीयच्छेदनापादानभूतं मूलमपि लौकिककाष्ठम् । अवश्यमङ्गान्तरेषु कपालोपधाने कस्यचित्काष्ठस्योपादानमर्थात्प्राप्तं तदेवात्र ' उपवेषं करोति ' इत्यनूद्यते । शाखां परिवास्य परित्यक्ते मूले संनिहिते सति कपालोपधानार्थं काष्ठान्तरान्वेषणप्रयासो न कर्तव्यः—इति वाक्यार्थः । एवं च सति दोहनरहितायां पौर्णमास्यां वत्सापाकरणार्थाया: शाखाया अभावादुपवेषाय शाखाछेदो न कर्तव्यः ॥ ४ ॥ ५ ॥ ६॥

(चतुर्थे शाखाप्रहरणस्य प्रतिपत्तिकर्मताधिकरणे सूत्राणि १०—१३)।

हरणे तु जुहोतिर्योगसामान्यात्, द्रव्याणां चार्थशेषत्वात् ॥ १० ॥ प्रतिपत्तिर्वा शब्दस्य तत्प्रधानत्वात् ॥ ११ ॥ अर्थेऽपीति चेत् ॥ १२ ॥ न तस्यानधिकारादर्थस्य च कृतत्वात् ॥ १३ ॥

चतुर्थाधिकरणमारचयति—

प्रस्तरं शाखया सार्धं प्रहरेत्प्रहृतिस्त्वियम् ।
शाखाया अर्थकर्मत्वं प्रतिपत्तिरुतोचिता ॥ ७ ॥
विहितः प्रस्तरे यागः शाखायाः साहचर्यतः ।
तथात्वादर्थकर्मत्वे हृतिः शाखां प्रयोजयेत् ॥ ८ ॥
हरतिर्यागवाची नो प्रतिपत्तिस्ततो भवेत् ।
पौर्णमास्यां ततो नैव हृतिः शाखां प्रयोजयेत् ॥ ९ ॥

दर्शपूर्णमासयोः श्रूयते—' सह शाखया प्रस्तरं प्रहरति ' इति । तत्र शाखाप्रहरणमर्थकर्म । कुतः । प्रहृतिशब्देन यागस्याभिधानात् । एतच्च ' सूक्तवाकेन प्रस्तरं प्रहरति ' इत्येतद्वाक्यमुदाहृत्य विचारितम् । प्रस्तरप्रहरणस्य यागत्वे तत्साहचर्याच्छाखाप्रहरणमपि याग एवेत्यर्थकर्म स्यात् । अर्थश्च क्रतुसाफल्यप्रयोजनाय क्रियमाणमर्थकर्म । ततः प्रहरणेन पौर्णमास्यामपि पलाशशाखा प्रयुज्यते—इति प्राप्ते,

---

१ ग. च. पूर्वं छिन्ना° । २ क. °वं स° । ३ख. °मर्थात्प्राप्तं° । ४ ग. च. प्रहरति° ।

ब्रूमः—'सूक्तवाकेन प्रस्तरं प्रहरति' इत्यत्र हरतिधातोर्यागवाचित्वं नोक्तम्। किंतु मान्त्रवर्णिकदेवतामुपलभ्य द्रव्यदेवताभ्यां यागः कल्पितः। शाखाप्रहरणे तु नास्ति देवता। ततो यागस्य कल्पयितुमशक्यतया हरतिधातुरत्र स्ववाच्यार्थं परित्यागमेवाऽऽचष्टे। तथा सति वत्सापाकरण उपयुक्तायाः पलाशशाखाया उपयोगान्तराभावाद्यागदेशेऽवकाशलाभाय यत्र क्वाप्यवश्यं परित्यागे प्राप्ते शास्त्रेणाऽऽहवनीय एव त्यागो नियम्यते। अनेन च शास्त्रीयत्यागेन शाखायाः प्रतिपत्तिर्भवति। प्रतिपत्तिर्नाम संस्काररूपो इष्टोऽर्थः। यथा राज्ञा चर्वितस्य ताम्बूलस्य सौवर्णे पतद्ग्रहे प्रक्षेपः, तद्वत्। ततः प्रहरणं प्रतिपत्तिकर्म। तेन च तदभावेऽपि क्रतुवैकल्याभावात्, पौर्णमास्यां स्वसिद्धिहेतुभूतां शाखां न प्रयोजयति॥ ७॥ ८॥ ९॥

( पञ्चमे निनयनस्य प्रतिपत्तिकर्मताधिकरणे सूत्रे १४-१५)।

उत्पत्त्यसंयोगात्प्रणीतानामाज्यवद्विभागः स्यात्॥ १४॥ संयवनार्थानां वा प्रतिपत्तिरितरासां तत्प्रधानत्वात्॥ १५॥

पञ्चमाधिकरणमारचयति—

प्रणीताभिस्तु संयौति वेद्यां निनयतीति किम्।
अपां द्वे प्रापके किंवा हविःसंयवनं तथा॥ १०॥
अपः प्रणयतीत्युक्तेः समत्वादुभयार्थता।
श्रुत्या संयवनार्थास्ता निनीतिः प्रतिपत्तिता॥ ११॥

दर्शपूर्णमासयोः श्रूयते—'अपः प्रणयति' इति। चमसेन पात्रेण प्रणीतानां तासामपां। प्रयोजनमेवं श्रूयते—'प्रणीताभिर्हवींषि संयौति' इति, 'अन्तर्वेदि प्रणीता निनयति' इति च। हवींषि पुरोडाशार्थानि पिष्टानि। तत्र हविःसंयवनं वेद्यां निनयनं चेत्येतदुभयमपां प्रणयनस्य प्रयोजकम्। कुतः। 'अपः प्रणयति' इत्यस्य प्रणयनोत्पत्तिवाक्यस्योभयत्र समानत्वात्। न ह्यस्मिन्वाक्ये संयवनस्य कश्चिद्विशेषसंबन्धः प्रतीयते—इति चेत्।

नैवम्। विनियोगवाक्ये 'प्रणीताभिः' इति तृतीयाश्रुत्या संयवनसाधनत्वावगमात्, संयवनमेव प्रयोजकम्। निनयनवाक्ये तु 'प्रणीताः' इत्यनया द्वितीयया संस्कार्यत्वावगमान्निनयनं प्रतिपत्तिरूपः संस्कार इति न प्रणयनस्य प्रयोजकम्।

१ ग. च. छ. °रत्र प°। २ ख. ग. च. छ. तेन। ३ ग. च. दृष्टार्थः। ४ ग. च. प्रक्षेपात् ताम्बूलपात्रे पतद्ग्रहः। ५ ख. ग. ङ. °न त°। ६ क. °र्थाऽस्ति नि°। ७ क. ख. °शेषः प्र°।

( षष्ठे दण्डदानस्यार्थकर्मताधिकरणे सूत्राणि १६–१८ )।

प्रासनवन्मैत्रावरुणाय दण्डप्रदानं कृतार्थत्वात्
॥ १६ ॥ अर्थकर्म वा कर्तृसंयोगात्, स्रग्वत्
॥ १७ ॥ कर्मयुक्ते च दर्शनात् ॥ १८ ॥

षष्ठाधिकरणमारचयति—

मैत्रावरुणके दण्डदानस्य प्रतिपत्तिता ।
उतार्थकर्मताऽऽद्योऽस्तु धारणे कृतकृत्यतः ॥ १२ ॥
युक्तोपयुक्तसंस्काराद्युपयोक्ष्यसंस्क्रिया ।
स्थित्वा प्रैषानुवचने दण्डोऽपेक्ष्योऽर्थकर्म तत् ॥ १३ ॥

ज्योतिष्टोमे श्रूयते—' क्रीते सोमे मैत्रावरुणाय दण्डं प्रयच्छति ' इति । यदेतद्दण्डदानं प्रतिपत्तिकर्म । कुतः । दण्डस्य यजमानधारणेन कृतकार्यत्वात् । यजमानो ह्यध्वर्युणा दीक्षासिद्ध्यर्थं दत्तं दण्डमासोमक्रयाद्धारयति । अत एवाऽऽम्नातम्—'दण्डेन दीक्षयति ' इति, ' ×यद्दीक्षिताय दण्डं प्रयच्छति ' इति च । तस्मादुपयुक्तस्य दण्डस्य दानं प्रतिपत्तिः—इति चेत् ।

मैवम् । दण्डे भविष्यदुपयोगस्यापि सद्भावात् । यदा मैत्रावरुणः स्थित्वा प्रैषाननुवदति, तदानीमवलम्बनाय दण्डोऽपेक्षितः । अत एवाऽऽम्नातम्—'दण्डी प्रैषानन्वाह'इति । तथा सति प्रतिपत्तिकर्मत्वपादुपयुक्तसंस्कारादर्थकर्मत्वे उपयोक्ष्यमाणसंस्कारः प्रशस्तः। उपयोजयितुमेव हि सर्वत्र संस्कारस्य प्रवृत्तिः । उपयुक्ते तु प्रतिपत्तिरूपस्य संस्कारस्याक्षरमात्रपर्यवसायित्वेन कार्ये पर्यवसानाभावादप्रशस्तत्वम् । तस्मात्—मैत्रावरुणसंस्कारार्थं दण्डदानमर्थकर्म । तथा सति निरूढपशावसत्यपि दीक्षिते दण्डसंपादनस्यैतद्दानं प्रयोजकम् ॥ १२ ॥ १३ ॥

( सप्तमे प्रासनस्य प्रतिपत्तिकर्मताधिकरणे सूत्रम् )।

उत्पत्तौ येन संयुक्तं तदर्थं तत्,
श्रुतिहेतुत्वात्, तस्यार्थान्तरगमने

×यद्दीक्षिताय दण्डम्' इति शबरभाष्यस्थपाठ एव स्थापितः ।

१ ग. च. दण्डे दा° । २ क. °क्षितद° । स. °क्षिते द° । ग. च. छ. °क्षितो द° । ३ ग. च. कार्यप° । ४ घ. च. ङ. °य तद्दान° ।

शेषत्वात्प्रतिपत्तिः स्यात् ॥ १९ ॥

सप्तमाधिकरणमारचयति—

चात्वाले कृष्णशृङ्गस्य प्रासो यः सोऽर्थकर्म वा।
प्रतिपत्तिः सार्थकत्वादाद्योऽन्त्योऽस्तूपयोगतः ॥ १४ ॥

ज्योतिष्टोमे श्रूयते—'नीतासु दक्षिणासु चात्वाले कृष्णविषाणां प्रास्यति' इति। यजमानेन दत्ता दक्षिणा ऋत्विग्भिर्यदा नीताः, तदा यजमानः स्वहस्ते धृतं कृष्णमृगस्य शृङ्गं चात्वालनामके गर्ते परित्यजेत्। सोऽयं परित्यागोऽर्थकर्म। कुतः? सप्रयोजनत्वात्। प्रतिपत्तितयाऽपूर्वाभावेन निरर्थकः स्यात्। अतोऽपूर्वलाभा-यार्थकर्मत्वम्—इति चेत्।

मैवम्। 'कृष्णविषाणया कण्डूयते' इति तृतीयाश्रुत्या यजमानशिरःकण्डूता-वुपयुक्तस्य विषाणस्य प्रतिपत्त्यपेक्षत्वात्। न च प्रतिपत्तावत्यन्तमपूर्वाभावः। 'चात्वाल एव प्रासनम्' इत्येवंविधस्य नियमस्य वैधत्वेन प्रासनक्रियाप्रयुक्तापू-र्वाभावेऽपि नियमापूर्वसद्भावात्। तस्मात्—प्रासनं प्रतिपत्तिकर्म ॥ १४ ॥

(अष्टमे—अवभृथगमनस्य प्रतिपत्तिकर्मताधिकरणे सूत्राणि २०—२२)।

सौमिके च कृतार्थत्वात् ॥२०॥ अर्थकर्म वाऽभि-धानसंयोगात् ॥२१॥ प्रतिपत्तिर्वा तन्न्यायत्वाद्देशा-याऽवभृथश्रुतिः ॥ २२ ॥

अष्टमाधिकरणमारचयति—

पात्रस्याऽवभृथे सोमलिप्तस्य नयनं तु किम्।
साधनं प्रतिपत्तिर्वा यन्ति तेनेत्यतः श्रुतेः ॥ १५ ॥
प्राप्ता साधनता मैवं पुरोडाशहविष्ट्ववतः।
प्राप्तस्य तद्संबन्धात्प्रक्षेपः प्रतिपत्तये ॥ १६ ॥

ज्योतिष्टोमे श्रूयते-'चतुर्गृहीतं वा एतदयज्ञस्य यदृजीषम्, यद्ग्रावाणः, यदौदु-म्बरी, यदधिषवणफलके, तस्माद्यत्किंचित्सोमलिप्तं द्रव्यम्, तेनावभृथं यन्ति' इति। निष्पीडितस्य सोमस्य नीरसो भाग ऋजीषम्। तदेतदृजीषग्रावादिकं सोमाभि-षवादौ सोमेन लिप्यते। तस्य लिप्तस्य सर्वस्यावभृथसाधनत्वमभ्युपेयम्। कुतः?

---

१ ख. ग. च. छ. नीतासु। २ ग. च. °मकग°। ३ ग. च. छ. °वे नि°। ४ ग. च. छ. क-ण्डूयति। ५ ग. च. छ. °दि सो°। ६ ग. च. छ. °स्य सोमलिप्तस्य सर्वस्य द्रव्यस्या°।

'तेनावभृथं यन्ति' इति तृतीयाश्रुत्याऽवभृथसाधनत्वावगमात्। तस्मात्सोमलिप्तं द्रव्यमवभृथे हविष्ट्वेन नीयते—इति चेत्।

मैवम्। 'वारुणेनैककपालेनावभृथमवयन्ति' इत्यनेनोत्पत्तिवाक्यशिष्टपुरोडाशहविषाऽवरुद्धेऽवभृथे सोमलिप्तपात्रस्य हविष्ट्वेन संबन्धासंभवात्। तथा सत्यवभृथशब्देन तदर्थं देशं लक्षयित्वा तस्मिन्देशे सोमलिप्तस्य पात्रस्य नयनमत्र विधीयते। तच्च नयनं प्रतिपत्तये भवति। पात्रस्य पूर्वमुपभुक्तत्वात्। तस्मात्—एतत्प्रतिपत्तिकर्म ॥ १५ ॥ १६ ॥

( नवमे कर्तृदेशकालविधीनां नियमार्थताधिकरणे सूत्रे २३–२४ )।

**कर्तृदेशकालानामचोदनं प्रयोगे नित्यसमवायात्**

**॥ २३ ॥ नियमार्था वा श्रुतिः ॥ २४ ॥**

नवमाधिकरणमारचयति—

समे यजेत देशादेरनुवादोऽथवा विधिः।
प्रयोगानुपपत्त्यैव प्राप्तत्वादनुवादता ॥ १७ ॥
समे वा विषमे वेति पाक्षिकत्वनिवृत्तये।
अप्राप्तांशानुपातेन नियमोऽत्र विधीयते ॥ १८ ॥

इदमाम्नायते—'समे दर्शपूर्णमासाभ्यां यजेत', 'प्राचीनप्रवणे वैश्वदेवेन यजेत' 'पौर्णमास्यां पौर्णमास्या यजेत' 'अमावास्यायाममावास्यया यजेत' 'पशुबन्धस्य यज्ञक्रतोः षडृत्विजः' 'दर्शपूर्णमासयोर्यज्ञक्रत्वोश्चत्वार ऋत्विजः' 'चातुर्मास्यानां यज्ञक्रतूनां पञ्चर्त्विजः' 'अग्निहोत्रस्य यज्ञक्रतोरेक ऋत्विक्' 'सौम्यस्याध्वरस्य यज्ञक्रतोः सप्तदशर्त्विजः' 'सोमेन यजेत' इति। क्रतुशब्दो मानस उपासनेऽपि वर्तते। 'स क्रतुं कुर्वीत मनोमयः प्राणशरीरः' इत्यत्र क्रतुशब्देन ध्यानविधानात्। तद्व्यावृत्तये 'यज्ञक्रतोः' इति विशेष्यते। तत्र देशकालकर्तृद्रव्याणि न विधीयन्ते, किंत्वनूद्यन्ते। कुतः। प्राप्तत्वात्। न हि देशादिभिर्विना प्रयोगः संभवति। अतोऽर्थापत्त्या तत्प्राप्तिः—इति चेत्।

मैवम्। अर्थापत्त्या पाक्षिकी समदेशादिप्राप्तिः। विषमदेशादीनामपि संभवात्। ततो यस्मिन्पक्षे प्राप्तिर्नास्ति तस्मिन्पक्षे समदेशादयो विधीयन्ते ॥ १७ ॥ १८ ॥

---

१ग. घ. ङ. इत्यनया श्रु°। २ क. °म्रस्य। ३ ङ. तदीयं। ४ ख. ग. घ. ङ. °न्ना°।

( दशमे द्रव्यगुणविधानस्य नियमार्थताधिकरणे सूत्रम्- ) ।

तथा द्रव्येषु गुणश्रुतिरुत्पत्तिसंयोगात् ॥ २५ ॥

दशमाधिकरणमारचयति-

श्वेतालम्भोऽनुवादो वा श्वैत्यस्य विधिरग्रिमः ।
द्रव्यद्वारेण तत्प्राप्तेः पूर्ववत्तन्नियम्यते ॥ १९ ॥

इदमाम्नायते-'वायव्यं श्वेतमालभेत भूतिकामः' इति[1] । तत्र श्वैत्यगुणस्य द्रव्यनिरपेक्षस्य क्रियान्वयाभावाद्द्रव्यसहितस्य तदन्वये द्रव्यविधिनैवाऽऽवर्जनीयतया तत्प्राप्तेरनुवादः श्वैत्यस्य-इति चेत् ।

मैवम् । पूर्वन्यायेन पाक्षिकत्वनिवृत्तये नियमविधित्वाङ्गीकारात् ॥ १९ ॥

( एकादशे-अवघातादिसंस्कारविधानस्य नियमार्थताधिकरणे सूत्रम् ) ।

संस्कारे च तत्प्रधानत्वात् ॥ २६ ॥

एकादशाधिकरणमारचयति-

अवघातेऽपि नियमो देशादाविव तेन सः ।
प्रधानेन प्रयुक्तः स्यात्संबन्धः प्रक्रियोक्तितः ॥ २० ॥

यथा देशकालकर्तृद्रव्याणां पक्षे प्राप्तौ नियमो विहितः, एवमवघातोऽपि तण्डुलनिष्पत्त्यर्थं लोकतः प्राप्तोऽपि पाक्षिकनखविदलनादिव्यावृत्तये नियम्यते । सति चावघातस्य विधौ प्रधानेनाऽऽग्नेयादियागेनासौ प्रयुज्यते । न चात्र संबन्धाभावादप्रयुक्तिरिति वाच्यम् । प्रधानयागप्रकरणपाठितत्वेन संबन्धसिद्धेः । तस्मात्-अवघातादयो विधीयन्ते प्रधानेन प्रयुज्यन्ते च ॥ २० ॥

( द्वादशे यागहोमस्वरूपनिरूपणाधिकरणे सूत्रे २७-२८ ) ।

यजतिचोदना द्रव्यदेवताक्रियं समुदाये कृतार्थत्वात् ॥ २७ ॥ तदुक्ते श्रवणाज्जुहोतिरासेचनाधिकः स्यात् ॥ २८ ॥

द्वादशाधिकरणमारचयति-

अनिरूप्या निरूप्या वा यागहोमदद्दातयः ।
त्यागादायो यजिस्त्यागः प्रक्षेपो होम इष्यते ॥ २१ ॥

---

1 क. ख. °ति श्वै° ।

आकाङ्क्षा यागशब्दस्य त्यागेनैव निवर्तते ।
यागस्योपरि होमस्य विधेः क्षेपावसानता ॥ २२ ॥
स्वीयं द्रव्यं परित्यज्य परकीयं यथा भवेत् ।
तथा संपादनं दानं त्यागेऽप्येषामियं भिदा ॥ २३ ॥

इदमाम्नायते—'सोमेन यजेत' 'अग्निहोत्रं जुहोति' 'हिरण्यमात्रेयाय ददाति' इति । तत्र याग-होम-दान-शब्दानामर्था न निरूपयितुं शक्यन्ते । त्रिष्वपि द्रव्यत्यागस्य सद्भावात् । ततो विधेयानामर्थानां प्रधानभूतानामनिर्णयात्, इतरत्र विध्यनुवादविवेकः पूर्वोक्तो व्यर्थः—इति चेत् ।

नैवम् । देवतामुद्दिश्य द्रव्यत्यागो यागः । त्यक्तस्य वह्नौ प्रक्षेपो होमः । स्वकीयद्रव्यस्य स्वत्वनिवृत्तिपूर्वकं परस्वत्वापादनं दानम् । इति सुनिरूपा एते पदार्थाः । 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' इतिविहितस्य यागस्योपरि 'चतुरवत्तं जुहोति' इति होमस्य विधानात् 'त्यागमात्रात्मको यागः, प्रक्षेपाधिको होमः' इत्यवगम्यते । यत्र तु यजत्यादिपदं न श्रुतम्, किंतु 'आग्नेयोऽष्टाकपालः' इत्येतावदेव श्रुतम्, तत्राप्युद्देश्याया देवतायास्त्यजनीयद्रव्यस्य च श्रुतत्वादुद्देशत्यागरूपो यागोऽर्थसिद्धः । तस्मात्—प्रधानविधेयानां यागादीनां सुनिरूपितत्वाद्विधिविवेको न व्यर्थः ॥ २१ ॥ २२ ॥ २३ ॥

( त्रयोदशे बर्हिष आतिथ्यादिसाधारण्याधिकरणे सूत्रे २९—३० ) ।

विधेः कर्मापवर्गित्वादर्थान्तरे विधिप्रदेशः स्यात् ॥ २९ ॥ अपि वोत्पत्तिसंयोगादर्थसंबन्धोऽविशिष्टानां प्रयोगैकत्वहेतुः स्यात् ॥ ३० ॥

त्रयोदशाधिकरणमारचयति—

यदातिथ्याबर्हिरेतदुपसत्स्वातिदेशनम् ।
साधारण्यविधिर्वाऽऽद्यस्तदीयस्योपसंहृतेः ॥ २४ ॥
बर्हिःश्रुत्यैकताभानान्नातिदेशस्य लक्षणा ।
आतिथ्ययोपसद्भिश्च बर्हिरेतत्प्रयुज्यते ॥ २५ ॥

ज्योतिष्टोमे श्रूयते—'यदातिथ्यायां बर्हिः, तदुपसदाम्, तदग्नीषोमीयस्य च' इति । क्रीतं सोमं शकटेऽवस्थाप्य प्राचीनवंशं प्रत्यानयनेऽभिमुखो यामिष्टिं निर्वपति सेयमातिथ्या । तत ऊर्ध्वं त्रिषु दिनेष्वनुष्ठीयमाना उपसदः । औपवसथ्ये दिनेऽनुष्ठेयोऽग्नीषोमीयः । तत्र—आतिथ्येष्टौ विहितं यद्बर्हिः, तद्यदि तस्या इष्टेरा-

१ क. स्वीयद्र° । २ ग. च. °क्तद्रव्यस्य । ३ ग. च. छ. °वच्छ्रुत° । ४ क. ग. तथाऽप्यु । ५ क. ख. °यस्य च श्रु° । ग. च. °यस्य श्रु° । ६ ग. च. °त्वात्तदुद्दे° । ७ क. °—त्वा° । ८ ग. च. छ. °रूपत्वा° । ९ ग. च. छ. °नुष्ठीयमानोऽग्नी° ।

च्छयोपसत्सु विधीयेत, तदानीमातिथ्यायां विधानमनर्थकं स्यात्। यदि च तत्रोपयुक्तमितरत्र विधीयेत, तदा विनियुक्तविनियोगरूपो विरोधः स्यात्। तस्मात्—आतिथ्याबर्हिषो ये धर्मा अश्ववालत्वादयः, ते धर्मा उपसत्सूपसंह्रियन्ते—इत्यतिदेशपरं वाक्यम्—इति प्राप्ते,—

ब्रूमः—बर्हिःशब्दस्य धर्मातिदेशार्थे लक्षणा प्रसज्येत। श्रुत्या तु बर्हिष आतिथ्योपसदग्नीषोमीयेष्वेकत्वं प्रतिभाति। अतः साधारण्यमत्र विधेयम्। आतिथ्यार्थं यद्बर्हिरुपादीयते तन्न केवलमातिथ्यार्थम्, किंतूपसदर्थमग्नीषोमीयार्थं चोपादेयमिति विधिवाक्यस्यार्थः। तस्मात्—आतिथ्योपसदग्नीषोमीयास्त्रयोऽप्यस्य बर्हिषः प्रयोजकाः॥ २४॥ २५॥

इति श्रीमाधवीये जैमिनीयन्यायमालाविस्तरे चतुर्थाध्यायस्य द्वितीयः पादः॥ २॥

| | अत्र पादे | आदितः। |
|---|---|---|
| अधिकरणानि | १३ | २७६। |
| सूत्राणि | ३० | ७३५। |

अथ चतुर्थाध्यायस्य तृतीयः पादः।

( प्रथमे द्रव्यसंस्कारकर्मणां क्रत्वर्थताधिकरणे सूत्राणि—१–३ )।

द्रव्यसंस्कारकर्मसु परार्थत्वात्फलश्रुतिरर्थवादः स्यात्॥ १॥ उत्पत्तेश्चातत्प्रधानत्वात्॥ २॥
फलं तु तत्प्रधानायाम्॥ ३॥

तृतीयपादे प्रथमाधिकरणमारचयति—

जुह्वाः पर्णमयीत्वेन न पापश्रुतिरञ्जनात्।
वैरिदृग्वृञ्जनं, वर्म प्रयाजैः, पुरुषाय किम्॥ १॥
क्रतवे वाऽग्रिमो मानात्फलस्य न हि साध्यता।
विभाति क्रतवे तस्मादर्थवादः फलं भवेत्॥ २॥

इदमाम्नायते—'यस्य पर्णमयी जुहूर्भवति न स पापं श्लोकं शृणोति'

---

१ ग. च. छ. विधीयते। २ क. ख. ग. च. °त वि°। ३ ग, ज. °र्भा आभ्य°।

'यदाङ्क्ते चक्षुरेव भ्रातृव्यस्य वृङ्क्ते' 'यत्प्रयाजानुयाजा इज्यन्ते वर्म वा एतद्यज्ञस्य क्रियते, वर्म यजमानस्य भ्रातृव्याभिभूत्यै' इति। तत्र—यज्जुहूप्रकृतिभूतं पर्णद्रव्यम्, यश्चाञ्जनेन चक्षुषः संस्कारः, यच्च प्रयाजानुयाजरूपं वर्म तत्त्रितयं पुरुषार्थत्वेन विधीयते। कुतः। पापश्लोकश्रवणादिराहित्यादेः पुरुषसंबन्धिफलस्य प्रतिभानात्—इति चेत्।

मैवम्। फलं हि साध्यं भवति। न चात्र साध्यता प्रतिभासते। 'न शृणोति वृङ्क्ते, वर्म क्रियते, इति वर्तमानत्वनिर्देशात्। अतः क्रत्वर्था एते विधयः। तत्र पर्णमयीत्वस्यानारभ्याधीतस्यापि वाक्येन क्रतुसंबन्धः। संस्कारवर्मणोस्तु प्रकरणेन क्रत्वर्थानां तु क्रतुनिष्पादनव्यतिरेकेण फलाकाङ्क्षाया अभावाद्वर्तमाननिर्देशस्य विपरिणामं कृत्वाऽपि फलं कल्पयितुं न शक्यम्। तस्मात्—फलवत्त्वभ्रमहेतुः पापश्लोकश्रवणराहित्यादिरर्थवादः॥ १॥ २॥

(द्वितीये नैमित्तिकानामनित्यार्थत्वाधिकरणे सूत्रम्—)।

नैमित्तिके विकारत्वात्क्रतुप्रधानमन्यत्स्यात्॥ ४॥

द्वितीयाधिकरणमारचयति—

मृन्मये प्रणयेत्कामी नित्येऽप्येतदुतेतरत्।
आकाङ्क्षा संनिधिश्चास्ति तस्मान्नित्येऽपि मृन्मयम्॥३॥
कामार्थत्वादयोग्यत्वं सामान्यविहितेन च।
आकाङ्क्षाया निवृत्तत्वान्नित्यार्थमितरद्भवेत्॥ ४॥

'अपः प्रणयति' इति प्रकृत्य श्रूयते—'मृन्मयेन प्रतिष्ठाकामस्य प्रणयेत्' इति। तत्र—अपां प्रणयनस्य नित्यप्रयोगेऽपि मृन्मयपात्रमेव साधनम्। कुतः। नित्येऽपि पात्रस्याऽऽकाङ्क्षितत्वात्। न च—लोकसिद्धं किंचित्पात्रमुपादीयते—इति वाच्यम्। श्रौते कर्मण्यत्यन्तमश्रुताच्छ्रुतस्य संनिहितत्वात्—इति प्राप्ते,—

ब्रूमः—कामार्थं मृन्मयमाम्नातम्। तच्च सति कामे योग्यम्। न हि पाक्षिकं कामं निमित्तीकृत्य प्रवृत्तं नित्यस्य योग्यं भवति। पात्राकाङ्क्षा तु सामान्यतो विहितेन निवर्तते। 'अपः प्रणयति' इति हि पात्रविशेषमनुपन्यस्य विहितम्। तच्चान्यथाऽनुपपन्नं सत्पात्रं किंचित्सामान्येन कल्पयति। तस्मान्नित्यप्रयोगे तत्काम्यं मृन्मयं नान्वेति, किंत्वितरत्पात्रं यत्किंचिदुपादेयम्।—'चमसेनापः प्रणयेत्' इति नित्ये पात्रं विधीयते—इति चेत्। तर्हि कृत्वाचिन्ताऽस्तु॥३॥४॥

---

१ क. ख. ग. च. °व्रजाय कि°। २ क. ख. ग. घ. छ. °मानाय भ्रा°। ३ क. ख. °क्षणाञ्ज°। ४ क. ख. कर्म। ५ क. ख. ग. घ. छ. °रकर्म°। ६ छ. °र्थं सत्पा°।

( तृतीये—संयोगपृथक्त्वन्याये, दध्यादेर्नित्यनैमित्तिकोभयार्थताधिकरणे सूत्राणि ५—७ ) ।

एकस्य तूभयत्वे संयोगपृथक्त्वम् ॥ ५ ॥ शेष इति चेत् ॥ ६ ॥ नार्थपृथक्त्वात् ॥ ७ ॥

तृतीयाधिकरणमारचयति—

दध्ना त्विन्द्रियकामस्य नित्येऽन्यदुत तद्दधि ।
अन्यत्स्यात्पूर्ववन्मैवं संयोगस्य पृथक्त्वतः ॥ ५ ॥

अग्निहोत्रे श्रूयते—'दध्नेन्द्रियकामस्य जुहुयात्' इति । तत्र—दध्नः काम्यत्वान्नित्येऽग्निहोत्रे पूर्वन्यायेन तद्दधि न प्रयोक्तव्यम् । किंत्वन्यदेव किंचिद्द्रव्यम्—इति चेत् ।

मैवम् । 'दध्ना जुहोति' इत्यस्मिन्वाक्यान्तरे कामसंयोगमुपन्यस्य नित्यहोमसंयोगेन दधिविधानात् । तस्मात्—एकस्यापि दध्नो वाक्यद्वयेन नित्यत्वं काम्यत्वं चाविरुद्धम् । एवमग्नीषोमीयपशौ—'खादिरे बध्नाति' 'खादिरं वीर्यकामस्य यूपं *कुर्वीत' इत्युदाहरणीयम् ॥ ५ ॥

( चतुर्थे पयोव्रतादीनां क्रतुधर्मताधिकरणे सूत्रे ८—९ ) ।

द्रव्याणां तु क्रियार्थानां संस्कारः क्रतुधर्मः स्यात् ॥ ८ ॥ पृथक्त्वाद्व्यवतिष्ठेत ॥ ९ ॥

चतुर्थाधिकरणमारचयति—

पयो व्रतं ब्राह्मणस्य पुंसे तत्क्रतवेऽथवा ।
पुंयोगादग्रिमो मैवं नैष्फल्यात्क्रतुशेषता ॥ ६ ॥

ज्योतिष्टोमे दीक्षितस्यान्नभोजनाभावे व्रतमाम्नायते—'पयो व्रतं ब्राह्मणस्य, यवागू राजन्यस्य, आमिक्षा वैश्यस्य' इति । तत्र—ब्राह्मणादिपुरुषसंयोगादेतद्व्रतं पुरुषार्थम्—इति चेत्—

मैवम् । इन्द्रियवीर्यादिवत्फलस्याश्रुतत्वात् । क्रतुशेषत्वं तु प्रकरणादवगम्यते । ब्राह्मणादिपुरुषा द्रव्यविशेषव्यवस्थायै निमित्तत्वेनोपन्यस्यन्ते ॥ ६ ॥

* 'कुर्यात्' इति शाबरभाष्यस्थपाठः ।

१ ख. इत्युदाहार्यम् । २ ख. 'वस्य भो' । ३ ग. घ. ङ. 'यवा' ।

पञ्चमे विश्वजिन्न्यायान्तर्गते विश्वजिदादीनां सफलत्वाधि-
करणे सूत्राणि १०—१२)।

चोदनायां फलाश्रुतेः कर्ममात्रं विधीयेत, न ह्यशब्दं प्रतीयते ॥ १० ॥ अपि वाऽऽम्नानसामर्थ्याच्चोदनार्थेन गम्यते, अर्थानां ह्यर्थवत्त्वेन वचनानि प्रतीयन्ते, अर्थतो ह्यसमर्थानामानन्तर्येऽप्यसंबन्धः, तस्माच्छ्रुत्येकदेशः॥११॥

वाक्यार्थश्च गुणार्थवत् ॥ १२ ॥

पञ्चमाधिकरणमारचयति—

नैवास्ति विश्वजिद्यागे फलमस्त्युत नाश्रुतेः ।
भाव्यापेक्षाद्विधेः कल्प्यं फलं पुंसः प्रवृत्तये ॥ ७ ॥

इदमाम्नायते—' विश्वजिता यजेत ' इति । तत्र—फलस्याश्रुतत्वान्नास्ति विश्वजिद्यागे फलम्—इति चेत् ।

नैवम् । फलस्य कल्पनीयत्वात् । ' विश्वजिन्नाम्ना यागेन कुर्यात् ' इत्युक्ता भावना भाव्यमपेक्षते । ' किं कुर्यात् ' इत्याकाङ्क्षाया अनिवृत्तेः। अतो वाक्यपूरणाय किंचित्फलमवश्यमध्याहर्तव्यम् । अध्याहृते च तत्कामिनः पुरुषस्याथ प्रवृत्त्या यागानुष्ठानं सिध्यति । अन्यथा निरधिकारत्वादनुष्ठाने[1] विधिर्निरर्थकः स्यात् । तस्मात्—फलं कल्पनीयम् ॥ ७ ॥

(षष्ठे विश्वजिन्न्यायान्तर्गते विश्वजिदादीनामेकफलताधि-
करणे सूत्रे १३—१४)।

तत्सर्वार्थमनादेशात् ॥ १३ ॥
एकं वा चोदनैकत्वात् ॥ १४ ॥

षष्ठाधिकरणमारचयति—

सर्वं फलमुतैकं स्यात्सर्वमस्त्वविशेषतः ।
एकेन तन्निराकाङ्क्षमतोऽनेकं न कल्प्यते ॥ ८ ॥

तस्मिन्विश्वजिति पशुपुत्रवीर्येन्द्रियादिकं सर्वं फलत्वेन कल्पनीयम् । कुतः । ' एतदेवास्य फलम् ' इत्यत्र विशेषहेतोरभावात्—इति चेत् ।

नैवम् । लाघवस्यैव विशेषहेतुत्वात्[2] ॥ ८ ॥

---

१ ख. च. ज. 'कारित्वादनु' । २ ग. च. इति वि° ।

(सप्तमे विश्वजिन्न्यायान्तर्गते विश्वजिदादीनां स्वर्गफलताधिकरणे सूत्रे १५-१६)।

स स्वर्गः स्यात्सर्वान्प्रत्यविशिष्टत्वात् ॥ १५ ॥ प्रत्ययाच्च ॥ १६ ॥

सप्तमाधिकरणमारचयति—

एकं यत्किंचिदथवा नियतं न नियामकम्।
तस्मादाद्यः सर्वपुंसामिष्टत्वात्स्वर्ग एव तत् ॥ ९ ॥

विश्वजिति कल्प्यमानं यदेकं फलं तत् 'इदमेव' इति नियामकं नास्ति। तस्मादिच्छया केनचित्कस्मिंश्चित्फले कल्प्यमानेऽर्थात्सर्वफलत्वे गौरवमेव स्यात्—इति चेत्।

नैवम्। स्वर्गस्य पश्वादिफलवद्दुःखमिश्रितत्वाभावात्, निरतिशयसुखत्वाच्च सर्वपुरुषाणामिष्टत्वात्स्वर्ग एव विश्वजितः फलम् ॥ ९ ॥

(अष्टमे रात्रिसत्रन्याये रात्रिसत्रस्याऽर्थवादिकफलकताधिकरणे सूत्राणि १७-१९)।

क्रतौ फलार्थवादमङ्गवत्कार्ष्णाजिनिः ॥ १७ ॥
फलमात्रेयो निर्देशादश्रुतौ ह्यनुमानं स्यात्
॥ १८ ॥ अङ्गेषु स्तुतिः परार्थत्वात् ॥ १९ ॥

अष्टमाधिकरणमारचयति—

स्वर्गाय वा प्रतिष्ठायै रात्रिसत्रमिहाऽऽदिमः।
पूर्ववत्स्यात्प्रतिष्ठा च श्रुता तेनाश्रुताद्वरम् ॥ १० ॥

सत्रकाण्डे प्रत्येकं श्रूयते—'प्रतितिष्ठन्ति ह वा एते, य एता रात्रीरुपयन्ति' इति, 'ब्रह्मवर्चस्विनोऽन्नादा भवन्ति, य एता उपयन्ति' इति च। द्वादशाहादूर्ध्वंभाविनस्त्रयोदशरात्रचतुर्दशरात्रादयः सर्वे सत्रविशेषाः। त्रयोदशसंख्याका रात्रयो यस्मिन्सत्रविशेषे सोऽयं त्रयोदशरात्रः, इति समुदायप्राधान्येनैकवचनान्ततया प्रायेण निर्देशो भवति। क्वचित्तु समुदायिनां रात्रिविशेषाणां प्रत्येकं प्राधान्यमभ्युपेत्यैक एव सत्रविशेषो बहुवचनान्तेन रात्रिशब्देनाऽऽम्नायते। यथा—'त एतां विंशतिं रात्रीरपश्यत्' इति तादृशे रात्रिसत्रे विश्वजिन्न्यायेन स्वर्गः फलत्वेन कल्पनीयः—इति प्राप्ते—

ब्रूमः—अस्य रात्रिसत्रविधेः स्तावकेऽर्थवादे प्रतिष्ठा श्रुता। सा चास्मिन्वा-

१ ग. च. 'ता रा'। २ क. ख. छ. 'शतिरा'। ३ ग. च. 'विधि'।

कल्पेऽप्यन्यत्वमश्रुतात्स्वर्गात्प्रत्यासन्ना । तस्मात्–' प्रतिष्ठाकामो रात्रिसत्रं कुर्यात् ' इत्येवं प्रतिष्ठैव फलत्वेन कल्पनीया ॥ १० ॥

( नवमे काम्यानां यथोक्तकाम्यफलकत्वाधिकरणे सूत्राणि २०—२४ )॥

काम्ये कर्मणि नित्यः स्वर्गो यथा यज्ञाङ्गे क्रत्वर्थः ॥ २० ॥ वीते च कारणे नियमात् ॥ २१ ॥ कामो वा तत्संयोगेन चोद्यते ॥ २२ ॥ अङ्गे गुणत्वात् ॥ २३ ॥ वीते च नियमस्तदर्थम् ॥ २४ ॥

नवमाधिकरणमारचयति–

श्रुताश्रुते श्रुतं वैकं सौर्ये सर्वप्रवृत्तये ।
आद्यो मैवं श्रुतेनैव फलाकाङ्क्षानिवर्तनात् ॥ ११ ॥

'सौर्यं चरुं निर्वपेद्ब्रह्मवर्चसकामः ' इत्यत्र ब्रह्मवर्चसं फलं श्रुतम् । स्वर्गोऽश्रुतं फलम् । तदुभयमप्यभ्युपेयम् । तथा सति स्वर्गस्य सर्वैरपेक्ष्यमाणत्वात्सर्वेषां तत्र प्रवृत्तिर्लभ्येत–इति चेत् ।

मैवम् । श्रुतेन ब्रह्मवर्चसफलेनैव निराकाङ्क्षे विधिवाक्ये विश्वजिन्न्यायेन स्वर्गफलकल्पनाया असंभवात् । तस्मात्–श्रुतमेव फलम् ॥ ११ ॥

दशमे–{ दर्शपूर्णमासन्यायान्तर्गते दर्शपूर्णमासादीनां सर्वकामार्थताधिकरणे } सूत्रे २५–२६ )।

सार्वकाम्यमङ्गकामैः प्रकरणात् ॥ २५ ॥ फलोपदेशो वा प्रधानशब्दसंयोगात् ॥ २६ ॥

दशमाधिकरणमारचयति–

दर्शादिः सर्वकामेभ्योऽनुवादो वा फले विधिः ।
अङ्गोपाङ्गोदितः कामो विध्यभावादनूद्यते ॥ १२ ॥
उत्पत्तिचोदनासिद्धे आश्रित्य विधिभावने ।
फलसंयोगबोधेन भवेदेष फले विधिः ॥ १३ ॥

---

१ ग. च. ङ. 'देव फ' ।

इदमाम्नायते—'एकस्मै वा अन्या इष्टयः कामायाऽऽह्रियन्ते, सर्वेभ्यो दर्शपूर्णमासौ' इति। 'एकस्मै वा अन्ये यज्ञक्रतवः कामायाऽऽह्रियन्ते, सर्वेभ्यो ज्योतिष्टोमः' इति। तत्र—'सर्वेभ्यः' इत्यनेन वाक्येन दर्शपूर्णमासयोर्न फले विधिः। विधायकस्य लिङ्गादेर्भावनावाचिन आख्यातस्य चाभावात्। अनुवादस्तु भविष्यति। सर्वकामानां प्राप्तत्वात्। न च—'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' इति विधानात्स्वर्ग एव प्राप्तो न तु कामान्तरम्—इति वाच्यम्। अङ्गेषूक्तकामानामपि प्राप्तत्वात्। सामिधेन्यो दर्शपूर्णमासयोरङ्गम्। तत्र कामाः श्रूयन्ते—'एकविंशतिमनुब्रूयात्प्रतिष्ठाकामस्य, चतुर्विंशतिमनुब्रूयाद्ब्रह्मवर्चसकामस्य' इति। तथा सांनाय्ययागस्य दोहनमङ्गम्। तत्साधनं वत्सापाकरणमुपाङ्गम्। तत्र पलाशशाखाहरणे काम आम्नातः—'यः कामयेत—पशुमान्स्याम्—इति, बहुपर्णां तस्मै बहुशाखामाहरेत्। पशुमन्तमेवैनं करोति' इति। त एते सर्वे कामा अनूद्यन्ते—इति प्राप्ते,

ब्रूमः—मा भूतामस्मिन्वाक्ये विधिभावने। तथाऽप्युत्पत्तिवाक्यसिद्धे ते आश्रित्य तादर्थ्यवाचिन्या चतुर्थ्या फलसंयोगो बोध्यते। तस्मात्—एष फले विधिः॥ १२॥ १३॥

(एकादशे दर्शपूर्णमासन्यायान्तर्गते दर्शपूर्णमासादीनां प्रतिफलं पृथगनुष्ठानाधिकरणे, योगसिद्धिन्याये च सूत्रे २७–२८)।

तत्र सर्वेऽविशेषात्॥ २७॥ योगसिद्धि-
र्वाऽर्थस्योत्पत्त्यसंयोगित्वात्॥ २८॥

एकादशाधिकरणमारचयति—

ज्योतिष्टोमश्च सर्वार्थः सर्वं सकृदनुष्ठितेः।
स्यात्पृथक्प्रयोगाद्वा सकृत्तस्याविशेषतः॥ १४॥
एकैकस्यानपेक्षस्य फलस्यैव हि साधनम्।
चोदितं तेन कामास्ते पर्यायेण भवन्त्यमी॥ १५॥

यथा दर्शपूर्णमासौ सर्वकामार्थौ, तथा ज्योतिष्टोमश्च सर्वकामार्थ इति पूर्वाधिकरणेनैव सिद्धम्। तत्रोभयत्र कामा नैमित्तिकाः। ज्योतिष्टोमादिस्वरूपं निमित्तम्। तच्च सर्वेषु कामेष्वविशिष्टम्। न हि निमित्तसाधारण्ये सति नैमित्तिकानां पर्यायो भवति। वह्निसामीप्ये सति दाहप्रकाशयोः पर्यायादर्शनात्। त-

१ घ. च. °माण क्रिय°। २ ग. च. °भ्यो ज्यो°। ३ ख. अर्थवा°। ४ ख. °पातका°। ५ ग. च. ङ. समाश्रित्य। ६ ग. च. °स्यैव हि। ७ क. सर्वार्थं।

स्माज्ज्योतिष्टोमे सकृदनुष्ठिते सत्येकं फलं यथा निष्पद्यते, तथा फलान्तराणामपि वारयितुमशक्यत्वाद्युगपत्सर्वफलसिद्धिः—इति प्राप्ते—

ब्रूमः—नहि ज्योतिष्टोमं निमित्तीकृत्य कामा विधीयन्ते। कामानामननुष्ठेयत्वात्। किं तर्हि-पुरुषस्य स्वत एव प्राप्तान्कामानुद्दिश्य तत्साधनत्वेनैव ज्योतिष्टोमो विधीयते। यद्यपि 'सर्वेभ्यः कामेभ्यः' इति स्वर्गपश्वादिफलानामेकेनैव शब्देनोद्दिश्यमानत्वात्साहित्यं प्रतिभाति, तथाऽपि न तदस्ति। उद्देश्यगतत्वेन साहित्यस्याविवक्षितत्वात्। न च शब्दतः साहित्यनियमाभावेऽप्येककर्मफलत्वादर्थतः साहित्यम्—इति वाच्यम्। स्वर्गपश्वादीनां परस्परनिरपेक्षाणामेव फलत्वात्। तस्मादेकैकस्यै फलस्य साधनत्वेन कर्म चोद्यते। अत एव 'सर्वेभ्यः' इति निर्देशोपपत्तिः। अन्यथा हि साहित्यनियमान्मिलितमिदमेकमेव फलं संपन्नमिति सर्वशब्दो नोपपद्यते। तस्माद्यदा यत्फलं[4] काम्यम्, तदा तत्सिद्धये ज्योतिष्टोमः प्रयोक्तव्यः। एकमपि तद्वृष्ट्यादिफलं यदा यदा काम्यते, तदा तदा कारीरीष्टिः पुनः पुनः प्रयुज्यते। किमु वक्तव्यम्—फलभेदे प्रयोगभेदः—इति। तस्मात्प्रतिफलं पृथक्प्रयोगः ॥ १४ ॥ १५ ॥

(द्वादशे—{काम्यानामैहिकामुष्मिकफलवत्त्वाधिकरणे वर्णकान्तरेण ते एव} सूत्रे २७—२८)।

तत्र सर्वेऽविशेषात् ॥२७॥ योगसिद्धिर्वाऽर्थस्योत्पत्त्यसंयोगित्वात् ॥२८॥

द्वादशाधिकरणमारचयति—

चित्रया पशवोऽमुष्मिन्नेव स्युर्नियता न वा।
आद्यः स्वर्गेण तुल्यत्वाद्देहस्योत्पादकत्वतः ॥ १६ ॥
चित्रोत्पत्तौ तु नियमो न श्रुतो नापि कल्पनम्।
पुंस्प्रकृत्यादिनाऽपेते प्रतिबन्धे भवेत्फलम् ॥ १७ ॥

काम्यकर्माण्येवं श्रूयन्ते—'चित्रया यजेत पशुकामः' 'ऐन्द्रमेकादशकपालं निर्वपेत्प्रजाकामः' इति। तत्र-यथा स्वर्गफलस्याऽऽमुष्मिकत्वं नियतम्, एवं पश्वादिफलस्यापि। यदि स्वर्गहेतुर्ज्योतिष्टोमो देहान्तरस्योत्पादकः, तर्हि चित्रादिरपि तथाऽस्तु इति चेत्।

---

१ क. ख. नात्र। छ. न। २ ख. ग. च. छ. स्वतः प्रा°। ३ छ. °स्य सा°। ४ ग. च. छ. °लं त°। ५ ख. काम्यते। ६ ग. च. छ. °पि वृष्ट्या°। ७ ख. छ. °दा का°। ८ क. ख. ग. च. छ. पुंप्रवृ°। ९ ग. च. °कर्मण्ये°। १० ग. च. श्रूयते।

मैवम्। वैषम्यात्। अस्मिन्देहे स्वर्गस्य भोक्तुमशक्यत्वाद्श्रुताऽप्यन्यदेहोत्पत्तिरर्थापत्त्या कल्प्यते। 'चित्रया त्वन्यदेहोऽवश्यमुत्पाद्यते' इति नियमो न श्रुतः, नापि किंचित्तस्य कल्पकमस्ति। अनेनापि देहेन पश्वादिफलस्य भोक्तुं शक्यत्वात्। अस्मिन्देहे प्रतिग्रहादिदृष्टोपायमन्तरेण पश्वाद्यलाभाद्वैधचित्रादिफलमामुष्मिकमेव—इति चेत्। न। प्रतिग्रहादेः प्रतिबन्धनिवृत्तावुपयुक्तत्वात्। तस्मात्-असति प्रतिबन्धे फलमैहिकम्, सति त्वामुष्मिकम् ॥१६॥१७॥

(त्रयोदशे सौत्रामण्यादीनां चयनाद्यङ्गताधिकरणे सूत्राणि २९—३१)

समवाये चोदनासंयोगस्यार्थवत्त्वात् ॥२९॥ कालश्रुतौ काल इति चेत्॥३०॥नासमवायात्प्रयोजनेन स्यात्॥३१॥

त्रयोदशाधिकरणमारचयति—

इष्ट्वा तु वाजपेयेन बृहस्पतिसवं यजेत्।
कालं वा बोधयेद्वाक्यमुताङ्गत्वस्य बोधकम्॥ १८॥
क्त्वाश्रुत्या भाति कालोऽत्र मैवमङ्गत्वबोधनम्।
श्रुतेर्मुख्यं प्रक्रिया च तथा सत्यनुगृह्यते ॥ १९॥

इदमाम्नायते—'वाजपेयेनेष्ट्वा बृहस्पतिसवेन यजेत' इति। 'अग्निं चित्वा सौत्रामण्या यजेत' इति। तत्र—'इष्ट्वा' इति क्त्वाप्रत्ययो वाजपेयस्य पूर्वकालीनतां ब्रूते। तस्माद्वाक्यमिदं बृहस्पतिसवस्य वाजपेयोत्तरकालीनतां बोधयति—इति प्राप्ते,—

ब्रूमः—बृहस्पतिसवस्य वाजपेयाङ्गत्वबोधनमेव क्त्वाश्रुतेर्मुख्योऽर्थः,। 'समानकर्तृकयोः पूर्वकाले' (३।४।२१) इति (पाणिनि) सूत्रेण क्रियाद्वयस्यैककर्तृकतायां तद्विधानात्। यद्यपि सूत्रे 'पूर्वकाले' इत्युक्तम्, तथाऽपि तन्न नियतम्। 'मुखं व्यादाय स्वपिति' इत्यत्र कालैक्येऽपि प्रयोगात्। वाजपेयप्रकरणमप्यङ्गत्वेऽनुगृह्यते। अन्यथा स्वप्रकृते बृहस्पतिसवे कालविधानात्प्रकरणं बाध्येत। अङ्गत्वे कर्मान्तरत्वेन प्रसिद्धबृहस्पतिसवबाधाभावात्स्वच्छन्दोऽनुपपन्नः—इति चेत्। न। मासाग्निहोत्रन्यायेन तद्धर्मातिदेशार्थत्वात्। तस्मात्—वाक्यमिदमङ्गत्वबोधकम्। 'अग्निं चित्वा'—इत्यत्राप्येवं योजनीयम्॥ १८॥ १९॥

---

१ क. ख. ग. च. °मुत्पद्य°। २ क. ख. ङ. °द्वैधं चि°। ३ ख. ग. च. ङ. °त्वविधान°।

(चतुर्दशे वैमृधादेः पौर्णमास्याद्यङ्गताधिकरणे सूत्राणि ३२—३५)।

उभयार्थमिति चेत् ॥३२॥ न शब्दैकत्वात् ॥३३॥

प्रकरणादिति चेत् ॥३४॥ नोत्पत्तिसंयोगात् ॥३५॥

चतुर्दशाधिकरणमारचयति—

संस्थाप्य पौर्णमासीं तामनु वैमृध ईरितः।

द्वयोरङ्गमुतैकस्य द्वयोः स्यात्प्रक्रियावशात् ॥ २० ॥

उत्पत्तिवाक्यतः पूर्णमासं संयोगभासनात्।

तस्यैवाङ्गं न दर्शस्य प्रक्रिया वाक्यबाधिता ॥ २१ ॥

दर्शपूर्णमासप्रकरणे श्रूयते—'संस्थाप्य पौर्णमासीं वैमृधमनुनिर्वपति' इति। तत्र-इयं वैमृधेष्टिः प्रकरणबलात्प्रयाजादिवद्दर्शपूर्णमासयोरुभयोरप्यङ्गम्-इति चेत्। न। वाक्यस्य प्रबलत्वात्। न च—'संस्थाप्य' इति पौर्णमास्याः समाप्त्य-भिधानात्तदङ्गत्वमयुक्तम्—इति वाच्यम्। दर्शसाधारणाङ्गसमाप्त्यभिप्रायेण तदु-पपत्तेः। तस्मात्—उत्पत्तिवाक्यात्, एककर्तृकत्ववाचिक्त्वाप्रत्ययाच्च पूर्णमास-स्यैवाङ्गम् ॥२०॥२१॥

(पञ्चदशे—अनुयाजादीनामाग्निमारुतोर्ध्वकालताधिकरणे सूत्रम्)।

अनुत्पत्तौ तु कालः स्यात्प्रयोजनेन संबन्धात् ॥ ३६ ॥

पञ्चदशाधिकरणमारचयति—

किमाग्निमारुतादूर्ध्वमनुयाजैश्चरेदिति।

अङ्गं कालोऽथवाऽङ्गं स्यादतिपारार्थ्यमन्यथा ॥ २२ ॥

पुराऽग्निमारुतस्यास्य ज्ञाता सोमार्थता तथा।

अनुयाजाश्च पश्वर्थाः संयोगः कालसिद्धये ॥ २३ ॥

ज्योतिष्टोमे श्रूयते—'आग्निमारुतादूर्ध्वमनुयाजैश्चरन्ति' इति। आग्निमारुतं नाम किंचिच्छस्त्रम्। अनुयाजाः 'देवं बर्हिः'—इत्यादिभिः पाशुकहौत्रकाण्डप-ठितैरेकादशभिर्मन्त्रैः साध्या होमाः। तत्र—'आग्निमारुतशस्त्रस्यानुयाजा अङ्गम्' इत्येवमङ्गाङ्गिभावबोधनायायं संयोगः। यदि—अनुयाजानामयं कालोपदेशः स्यात्, तदानीमाग्निमारुतोपन्यासस्य स्वार्थो न कश्चित्-इत्यत्यन्तपारार्थ्यं स्यात्। तस्मात्—बृहस्पतिसववत्, वैमृधवच्च, अनुयाजा अङ्गम्—इति प्राप्ते—

१ म. च. छ. °संयोगप्रभा°। २ ग. च. तदुत्पत्तेः। ३ ख. ग. च. °च्च पौण°। ४ क. °था ॥ २२ ॥ प्रागग्नि°। ५ ग. च. ज्ञानात्सोमा°। ६ ख. ग. च. °माय सं°। ७ ग. च. °न्याक्यं पा°।

ब्रूमः—इतरस्तोत्रशस्त्रवदाग्निमारुतशस्त्रस्य सोमाङ्गत्वं पूर्वमेवावगतम्। अग्नीषोमीयविकृतौ सवनीयपश्वतिदेशतः प्राप्तानामेकादशानामनुयाजानामपि प्रयाजवत्पश्वङ्गत्वमवगतम्। ततः परस्परमङ्गाङ्गिभावासंभवात्कालोपदेशार्थोऽयं संयोगः ॥ २२ ॥ २३ ॥

(षोडशे—सोमादीनां दर्शपूर्णमासोत्तरकालताद्यधिकरणे सूत्रम्)।

उत्पत्तिकालविशये कालः स्याद्वाक्यस्य तत्प्रधानत्वात् ॥३७॥

षोडशाधिकरणमारचयति—

किं दर्शपूर्णमासाभ्यामिष्ट्वा सोमेन यागकः।
अङ्गाङ्गिभावः कालो वा ह्यपारार्थ्याय चाङ्गता ॥ २४ ॥
दर्शादिलक्षिते काले सोमयागो विधीयते।
स्वतन्त्रफलवत्त्वेन न युक्ताऽङ्गाङ्गिता तयोः ॥ २५ ॥

इदमाम्नायते—'दर्शपूर्णमासाभ्यामिष्ट्वा सोमेन यजेत' इति। तत्र—इत्थयोराग्निमारुतानुयाजवदन्याधीनत्वाभावाद्दर्शपूर्णमासोक्तैः पारार्थ्यपरिहाराय सोमस्य दर्शपूर्णमासाङ्गत्वबोधकोऽयं संयोगः—इति चेत्।

मैवम्। स्वतन्त्रफलवतः सोमस्याङ्गत्वासंभवात्। फलवत्संनिधावफलं तदङ्गं भवति, इति न्यायात्। न च-अत्र बृहस्पतिसवन्यायेन सोमधर्मकर्मफलं कर्मान्तरं विधीयते—इति शक्यं वक्तुम्। सोमशब्दस्य बृहस्पतिसवशब्दवन्नामत्वाभावेन धर्मातिदेशकत्वाभावात्। क्त्वाप्रत्ययस्त्वसत्यप्यङ्गाङ्गिभावे कर्त्रैक्यमात्रेणोपपद्यते। तस्माद्दर्शपूर्णमासशब्दस्य पारार्थ्यमभ्युपेत्यापि तदिष्ट्युपलक्षित उत्तरकाले सोमविधिरयम्। एतदेवाभिप्रेत्य रथत्वरूपमस्याऽऽम्नायते—'एष वै देवरथो यद्दर्शपूर्णमासौ। यो दर्शपूर्णमासाभ्यामिष्ट्वा सोमेन यजते रथस्पष्ट एवावसाने वरे देवानामवस्यति' इति। अवसाने निश्चिते। वरे मार्गे। 'यथा रथेन क्षुण्णे मार्गे गन्तुः कण्टकपाषाणादिबाधाराहित्येन सुखं भवति, तथा प्रथमं दर्शपूर्णमासाविष्टवत उत्तरकाले तदिष्टिविकृतिषु सोमाङ्गभूतदीक्षणीयाप्रायणीयादिषु धर्मानुष्ठानं सुकरं भवति' इत्यर्थः। तस्मात्कालार्थः संयोगः ॥ २४ ॥ २५ ॥

(सप्तदशे जातेष्टिन्यायान्तर्गते वैश्वानरेष्टेः पुत्रगतफलकताधिकरणे सूत्रे ३८–३९)।

फलसंयोगस्त्वचोदिते न स्याद्शेषभूतत्वात् ॥ ३८ ॥

---

१ क. सोमस्य योग°। २ ग. घ. छ. °लक्षणे क°। ३ ग. घ. ङ. °त्वाभावा°। ४ ग. घ. ङ. तदुप°। ५ ग. घ. चरे। ६ ग. घ. चरे। ७ क. °दिरा°। ८ ग. घ. ङ. °णीयाप्रा°।

अङ्गानां तूपघातसंयोगो निमित्तार्थः ॥ ३९ ॥

सप्तदशाधिकरणमारचयति—

वैश्वानरेष्ट्या पूतत्वं पितुः पुत्रस्य वाऽग्रिमः ।
कर्तुरेव फलं युक्तं कर्तृत्वं पितुरेव हि ॥ २६ ॥
जाते यस्मिन्निष्टिमेतां निर्वपेत्तस्य पूतता ।
तस्येप्सितं पितुस्तेन पिता तत्र प्रवर्तते ॥ २७ ॥

काम्येष्टिकाण्डे 'वैश्वानरं द्वादशकपालं निर्वपेत्पुत्रे जाते' इति प्रकृत्य श्रूयते—'यस्मिञ्जात एतामिष्टिं निर्वपति पूत एव तेजस्व्यन्नाद इन्द्रियावी पशुमान्भवति' इति । तत्र—पितुः प्रबुद्धस्य कर्तृत्वम्, न तु मुग्धस्य पुत्रस्य । ततोऽनुष्ठानफलयोर्वैयधिकरण्यपरिहाराय पितुरेव पूतत्वादि फलम्—इति चेत् ।

मैवम् । 'यस्मिञ्जाते निर्वपति स पूतः' इति वाक्येन फलस्य पुत्रसंबन्धावगमात् । न च—अत्र निष्फलस्य पितुरप्रवृत्तिः—इति वाच्यम् । पुत्रनिष्ठपूतत्वादेरीप्सितत्वेन स्वफलबुद्ध्या प्रवृत्तिसंभवात् । तस्मात्—पुत्रस्य पूतत्वादिकम् ॥२६॥२७॥

( अष्टादशे जातेष्टिन्यायान्तर्गते वैश्वानरेष्टेर्जातकर्मोत्तरकालताधिकरणे वर्णकान्तरेणोक्तमेव सूत्रम्— ) ।

अङ्गानां तूपघातसंयोगो निमित्तार्थः ॥ ३९ ॥

अष्टादशाधिकरणमारचयति—

जन्मानन्तरमेवेष्टिर्जातकर्माणि वा कृते ।
निमित्तानन्तरं कार्यं नैमित्तिकमतोऽग्रिमः ॥ २८ ॥
जातकर्माणि निर्वृत्ते स्तनप्राशनदर्शनात् ।
प्रागेवेष्टौ कुमारस्य विपत्तेरूर्ध्वमस्तु सा ॥ २९ ॥

पुत्रजन्मनो वैश्वानरेष्टिनिमित्तत्वात्, नैमित्तिकस्य कालविलम्बायोगात्, जन्मानन्तरमेवेष्टिः—इति चेत् ।

मैवम् । स्तनप्राशनं तावज्जातकर्मानन्तरं विहितम् । यदि जातकर्मणः प्रागेव वैश्वानरेष्टिर्निरूप्येत, तदा स्तनप्राशनस्यात्यन्तविलम्बात्पुत्रो विपद्येत । तथा सति पूतत्वादिकमिष्टिफलं कस्य स्यात् । तस्मात्—न जन्मानन्तरम्, किंतु जातकर्मण ऊर्ध्वं सेष्टिः ॥ २८ ॥ २९ ॥

---

१ ग. च. 'न्मान्त' । २ ग. च. 'कर्मानन्तरमेव प्राशनम्, प्रागे' । ३ क. ग. च. 'निरूप्ये' । ४ ग. च. ततः । ५ ग. च. 'दिकं मतमि' ।

( एकोनविंशे-जातेष्टिन्यायान्तर्गते वैश्वानरेष्टेराशौचापगमो-
त्तरकालताधिकरणे वर्णकान्तरेणोक्तमेव सूत्रम्- ) ।

अङ्गानां तूपघातसंयोगो निमित्तार्थः ॥ ३९ ॥

एकोनविंशाधिकरणमारचयति-

जातकर्मानन्तरं स्यादाशौचेऽपगतेऽथवा ।
निमित्तसंनिधेराद्यः कर्तृशुद्ध्यर्थमुत्तरः ॥ ३० ॥

यद्यपि जातकर्मानन्तरमेव तदनुष्ठाने निमित्तभूतं जन्म संनिहितं भवति, तथाऽ-
प्यशुचिना कर्त्राऽनुष्ठीयमानमङ्गविकलं भवेत् । जातकर्मणि तु विपत्तिपरिहा-
राय तात्कालिकी शुद्धिः शास्त्रेणैव दर्शिता । ततो मुख्यसंनिधेरवश्यं बाधित-
त्वाच्छुद्धिलक्षणाङ्गवैकल्यं वारयितुमाशौचादूर्ध्वमिष्टिं कुर्यात् ॥ ३० ॥

( विंशे सौत्रामण्याद्यङ्गानां स्वकालकर्तव्यताधिकरणे सूत्रे ४०-४१) ।

प्रधानेनाभिसंयोगादङ्गानां मुख्यकालत्वम् ॥ ४० ॥

अप्रवृत्ते तु चोदना तत्सामान्यात्स्वकाले स्यात् ॥ ४१ ॥

विंशाधिकरणमारचयति-

अग्निं चित्वा यजेत्सौत्रामण्येत्यङ्गेष्टिरीदृशी ।
अङ्गिकाले स्वकाले वा स्यादाद्योऽन्याङ्गवन्मतः ॥ ३१ ॥
निर्वृत्ते चयनादौ तु कर्मान्तरविधानतः ।
स्वकाले चोदकप्राप्तं तदनुष्ठानमास्थितम् ॥ ३२ ॥

'अग्निं चित्वा सौत्रामण्या यजेत' 'वाजपेयेनेष्ट्वा बृहस्पतिसवेन यजेत'
इत्यत्र सौत्रामणीबृहस्पतिसवयोरङ्गत्वं पूर्वमुक्तम् । तथाऽङ्गत्वादङ्गिकालेऽङ्गिना
सह प्रयोक्तव्यम् । इतरेषामङ्गानां तथा प्रयुज्यमानत्वात्-इति चेत् ।

नैवम् । क्त्वाप्रत्ययेन पूर्वकालवाचिना साङ्गे चयनादौ निर्वृत्ते सति पश्चात्कर्मान्त-
रत्वेन सौत्रामण्यादेर्विहितत्वात् । यदि-अङ्गिना सहैकप्रयोगः स्यात्, तदा क्त्वाप्र-
त्ययप्राप्तितः[1] पूर्वोत्तरकालविभागो बाध्येत । न हि-अङ्गिना सह प्रयोक्तव्यानामुखा-
संभरणादीनां वचने निर्वृत्ते पश्चाद्विधानं श्रुतम्-ततः पृथक्प्रयोगेऽवश्यंभाविनि सति
स्वस्वचोदकप्रापितं तदनुष्ठानं युक्तम् । सौत्रामण्या इष्टिप्रकृतिकत्वात्पर्वकालत्वे[2]
दृकभावः । चयनेन सहैकप्रयोगे तु चर्षण्युखासंभरणादिविधानादन्यस्मिन्दिने
सौत्रामणी प्रसज्येत । तथा बृहस्पतिसवस्य ज्योतिष्टोमविकृतित्वात्, वसन्त-

१ क. 'प्राप्तितः । २ क. ख. 'ष्टिविकृतित्वात्पूर्व' ।

कालश्चोदकप्राप्तः। वाजपेयेन सह प्रयोगैक्ये शरदि वाजपेयस्य विहितत्वाद्-बृहस्पतिसवोऽपि शरदि प्रसज्येत। तस्मात्—अतिदिष्टे पर्वणि वसन्ते च तदनुष्ठानम्। ननु सर्वैरङ्गापूर्वैः प्रधानापूर्वं जनयितव्यम्, इह तु पूर्वकालीनेन साङ्गप्रधानानुष्ठानेन फलापूर्वस्य निष्पन्नत्वादुत्तरकालीनमङ्गं निरर्थकम्—इति चेत्। न। तस्यैवापूर्वस्यानेनाङ्गेन प्राबल्यदशायाः कल्पनीयत्वात्। तस्मात्—नाङ्गिनः कालेऽनुष्ठानम्, किंतु स्वकाले—इति स्थितम्॥ ३१॥ ३२॥

इति श्रीमाधवीये जैमिनीयन्यायमालाविस्तरे चतुर्थाध्यायस्य तृतीयः पादः॥ ३॥

---

| | अत्र पादे | आदितः। |
|---|---|---|
| अधिकरणानि | २० | २९६। |
| सूत्राणि | ५१ | ७७५। |

(अथ चतुर्थाध्यायस्य चतुर्थं पादः)।

(प्रथमे राजसूयेज्यानां देवनाद्यङ्गकत्वाधिकरणे सूत्रे १—२)।

प्रकरणशब्दसामान्याच्चोदनानामनङ्गत्वम्॥ १॥

अपि वाऽङ्गमनिज्याः स्युस्ततो विशिष्टत्वात्॥ २॥

चतुर्थपादे प्रथमाधिकरणमारचयति—

राजसूयेऽनुमत्यादि देवनादि च ते उभे।
मुख्ये उतैकमुख्यत्वं स्यादाद्यः प्रक्रियैक्यतः॥ १॥
यागानां राजसूयत्वादङ्गित्वं फलवत्त्वतः।
देवनाद्यफलं यत्तदङ्गं फलवतो यजेः॥ २॥

राजसूयप्रकरणे यागरूपा अनुमत्यादयो बहवः श्रुताः—'अनुमत्यै पुरोडाशमष्टाकपालं निर्वपति' 'नैर्ऋतमेककपालम्' 'आदित्यं चरुं निर्वपति' 'आग्नावैष्णवमेकादशकपालम्' इत्यादयः। यथैता इष्टयः, तथा पशवोऽपि श्रुताः—'आदित्यां मल्हां गर्भिणीमालभते,[1]' 'मारुतीं पृश्निम्[2]' 'पष्ठौहीमश्विभ्याम्' इत्यादि। मल्हा मणिला[3] गलस्तनयुक्तेत्यर्थः। तस्या अदितिर्देवता। पृश्निरल्पतनुः। तस्या मरुतो देवता। यावता वयसा वर्षत्रयरूपेण पृष्ठे भारं वोढुं

---

१ ग. च. °मालभेत। २ ग. च. °म्' 'पृष्ठौही°। ३ क. मनितिका। ख. मला। ग. च. मणिगला।

शक्तिर्भवति, तावद्वयस्का प्रष्ठौही । तस्या आश्विनौ देवता । एवमभिषेचनीयदशपेयादयः सोमयागाः श्रुताः । तथा 'वल्मीकवपायां होमः' इत्यादयो दर्विहोमाः। यथैत इष्टिपशुसोमदर्विहोमाश्चतुर्विधा यागरूपाः, एवमयागरूपा अपि द्यूतादयः श्रुताः—'प्रष्ठौहीं दीव्यति' 'अक्षैर्दीव्यति' 'राजन्यं जिनाति' 'शौनःशेपमा ख्यापयति' इत्यादयः। तत्र यागा यथा मुख्याः,तथा देवनादीनामपि मुख्यत्वं युक्तम् । प्रकरणपाठस्योभयत्र समानत्वात्—इति प्राप्ते,

ब्रूमः—'राजा स्वाराज्यकामो राजसूयेन यजेत' इत्यत्राऽऽख्यातवाच्यायां भावनायां धात्वर्थो यागः करणम् । राजसूयशब्दश्चाप्रसिद्धार्थत्वाद्यागसामानाधिकरण्येन तन्नामधेयं भवति । तथा सति 'राजसूयेन यागेन स्वाराज्यं भावयेत्' इति वाक्यार्थपर्यवसानादनुमत्यादीनां यागानामेव फलवत्त्वादङ्गित्वम्, तत्संनिधौ श्रूयमाणमफलं देवनादिकं यागाङ्गम् ॥ १ ॥ २ ॥

( द्वितीये देवनस्य कृत्स्नराजसूयाङ्गताधिकरणे सूत्रे ३—४ ) ।

मध्यस्थं यस्य तन्मध्ये ॥ ३ ॥ सर्वासां वा समत्वाच्चोदनातः स्यान्नहि तस्य प्रकरणं देशार्थमुच्यते मध्ये ॥ ४ ॥

द्वितीयाधिकरणमारचयति—

एकस्यैवाभिषेच्यस्य तदङ्गं निखिलस्य वा ।
राजसूयस्यापकर्षादाद्यः प्रक्रिययोत्तरः ॥ ३ ॥

यदेतत्—देवनादिकमङ्गम्—इत्युक्तम्, तदेतदभिषेचनीयस्य सोमयागस्यैकस्यैवाङ्गम् । कुतः । अपकर्षात् । यद्यपि—अभिषेचनीयविधेरूर्ध्वं तत्संनिधौ देवनादयः समाम्नाताः, तथाऽपि—अभिषेचनीयमध्ये तेऽपकृष्यन्ते । 'माहेन्द्रस्य स्तोत्रं प्रत्यभिषिच्यते' इति वाक्येन राज्ञो यजमानस्याभिषेको माध्यंदिनसवने स्तोत्रकालेऽपकृष्यते । तस्मिन्नपकृष्टे सति ततः पूर्वमाम्नातानां देवनादीनामर्थसिद्धोऽपकर्षः । ततो माहेन्द्रस्तोत्रादिवदभिषेचनीयप्रयोगान्तःपातित्वाद्देवनादिकमभिषेचनीयस्यैवाङ्गम्—इति प्राप्ते,—

ब्रूमः—किं तदङ्गत्वे संनिधिः प्रमाणम्, किंवा प्रयोगपरिकल्पितमवान्तर-

१ ग. च. पृष्ठोही । २ क. हविर्होमाः । ३ ग. च. °माः श्रु° । ४ क. ख. °स्यैवा° । ग. च. °स्यैकस्याङ्ग° । ५ ग. च. छ. °दय आम्ना° । ६ क. ख. °मां विद्° । ७ ग. च. °स्तोत्रव° ।

प्रकरणम् । उभयथाऽपि प्रत्यक्षस्य महाप्रकरणस्य प्रबलत्वाद्देवनादिकं राजसूयस्याङ्गम् । राजसूयशब्दश्चानुमत्यादीन्सर्वान्यागानभिधत्ते । तस्मात्सर्वेषामेतदङ्गम् । अनुष्ठानं तु राजसूयमध्ये क्वचिदपेक्षितमिति वचनबलादभिषेचनीयगतमाहेन्द्रस्तोत्रकाले तदनुष्ठीयते ॥ ३ ॥

( तृतीये साम्यादीनामुपसत्कालकत्वाधिकरणे सूत्रे ५—६ ) ।

**प्रकरणाविभागे च विप्रतिषिद्धं ह्युभयम् ॥ ५ ॥**

**अपि वा कालमात्रं स्याददर्शनाद्विशेषस्य ॥ ६ ॥**

तृतीयाधिकरणमारचयति—

**किं पुरस्तादुपसदां सौम्येन प्रचरेदिति ।**
**अङ्गाङ्गिभावः कालो वा वाक्याद्यः प्रतीयते ॥ ४ ॥**
**पुरस्तादिति कालोऽत्र भाति कालविधिस्ततः ।**
**नाङ्गं कस्यापि सौम्यादि प्रधानमितरेष्टिवत् ॥ ५ ॥**

राजसूये संसृच्छब्दवाच्यान्याग्नेयाष्टाकपालादीनि दश हवींष्याम्नातानि । तेष्वष्टमनवमदशमानि सौम्य—त्वाष्ट्—वैष्णवानि । तद्विषयमिदं वाक्यमाम्नायते— ‘ पुरस्तादुपसदां सौम्येन प्रचरन्ति, अन्तरा त्वाष्ट्रेण, उपरिष्टाद्वैष्णवेन ’ इति । योऽयं राजसूये सोमयागः,तस्मिन्नतिदिष्टानामुपसदामादिमध्यावसानेषु सौम्यादीनां त्रयाणामनुष्ठानमनेन वाक्येन चोद्यते । ततो वाक्यात्सौम्यादीन्युपसदामङ्गानि— इति प्राप्ते,

**ब्रूमः—** ‘ उपसदाम् ’ इति षष्ठ्याः× कालवाचिना ‘ पुरस्तात् ’ इति शब्देनान्वयात् । सौम्यादीनां कालविशेषसंबन्धपरमिदं वाक्यम्, न त्वङ्गाङ्गिभावपरम् । ततो न कस्याप्यङ्गं सौम्यादिकम्, किंतु—अनुमत्यादिवत्प्रधानम् ॥४॥५॥

(चतुर्थे—आमनहोमानां सांग्रहण्यङ्गताधिकरणे सूत्रम्—) ।

**फलवद्वोक्तहेतुत्वादितरस्य प्रधानं स्यात् ॥ ७ ॥**

चतुर्थाधिकरणमारचयति—

**मुख्यताऽऽमनहोमस्य सांग्रहण्यङ्गताऽथवा ।**
**मुख्यत्वमविरुद्धत्वात्फलाय स्यात्तदङ्गता ॥ ६ ॥**

---

× सर्वत्र विसर्गरहितः पाठः ।

---

१ ग. च. °मिदमा° ।

काम्येष्टिकाण्डे श्रूयते—'वैश्वदेवीं सांग्रहणीं× निर्वपेद्ग्रामकामः' इति। तत्र—आमनहोमाः श्रुताः—'आमनमस्य—आमनस्य देवाः—इति तिस्र आहुतीर्जुहोति' इति। त एत आमनहोमाः सांग्रहण्येष्ट्या सह समप्रधानभूताः। न हि तेषां मुख्यत्वे कश्चिद्विरोधोऽस्ति। दृष्टं ह्याग्नेयादिष्वनुमत्यादिषु च बहूनां मुख्यत्वम्—इति चेत्।

मैवम्। 'दर्शपूर्णमासाभ्यां स्वर्गकामः' इति वाक्येन 'स्वाराज्यकामो राजसूयेन' इति वाक्येन च यथा बहूनां फलसंबन्धावगमः, तथाऽऽमनहोमानाम्। फलसंबन्धाभावे सति प्राधान्यायोगात्। 'सांग्रहणीं निर्वपेद्ग्रामकामः' इति वाक्यं तु सांग्रहण्या एव फलसंबन्धं बोधयति, न त्वामनहोमानाम्। तस्मात्फलवत्याः सांग्रहण्याः संनिधावाम्नाता अफला आमनहोमास्तदङ्गम् ॥६॥

( पञ्चमे दधिग्रहस्य नित्यताधिकरणे सूत्राणि ८—११ )।

दधिग्रहो नैमित्तिकः श्रुतिसंयोगात् ॥ ८ ॥
नित्यश्च ज्येष्ठशब्दात् ॥ ९ ॥ सार्वरूप्याच्च
॥ १० ॥ नित्यो वा स्यादर्थवादस्तयोः
कर्मण्यसंबन्धाद्भङ्क्तित्वाच्चान्तरायस्य ॥११॥

पञ्चमाधिकरणमारचयति—

नित्यनैमित्तिकत्वे वा नित्यतैव दधिग्रहे।
देवान्तरायाज्ज्यैष्ठ्याच्च स्यादस्योभयरूपता ॥ ७ ॥
निमित्तत्वद्योतिनोऽत्र यदिशब्दादयो न हि।
अतोऽस्य न निमित्तत्वं केवला नित्यतोचिता ॥ ८ ॥

ज्योतिष्टोमे श्रूयते—'यां वै कांचिदध्वर्युर्यजमानश्च देवतामन्तरीतः, तस्या +आवृश्च्येते। यत्प्राजापत्यं दधिग्रहं गृह्णाति, शमयत्येवैनाम्' इति सोऽयं दधिग्रहो नित्यो नैमित्तिकश्चेत्युभयात्मकः। कुतः। आकारद्वयसाधकसद्भावात्। देवतान्तरायेण तद्देवताक्षोभमनुसन्धस्य ग्रहेण शमनाभिधानात्। अन्तरायो निमित्तम्, ग्रहो नैमित्तिक इति प्रतिभाति। तथा ज्येष्ठत्वमाम्नातम्—'ज्येष्ठो वा एष ग्रहाणाम्' इति।

× कलिकातामुद्रितशाबरभाष्यपुस्तके तु 'सांग्रहायणीम्' इति पाठ उपलभ्यते।
+ आवृश्च्येत' इति शाबरभाष्ये पाठः।

१ क. ख. °वृश्च्येते।

न्येहत्वं नाम प्रशस्तत्वम् । तच्च नित्यत्वे सत्युपपद्यते । नैमित्तिकस्य पाक्षिकत्वादप्रशस्तत्वम् । तस्मात्—हेतुद्वयबलादुभयात्मकः—इति चेत् ।

मैवम् । देवतान्तरायस्य निमित्तत्वाभावात् । निमित्तत्वे यदिशब्द उपलभ्येत, सप्तमी वा श्रूयेत । यच्छब्दो वाऽन्तरायकर्त्रोरध्वर्युयजमानयोः सामानाधिकरण्येन प्रयुज्येत । 'यदि रथंतरसामा सोमः स्यादैन्द्रवायवाग्रान्ग्रहान्गृह्णीयात्' 'भिन्ने जुहोति, यो वै संवत्सरमुख्यमभृत्वाऽग्निं चिनुते' इत्यादिषु संप्रतिपन्ननिमित्तेषु तद्दर्शनात् । तस्मात्—केवलनित्यत्वमेव दधिग्रहस्योचितम् । देवतान्तरायतत्समाधानोपन्यासो विधेयदधिग्रहस्तुतयेऽर्थवादः ॥ ७ ॥ ८ ॥

( षष्ठे वैश्वानरस्य नैमित्तिकत्वाधिकरणे सूत्रे १२–१३ ) ।

वैश्वानरस्य नित्यः स्यान्नित्यैः समानसंख्यत्वात्
॥ १२ ॥ पक्षे वोत्पन्नसंयोगात् ॥ १३ ॥

षष्ठाधिकरणमारचयति—

नित्यो नैमित्तिको वा स्याद्यागो वैश्वानराश्रितो ।
नित्यः पुरेव यच्छब्दादविरोधाच्च पश्चिमः ॥ ९ ॥

अग्निचयने श्रूयते—'यो वै संवत्सरमुख्यमभृत्वाऽग्निं चिनुते । यथा सामि गर्भो विपद्यते, तादृगेव तदार्तिमार्छेत् । वैश्वानरं द्वादशकपालं पुरस्तान्निर्वपेत्' इति । उखा पिठरः । तामुखाम् 'युञ्जानः प्रथमं मनः' इत्यादिप्रपाठकाम्नातैर्मन्त्रैः संपाद्य, तस्यामुखायामग्निं निधाय, षडुद्यामे द्वादशोद्यामे वा शिक्ये तामुखामवस्थाप्य, तच्छिक्यं स्वकण्ठे बद्ध्वा, तमुख्यमग्निं संवत्सरं भृत्वा पश्चादिष्टकाभिरग्निश्चेतव्यः । अभरणे त्वपूर्णगर्भपातवद्विनाशः स्यात् । ततो वैश्वानरेष्टिं चयनात्प्रागेव कुर्यात्, इत्यर्थः । अत्राप्यन्तरायवाक्यवदभरणवाक्यस्यार्थवादत्वान्नित्या वैश्वानरेष्टिः—इति चेत् ।

मैवम् । 'यः पुमानभृत्वाऽग्निं चिनुते, स निर्वपेत्' इति कर्तृसमानाधिकृतयच्छब्दबलादभरणेष्ट्योर्निमित्तनैमित्तिकभावावभासात् । किंच दधिग्रहस्य नित्यस्यैव पाक्षिकत्वरूपं नैमित्तिकत्वं विरुद्धम् । इह तु नित्यत्वे प्रमाणाभावादेकमेव नैमित्तिकत्वमित्यविरोधः ॥ ९ ॥

१ ग. च. °र्वपति " इ° । २ क. ख. °भृत्वा चि° । ३ क. °बाधा° । ४ ग. च. °स्पष्ट° ।

( सप्तमे षष्ठाचितेर्नैमित्तिकत्वाधिकरणे सूत्राणि १४—१८ )।

षष्ठाचितिः पूर्ववत्त्वात् ॥ १४ ॥ ताभिश्च तुल्यसंख्यानात् ॥ १५ ॥ अर्थवादोपपत्तेश्च ॥ १६ ॥ एकाचितिर्वा स्यादपवृक्ते हि चोद्यते निमित्तेन ॥ १७ ॥ विप्रतिषेधात्ताभिः समानसंख्यम् ॥ १८ ॥

सप्तमाधिकरणमारचयति—

नित्या षष्ठी चितिर्नो वा पञ्चापेक्षत्वतोऽग्रिमः।
अपवृक्तावप्रतिष्ठानिमित्तीकृतितोऽन्तिमः ॥ १० ॥

अग्नौ श्रूयते—'संवत्सरो वा एनं प्रतिष्ठायै नुदते, यो अग्निं चित्वा न प्रतितिष्ठति, पञ्च पूर्वाश्चितयो भवन्ति, अथ षष्ठीं चितिं चिनुते' इति। लाङ्गलेन कृष्टे व्याममात्रे भूप्रदेशे नानाविधाभिरिष्टिकाभिः पक्ष्याकारेण स्थानं निष्पाद्यते, सेयं चितिः। तादृश्यः पञ्च चितयः पूर्वाः क्रियन्ते। ततः षष्ठी चितिः। तत्र 'षण्णां पूरणी षष्ठी' इति व्युत्पत्तौ पूर्वाः पञ्च चितीरपेक्षते। अन्यथा षट्संख्यापूरकत्वासंभवात्। तस्मात्—एकप्रयोगनियमादितरचितिवन्नित्या—इति चेत्।

मैवम्। 'अग्निं चित्वा' इति पूर्वाभिरेव पञ्चभिश्चितिभिर्नित्यस्याग्निचयनस्य समाप्तौ सत्यां पश्चात्—'योऽत्र न प्रतितिष्ठति, असौ षष्ठीं चिनुते' इति कर्तृसमानाधिकरणेन यच्छब्देनाप्रतिष्ठां निमित्तीकृत्य विधानात्षष्ठी नैमित्तिकी। ततः—पञ्चचितिको नित्योऽग्निः, नैमित्तिकस्त्वेकचितिकः, इति प्रयोगैक्यम्। पूरणप्रत्ययस्त्वभिधानापेक्षयोपपद्यते। 'पूर्वाः पञ्च चितयोऽभिहिताः। अथाभिधास्यमानां षष्ठीं चितिं चिनुते, इति वचनव्यक्तिः ॥१०॥

( अष्टमे पिण्डपितृयज्ञस्यानङ्गताधिकरणे सूत्राणि १९—२१ )।

पितृयज्ञः स्वकालत्वादनङ्गं स्यात् ॥१९॥ तुल्यवत्प्रसंख्यानात् ॥२०॥प्रतिषिद्धे च दर्शनात् ॥२१॥

अष्टमाधिकरणमारचयति—

क्रत्वङ्गं स्यान्न वा पिण्डपितृयज्ञः क्रतौ हि सः।
अमावास्योक्तितो नैवं तत्कालोक्तेः पुमर्थता ॥ ११ ॥

---

१ ख. ग. घ. कृष्ट्या'।

इदमाम्नायते—'अमावास्यायामपराह्णे पिण्डपितृयज्ञेन चरन्ति' इति । तत्र-अमावास्याशब्दवाच्ये कर्मणि विधीयमानत्वादयं पिण्डपितृयज्ञः क्रत्वङ्गम्—इति चेत् ।

नैवम् । अमावास्याशब्दस्य कालवाचित्वात् । कर्मणि त्वयं शब्दो लाक्षणिकः । न च—वाक्येन क्रत्वङ्गत्वाभावेऽपि प्रकरणेन तदस्तु—इति वाच्यम् । स्वस्यानारभ्याधीतत्वात् । तस्मात्—अयं पुरुषार्थः ॥ ११ ॥

( नवमे रशनाया यूपाङ्गताधिकरणे सूत्राणि २२—२४ ) ।

पश्वङ्गं रशना स्यात्तदागमे विधानात् ॥२२॥ यूपाङ्गं वा तत्संस्कारात् ॥२३॥ अर्थवादश्च तदर्थवत् ॥२४॥

नवमाधिकरणमारचयति—

रज्जुर्द्वितीया पश्वर्था यूपार्था वाऽन्वयात्पशौ ।
पश्वर्था त्रिवृता यूपं परिवीयेति यूपगा ॥ १२ ॥

ज्योतिष्टोमे श्रूयते—'आश्विनं ग्रहं गृहीत्वा त्रिवृता यूपं परिवीयाऽऽग्नेयं सवनीयं पशुमुपाकरोति' इति । तत्र—सवनीयपशोरग्नीषोमीयविकृतित्वाच्चोदकप्राप्तं यूपपरिव्याणं कालोपलक्षणार्थमनूद्य परिव्याणोत्तरकाले त्रिवृद्रशनोपलक्षितपशोरुपाकरणं विधीयते । ततोऽत्र रशनायाः पश्वन्वयात्पशुबन्धनेन पशोरितस्ततोऽपक्रमणनिवारणरूपदृष्टार्थलाभाच्च पश्वर्था रशना—इति चेत् ।

नैवम् । 'त्रिवृता' इति तृतीयया 'यूपम्' इति द्वितीयया च शेषशेषिभावावगमात्, अव्यवहितान्वयलाभाच्च रशना यूपार्था । कालस्तु 'आश्विनं ग्रहं गृहीत्वा' इत्यनेनैवोपलक्षितः । पश्वनपक्रमणवद्यूपदार्ढ्यमपि दृष्टमेव प्रयोजनम् । न च—परिव्याणेन दार्ढ्यं चोदकादेव सिद्धम्—इति वाच्यम् । तस्मिन्सिद्धे सति पुनर्विधानादेव द्वितीयया रशनया परिव्याणान्तराङ्गीकारात् । तस्मात्—इयं द्वितीया रशना यूपार्था ॥ १२ ॥

( दशमे स्वरोः पश्वङ्गताधिकरणे सूत्राणि २५—२८ ) ।

स्वरुश्चाप्येकदेशत्वात् ॥२५॥ निष्क्रयश्च तदङ्गवत् ॥ २६ ॥ पश्वङ्गं वा तदर्थः स्यात् ॥ २७ ॥

---

१ क. ख. °पशावुपा° । २ ख. ग. च. छ. °तो र° । ३ ग. छ. च. °रुकरू° । ४ ग. च. छ. °या रे° । ५ ग. च. दीर्घे । ग. च. छ. °दार्ढ्यमतिदेशाद्दे° । ६ ग. च. छ. °स्मिन्सति ।

भक्त्या निष्क्रयवादः स्यात् ॥ २८ ॥

द्वादशाधिकरणमारचयति—

स्वरुर्यूपे पशौ वाऽङ्गं यूपस्येत्युक्तितोऽग्रिमः ।
स्वरुणा पशुमञ्ज्यादित्युक्तेः पश्वङ्गता स्फुटा ॥ १२ ॥

अग्नीषोमीयपशौ श्रूयते—'यूपस्य स्वरुं करोति' 'स्वरुणा पशुमनक्ति' इति । तत्र—स्वरोर्यूपसंबन्धाभिधानाद्यूपाङ्गत्वम्—इति चेत् ।

मैवम् । 'स्वरुणा पशुम्' इति तृतीयया द्वितीयया चाङ्गाङ्गिभावावगतो संबन्धसामान्यवाचिन्याः षष्ठ्या यूपीयच्छेदनजन्यत्वाभिप्रायेणापि नेतुं शक्यत्वात् । तस्मात्—स्वरुः पश्वङ्गम् ॥ १२ ॥

( एकादशे—आघारादीनामङ्गताधिकरणे सूत्राणि २९–३८ ) ।

दर्शपूर्णमासयोरिज्याः प्रधानान्यविशेषात् ॥ २९॥ अपि वाऽङ्गानि कानिचित्, येष्वङ्गत्वेन संस्तुतिः सामान्यो ह्यभिसंबन्धः ॥३०॥ तथा चान्यार्थदर्शनम् ॥३१॥अविशिष्टं तु कारणं प्रधानेषु गुणस्य विद्यमानत्वात् ॥ ३२ ॥ नानुक्तेऽन्यार्थदर्शनं परार्थत्वात् ॥३३॥ पृथक्त्वे त्वभिधानयोर्निवेशः, श्रुतितो व्यपदेशाच्च, तत्पुनर्मुख्यलक्षणं यत्फलवत्त्वम्, तत्संनिधावसंयुक्तं तदङ्गं स्यात्, भागित्वात्कारणस्याश्रुतश्चान्यसंबन्धः ॥ ३४ ॥ गुणाश्च नामसंयुक्ता विधीयन्ते नाङ्गेषूपपद्यन्ते ॥ ३५ ॥ तुल्या च कारणश्रुतिरन्यैरङ्गाङ्गिसंबन्धः ॥ ३६ ॥ उत्पत्तावभिसंबन्धस्तस्मादङ्गोपदेशः स्यात् ॥ ३७ ॥

१ ग. च. ञ. स्फुटम् । २ ग. च. यूपाङ्गच्छे° ।

तथा चान्यार्थदर्शनम् ॥ ३८ ॥

एकादशाधिकरणमारचयति—

आघारादेश्च मुख्यत्वं न वाऽऽग्नेयादिवत्तु तत् ।
षण्मुख्या नामतः सिद्धाः शेषा अन्येऽङ्गसंस्तुतेः ॥१४॥

दर्शपूर्णमासयोराघाराज्यभागप्रयाजानुयाजादयः कालसंयोगमन्तरेणाऽऽम्नाताः । आग्नेयादयः षड्यागाः कालसंयोगेन चोदिताः । तत्र—आग्नेयादीनां यथा प्राधान्यमङ्गीकृतम्, तथैवाऽऽघारादीनामप्यङ्गीकर्तव्यम् । यथा राजसूये परस्परविलक्षणानामिष्टिपशुसोमानां बहूनां समप्राधान्यम्, तद्वत् । एकप्रकरणपाठश्चो-भयत्रापि समानः । तस्मात्—आघारादीनामाग्नेयादीनां च समप्राधान्यम्-इति प्राप्ते—

ब्रूमः—'राजा स्वाराज्यकामो राजसूयेन यजेत' इत्यत्र राजसूयशब्दो राज-संबन्धात्प्रवर्तमानो राजकर्तृकाणामेकप्रकरणपठितानां सर्वेषां यागानां नामधेयं भवति । दर्शपूर्णमासशब्दौ तु कालवाचिनौ सन्तौ कालसंयोगेन विहितानामेवाऽऽ-ग्नेयादीनां षण्णां यागानां नामधेयतां प्रतिपद्येते । ततः 'दर्शपूर्णमासाभ्यां स्वर्ग-कामो यजेत' इति वाक्येन तन्नामधेयवशादाग्नेयादयः षडेव यागाः फलसंबन्धित्वेन प्रतीयमाना मुख्याः । अन्ये त्वाज्यभागाघारादयस्तन्नामरहिता निष्फला आग्ने-यादीनां शेषाः । एवं सत्यङ्गत्वेन स्तुतिरुपपद्यते । 'चक्षुषी वा एते यज्ञस्य, यदाज्यभागौ' इत्याज्यभागौ यज्ञशरीरस्याङ्गिनोऽङ्गत्वेन स्तूयेते[1] । 'यत्प्रयाजानुया-जा इज्यन्ते वर्म वा एतद्यज्ञाय क्रियते' इति यज्ञशरीरोपकारकवर्मत्वेन प्रयाजा-नुयाजाः स्तूयन्ते[2] । एवमाघारादिषूदाहार्यम् । एतच्च सति सादृश्ये संभवति । तस्मात्—आघारादीनां नास्ति मुख्यत्वम् ॥ १४ ॥

(द्वादशे ज्योतिष्टोमे दीक्षणीयादीनामङ्गताधिकरणे सूत्राणि ३९–४१)।

ज्योतिष्टोमे तुल्यान्यविशिष्टं हि कारणम् ॥ ३९ ॥
गुणानां तूत्पत्तिवाक्येन संबन्धात्कारणश्रुतिः, त-स्मात्सोमः प्रधानं स्यात् ॥४०॥ तथा चान्यार्थदर्श-नम् ॥ ४१ ॥

द्वादशाधिकरणमारचयति—

मुख्या न वा दीक्षणीया मुख्या स्यात्सोमसाम्यतः ।
ज्योतींषि यस्य स्तोमाः स्युरिति सोमैकमुख्यता ॥ १५ ॥

१ ग. च. श्रूयेते । २ ग. च. श्रूयन्ते ।

'ज्योतिष्टोमेन स्वर्गकामो यजेत' इत्यस्य प्रकरणे—ऐन्द्रवायवग्रहादयः सोमयागाः, दीक्षणीयादीष्टयः, अग्नीषोमीयादिपशवः, आम्नाताः। तत्र—आग्नेयादिपक्षपातिदर्शपूर्णमासनामवज्ज्योतिष्टोमनाम्नः सोमपक्षपाते हेत्वभावेन राजसूयनामवत्प्रकृतसर्वयागसाधारणत्वात्, सोमसमानानां दीक्षणीयादीनामप्यस्ति मुख्यत्वम्—इति चेत्।

मैवम्। सोमयागपक्षपाते हेतुसद्भावात्। 'ज्योतींषि स्तोमा यस्य यज्ञस्य सोऽयं ज्योतिष्टोमः' इति हि तद्व्युत्पत्तिः। अत एव ब्राह्मणम्—'त्रिवृत्, पञ्चदशः, सप्तदशः, एकविंशः, एतानि वाव तानि ज्योतींषि य एतस्य स्तोमाः' इति। स्तोमानां ज्योतिष्ट्वं यज्ञप्रकाशकत्वम्। न चेष्टयः पशवो वा त्रिवृदादिस्तोमयुक्ताः प्रतिभासन्ते। तस्मात्--ज्योतिष्टोमनाम्ना सोमयागानामेव फलसंबन्धावगमादफला इष्टिपशवो न मुख्या इति सोमयागानामेव प्राधान्यम् ॥ १५ ॥

इति श्रीमाधवीये जैमिनीयन्यायमालाविस्तरे चतुर्थाध्यायस्य चतुर्थं पादः ॥ ४ ॥

चतुर्थोऽध्यायश्च समाप्तः ॥

| | अत्र पादे | आदितः। |
|---|---|---|
| अधिकरणानि | १२ | ३०८। |
| सूत्राणि | ४१ | ८१६। |

१ ख. ग. घ. ङ. 'शब्दाऽऽम्ना'। २ क. 'स्य सोऽ'। ३ ग. च. 'नि य ता'। ४ ग. घ. 'माम्नां सो'।

( अथ पञ्चमाध्यायस्य प्रथमः पादः ) ।

द्वितीयादित्रये प्रोक्तं भेदशेषप्रयुक्तिभिः ।
अनुष्ठेयमनुष्ठानक्रमः पञ्चम ईर्यते ॥ १ ॥

अनेन चतुर्थपञ्चमयोरध्याययोः पौर्वापर्यं निरूपितम् । द्वितीयाध्याये कर्मभेदनिरूपणात्पृथगनुष्ठेयत्वमवगतम् । तृतीयाध्याये शेषनिरूपणात्—'निवेशनः संगमनः' इति मन्त्रेण वह्न्युपस्थानमनुष्ठेयम्, नत्विन्द्रोपस्थानम् -इत्याद्यनुष्ठेयव्यवस्थाऽवगता । चतुर्थाध्याये प्रयुक्तिनिरूपणादनुष्ठेयमेव निर्धार्यते--पलाशशाखाछेदनस्य वत्सापाकरणमेव प्रयोजकम्, न तु प्रस्तरेण सह प्रहृतिः प्रयोजिका । तथा सति पौर्णमास्यां वत्सापाकरणाभावे सत्यप्रयोजकप्रहृत्यर्थं शाखाछेदनं न कर्तव्यम्--इति । एवं त्रिभिरध्यायैरनुष्ठेयस्वरूपे निश्चिते सत्यनुष्ठानक्रमस्याऽऽकाङ्क्षितत्वात्पञ्चमेऽध्याये सोऽभिधीयते--

( प्रथमे क्रमनिरूपणाधिकरणे श्रुतिबलीयस्त्वन्याये सूत्रम्— ) ।

श्रुतिलक्षणमानुपूर्व्यं तत्प्रधानत्वात् ॥ १ ॥

पञ्चमाध्यायस्य प्रथमपादे प्रथमाधिकरणे प्रथमवर्णकमारचयति—

पदार्थानां क्रमो नैव नियतोऽथ नियम्यते ।
अमानत्वादनियतिर्नियतिर्वेदमानतः ॥ २ ॥

ये एतेऽनुष्ठेयाः पदार्था गृहपतिब्रह्मोद्गातृहोतृदीक्षादयः, तेषां पदार्थानां नास्ति क्रमनियमः । क्रमबोधकस्य प्रमाणस्याभावात्—इति चेत् ।

नैवम् । पदार्थेषु तदनुष्ठाने च यथा वेदः प्रमाणम्, तथैव क्रमेऽपि वेदः प्रमाणम् । तस्मात्क्रमस्य नियतत्वात्क्रमनिरूपकः पञ्चमाध्याय आरम्भणीयः॥१।२॥

द्वितीयवर्णकमारचयति—

न विधेयो विधेयो वा क्रमो नैवाक्रियात्वतः ।
क्रियाविशेषणत्वेन द्रव्यवद्युज्यते विधिः ॥ ३ ॥

यद्यपि क्रमस्य क्रियात्वाभावात्स्वरूपेण न विधियोग्यता, तथाऽपि 'दध्ना जुहोति' इत्यादावक्रियारूपं दधिद्रव्यं क्रियाविशेषणं सद्विधीयते—'दधिसाधनकं होमं कुर्यात्' इति । एवम् 'अनेन क्रमेण कर्तव्यम्' इति क्रियाविशेषणतया क्रमो विधीयताम् ॥ ३ ॥

तृतीयवर्णकमारचयति—

---

१ ख. ङ. °वशेषितवनि° । २ ख. ग. च. छ. °श्चमाध्या° । ३ क. वेदाः । ४ क. नेष्वः ।

दीक्षयित्वा गृहपतिं ब्रह्माणं दीक्षयेदिति ।
क्रमः पाठाद्विधेयो वा पाठाद्दीक्षाविधिः श्रुतेः ॥ ४ ॥
द्वादशाहस्य सत्रत्वात्सर्वेषां याजमान्यतः ।
चोदकेनैव दीक्षायाः प्राप्तेः क्रमविधिर्मतः ॥ ५ ॥

द्वादशाहे श्रूयते—'अध्वर्युर्गृहपतिं दीक्षयित्वा ब्रह्माणं दीक्षयति, तत उद्गातारम्, ततो होतारम्' इति । तत्र—गृहपत्यादिदीक्षाणां क्रमः पाठादवगम्यते । विधेयत्वं तु गृहपत्यादिदीक्षाणामेव । कुतः । 'दीक्षयेत्' इति श्रुत्या तद्विध्यवगमात् । न हि श्रौतस्य विधेयस्य संभवे सति वाक्यार्थरूपः क्रमो विधातुमुचितः । तस्मात्—न विधेयः—इति प्राप्ते—

ब्रूमः—द्वादशाहे सत्रे 'य ऋत्विजः, ते यजमानाः' इति ब्रह्मादीनां सर्वेषामृत्विजां यजमानत्वे सति चोदकप्राप्ता दीक्षा न विधातव्या । ततो दीक्षामनूद्याऽऽख्यातेन क्रमो विधीयते । यद्यप्यत्र क्रमस्य वाचकः शब्दो नास्ति, तथाऽपि वाक्येन प्रतीयते । स च प्रतीयमानः क्रमो मानान्तरेण कर्तव्यतया प्राप्त्यभावादिह विधीयते[1] । एकस्य कर्तुर्युगपदनेकपदार्थानुष्ठानान्यथानुपपत्त्या क्रमस्य कर्तव्यताऽपि प्राप्तेव—इति चेत् । न । विशेषस्याप्राप्तत्वात् । व्युत्क्रमेणाप्यनुष्ठातुं शक्यत्वात् । तस्मात्—वाक्यावगतं क्रमविशेषं नियन्तुमयं विधिः ॥४॥५॥

( द्वितीये क्रमस्य क्वचिदार्थिकत्वाधिकरणे सूत्रम्— ) ।

अर्थाच्च ॥ २ ॥

द्वितीयाधिकरणमारचयति—

अग्निहोत्रं जुहोतीति यवागूं पचतीति च ।
क्रमः पाठादर्थतो वा पाठात्सर्वत्र दर्शनात् ॥ ६ ॥
होमद्रव्यसमुत्पत्त्यै पूर्वपाकोऽवगम्यते ।
यवाग्वेति श्रुता होमद्रव्यताऽतोऽर्थतः क्रमः ॥ ७ ॥

गृहपत्यादिदीक्षासु[2] पाठक्रमस्यैवाऽऽदृतत्वदर्शनादिहापि होमपाकयोः पाठात्प्राप्तः क्रम आदरणीयः—इति चेत् ।

नैवम् । द्रव्यमन्तरेण होमासंभवात् । द्रव्यनिष्पत्त्यै पाकस्यैव प्राथमिकत्वावश्यंभावात् । होमद्रव्यत्वं च यवाग्वाः 'यवाग्वाऽग्निहोत्रं जुहोति' इति तृतीययाऽवगम्यते । तस्मात्—पाठक्रमं बाधित्वाऽर्थतः क्रमोऽत्राभ्युपगन्तव्यः ॥६॥७॥

१ ख. च. °प्राप्तेः क्रमे त्वेवं वि° । २ ख. ग. घ. ङ. °क्षाणामनुष्ठ° । ३ ङ. °ते । तत्त्वेक° ।

( तृतीये क्रमस्य क्वचिदनियमाधिकरणे सूत्रम्— ) ।

अनियमोऽन्यत्र ॥ ३ ॥

तृतीयाधिकरणमारचयति—

स्याद्वसन्तादिमन्त्राणां क्रमो नो वाऽन्यवद्भवेत् ।
शाखान्तरे व्यत्ययेन न क्रमो नियतोऽत्र हि ॥ ८ ॥

दर्शपूर्णमासयोर्याजमाने काण्डे प्रयाजानुमन्त्रणमन्त्रा आम्नाताः—'वसन्तमृतूनां प्रीणामि, ग्रीष्ममृतूनां प्रीणामि—' इत्यादयः । तेषां नियतः क्रमोऽभ्युपगन्तव्यः । कुतः । अन्येष्वाग्नेयोपांशुयाजाद्यनुमन्त्रणेषु नियतक्रमदर्शनेनात्रापि क्रमनियमस्य बुद्धिस्थत्वात्—इति चेत् ।

नैवम् । अत्र नियामकाभावात् । न तावदत्र पाठो नियामकः । वसन्तग्रीष्मवर्षाशरद्धेमन्तमन्त्राणामनेन क्रमेण तैत्तिरीयशाखायां पठितानां शाखान्तरे व्यत्ययेन पाठदर्शनात् । नाप्यत्र यवागूपाकवदर्थो नियामकः । वसन्तमन्त्रेण वस्य क्रतुविशेषयाजस्यानुमन्त्रणेऽप्यनुपपत्त्यभावात् । नाप्यत्र लिङ्गं नियामकम् । वसन्तमन्त्रे समिद्योगविषयस्य विशेषस्यादर्शनात् । तस्मात्—अत्र नास्ति नियतः क्रमः ॥ ८ ॥

( चतुर्थे क्रमस्य क्वचित्पाठानुसारिताधिकरणे पाठक्रमन्याये सूत्राणि ४—७ ) ।

क्रमेण वा नियम्येत क्रत्वेकत्वे तद्गुणत्वात् ॥४॥
अशाब्द इति चेत्स्याद्वाक्यशब्दत्वात् ॥ ५ ॥
अर्थकृते वाऽनुमानं स्यात्, क्रत्वेकत्वे परार्थत्वात्, स्वेन त्वर्थेन संबन्धः, तस्मात्स्वशब्दमुच्यते ॥ ६ ॥ तथा चान्यार्थदर्शनम् ॥ ७ ॥

चतुर्थाधिकरणमारचयति—

प्रयाजेषु क्रमो नास्ति विद्यते वा न विद्यते ।
श्रुत्यर्थाभावतो मैवं क्रमः पाठान्नियम्यताम् ॥ ९ ॥

'समिधो यजति' 'तनूनपातं यजति' इत्यादिषु प्रयाजेषु नियतः क्रमो नास्ति । कुतः । क्रमप्रापकप्रमाणाभावात् । यथा गृहपत्यादिदीक्षामुर्वादेनाऽऽख्याश्रुत्या क्रमो विहितः, तथा क्रमविधायिका श्रुतिर्नास्ति । 'यजति' इत्याख्या-

१ ख. घ. °वानुयाजानु° । २ ग. °मोऽत्राभ्यु° । ३ क. °यमतः क° । ४ ङ. °न्त्रे° । ... °बुद्धिर्नैकविषयभागस्य क° । ५ ख. ग. घ. ङ. °वागैकवि° । ६ क. °श्रुत्याश्रय° ।

तेन समिधागादिपदार्थानामन्यतोऽप्राप्तानां विधानात्। यथा च 'दीक्षयित्वा' इति क्त्वाश्रुतिः, 'तत उद्गातारम्' इति पञ्चमीश्रुतिर्वा, तादृश्यपि नात्र श्रुतिरुपलभ्यते। न च पाकहोमयोरिवार्थतः क्रमो वक्तुं शक्यः। समिधागमन्तरेणापि तनूनपाद्यागस्य कर्तुं शक्यत्वात्। तस्मान्नास्त्यत्र क्रमनियमः—इति चेत्।

मैवम्। वाक्यपाठेन प्रतीतस्य क्रमस्य बाधाभावेनाभ्युपेयत्वात्। तस्मादस्ति क्रमनियमः॥ ९॥

( पञ्चमे— { क्रमस्य क्वचित्प्रथमप्रवृत्त्यनुसारिताधिकरणे प्रावृत्तिकक्रमन्याये } सूत्राणि ८-१२)।

प्रवृत्त्या तुल्यकालानां गुणानां तदुपक्रमात् ॥ ८ ॥ सर्वमिति चेत् ॥ ९ ॥ नाकृतत्वात् ॥ १० ॥ क्रत्वन्तरवदिति चेत् ॥ ११ ॥ नासमवायात् ॥ १२ ॥

पञ्चमाधिकरणमारचयति—

उपाकृतानां किं सप्तदशानां यूपबन्धने।
क्रमो नास्त्यस्ति वा नास्ति नियामकविवर्जनात् ॥ १० ॥
आद्यसंस्कृत्यनुष्ठानं यत्क्रमेण स एव हि।
क्रमोऽन्यत्र प्रवृत्तिस्तु क्रमस्यात्र नियामिका ॥ ११ ॥

वाजपेये 'सप्तदश प्राजापत्यान्पशूनालभते' इति विहितानां पशूनामुपाकरणनियोजनादयः संस्काराः कर्तव्याः। तत्र—'ईदृशे पशावुपक्रमः, ईदृशे च समाप्तिः'—इति नियमकारिणः शास्त्रस्याभावादैच्छिकेन क्रमेणोपाकरणरूपः प्रथमः संस्कारोऽनुष्ठितः। उपाकृतानां यूपे नियोजनं संस्कारान्तरं कर्तव्यम्। 'यदानीमीदृशः पशुः प्रथमं नियोक्तव्यः' इति क्रमनियमकारिणां श्रुत्यर्थपाठानामभावान्नास्ति क्रमनियमः—इति चेत्।

मैवम्। उपाकरणे यः क्रमः स्वीकृतः, तस्यैव नियोजनादिसंस्कारेषु स्वीकर्तव्यत्वात्। श्रुत्यर्थपाठा इव प्रथमप्रवृत्तिरपि क्रमं नियन्तुमर्हति। प्रवृत्त्या बुद्धिस्थस्य क्रमस्य त्यागे कारणाभावात्। प्रावृत्तिकक्रमस्वीकारे प्रथमपश्वावुपाकरणनियोजनयोः प्रथमद्वितीयसंस्कारयोर्मध्ये पश्वन्तरेष्वनुष्ठितैः षोडशभिरेवोपाक-

१ ख. ङ. क्रमः। २ क. ख. ग. घ. त्यागका°। ३ ग. घ. °तु। प्रवृत्तक°।

रणपदार्थैर्व्यवधानं भवति । तच्च व्यवधानम् 'सप्तदश' इति विधि-बलादभ्यनुज्ञातम् । प्रावृत्तिकं क्रमं परित्यज्य पशून्तराणां पूर्वं नियोजनं कृत्वा पश्चात्प्रथमपशोर्यदि नियोजनं क्रियेत, तदा द्वात्रिंशत्संख्यैः पदार्थैर्व्यवधानं स्यात् । तत्तु नाभ्यनुज्ञातम् । तस्मात्—प्रवृत्त्या क्रमो नियम्यते ॥ १० ॥ ११ ॥

( षष्ठे क्रमस्य क्वचित्स्थानानुसारिताधिकरणे सूत्रम्— ) ।

स्थानाच्चोत्पत्तिसंयोगात् ॥ १३ ॥

षष्ठाधिकरणमारचयति—

प्राथम्यमग्नीषोमीये साद्यस्क्राख्यक्रतावुत ।
सवनीयेऽग्रिमो यस्मात्प्रकृतौ तदपेक्षितम् ॥ १२ ॥
आश्विनग्रहसामीप्ये सवनीयपशोः स्थितिः ।
निर्णीते तत्क्रमे स्थानाच्छिष्टयोः प्राकृतो नयः ॥ १३ ॥

साद्यस्क्रनामकः कश्चित्सोमयागः । तत्र श्रूयते—'सह पशूनालभते' इति । प्रकृतौ—अग्नीषोमीयः पशुरौपवसथ्ये पूर्वदिन आलभ्यते । सवनीयपशुः सुत्या-दिने प्रातःसवन आश्विनग्रहादूर्ध्वमालभ्यते । अनुबन्ध्यपशुरवभृथादूर्ध्वमालभ्यते । इह तु त्रयोऽपि पशवः सहाऽऽलब्धव्याः । सोऽयं सहालम्भः सुत्यादिन आश्वि-नग्रहादूर्ध्वं सवनीयस्थाने भवति—इत्येतदवश्यमभ्युपेयम् । तथा सति प्रधानसो-मपत्वात्तस्मिन्नालम्भेषु त्रिषु पशुष्वग्नीषोमीयस्य प्रथममुपाकरणम् । कुतः । प्रकृतौ तत्प्राथम्यस्यापेक्षितत्वात्—इति चेत् ।

नैवम् । सवनीयो हि स्वस्थान एव वर्तते । आश्विनग्रहसामीप्यस्य सवनीयस्था-नत्वात् । आश्विने गृहीते सति सवनीय एव बुद्धिस्थो भवति । प्रकृतौ तदानन्तर्यस्य क्लृप्तत्वात् । ततः सवनीयस्य प्राथम्ये स्थानान्निश्चिते सति स्थानभ्रष्टयोरग्नी-षोमीयानुबन्ध्ययोः प्रकृताविव पूर्वोत्तरभावो द्रष्टव्यः ॥१२॥१३॥

( सप्तमे—अङ्गक्रमस्य मुख्यक्रमानुसारिताधिकरणे सूत्रम्— ) ।

मुख्यक्रमेण वाऽङ्गानां तदर्थत्वात् ॥ १४ ॥

सप्तमाधिकरणमारचयति—

स्त्रीपुंसदेवको सारस्वतौ तद्धर्मगः क्रमः ।
नास्त्यस्ति वाऽत्र नास्त्येष तन्नियामकवर्जनात् ॥ १४ ॥

---

१ ख. ग. घ. छ. °मीयं व° । २ छ. नियमे । ज. च. नियता । ३ क. °भिवागः । ४ ग. घ. नास्त्युतास्ति हि ना° ।

याज्यानुवाक्यापाठेन स्त्रीप्राथम्यं हि मुख्ययोः।
मुख्यार्थत्वेन धर्माणां स्यान्मुख्यक्रमतः क्रमः ॥ १५ ॥

चित्रायागे समानां हविषां मध्ये चतुर्थपञ्चमे इत्थमाम्नायेते—'सारस्वतौ भवतः। एतद्वै दैव्यं मिथुनम्' इति। 'सरस्वती च सरस्वांश्च' इति विगृह्य समासे कृते * 'पुमान्स्त्रिया' (पा० सू० १।२।६७) इतिसूत्रेणैकशेषात्'सरस्वन्तौ' इति भवति। तौ देवते ययोर्यागयोस्तौ सारस्वतौ यागौ। एतच्च 'मिथुनम्' इति वाक्यशेषादवगम्यते। तयोर्यागयोर्निर्वापादयो धर्मास्त्वेकत्र प्राप्ताः, तत्र—स्वेच्छया स्त्रीयागस्य पुंयागस्य वा प्रथमं निर्वापः कार्यः। कुतः। प्रत्यर्थंपाठप्रवृत्तिस्थानानामन्यतमस्य नियामकस्याभावात्—इति प्राप्ते,

ब्रूमः—होत्रकाण्डे स्त्रीदेवतायाः पूर्वं याज्यानुवाक्ये एवमाम्नाते—'प्रणो देवी सरस्वती' इति। पश्चात्पुंदेवतायाः 'पीपिवांसं सरस्वतः' इति। अनेन याज्यानुवाक्याक्रमेण मुख्ययोर्द्वयोर्यागयोर्मध्ये स्त्रीयागस्य प्राथम्यमवगम्यते। ततो धर्माणां मुख्ययागार्थत्वान्मुख्यक्रमेणैव क्रमे सति स्त्रीयागस्यैव प्रथमं निर्वापः कार्यः ॥१४॥१५॥

( अष्टमे—अङ्गेषु मुख्यक्रमापेक्षया पाठस्य बलवत्त्वाधिकरणे सूत्रम् )॥
प्रकृतौ तु स्वशब्दत्वाद्यथाक्रमं प्रतीयेत ॥ १५ ॥

अष्टमाधिकरणमारचयति—

उपांशुयाजे पूर्वत्वमग्नीषोमीयकेऽथवा।
धर्मानुष्ठान आद्योऽस्तु मुख्ययोस्तादृशक्रमात् ॥ १६ ॥
युक्तमौषधधर्माणां प्राथम्यं पूर्वपाठतः।
पाठक्रमस्याविलम्बादाज्यधर्मास्तु पश्चिमाः ॥ १७ ॥

दर्शपूर्णमासयोः—उपांशुयाजोऽग्नीषोमीयश्च—इत्येतदुभयं पौर्णमास्यामाम्नातम्। तत्र—उपांशुयाजस्याऽऽज्यं द्रव्यम्। आज्यधर्मा उत्पवनचतुर्गृहीतत्वादयः। अग्नीषोमीयस्य पुरोडाशो द्रव्यम्। तस्य धर्मा निर्वापावघातादयः। तत्र मुख्यौ यागावुपांशुयाजाग्नीषोमीयौ पूर्वोत्तरभाविनौ। तथा सति पूर्वन्यायेन धर्मक्रमस्य मुख्यक्रमाधीनत्वादाज्यधर्माणामनुष्ठाने प्राथम्यम्—इति प्राप्ते—

* समासेऽङ्गीकृते 'ऋचो पन्थानौ' इत्यादौ समासान्तापत्तिः। तथा च भाष्यम्—"समास इति चेत्—स्वरसमासान्तेषु दोषो भवति—'अन्वक्षरान्वाम्नो' समासान्तोदात्तत्वं प्राप्नोति। ऋक् च ऋक् च ऋचौ समासान्ते कृतेऽसारूप्यादेकशेषो न प्राप्नोति' इति। तस्माद्द्वंद्वं समासं बाधित्वैकशेषः—इत्येव भाष्यसिद्धान्तः।

१ ग. घ. 'पाठात्तु स्त्री'। २ क. ग. घ. छ. आम्नाते। ३ ग. घ. 'स्वधामक'।

ब्रूमः—औषधधर्मा निर्वापादयः पूर्वमाम्नाताः, पश्चादाज्यधर्माः। तत्र मुख्यक्रमप्रयुक्तमाज्यधर्माणां प्राथम्यं बाधित्वा पाठक्रमानुसारेणौषधधर्मा एव प्रथममनुष्ठेयाः। पाठक्रमो हि वैदिकैः शब्दैः सहसा प्रतीयते। मुख्यक्रमानुसारी तु क्रम उपपत्त्या कल्पनीयः। तस्मात्—अग्नीषोमीयपुरोडाशार्थेभ्य औषधधर्मेभ्य ऊर्ध्वमाज्यधर्मा अनुष्ठेयाः॥ १६॥ १७॥

( नवमे ब्राह्मणपाठान्मन्त्रपाठस्य बलीयस्त्वाधिकरणे सूत्रम्— )।

मन्त्रतस्तु विरोधे स्यात्प्रयोगरूपसामर्थ्यात्तस्मा-
दुत्पत्तिदेशः सः॥ १६॥

नवमाधिकरणमारचयति—

अग्नीषोमीय आग्नेयात्पूर्वो नो वाऽस्तु पूर्वता।
ब्राह्मणक्रमतो मैवं मन्त्रक्रमबलित्वतः॥ १८॥
स्मृतिक्रमादनुष्ठानं मन्त्राणां स्मारकत्वतः।
प्राबल्यं ब्राह्मणस्यास्ति विधिनाऽपि कृतार्थता॥ १९॥

अग्नीषोमीययागस्तैत्तिरीयब्राह्मणे पञ्चमप्रपाठके द्वितीयानुवाके समाम्नातः—'ताभ्यामेतमग्नीषोमीयमेकादशकपालं पूर्णमासे प्रायच्छत्' इति। आग्नेययागस्तु षष्ठप्रपाठके तृतीयानुवाके समाम्नातः—'यदाग्नेयोऽष्टाकपालोऽमावास्यायां च पौर्णमास्यां चाच्युतो भवति' इति। तत्र—अनुष्ठानस्य ब्राह्मणोक्तविध्यधीनत्वादग्नीषोमीयस्य प्रथममनुष्ठानम्—इति प्राप्ते,—

ब्रूमः—मन्त्रकाण्डे पूर्वं पठिता आग्नेयमन्त्राः। तथा हि—होतृकाण्डे—आज्यभागमन्त्रानुवाकादुत्तरस्मिन्ननुवाके प्रथमम्, 'अग्निर्मूर्धा—' इत्यादिके आग्नेय्यौ याज्यानुवाक्ये आम्नाते। ततः 'प्रजापते न त्वदेतानि' इत्यादिके प्राजापत्ये। ततः 'अग्नीषोमा सवेदसा' इत्यादिके अग्नीषोमीये। आध्वर्यवकाण्डेऽपि—'अग्नये जुष्टं निर्वपामि' 'अग्नीषोमाभ्याम्—' इत्याग्नेयः पूर्वमाम्नातः। यजमानकाण्डेऽपि 'अग्नेरहं देवयज्ययाऽन्नादो भूयासम्' इत्याम्नाय पश्चात् 'अग्नीषोमयोरहं देवयज्यया वृत्रहा भूयासम्' इत्याम्नायते। मन्त्रक्रमश्च प्रबलः। मन्त्रैः स्मृत्वा पश्चादनुष्ठेयत्वात्। ब्राह्मणं त्वमायपदार्थविधिनाऽपि चरितार्थम्। अतोऽनुष्ठानस्मरणायैवोत्पन्नान्मन्त्रान्बाधितुं नालम्—इति मन्त्रक्रमेणाऽऽग्नेयस्यैव प्रथमानुष्ठानम्॥ १८॥ १९॥

---

१ क, ग, च. कल्पितः। २ ङ. 'प्रथमनु'।

(दशमे प्रयोगवचनाच्चोदकस्य बलवत्त्वाधिकरणे सूत्रे १७-१८)।

तद्वचनाद्विकृतौ यथाप्रधानं स्यात् ॥१७॥ विप्र-
तिपत्तौ वा प्रकृत्यन्वयाद्यथाप्रकृति ॥ १८ ॥

दशमाधिकरणमारचयति—

सारस्वताज्ये पूर्वत्वं बार्हस्पत्यचरावुत।
धर्माणामाज्यनिष्ठानां प्राथम्यमुपदेशतः ॥ २० ॥
सक्रमाणां पदार्थानां चोदकप्रापितत्वतः।
प्राथम्यमन्तरङ्गत्वादाग्नेयविकृतौ चरौ ॥ २१ ॥

अध्वरकल्पाभिधायामिष्टौ हविस्त्रयं श्रूयते—'आग्नावैष्णवमेकादशकपालं निर्वपेदभिचरन्' 'सरस्वत्याज्यभागा स्यात्' 'बार्हस्पत्यश्चरुः' इति। अत्र—सारस्वता ये धर्माः, त एव पूर्वमनुष्ठेयाः। कुतः। सारस्वतभागस्य बार्हस्पत्यात्पूर्वमुपदिष्टत्वात्। मुख्यक्रमेण हि धर्माणां क्रमो युक्तः—इति प्राप्ते—

ब्रूमः—न तावदत्राऽऽज्यधर्मा औषधधर्मा वोपदिश्यन्ते। किं तु—चोदकेन प्राप्यन्ते। चोदकश्च सक्रमानेव पदार्थानतिदिशति। प्रकृतौ चौषधधर्माणां प्रथममनुष्ठेयत्वात्। इहापि बार्हस्पत्यचरुधर्मा एव प्रथममनुष्ठेयाः। किंच—आग्नेयस्य प्रथमभाविनो विकृतिर्बार्हस्पत्यचरुः, उपांशुयाजस्य पश्चाद्भाविनो विकृतिः सारस्वतमाज्यम्। अतोऽन्तरङ्गत्वाच्चरुधर्मा एव पूर्वभाविनः ॥ २० ॥ २१ ॥

(एकादशे—विकृतौ कश्चित्प्रकृतिधर्मानतिदेशाधिकरणे
साकमेधीयन्याये सूत्राणि १९-२२)।

विकृतिः प्रकृतिधर्मत्वात्तत्काला स्याद्यथाशिष्टम् ॥ १९ ॥
अपि वा क्रमकालसंयुक्ता सद्यः क्रियेत तत्र विधे-
रनुमानात्प्रकृतिधर्मलोपः स्यात् ॥ २० ॥ कालो-
त्कर्ष इति चेत् ॥ २१ ॥ न तत्संबन्धात् ॥ २२ ॥

एकादशाधिकरणमारचयति—

साकमेधेष्टयस्तिस्रो द्व्यहे स्युः सद्य एव वा।
प्रातरादेर्द्वयोरह्नोः सत्त्वात्प्रकृतिवद्द्व्यहे ॥ २२ ॥

---

१ क. "आग्नाया"। २ क. ग. च. ञ. तत्र। ३ क. ग. घ. "र्लोप"।

साङ्गमुख्यानुरोधेन प्रातरादेर्विधानतः।
श्रौतं सद्यस्त्वमन्यत्तु चोदकात्तेन दुर्बलम् ॥ २३ ॥

चातुर्मास्येषु साकमेधनामके तृतीये पर्वणि श्रूयते—'अग्नयेऽनीकवते प्रातरष्टाकपालं निर्वपेत्। मरुद्भ्यः सांतपनेभ्यो माध्यंदिने चरुम्। मरुद्भ्यो गृहमेधिभ्यः सर्वासां दुग्धे सायमोदनम्' इति। ता एतास्तिस्र इष्टयो द्व्यहकालीनाः। यथा प्रकृतौ पर्वण्यग्न्यन्वाधानादिकम्, प्रतिपदीष्टिः—इति द्व्यहकालीनत्वम्, तद्वत्। ननु प्रातर्माध्यंदिनसायंशब्दैरेकस्मिन्नेवाह्नि त्रयः कालास्तिसृणामिष्टीनां विहिताः। सत्यम्। द्वयोरप्यह्नोः प्रातरादिकालसद्भावात्। पूर्वेद्युः प्रातरादिकालेषु स्वकीयेषु तासामुपक्रमः। परेद्युः प्रातरादिषु ताः समापनीयाः। ततो द्व्यहकालीनत्वम्—इति प्राप्ते—

ब्रूमः—अत्र 'अग्नयेऽनीकवते प्रातरष्टाकपालं निर्वपेत्' इति साङ्गं प्रधानं प्रातःकालीनतया विधीयते। प्रातःशब्दश्च स्वत एकमेव प्रातःकालमभिधाय पर्यवस्यति। 'प्रातरग्निहोत्रम्' इत्यादौ तद्दर्शनात्। तस्मात्साङ्गस्य प्रधानस्यैकस्मिन्नेव प्रातःकाले विधानात्सद्यस्कालीनत्वं श्रौतम्। चोदकेन तु-अन्वाधानाद्यङ्गं पूर्वेद्युः प्रातः, प्रधानं परेद्युः प्रातः—इति कल्प्यते। उपदेशश्चोदकाद्बलीयान्। तस्मात्—एकाहकालीना इष्टयः ॥ २२ ॥ २३ ॥

( द्वादशे—अनुयाजाद्युत्कर्षप्रयाजान्तापकर्षाधिकरणे
तदादितदन्तन्याये सूत्रे २३—२४ )।

अङ्गानां मुख्यकालत्वाद्यथोक्तमुत्कर्षे स्यात् ॥ २३ ॥
तदादि वाऽभिसंबन्धात्, तदन्तमपकर्षे स्यात् ॥ २४ ॥

द्वादशाधिकरणमारचयति—

प्रयाजेष्वपकर्षोऽनुयाजेषूत्कर्ष इत्यम्।
श्रुतमात्रे तदन्तेषु तदाद्येषु च वाऽग्रिमः ॥ २४ ॥
अन्येषां मुख्यकालत्वान्मैवं व्युत्क्रमशक्तितः।
प्रयाजान्ते ह्यनुयाजादिके चैतौ समूहके ॥ २५ ॥

अग्नीषोमीयपशौ प्रयाजानामपकर्षः श्रूयते—'तिष्ठन्तं पशुं प्रयजन्ति' इति। प्रकृतौ हविष्यासादिते पश्चात्प्रयाजा इज्यन्ते। इहापि पशुसंज्ञपनादूर्ध्वं हविष्या-

---

१ ग. ख. 'मकगृतीयप'। २ ख. ग. च. छ. 'ग्न्यन्वा'। ३ ग. च. 'षु ता'। ४ ग. ख. श्रुत। ५ ग. ख. प्रयजन्ति।

सादिते पश्चादेव प्रयाजाश्चोदकेन प्राप्ताः। ते चात्र वचनाज्जीवत्येव पश्चादपकृष्यन्ते । तथा सवनीयपशावनुयाजानामुत्कर्षः श्रूयते—'आग्निमारुतादूर्ध्वमनुयाजैश्चरन्ति' इति । तत्र—प्रयाजमात्रस्यापकर्षः श्रुतः । अनुयाजमात्रस्य चोत्कर्षः । तावुभौ श्रुत्यनुसारेण तथैवाङ्गीकर्तव्यौ । यदि प्रयाजान्तस्याङ्गकलापस्यापकर्षः स्यात्, तदा प्रयाजेभ्यः पूर्वभाविनामाघारसामिधेन्यादीनां ततोऽप्यपकर्षादत्यन्तव्यवहितानां प्रधानकालीनत्वं न स्यात् । प्रयाजमात्रे त्वपकृष्टे सत्याघारादीनां मुख्यकालीनत्वं न लुप्यते । एवम्—अनुयाजमात्र उत्कृष्टे तत ऊर्ध्वभाविनां सूक्तवाकशंयुवाकादीनामनुत्कर्षात्प्रधानसंनिधिर्न विनश्यति । तस्मात्—प्रयाजमात्रस्यापकर्षः, अनुयाजमात्रस्योत्कर्षः—इति प्राप्ते—

ब्रूमः—प्रकृतौ पदार्थानुष्ठानक्रमस्य क्लृप्तत्वात्, तत्क्रमाणामेव पदार्थानां चोदकेनातिदेशात् । व्युत्क्रमे सति पूर्वेण पदार्थेनोत्तरपदार्थस्य बुद्धावनुपस्थापितत्वादनुष्ठानमेव लुप्येत । तस्मात्—प्रयाजान्तस्याङ्गसमूहस्यापकर्षः, अनुयाजादेरङ्गसमूहस्योत्कर्षः ॥ २४ ॥ २५ ॥

( त्रयोदशे प्रवृत्त्या प्रोक्षणादीनां सौमिकपूर्वभाविताधिकरणे सूत्रे २५–२६ ) ।

प्रवृत्त्या कृतकालानाम् ॥ २५ ॥ शब्दविप्रतिषेधाच्च ॥ २६ ॥

त्रयोदशाधिकरणमारचयति—

सावनेष्वैष्टिकानां किं सौमिकेभ्यो न पूर्वता ।
पूर्वता वाऽत्र नियमो नास्ति तद्धेतुवर्जनात् ॥ २६ ॥
प्रतिप्रस्थातृकर्तृत्वे ह्यध्वर्योरपि कर्तृता ।
प्रोक्षणाद्याः पुरा पश्चात्सौमिकाः स्युः प्रवृत्तितः ॥ २७ ॥

सोमे प्रातरनुवाकोऽनुवाकः पठितः । ततः प्रचरणीहोमादयः पठिताः । ततः सवनीयादयः । ते च चोदकागतनिर्वापादियुक्ताः । ततो बहिष्पवमानस्तोत्रं पठितम् । तत्र—अध्वर्युर्होत्रे प्रातरनुवाकप्रैषं दत्वा तदानीमेव प्रतिप्रस्थातारमेवं प्रेष्यति—'प्रतिप्रस्थातः सवनीयान्निर्वपस्व' इति । ततः प्रचरणीहोमादिभ्य ऊर्ध्वं प्राप्तोऽपि सवनीयपुरोडाशनिर्वापः पूर्वस्मिन्नेव प्रातरनुवाककाले प्रैषवशादपकृष्टः। सवनीयपुरोडाशानामलंकारप्रैषोत्कर्षं एवमाम्नातः—'बहिष्पवमाने स्तुत आह—अग्नीदग्नीन्विहर, बर्हिः स्तृणीहि, पुरोडाशानलंकुरु'—इति । एवं स्थिते सति प्रकृतौ निर्वापोत्तरभाविनोऽलंकरणपूर्वभाविनः प्रोक्षणादयो ये पदार्थाः, तेऽत्र चोदकप्राप्ताः, तेषां निर्वापवदपकर्षस्य, अलंकरणवदुत्कर्षस्य चानुत्कर्षादुभयोर्म-

१ क. तथाऽङ्गी । घ. च. तथा क° । २ ख. °निधानं न वि° । ३ ख. प्रचारणीयहो° ग. च. प्रचरणीयहो° । ४ ग. च. °काचग° । ५ ग. च. °र्वप' इ° । ६ ख. ग. च. °णीयहो° ।

न्यकाल एवानुष्ठानं प्राप्तम् । तथा सति प्रचरणीहोमादिभिर्विहितव्यवमानान्तैः सौमिकपदार्थैः प्रोक्षणादिपदार्थानामैष्टिकानामेककालत्वेनानुष्ठानात्पौर्वापर्यकल्पने सति नियामकाभावादैच्छिकः क्रमः—इति प्राप्ते,—

ब्रूमः—प्रातरनुवाकप्रचरणीहोमयोः सौमिकयोः पाठक्रमानुक्रमं विच्छिद्य मैषविधिबलादैष्टिको निर्वापः प्रवृत्तः। तेन च निर्वापेण तदनन्तरभाविप्रोक्षणादिकं बुद्धावुपस्थाप्यते,[1] न तु सौमिकं प्रचरणीहोमादिकं तदा केनचिदुपस्थाप्यते। ननु—निर्वापः प्रतिप्रस्थातृकर्तृकः, प्रोक्षणादिकमध्वर्युकर्तृकम्—इति न निर्वापः प्रोक्षणाद्युपस्थापकः—इति चेत्। नैवम्। प्रयोजकत्वेन निर्वापेऽध्वर्योरपि कर्तृत्वात्। तस्मात्—ऐष्टिकाः प्रोक्षणाद्याः पूर्वमनुष्ठेयाः पश्चात्सौमिकाः प्रचरणीहोमादयः॥ २६॥ २७॥

( चतुर्दशे वैकृतयूपकर्ममात्रापकर्षाधिकरणे यूपकर्मन्याये सूत्रम्— )।

असंयोगात्तु वैकृतं तदेव प्रतिकृष्येत॥ २७॥

चतुर्दशाधिकरणमारचयति--

यूपच्छेदापकर्षः किं तदन्ते श्रुत एव वा।
प्रयाजवत्तदन्तत्वान्नयनं चापकृष्यताम्॥ २८॥
अग्नीषोमप्रणयनं सौमिकं पाशुकी छिदा।
प्रयाजाघारवैषम्याच्छ्रुतमात्रापकर्षणम्॥ २९॥

ज्योतिष्टोमे वैसर्जनहोमादूर्ध्वं प्राचीनवंशगतो वह्निराग्नीध्रीये प्रणेतव्यः। सोमश्च प्राचीनवंशे पूर्वमवस्थापित इदानीं हविर्धाने प्रणेतव्यः। तयोरुभयोः प्रणयनादूर्ध्वं यूपच्छेद आम्नातः। तदेतत्सर्वं सुत्यादिनात्प्राचीन औपवसथ्ये दिने प्राप्तम्। तत्र यूपच्छेदो दिनत्रयात्पूर्वस्मिन्दीक्षाकालेऽपकृष्टः। 'दीक्षासु यूपं छिनत्ति' इति तद्विधानात्। तस्मिन्नपकृष्टे प्रयाजन्यायेन तदन्ताङ्गसमूहस्यापकर्षणात्प्रणयनमप्यपकृष्यताम्—इति प्राप्ते—

ब्रूमः—प्रयाजाघारादीनामेकप्रधानं प्रत्यङ्गत्वेनैकप्रयोगान्तःपातित्वादवश्यंभावी परस्परक्रमः, इति प्रयाजापकर्षे तदन्ताङ्गसमूहापकर्षो युक्तः। इह तु प्रणयनं सोमयागाङ्गम्, यूपच्छेदस्त्वग्नीषोमीयपशोरङ्गमिति प्रणयनच्छेदनयोर्नान्योन्यं क्रमोऽपेक्षितः। तस्मात्—श्रुतस्य यूपच्छेदमात्रस्यापकर्षः।

---

१ ख. ग. च. °णीयहो°। २ ख. ग. च. °णीयहो°। ३ ख. ग. च. °णीयहो°। ४ ङ. °पकृति–इ°। ५ ङ. °र्तृत्वमस्ति। प्रयोजकत्वा°। ६ ख. ग. च. °णीयहो°। ७ ख. ङ. °कर्षणम°। ८ ख. ग. च. °कमेव प्र°। ९ ख. ग. च. ङ. °मूहस्याप°। १० ख. —ते॰॰ प्रणयीत°।

( पञ्चदशे दक्षिणाग्निकहोमानपकर्षाधिकरणे सूत्रम्-- )।

प्रासङ्गिकं च नोत्कर्षेदसंयोगात् ॥ २८ ॥

पञ्चदशाधिकरणमारचयति--

सवनीये पिष्टलेपफलीकरणहोमकौ ।
उत्क्रष्टव्यौ न वाऽऽद्यः स्यादनुयाजोत्तरत्वतः ॥ ३० ॥
पश्वार्थाः स्युरनूयाजाः पुरोडाशगताविमौ ।
उभौ होमौ प्रयोगस्य भेदान्नोत्कर्षमर्हतः ॥ ३१ ॥

सवनीयपुरोडाशे पिष्टलेपफलीकरणहोमौ चोदकेन प्राप्तौ दृषदुपलकपालादि-ष्वाश्लिष्टो यः पिष्टलेपः, तमुद्धृत्य जुह्वा चतुर्गृहीत आज्ये प्रक्षिप्य दक्षिणाग्नौ जुहोति । फलीकरणशब्देन तण्डुलकणा उच्यन्ते । तानपि तथा जुहोति । तावेतौ होमौ प्रकृतिवदिहाप्यनुयाजोत्तरकालीनौ । ते चानुयाजा आग्निमारुता-दूर्ध्वमुत्कृष्टा इति सूक्तवाकादिवदेतौ होमावुत्क्रष्टव्यौ—इति प्राप्ते,

ब्रूमः—उत्कृष्यमाणा एतेऽनुयाजाः पश्वर्थाः, न तु पुरोडाशार्थाः । पुरोडाशे प्रसङ्गसिद्धेर्वक्ष्यमाणत्वात् । उक्तहोमौ तु पुरोडाशार्थौ । न च तयोः प्रसङ्ग-सिद्धिः । पशौ पिष्टाद्यभावेन तद्धोमासंभवात् । एवं च सत्युक्तप्रणयनवद्धोमयोः प्रयोगभेदान्नास्त्यनुयाजैः सहोत्कर्षः ॥ ३० ॥ ३१ ॥

( षोडशे पुरोडाशाभिवासनान्तस्य दर्शेऽनपकर्षाधिकरणे सूत्रम्– )।

तथाऽपूर्वम् ॥ २९ ॥

षोडशाधिकरणमारचयति—

पुरोडाशाभिवासान्तस्यापकर्षोऽस्ति दर्शके ।
न वाऽऽद्योऽस्त्वपकृष्टाया वेदेर्वैगुण्यहानये ॥ ३२ ॥
अभिवासात्परा वेदिरिति तत्क्रमबोधतः ।
प्रागेव विहिता दर्शे वेदिर्नातोऽपकर्षणम् ॥ ३३ ॥

दर्शपूर्णमासयोः पुरोडाशस्य कपालेषु श्रपितस्याऽऽच्छादनमाम्नातम्—'भस्मनाऽभिवासयति' इति । तत ऊर्ध्वं वेदिराम्नाता । तेनैव क्रमेण पौर्ण-मासीयागे प्रतिपद्यनुष्ठानं कृतम् । दर्शयागे तु वेदेरपकर्ष आम्नातः—'पूर्वेद्युर-

---

१ ग. च. °फले क° । २ म. च. °नीये पि° । ३ ग. च. °फले क° । ४ स. ङ. °दिष्ववशिष्टो । ५ ग. च. होतीति । ६ ग. च. °होतीति ।

मावास्यायां वेदिं करोति ' इति । तत्र वेदेः पूर्वभाविनोऽभिवासनान्तस्याङ्गसमूहस्यापकर्षः कर्तव्यः । अन्यथा वेदेर्वैगुण्यप्रसङ्गात्—इति प्राप्ते—

ब्रूमः—यदि दर्शः पौर्णमासीविकारः स्यात्, तदा पूर्णमास्यां क्लृप्तः क्रमोऽतिदिश्येत । न त्वसौ विकार इति कश्चित्क्रमोऽत्र स्वातन्त्र्येणोन्नेयः । क्रमोन्नयनं च सर्वेषु पदार्थेष्वाम्नातेषु पश्चात्पाठादिभिः संपद्यते । वेदिपदार्थश्चाभिवासनादूर्ध्वं दर्शपूर्णमाससाधारण्येनाऽऽम्नातः । विशेषस्तु दर्शयागे पूर्वेद्युरेवाऽऽम्नायते । यथा तस्याभिवासनवेद्योः क्रमबोधात्प्रागेव दार्शिकवेदेः पूर्वदिनसंबन्धावगमाद्देव तस्याः स्थानामिति वेदेरपि तावन्मात्रस्यापकर्षः, न कुतोऽभिवासनान्तस्याङ्गसमूहस्यापकर्षः ॥ ३१ ॥ ३३ ॥

( सप्तदशे सांतपनीयाया अग्निहोत्रानुत्कर्षकताधिकरणे सूत्राणि ३०—३४ ) ।

सांतपनीया तूत्कर्षेदग्निहोत्रं सवनवद्वैगुण्यात् ॥३०॥ अव्यवायाच्च ॥३१॥ असंबन्धात्तु नोत्कर्षेत् ॥ ३२ ॥ प्रापणाच्च निमित्तस्य ॥ ३३ ॥ संबन्धात्सवनोत्कर्षः ॥ ॥ ३४ ॥

सप्तदशाधिकरणमारचयति—

दैवात्सांतपनी सायं प्राप्ता चेदग्निहोत्रकम् ।
उत्कर्षति न वोत्कर्षः पौर्वापर्यस्य भावतः ॥ ३४ ॥
भिन्नप्रयोगप्राप्तत्वादग्निहोत्रं स्वकालके ।
इष्टिमध्येऽपि हुत्वाऽथ यागशेषः समाप्यताम् ॥ ३५ ॥

चातुर्मास्येषु साकमेधनामके पर्वणि सांतपनीष्टिः श्रूयते—' मरुद्भ्यः सांतपनेभ्यो माध्यंदिने चरुम् ' इति । तां चेष्टिं समाप्य सायंकालेऽग्निहोत्रं हूयते । यदि कदाचिद्दैविकान्मानुषाद्वा प्रतिबन्धात्सेष्टिः सायमुपक्रान्ता, तदा सेष्टिरग्निहोत्रस्योत्कर्षमापादयति । कुतः । इष्ट्यग्निहोत्रयोः पौर्वापर्यसद्भावेनेष्टिं समाप्यैवाग्निहोत्रस्यानुष्ठेयत्वात्—इति प्राप्ते,

ब्रूमः—प्रयोगभेदान्नानयोः शास्त्रीयः कश्चित्क्रमोऽस्ति । सांतपनी तु स्वकालाद्भ्रष्टा । अग्निहोत्रस्यापि तद्भ्रंशो मा भूदितीष्टिमध्येऽप्यग्निहोत्रं स्वकालेऽनुष्ठाय पश्चादिष्टिशेषः समापनीयः ॥ ३४ ॥ ३५ ॥

---

१ ग. च. °मोऽस्ति° । २ क. °वस्तु । ३ क. °पुराडा° । ४ ग. च. °नीयाऽऽम्नातः प्राप्ते चे° । ५ क. कृत्वाऽथ । ६ ख. ग. च. °नीष्टिः ।

( अष्टादशे--उक्थानुरोधेन षोडश्युत्कर्षाधिकरणे सूत्रम्-- )

षोडशी चोक्थ्यसंयोगात् ॥ ३५ ॥

अष्टादशाधिकरणमारचयति--

उक्थ्योत्कर्षे षोडशी नोत्कृष्येतोत्कृष्यतेऽथवा ।
स्तोत्रकालाय नोत्कर्षः पूर्ववत्षोडशिग्रहे ॥ ३६ ॥
ग्रहं पराञ्चमुक्थ्येभ्य इत्यङ्गाङ्गित्वमासनात् ।
सस्तोत्रे ग्रह उत्कृष्टे स्तोत्रकालः प्रबाध्यताम् ॥ ३७ ॥

ज्योतिष्टोमे षोडशिग्रहं प्रकृत्य श्रूयते--'तं पराञ्चमुक्थ्येभ्यो निर्गृह्णाति' इति । तृतीयसवने सूर्यास्तमयात्प्रागेवोक्थ्यग्रहास्त्रयो गृह्यन्ते । तेभ्यः परस्तादयं षोडशी विहितः । यदि कदाचिद्दैवादुक्थ्यग्रहा अस्तमयादूर्ध्वमुत्कृष्येरन्, तदा तत ऊर्ध्वं विहितस्यापि षोडशिग्रहस्य नास्त्युत्कर्षः । कुतः । पूर्वन्यायेन कालस्यानुसरणीयत्वात् । कालो ह्येवमाम्नातः--'समयाध्युषिते सूर्ये षोडशिनः स्तोत्रमुपाकरोति' इति । समयोऽस्तसमयः, तं प्राप्ते सूर्ये स्तोत्रप्रारम्भकालः । सोऽयमुत्कर्षे सति बाध्येत । तच्चायुक्तम् । पूर्वत्राग्निहोत्रस्य स्वकालमबाधितुमेवेष्टिमध्येऽनुष्ठानाङ्गीकारात्--इति प्राप्ते,

ब्रूमः--'पराञ्चम्' इति शब्देन नोक्थ्येभ्य उत्तरकालः षोडशिग्रहाङ्गत्वेन विधीयते । ततो मुख्यस्य ग्रहस्य कालमबाधितुमुपसर्जनस्य स्तोत्रस्य कालं बाधित्वा सस्तोत्रो ग्रह उत्कष्टव्यः ॥ ३६ ॥ ३७ ॥

इति श्रीमाधवीये जैमिनीयन्यायमालाविस्तरे पञ्चमाध्यायस्य प्रथमः पादः ॥ १ ॥

---

| | अत्र पादे | आदितः । |
|---|---|---|
| अधिकरणानि | १८ | ३२६ । |
| सूत्राणि | ३५ | ८५१ । |

---

१ ख. प्रबोध्यताम् । २ ख, ग, च, निर्गृह्णा° । ३ ग. च. °तीये क° ।

( अथ पञ्चमाध्यायस्य द्वितीयः पादः ) ।

(प्रथमे—वाजपेयपशूनां सर्वेषामेकदोपाकरणादिधर्मानुष्ठानाधिकरणे, पदार्थानुसमयन्याये सूत्राणि १—३) ।

संनिपाते प्रधानानामेकैकस्य गुणानां सर्वकर्म स्यात् ॥१॥ सर्वेषां वैकजातीयं कृतानुपूर्वत्वात्॥२॥ कारणादभ्यावृत्तिः ॥ ३ ॥

द्वितीये पादे प्रथमाधिकरणमारचयति—

वाजपेये किमेकैकपशौ सर्वसमापनम् ।
सर्वेषु वैकैकधर्म आद्यः साहित्यसिद्धये ॥ १ ॥
वचनात्पशुसाहित्यं प्रयोगोक्त्या तु कल्प्यते ।
धर्मसाहित्यमेतच्च सिद्धान्तेऽपि न हीयते ॥ २ ॥

वाजपेये सप्तदशसु प्राजापत्येषु पशुष्वेकैकस्मिन्पशावुपाकरणनियोजनादिसंस्काराः सर्वे समापनीयाः । तथा सति—साङ्गं प्रधानं कर्तव्यम्—इति प्रयोगवचनेनावगतं धर्माणां साहित्यं सिध्यति । चोदकोऽपि धर्मसाहित्यं प्रापयति । प्रकृतावुपाकरणनियोजनादीनां साहित्यदर्शनात् । तस्मात्—अत्र काण्डानुसमयः, न तु पदार्थानुसमयः—इति प्राप्ते—

ब्रूमः—'सप्तदश प्राजापत्यान्पशूनालभते' इति वचनात्पशुसाहित्यमवगतम् । तच्च प्रबलम् । प्रत्यक्षेण 'पशून्' इत्यनेनैकशब्देन प्रापितत्वात् । धर्मसाहित्यं तु न प्रत्यक्षशब्देन प्रापितम्, किंतु प्रयोगवचनेन परिकल्प्यते । यद्येकस्मिन्प्रयोगे धर्मसाहित्यं न स्यात्, तदा कतिपयधर्मवैकल्येन साङ्गप्रधानानुष्ठानविधिनांऽऽबध्येत—इत्यर्थापत्तिः । चोदकेनापि विकृतौ धर्मसाहित्यवचनमनुमीयते । तदुभयं प्रत्यक्षात्पशुसाहित्यवचनाद्दुर्बलम् । तस्मात् 'वैश्वदेवीं कृत्वा प्राजापत्यैश्चरन्ति' इत्यनेन प्रत्यक्षवचनेनावगतं पशुसाहित्यमबाधितुम् 'सर्वेषु पशुष्वेकैक उपाकरणादिधर्मः कर्तव्यः'—इत्येवं पदार्थानुसमयोऽभ्युपेतव्यः, न तु काण्डानुसमयः । अस्मिन्नपि पक्षे प्रयोगवचनचोदकाभ्यामवगतं धर्मसाहित्यं न विरुध्यते । एकस्मिन्नेव प्रयोगे कृत्स्नधर्माणामनुष्ठितत्वात् ॥ १ ॥ २ ॥

---

१ क. °शौ कर्मस° । २ ख. ग. च. °शप्रा° । ३ ख. ग. च. छ. प्रासिध्यति । ४ ग. च. छ. इत्येन्तेनै° ।

( द्वितीये—सहस्राश्वप्रतिग्रहणस्थले—एकैकस्यैकदा सर्व-
धर्मानुष्ठानाधिकरणे काण्डानुसमयन्याये वा सूत्रम्— )।

कारणादभ्यावृत्तिः ॥ ३ ॥

द्वितीयाधिकरणमारचयति—

प्रतिग्रहे तु बह्वश्वे पूर्वन्यायोऽस्ति वा न वा ।
अस्ति तत्साम्यतो मैवं पुरोडाशस्य शोषतः ॥ २ ॥

'यावतोऽश्वान्प्रतिगृह्णीयात्तावतो वारुणांश्चतुष्कपालान्निर्वपेत्' इति । अत्र शतसंख्यादियुक्तबह्वश्वप्रतिग्रहे बहुपुरोडाशेषूदाहृतप्रत्यक्षवचनेन साहित्यं प्राप्तम् । तत्र पूर्वन्यायेन सर्वेषु पुरोडाशेष्वेकैकोऽधिश्रयणादिधर्मोऽनुष्ठेयः—इति चेत् । मैवम् । तप्तेषु कपालेषु क्रमेण पुरोडाशानधिश्रित्य यावता कालेन प्रथमपुरोडाशो द्वितीयसंस्कारं कर्तुमागच्छति, तावताऽसौ शुष्को भवति । तस्मात्—एकैकस्मिन्पुरोडाशे कृत्स्नधर्मसमापनम्—इत्येवं काण्डानुसमयोऽभ्युपेतव्यः ॥ ३ ॥

( तृतीये मुष्टिकपालादीनां समुदायानुसमयाधिकरणे सूत्रे ४—५)।

मुष्टिकपालावदानाञ्जनाभ्यञ्जनवपनपाव-
नेषु चैकेन ॥ ४ ॥ सर्वाणि त्वेककार्यत्वा-
देषां तद्गुणत्वात् ॥ ५ ॥

तृतीयाधिकरणमारचयति—

निर्वापे तु किमेकैकमुष्टेरस्त्यङ्गता न वा ।
अस्त्येकैकप्रतिष्ठानात्कपालादिषु तत्समम् ॥ ४ ॥
चतुरो निर्वपेन्मुष्टीनिति निर्वापसंश्रयात् ।
नैकैकमुष्टेरंशत्वात्पदार्थत्वं चतुष्टये ॥ ५ ॥

दर्शपूर्णमासयोराग्नेयाग्नीषोमीयनिर्वापयोः श्रूयते—'चतुरो मुष्टीन्निर्वपति' इति । तत्र—एकैको मुष्टिर्मुष्ट्यन्तरनैरपेक्ष्येण प्रतितिष्ठति—इत्येकैकस्य मुष्टेर्निर्वापाङ्गभूतपदार्थत्वमस्ति । ततो द्वयोर्निर्वापयोः क्रमेण—एकं मुष्टिं निरुप्य ततो द्वितीयमुष्टिः—इत्येवंविधः पदार्थानुसमयः कर्तव्यः । एवं कपालोपधानादिषु योजनीयम् । द्वयोः पुरोडाशयोरर्थे क्रमेण—एकं कपालमुपधाय, पश्चाद्द्वितीयम्—उभयत्र क्रमेणोपधेयम्—इति प्राप्ते—

१ क 'मुख्यवन्नैरपे' २ क. स. निरुप्य ।

ब्रूमः--यदि पदार्थत्वं लौकिकं स्यात्, तर्ह्येकस्य मुष्टेस्तदस्तु। इह तु--एकविधिगम्य एकः पदार्थः। विधिश्च चतुःसंख्याविशिष्टानेव मुष्टीन्विदधाति--इति मुष्टिचतुष्टयमेकः पदार्थः। एकमुष्टिस्तु तदंशः, न तु पूर्णपदार्थः। एवम्--आग्नेयपुरोडाशे कपालाष्टकोपधानमेकः पदार्थः। अग्नीषोमीये त्वेकादशकपालोपधानम्। एवम्--सर्वत्रैकविधिविहितस्यैव पदार्थत्वान्नांशानामनुसमयोऽस्ति ॥४॥५॥

( चतुर्थे--अवदानस्य प्रदानान्तानुसमयाधिकरणे सूत्रम्-- )।

संयुक्ते तु प्रक्रमात्तदङ्गं स्यादितरस्य तदर्थत्वात् ॥ ६ ॥

चतुर्थाधिकरणमारचयति--

अवदानेऽनुसमयो होमान्ते वाऽवदानके।
पदार्थत्वं विधेयत्वात्तेनानुसमयस्ततः ॥ ६ ॥
अवद्यतिः प्रदानान्तोऽवदानस्य तदर्थता।
अतोऽनुसमयस्तत्र होमान्तान्न तु केवलात् ॥ ७ ॥

दर्शपूर्णमासयोः--'द्विर्हविषोऽवद्यति' इत्येकेन विधिना विहितत्वाद्द्विसंख्याविशिष्टमवदानमेकः पदार्थः। ततस्तेनावदानमात्रेणानुसमयः कार्यः। आग्नेयस्य द्विरवदानं कृत्वा तद्धोमात्प्रागेवाग्नीषोमीयस्य द्विरवदानम्-इति प्राप्ते--

ब्रूमः--अवदानं होमपर्यन्तमेकः पदार्थः। होमस्यावदानमन्तरेणानुपपत्तौ होमविधिनैवाऽऽक्षिप्तं होमार्थमवदानम्। अत एव 'चतुरवत्तं जुहोति' इत्येकेन विधिना सावदानक एको होमपदार्थो विहितः। उपस्तरणाभिघारणाभ्यां सह यच्चतुरवत्तम्, तस्मिन्हविर्विषयमवदानद्वित्वं विधातुम् 'द्विर्हविषोऽवद्यति' इत्युच्यते। ततो होमान्तस्यावदानस्यैकपदार्थत्वादाग्नेयमवदाय हुत्वा पश्चादग्नीषोमीयावदानमित्यनुसमयः ॥ ६ ॥ ७ ॥

(पञ्चमे--अञ्जनादेः परिव्याणान्तानुसमयाधिकरणे सूत्राणि ७--९)।

वचनात्तु परिव्याणान्तमञ्जनादि स्यात् ॥७॥ कारणाद्वाऽनवसर्गः स्याद्यथा पात्रवृद्धिः ॥८॥ न वा शब्दकृतत्वान्न्यायमात्रमितरदर्थात्पात्रविवृद्धिः ॥९॥

पञ्चमाधिकरणमारचयति--

---

१ क. °दार्थवि°। २ ख. ग. च. तु संपूर्णः प°। ३ क. °डाशेऽष्टाकपालोप°। ४ ग. च °न्नांशतोऽनु°। ५ क. ङ. तदर्थतः। ६ ख. ग. च. ङ. °पत्तेर्होम°। ७ ग. च. °न्तस्या°।

यूपाञ्जनादिरेवैकः संघो वाऽनुसमीयते ।
एकैकः पूर्ववन्मैवं वचनात्काण्डसंगतेः ॥ ८ ॥

ज्योतिष्टोमेऽग्नीषोमीयपशौ—यूपस्य घृतेनाञ्जनमुच्छ्रयणम्, अवटस्य संमूहनम्, यूपमूलस्य परिबृंहणम्, मध्ये रशनया परिव्याणम्, इत्येते पदार्था आम्नाताः। ते चैकयूपपक्षे तथैव कर्तव्याः। एकयूपस्य च विकल्पः श्रूयते—'एकयूपो वैकादशिनी वाऽन्येषां यज्ञानां यूपा भवन्ति, एकविंशिन्यश्वमेधस्य' इति। तत्र बहुरूपेष्वञ्जनादिरेकैकः पदार्थः प्राजापत्यपशूपाकरणादिवदनुसमेतव्यः—इति प्राप्ते—

ब्रूमः—'अञ्जनादिपरिव्याणान्तं यजमानो यूपं नावसृजेत्' इति वचनेन यजमानस्य यूपत्यागनिषेधोऽञ्जनादिकाण्डस्यानुसमये सत्युपपद्यते। तस्मान्नात्र पदार्थानुसमयः ॥ ८ ॥

(षष्ठे देवताद्यवदानेषु पदार्थानुसमयाधिकरणे सूत्राणि १०—१२)।

पशुगणे तस्य तस्यापवर्जयेत्पश्वेकत्वात्॥१०॥ देवतैर्वैककर्म्यात् ॥११॥ मन्त्रस्य चार्थवत्त्वात् ॥१२॥

षष्ठाधिकरणमारचयति—

किं दैवाद्यवदानेषु काण्डानुसमयोऽथवा ।
एकानुसमयोऽस्त्वाद्यः प्रकृतौ तस्य दर्शनात् ॥ ९ ॥
पश्वैक्यात्प्रकृतौ सोऽस्तु विकृतौ तद्बहुत्वतः ।
सजातीयपदार्थानुसमयोऽनन्तरत्वतः ॥ १० ॥

अग्नीषोमीयपशौ श्रूयते—'दैवतान्यवदाय न तावत्येव होतव्यम्' सौविष्टकृतान्यवद्याति। सौविष्टकृतान्यवदाय न तावत्येव होतव्यम्, ऐडान्यवद्यति' इति। तत्र—प्रधानदेवतार्थानि, स्विष्टकृदर्थानि, इडाभक्षणार्थानि च, इति त्रिविधान्यवदानानि। तानि च तेनैव क्रमेणानुष्ठीयन्ते। प्राजापत्येषु सप्तदशसु पशुषु तानि चोदकप्राप्तानि। तत्र तेषां त्रिविधानामवदानानां काण्डमेकैकस्मिन्पशावनुसमेतव्यम्। तथा सति प्रकृतिसादृश्यलाभात्—इति प्राप्ते—

ब्रूमः—प्रकृतौ पश्वेकत्वेन पदार्थानुसमयप्रसक्त्यभावादस्तु काण्डानुष्ठानम्। इह तु पदार्थानुसमयो युज्यते। दैवावदानरूपमेकं पदार्थं सर्वेषु पशुषु संपाद्य पश्चा-

१ ख. ग. च. छ. °पर्यूहणम्। २ ख. ग. घ. छ. °विंशत्यश्व°। ३ ख. ङ. °सृजति, इ°। ४ ग. च. °मयस्त्वा°। ५ ख. °प्रक्लृप्त्यभा°।

त्सोविष्टकृतावदानम् । तच्च सर्वेषु कृत्वा पश्चादिडावदानम् । एवं च सत्युपाकरणादिष्विव पशूनां साहित्यमबाधितं भवति । ततः पश्चानन्तर्याय सजातीयो देवावदानरूपो यः पदार्थः स एव सर्वेषु पशुष्वनुसमेतव्यः ॥९॥१०॥

(सप्तमे नानाबीजेष्टावुलूखलादीनां तन्त्रताधिकरणे सूत्राणि १३–१५)।

नानाबीजेष्वेकमुलूखलं विभवात्॥१३॥ विवृद्धिर्वा नियमादानुपूर्व्यस्य तदर्थत्वात्॥१४॥एकं वा तण्डुलभावाद्धन्तेस्तदर्थत्वात् ॥ १५ ॥

सप्तमाधिकरणमारचयति—

नानाबीजेषु नानात्वमुलूखल उतैकता ।
अजिनास्तरणादीनां भिन्नत्वात्स्यादनेकता ॥ ११ ॥
स्तरणादौ तण्डुलान्ते पदार्थैक्यादनुक्रमात् ।
उलूखलैक्यं नीवारश्यामाकादिष्ववस्थितम् ॥ १२ ॥

राजसूये नानाबीजेष्टिराम्नाता—'अग्नये गृहपतये पुरोडाशमष्टाकपालं निर्वपति कृष्णानां व्रीहिणाम्' 'सोमाय वनस्पतये श्यामाकं चरुम्' इत्यादि । तत्र तेषां बीजानामवघातायाजिनास्तरणादयश्चोदकेनातिदिष्टाः। कृष्णाजिनास्तरणमुपर्युलूखलस्थापनम् । तत्र बीजावापोऽवघातः शूर्पेण परावपनं कणेभ्यस्तण्डुलानां विवेचनम् । ते चैते कृष्णाजिनास्तरणादयः पृथग्विधिभिर्विहितत्वाद्भिन्नाः पदार्थाः । ततो नानाबीजेषु कृष्णाजिनास्तरणमनुसमेतव्यम्। तथा सति यावत्यो बीजजातयस्तावन्ति कृष्णाजिनानि । तद्वदुलूखलस्याप्यनेकत्वम्—इति प्राप्ते,

ब्रूमः—'व्रीहीनवहन्ति' इति विहितोऽवघात एकः पदार्थः। स च कृष्णाजिनास्तरणादितण्डुलनिष्पत्त्यवसानः । तं च पदार्थं कृष्णव्रीहिष्वनुष्ठाय श्यामाकेषु स एव पदार्थोऽनुष्ठेयः । तथा सत्यनुक्रमेणैकमेवोलूखलं सर्वेषु बीजेष्वन्वेतुं शक्नोति । अत उलूखलकृष्णाजिनादीनां नास्त्यनेकत्वम् ॥११॥१२॥

(अष्टमे–अग्नीषोमीयपशौ प्रयाजानुयाजयोः पात्रभेदाधिकरणे सूत्रम्–)।

विकारे त्वनुयाजानां पात्रभेदोऽर्थभेदात्स्यात् ॥ १६ ॥

अष्टमाधिकरणमारचयति—

---

१ क. ङ. 'कादावव' । २ क. ङ. 'ताजिना' । ३ क. 'मेणोक' ।

प्रयाजानुयाजसिद्ध्यै पात्रैक्यमुत भिन्नता ।
एकोपभृद्द्वयोरर्थे दृष्टाऽतो विकृतौ तथा ॥ १३ ॥
विकृतौ पात्रभेदोऽस्तु शुद्धाज्यपृषदाज्ययोः ।
एकपात्रे ग्रहाशक्तेर्द्रव्यैक्यं प्रकृतौ द्वयोः ॥ १४ ॥

अग्नीषोमीयपशौ प्रयाजानुयाजसाधनद्रव्यं धारयितुमेकमेव पात्रं कर्तव्यम् । कुतः । प्रकृतावुभयार्थस्याऽऽज्यस्यैकयैवोपभृता धृतत्वेन विकृतावपि तदतिदेशात्—इति प्राप्ते,

ब्रूमः—प्रकृतिवत्केवलेनाऽऽज्येन प्रयाजा इज्यन्ते । अनुयाजास्तु पृषदाज्येन यष्टव्याः । 'पृषदाज्येनानुयाजान्यजति' इति तद्विधानात् । पृषदाज्यं नाम दधिमिश्रमाज्यम् । नहि शुद्धमिश्रयोरेकेन पात्रेण धारणं संभवति । तस्मात्—अत्र पृथक्पात्रम् ॥ १३ ॥ १४ ॥

( नवमे नारिष्ठहोमस्योपहोमपूर्वताधिकरणे, नारिष्ठन्याये, सूत्राणि १७–२० ) ।

प्रकृतेः पूर्वोक्तत्वादपूर्वमन्ते स्यान्न ह्यचोदितस्य शेषाम्नातम् ॥ १७ ॥ मुख्यानन्तर्यमात्रेयः, तेन तुल्यश्रुतित्वादशब्दत्वात्प्राकृतानां व्यवायः स्यात् ॥ १८ ॥ अन्ते तु बादरायणस्तेषां प्रधानशब्दत्वात् ॥ १९ ॥ तथा चान्यार्थदर्शनम् ॥ २० ॥

नवमाधिकरणमारचयति—

नक्षत्रेष्ट्युपहोमाः किं नारिष्ठेभ्यः पुरा न वा ।
प्रत्यक्षपाठान्मुख्यस्य सामीप्यायास्तु पूर्वता ॥ १५ ॥
प्राकृते प्रथमो बोधो वैकृते चरमस्ततः ।
नारिष्ठहोमाः पूर्वं स्युरुपहोमास्तु पृष्ठतः ॥ १६ ॥

अग्न्यादिदेवतायुक्तानां कृत्तिकादिनक्षत्राणामिष्टयः काम्या विहिताः—'अग्नये कृत्तिकाभ्यः पुरोडाशमष्टाकपालम्' इत्यादयः । तत्र प्रधानहोमाः 'अग्निर्नः पातु कृत्तिकाः' इत्यादियाज्यानुवाक्यापुरःसरं हूयन्ते । तत्रोपहोमा एवमाम्नाताः—'सोऽत्र जुहोति,—अग्नये स्वाहा, कृत्तिकाभ्यः स्वाहा, अम्बायै स्वाहा, दुलायै स्वाहा' इति । नारिष्ठहोमाश्च चोदकेन प्राप्ताः । 'दश ते तनुवो यज्ञ यज्ञियाः' इत्यादिभिर्मन्त्रैराज्याहुतयो नारिष्ठहोमाः । एतेभ्यो नारिष्ठहोमेभ्यः पूर्वमुपहोमाः

---

१ ख. छ. °हायोगाद्द्रव्यै° । २ ग. च. संभवति । ३ ग. च. °ज्यापुरोनु° । ४ ग. च. छ. श्रूयन्ते । ५ ख. ग. च. इत्यादि । छ. इत्यादयः । ६ क. ख. तनवो ।

कर्तव्याः । कुतः । ' अष्टाकपालं निर्वपेत् ' ' सोऽत्र जुहोति ' इति प्रत्यक्षपाठेन मुख्यसामीप्यमुपहोमानां प्रतीयते । अन्यातिदिष्टैर्नारिष्ठहोमैर्व्यवधाने बाध्येत । तस्मादुपहोमानां पूर्वत्वम्—इति प्राप्ते,

ब्रूमः—नक्षत्रेष्टिरूपा विकृतिर्विधीयमाना स्वोपकारकमङ्गजातमपेक्षते । तदा चोदकः प्राकृतं नारिष्ठहोमादिकमङ्गं बोधयति । प्रत्यक्षवाक्यं तु वैकृतमुपहोमादिकम् । तयोर्मध्ये क्लृप्तोपकारतया नारिष्ठहोमाद्यङ्गत्वं सहसा बुध्यते । उपहोमाद्यङ्गत्वा तूपकारे कल्पिते पश्चाद्बुध्यते । ततः प्रधानप्रत्यासत्त्या नारिष्ठहोमाः पूर्वमनुष्ठेयाः । उपहोमाः पश्चादनुष्ठेयाः ॥ १५ ॥ १६ ॥

( दशमे विदेवनादीनामभिषेकपूर्वताधिकरणे सूत्रम्— ) ।

**कृतदेशात्तु पूर्वेषां स देशः स्यात्तेन प्रत्यक्षसंयोगा-**
**न्न्यायमात्रमितरत् ॥ २१ ॥**

दशमाधिकरणमारचयति—

**अभिषेच्यप्राकृताङ्गसमाप्तौ देवनादिकम् ।**
**मध्ये वा पूर्ववत्सर्वसमाप्तौ देवनादयः ॥ १७ ॥**
**अभिषेकोऽपकृष्टोऽस्मात्पूर्वे प्रत्यक्षपाठतः ।**
**देवनाद्यास्ततो मध्ये माहेन्द्रस्तोत्रतः पुरा ॥ १८ ॥**

राजसूये सोमयागस्याभिषेचनीयस्य संनिधौ विदेवनशौनःशेपाख्यानाभिषेकाः क्रमेणाऽऽम्नाताः । तत्र अभिषेचनीये चोदकप्राप्तमङ्गजातं नारिष्ठन्यायेन प्रथमं समाप्य पश्चाद्विदेवनादयः कार्याः—इति प्राप्ते,

ब्रूमः—' माहेन्द्रस्तोत्रं प्रत्यभिषिच्यते ' इति वाक्येन तस्य सोमयागस्य मध्येऽभिषेकोऽपकृष्टः । अभिषेकात्पूर्वभावित्वं विदेवनादीनां प्रत्यक्षपाठप्राप्तम् । ततो माहेन्द्रस्तोत्रादपि पूर्वस्मिन्काले प्रयाजावार्वद्विदेवनादीनामपकर्षः कर्तव्यः ॥ १७ ॥ १८ ॥

**(एकादशे सावित्रहोमादीनां दीक्षणीयपूर्वप्रयोगाधिकरणे सूत्रम्)।**

**प्राकृताच्च पुरस्ताद्यत् ॥ २२ ॥**

एकादशाधिकरणमारचयति—

---

१ छ. तत्त्वति° । २ ग. च. प्रकृतं । ३ ख. तु विकृ° । ४ छ. °कारिते° । ५ छ. °नादयः । म° । ६ छ. °त्पूर्वं प्र° । ७ ग. च. °त्वं हि वि° । ८ ख. ग. च. °रबिदे° ।

चयने दीक्षणीयादि सावित्राद्यथवा पुरा ।
प्राकृतत्वादिहाऽऽद्यः स्यादन्त्यः प्रत्यक्षपाठतः ॥ १९ ॥

अग्निचयने 'सावित्राणि जुहोति' इति सावित्रहोम आम्नातः । ततो महता प्रबन्धेनोखासंभरणादिकमाम्नाय पश्चात् 'आग्नावैष्णवमेकादशकपालं निर्वपेद्दीक्षिष्यमाणः' इत्यादिना दीक्षणीयादिकमाम्नातम् । तत्र दीक्षणीयादिकं प्रकृतौ क्लृप्तोपकारतया शीघ्रं बुद्ध्यमानत्वात्सावित्रहोमादिभ्यः पूर्वमनुष्ठेयम्—इति चेत् ।

मैवम् । प्रत्यक्षपठेन क्रमावगमात् । चोदकप्राप्तस्यापि दीक्षणीयादेरग्निकाण्डे सावित्रादिभ्य ऊर्ध्वं पुनः पाठात्सावित्रादिष्वनुष्ठितेषु पश्चादनुष्ठानं कार्यम् ॥ १२ ॥

( द्वादशे यजमानसंस्काराणां रुक्मप्रतिमोकात्पूर्वभाविताधिकरणे सूत्रम्— ) ।

संनिपातश्चेद्यथोक्तमन्ते स्यात् ॥ २३ ॥

द्वादशाधिकरणमारचयति—

चयने रुक्मभृत्यादिः[1] पुरोत स्वामिसंस्कृतिः ।
पाठादाद्योऽन्तिमः क्लृप्तक्रमात्पाठस्य न क्षतिः ॥ २० ॥

अग्निचयने दीक्षणीयादेरूर्ध्वं रुक्मधारणमाम्नातम् । कण्ठे धृतः सन्नुरसि लम्बमानः सौवर्ण आभरणविशेषो रुक्मशब्दार्थः । उखास्थितोऽग्निः शिक्येऽवस्थापितः कण्ठे धार्यमाण उरःप्रदेशं यथा न दहति तथा व्यवधायकत्वेन तद्धारणम् । अत एव ब्राह्मणम्—'रुक्ममन्तरं प्रतिमुञ्चतेऽमृतमेव मृत्योरन्तर्धत्ते' इति । यजमानसंस्काराश्च वपनादयः प्रकृतौ दीक्षणीयानन्तरभाविन इह चोदकेन प्राप्ताः । तेभ्यः पूर्वमेवं रुक्मप्रतिमोकः कार्यः । तस्य प्रत्यक्षपाठात्सावित्रादिषु तस्याऽऽदृतत्वात्—इति चेत् ।

मैवम् । यजमानसंस्काराणां दीक्षणीयानन्तर्यं प्रकृतौ क्लृप्तम् । रुक्मस्य तु पाठेन तत्कल्पनीयम् । तस्मात्संस्काराः पूर्वभाविनः । न च सावित्रदृष्टान्तो युक्तः । दीक्षणीयाया इव संस्काराणां रुक्मप्रतिमोकादूर्ध्वं पुनः पाठाभावात् । न च दीक्षणीयानन्तर्ये बाधिते रुक्मप्रतिमोकपाठवैयर्थ्यम्[2] । स्वरूपबोधनेन चरितार्थत्वात् । ततो रुक्मप्रतिमोकः पश्चात्कार्यः ॥ २० ॥

इति श्रीमाधवीये जैमिनीयन्यायमालाविस्तरे पञ्चमाध्यायस्य द्वितीयः पादः ॥ २ ॥

---

| | अत्र पादे | आदितः । |
|---|---|---|
| अधिकरणानि | १२ | ३३८ । |
| सूत्राणि | २३ | ८७४ । |

---

१ ग. च. °क्मधृत्या° । २ क. °कवै° ।

( अथ पञ्चमाध्यायस्य तृतीयः पादः )

( प्रथमे प्रयाजादीनामेकादशादिसंख्यायाः सर्वसंपाद्यताधिकरणे सूत्रे १-२ )।

विवृद्धिः कर्मभेदात्पृषदाज्यवत्तस्य तस्योपदिश्येत ॥१॥ अपि वा सर्वसंख्यत्वाद्विकारः प्रतीयेत ॥२॥

तृतीयपादे प्रथमाधिकरणमारचयति—

एकादश प्रयाजाः किं प्रत्येकं स्यादुतान्यथा ।
संख्यावृद्धिरिहाऽऽद्योऽस्तु प्रतिमुख्यं गुणो यतः ॥ १ ॥
प्रत्येकं समुदाये वा स्वरूपेण न सिध्यति ।
संख्यावृद्धिः प्रयोगात्तु साऽऽवृत्त्या संभविष्यति ॥ २ ॥

अग्नीषोमीयपशौ श्रूयते—' एकादश प्रयाजान्यजति ' इति । तत्र चोदकमात्रेषु पञ्चसु प्रयाजेष्वेकैकस्येयमेकादशत्वसंख्या युक्ता । कुतः । प्रयाजानुद्दिश्य संख्यागुणे विहिते सति प्रतिप्रधानं गुणस्याभ्युपेयत्वात्—इति प्राप्ते,—

ब्रूमः—नह्येकैकस्य प्रयाजस्य स्वरूपमात्रेणैकादशत्वसंख्या संपादयितुं शक्या । नापि पञ्चप्रयाजसमुदायस्य स्वरूपे साऽस्ति । तस्मात्—प्रयोगद्वारा संपादनीया । प्रयोगस्य चाऽऽवर्तयितुं शक्यत्वात् । पञ्च प्रयाजान्द्विरावर्त्य पुनरपि चरमप्रयाजे सकृदावर्तिते सत्येकादशत्वसंख्या संपद्यते ॥ १ । २ ॥

( द्वितीये प्रथमोपसत्त्रयस्य स्वस्थानावृत्त्यधिकरणे सूत्रम्— ) ।

स्वस्थानात्तु विवृध्येरन्कृतानुपूर्व्यत्वात् ॥ ३ ॥

द्वितीयाधिकरणमारचयति—

आवृत्तिरुपसत्स्वेषा संघस्यैकैकगाऽथवा ।
त्रिरध्यायं पठेत्यादाविव स्यात्समुदायगा ॥ ३ ॥
प्रथमा मध्यमाऽन्त्येति प्राकृतक्रमसिद्धये ।
एकैकस्या द्विरभ्यासे षट्संख्याऽपि प्रसिध्यति ॥ ४ ॥

अग्नौ श्रूयते—' षडुपसदः ' इति । तत्र चोदकमात्राणां तिसृणामुपसदां पूर्वन्यायेनाऽऽवृत्त्या षट्संख्या संपादनीया । सा चाऽऽवृत्तिर्दण्डकलितवत्समुदायस्य युक्ता । यथा दण्डेन भूप्रदेशं संमिमानः पुरुष आमूलाग्रं कृत्स्नं दण्डं पुनः पुनः

---

१ ग. च. °वृद्धेरि° । २ ख. ग. च. छ. °कस्य प्रयाजस्ये° । ३ ख. ग. च. छ. °मात्रमुपजीव्येयमेका° । ४ ख. च. °रा स्रा सं° । ५ क. °से स्रा सं° ।

पातयति, न तु दण्डस्य प्रत्यवयवं पृथगावृत्तिं करोति । यथा 'त्रिवारं कृत्स्ना-ध्यायं जपति' इत्यत्र कृत्स्न एवाध्याय आवर्त्यते, न त्वध्यायैकदेश एकैकोऽ-नुवाकः पृथगेव त्रिः पठ्यते, तथा त्रिसृणामुपसदां समुदाय आवर्तनीयः-इति चेत्।

मैवम्। प्राकृतक्रमबाधप्रसङ्गात्। प्रकृतौ हि दीक्षानन्तरभाविनि दिने होतव्या प्रथमोपसत्। तत ऊर्ध्वदिने द्वितीया। तत ऊर्ध्वदिने तृतीया। ता एवाः सकृदनुष्ठाय पुनरुपरितनदिनेऽनुष्ठीयमानायाः प्रथमायाः प्रथमात्वमपैति, चतुर्थी-त्वमायाति। तस्मात्—प्राकृतक्रमसिद्धये प्रथमां दिनद्वयेऽभ्यस्य ततो द्वितीयां द्विरभ्यस्येत्—इत्येवं स्वस्थानविवृद्ध्या तासामावृत्तिः कार्या। न चाध्यायदृ-ष्टान्तो युक्तः। अनुवाकसमुदायस्यैवाध्यायत्वात्। अध्यायस्यैव चाऽऽवृत्तिवि-धानात्। न त्विह समुदायस्योपसत्त्वमस्ति। तस्मात्—प्रत्येकमुपसदावर्तनीया। अनेन न्यायेन प्रयाजानामेकादशत्वसिद्धये स्वस्थानविवृद्धावुत्तमः प्रयाजस्त्रि-रभ्यसनीयः॥ ३॥ ४॥

( तृतीये सामिधेनीष्वागन्तूनामन्ते निवेशाधिकरणे सूत्राणि ४—६ )।

**समिध्यमानवतीं समिद्धवतीं चान्तरेण धाय्याः स्युर्द्या-वापृथिव्योरन्तराले समर्हणात्॥ ४॥ तच्छन्दो वा॥ ५॥ उष्णिक्ककुभोरन्ते दर्शनात्॥ ६॥**

तृतीयाधिकरणमारचयति—

सामिधेन्येकविंशत्यामागन्तोर्मध्यतः स्थितिः।
अन्ते वा मध्यतो धाय्याशब्दितानां तथेक्षणात्॥ ५॥
इध्यमानेद्धवत्योस्ता मध्ये धाय्या विधानतः।
आगन्तूनामधाय्यानां निवेशोऽन्ते हि युज्यते॥ ६॥

दर्शपूर्णमासयोः सामिधेनीषु श्रूयते—'एकविंशतिमनुब्रूयात्प्रतिष्ठाकामस्य' इति। तत्र पठिताः सामिधेन्य ऋच एकादशैव। 'त्रिः प्रथमामन्वाह, त्रिरुत्त-माम्' इति विधानादावृत्त्या पञ्चदश संपद्यन्ते। अवशिष्टानां षण्णामृचां दाशत-यीपठितानामागमेन संख्यापूरणं वक्ष्यते। तस्य चाऽऽगन्तोर्मन्त्रस्य सामिधेनीनां श्रूयमाणानां मध्ये निवेशो युक्तः। कुतः। धाय्याशब्दोदितानामागन्तूनां मन्त्राणां मध्ये निवेशदर्शनात्—इति चेत्।

मैवम्। धाय्यानां मध्यदेशस्य विहितत्वात्। 'इयं वै समिध्यमानवती, असौ समिद्धवती, यदन्तरा तद्धाय्या' इति श्रूयते। पठितास्वेकादशसु सामिधेनीषु

१ छ. °त्। एवं हि प्र°। २ ख. छ. ततोऽप्यूर्ध्वं°। ३ ख. ग. च. छ. °यस्य चाऽऽ°। ४ ग. च. °वध्यौ स्तां म°। ५ क. °धेन्यश्च। ख. ग. च. छ. °धेन्यृच°। ६ ख. ग. च. °णां दाश°। ७ ग. च. °ध्यमदे°।

'समिध्यमानो अध्वरे' इत्यसावृगष्टमी। 'समिद्धो अग्न आहुत'—इत्यसौ नवमी। तयोर्मध्यं धाय्यानां स्थानम्। धाय्यात्वं च न सर्वेषामागन्तुमन्त्राणाम्, किंतु केषांचिदेव। 'पृथुपाजवत्यौ धाय्ये' इत्यादिविशेषविधानात्। 'पृथुपाजा अमर्त्यः' इत्यादिकमृग्द्वयमित्यर्थः। न च धाय्यानामिवेतरेषामागन्तूनां मन्त्राणां पठितसामिधेनीक्रमविच्छेदेन मध्ये निवेशाय किंचित्प्रमाणमस्ति। तस्मात्—आगन्तूनामन्ते निवेशः॥ ५॥ ६॥

( चतुर्थे बहिष्पवमान आगन्तूनां पर्यासोत्तरकालताधिकरणे सूत्राणि ७—१२ )।

**स्तोमविवृद्धौ बहिष्पवमाने पुरस्तात्पर्यासादागन्तवः स्युस्तथा हि दृष्टं द्वादशाहे॥ ७॥ पर्यास इति चान्ताख्या॥ ८॥ अन्ते वा तदुक्तम्॥ ९॥ वचनात्तु द्वादशाहे॥ १०॥ अतद्विकारश्च॥ ११॥ तद्विकारेऽप्यपूर्वत्वात्॥ १२॥**

चतुर्थाधिकणमारचयति—

**स्तोमवृद्धौ किमागन्तोर्मध्येऽन्ते वाऽस्तु मध्यतः।**
**द्वादशाहवदन्यत्र मध्यानुक्तेर्न मध्यतः॥ ७॥**

इदमाम्नायते—'एकविंशेनातिरात्रेण प्रजाकामं याजयेत्, त्रिणवेनौजस्कामम्। त्रयस्त्रिंशेन प्रतिष्ठाकामम्' इति। तत्र प्रकृतौ बहिष्पवमानस्तोत्रे त्रयस्तृचा भवन्ति 'उपास्मै गायता नरः'—इत्यादिरेकः, 'दविद्युतत्या रुचा'—इत्यादिर्द्वितीयः, 'पवमानस्य'—इत्यादिस्तृतीयः। तेषु त्रिषु तृचेषूर्ध्वगानेन त्रिवृत्स्तोमो भवति। न त्वत्र पञ्चदशसप्तदशस्तोमानामिवाऽऽवृत्तगानमस्ति। स च बहिष्पवमानो विकृतावतिरात्रे चोदकेन प्राप्तः। तत्र त्रिवृत्स्तोमं बाधितुमेकविंशादिस्तोमा विहिताः। बहिष्पवमान आवृत्तगाने मानाभावात्। त्रिषु तृचेष्ववस्थिताभिर्नवभिर्ऋग्भिरेकविंशस्तोमपूरणाभावात्। तत्पूरणाय चत्वारस्तृचा आगमयितव्याः। त्रिणवस्तोमपूरणाय षट्तृचाः। त्रयस्त्रिंशस्तोमपूरणायाष्टौ तृचाः ऋगागमनं चोपरिष्टाद्वक्ष्यते। तेषां चाऽऽगन्तूनां मन्त्राणां प्राकृतबहिष्पवमानमध्ये निवेशः कार्यः। कुतः। द्वादशाहे तद्दर्शनात्—इति प्राप्ते,

---

१ ख. ग. च. 'वस्व" इ°। २ ख. °माने बि°। छ. °मानवि°। ३ ख. ग. च. °गाना°। ४ ख. °ञ्शस्तोम°।

ब्रूमः—द्वादशाहे हि[1] वचनमेवमाम्नायते—'स्तोत्रियानुरूपौ तृचौ भवतः, वृषण्वन्तस्तृचा भवन्ति, तृच उत्तमः पर्यासः' इति। अयमर्थः—प्राकृतानां बहिष्पवमानगतानां त्रयाणां तृचानां स्तोत्रीयः[2], अनुरूपः, पर्यासश्चेति त्रीणि नामानि। अत्र[3] चोदकागतयोरनुरूपपर्यासयोस्तृचयोर्मध्ये वृषण्वच्छब्दयुक्तास्तृचाः कर्तव्याः—इति। न चैवमतिरात्रे मध्यनिवेशनाय वचनमस्ति। तस्मात्—क्लृप्तक्रममबाधितुमागन्तूनामन्ते निवेशः॥ ७॥

( पञ्चमे बहिष्पवमान एवाऽऽगन्तूनां साम्नां मध्ये निवेशाधिकरणे सूत्रे १३–१४ )।

अन्ते तूत्तरयोर्दध्यात्॥ १३॥ अपि वा गायत्रीबृहत्यनुष्टुप्सु वचनात्॥ १४॥

पञ्चमाधिकरणमारचयति—

आर्भवे साम्न आगन्तोरन्ते मध्येऽथवाऽग्रिमः।
पूर्ववत्त्रीणि यज्ञस्येत्युक्त्या मध्ये निवेशनम्॥ ८॥

पूर्वोदाहृतेऽतिरात्रे माध्यंदिनार्भवबहिष्पवमानयोश्चोदकप्राप्तौ पञ्चदश—सप्तदशस्तोमौ बाधितुमेकविंशादिविवृद्धस्तोमो वचनादनुष्ठीयते। तत्र बहिष्पवमानवदृगागमनं न भवति, किंतु—सामागमनेन[4] स्तोमपूरणम्—इति दशमे वक्ष्यते। तस्य चाऽऽगन्तोः साम्नः पूर्वोक्तानामृचामिवान्ते निवेशात्पठितानां तृचानां मध्ये[5] बत्साम चरमे[6] तृचे गातव्यम्—इति प्राप्ते,—

ब्रूमः—'त्रीणि ह वै यज्ञस्योदराणि—गायत्री, बृहती, अनुष्टुप् च। अत्र[7] ह्येवाऽऽवपन्ति, अत एवोद्वपन्ति' इति हि विशेष आम्नायते[8]। अयमर्थः—स्तोमस्य विवृद्धये साम्न आवापः क्रियते। ह्रासाय चोद्वापः। तावुभावावापोद्वापौ गायत्र्यादिष्वेव, नान्यत्र—इति। 'उच्चा ते जातमन्धसः—' इत्येष माध्यंदिनपवमानस्याऽऽद्यस्तृचः। 'स्वादिष्ठया[9]'—इत्येष आर्भवपवमानस्य। तावुभौ गायत्रीच्छन्दस्कौ, तयोरावापः। न तु त्रिष्टुब्जगतीच्छन्दस्कयोरन्ययोस्तृचयोः सामाऽऽवपनीयम्[10]॥ ८॥

( षष्ठे अहेष्टकादीनां क्रत्वग्निशेषताधिकरणे सूत्रे १५–१६ )।

अहेष्टकमौपानुवाक्यं सवनचितिशेषः स्यात्॥ १५॥

१ ग. च. हि बहिष्पवमानवच°। २ ग. च. स्तोत्रीया°। ३ ग. च. तत्र। ङ. ततः। ४ ङ. °बञ्छब्द°। ५ ङ. मध्ये नि°। ६ ख. ग. च. छ. सामागमेन। ७ छ. °रमतृ°। ८ क. छ. आम्नामावा°। ९ ख. °अत्रादि°। १० क. समापनीयम्। ग. च. समावपनीयम्।

क्रत्वविशेषो वा चोदितत्वादचोदनानुपूर्वस्य ॥ १६ ॥

षष्ठाधिकरणमारचयति—

अदाभ्यग्रहचित्रिण्यावङ्गे किं सवने चितौ ।
यागेऽग्नौ वाऽत्र दृष्टत्वादाद्य आवर्त्यतां ततः ॥ ९ ॥
यागाग्न्योः फलवत्त्वेनानारभ्योक्ते तदङ्गके ।
सवने सवने तस्मान्नैवाऽऽवृत्तिश्चितौ चितौ ॥ १० ॥

अनारभ्य श्रूयते—'योऽदाभ्यं गृहीत्वा सोमाय यजते' इति, 'चित्रिणीरुपदधाति' इति च । तत्र ग्रहाणां सवननिष्पादकत्वं प्रत्यक्षेण दृष्टम् । अदाभ्यग्रहस्यापि सवननिष्पादकतया सवनाङ्गत्वे सति प्रतिसवनमदाभ्य आवर्तनीयः । तथेष्टकाभिश्चितिनिष्पत्तिदर्शनाच्चित्रिणीनामिष्टकानां चित्यङ्गत्वे सति प्रतिचयनं चित्रिणीनामावृत्तिः—इति प्राप्ते,—

ब्रूमः—सोमयागः फलवान्, न तु सवनम् । तथैवाग्निः फलोपेतः, न तु चितिः । तत्रानारभ्याधीतस्य वाक्यात्संबन्धः फलवत्येव युक्त इति सवनचयने प्रत्यनङ्गत्वान्नास्ति तयोरावृत्तिः ॥ ९ ॥ १० ॥

(सप्तमे चित्रिण्यादीनां मध्यमचितावुपधानाधिकरणे सूत्राणि १७-१९)।

अन्ते स्युरव्यवायात् ॥ १७ ॥ लिङ्गदर्शनाच्च ॥ १८ ॥ मध्यमायां तु वचनाद्ब्राह्मणवत्यः ॥ १९॥

सप्तमाधिकरणमारचयति—

चित्रिण्यादेरुत्तमायामुपधानं पुराऽथवा ।
अव्यवायादुत्तमायां मध्यमायां तु वाक्यतः ॥ ११ ॥

उत्तमायां पञ्चम्यां चितौ चित्रिण्यादेरनारभ्याधीताया इष्टकाया उपधानं युक्तम् । तथा सति प्रकरणाधीतानां क्लृप्तक्रमाणामिष्टकानां परस्परव्यवधानं न प्रसज्यते—इति चेत् ।

नैवम् । 'यां कां च ब्राह्मणवतीमिष्टकामभिजानीयात्, तां मध्यमायां चितौ' इति वाक्येनानारभ्याधीतेन—ब्राह्मणेन विहितानामिष्टकानां मध्यमचितौ निवेशः ।

---

१ ख. छ. तदङ्गता । २ क. °कादिभि° । ३ ग. च. फलवान् । ४ छ. फलवत्त्वेन ।

( अष्टमे लोकंपृणातः पूर्वं चित्रिण्याद्युपधानाधिकरणे सूत्रम्- )।

प्राग्लोकंपृणायाः, तस्याः संपूरणार्थत्वात् ॥ २० ॥

अष्टमाधिकरणमारचयति—

लोकंपृणात ऊर्ध्वं स्याच्चित्रिण्युत ततः पुरा ।
बादरायणदृष्ट्योर्ध्वं पूरणोक्तेस्ततः पुरा ॥ १२ ॥

'चित्रिणीरुपदधाति' वज्रिणीरुपदधाति' 'भूतेष्टका उपदधाति' इति विहितं चित्रिण्यादिकं मध्यमायां चितौ लोकंपृणाभिधाया इष्टकाया ऊर्ध्वमुप-धेयम् । कुतः । बादरायणेन तथा दृष्टत्वात् । 'अन्ते तु बादरायणः'— ( ५ । २ । १९ ) इति सूत्रेण बादरायणस्य मतमुपन्यस्तम् । स ह्यागन्तूना-मन्ते निवेशमाह । लोकंपृणा च प्रकरणपठितानामन्तिमेष्टका । ततस्तस्या ऊर्ध्वं चित्रिण्यादिकम्—इति प्राप्ते,—

ब्रूमः—'लोकं पृण, छिद्रं पृण'—इत्यनेन मन्त्रेणोपधीयमानेष्टका लोकं-पृणा । तस्याः कर्मण्यूनत्वादिदोषपरिहारेण संपूर्तिहेतुत्वं मन्त्रलिङ्गादवगम्यते । ब्राह्मणेऽप्येवमाम्नातम्—'यदेवास्योनं यच्छिद्रम्, तदेतया परिपूरयति—लोकं-पृण, छिद्रं पृण'—इति । यद्येतस्या इष्टकाया ऊर्ध्वं चित्रिण्यादय उपधीयेरन्, तदानीं चित्रिण्यादिगते ऊनत्वच्छिद्रत्वे न पूर्येयाताम् । तस्मात्—लोकंपृणातः पूर्वं चित्रिण्याद्युपधानम् ॥ १२ ॥

( नवमे—इष्टिसंस्कृतेऽग्नावग्निहोत्राद्यनुष्ठानाधिकरणे सूत्राणि २१—२५ )।

संस्कृते कर्म संस्काराणां तदर्थत्वात् ॥ २१ ॥
अनन्तरं व्रतं तद्भूतत्वात् ॥ २२ ॥ पूर्वं च
लिङ्गदर्शनात् ॥ २३ ॥ अर्थवादो वाऽर्थस्य
विद्यमानत्वात् ॥ २४ ॥ न्यायविप्रतिषेधाच्च ॥ २५ ॥

नवमाधिकरणमारचयति—

आहिते पवमानेष्टिसंस्कृते वाऽग्निहोत्रकम् ।
आधानेनाग्निनिष्पत्तेस्तन्मात्रे कर्म संभवेत् ॥ १३ ॥
आधानस्यानपेक्षस्य नाग्न्युत्पादकता मता ।
समुच्चितस्य हेतुत्वात्कर्म स्यादिष्टिसंस्कृते ॥ १४ ॥

अग्न्याधानादूर्ध्वं विलम्ब्य पवमानेष्टयः क्रियन्ते 'द्वादशसु रात्रिष्वनुनिर्वपेत्'

---

१ ग. च. °के ततः । २ ग. च. स चाऽऽग° । ३ ख. °मन्तेष° । ४ ग. च. °र्मन्यू नतादि° ।

इतीष्टिकालविधानात्ताभ्यः पुरा द्वादशसु दिनेष्वग्निहोत्रमनुष्ठेयम्। आधानमात्रेणाऽऽहवनीयाद्यग्नेर्निष्पन्नत्वात्—इति प्राप्ते,

ब्रूमः—आधानेन पवमानेष्टिनिरपेक्षेण नाऽऽहवनीयाद्याग्निरुत्पद्यते। अन्यथा पवमानेष्टिवैयर्थ्यप्रसङ्गात्। न च विकल्पः। आधानमुपजीव्य तस्मादुत्तरकाले विधानात्। तत इष्टिभिः समुच्चित्यैवाऽऽधानमग्न्युत्पादकम्—इतीष्टिभिः संस्कृते वह्नौ पश्चादग्निहोत्रानुष्ठानम्॥ १३॥ १४॥

(दशमे—अग्निचिद्वर्षणादिव्रतानां क्रत्वन्तेऽनुष्ठानाधिकरणे सूत्राणि २६–२८)।

**संचिते त्वग्निचिद्युक्तं प्रापणान्निमित्तस्य॥ २६॥ क्रत्वन्ते वा प्रयोगवचनाभावात्॥२७॥ अग्नेः कर्मत्वानिर्देशात्॥ २८॥**

दशमाधिकरणमारचयति—

**न धावेद्वर्षतीत्यादि चितौ सत्यां क्रतावुत।**
**आद्यश्चितेर्निमित्तत्वान्न क्रतावग्निचित्त्वतः॥ १५॥**

इदमाम्नायते—'अग्निचिद्वर्षति न धावेत्, न स्त्रियमुपेयात्' इति। तान्येतान्यग्निचिद्व्रतानि चितौ निष्पन्नायां सत्यां तदाप्रभृति प्रवर्तन्ते, न तु चितेऽग्नौ क्रत्वनुष्ठानं प्रतीक्षन्ते[1]। कुतः। अग्निचित्पदे[2] चयनस्य निमित्तत्वेनोपन्यासात्। न हि सति निमित्ते नैमित्तिकस्य विलम्बो युक्तः—इति प्राप्ते,

ब्रूमः—क्रतावुपयोक्तुमग्निश्चयनेन संस्क्रियते। न चानिष्पन्ने क्रतौ चयनसंस्कारैः[3] सफलो भवति। तस्माद्—क्रतौ निष्पन्ने सति पश्चाच्चयनसाफल्यात्—अयं पुरुषः—अग्निं चितवान्—इत्यमुमर्थमर्हति—इति क्रत्वन्ते तानि व्रतानि॥ १५॥

(एकादशे—दीक्षाया इष्टिसिद्धताधिकरणे सूत्राणि २९–३१)।

**परेणाऽऽवेदनाद्दीक्षितः स्यात्, सर्वैर्दीक्षाभिसंबन्धात्॥ २९॥ इष्ट्यन्ते वा तदर्था ह्यविशेषार्थसंबन्धात्॥ ३०॥ समाख्यानं च तद्वत्॥ ३१॥**

एकादशाधिकरणमारचयति—

---

१ ख. प्रतीक्ष्यते। २ छ. °देन च°। ३ ख. छ. °रः फलभाग्भव°।

इष्टिदण्डादिभिर्दीक्षा किं वेष्ट्यैवोक्तितोऽग्रिमः।
युक्तः संस्कार इष्ट्यैव दण्डादेर्व्यञ्जकत्वतः॥ १६॥

ज्योतिष्टोमे श्रूयते-'आग्नावैष्णवमेकादशकपालं निर्वपेद्दीक्षिष्यमाणः' इति। अन्यदपि श्रुतम्—'दण्डेन दीक्षयति, मेखलया दीक्षयति, कृष्णाजिनेन दीक्षयति' इति। तत्र—इष्टिवद्दण्डादीनामपि साधनत्वाभिधानात्सर्वैरेयं दीक्षितः—इति चेत्।

मैवम्। इष्टेः क्रियारूपत्वात्संस्कारहेतुत्वं युक्तम्। दण्डादयस्तु द्रव्यरूपा न पुरुषं संस्कर्तुं प्रभवन्ति। न चैतावता दण्डादिवैयर्थ्यम्। 'दीक्षितोऽयम्' इत्यभिव्यक्तिरूपस्य दृष्टप्रयोजनस्य सद्भावात्। तस्मात्—इष्ट्यैव दीक्षा सिध्यति॥१६॥

(द्वादशे काम्येष्टीनामनियमेनानुष्ठानाधिकरणे सूत्राणि ३२–३६)।

अङ्गवत्क्रतूनामानुपूर्व्यम् ॥ ३२ ॥ न वाऽसंबन्धात् ॥ ३३ ॥ काम्यत्वाच्च ॥ ३४ ॥ आनर्थक्यान्नेति चेत् ॥ ३५ ॥ स्याद्विद्यार्थत्वाद्यथा परेषु सर्वस्वारात् ॥ ३६ ॥

द्वादशाधिकरणमारचयति—

काम्यनैमित्तिकाः कार्या यथापाठं न वाऽग्रिमः।
पाठस्य क्रमहेतुत्वान्न प्रयोगपृथक्त्वतः॥ १७॥

काम्ययागाः श्रूयन्ते—'ऐन्द्राग्नमेकादशकपालं निर्वपेत्प्रजाकामः' इत्यादयः। तथा नैमित्तिकयागाश्च तस्मिन्काण्ड आम्नाताः-'अग्नये पथिकृते पुरोडाशमष्टाकपालं निर्वपेत्। यो दर्शपूर्णमासयाजी सन्नमावास्यां वा पौर्णमासीं वाऽतिपातयेत्' इत्यादयः। तत्र—'पाठः क्रमहेतुः' इति प्रयाजोदाहरणेन वर्णितत्वाद्यथापाठमेते यागाः क्रमेण कर्तव्याः—इति चेत्।

मैवम्। एकप्रयोगाभावेन परस्परक्रमाकाङ्क्षाया अभावात्। तस्मात्—कामो वा निमित्तं वा यदोत्पद्यते, तदा तत्रोदितो यागः कर्तव्यः॥ १७॥

(त्रयोदशे यज्ञानामग्निष्टोमपूर्वताधिकरणे सूत्रे ३७–३८)।

य एतेनेत्यग्निष्टोमः प्रकरणात् ॥ ३७ ॥ लिङ्गाच्च ॥ ३८ ॥

---

१ ख. छ. °वैरियं दीक्षा—इ°। २ ग. च. °रूपत्वान्न पु°। ३ ख. ग. घ. छ. °त्रोचितो।

त्रयोदशाधिकरणमारचयति—

एतेनानिष्ट्वेति सर्वसंस्थोऽग्निष्टोम एव वा ।
अविशेषात्सर्वसंस्थो ज्योतिष्टोमोऽत्र वर्ण्यताम् ॥ १८ ॥
अग्निष्टोमप्रक्रियाऽत्र तस्य प्रथमयज्ञतः ।
तेनेष्ट्वाऽन्येन यष्टव्यं संस्था आगन्तवोऽपराः ॥ १९ ॥

ज्योतिष्टोमे श्रूयते—'एष वाव प्रथमो यज्ञो यज्ञानाम्, यज्ज्योतिष्टोमः । य एतेनानिष्ट्वाऽथान्येन यजेत गर्तपत्यमेव हि तज्जीर्येत प्र वा मीयते' इति । यथा गर्ते पतितमुच्छिष्टपत्रावल्यादिकं पुनर्न क्वाप्युपयुज्यते, केवलं जीर्यते, तथा प्रथमतोऽनुष्ठितं यज्ञान्तरं न फलोपयुक्तम् । यजमानश्चानेनापराधेनापमृत्युमाप्नोति—इत्यर्थः । अग्निष्टोमोऽत्यग्निष्टोम उक्थ्यः षोडश्यतिरात्रोऽप्तोर्यामो वाजपेयश्च, इति ज्योतिष्टोमस्य सप्त संस्थाभेदाः । तत्र संस्थाविशेषमनुपन्यस्य ज्योतिष्टोम इत्येव प्रकृतत्वात् 'एतेनानिष्ट्वा—'इत्येतच्छब्दात्सर्वसंस्थोपेतो ज्योतिष्टोमोऽत्र परामृश्यते । ततः सप्त संस्था अनुष्ठाय पश्चाद्यज्ञान्तरमनुष्ठेयम्—इति प्राप्ते,

ब्रूमः—ज्योतिष्टोमस्य ह्यग्निष्टोमसंस्थैव नैजं रूपम् । अग्निष्टोमस्य नित्यत्वात् । अत एव—प्रकरणमेतदग्निष्टोमस्य—इत्येतच्छब्देन स एव परामृश्यते । अत्यग्निष्टोमादिसंस्थानां काम्यत्वेनानित्यत्वान्नित्यज्योतिष्टोमस्वरूपत्वमयुक्तमिति षट्संस्था आगन्तुकाकारविशेषः । तस्मात्—अग्निष्टोमस्यैव प्रथमयज्ञत्वात्तेनेष्ट्वा यज्ञान्तरमनुष्ठातुं शक्यते ॥ १८ ॥ १९ ॥

(चतुर्दशे ज्योतिष्टोमविकाराणामग्निष्टोमपूर्वकताधिकरणे सूत्राणि ३९-४२)

अथान्येनेति संस्थानां संनिधानात् ॥ ३९ ॥ तत्प्रकृतेर्वाऽऽपत्तिविहारौ हि न तुल्येषूपपद्येते ॥ ४० ॥
प्रशंसा वा विहरणाभावात् ॥ ४१ ॥ विधिप्रत्ययाद्वा नह्यकस्मात्प्रशंसा स्यात् ॥ ४२ ॥

चतुर्दशाधिकरणमारचयति—

अन्येनेत्यत्र संस्थानामुक्तिः सर्वस्य वाऽग्रिमः ।
संनिधेस्तद्विकारस्य सर्वस्योक्तिर्हि वाक्यतः ॥ २० ॥

पूर्वोदाहृत एव वाक्ये योऽयम् 'अन्येन' इत्यन्यशब्दः, सोऽग्निष्टोमेन सजा-

१ क. °तेनेष्ट्वा सर्वसंस्थ उक्तोऽग्नि° । २ ग. च. गृह्यताम् । ३ ख. च. °यात्वात्तस्य । ४ ख. ग. °पतितमे° । ग. च. °पत्यामिवाहितं जीर्ये° । ५ ख. छ. °रं फलाय नोप° । ६ ख. ग. च. छ. °नश्च तेना° । ७ ग. च. °मस्याग्नि° । ८ ख. ग. च. °मत्वेन नि° । ९ ख. ग. च. युज्यते । १० ख. °ष्टोमस° ।

तीयानत्यग्निष्टोमादिसंस्थाभेदानेव परामृशति। तेषामेव बुद्धौ संनिहितत्वात्—इति चेत्। मैवम्। 'यज्ञानां प्रथमो यज्ञः' इत्यनेन वाक्येन सर्वयज्ञप्रतियोगिकस्य प्राथम्यस्योपन्यासाद्बुद्धौ संनिहिता अशेषयज्ञा अन्यशब्देनोच्यन्ते। तस्मात्—अत्याग्निष्टोमादयः संस्थाभेदाः, एकाहाहीनसत्त्ररूपाश्च सोमविकृतिरूपाः सर्वे यागा अग्निष्टोमात्प्रागनुष्ठेयाः। सोमविकृतीनामेवायं नियमो नत्विष्टिपशूनाम्—इत्यस्मिन्नर्थे लिङ्गमिदमाम्नायते—'प्रजापतिर्वा अग्निष्टोमः। स इतरानेकाहानसृजत ते सृष्टा अब्रुवन्—न वयं स्वेनाऽऽत्मना प्रभवामः—इति। तेभ्यः स्वां तनुं प्रायच्छत्। तया प्राभवन्' इति। तस्मात्—सोमविकृतिष्वयं नियमः॥ २०॥

(पञ्चदशे सर्वेषामेकानेकस्तोमकानामग्निष्टोमपूर्वकताधिकरणे सूत्रे ४३–४४)।

एकस्तोमे वा क्रतुसंयोगात्॥४३॥ सर्वेषां वा चोदनाविशेषात्प्रशंसा स्तोमानाम्॥ ४४॥

पञ्चदशाधिकरणमारचयति—

एकस्तोमेऽन्यशब्दः स्याद्बहुस्तोमेऽपि वाऽग्रिमः।
त्रिवृदन्येत्यर्थवादान्नान्यमात्रस्य संभवात्॥ २१॥

अत्र पूर्वोदाहृतः 'अन्येन' इत्ययमन्यशब्द एकस्तोमके क्रतौ वर्तते। कुतः। अर्थवादेन तदवगमात्। 'यो वै त्रिवृदन्यं यज्ञक्रतुमापद्यते, स तं दीपयति। यः पञ्चदशः स तम्। यः सप्तदशः स तम्। य एकविंशः स तम्' इत्यर्थवादः। अस्यायमर्थः—'त्रिवृदादयश्चत्वारः स्तोमा अग्निष्टोमे विद्यन्ते। तेषु त्रिवृत्स्तोमो विकृतिरूपं यज्ञं प्राप्नोति, स त्रिवृत्स्तोमस्तं यज्ञं दीपयति प्रकाशयति सर्वान्व्याप्नोति'—इति। स्तोमान्तरस्याप्रवेशाय त्रिवृत एव सर्वस्मिन्यज्ञस्वरूपे व्याप्तावयमेकस्तोमकः क्रतुर्भवति। एवं पञ्चदशादिस्तोमव्याप्तिर्योजनीया। तथा सत्यर्थवादादेकस्तोमकानामेव बुद्धिस्थत्वात्त एवान्यशब्देनोच्यन्ते। एकस्तोमकाश्च पद्वात्रादिष्वहीनेष्वाम्नाताः—'त्रिवृदग्निष्टोमो भवति। पञ्चदश उक्थ्यो भवति' इत्यादयः। तस्मात्—तद्विषयोऽन्यशब्दः—इति प्राप्ते,—

ब्रूमः—'स तं दीपयति' इत्यत्र प्रकाशकत्वमात्रमुच्यते। तच्च व्याप्तिमन्तरेण

---

१ ग. च. °शेषा य°। २ ख. अग्नि°। ३ क. °त्विष्टप°। ४ ग. च. °हान्तान°। ५ ग.च. तनूं। ६ ग. च. °पं यं य°। ७ ग. च. °यन्सर्वा°। ८ ख. ग. च. छ. सर्वतो व्याप्नो°। ९ ग. च. °स्तोमाश्च। १० ख. तत्र।

संबन्धमात्रादप्युपपद्यते । तस्मात्—अग्निष्टोममवियोगितया बहुस्तोमैकस्तोमसाधारण्येन श्रूयमाणस्यान्यशब्दस्य संकोचे हेत्वभावात्सर्वविषयोऽयमन्यशब्दः ॥२१॥

इति श्रीमाधवीये जैमिनीयन्यायमालाविस्तरे पञ्चमाध्यायस्य तृतीयः पादः ॥ ३ ॥

| | अत्र पादे | आदितः । |
|---|---|---|
| अधिकरणानि | १५ | ३५३ । |
| सूत्राणि | ४४ | ९१८ । |

( अथ पञ्चमाध्यायस्य चतुर्थः पादः ) ।

( प्रथमे पाठक्रमापेक्षया श्रुत्यर्थयोर्बलवत्त्वाधिकरणे सूत्रम्— ) ।

**क्रमको योऽर्थशब्दाभ्यां श्रुतिविशेषादर्थपरत्वाच्च ॥ १ ॥**

चतुर्थपादे प्रथमाधिकरणमारचयति—

**आश्विनो दशमः पाको यवाग्वा ऐच्छिकः क्रमः ।**
**नियतो वाऽग्रिमः पाठश्रुत्यर्थानां समत्वतः ॥ १ ॥**
**पाठात्क्रमः कल्पनीयः प्रत्यक्षस्तु श्रुतेः क्रमः ।**
**क्लृप्तिर्न शक्तिमुल्लङ्घ्य श्रुत्यर्थौ प्रबलौ ततः ॥ २ ॥**

ज्योतिष्टोम ऐन्द्रवायवादिग्रहेष्वाश्विनग्रहस्तृतीयस्थाने पठितः । तस्य च दशमस्थानत्वं वाचकेनैव शब्देनाऽऽम्नायते—'आश्विनो दशमो गृह्यते' इति । तत्र क्रमबोधकौ श्रुतिपाठौ समबलौ । तथा—अग्निहोत्रहोमादनन्तरं यवागूपाकः पठितः । स चार्थवशात्पूर्वं प्राप्तः । तत्रार्थपाठौ समबलौ । तस्मात्—उभयत्रैच्छिकः क्रमः—इति प्राप्ते,—

ब्रूमः—पाठो हि न क्रमस्याभिधायकः । किंत्वन्यथानुपपत्त्या क्रमं कल्पयति । 'दशमः' इत्येषा श्रुतिस्तु साक्षादेव क्रममभिधत्ते । ततः—पाठादपि श्रुतिः प्रबला । तथा पाठः क्रमं कल्पयन्वस्तुसामर्थ्यमनुसृत्यैव कल्पयति । असमर्थं च यवाग्वाः पूर्वमग्निहोत्रमनुष्ठातुम् । द्रव्यमन्तरेण होमासंभवात् । तस्मात्पाठेन श्रुतिसामर्थ्यलक्षणोऽर्थ उपजीव्यत इत्यर्थस्यार्थस्य पाठात्प्राबल्यम् । तथा सति श्रुत्यर्थौ पाठं बाधित्वा क्रमं नियच्छतः ॥ १ ॥ २ ॥

१ ख. छ. °कोचहे° । ग. च. °कोचकहे° । २ क. °वाग्वाः पाक्षिकः । ३ क. पाठक्रमः । ४ ख. ग. च. छ. °मादूर्ध्वं य° । ५ क. ग. च. °होत्रं निष्पत्तुम् । ६ ख. ग. च, छ. °न [illegible]° । ७ ख. ग. च. छ. °स्यार्थं° ।

( द्वितीये मुख्यक्रमेणाऽऽग्नेयस्य पूर्वमवदानाद्यनुष्ठानाधिकरणे सूत्राणि २—४ ) ।

अवदानाभिघारणासादनेष्वानुपूर्व्यं प्रवृत्त्या स्यात् ॥ २ ॥ यथाप्रदानं वा तदर्थत्वात् ॥ ३ ॥ लिङ्ग-दर्शनाच्च ॥ ४ ॥

द्वितीयाधिकरणमारचयति--

अवदानादि सांनाय्ये पूर्वमाग्नेयकेऽथवा ।
धर्मप्रवृत्तिक्रमतः सांनाय्ये पूर्वतोचिता ॥ ३ ॥
प्रदानं पूर्वमाग्नेयेऽवदानं च तथोचितम् ।
अङ्गानां मुख्यतन्त्रत्वान्मुख्यक्रमबलित्वतः ॥ ४ ॥

दर्शपूर्णमासयोः सांनाय्यधर्मा वत्सापाकरणदोहनादयः प्रथममाम्नाताः, पुरोडाशधर्मा निर्वापावघातादयः पश्चादाम्नाताः । तेनैव पाठक्रमेण धर्मानुष्ठानं प्रवृत्तम् । ततः प्रावृत्तिकक्रमेणावदानमपि सांनाय्ये पूर्वमेव कर्तव्यम्—इति प्राप्ते—

ब्रूमः—'याज्यानुवाक्यादिमन्त्रबलादाग्नेये पूर्वं प्रदानम्' इत्युक्तम् । तत्र प्रदानं फलप्रत्यासत्त्या मुख्यम् । अवदानं तु तदङ्गम् । तथा सति मुख्यस्य क्रममनुसृत्यावदानमप्याग्नेये पूर्वं कर्तव्यम् । मुख्यक्रमो हि प्रावृत्तिकक्रमात्प्रबलः । प्रावृत्तिके हि क्रमे सांनाय्ये पूर्वमवदानमभिघारणमासादनं च कृत्वा प्रदानमकृत्वाऽऽग्नेयेऽवदानादीनि कर्तव्यानि । तथा सति सांनाय्येऽनुष्ठितान्यवदानादीन्यङ्गानि मुख्यात्प्रदानाद्विप्रकृष्येरन् । मुख्यक्रमाश्रयणे त्वाग्नेये प्रथममवदानादिप्रदानान्तं कृत्वा पश्चात्सांनाय्ये तदनुष्ठीयते । तत्र नास्त्यङ्गाङ्गिविप्रकर्षः । ननु—अवदानादिः प्रदानान्त एकः पदार्थः—इत्युक्तम्, तत्र कुतः क्रमविचारः—एवं तर्हि कृत्वाचिन्ताऽस्तु । अथवा स्विष्टकृदवदानादिविषयेयं चिन्ताऽस्तु ॥ ३ ॥ ४ ॥

( तृतीये—इष्टिसोमयोः पौर्वापर्यनियमाधिकरणे सूत्राणि—५—९ ) ।

वचनादिष्टिपूर्वत्वम् ॥ ५ ॥ सोमश्चैकेषामग्न्याधेयस्यर्तुनक्षत्रातिक्रमवचनात्, तदन्तेनानर्थकं हि स्यात् ॥६॥ तदर्थवचनाच्च नाविशेषात्तदर्थत्वम् ॥७॥ अयक्ष्यमाणस्य च पवमानहविषां कालनि-

१ क. ग. 'ख्यक'। २ ख. ङ. 'थमेव चि'।

देशादानन्तर्याद्विशङ्का स्यात् ॥ ८ ॥ इष्टिरय-
क्ष्यमाणस्य तादर्थ्ये सोमपूर्वत्वम् ॥ ९ ॥

तृतीयाधिकरणमारचयति—

दर्शादीष्ट्वा सोमयागः क्रमोऽयं नियतो न वा ।
उत्कर्षाद्यो न सोमस्याऽऽधानानन्तरता श्रुतेः ॥ ५ ॥

'दर्शपूर्णमासाविष्ट्वा सोमेन यजेत' इति क्त्वाप्रत्ययेनावगम्यमानः क्रमो नियतः— इति चेत् ।

नैवम् । 'सोमेन यक्ष्यमाणोऽग्नीनादधीत' इत्याधानानन्तरताया अपि श्रवणात् । तस्मात्—इष्टिसोमयोः पौर्वापर्यं न नियतम् ॥ ५ ॥

(चतुर्थं ब्राह्मणस्यापीष्टिसोमयोः पौर्वापर्यानियमाधिकरणं सूत्राणि—१०—१४ ) ।

उत्कर्षाद्ब्राह्मणस्य सोमः स्यात् ॥ १० ॥ पौर्ण-
मासी वा श्रुतिसंयोगात् ॥ ११ ॥ सर्वस्य वैकक-
र्म्यात् ॥ १२ ॥ स्याद्वा विधिस्तदर्थेन ॥ १३ ॥
प्रकरणात्तु कालः स्यात् ॥ १४ ॥

चतुर्थाधिकरणमारचयति—

विप्रस्य सोमपूर्वत्वं नियतं वा न वाऽग्रिमः ।
उत्कर्षतो नैवमग्नीषोमीयस्यैव तच्छ्रुतेः ॥ ६ ॥

'इष्टिपूर्वत्वं सोमपूर्वत्वं च विकल्पितम्, इति यदुक्तम्, तत्र ब्राह्मणस्य सोमपूर्वत्वमेव नियतम् । कुतः । उत्कर्षश्रवणात् । 'आग्नेयो वै ब्राह्मणो देवतया । स सोमेनेष्ट्वाऽग्नीषोमीयो भवति । यदेवादः पौर्णमासं हविः, तत्तर्ह्यनुनिर्वपेत् । तर्ह्युभयदेवतो भवति' इति । अस्यायमर्थः—'प्रजापतेर्मुखादग्निर्ब्राह्मणश्चेत्युभावुत्पन्नौ । ततो ब्राह्मणस्याग्निरेक एव देवतेत्याग्नेय एव ब्राह्मणः' न तु सौम्यः । सोमस्य तद्देवतात्वाभावात् । यदा स ब्राह्मणः सोमेन यजते, तदा सोमोऽप्यस्य देवतेत्यग्नीषोमीयो भवति । तस्याग्नीषोमीयस्य ब्राह्मणस्यानुरूपं पौर्णमासमग्नीषोमीयपुरोडाशरूपं हविः सोमादूर्ध्वमनुनिर्वपेत्, तदा स ब्राह्मणो देवताद्वयसंबन्धी भवति' इति । यद्यपि—अत्र कर्मान्तरं किंचिद्विधीयते—इति कश्चिन्मन्यते, तथाऽपि 'पौर्णमासं हविः' इति विस्पष्टप्रत्यभि-

१ ग. च. °रेकैव । २ क. °मासाग्नी° ।

ज्ञानान्न कर्मान्तरम्, किंतु दर्शपूर्णमासयोः सोमादूर्ध्वमुत्कर्षः। तस्मात्—विप्रस्य सोमपूर्वत्वमेव नियतम्—इति प्राप्ते,

ब्रूमः—नात्र दर्शशब्दः पूर्णमासशब्दो वा कश्चिद्यागवाची श्रूयते। 'पौर्णमासम्' इत्येष तद्धितान्तो हविर्विशेषणत्वेनोपन्यस्यते। तच्च हविरग्नीषोमीयपुरोडाशरूपमिति देवताद्वयेन संस्तवादवगम्यते। तस्मादेकस्यैव हविष उत्कर्षः, न तु कृत्स्नयोर्दर्शपूर्णमासयोः। तथा सति ब्राह्मणस्यैकस्मिन्नग्नीषोमीयपुरोडाशे सोमपूर्वत्वनियमः। इतरत्र क्षत्रियवैश्ययोरिवास्यापीष्टिपूर्वत्वसोमपूर्वत्वे विकल्प्येते ॥ ६ ॥

(पञ्चमे ननु प्रतीक्षेत, इत्यादिना सोमकालबाधाधिकरणे सूत्राणि १५-१८)॥

स्वकाले स्यादविप्रतिषेधात् ॥ १५ ॥ अपनयो वाऽऽधानस्य सर्वकालत्वात् ॥ १६ ॥ पौर्णमास्यूर्ध्वं सोमात्, ब्राह्मणस्य वचनात् ॥ १७ ॥ एकं शब्दसामर्थ्यात्प्राक्कृत्स्नविधानात् ॥ १८ ॥

पञ्चमाधिकरणमारचयति—

नर्तुं नित्याहितेः कालो बाध्यः सोमस्य वाऽग्रिमः।
अङ्गमाध्यात्पुरैवास्य बाधात्सोमीयबाधनम् ॥ ७ ॥

इदमाम्नायते—' सोमेन यक्ष्यमाणोऽग्नीनादधीत ' ' नर्तुन्सूर्क्षेत् ' 'न च नक्षत्रम् ' इति। सूर्क्षतिधातुर्दर्शनार्थे वर्तते। ऋतुन्नक्षत्रं वा न परीक्षेत—इत्यर्थः। अनेन निषेधेनाऽऽधानस्य विहितः कालो बाध्यते, न तु सोमस्य विहितः कालः। ' वसन्ते ब्राह्मणोऽग्नीनादधीत ' 'कृत्तिकास्वग्निमादधीत' इत्यादिना वसन्तादृतवः कृत्तिकादिनक्षत्राणि चाऽऽधानकालत्वेन विधीयन्ते। सोमस्यापि ' वसन्ते वसन्ते ज्योतिषा यजेत' इत्यृतुर्विहितः। पुण्यनक्षत्रमपि शाखान्तरेण प्राप्तम्। तत्र यद्यपि—आधानं न सोमस्याङ्गम्, तथाऽपि—अङ्गभूताग्निसंस्कारत्वादङ्गतुल्यमेवेति तदीय एव कालो बाधनीयः—इति चेत्।

मैवम्। पूर्वमेव तत्कालस्य बाधितत्वात्। "यदेवैनं यज्ञ उपनमेदथाऽऽदधीत" इति सोमयागाचिकीर्षया कालमाधानस्योपादिशता शास्त्रेण वसन्तकृत्तिकादिकालो बाधितः। तस्मात्—ऋतुनक्षत्रप्रतीक्षानिषेधेन सोमकाल एव बाध्यते ॥ ७ ॥

---

१ ख. °स्मिन्नेव पु° । ग. घ. ङ. °स्मिन्नेवाग्नी° । २ क. ख. °र्तुन्सूक्षेत° । ३ ग. घ. °ति । सूक्षति° । ४ ग. घ. प्रतीक्षेत । ५ क. °कीर्षाकालमाधान° ।

( षष्ठे—आज्यस्य सोमादनुत्कर्षाधिकरणे सूत्राणि १९—२१ ) ।

पुरोडाशस्त्वनिर्देशे तद्युक्ते देवताभावात् ॥ १९ ॥
आज्यमपीति चेत् ॥ २० ॥ न मिश्रदेवतत्वादै-
न्द्राग्नवत् ॥ २१ ॥

षष्ठाधिकरणमारचयति—

आज्यं चोत्कृष्यते नो वा तस्याग्नीषोमयोगतः ।
आद्यः प्रजापतिं विष्णुं वा यष्टुं शक्तितोऽन्तिमः ॥ ८ ॥

अग्नीषोमीयस्य पुरोडाशस्य सोमादूर्ध्वमुत्कर्षः—इत्युक्तम् । तद्वदुपांशुयाजार्थं यदाज्यं तस्योत्कर्षः कार्यः । अग्नीषोमसंबन्धस्य समानत्वात्—इति चेत् ।

नैवम् । विष्णुप्रजापत्योरपि विकल्पितदेव[ता]त्वेन यष्टुं शक्यत्वात् । तस्मात्—नाऽऽज्यस्योत्कर्षः ॥ ८ ॥

( सप्तमे विकृतानामैन्द्राग्नादीनां सद्यस्कालताधिकरणे सूत्राणि २२—२४ ) ।

विकृतेः प्रकृतिकालत्वात्सद्यस्कालोत्तरा विकृतिस्तयोः
प्रत्यक्षशिष्टत्वात् ॥ २२ ॥ द्व्यहकाल्ये तु यथान्यायम्
॥ २३ ॥ वचनाद्वैककाल्यं स्यात् ॥ २४ ॥

सप्तमाधिकरणमारचयति—

द्व्यहकालाः किमैन्द्राग्नाद्याः सद्यस्कालगा उत ।
आद्यः प्रकृतिवन्नैवं विकृत्युक्तिविशेषतः ॥ ९ ॥

'ऐन्द्राग्नमेकादशकपालं निर्वपेत्प्रजाकामः' 'सौर्यं चरुं निर्वपेद्ब्रह्मवर्चसकामः' इत्यादयो द्व्यहकालाः । कुतः । प्रकृतौ तद्दर्शनात् । पर्वण्यग्न्यन्वाधानम्, इध्मस्य बर्हिषश्च संपादनम्, प्रतिपदीष्टिः—इति द्व्यहकालत्वं प्रकृतौ दृष्टम् । तथैव विकृतावपि युक्तम्—इति चेत् ।

नैवम् । एकाहकालत्वस्य वाचनिकत्वात् । 'य इष्ट्या पशुनासोमेन वा, आग्रयणेन वा यक्ष्यमाणः, सोऽमावास्यायां पौर्णमास्यां वा यजेत' इति वचनाच्चोदकप्राप्तं द्व्यहकालत्वं बाध्यते ॥ ९ ॥

( अष्टमे सोमात्सांनाय्यविकारादीनामुत्कर्षाधिकरणे सूत्रम्— )

सांनाय्याग्नीषोमीयविकारा ऊर्ध्वं सोमात्प्रकृतिवत् ॥ २५ ॥

अष्टमाधिकरणमारचयति—

१ क. आज्यमुत्कृ° । २ ङ. °ग्न्यन्वा° ।

आमिक्षादेरनियतिः स्यात्सोमादूर्ध्वमेव वा।
अविशेषादग्रिमोऽन्त्यो नासोमेति विशेषतः ॥ १० ॥

'वैश्वदेव्यामिक्षा' इत्यादिः सांनाय्यविकारः। 'अग्नीषोमीयमेकादशकपालं निर्वपेत्' 'वसन्तेन ब्रह्मवर्चसकामः' इत्यादिरग्नीषोमीयपुरोडाशविकारः। तस्योभयस्य सोमात्प्रागूर्ध्वं वा यथेच्छमनुष्ठानम्। कुतः। विशेषनियामकस्याभावात्—इति चेत्।

मैवम्। 'नासोमयाजी संनयेत्' इति निषेधेन सांनाय्यं सोमादूर्ध्वमुत्कृष्यते। अग्नीषोमीयपुरोडाशस्योत्कर्षः पूर्वमेव दर्शितः। तस्मात्—तद्विकारयोरप्युत्कर्षो युक्तः ॥ १० ॥

(नवमे सोमविकाराणां दर्शपूर्णमासात्प्रागकर्तव्यताधिकरणे सूत्रम्—)।
तथा सोमविकारा दर्शपूर्णमासाभ्याम् ॥ २६ ॥

नवमाधिकरणमारचयति—

एकाहानामनियमो दर्शादेरूर्ध्वमेव वा।
सोमवत्प्रथमो मैवमनुक्तेः स्यात्तदूर्ध्वता ॥ ११ ॥

'गवा यजेत' इत्यादिना गवादिनामकाः सोमविकारा एकाहा आम्नाताः। तेषामपि सोमवदिष्टिपूर्वत्वं विकल्पितम्—इति चेत्।

मैवम्। सोमस्य पूर्वत्वं वचनेन साक्षान्नोक्तम्, किंतु 'सोमेन यक्ष्यमाणोऽग्नीनादधीत' इत्याधानानन्तर्याभिधाने सत्यर्थादिष्टेः पूर्वं सोमानुष्ठानं संपद्यते। तस्मादनुक्तं पूर्वभावित्वं चोदको नातिदिशति।—अर्थसिद्धमप्यतिदिश्यताम्—इति चेत्। न। इहासंभवात्। सकृदेवाऽऽधानम्। तथा सति तदानन्तर्यं प्रकृतावुपक्षीणम्। न ह्येकस्याऽऽनन्तर्यस्य भिन्नकालीनयोः प्रकृतिविकृत्योः संबन्धः संभवति। तस्मादिष्ट्युत्तरकालीनत्वं सोमस्य निवारयितुं समर्थस्याऽऽधानानन्तर्यस्य विकृतिष्वनतिदेशात् 'दर्शपूर्णमासाविष्ट्वा सोमेन यजेत' इत्युक्तस्योत्तरकालीनत्वस्यातिदेशाच्चेष्टेरूर्ध्वमेव गवादिविकृतयोऽनुष्ठेयाः ॥ ११ ॥

इति श्रीमाधवीये जैमिनीयन्यायमालाविस्तरे पञ्चमाध्यायस्य चतुर्थः पादः ॥ ४ ॥

समाप्तश्चायं पञ्चमोऽध्यायः ॥

| | अत्र पादे | आदितः। |
|---|---|---|
| अधिकरणानि | ९ | ३६२। |
| सूत्राणि | २६ | ९४४। |

---

१ अ. क्र. 'बपू'। २ ग. च. 'देव आधा'।

( अथ षष्ठाध्यायस्य प्रथमः पादः ) ।

अनुष्ठानक्रमः सर्वः पञ्चमे सुनिरूपितः ।
कोऽनुष्ठातेत्यपेक्षायामधिकारोऽत्र वर्ण्यते ॥ १ ॥

अनेन पञ्चमषष्ठयोरध्याययोः पूर्वोत्तरभाव उपपादितः ॥१॥

( प्रथमे— { यागादिकर्मणां स्वर्गादिफलसाधनताधिकरणे, अधिकारन्याये } सूत्राणि १—३ ) ।

द्रव्याणां कर्मसंयोगे गुणत्वेनाभिसंबन्धः ॥ १ ॥ असाधकं तु तादर्थ्यात् ॥ २ ॥ प्रत्यर्थं चाभिसंयोगात्, कर्मतो ह्यभिसंबन्धः, तस्मात्कर्मोपदेशः स्यात्॥ ३ ॥

षष्ठाध्यायस्य प्रथमपादे प्रथमाधिकरणमारचयति—

कर्माधिकारः कर्तुर्नो किंवाऽस्ति, न पदश्रुतेः ।
धात्वर्थभाव्यताभानात्फलभोगविवर्जनात् ॥ २ ॥

बलीयस्या विधिश्रुत्याऽवरुद्धा भावनाऽत्र च ।
भाव्यः स्वर्गः पुमर्थत्वात्कामियोगाच्च सोऽस्त्यतः ॥ ३ ॥

'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' इति श्रूयते । तत्र यागक्रियानिष्पादकत्वं कर्तृत्वम् । फलभोक्तृतया स्वामित्वमधिकारः । तादृशोऽधिकारो यागकर्तुर्नास्ति । कुतः । फलभोगाभावात् । तथा हि 'यजेत' इत्यत्राऽऽख्यातेन भावनाऽभिधीयते । तस्याश्च धात्वर्थो भाव्यः । एकपदोपात्तत्वात् । स्वर्गस्तु पदान्तरोपात्तत्वाद्वाक्येन भाव्यतयाऽन्वेतव्यः । तच्च वाक्यमेकपदरूपया श्रुत्या बाध्यते । स्वर्गस्य भाव्यत्वाभावे सति गुणत्वमभ्युपेयम् । स्वर्गशब्दो नात्र सुखवाची, किंतु सुखसाधनं चन्दनादिद्रव्यं ब्रूते । लोके तथा व्यवहारात् । तच्च कामयितुं योग्यम् । तेन द्रव्येण विना यागानिष्पत्तेः । तस्मात्—अस्मिन्वाक्ये फलानभिधानेन तद्भोगाभावात्कर्तुर्यागे कर्तृत्वमेव, न त्वधिकार इत्यधिकारलक्षणं नाऽऽरब्धव्यम् । इति प्राप्ते—

ब्रूमः—'यजेत' इत्यत्र प्रत्ययस्य केवलमाख्यातरूपत्वमेवेति न मन्तव्यम् । किंतु लिङ्प्रत्ययत्वेन विधिरूपत्वमप्यस्ति । तत्राऽऽख्यातत्वाकारेण भावनामाचष्टे, विधित्वाकारेण पुरुषं प्रवर्तयति । पुरुषश्च स्वामिमतं फलमन्तरेण न प्रवर्तत इति तदपेक्षितं

१ ग. क्र. वा. । २ क. ख. तस्यां च भा° ।

स्वर्गमेव भाव्यतया विधिरुपादत्ते । स्वर्गशब्दश्चोत्कृष्टसुखे रूढः, द्रव्ये तु लाक्षणिकः । तस्मात्—सुखस्य भाव्यत्वं विधिश्रुत्या सिद्धम् । धात्वर्थस्य तु भाव्यत्वमेकेन पदेन प्रतीयमानमपि न प्रत्ययेनावगम्यते, किंतु प्रकृत्या । तथा सति स्वर्गभाव्यत्वं भावनायां प्रत्यासन्नम् । एकेनैव विधिरूपेणाऽऽख्यातेनावगमात्[1] । कर्मियोगादपि स्वर्गस्य भाव्यत्वम् । तस्मात्—फलभोगसंभवेन[2] कर्तुरधिकारोऽस्तीत्यधिकारलक्षणमारब्धव्यम् ॥ २ ॥ ३ ॥

(द्वितीये—अशक्तानामधिकारनिराकरणाधिकरणे सूत्रे ४—५ ) ।

फलार्थत्वात्कर्मणः शास्त्रं सर्वाधिकारं स्यात् ॥४॥

कर्तुर्वा श्रुतिसंयोगाद्विधिः कार्त्स्न्येन गम्यते ॥५॥

द्वितीयाधिकरणमारचयति—

अन्धादेरस्त्यसौ नो वा, स्वर्गेच्छुत्वात्स विद्यते ।
प्रधानोक्त्यनुसारेण यथाशक्त्यङ्गवर्णनम् ॥४॥
नैवाऽऽज्यावेक्षणादीनां पुरुषं प्रति चोदना ।
क्रतुं प्रति विधिस्तस्मान्नाशक्तस्याधिकारिता ॥ ५ ॥

अन्धः, पङ्गुः, बधिरः, मूकः, गवाश्वादयस्तिर्यञ्चः, इत्यादीनां चेतनत्वेन निरतिशयसुखरूपे स्वर्गे कामना[3] संभवति । अथोच्येत—'केषुचिदङ्गेषु शक्तिर्नास्ति । तथा हि—अन्धो नाऽऽज्यमवेक्षितुं क्षमः । पङ्गुर्विष्णुक्रमेष्वशक्तः । बधिरो नाध्वर्युप्रोक्तं शृणोति । ततः 'वत्सुप्रीवाचयति' इति विहितस्यानुष्ठानं न सिध्येत् । मूकोऽनुमन्त्रणादावशक्तः । तिर्यञ्चो बहुष्वशक्ताः' इति । तन्न । यथाशक्त्यङ्गानामनुष्ठेयत्वात् । 'स्वर्गकामो यजेत' इत्यनेन प्रधानवाक्येन सर्वाधिकारः प्रतीयते । स चाऽऽज्यावेक्षणाद्यङ्गवाक्यानुसारेण न संकोचयितुं युक्तः । किंतु प्रधानानुसारेणाङ्गानुष्ठानमेव संकोचयितुं युक्तम् । तस्मात्—अन्धादेरप्यधि[4]कारोऽस्ति । इति प्राप्ते—

ब्रूमः—यद्याज्यवेक्षणादयः पुरुषार्थतया विधीयेरन्, तदा तल्लोपेऽपि न क्रतोर्वैकल्यम्[5] । इह तु—क्रत्वङ्गतया ते विहिता इति तल्लोपे क्रतुरेव न निष्पद्यते[6] । तस्मात्—अशक्तस्य नास्त्यधिकारः ॥ ४ ॥ ५ ॥

(तृतीये स्त्रिया अनाधिकारनिराकरणाधिकरणे सूत्राणि ६—१६) ।

लिङ्गविशेषनिर्देशात्पुंयुक्तमैतिशायनः ॥ ६ ॥ तदु-

---

१ ग. च. छ. °ख्यातप्रत्ययेना° । २ क. °त् । कामनायो° । ३ च. °वे क° । ४ ख. ग. च. छ. °देश्चास्त्य° । ५ ख. च. °कारः । इ° । ६ च. निष्पद्येत ।

क्तित्वाच्च दोषश्रुतिरविज्ञाते ॥७॥ जातिं तु बादरायणोऽविशेषात्, तस्मात्स्त्र्यपि प्रतीयेत जात्यर्थस्याविशिष्टत्वात् ॥८॥ चोदितत्वाद्यथाश्रुति ॥९॥ द्रव्यवत्त्वात्तु पुंसां स्यात्, द्रव्यसंयुक्तं क्रयविक्रयाभ्याम्, अद्रव्यत्वं स्त्रीणां द्रव्यैः समानयोगित्वात् ॥१०॥ तथा चान्यार्थदर्शनम् ॥११॥ तादर्थ्यात्कर्मतादर्थ्यम् ॥१२॥ फलोत्साहाविशेषात्तु ॥१३॥ अर्थेन च समवेतत्वात् ॥१४॥ क्रयस्य धर्ममात्रत्वम् ॥१५॥ स्ववत्तामपि दर्शयति ॥ १६ ॥

तृतीयाधिकरणमारचयति—

स्त्रिया न सोऽस्त्यस्ति वा, नो पुंलिङ्गेन तदीरणात् ।
प्रकृत्यर्थतया लिङ्गं संख्यावन्नाविवक्षितम् ॥ ६ ॥
अस्त्युद्देश्यगतत्वेन संख्यया सदृशत्वतः ।
यद्विभक्तिविकारादेरर्थस्तत्प्रकृतेर्न तु ॥ ७ ॥

'स्वर्गकामो यजेत' इति पुंलिङ्गशब्देनाधिकारिणो विधानात्सोऽधिकारः स्त्रिया नास्ति । न च—ग्रहैकत्ववल्लिङ्गमविवक्षितम्—इति वाच्यम् । एकत्ववल्लिङ्गस्य प्रत्ययार्थत्वाभावात् । प्रकृत्यर्थतया तु ग्रहवद्विवक्षितं पुंलिङ्गम् । इति प्राप्ते—

ब्रूमः—अस्ति स्त्रियाः कर्माधिकारः । कुतः । पुंलिङ्गस्याविवक्षितत्वात् । न ह्येकत्वस्य प्रत्ययार्थत्वमविवक्षायां निमित्तम् । किंतूद्देश्यगतत्वम् । इहापि 'यः स्वर्गकामः, स यजेत' इति वचनव्यक्तौ पुंलिङ्गस्योद्देश्यगतत्वेनैकत्वसंख्यया सदृशत्वान्नास्ति विवक्षितत्वम् । न च—प्रकृत्यर्थो लिङ्गम् । किंतु—स्त्रीलिङ्गं तावट्टाबादिभिः स्त्रीप्रत्ययैरभिधीयते । पुंलिङ्गं तु 'वृक्षान्' इत्यस्मिन्द्वितीयाबहुवचने विभक्तिविकारेण नकारादेशलक्षणेनाभिव्यज्यते । एवम् 'कुलम्' इत्यस्मि-

१ क °म । 'अः ।

न्यथमैकवचने नपुंसकाभिव्यक्तिः । तस्मात्—लिङ्गस्य प्रकृत्यर्थत्वाभावादुद्देश्यग-तत्वेनाविवक्षितत्वाच्च स्त्रिया अप्यधिकारः* ॥ ६ ॥ ७ ॥

( चतुर्थे—यागे दंपत्योः सहाधिकाराधिकरणे सूत्राणि १७–२१ ) ।

**स्ववतोस्तु वचनादैककर्म्यं स्यात् ॥ १७ ॥ लिङ्ग-दर्शनाच्च ॥ १८ ॥ क्रीतत्वात्तु भक्त्या स्वामित्वमु-च्यते ॥ १९ ॥ फलार्थित्वात्तु स्वामित्वेनाभिसं-बन्धः ॥ २० ॥ फलवत्तां दर्शयति ॥ २१ ॥**

चतुर्थाधिकरणमारचयति—

**दंपतिभ्यां पृथक्कार्यं सह वाऽऽख्यातसंख्यया ।**
**पृथग्नैवमवैगुण्यात्कर्त्रैक्यं दैवतैक्यवत् ॥ ८ ॥**

'यजेत' इत्याख्यातप्रत्ययगतायाः संख्याया उद्देश्यगतत्वाभावेन विवक्षाया वारयितुमशक्यत्वादेककर्तृत्वाय दंपतिभ्यां पृथगेव कर्मानुष्ठेयम् । इति चेत् । नैवम् । वैगुण्यप्रसङ्गात् । कर्मणि तत्र तत्र पत्न्यवेक्षणं यजमानावेक्षणं चेत्यु-भयमप्याम्नातम् । तत्र यजमानप्रयोगे पत्न्यवेक्षणं लुप्येत, पत्नीप्रयोगे यजमाना-वेक्षणं लुप्येत, इत्यवैगुण्याय द्वयोः सहाधिकारः । न च—यजेतेत्येकत्वं विरु-द्धम् । 'अग्नीषोमौ देवता' इत्यत्र यथा व्यासक्तयोर्देवत्वाद्दैवतैक्यम्, तथा दंप-त्योरेकमेव कर्तृत्वमित्यङ्गीकारात् । तस्मात्—सहाधिकारः ॥ ८ ॥

* अस्यैवाधिकरणस्यानुसारेण 'अष्टवर्षं ब्राह्मणमुपनयीत, तमध्यापयीत' इत्यत्रापि स्त्रिया अप्यधिकारः । अत एव 'प्रावृतां यज्ञोपवीतिनीमभ्युदानयञ्जपेत्' ( २ । १ । १९ ) 'पश्चादग्नेः संवेष्टितं कटम्, एवंजातीयं वाऽन्यत, पदा प्रवर्तयन्तीं वाचयेत्—प्र मे पतियानः पन्थाः कल्पताम्' ( २ । १ । २० ) इति गोभिलसूत्रम्, 'मनसा भर्तुर-तिचारे त्रिरात्रं यावकं क्षीरोदनं वा भुञ्जानाऽधः शयीत, ऊर्ध्वं त्रिरात्रादप्सु निमग्नायाः सावित्र्याऽष्टशतेन शिरोभिर्जुहुयात्पूता भवति' ( अ० २० सू० ५ ) इति वासिष्ठस्मृतिः, 'अथ य इच्छेत्—दुहिता मे पण्डिता जायेत सर्वमायुरियात्—इति, तिलौदनं पाचयित्वा सर्पिष्मन्तमश्नीयातामीश्वरौ जनयितवै' इति बृहदारण्यकोपान्त्यश्रुतिश्च, 'कठी, बह्वृची' इत्यादिप्रयोगसाधकम् 'शाखाध्येतृवाची च शब्दो जातिकार्यं लभते' इत्यर्थकम् 'गोत्रं च चरणैः सह' इति वार्तिकं च संगच्छते । किंच यजमानपत्न्या अध्ययनमन्तरेण ऋत्वि-गादिप्रोक्तार्थस्य ज्ञानाभावात्तदुक्तकर्मणि प्रवृत्तिरेव न स्यात् । संस्कृतातिरिक्तभाषणं तु 'नायज्ञियां वाचं वदेत्' इत्यादिना निषिद्धमेव । उपलभ्यते च प्राचीनेतिहासादिषु सीता-महाश्वेतादीनां संध्योपासनमपि ।

१ ख. ग. च. अस्त्याधि° । २ ख. च. °तृकत्वा° । ३ ख. च. °यमास्ना° । ४ ख. ग. °वतात्वा° । च. °वतै° ।

( पञ्चमे--आधाने पुरुषद्वयकर्तृकत्वनिराकरणाधिकरणे सूत्रे २२--२३) ।

द्व्याधानं च द्वियज्ञवत् ॥ २२ ॥ गुणस्य तु विधानत्वात्पत्न्या द्वितीयशब्दः स्यात् ॥ २३ ॥

पञ्चमाधिकरणमारचयति--

पुंसोरेकस्य वाऽऽधानं वसानावित्यतो द्वयोः ।
एष क्षौमविधिर्द्वित्वं दंपत्योरेकता ततः ॥ ९ ॥

आधाने श्रूयते--' क्षौमे वसानावग्नी आदधीयाताम् ' इति । तत्र ' वसानौ' इति पुंलिङ्गद्विवचनादुभयोः पुंसोराधानेऽधिकारः । इति चेत् ।

मैवम् । क्षौमस्याप्राप्तस्य विधेयतया पुंद्वित्वस्यापि विधाने वाक्यभेदान्न तद्विधीयते । किंतु--दंपत्योः सहाधिकारेण प्राप्तं द्वित्वमनूद्यते । पतिश्च पत्नी चेति विगृह्य पतिशब्दस्यैकशेषात्पुंलिङ्गद्विवचनमविरुद्धम् । तस्मात्--आधानेऽधिकारिणः पुंस एकत्वमेव ॥ ९ ॥

( षष्ठे पुंस एवोपस्थानाद्यधिकाराधिकरणे सूत्रम्-- ) ।

तस्या यावदुक्तमाशीर्ब्रह्मचर्यमतुल्यत्वात् ॥ २४ ॥

षष्ठाधिकरणमारचयति--

उपस्थानादि दंपत्योरुत पुंसो द्वयोरिदम् ।
यजमानत्वसाम्येन विद्वत्त्वात्पुंस एव तत् ॥ १० ॥

'अगन्म सुवर-- ' इत्यनेन मन्त्रेण 'उद्यन्नद्य मित्रमहः' इत्याद्यैर्मन्त्रैश्च कर्तव्यमादित्यविषयमुपस्थानम् । आदिशब्देन 'वसन्तमृतूनां प्रीणामि ' इत्यादिना विहितमनुमन्त्रणादि । तत्सर्वं दंपतिभ्यामुभाभ्यां कर्तव्यम् । कुतः । यजमानत्वस्योभयोः समानत्वात् । ततो[3] याजमानत्वसमाख्यया यथा पुंसाऽनुष्ठीयते, तथा स्त्रियाऽपि । इति चेत् ।

मैवम् । ×अध्ययनरहितया स्त्रिया तदनुष्ठातुमशक्यत्वात् । तस्मात्--पुंस एवोपस्थानादिकम् ॥ १० ॥

---

×इदं च " स इच्छेत्--दुहिता मे पण्डिता जायेत सर्वमायुरियात् " इति बृहदारण्यकोपान्त्यश्रुतिविरुद्धम् ।

---

१ ख. च. °वग्निमाद° । २ ख. °सोर्द्वयो° । ३ ख. ग. च. छ. °तो यज° । ४ क. ख. स्त्रिया अपि ।

( सप्तमे शूद्रस्यानधिकाराधिकरणे सूत्राणि २५–३८ )।

चातुर्वर्ण्यमविशेषात् ॥ २५ ॥ निर्देशाद्वा त्रयाणां स्यादग्न्याधेये ह्यसंबन्धः क्रतुषु ब्राह्मणश्रुतिरित्यात्रेयः ॥ २६ ॥ निमित्तार्थेन बादरिः, तस्मात्सर्वाधिकारं स्यात् ॥ २७ ॥ अपि वाऽन्यार्थदर्शनाद्यथाश्रुति प्रतीयेत ॥ २८ ॥ निर्देशात्तु पक्षे स्यात् ॥ २९ ॥ वैगुण्यान्नेति चेत् ॥ ३० ॥ न काम्यत्वात् ॥ ३१ ॥ संस्कारे च तत्प्रधानत्वात् ॥३२॥ अपि वा वेदनिर्देशादपशूद्राणां प्रतीयेत ॥ ३३ ॥ गुणार्थित्वान्नेति चेत् ॥ ३४ ॥ संस्कारस्य तदर्थत्वात्, विद्यायां पुरुषश्रुतिः ॥ ३५ ॥ विद्यानिर्देशान्नेति चेत् ॥ ३६ ॥ अवैद्यत्वादभावः कर्मणि स्यात् ॥ ३७ ॥ तथा चान्यार्थदर्शनम् ॥ ३८ ॥

सप्तमाधिकरणमारचयति—

शूद्रोऽपि यष्टा नो वा स्याद्वेदाध्ययनेन वा ।
उपदेष्टृमुखाद्वाऽस्य क्रतुवित्त्वेन यष्टृता ॥११॥
त्रिवर्णैर्वेदविद्भिः कृतार्था विधयः क्रतोः ।
नाऽऽक्षिपन्ति चतुर्थस्य विद्यां तद्यष्टृता कुतः ॥ १२ ॥

लिखितपाठादिना तात्कालिकाचार्योपदेशेन वा शूद्रस्याप्यनुष्ठानहेतुभूतविद्यासंभवाच्छूद्रोऽपि यागाधिकारी । इति चेत् ।

मैवम् । क्रतुविधिवैयर्थ्यपरिहाराय हि शूद्रस्याविहिताऽपि विद्या कल्प्यते ( ल्प्येत ) क्रतुविधयश्च त्रैवर्णिकानुष्ठानेनैव चरितार्थाः सन्तो न शूद्रस्य विद्यां कल्पयन्ति । त्रैवर्णिकानां तु विद्या न कल्पनीया, अध्ययनविधिनैव विहितत्वात् । तस्मात्—न शूद्रस्य यागाधिकारः ॥ ११ ॥ १२ ॥

---

१ ख. °ता ॥ ११ ॥ त्रैवर्णिकैर्वेदविद्भिः । २ ग. छ. विद्यान्ता यष्टृ° ।

( अष्टमे निर्धनाधिकाराधिकरणे सूत्रे ३९–४० )।

त्रयाणां द्रव्यसंपन्नः कर्मणो द्रव्यसिद्धित्वात् ॥ ३९ ॥ अनित्यत्वात्तु नैवं स्यादर्थाद्धि द्रव्यसंयोगः ॥ ४० ॥

अष्टमाधिकरणमारचयति–

धन्येव कर्तान्योऽपि धन्येव विधिसामर्थ्यतः ।
अन्योऽधिकुरुते द्रव्यमाक्षिपेद्भुक्तिवत्क्रतुः ॥ १३ ॥

यथा विद्याऽधिकारहेतुः, तथा धनमपीति धनिन एव यागाधिकारः । तावता विधीनां सार्थकत्वात् । विध्यन्यथानुपपत्त्यो हि दरिद्रस्य धनार्जनमाक्षेप्तुं शक्येत । तस्मात्—शूद्रवद्दरिद्रोऽपि न कर्मण्यधिकारी । इति चेत् ।

मैवम् । धनिकस्यापि धनार्जनं न यागविधिभिराक्षिप्तम् । भोजनादिभिर्धनकार्यैरेव तस्याऽऽक्षिप्तत्वात् । अत एव विद्याया अध्ययनविधिरिव धनार्जनस्य न कोऽपि विधिरस्ति । भोजनादिविषय उपायनियमार्थो ह्युक्तम् । तस्मात्—भोजनादिवत्क्रतोरपि धनकार्यत्वेन धनार्जनापेक्षत्वाद्दरिद्रोऽपि धनार्जनं कृत्वा क्रतावधिकरोति ॥ १३ ॥

( नवमे—अङ्गहीनाधिकाराधिकरणं सूत्रम्— ) ।

अङ्गहीनश्च तद्धर्मा ॥ ४१ ॥

नवमाधिकरणमारचयति–

अङ्गहीनो न कुरुते कर्ता वा, नाक्षमत्वतः ।
समाधायाङ्गवैकल्यं करोति द्रव्यहीनवत् ॥ १४ ॥

कश्चिदक्षिरोगेणाऽऽज्यमवेक्षितुमसमर्थः । अन्यो वातरोगेणास्वाधीनपादो विष्णुक्रमेष्वसमर्थः । अतो नाङ्गहीनः कर्माधिकारी । इति चेत् ।

मैवम् । धनहीनो यथा धनं संपाद्याधिकरोति, तथा विकलाङ्गोऽप्यौषधादिना वैकल्यं समाधायाधिकरोतु ॥ १४ ॥

( दशमेऽचिकित्स्याङ्गवैकल्यस्यानधिकाराधिकरणं सूत्रम्— ) ।

उत्पत्तौ नित्यसंयोगात् ॥ ४२ ॥

१ ग. घ. °न्योऽपि कु° । २ ख. ग. घ. ङ. °स्या द° । ३ ख. ग. घ. °क्षेप्तुमशक्यत । त° । ४ ग. ङ. इति युक्त° । ५ क. °ज्यमवे° । ६ क. अन्ये । ७ क. °पादा वि° । ८ क. °मर्थाः । अ° ।

दशमाधिकरणमारचयति—

असमाधेयवैकल्ये कथं, काम्येष्वकर्तृता ।
नित्येषु त्वाहिताग्निश्चेद्यथाशक्ति करोति हि ॥ १५ ॥

'कथम्' इत्यनेन संशयः सूचितः । वैकल्यस्य समाधातुमशक्यत्वेनाक्षमत्वादत्यन्तमनधिकार एव । इति चेत् ।

मैवम् । काम्येष्वङ्गवैकल्ये फलासिद्धेर्माऽस्तु तत्राधिकारः । नित्यानां त्वाहिताग्निना त्यक्तुमशक्यत्वादीषदङ्गलोपे सोढ्वाऽपि नित्येष्वधिकारोऽस्ति ॥१५॥

( एकादशे दर्शपूर्णमासयोस्त्र्यार्षेयस्यैवाधिकाराधिकरणे सूत्रम्— ) ।

त्र्यार्षेयस्य हानं स्यात् ॥ ४६ ॥

एकादशाधिकरणमारचयति—

विधिर्वरण एकादावपि स्यात्त्रिक एव वा ।
अविशेषात्पक्ष आद्यो वाक्यभेदाय तूत्तरः ॥ १६ ॥

दर्शपूर्णमासयोः 'आर्षेयं वृणीते' इति विधायेदमाम्नातम्—'एकं वृणीते, द्वौ वृणीते, त्रीन्वृणीते, न चतुरो वृणीते, न पञ्चातिवृणीते' इति । 'ऋषिर्गोत्रप्रवर्तकः कश्यपभरद्वाजादिः, तस्य संबन्धी आर्षेयः, तं वृणीते कथयत्युच्चारयति । 'कश्यपगोत्रोऽहम्, भरद्वाजगोत्रोऽहम्' इति तदुच्चारणम् । एकमार्षेयमुच्चारयति तदुदाहृतम् । द्वावार्षेयावुच्चारयति—'उपमन्युवसिष्ठगोत्रोऽहम्' इत्यादि । त्रीनार्षेयानुच्चारयति—'आङ्गिरसबार्हस्पत्यभारद्वाजगोत्रोऽहम्' इत्यादि । चतुर आर्षेयान्नोच्चारयेत् । पञ्चाऽऽर्षेयानतिक्रम्य षडादीनार्षेयान्नोच्चारयेत्, इत्यर्थः ।

तत्र—एकार्षेयद्व्यार्षेयत्र्यार्षेयवाक्येषु विशेषादर्शनात् 'एकं वृणीते' इत्यादयस्त्रयोऽपि विधयः । इति चेत् ।

मैवम् । वाक्यभेदप्रसङ्गात् । तत्परिहाराय 'त्रीन्वृणीते' इत्यस्यैव विधित्वमस्तु । 'एकं वृणीते, द्वौ वृणीते' इत्यवयुत्यानुवादेन स्तावकम् । 'एकवरण—द्विवरणे अप्रशस्ते अपि यदा कर्तव्ये, तदा त्रिवरणस्य प्रशस्तस्य कर्तव्यत्वं किमु वक्तव्यम्' इति स्तुतिः । चतुर्निषेध—पञ्चातिक्रमनिषेधाभ्यामपि त्रित्वमेव स्तूयते । न च—तयोर्निषेधो विधातव्यः । प्रसक्त्यभावादेव तदप्रवृत्तेः । चतुरादयोऽतिविलम्बकारित्वादप्रशस्ताः । त्रित्वं तु न तथेति प्रशस्तम् । तस्मात्—कर्मण्यधिकुर्वन्यजमानस्त्रीनेवोच्चारयेत्, न न्यूनम्, नाप्यधिकम्, इति तात्पर्यार्थः ॥ १६ ॥

१ क. °म्येषु क° । २ क. °ग्नित्वाय° । ३ ख. ग. घ. ङ. वाक्यभे° । ४ ग. ङ. त्रवृणीते । ५ ग. घ. °म्नायते । ए° । ६ ग. ङ. °यति तिस्रन्नुच्चा° । ७ क. घ. विषयः ।

( द्वादशे रथकाराधिकाराधिकरणे सूत्राणि ४४–५० )।

**वचनाद्रथकारस्याऽऽधानेऽस्य सर्वशेषत्वात् ॥ ४४ ॥ न्याय्यो वा कर्मसंयोगात्, शूद्रस्य प्रतिषिद्धत्वात् ॥ ४५ ॥ अकर्मत्वात्तु नैवं स्यात् ॥ ४६ ॥ आनर्थक्यं च संयोगात् ॥ ४७ ॥ गुणार्थेनेति चेत् ॥ ४८ ॥ उक्तमनिमित्तत्वम् ॥ ४९ ॥ सौधन्वनास्तु हीनत्वात्, मन्त्रवर्णात्प्रतीयेरन् ॥ ५० ॥**

द्वादशाधिकरणमारचयति–

**विप्रादिरेव रथकृदन्यो वाऽऽद्योऽस्तु योगतः ।**
**रूढेर्वर्णान्तरं तस्याऽऽधाने वर्षर्तुरुच्यते ॥ १७ ॥**

आधाने श्रूयते–'वर्षासु रथकार आदधीत' इति । तत्र–'रथं करोति' इति व्युत्पत्त्या त्रैवर्णिको रथकारः । इति चेत् ।

मैवम् । संकीर्णजातिविशेषे रूढत्वात् । वैश्यायां क्षत्रियादुत्पन्नो माहिष्यः। शूद्रायां वैश्यादुत्पन्ना करणी । तस्यां करण्यां माहिष्यादुत्पन्नो रथकारः।तथा च याज्ञवल्क्यः–

'माहिष्येण करण्यां तु रथकारः प्रजायते' इति ।

तस्य च रथकारस्याऽऽधानकालो वर्षर्तुः ॥१७॥

( त्रयोदशे निषादस्थपत्यधिकरणे सूत्रे ५१–५२ )।

**स्थपतिर्निषादः स्याच्छब्दसामर्थ्यात् ॥५१॥ लिङ्गदर्शनाच्च ॥ ५२ ॥**

त्रयोदशाधिकरणमारचयति–

**द्विजः स्थपतिरन्यो वा द्विजः षष्ठीसमासतः ।**
**कर्मधारयमुख्यत्वान्निषादो रौद्रयागकृत् ॥ १८ ॥**

'वास्तुमयं रौद्रं चरुं निर्वपेत्' इति प्रकृत्य श्रूयते–'एतया निषादस्थपतिं याजयेत्' इति । वास्तुशब्दः किंचित्प्रकृतिद्रव्यविशेषमाह । एतस्यामिष्टावधिकारी

---

१ ख. च. °री निषादस्थ° ।

स्थपतिशब्दवाच्यस्त्रैवर्णिकः। कुतः। 'निषादानामधिपतिः' इति षष्ठीसमासस्य त्रैवर्णिके संभवात्। तस्य चाधीतवेदत्वेन विद्यासंभवाच्च। इति चेत्।

मैवम्। 'निषादश्चासौ स्थपतिश्च' इति कर्मधारयसमासस्य मुख्यत्वात्। षष्ठीसमासे तु संकीर्णजातिविशेषवाचिना निषादशब्देन तत्संबन्ध उपलक्ष्येत। न त्वयं कर्मधारये दोषोऽस्ति। ततस्तात्कालिकाचार्योपदेशादिना विद्यां संपाद्य धनिको निषादो रौद्रयागं कुर्यात्॥ १८॥

इति श्रीमाधवीये जैमिनीयन्यायमालाविस्तरे षष्ठाध्यायस्य प्रथमः पादः॥ १॥

| | अत्र पादे | आदितः। |
|---|---|---|
| अधिकरणानि | १३ | ३७५। |
| सूत्राणि | ५२ | ९९६। |

(अथ षष्ठाध्यायस्य द्वितीयः पादः)।

(प्रथमे सत्रे प्रत्येकस्य सत्रिणः फलसंबन्धाधिकरणे सूत्रे १–२)।

**पुरुषार्थैकसिद्धित्वात्तस्य तस्याधिकारः स्यात्॥ १॥ अपि चोत्पत्तिसंयोगो यथा स्यात्सत्त्वदर्शनम्, तथाभावो विकल्पे स्यात्॥ २॥**

द्वितीयपादे प्रथमाधिकरणमारचयति—

**सत्रे फलांशः प्रत्येकं सर्वं वाऽऽद्यः समूहके।**
**कर्तृत्वादन्त्य एकैकस्यापि तत्त्वाद्बहुत्वतः॥ १॥**

इदमाम्नायते—'ऋद्धिकामाः सत्रमासीरन्' इति। तत्र—सत्रे बहूनां समुदायस्य कर्तृत्वमवगतम्। 'सप्तदशावराः सत्रमासीरन्' इति श्रवणात्। कर्तृत्वेन समुदायस्यैव फलश्रवणात्। पुरुषाणां प्रत्येकं फलांश एव न तु सर्वं फलमेकैकस्य। इति चेत्।

मैवम्। एकस्यापि समुदायान्तःपातिनः कर्तृत्वसद्भावात्। अन्यथा समुदायस्यैकत्वेन 'सत्रमासीरन्' इति श्रुतं कर्तृबहुत्वं नोपपद्यते। तस्मात्—एकैकस्य कर्तुः सर्वफलसद्भावात्सर्वफलकामिनामेवाधिकारः, न त्वंशकामिनाम्॥ १॥

१ च. °दानां स्थप°। २ च. फलित्वात्। ३ ख. च. नोपपद्येत। ४ ग. ङ. °कामाना°।

( द्वितीये दर्शादौ कर्त्रैक्यनियमाधिकरणे सूत्राणि ३--१२ ) ।

प्रयोगे पुरुषश्रुतेर्यथाकामी प्रयोगे स्यात् ॥ ३ ॥ प्रत्यर्थं श्रुतिभाव इति चेत् ॥ ४ ॥ तादर्थ्ये न गुणार्थताऽनुक्तेऽर्थान्तरत्वात्कर्तुः प्रधानभूतत्वात् ॥ ५ ॥ अपि वा कामसंयोगे संबन्धात्प्रयोगोऽपदिश्येत प्रत्यर्थं हि विधिश्रुतिर्विषाणा(ण)वत् ॥६॥ अन्यस्य स्यादिति चेत् ॥ ७ ॥ अन्यार्थेनाभिसंबन्धः ॥८॥ फलकामो निमित्तमिति चेत् ॥९॥ न नित्यत्वात् ॥ १० ॥ कर्म तथेति चेत् ॥ ११ ॥ न समवायात् ॥ १२ ॥

द्वितीयाधिकरणमारचयति—

दर्शे कर्त्रैक्यनियमो नास्त्युतास्ति न कामिनि ।
उद्देश्ये ग्रहवत्संख्या यतो नैव विवक्षिता ॥ २ ॥
आख्यातोपात्तसंख्याऽत्र विधेयस्य विशेषणम् ।
विवक्षिताऽतः सेत्यत्र कर्त्रैक्यं विनियम्यते ॥ ३ ॥

' दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत ' इत्यत्र स्वर्गकाम उद्देश्यः । तद्गतं चैकत्वं ग्रहैकत्ववदविवक्षितम् । तस्मात्—एको द्वौ बहवो वा दर्शपूर्णमासयोरधिकारिणः । इति प्राप्ते—

ब्रूमः—मा भूत्स्वर्गकामगतस्यैकत्वविवक्षा, ' यजेत ' इत्याख्यातगतं तु यदेकत्वम्, तद्विधेयस्य विशेषणम् । विधेया च क्रिया । सा च स्वसिद्धये कारकान्तरवत्कर्तारमप्याक्षिपतीति क्रियाद्वारा कर्ताऽपि विधेयः । अतो विधेयकर्तृगता येयमेकत्वसंख्या सा विवक्षितेति कर्तुरेकत्वं नियम्यते ॥ २ ॥ ३ ॥

( तृतीये—आरब्धकाम्यकर्मणोऽपि समाप्तिनियमाधिकरणे सूत्राणि १३—१५ ) ।

प्रक्रमात्तु नियम्येताऽऽरम्भस्य क्रियानिमित्तत्वात् ॥ १३ ॥ फलार्थित्वाद्वाऽनियमो यथाऽनुपक्रान्ते ॥ १४ ॥ नियमो वा तन्निमित्तत्वात्कर्तुस्तत्कारणं स्यात् ॥ १५ ॥

---

१ ग. घ. छ. तु ।

तृतीयाधिकरणमारचयति—

असमाप्यं समाप्यं वा काम्यं कामे निवर्तिते ।
आद्यः प्रयोजनाभावादन्त्यो निन्दादिसंश्रवात् ॥ ४ ॥

'चित्रया यजेत पशुकामः' 'कारीर्या वृष्टिकामो यजेत' इत्यादिषु कामप्रेरितेन पुरुषेण कर्मोपक्रान्तम् । तस्य च समाप्तेः प्रागेव केनापि निमित्तेन तत्फलप्राप्तौ दोषदर्शनेन वा कामो निवर्तते, तदा कर्मानुष्ठाने प्रयोजनाभावान्न समापनीयम् । इति चेत् ।

मैवम् । प्रक्रान्तस्य कर्मणोऽसमाप्तौ निन्दाप्रायश्चित्तयोः श्रवणात् । 'देवेभ्यो वा एव आवृश्च्यते यो यक्ष्ये' इत्युक्त्वा 'न यजते, मैधातवीयेन यजेत' इति तदुभयं श्रुतम् । तस्मात्—समापनीयम् ॥ ४ ॥

(चतुर्थे लौकिककर्मणि समाप्यनियमाधिकरणे सूत्राणि—१६–१८) ।

लोके कर्माणि वेदवत्ततोऽधिपुरुषज्ञानम् ॥ १६ ॥ अपराधेऽपि च तैः शास्त्रम् ॥ १७ ॥ अशास्त्रा तूपसंप्राप्तिः, शास्त्रं स्यान्न प्रकल्पकम्, तस्मादर्थेन गम्येत, अप्राप्ते शास्त्रमर्थवत् ॥ १८ ॥

चतुर्थाधिकरणमारचयति—

समाप्यमसमाप्यं वा लौकिकं शास्त्रकल्पनात् ।
आद्यो नो गृहकृष्यादौ शास्त्राकल्पकवर्णनात् ॥ ५ ॥

रथगृहनिर्माणादिरूपं यल्लौकिकं कर्म तदपि तक्षस्मृतावुक्तमिति वेदमूलत्वकल्पनाच्चित्रायागादिवन्निवृत्तेऽपि कामे समापनीयम् । इति चेत् ।

मैवम् । रथादौ रमणीयत्वस्य दृष्टप्रयोजनस्यान्वयव्यतिरेकाभ्यामेव सिद्धयुपायावगमात् । तत्रोहापोहकुशलपुरुषोत्प्रेक्षामूला तक्षस्मृतिर्न वेदं कल्पयितुं प्रभवति । तस्मात्—'अवश्यं समापनीयम्' इति नास्ति नियमः ॥ ५ ॥

( पञ्चमे—प्रतिषिद्धकर्मणामनुष्ठानेऽनिष्टापाताधिकरणे कलञ्जन्याये सूत्रे १९–२० ) ।

प्रतिषेधे त्वकर्मत्वात्क्रिया स्यात्प्रतिषिद्धानां विभक्तत्वादकर्मणाम् ॥ १९ ॥ शास्त्राणां त्वर्थवत्त्वेन

१ ङ. यक्ष्ये । २ ग. छ. °क्षकस्मृ° । ३ ग. छ. °यमेव । ३° । ४ क. ख. °स्य प्र° । ५ क. ग. छ. °क्षकस्मृ° । ६ ख. °र्न मूलभूतं वे° ।

पुरुषार्थौ विधीयते, तयोरसमवायित्वात्तादर्थ्ये
विध्यतिक्रमः ॥ २० ॥

पञ्चमाधिकरणमारचयति—

पर्युदासो निषेधो वा नाद्याद्गृञ्जनमित्यसौ ।
नञ्धात्वोरन्वयादाद्यः कल्प्यं संकल्पतः फलम् ॥ ६ ॥
पदान्वयात्तु नञ्विध्योर्निषेधोऽनर्थहानये ।
संकल्पे लक्षणाप्राप्तिर्नैष काम्यविधिस्तथा ॥ ७ ॥

अनारभ्य श्रूयते—'न कलञ्जं भक्षयेत्' 'न लशुनम्, न गृञ्जनम्' इति । तत्र 'न भक्षयेत्' इति संनिधिवशान्नञ्धात्वोरन्वये सति 'अभक्षणम्' इति पर्युदासः संपद्यते । तथा सति 'नेक्षेतोद्यन्तमादित्यम्' इत्यादाविव संकल्पो विधेयः । तस्य चाभक्षणसंकल्पस्य विश्वजिन्न्यायेन स्वर्गः फलत्वेन कल्पनीयः । इति चेत् ।

मैवम् । पदैकदेशस्य धातोः पदान्तरेणान्वेतुमयोग्यत्वाद्विधायकपदस्य नञ्पदेनान्वये सति रागप्राप्तां भक्षणप्रवृत्तिमनूद्य निषेधस्य विधेयत्वात् । न च—निषेधो व्यर्थः । नरकपातनिवारकत्वात् । एवं च सति—अश्रुतं न किमपि कल्पनीयम् । त्वत्पक्षे तु—अश्रुतः संकल्पः कल्पनीय इति तदर्थं भक्षणशब्दे लक्षणाऽऽश्रयितव्या । तस्मात्—स्वर्गकामिनो नात्राधिकारः, किंतु—नरकाङ्क्षीतस्य ॥६॥७॥

( षष्ठे गुर्वनुगमनादीनामुपनयनोत्तरकालकर्तव्यताधिकरणे सूत्रे २०—२१ ) ।

तस्मिंस्तु शिष्यमाणानि जननेन प्रवर्तेरन् ॥ २१ ॥
अपि वा वेदतुल्यत्वादुपायेन प्रवर्तेरन् ॥ २२ ॥

षष्ठाधिकरणमारचयति—

प्राङ्मुखत्वादिनियम उपनीतेः पुराऽप्युत ।
ऊर्ध्वं मन्त्राग्न्यसाध्यत्वादाद्योऽन्त्योऽस्तु तथा स्मृतेः ॥ ८ ॥

'प्राङ्मुखोऽन्नानि भुञ्जीत' 'गुरुरनुगन्तव्योऽभिवादयितव्यश्च' 'वृद्धः प्रत्युत्थेयः, संमन्तव्यश्च' इत्यादिस्मार्तनियम उपनयनात्प्रागप्यनुसर्तव्यः । तस्य नियमस्य

१ क. कल्पः । २ ख. ग. च. छ. °नैव का° । ३ ख. घ. च. ञ. °स्ततः ॥७॥ अ° । ४ च. संकल्पनीय । ५ क. नाधि° । ६ ख. च. °तस्याधिकारः । ष° । ७ क. ग. ञ. °यः, तु म° । ८ क. °स्य मन्त्रस्य नि° ।

वैदिकैर्मन्त्रैराहवनीयाद्यग्निभिर्वा साध्यत्वं नास्तीति प्रागपि तत्संभवात्। इति चेत्।

मैवम्। श्रौतस्याध्ययनादिनियमस्योपनयनानन्तरभावित्वेन वेदमूलस्मृतिमात्रनि-यमस्याप्युत्तरस्मिन्नेव काले युक्तत्वात्। अत एव स्मर्यते—उपनयनादिर्नियमः' इति, 'प्रागुपनयनात्कामचारवादभक्षः' इति च। तस्मात्—उपनयनात्पूर्वं नास्ति नियमः॥ ७॥

( सप्तम { अग्निहोत्रादियावज्जीवकर्मणां स्वका- लमात्रकर्तव्यताधिकरणेऽग्निहोत्रन्याये } सूत्राणि २३-२६ )।

अभ्यासोऽकर्मशेषत्वात्पुरुषार्थो विधीयते॥ २३॥ तस्मिन्नसंभवन्नर्थात्॥ २४॥ न कालेभ्य उप-दिश्यन्ते॥ २५॥ दर्शनात्काललिङ्गानां काल-विधानम्॥ २६॥

सप्तमाधिकरणमारचयति—

यावज्जीवेति सातत्यं स्वकाले वा निमित्ततः।
कालाङ्गलोपादाद्यः स्यादवैधात्यागतोऽन्तिमः॥ ९॥

इदमाम्नायते—'यावज्जीवमग्निहोत्रं जुहोति' 'यावज्जीवं दर्शपूर्णमासाभ्यां यजेत' इति। तत्र—जीवनस्य निमित्तत्वेनोपन्यासात्सति निमित्ते नैमित्तिकस्या-वश्यंभावाज्जीवतोऽनुष्ठानसातत्यमत्र वर्ण्यते। ननु सायंप्रातःकालावग्निहोत्राङ्गत्वेन चोदितौ, अमावास्यापौर्णमासीकालौ दर्शपूर्णमासयोः। तथा सत्यङ्गलोपः सातत्ये प्रसज्येत। नायं दोषः। 'प्रधानलोपाद्वरमङ्गलोपः' इति न्यायात्। तस्मात्—सातत्यम्। इति प्राप्ते—

ब्रूमः—यद्यपि सायंप्रातरादिकालोऽङ्गम्, तथाऽप्यनुपादेयतया प्रयाजादिव-द्विधेयो न भवति, किंतु—तस्मिन्काले स्वतः प्राप्ते सति कर्मानुष्ठेयतया विधी-यते। तस्य च कालस्य जीवनरूपनिमित्तसंकोचकत्वेनैवान्वयः। तथा सति—उक्तकालविशिष्टमेव जीवनं निमित्तम्। तस्मिन्निमित्ते जीवनरूपो विशेष्यांशो यथा न वैधो नापि त्यक्तुं शक्यः। तथा विशेषणांशः कालोऽप्यविधेयो न त्यक्तुं शक्यश्च। तस्मात्—अवैधस्य त्यागासंभवान्न सातत्यम्, किं स्वकालेऽनुष्ठानम्॥ ९॥

१ ख. °स्याऽऽधानानि°। २ क. °मस्याध्यय°। ३ ख. °रकामवाद°

(अष्टमे--अग्निहोत्रादीनां स्वकालावृत्त्यावृत्त्यधिकरणे सूत्रे२७–२८)।

तेषामौत्पत्तिकत्वादागमेन प्रवर्तेत ॥२७॥ तथा हि लिङ्गदर्शनम् ॥ २८ ॥

अष्टमाधिकरणमारचयति—

सकृत्कृतिरुताऽऽवृत्तिर्दर्शादेः शास्त्रमार्थ्यतः ।
सकृत्स्यात्कालसंयुक्तजीवनावृत्तितोऽन्तिमः ॥ १० ॥

दर्शपूर्णमासादीनां सकृदेवानुष्ठानम्। तावता विधिशास्त्रस्य चरितार्थत्वात्। इति चेत् ।

मैवम् । कालविशिष्टजीवननिमित्तस्याऽऽवृत्तौ नैमित्तिकस्याप्यावर्तनीयत्वात् । तस्मात्—आवृत्तिः ॥ १० ॥

(नवमे दर्शादौ भेदाद्यावृत्त्या होमावृत्त्यधिकरणे सूत्रम्—) ।

तथाऽन्तःक्रतुप्रयुक्तानि ॥ २९ ॥

नवमाधिकरणमारचयति—

क्रतौ सकृद्भेदहोमोऽसकृद्वा, क्रतुसिद्धितः ।
सकृन्निमित्तभेदस्याऽऽवृत्तौ होमोऽसकृद्भवेत् ॥ ११ ॥

दर्शपूर्णमासयोः कुम्भ्यादिपात्रभेदमाज्यादिस्कन्दनं च निमित्तीकृत्य होम आम्नायते—'भिन्ने जुहोति' 'स्कन्ने जुहोति' इति । सोऽयं होमः सकृत्कार्यः । तावतैव क्रतूपकारसिद्धेः । इति चेत् ।

मैवम् । भेदस्य स्कन्दनस्य वा निमित्तस्याऽऽवृत्तौ नैमित्तिकस्याप्यावर्तनीयत्वात् । तस्मात्—नास्ति सकृत्त्वनियमः ॥ ११ ॥

(दशमे गुर्वनुगमादीनां प्रतिनिमित्तमावृत्त्याधिकरणे सूत्रम्— ) ।

आचाराद्गृह्यमाणेषु तथा स्यात्पुरुषार्थत्वात् ॥ ३० ॥

दशमाधिकरणमारचयति—

याथाकाम्य[1]मुताऽऽवृत्तिर्गुरोरनुगमादिषु ।
स्यादाद्यः प्रीतिहेतुत्वान्नियमाद्दृष्टतोऽन्तिमः ॥ १२ ॥

'गुरुरनुगन्तव्योऽभिवाद्यश्च' इति विहितेषु गुरुप्रीतिरूपस्य दृष्टस्यैव प्रयोजनत्वात्प्रीत्यनुसारेणानुगमनादिकं सकृदसकृद्वा स्वेच्छया कर्तव्यम् । इति चेत् ।

१ क. ति—यथाकामम्' । ख. ग. च. ज. 'ति-यथा' ।

मैवम्। दृष्टार्थेष्वपि विहितेषु नियमादृष्टसंभवाद्यदा यदा गुरुगमनादि निमित्तं संपद्यते तदा तदाऽनुगमनादीन्यनुष्ठेयानि ॥ १२ ॥

एकादशे—{ऋणत्रयापाकरणस्य ब्राह्मणक्षत्रियवैश्यानां नित्यताधिकरणं} सूत्रम्—)॥

**ब्राह्मणस्य तु सोमविद्याप्रजमृणवाक्येन संयोगात् ॥ ३१ ॥**

एकादशाधिकरणमारचयति—

**सोमाधीतिप्रजं काम्यं नित्यं वा कामतोऽग्रिमः।**
**वीप्सानुष्ठेयविज्ञानलोकैस्तान्नित्यतेष्यते ॥१३॥**

इदमाम्नायते—'सोमेन यजेत' 'स्वाध्यायमधीयीत' 'प्रजामुत्पादयेत्' इति। तत्र सोमः काम्यः। 'ज्योतिष्टोमेन स्वर्गकामो यजेत' इति कामसंयोगेनाऽऽम्नातत्वात्। अध्ययनप्रजोत्पादनयोरपि विश्वजिन्न्यायेन स्वर्गे फलत्वेन कल्पिते कामियोगोऽपि कल्प्यते। तस्मात्—इदं त्रयं काम्यम्। इति चेत्।

मैवम्। वीप्सादिना नित्यत्वसिद्धेः। 'वसन्ते वसन्ते ज्योतिषा यजेत' इति वीप्सा प्रतिवसन्तं निमित्तीकृत्य सोमयागं विधत्ते। अध्ययनस्य तु न स्वर्गः फलम्। दृष्टप्रयोजनस्यानुष्ठेयविज्ञानस्य संभवात्। तत्र क्रत्वनुष्ठानस्य नित्यत्वात्तद्धेतोरध्ययनस्यापि नित्यत्वमनिवार्यम्। 'अनुत्पाद्य सुतान्न लोकं गच्छति' इति स्मृतेर्लोकसिद्ध्यर्थमुत्पादनस्यापि नित्यत्वम्। अनेनैवाभिप्रायेणेदमाम्नातम्—'जायमानो ह वै ब्राह्मणस्त्रिभिर्ऋणवा जायते। ब्रह्मचर्येण ऋषिभ्यः, यज्ञेन देवेभ्यः, प्रजया पितृभ्यः। एष वा अनृणो यः पुत्री यज्वा ब्रह्मचारी' इति। अत्र ब्राह्मणग्रहणमितरयोरप्युपलक्षणार्थम्। सोमादिविधिषु विशेषस्याश्रवणात्। तस्मात्—सोमादिकं नित्यम् ॥ १३ ॥

**इति श्रीमाधवीये जैमिनीयन्यायमालाविस्तरे षष्ठाध्यायस्य द्वितीयः पादः ॥ २ ॥**

| | अत्र पादे | आदितः। |
|---|---|---|
| अधिकरणानि | ११ | ३८६। |
| सूत्राणि | ३१ | १०२७। |

---

१ क. °स्यमिष्य°। २ ग. ङ. स्वर्गः फलत्वेन कल्प्यते। क. स्वर्गफलत्वेन काल्पनिकनियो°। ३ ग. च. ङ. °बाम्नाय°।

( अथ षष्ठाध्यायस्य तृतीयः पादः ) ।

( प्रथमे—नित्ये यथाशक्त्यङ्गानुष्ठानाधिकरणे सूत्राणि १—७ ) ।

**सर्वशक्तौ प्रवृत्तिः स्यात्तथाभूतोपदेशात् ॥ १ ॥ अपि वाऽप्येकदेशे स्यात्प्रधाने ह्यर्थनिर्वृत्तिर्गुणमात्रमितरत्तादर्थत्वात् ॥ २ ॥ तदकर्मणि च दोषः, तस्मात्ततो विशेषः स्यात्प्रधानेनाभिसंबन्धात् ॥३॥ कर्माभेदं तु जैमिनिः प्रयोगवचनैकत्वात्सर्वेषामुपदेशः स्यादिति ॥ ४ ॥ सर्वस्य व्यपवर्गित्वादेकस्यापि प्रयोगे स्याद्यथा क्रत्वन्तरेषु ॥ ५ ॥ विध्यपराधे च दर्शनात्समाप्तेः ॥ ६ ॥ प्रायश्चित्तविधानाच्च ॥ ७ ॥**

तृतीयपादे प्रथमाधिकरणमारचयति—

**नित्ये सर्वाङ्गसंहारः शक्त्या वाऽऽद्यः फलित्वतः ।**
**शक्त्या त्यागासंभवेन निमित्ते जीवने स्थिते ॥ १ ॥**

'यावज्जीवमग्निहोत्रं जुहोति' इत्यादौ नित्ये कर्मणि सर्वाण्यङ्गान्युपसंहृत्य तद्विशिष्ट एव प्रयोगः कर्तव्यः । कुतः । भावनांशस्य कथंभावस्य समुच्चितैः सर्वैरङ्गैः परिपूरणेन सर्वाङ्गोपेतस्यैव प्रधानस्य फलवत्त्वात् । इति चेत् । मैवम् । अग्निहोत्रदर्शपूर्णमासादिशब्दवाच्यं प्रधानम् ।तस्य च स्ववाक्यगतजीवननिमित्तेनान्वयात्सति जीवने प्रधानं कर्म त्यक्तुमशक्यम् । ततो वाक्यान्तरावगतेष्वङ्गेष्वशक्यं किंचिदङ्गं परित्यज्यापि शक्यैरङ्गैरुपेतं प्रधानं कर्मानुष्ठेयम् ॥ १ ॥

( द्वितीये—अङ्गवैकल्ये काम्यस्य निष्फलत्वाधिकरणे सूत्राणि८—१० ) ।

**काम्येषु चैवमर्थित्वात् ॥ ८ ॥ असंयोगात्तु नैवं स्याद्विधेः शब्दप्रमाणत्वात् ॥ ९ ॥ अकर्मणि चाप्रत्यवायात् ॥ १० ॥**

द्वितीयाधिकरणमारचयति—

---

१ क. नित्यक° । २ क. परिपूर्णेन ।

काम्ये शक्त्योत सर्वाङ्गं शक्त्या लोपस्य संभवात्।
मैवं लोपे निष्फलत्वाच्छाब्दमङ्गं न लुप्यते ॥ २ ॥
प्रधानानुष्ठितौ यद्वज्जीवनस्य निमित्तता।
कामस्य न तथा यस्मात्काम्यं त्यक्तुं च शक्यते ॥३॥

यथा नित्येष्वग्निहोत्रादिकर्मस्वशक्यमङ्गं परित्यक्तम्, तथा काम्येऽप्यैन्द्राग्नसौर्यादिष्वशक्याङ्गलोपसंभवाच्छक्याङ्गोपेतमनुष्ठेयम्। इति चेत्।

मैवम्। अङ्गलोपे काम्यमानफलानुत्पत्तेः। सर्वाङ्गोपेतमेव हि प्रधानं फलसाधनत्वेन विहितम्। तत्र प्रधानस्य त्यागे यथा नास्ति फलम्, तथाऽङ्गत्यागेऽपि। फलसाधनत्वं हि शास्त्रसमधिगम्यम्। ततो यद्यावदङ्गं वा प्रधानं वा शब्दोपात्तम्, तस्य लोपे साधनत्वं नास्ति। नहि गमनसाधनस्य रथस्य चक्राद्यङ्गेष्वन्यतमस्य वैकल्येन गमनसाधनत्वं दृष्टम्। तस्मात्—यदा सर्वाङ्गोपसंहारः कर्तुं शक्यते, तदैव काम्यमनुष्ठेयम्। न च—नित्येऽप्येवमस्तु—इति शङ्कनीयम्। जीवनं निमित्तीकृत्य तत्र विधानात्। यथा गृहदाहं निमित्तीकृत्य विहिता क्षामवतीष्टिरवश्यं कर्तव्या। यथा वा लोके—निमित्तभूतायां बुभुक्षायां सत्यां भोजनमवश्यं कर्तव्यम्, तथा जीवने सति कर्मावश्यमनुष्ठेयम्। न च—जीवनवत्फलकामनाया अपि निमित्तत्वं शङ्कनीयम्। सत्यामपि कामनायां कर्मणोऽवश्यंभावाभावात्। नहि कामिनः कर्माननुष्ठाने प्रत्यवायः श्रूयते। ननु—शास्त्रीयप्रत्यवायाभावेऽपि फलानुत्पत्तिलक्षणो बाधोऽस्त्येव। यथा बुभुक्षोरभोजने राजदण्डाभावेऽपि पित्तक्षोभादिरूपो बाधोऽस्ति तद्वत्। इति चेत्।

मैवम्। तर्हि यथा फलं सिध्यति, तथा कामिना प्रयतितव्यम्। फलं च शब्दावगतसर्वाङ्गोपसंहारमन्तरेण न सिध्यतीत्युक्तम्। नित्ये तु न फलसाधनत्वेन विधिः, किंतु—जीवननिमित्तसंयोगेन। तथा सत्यङ्गवैकल्येऽपि निमित्तेन नैमित्तिकसंयोगः श्रुत्यभिमतो नापैति। ततो विकलाङ्गमपि कर्तव्यमेव। अत एव नित्यस्याकरणे प्रत्यवायप्रायश्चित्ते शास्त्रेष्ववगम्येते। काम्येष्वङ्गवैकल्ये शास्त्राभिमतफलसाधनत्वाभावाद्विकलाङ्गं काम्यं न प्रयोक्तव्यम्। अत एव तत्त्यागेऽपि प्रत्यवायप्रायश्चित्ते न स्तः। तस्मात्—काम्यं कृत्स्नाङ्गोपेतं कर्तुं यदा शक्नुयात्तदा कुर्यात्। नित्यं तु यथा शक्नुयात्, तथा कुर्यात्। एतदेवाभिप्रेत्य श्रुतम्—'तदेव यादृक्कीदृक् च होतव्यम्' इति। तस्मात्—नित्येष्वङ्गलोपेऽपि काम्येष्वङ्गलोपो न सोढुं शक्यः॥ २ ॥ ३ ॥

१ क. °त्वाच्छक्यम°। ग. छ. °त्वाच्छ्रुतम°। २ ख. ग. च. ड. काम्यस्य। ३ ग. छ. °त्कामस्त्यक्तुं। ४ क. ख. न। च. हि। ५ ख. च. °नम्। ६ ख. ग. घ. ड. वैकल्ये। ७ ग. छ. °मित्तीभू°। ८ क. ख. °र्मानु°। ९ ग. छ. निमित्ते। १० क. ख. ग. छ. °क्के लाङ्गा°। ११ क. °ङ्गं न। १२ ख. ग. छ. °दृक्काद्द°।

( तृतीये—द्रव्यभेदेऽपि कर्माभेदाधिकरणे सूत्रे ११–१२ )।

क्रियाणामाश्रितत्वाद्द्रव्यान्तरे विभागः स्यात् ॥ ११ ॥ अपि वाऽव्यतिरेकाद्रूपशब्दाविभागाच्च गोत्ववदैककर्म्यं स्यान्नामधेयं च सत्त्ववत् ॥ १२ ॥

तृतीयाधिकरणमारचयति—

नीवारादिद्रव्यभेदात्कर्मान्यत्स्यात्तदेव वा ।
द्रव्यकर्मैक्यतः पूर्वस्तत्रेषद्भेदतोऽन्तिमः ॥ ४ ॥

दर्शपूर्णमासयोर्व्रीह्यसंभवे नीवारा यदि स्वी क्रियन्ते तदा नीवारादिद्रव्यभेदात्कर्मान्तरं तदित्यभ्युपेयम् । कुतः । द्रव्यकर्मणोरेकत्वात् । द्रव्यं हि कर्मणः स्वरूपम् । ततो द्रव्यान्तरत्वे कर्मान्तरत्वमनिवार्यम् । इति चेत् ।

मैवम् । द्रव्यकर्मणोरीषद्भेदस्यापि भावात् । द्रव्यमाश्रयः । कर्माऽऽश्रितम् । आश्रयाश्रितयोर्भेदाभेदावभ्युपगम्य तादात्म्यसंबन्धो वर्ण्यते । तस्मात्—द्रव्यभेदेऽपि न कर्म भिद्यते ॥ ४ ॥

( चतुर्थे—द्रव्यापचारे प्रतिनिधिना समापनाधिकरणे सूत्राणि १३–१७ )।

श्रुतिप्रमाणत्वाच्छिष्टाभावे नाऽऽगमोऽन्यस्याशिष्टत्वात् ॥ १३ ॥ क्वचिद्विधानाच्च ॥ १४ ॥ आगमो वा चोदनार्थाविशेषात् ॥ १५ ॥ नियमार्थः क्वचिद्विधिः ॥ १६ ॥ तन्नित्यं तच्चिकीर्षा हि ॥ १७ ॥

चतुर्थाधिकरणमारचयति—

द्रव्ये प्रतिनिधिर्नास्ति विद्यते वा, न विद्यते ।
मानाभावादस्ति कर्मचोदनाऽऽक्षेपिका यतः ॥ ५ ॥

नित्यकाम्यकर्मणोः श्रुतस्य व्रीह्यादिद्रव्यस्यापचारे द्रव्यान्तरं प्रतिनिधित्वेन कुत्रापि न विहितम् । अतो मानाभावान्नास्ति प्रतिनिधिः । इति चेत् ।

१ क. ख. नीवारादयो । च. निवारादि । २ ख. ग. च. छ. °वा कर्मा° । ३ ख. ग. च. छ. °म्मयोः क° ।

मैवम्। कर्मचोदना हि द्रव्यमन्तरेणानुपपन्ना द्रव्यसामान्यमाक्षिपति। तत्र व्रीहिश्रुतिर्नियामकम्। तच्चासंभवाद्यदा न प्रवर्तेत, तदा मा भून्नियमः। तथाऽपि सामान्याक्षेपस्य वारयितुमशक्यत्वात्तत्सामान्यं क्वचिद्विशेषे पर्यवस्यतीति प्रमाणसद्भावादस्ति प्रतिनिधिः। ततो द्रव्यान्तरेणापि तत्कर्मानुष्ठातव्यमेव। न तु श्रुतद्रव्याभावमात्रात्कर्मलोपः॥ ५॥

( पञ्चमे–देवतामन्त्रक्रियापचारे प्रतिनिध्यभावाधिकरणे सूत्रे १८–१९ )।

न देवताग्निशब्दक्रियमन्यार्थसंयोगात्॥ १८॥

देवतायां च तदर्थत्वात्॥ १९॥

पञ्चमाधिकरणमारचयति–

देवाग्निमन्त्रप्रोक्षणादावस्ति प्रतिनिधिर्न वा।
पुरेवास्तीह यन्मुख्यं कार्यं तन्नेति नास्त्यसौ॥ ६॥

'आग्नेयोऽष्टाकपालः' 'सौर्यं चरुम्' इत्यादावुक्ता अग्निसूर्यादयो देवाः, आहवनीयादयोऽग्नयः, 'बर्हिर्देवसदनं दामि' इत्यादयो मन्त्राः, प्रोक्षणादयः क्रियाः। एतेषां देवादीनामपचारे द्रव्यवत्प्रतिनिधिरस्ति। इति चेत्।

मैवम्। कार्यसिद्ध्यभावात्। पुरोडाशनिष्पादनं कार्यं व्रीह्यपचारेऽपि नीवारेण सिध्यति। देवादिकार्यं तु नान्येन सिध्यति। न ह्याग्नेययागो विष्णुना निष्पद्यते। नाप्याहवनीयकार्यो होमोऽसंस्कृतेन वह्निना सिध्यति। नापि 'बर्हिर्देवसदनं दामि' इत्येतन्मन्त्रसाध्यमर्थप्रकाशनमन्येन मन्त्रेण सिध्यति। नापि प्रोक्षणकार्यमदृष्टमविहितेनान्यार्थं विहितेन वा क्रियान्तरेणापि सिध्यति। तस्मात्–नास्ति देवादीनां प्रतिनिधिः॥ ६॥

( षष्ठे–प्रतिषिद्धद्रव्यस्य प्रतिनिधित्वाभावाधिकरणे सूत्रम्– )।

प्रतिषिद्धं चाविशेषेण हि तच्छ्रुतिः॥ २०॥

षष्ठाधिकरणमारचयति–

माषायाः प्रतिनिध्यर्हा न वाऽऽद्यस्तद्वारणात्।
नार्हा अयज्ञियत्वोक्तेर्याज्ञाद्विनिवारणात्॥ ७॥

'मौद्गं चरुं निर्वपेच्छ्रीकामः' इत्यत्र मुद्गाभावे माषाः प्रतिनिधित्वमर्हन्ति।

१ क. 'सं न नि'। २ ख. 'रे नीवारद्र'। ३ ग. क. माषावः। ४ ग. ख. 'र्हति। कु'।

कुतः । मुद्गकार्ये चरुनिष्पादने समर्थत्वात् । निवारकस्य प्रतिषेधवचनस्याभावाच्च । इति चेत् ।

नैवम् । 'अयज्ञिया वै माषाश्चणकाः कोद्रवाः' इति माषादिधान्यत्रयायज्ञियत्ववचनस्य तन्निषेधे पर्यवसानात् । तस्मात्—नाहा माषाद्याः ॥ ७ ॥

( सप्तमे—स्वामिनः प्रतिनिध्यभावाधिकरणे सूत्रम्— ) ।

**स्वामिनः फलसमवायात्फलस्य कर्मयोगित्वात् ॥ २१ ॥**

सप्तमाधिकरणमारचयति—

**स्वामिनोऽस्ति प्रतिनिधिर्न वा द्रव्यवदस्ति सः ।**
**न मृते प्रेरकाभावाज्जीवनेऽप्यफलित्वतः ॥ ८ ॥**

यथा यागसाधनद्रव्यस्य प्रतिनिधिः, तथा कर्तुर्यजमानस्यापि प्रतिनिधिरस्तु । इति चेत् ।

नैवम् । किं यजमाने मृते सति प्रतिनिधिरन्विष्यते, किंवा कार्यान्तरव्यापृते । नाऽऽद्यः । असंभवात् । अन्यस्मिन्नपचारिते यजमानः प्रतिनिधिं गृह्णाति । यजमानेऽपचरिते कोऽन्यः प्रतिनिधिं गृह्णीयात् । को वाऽध्वर्युप्रभृतीन्प्रेरयेत् । न द्वितीयः । यजमानकार्यस्य फलित्वस्यान्यस्मिन्नसंभवात् । संभवे वा तस्यैव स्वामित्वेन प्रतिनिधित्वाभावात् । तस्मात्—नास्ति यजमानस्य प्रतिनिधिः ॥ ८ ॥

अष्टमे—{ सत्रे कस्यचित्स्वामिनोऽपचारे प्रतिनिध्यादानाधिकरणे ( सत्रन्याये ) } सूत्रम्—)।

**बहूनां तु प्रवृत्तेऽन्यमागमयेदवैगुण्यात् ॥ २२ ॥**

अष्टमाधिकरणमारचयति—

**मृते सत्रिणि नान्यः स्यात्स्याद्वा नात्रापि पूर्ववत् ।**
**स्यादस्वाम्येऽपि कर्त्रंशे सामदश्यस्य सिद्धये ॥ ९ ॥**

सत्रिषु बहुषु यजमानेष्वेकस्मिन्मृते प्रतिनिधिर्नास्ति । पूर्वाधिकरणे यजमानप्रतिनिधेर्निराकृतत्वात् । इति चेत् ।

नैवम् । भङ्ग्यन्तरेण तत्सिद्धेः । सत्रिणां कार्यद्वयम्—फलभोक्तृत्वम्, यागकर्तृत्वं च । तत्र प्रतिनिधेः फलित्वाभावेऽपि कर्तृत्वं संभवति ।

१ क. ख. नियामकस्य । २ क. ग. छ. °षा वरडकाः । च. °षा वरकाः । ३ क. च. °स्याप्यपि ।

ऋत्विक्कार्ये कर्तव्ये प्रतिनिधिमन्तरेण साप्तदश्याभावात्षोडशैव कार्याणि निष्प-द्येरन्, एकं कार्यं लुप्येत। तस्मात्—यजमानस्य प्रतिनिध्यभावेऽप्यृत्विजः प्रति-निधिसद्भावात्पुरुषान्तरं प्रतिनिधापयितव्यम् ॥ ९ ॥

(नवमे—प्रतिनिहितस्यास्वामित्वाधिकरणे सूत्राणि २३—२५)।

स स्वामी स्यात्तत्संयोगात् ॥ २३ ॥ कर्मकरो वा भृतत्वात् ॥ २४ ॥ तस्मिंश्च फलदर्शनात् ॥२५॥

नवमाधिकरणमारचयति—

स स्वाम्यप्युत कर्तैव स्वामी तत्स्थानगत्वतः।
अनारब्धुः फलाभावादस्वामी कर्तृमात्रता ॥ १० ॥

यः सत्रिगः प्रतिनिधिः, तस्य यजमानस्थाने स्वीकृतत्वेन यजमानत्वमप्य-स्ति। इति चेत्।

मैवम्। आरभ्य समाप्तिपर्यन्तमनुतिष्ठतः फलं युक्तम्। प्रतिनिधिस्तु नाऽऽ-रब्धवान्। अतः फलाभावाद्यजमानत्वं नास्ति। किंतु कर्तृत्वमात्रमेव। मृतस्य तु समाप्त्यभावेऽपि फलं समाम्नायते—'यो दीक्षितानां प्रमीयेत, अपि तस्य फलम्' इति ॥ १० ॥

(दशमे—सत्रे प्रतिनिहितस्य यजमानधर्माहिताधिकरणे सूत्रम्—)।

स तद्धर्मा स्यात्कर्मसंयोगात् ॥ २६ ॥

दशमाधिकरणमारचयति—

नास्य स्युः फलिसंस्काराः कार्या वा, नाफलित्वतः।
अन्येषां साप्तदश्यार्थमफलिन्यपि ते मताः ॥ ११ ॥

सत्रे योऽयं प्रतिनिधिः, तस्य फलित्वाभावात्फलयोग्यताहेतवो वपनादिसं-स्कारा न कर्तव्याः। इति चेत्।

मैवम्। अस्य फलाभावेऽप्यस्मिन्संस्कृते सत्यन्येषां यत्साप्तदश्यम्, तत्संस्कृ-तेषु सप्तदशसु स्थितं भवति। ततः 'सप्तदशावराः सत्रमासीरन्' इत्येतच्छा-स्त्रमनुगृहीतं भवति। अन्यथा संस्कृताः षोडशैवेति तच्छास्त्रं बाध्येत। यदि बहूनां यजमानानामलाभादवरा अल्पसंख्या यजमानाः स्युः, तदाऽपि सप्तदशा-पेक्षिताः। न तु ततोऽप्यल्पसंख्या इत्यर्थः। तस्मात्—अफलिन्यपि तस्मिन्सं-स्काराः कर्तव्याः ॥ ११ ॥

---

१ ख. लुप्यते। २ ख. तत्स्वग°। ३ च. फलमुक्त°। ४ ख. ग. च. छ. फलमा°। ५ क. ख. °लभोग्य°। ६ ग. च. °स्मिन्सत्य°।

(एकादशे—श्रुतद्रव्यापचारे तत्सदृशस्यैव प्रतिनिधित्वाधिकरणे सूत्रम्—)।

सामान्यं तच्चिकीर्षा हि ॥ २७ ॥

एकादशाधिकरणमारचयति—

किंचित्प्रतिनिधेयं स्याच्छ्रुततुल्यमुताग्रिमः।

आक्षेपान्न समद्रव्ये मुख्यांशानुगमो यतः ॥ १२ ॥

श्रुतव्रीह्यपचारे नीवारप्रियङ्ग्वादि किंचिद्द्रव्यं प्रतिनिधातव्यम् । प्रधानवि-धिना सामान्यतो द्रव्यमात्रस्याऽऽक्षिप्तत्वात् । इति चेत् ।

नैवम् । 'व्रीहिभिर्यजेत' इत्यत्र न जातिः पुरोडाशं निष्पादयति । किंतु व्रीहित्वजात्युपलक्षिता अंशा एव तन्निष्पादका इत्यंशानां मुख्यद्रव्यत्वम् । ते चावयवाः सदृशे नीवारादौ बहवोऽनुगच्छन्ति । 'भूयोऽवयवसामान्यं सादृश्यम्' इत्यभ्युपगमात् । तस्मात्—अत्यन्तसदृशमेव प्रतिनिधेयम् ॥ १२ ॥

( द्वादशे—द्रव्यापचारे वैकल्पिकद्रव्यान्तरानुपादानाधिकरणे सूत्राणि—२८–३० )।

निर्देशात्तु विकल्पे यत्प्रवृत्तम् ॥ २८ ॥ अशब्द-मिति चेत् ॥ २९ ॥ नाङ्गत्वात् ॥ ३० ॥

द्वादशाधिकरणमारचयति—

यवाः प्रतिनिधेयाः किं व्रीह्यर्थे तत्समा उत ।

मुख्यलाभादग्रिमोऽन्त्यो व्रीहिपक्षे यवाविधेः ॥ १३ ॥

व्रीहीणामसंभवे यवानां प्रतिनिधित्वं युक्तम् । 'यवैर्यजेत' इति[6] विहितत्वेन मुख्यद्रव्यलाभात् । इति चेत् ।

नैवम् । व्रीहियवयोर्विकल्पितत्वेन व्रीहिपक्षे यवविध्यभावात् । तस्मात्—सदृश-मेव प्रतिनिधातव्यम् ॥ १३ ॥

(त्रयोदशे—पूतिकस्य सोमप्रतिनिधित्वाधिकरणे सूत्रम्—)।

वचनाच्चान्याय्यमभावे तत्सामान्येन प्रतिनिधिरभावादितरस्य ॥ ३१ ॥

त्रयोदशाधिकरणमारचयति—

---

१ ख. ग. घ. ङ. °दिक् किं° । २ क. °दृशनी° । ३ ग. ङ. °साम्यं सा° । ४ क. ग. ङ. °निधातव्यम् । ५ क. ग. ङ. मुख्यत्वा° । ६ क. °ति मु° ।

सोमाभावे भवेत्पूतीविधिः प्रतिनिधावुत।
नियमो वचनादाद्यो लाघवात्तन्नियम्यते ॥ १४ ॥

'यदि सोमं न विन्देत्[1], पूतीकानभिषुणुयात्' इति लिङ्प्रत्ययस्य विधिवाचित्वादिदं वाक्यं पूतीकलताखण्डानां विधायकम्। इति चेत्।

मैवम्। सदृशतया प्रातिनिधित्वेन प्राप्तेषु पूतीकादिद्रव्येषु नियममात्रविधौ लाघवात्। तस्मात्—पूतीकद्रव्यं नियम्यते ॥ १४ ॥

(चतुर्दशे— {प्रतिनिध्यपचार उपात्तद्रव्यसदृशस्य पुनः प्रतिनिधित्वाधिकरणे} सूत्रम्—)।

न प्रतिनिधौ समत्वात् ॥ ३२ ॥

चतुर्दशाधिकरणमारचयति—

प्रतिनिध्यपचारे तु तेन मुख्येन वा समम्।
प्रक्रान्तत्वादग्रिमोऽन्त्यः श्रुतांशसमलाभतः ॥ १५ ॥

सत्रे प्रवृत्तः पुरुषो ब्रह्मा वेदत्रयमधीतवान्। तस्मिन्मृते तादृशस्या[2]भावात्स्वशाखामात्राध्यायी प्रातिनिधापितः। तेन च प्रयोगः प्रक्रान्तः। तस्मिन्नप्यपचरिते पुनः पुरुषान्तरान्वेषणायां लब्धेऽपि त्रिवेदिनि तमुपेक्ष्य प्रातिनिधिना समं स्वशाखामात्राध्यायिनं गृह्णीयात्। एकवेदाध्यायिकर्तृ[3]कस्य प्रयोगस्य प्रक्रान्तत्वात्। इति चेत्।

मैवम्। अध्वर्यूद्गातृहोतॄणां प्रयोगेषु प्रसक्तं वैक[4]ल्यं समाधातुं ब्रह्मणो[5] वेदत्र्याध्ययनमपेक्षितम्। अतो मुख्येन सदृशं त्रिवेदिनमेव गृह्णीयात्। तथा सति त्रिवेदि[6]ब्रह्मप्रतिपादकश्रुत्यभिमतैर्बहुभिरंशैर्मुख्यसादृश्यं लभ्येत। तस्मात्—मुख्येन सदृशस्य ग्रहणम्, न तु प्रतिनिधिना सदृशस्य ॥ १५ ॥

(पञ्चदशे— {श्रुतस्यापि प्रतिनिधेरपचार उपात्तसदृशस्य पुनः प्रतिनिधित्वाधिकरणे} सूत्रे ३३—३४)।

स्याच्छ्रुतिलक्षणे नियतत्वात् ॥ ३३ ॥ न तदीप्सा हि ॥ ३४ ॥

पञ्चदशाधिकरणमारचयति—

पूतीकस्यापचारे स्यात्तेन सोमेन वा समम्।
आद्यः श्रुतांशसादृश्यात्पूती[7]काविधितोऽन्तिमः ॥ १६ ॥

---

१ क. विन्द्यात्। च. बिन्देत। २ ख. °मता यतः। ३ ग. च. छ. °स्याभावात्स्व°। ४ ख. ग. च. छ. °कप्र°। ५ ख. °कल्यसमाधानं ब्र°। ६ क. °दिब्र°। ७ क. °तीकवि°। ग. छ. °तीको वि°।

यदा सोमप्रतिनिधेः पूतीकस्यापचारः स्यात्, तदा तेन पूतीकेन सदृशं द्रव्यान्तरमुपादेयम्। 'पूतीकानभिषुणुयात्' इति श्रुतेः पूतीकांशैः सादृश्यस्य लाभात्। इति चेत्।

मैवम्। नास्ति पूतीकानां विधिः, किंतु 'नियमार्थं तद्वचनम्' इत्युक्तम्। ततः श्रुतस्य सोमसमांशस्य लाभाय सोमसमं द्रव्यान्तरमुपादेयम्॥ १६॥

(षोडशे–मुख्यापचारे तत्प्राप्तौ तस्यैवोपादानाधिकरणे सूत्रम्–)।

मुख्याधिगमे मुख्यमागमो हि तदभावात्॥ ३५॥

षोडशाधिकरणमारचयति–

प्रतिनिध्युद्यमे मुख्यलाभे ग्राह्यं तु किं द्वयोः।

संकल्पेन प्रतिनिधिर्मुख्यं शास्त्रार्थलाभतः॥ १७॥

यदा मुख्यान्व्रीहीनलब्ध्वा नीवारैः संकल्पः कृतः' तदा कथंचिद्व्रीहि-लाभेऽपि संकल्पभ्रंशो मा भूदिति नीवारा एवोपादेयाः। इति चेत्।

मैवम्। मुख्याः शास्त्रार्थलाभेन संकल्पं बाधित्वा व्रीहय एव कर्तव्याः॥१७॥

(सप्तदशे–{प्रतिनिधिना प्रारब्धे कर्माणि श्रुतद्रव्य लाभे श्रुतद्रव्येणैव समापनाधिकरणे} सूत्रम्–)।

प्रवृत्तेऽपीति चेत्॥ ३६॥

सप्तदशाधिकरणमारचयति–

अमुख्ये संस्कृते मुख्यलाभे किं ग्राह्यमेतयोः।

अमुख्यस्तक्षणाद्यूपः खादिरस्तक्षणात्पुनः॥ १८॥

यदा यूपार्थं खदिरमलब्ध्वा कदरे तक्षणादिसंस्कृते सति पश्चान्मुख्यः खदिरो यदि पशुनियोजनात्प्रागेव लभ्येत, तदा तक्षणादिसंस्कृतः प्रतिनिधिः कदर एव ग्राह्यः। असंस्कृतात्संस्कृतस्य प्रशस्तत्वात्। इति चेत्।

मैवम्। मुख्ये खदिरे लब्धे पुनस्तक्षणादिसंस्कारः कर्तव्यः। तथा सति संस्कृतस्य मुख्यस्य लाभात्प्रतिनिधिः संस्कृतोऽपि परित्याज्यः॥ १८॥

---

१ क. °तः। यथाक°। २ ख. ग. च. छ. मुख्यशा°। ३ ग. छ. मुख्ये ला°। ४ क. °निधिर्ग्राह्यः। ५ क. खादिरे।

(अष्टादशे—प्रतिनिधौ पशौ नियुक्ते श्रुतद्रव्यलाभेऽपि प्रतिनिधिनैव समापनाधिकरणे सूत्रम्—)।

नानर्थकत्वात् ॥ ३७ ॥

*अष्टादशाधिकरणमारचयति—

पशौ नियुक्ते खदिरलाभे कार्यं पुनर्न वा।
साद्गुण्याय पुनः कार्यं मुख्यावृत्तिर्गुणान्न हि ॥ १९ ॥

यदा संस्कृते प्रतिनिधौ पशुर्नियुज्यते, तदूर्ध्वं खदिरो यदि लभ्येत, तदाऽपि पूर्वन्यायेन मुख्यलाभात्साद्गुण्याय मुख्ये यूपे पुनर्नियोजनं कार्यम्। इति चेत्।

मैवम्। गुणभूतो यूपः। पशुनियोजनं प्रधानभूतम्। नहि गुणानुसारेण प्रधानस्याऽऽवृत्तिर्युक्ता। तस्मात्—नियोजनं पुनर्न कार्यम् ॥ १९ ॥

(एकोनविंशे—संस्कारायोग्यस्यापि मुख्यस्यैवोपादानाधिकरणे सूत्रम्—)।

द्रव्यसंस्कारविरोधे द्रव्यं तदर्थत्वात् ॥३८॥

एकोनविंशाधिकरणमारचयति—

अमुख्यमुख्ये संस्कारयोग्यायोग्ये तदा नु किम्।
आद्यो बहुगुणालोपान्न मुख्यायास्तु लोपनम् ॥ २० ॥

अमुख्यः कदरः स्थूलत्वात्तक्षणादिसंस्कारयोग्यः, मुख्यस्तु खदिरः सूक्ष्मत्वात्तदयोग्यः। तदा तक्षणादिबहुगुणलोपो मा भूदिति प्रतिनिधिरेवाऽऽदरणीयः। इति चेत्।

मैवम्। मुख्यसिद्धये गुणलोपस्य सोढुं शक्यत्वात्। तस्मात्—कृशोऽपि मुख्य एवोपादेयः ॥ २० ॥

(विंशे—मुख्यस्य कार्यासाधकत्वे प्रतिनिधेरेवोपादेयताधिकरणे सूत्रम्—)।

अर्थद्रव्याविरोधेऽर्थो द्रव्याभावे तदुत्पत्तेर्द्रव्याणामर्थशेषत्वात् ॥ ३९ ॥

विंशाधिकरणमारचयति—

---

* शबरस्वामिना तु पूर्वाधिकरणसूत्रं पूर्वपक्षत्वेन व्याख्याय सिद्धान्तत्वेनैतदधिकरणसूत्रं व्याख्यातमिति नाधिकरणभेदोऽङ्गीकृतः।

---

१ क. पशुनियोजने। २ ग. ङ. प्रधानम्। ३ क. ख. च. °त्वोद°।

नियोजनेऽप्ययोग्यश्चेत्खदिरः किं तदा भवेत् ।
मुख्यत्वेन स एव स्यात्तद्वैयर्थ्येन हीतरः ॥ २१ ॥

यदा त्वत्यन्तकृशत्वात्तक्षणादिरहितोऽपि खदिरो नियोजनेऽप्ययोग्यः, तदाऽपि मुख्यत्वात्खदिर एवोपादेयः । इति चेत् ।

मैवम् । उपात्तस्य प्रयोजनाभावान्नियोजनयोग्यः प्रतिनिधिरेवोपादेयः ॥२१॥

( एकविंशे—प्रधाननिर्वाहकत्वेऽङ्गनिर्वाहापर्याप्तस्यापि मुख्यस्योपादानाधिकरणे सूत्रे ४०—४१ ) ।

विधिरप्येकदेशे स्यात् ॥ ४० ॥ अपि वाऽर्थस्य शक्यत्वादेकदेशेन निर्वर्तेतार्थानामविभक्तत्वाद्गुणमात्रमितरत्तादर्थ्यत्वात् ॥ ४१ ॥

एकविंशाधिकरणमारचयति—

शेषकार्येष्वपूर्णाश्चेद्व्रीहयः किं तदेतरत् ।
व्रीहयो वा सर्वसिद्ध्यै नीवारादिकमिष्यते ॥ २२ ॥
पुरोडाशतया व्रीहिः प्रधानत्वादलोप्यता ।
शेषकार्याणि लुप्यन्तां मुख्यवैगुण्यतो वरम् ॥ २३ ॥

स्विष्टकृदिडाप्राशित्रभक्षणादीनि शेषकार्याणि तेष्वपर्याप्ताः प्रधानमात्रपर्याप्ता व्रीहयो यदा लभ्यन्ते, तदानीं सर्वकार्यसिद्धये व्रीहिभ्य इतरन्नीवारादिकमुपादेयम् । इति चेत् ।

मैवम् । व्रीहयः पुरोडाशार्थतया प्रधानयागनिष्पादका इति न लोपमर्हन्ति । अतः प्रधानस्यावैगुण्याय तद्द्रव्याभावे शेषकार्याणि लोपमर्हन्ति । तस्मात्—अल्पा अपि व्रीहय एवोपादेयाः ॥ २२ ॥ २३ ॥

इति श्रीमाधवीये जैमिनीयन्यायमालाविस्तरे षष्ठाध्यायस्य तृतीयः पादः ॥ ३ ॥

| | अत्र पादे | आदितः । |
|---|---|---|
| अधिकरणानि | २१ | ४०७ । |
| सूत्राणि | ४१ | १०६८ । |

१ ख. ग. च. छ. °गस्य नि° ।

( अथ षष्ठाध्यायस्य चतुर्थः पादः )।

( प्रथमे—अवत्तनाशे पुनरवदानार्थं प्रतिनिध्यादानाधिकरणे सूत्रे १–२)।

शेषाद्द्व्यवदाननाशे स्यात्तदर्थत्वात्

॥ १ ॥ निर्देशाद्वाऽन्यदागमयेत् ॥ २ ॥

चतुर्थपादस्य प्रथमाधिकरणमारचयति—

अवत्तनाशे तच्छेषात्पुरोडाशादवद्यति ।
यजेदाज्येन वाऽऽद्योऽत्र मध्यपूर्वार्धसंभवात् ॥ १ ॥
कृत्स्नस्य मध्यपूर्वार्धे ये शेषस्थे न ते ततः ।
हविर्नाशादाज्यविधिः सुतरां सर्वनाशने ॥ २ ॥

दर्शपूर्णमासयोः पुरोडाशावदाने श्रूयते—' मध्यादवद्यति, पूर्वार्धादवद्यति ' इति । तत्र—यद्यवत्तं नश्येत्, तदानीमवशिष्टात्पुरोडाशात्पुनरप्यवदातव्यम् । कुतः । अवदानापादानयोर्मध्यपूर्वार्धयोः शिष्टेऽपि संभवात् । इति चेत् ।

मैवम् । कृत्स्नपुरोडाशगते मध्यपूर्वार्धे अपादानत्वेन श्रूयेते, न त्ववशिष्टभागगते मध्यपूर्वार्धे । ततो मुख्यस्य हविषो नाशादाज्यं प्रतिनिधाय यष्टव्यम् । अत एव श्रूयते—' यस्य सर्वाणि हवींषि नश्येयुः, दुष्येयुः, अपहरेयुर्वा, आज्येन ता देवताः परिसंख्याय यजेत ' इति । तत्र—सर्वशब्दस्य निमित्तविशेषणत्वेनाविवक्षितत्वान्नाशमात्रे सर्वत्राऽऽज्यस्य विधिः ॥ १ ॥ २ ॥

( द्वितीये—स्विष्टकृदर्थावत्तनाशे पुनरवदाननिराकरणाधिकरणे सूत्रम्)।

अपि वा शेषभाजां स्याद्विशिष्टकारणात् ॥ ३ ॥

द्वितीयाधिकरणमारचयति—

इडाद्यर्थस्य नाशेऽन्यः शेषादाद्यो न वाऽग्रिमः ।
शेषसत्त्वान्न शेषेऽन्यप्रतिपत्त्यवरोधनात् ॥ ३ ॥

इडाभक्षणार्थं प्राशित्रभक्षणार्थं वाऽवत्तं यदि नश्येत्, तदा शेषस्य सद्भावात्तस्माच्छेषात्पुनरवदेयम् । इति चेत् ।

मैवम् । तस्य शेषस्यान्यया प्रतिपत्त्या शंयुवाककालीनभक्षणरूपयाऽवरुद्धत्वात् । तस्मात्—अवत्तनाशे द्रव्याभावादिडादिकं लुप्यते ॥ ३ ॥

---

१ ख. °षस्तेन ते । २ ख. शेषस्य प्र° । ३ क. ख. च. °न्यया प्र° ।

( तृतीये—ऋत्विजामेव शेषभक्षणाधिकरणे सूत्राणि ४—९ )।

निर्देशाच्छेषभक्षोऽन्यैः प्रधानवत् ॥ ४ ॥
सर्वैर्वा समवायात्स्यात् ॥ ५ ॥ निर्देशस्य
गुणार्थत्वम् ॥ ६ ॥ प्रधाने श्रुतिलक्षणम्
॥ ७ ॥ अर्थवदिति चेत् ॥ ८॥ न चोद-
नाविरोधात् ॥ ९ ॥

तृतीयाधिकरणमारचयति—

शेषभक्षाः किमन्येषामृत्विजां वाऽन्यभक्षणम् ।
ऋत्विजां परिसंख्यानात्स्वाम्यप्राप्तोक्तितोऽन्तिमः ॥ ४ ॥

दर्शपूर्णमासयोर्ये प्राशित्रादिशेषभक्षाः, तेषां भक्षणमृत्विग्भ्योऽन्यैः कर्तव्यम् । कुतः । ऋत्विजां परिसंख्यातत्वात् । ऋत्विजां कर्मकरत्वादेव भक्षणप्राप्तौ सत्यां पुनरप्येवमाम्नायते—' यजमानपञ्चमा इडां भक्षयन्ति ' इति । तदेतत्पुनराम्नानं परिसंख्यार्थम्—' यजमानसहिता ऋत्विजः प्राशित्रादिकं न भक्षयेयुः ' इत्यर्थः । तस्मात्—ऋत्विग्भ्योऽन्येषां प्राशित्रादिभक्षणम् । इति चेत् ।

मैवम् । यजमानस्य कर्मकरत्वाभावेन पूर्वमप्राप्तं भक्षणमनेन विधीयते । तस्मात्—अपरिसंख्यातत्वादृत्विजामेव प्राशित्रादिभक्षणम् ॥ ४ ॥

( चतुर्थे—कृत्स्नैकदेशभेदे प्रायश्चित्तानुष्ठानाधिकरणे सूत्राणि १०—१६)।

अर्थसमवायात्प्रायश्चित्तमेकदेशेऽपि ॥१०॥ न त्व-
शेषे वैगुण्यात्तदर्थं हि ॥ ११ ॥ स्याद्वा प्राप्तिनि-
मित्तत्वादतद्धर्मो नित्यसंयोगात्, न हि तस्य गुणा-
र्थेनानित्यत्वात् ॥ १२ ॥ गुणानां च परार्थत्वा-
द्वचनाद्व्यपाश्रयः स्यात् ॥ १३ ॥ भेदार्थमिति
चेत् ॥ १४ ॥ शेषभूतत्वात् ॥ १५ ॥ अनर्थ-
कश्च सर्वनाशे स्यात् ॥ १६ ॥

चतुर्थाधिकरणमारचयति—

कपालभेदने होमो भग्ने घृष्टेऽथवोभयोः ।
आद्यो भेदस्य भङ्गत्वात्संस्कार्यत्वेन मध्यमः ॥ ५ ॥

१ ग. छ. इडायां । २ क. च. °प्राप्तौ ततो° । ३ क. ख. च. °त्विज एव ।

संस्कृतावनिमित्तत्वान्नित्यानित्यविरोधनम् ।
निमित्तता समा भङ्गे घर्षे वाऽतो द्वयोर्हुतिः ॥ ६ ॥

दर्शपूर्णमासयोः कपालं प्रकृत्य श्रूयते—' भिन्ने जुहोति ' इति । तत्र—भेदशब्दस्य भङ्गवाचित्वात्कपालभङ्गे सोऽयं होमः—इत्येकः पक्षः ।

होमस्य संस्काररूपत्वादत्यन्तभङ्गे संस्कार्याभावात्संघर्षमात्रजन्यस्येषद्भङ्गस्यापि भेदशब्दार्थत्वात्कपाले घृष्टे सत्ययं होमः—इति द्वितीयः पक्षः ।

संस्कारपक्षे भिन्नशब्दस्य संस्कार्यप्रतिपादकत्वेनोपक्षयान्निमित्तप्रतिपादकत्वं न स्यात् । तथा सति होमस्य नैमित्तिकत्वाभावेन नित्यत्वं वक्तव्यम्, कपालभेदस्य कादाचित्कत्वात्संस्कार्यमनित्यम्, इति नित्यानित्यसंयोगविरोधः प्राप्नोति । ततो भिन्नशब्दो निमित्तप्रतिपादकः । निमित्तत्वं च भङ्गसंघर्षयोः समानम् । तस्मात्—उभयोरपि निमित्तयोर्नैमित्तिको होमः कर्तव्य इति सिद्धान्तः ॥ ५ ॥ ६ ॥

( पञ्चमे— { क्षामे सर्वदाहे प्रायश्चित्तानुष्ठानाधिकरणे ( क्षामेष्टिन्याये ) } सूत्राणि १७—२१)।

क्षामे तु सर्वदाहे स्यादेकदेशस्यावर्जनीयत्वात् ॥ १७ ॥ दर्शनाद्वैकदेशे स्यात् ॥ १८ ॥ अन्येन वैतच्छास्त्राद्धि कारणप्राप्तिः ॥१९॥ तद्धविःशब्दान्नेति चेत् ॥२०॥ स्यादन्यायत्वादिज्यागामी हविःशब्दस्तल्लिङ्गसंयोगात् ॥ २१ ॥

पञ्चमाधिकरणमारचयति—

क्षामे यागो द्वयोः सर्वदाहे वा पूर्ववद्द्वयोः ।
अंशदाहस्य नित्यत्वात्सर्वदाहे पुनर्यजिः ॥ ७ ॥

दर्शपूर्णमासयोः श्रूयते—' अथ यस्य पुरोडाशौ क्षायतः, तं यज्ञं वरुणो गृह्णाति । यदा तद्धविः संतिष्ठेत, अथ स तदेव हविर्निर्वपेत् । यज्ञो हि यज्ञस्य प्रायश्चित्तिः ' इति । अस्यायमर्थः—' यस्य यज्ञस्य पुरोडाशावाग्नेयाग्नीषोमीयौ क्षायतोऽत्यन्तदाहेन भस्मी भवतः, तं यज्ञं वरुणो गृह्णाति । न त्वयं यज्ञो यजमानस्य फलं प्रयच्छति । यदि तादृशहविष्को यज्ञ आ समाप्तेरनुष्ठीयेत, तदा

१ च. वा तद्द्वयो° । २ क. °योर्गतिः । ३ ग. च. °दनेनो° । ४ ख. ग. च. छ. राद्धान्तः । ५ ख. °दाहो वा पूर्वयोर्द्वयोः । ६ क. ख. हविः ।

तत्प्रत्यवायपरिहाराय पुनस्तदेव हविर्निरुप्य यजमानो यज्ञमनुतिष्ठेत् ' इति । अत्र—पुरोडाशे क्षामे सति यो यागो विहितः स पूर्वोक्तभेदन्यायेनाल्पदाहसर्वदाहयोर्द्वयोरपि कर्तव्यः । इति चेत् ।

नैवम् । तप्तेषु कपालेषु पुरोडाशमवस्थाप्योपर्यङ्गारैरधिवासने कृते सति सूक्ष्मांशदाहस्य वर्जयितुमशक्यत्वेन नित्यत्वात्पुनर्यागस्यांशदाहो निमित्तं न भवति । सर्वदाहस्तु कादाचित्कत्वान्निमित्तम्—इति तत्रैवेयं प्रायश्चित्तरूपेष्टिः॥७॥

( षष्ठे—एकहविरार्तावपि पञ्चशरावनिर्वापाधिकरणे सूत्रे २२—२३ ) ।

यथाश्रुतीति चेत् ॥ २२ ॥ न तल्लक्षणत्वादुपपातो हि कारणम् ॥ २३ ॥

षष्ठाधिकरणमारचयति—

आर्तौ पञ्चशरावो यः स दोहद्वयसंक्षये ।
एकनाशेऽपि वाऽऽद्योऽस्तु हविर्वदुभयोक्तितः ॥ ८ ॥
हविरार्युक्तिमात्रेण निमित्तं पर्यवस्यति ।
उभयोक्त्यविवक्षायामेकनाशेऽप्यसौ भवेत् ॥ ९ ॥

दर्शपूर्णमासयोर्दोहौ प्रकृत्य श्रूयते—' यस्योभयं हविरार्तिमार्छेत्—ऐन्द्रं पञ्चशरावमोदनं निर्वपेत्' इति । सोऽयं यागो दोहद्वयक्षयं निमित्तीकृत्यानुष्ठेयः। न त्वेकदोहक्षयम् । कुतः । उभयशब्दस्य श्रुतत्वात् । आर्तिशब्दविशेषणत्वेन श्रूयमाणो हविःशब्दो यथा विवक्षितार्थः, तथा हविःशब्दविशेषणस्योभयशब्दस्यापि विवक्षितार्थत्वादुभयहविरार्तिरेव निमित्तम् । इति चेत् ।

नैवम् । आर्तिमात्रोपन्यासे साकाङ्क्षत्वान्निमित्तं न पर्यवस्यतीति हविःशब्दार्थो विवक्षितव्यः । तावतैव निमित्तस्य पर्यवसितत्वादुभयशब्दार्थो न विवक्षितः । हविरार्तिमात्रस्य निमित्तत्वे सति सायंदोहप्रातर्दोहार्त्योरुभयोर्निमित्तत्वं सिद्धमेवात्रोभयशब्देनानूद्यते । तस्मात्—एकनाशे द्वयनाशेऽप्यसावोदनो निर्वपणीयः ॥ ८ ॥ ९ ॥

(सप्तमे—होमाभिषवोभयकर्तुरेव भक्षणाधिकरणे सूत्रे २४—२५) ।

होमाभिषवभक्षणं च तद्वत् ॥ २४ ॥ उभाभ्यां वा न हि तयोर्धर्मशास्त्रम् ॥ २५ ॥

सप्तमाधिकरणमारचयति—

---

१ ग. ङ. सत्यंश° । २ क. ख. ग. ङ. °द्वयं । ३ ख. ग. घ. ङ. °ब्दस्य वि° । ४ क. °र्दोहयो° ।

अभिषुत्य ततो हुत्वा खादेदेकैकहेतुता।
संहत्य वा निमित्तोक्तौ साहित्याविधितोऽग्रिमः॥ १०॥
होमाभिषवकर्ताऽत्र भक्षाङ्गत्वेन चोद्यते।
निमित्तताऽऽर्थिकी तस्मात्साहित्यं हेतुगं मतम्॥ ११॥

ज्योतिष्टोमे श्रूयते—'हविर्धाने[२] ग्रावभिरभिषुत्याऽऽहवनीये हुत्वा प्रत्यञ्चः परेत्य सदसि भक्षान्भक्षयन्ति' इति। तत्र—अभिषवहोमयोरेकैक एव भक्षणहेतुः। कुतः। साहित्यस्याविधेयत्वात्। अभिषवहोमावत्र निमित्तत्वेनोच्येते। तत्र—साहित्यविधौ वाक्यं भिद्येत। अभिषवहोमौ भक्षणहेतू, तौ च सहिताविव्येवं तद्भेदः। तस्मात्—साहित्यस्याविधेयत्वादभिषवहोमयोः प्रत्येकं भक्षणनिमित्तत्वम्' इति प्राप्ते—

ब्रूमः—नात्र निमित्तत्वमुपन्यस्यते, किंतु सोमाभिषवयोः कर्तुर्भक्षणं प्रत्यङ्गत्वेन पूर्वमप्राप्तत्वाद्विधीयते। तथा सत्यभिषवहोमयोर्यन्निमित्तत्वं प्रतीयते तदार्थिकमिति वाक्यभेददोषाभावात्साहित्यं प्रतीयमानं विवक्षितमिति[६] सहितयोरेव तयोर्निमित्तत्वम्॥ १०॥ ११॥

(अष्टमे पुनराधानं प्रति वह्न्यनुगमद्वयस्य निमित्तताधिकरणे सूत्रे २६—२७)।

पुनराधेयमोदनवत्॥ २६॥ द्रव्योत्पत्तेर्वोभयोः स्यात्॥ २७॥

अष्टमाधिकरणमारचयति—

एकोऽपि वह्न्यनुगमः पुनराधेयकारणम्।
द्वावेव वाऽऽद्यो द्वित्वोपेक्षणात्पञ्चशराववत्॥ १२॥
द्वयोरुत्पादकत्वेन पुनराधेयचोदना।
नैकस्यातो द्व्यनुगमो हेतुः सूर्योदयादि[७] वा॥ १३॥

अग्निहोत्रे श्रूयते—'यस्योभावग्नी अनुगतावभिर्म्लोचेयाताम्, सूर्यो वाऽभ्युदियात्, पुनराधेयं तस्य प्रायश्चित्तिः' इति। आहवनीयगार्हपत्यावुभावग्नी अनुगतौ नष्टौ यदा भवतः, तदा सूर्यास्तमय उदयो वा यदि भवेत्, तदा पुनराधेयं कर्तव्यम्' इत्यर्थः। तत्र—यथा पञ्चशरावविवाक्ये निमित्तविशेषणभूत उभयशब्दार्थो न विवक्षितः, तथा निमित्तस्य वह्न्यनुगमविशेषणं द्वित्वमुपेक्षणीयम्। तत एकस्याप्यनुगमस्य निमित्तत्वमस्ति। इति चेत्।

मैवम्। 'अग्नी आदधीत, इति द्वित्वविशिष्टयोरग्न्योरुत्पादनाय पुनराधेयं

---

१ क. °तुना। सं°। २ ग. ङ. °ने चर्मन्नधि ग्रा°। ३ च. °स्यावधे°। ४ ख. ङ. कर्ता भक्ष°। ५ क. °योर्निमि°। ६ ख. ग. च. छ. °ति संहत°। ७ ग ॥ १३॥ अ°। ८ ग. °भिनिम्लोचेत, अभ्युदियाद्वा पु°। °भिनिम्लोचेत् शाबरभाष्ये। ९ ग. छ. °मस्यवि°।

चोदितम्, न त्वेकस्योत्पादनाय। न ह्येकस्मिन्ननुगते द्वयोरुत्पादनं संभवति। तस्मात्–नैमित्तिकद्वित्वोपपत्तये निमित्तयोरपि वह्न्यनुगमयोर्द्वित्वं विवक्षितव्यम्। तस्मात्–अस्तमयकाल उदयकाले वा वह्निद्वयनाशः पुनराधेयहेतुः ॥१२॥१३॥

( नवमे पञ्चशरावनिर्वापस्य कर्मान्तरताधिकरणे सूत्रे २८–२९ )।

पञ्चशरावस्तु द्रव्यश्रुतेः प्रतिनिधिः स्तात् ॥ २८ ॥

चोदना वा द्रव्यदेवताविधिरवाच्ये हि ॥ २९ ॥

नवमाधिकरणमारचयति–

द्रव्यप्रतिनिधिः पञ्चशरावो भिन्नकर्म वा।
दोहद्वयार्तितो दर्शे द्रव्यं स्यादीप्सितत्वतः ॥ १४ ॥
प्राप्ते कर्मणि नैकेन विधिना द्रव्यदेवते।
शक्ये विधातुं ताभ्यां तु विशिष्टं कर्म चोद्यते ॥ १५ ॥

योऽयं पञ्चशरावे ओदनः पूर्वमुदाहृतः, नासौ कर्मान्तररूपः, किंतु–पूर्वस्मिन्नेव कर्मणि दोहद्वयरूपे द्रव्येऽपचरिते सति तत्प्रतिनिधिद्रव्यत्वेनायं विधीयते। कुतः। दर्शयागे द्रव्यस्यापेक्षितत्वात्। इति चेत्,

मैवम्। 'ऐन्द्रं पञ्चशरावम्' इति द्रव्यदेवतयोः प्रतीतौ कर्मान्तरविधेर्वारयितुमशक्यत्वात्। यदि पूर्वस्मिन्नेव कर्मण्युभयं विधीयेत, तदा कर्मणः प्राप्तत्वादुभयोर्द्रव्यदेवतयोर्विधौ वाक्यं भिद्येत। तस्मात्–द्रव्यदेवताभ्यां विशिष्टं कर्मान्तरं विधीयते ॥ १४ ॥ ॥ १५॥

( दशमे पञ्चशरावयागस्य नैमित्तिकदर्शयागाङ्गताधिकरणे सूत्रे ३०–३१ )।

स प्रत्यामनेत्स्थानात् ॥ ३० ॥ अङ्गविधिर्वा निमित्तसंयोगात् ॥ ३१ ॥

दशमाधिकरणमारचयति–

दर्शे प्रत्याम्नाय एतदङ्गं वा हविरार्तितः।
दर्शयागे निवृत्तेऽस्य प्रत्याम्नातया विधिः ॥ १६ ॥
पूर्वद्रव्यविनाशेऽपि द्रव्यस्यान्यस्य संभवात्।
अनिवृत्तेस्तदङ्गं स्यादार्तिवैगुण्यहानये ॥ १७॥

१ ख. °रावौद°। २ क. °त्ते सत्प्रत्यया°।

पञ्चशरावद्रव्यकमिन्द्रदेवताकं यत्कर्मान्तरं कथितम्, तदेतद्दर्शयागस्य प्रतिनिधित्वेन विधीयते। कुतः। उभयहविरार्त्या दर्शयागस्य निवृत्तत्वात्। इति चेत्। मैवम्। पूर्वयोर्दधिपयसोर्नाशेऽपि पयोन्तरेण दध्यन्तरेण च दर्शेऽनुष्ठीयमाने हविरार्तिकृतं वैगुण्यं परिहरन्नयं पञ्चशरावयागो दर्शयागस्याङ्गं भवति॥१६॥१७॥

(एकादशे—सत्रायाऽऽगूर्याप्रवृत्तस्य विश्वजिदावश्यकताधिकरणे सूत्रे ३२—३३)।

विश्वजित्त्वप्रवृत्ते भावः कर्मणि स्यात्॥ ३२॥

निष्क्रयवादाच्च॥ ३३॥

एकादशाधिकरणमारचयति—

सत्रायाऽऽगुरते योऽयं यजेद्विश्वजितेत्यसौ।
यः कोऽप्युत प्रवृत्तः स्यादप्रवृत्तोऽथवाऽग्रिमः॥ १८॥
अविशेषात्प्रवृत्तोऽस्तु सत्राङ्गं हि तथा भवेत्।
निमित्तोक्तेरप्रवृत्तः प्रायश्चित्तं चरेदिदम्॥ १९॥

इदमाम्नायते—'यः सत्रायाऽऽगुरते स विश्वजिता यजेत' इति। आगुरते संकल्पयतीत्यर्थः। तत्र—सत्रं संकल्प्य कश्चिदनुष्ठातुं प्रवृत्तः। अपरो न प्रवृत्तः। तयोरुभयोर्मध्ये यः कोऽपि विश्वजिता यजेतेति विशेषस्याश्रवणात्। एवम् 'अप्रवृत्त एव यजेत' इत्यपि विशेषो न श्रूयते। तस्मात्—'अन्यतरः' इत्याद्यः पक्षः।

सत्रे प्रवृत्तस्य विश्वजिदनुष्ठाने सत्राङ्गत्वं विश्वजितो लभ्यते। तस्मात्—'प्रवृत्त एव विश्वजितं कुर्यात्। इति द्वितीयः पक्षः।

'यः सत्रायाऽऽगुरते' इति निमित्तत्वेनोपन्यासात्संकल्प्य यदि सत्रं नानुतिष्ठते, तदा प्रायश्चित्तार्थं विश्वजिद्यागं कुर्यात्—इति राद्धान्तः॥ १८॥१९॥

(द्वादशे—बर्हिर्वत्सयोः कालोपलक्षकताधिकरणे सूत्राणि ३४—४०)।

वत्ससंयोगे व्रतचोदना स्यात्॥ ३४॥ कालो वोत्पन्नसंयोगात्॥३५॥ अर्थापरिमाणाच्च॥३६॥ वत्सस्तु श्रुतिसंयोगात्तदङ्गं स्यात्॥३७॥ कालस्तु स्यादचोदना॥ ३८॥

---

१ ख. °देव दर्श°। २ ग. छ. वृत्तस्तु।

अनर्थकश्च कर्मसंयोगे ॥ ३९ ॥

अवचनाच्च स्वशब्दस्य ॥ ४० ॥

द्वादशाधिकरणमारचयति—

वत्सैर्दर्शे सवत्सस्य वत्समात्रस्य वा विधिः ।
व्रतकालं लक्षयेद्वा वत्सयुक्ते व्रते विधिः ॥ २० ॥
भाति रागाद्व्रतप्राप्तेर्वत्समात्रं विधीयते ।
व्रतस्याकरणं वत्सः कालगीस्तदपाकृतेः ॥ २१ ॥

**दर्शपूर्णमासयोः** श्रूयते—'बर्हिषा पूर्णमासे व्रतमुपैति, वत्सैरमावास्यायाम्' इति। व्रतं भोजनम्। अत एवाऽऽम्नायते—'अमाषममांसं बहुसर्पिष्कं[1] व्रतयति' इति। तदेतद्व्रतं वत्सैर्युक्तमत्र विधीयते। कुतः। 'वत्सैः' इति तृतीयया साहित्यस्य प्रतिभानात्—इत्येकः पक्षः।

रागत एव प्राप्तत्वाद्व्रतं न विधातव्यम्, किंतु—वत्समात्रं विधेयम्-इति द्वितीयः पक्षः।

न हि वत्सः पाण्यादिवद्व्रतस्य करणम्। ततो न तस्य विधिः। किंतु—वत्सानामपाकरणेन काल उपलक्ष्यते। तस्मिन्काले व्रतमुपेयात्। एवं पूर्णमासे बर्हिःसंपादनकाले व्रतमुपेयात् ॥ २० ॥ २१ ॥

(त्रयोदशे—वत्सापाकरणकालस्य संनयदसंनयदुभयसाधारणताधिकरणे सूत्रे ४१–४२)।

कालश्चेत्संनयत्पक्षे तल्लिङ्गसंयोगात् ॥ ४१ ॥

कालार्थत्वाद्वोभयोः प्रतीयेत ॥ ४२ ॥

त्रयोदशाधिकरणमारचयति—

सांनाय्यिनः स कालः स्यादितरस्यापि वाऽग्रिमः।
वत्ससत्त्वाल्लक्ष्यकालो ह्यन्यस्याप्यस्त्यतोऽन्तिमः ॥ २२ ॥

यस्य सांनाय्यमस्ति, तस्यैवायं भूतकालः। कुतः। लक्षकस्य वत्सापाकरणस्य सद्भावात्। यस्त्वमावास्यायां सांनाय्यं न करोति, किंत्वैन्द्राग्नपुरोडाशं करोति, न तस्य वत्सापाकरणमस्ति। नापि पौर्णमास्यां तद्विद्यते। तस्मात्—सांनाय्यिन[3] एव स कालः। इति चेत्।

---

१ ख. बहुसर्पिषं। ग. छ. बहुसर्पिष्टं। २ ख. ग. च. छ. °त्ससंयु°। ३ क. ख. °यिनः।

मैवम् । वत्सापाकरणाभावेऽपि तदुपलक्षितकालस्य विद्यमानत्वात् । तस्मात्—सर्वस्यापि स कालः ॥ २२ ॥

चतुर्दशे—सांनाय्यरहितस्य शाखाहरणनिराकरणाधिकरणे (सूत्राणि ४३–४७ ) ।

**प्रस्तरे शाखा श्रयणवत् ॥ ४३ ॥ कालविधिर्वोभयो-र्विद्यमानत्वात् ॥४४॥ अतत्संस्कारार्थत्वाच्च ॥४५॥ तस्माच्च विप्रयोगे स्यात् ॥ ४६ ॥ उपवेषश्च पक्षे स्यात् ॥ ४७ ॥**

चतुर्दशाधिकरणमारचयति—

**प्रस्तरं शाखया युक्तं हरेच्छाखा विधीयते ।**
**कालो वा प्रतिपत्त्यर्थः प्रवृत्त्याऽत्रोपलक्ष्यते ॥ २३ ॥**
**आद्योऽङ्गत्वविधेर्भानात्प्रतिपत्तिमपेक्षते ।**
**शाखोपयुक्ता तेनान्त्यः प्रस्तरे प्रतिपादनात् ॥ २४ ॥**

दर्शपूर्णमासयोराम्नायते—'सह शाखया प्रस्तरं प्रहरति' इति । तत्र—प्रस्तर-प्रहरणं प्रति शाखाया अनङ्गत्वेन विधिर्भासते । सत्यङ्गत्वे शाखया विना प्रस्त-रप्रहरणस्य वैगुण्यप्रसङ्गात् । सांनाय्यरहितेनापि शाखा संपादनीया । इति चेत् । मैवम् । शाखा वत्सापाकरणादावुपयुक्ता । तस्याः पुनरङ्गत्वविधिर्न संभवति । विनियुक्तविनियोगस्यान्याय्यत्वात् । तस्मात्-शाखा प्रतिपत्तिमपेक्षत इति । प्रति-पत्त्यर्थः कालः प्रस्तरप्रहरणेनोपलक्ष्यते । तथा सति यदा प्रस्तरं प्रहरति तदा शाखामपि विद्यमानां प्रहरेत् । न तु सांनाय्यरहितेन सा संपादनीया ॥२३॥२४॥

**इति श्रीमाधवीये जैमिनीयन्यायमालाविस्तरे षष्ठा-ध्यायस्य चतुर्थः पादः ॥ ४ ॥**

| | अत्र पादे | आदितः । |
|---|---|---|
| अधिकरणानि | १४ | ४२१ । |
| सूत्राणि | ४७ | ११९५ । |

१ ख. प्रकृत्याऽत्रो° । म. छ. प्रहृत्यात्रो° । २ ग. छ. °नाथर° ।

( अथ षष्ठाध्यायस्य पञ्चमः पादः ) ।

(प्रथमे–दर्शेऽभ्युदयेष्टौ नैमित्तिकदेवतापनयाधिकरणे सूत्राणि १–९)।

**अभ्युदये कालापराधादिज्याचोदना स्यात्, यथा पञ्चशरावे ॥ १ ॥ अपनयो वा विद्यमानत्वात् ॥ २ ॥ तद्रूपत्वाच्च शब्दानाम् ॥ ३ ॥ आतञ्चनाभ्यासस्य दर्शनात् ॥ ४ ॥ अपूर्वत्वाद्विधानं स्यात् ॥ ५ ॥ पयोदोषात्पञ्चशरावेऽदुष्टं हीतरत् ॥ ६ ॥ सांनाय्येऽपि तथेति चेत् ॥ ७ ॥ न तस्यादुष्टत्वादविशिष्टं हि कारणम् ॥ ८ ॥ लक्षणार्था शृतश्रुतिः ॥ ९ ॥**

पञ्चमपादे प्रथमाधिकरणमारचयति—

**इष्टिरभ्युदये दर्शात्कर्मान्यदुत देवताः ।**
**पूर्वास्त्याज्या विशिष्टस्य विधानादन्यकर्म तत् ॥ १ ॥**
**प्रकृतप्रत्यभिज्ञानान्न कर्मान्तरचोदना ।**
**देवताः प्रकृतास्त्यक्त्वा द्रव्यमन्याभ्य उच्यते ॥ २ ॥**

**दर्शपूर्णमासयोः** श्रूयते—'यस्य हविर्निरुप्तं पुरस्ताच्चन्द्रमा अभ्युदेति त्रेधा तण्डुलान्विभजेत् । ये मध्यमाः स्युः, तानग्नये दात्रे पुरोडाशमष्टाकपालं कुर्यात् । ये स्थविष्ठाः, तानिन्द्राय प्रदात्रे दधंश्चरुम् । येऽणिष्ठाः, तान्विष्णवे शिपिविष्टाय शृते चरुम्' इति । अयमर्थः—'दर्शभ्रान्त्या चतुर्दश्यां केनचिद्धविर्निरुप्तं भवति । ततः प्रत्यूषे पूर्वस्यां दिशि चन्द्रमा अभ्युदेति तदा निरुप्तास्तण्डुलास्त्रेधा विभक्तव्याः । अखण्डिताः, ईषत्खण्डिताः, अतिसूक्ष्मकणाश्च, इति त्रैविध्यम् । ते त्रिविधा दात्रादिगुणविशिष्टेभ्योऽग्न्यादिदेवेभ्यः' इति । तत्र—इदं प्रक्रान्ताद्दर्शकर्मणोऽन्यत्कर्म । कुतः । कालापराधप्रायश्चित्तार्थं द्रव्यदेवतादिविशिष्टस्य कर्मणो विधीयमानत्वात् । तत इदं प्रायश्चित्तं कृत्वा पुनर्दर्शकर्म नानुष्ठेयम्—इति प्राप्ते—

ब्रूमः—हविर्निरुप्तमिति प्रकृतं यद्दर्शकर्म तत्परित्यज्य कर्मान्तरविधिकल्पने

---

१ क. ग. छ. °र्मता ॥ १ ॥ प्र° । २ ग. ड. °ताः प्राकृतीस्त्य° । ३ ग. घ. °कर्मसु° ।

प्रकृतहानामकृतप्रक्रिये प्रसज्येयाताम् । अतस्तस्मिन्नेव प्रकृते कर्मणि निरुप्त-हविषः पूर्वदेवताभ्यो दर्शसंबन्धिनीभ्योऽपनयोऽत्राभिधीयते । तण्डुलोपलक्षितं यद्द्विविधं व्रीहिरूपं च पूर्वेद्युर्निरुप्तं तद्धविः पूर्वदेवतात्मनोरग्नेरिन्द्राग्न्योर्विभजे-दिति देवताहविषोः परस्परविभागोऽत्र विधीयते, न तु तण्डुलानां स्थविष्ठम-ध्यमाणिष्ठरूपत्रिविधो विभागो विधीयते । तस्य प्राप्तत्वात् । 'ये मध्यमाः स्युः—' इत्यादिविनियोगभेदादर्थप्राप्तः स विभागः । ततः पूर्वदेवतास्त्यक्त्वा दातृत्वादिगुणविशिष्टाभ्योऽग्न्यादिदेवताभ्यः पूर्वं निरुप्तं हविः प्रदातव्यम् । ननु—प्रतिपदि प्राप्तो निर्वापकालः, न तु—दर्शे । तथा सति दर्शभ्रान्त्याऽपि चतुर्दश्यां निर्वापाभावादूर्ध्वं चन्द्रोदयो न प्राप्नोति । नैष दोषः । दध्नो दुग्ध-इकालीनत्वेनार्थसिद्धे पूर्वेद्युर्दोहनातञ्चने । तदभिप्रायेण निरुप्तमित्युच्यते । यद्वा—व्रीहिनिर्वापोऽपि पूर्वेद्युर्विकल्पितः । तथा च श्रूयते—'यदि बिभियादभि मोदेष्यतीति महापात्रे हवींषि निर्वपेत् ' इति । अयमर्थः—'भ्रान्त्या प्रमाणेन वा दर्शोऽयमिति निश्चितवतश्चन्द्रोऽभ्युदेष्यतीति भीतिर्नास्ति, तदा तस्मिन्नेव दिने भौडपात्रे हवींषि सर्वाणि निर्वपेत् ' इति । अतो निरुप्तस्यैव हविषस्तस्मिन्नेव कर्मणि कालव्यत्यासं निमित्तीकृत्य देवतान्तरसंयोगरूपः प्रयोगप्रकारभेद उपदि-श्यते । ततो दर्शस्यैवायं नैमित्तिकः प्रयोगः, न तु दर्शलोपप्रायश्चित्तमिति नैमि-त्तिकं दर्शप्रयोगमनुष्ठाय पश्चात्स्वकाले नित्योऽपि दर्शप्रयोगोऽनुष्ठातव्यः॥१॥२॥

( द्वितीये—उपांशुयागेऽपि देवतापनयाधिकरणे सूत्रे १०—११ )॥

उपांशुयागेऽवचनाद्यथाप्रकृति ॥ १० ॥ अप-नयो वा प्रवृत्त्या यथेतरेषाम् ॥ ११ ॥

द्वितीयाधिकरणमारचयति—

देवत्यागस्तथोपांशावश्रुते देवतान्तरे ।
यागलोपोऽप्रसक्तत्वात्कृत्वाचिन्तेयमिष्यताम् ॥ २ ॥

पूर्वोदाहृतवाक्ये यथा पुरोडाशे सांनाय्ये च हविषि पूर्वदेवतात्यागः, तथै-वोपांशुयाजहविष्याज्ये पूर्वदेवतां त्यक्त्वा प्रयोगान्तरं कर्तव्यम् । इति चेत् ।

नैवम् । पुरोडाशसांनाय्ययोरिवाऽऽज्ये देवतान्तरस्याश्रवणात् । तस्मात्—पूर्वदे-वतानां त्यक्तत्वादन्यदेवताया अश्रवणाच्च निर्देवक उपांशुयाजो लुप्यते । ननु—

१ ख. ग. च. छ. °तस्य ह° । २ क. °गोत्राभिधी° । ३ क. °तिकद° । ४ च. °ष्यते ॥ ३ ॥ पू° । ५ ग. च. छ. °निर्देवत ।

उपांशुयाजस्य दर्शे प्रसक्तिरेव नास्ति । तत्कुतो देवतापनयो लोपो वा—इति चेत् । एवं तर्हि क्त्वाचिन्ताऽस्तु ॥३॥

( तृतीये—अनिरुप्तेऽप्यभ्युदयेष्ट्याधिकरणे सूत्राणि १२—१५ ) ।

निरुप्ते स्यात्तत्संयोगात् ॥ १२ ॥ प्रवृत्ते वा प्रापणान्निमित्तस्य ॥ १३ ॥ लक्षणमात्रमितरत् ॥ १४ ॥ तथा चान्यार्थदर्शनम् ॥ १५ ॥

तृतीयाधिकरणमारचयति—

ऊर्ध्वं चन्द्रोदये सेष्टिर्निर्वापात्पूर्वमप्युत ।
उक्तेराद्योऽन्तिमः पक्षो निरुप्तेरविवक्षया ॥ ४ ॥

सा पूर्वोक्ताऽभ्युदयेष्टिर्हविर्निर्वापादूर्ध्वं चन्द्रोदये सति कर्तव्या । 'निरुप्तं हविरभ्युदेति' इत्युक्तत्वात् । इति चेत् ।

मैवम् । हविरभ्युदयस्य निमित्तत्वे तद्विशेषणस्य निर्वापस्याविवक्षितत्वात् । अन्यथा वाक्यभेदापत्तेः । 'यच्च हविरभ्युदेति, तच्च हविर्यदि निरुप्तम्' इति वाक्यभेदः । तस्मात्—निर्वापात्प्रागपि चन्द्रोदये सत्यविहितकाले कर्मोपक्रममात्रेणेयमिष्टिः कर्तव्या ॥ ४ ॥

(चतुर्थे—अनिरुप्तेऽभ्युदये वैकृतीभ्यो निर्वापाधिकरणे सूत्रे १६—१७) ।

अनिरुप्तेऽभ्युदिते प्राकृतीभ्यो निर्वपेदित्याश्मरथ्यस्तण्डुलभूतेष्वपनयात् ॥ १६ ॥ व्यूर्ध्वभाग्भ्यस्त्वालेखनस्तत्कारित्वाद्देवतापनयस्य ॥ १७ ॥

चतुर्थाधिकरणमारचयति—

---

१ ग. छ. इतः परम्—"कुतः । वाचनिको हि तस्य पूर्णमासीकालः। "उपांशु पौर्णमास्यां यजन्" इति कालविधानपरत्वात् । तत्र कुतो देवतापनयो लोपो वा—इति चेत् । एवं तर्हि क्त्वाचिन्ताऽस्तु । उपवर्षस्तु वृत्तिकारः–बह्वृचब्राह्मणे–'अमावस्यायामप्युपांशुयाजो विहितः' इति तदभिप्रायेण क्त्वाचिन्ता" । २ ख. ग. छ. °सत्यवि° । ३ ग. छ. °विर्विशिष्टस्य चन्द्राभ्युदयस्य निमित्तत्वे सति त° । ४ च. निमित्तत्वेन । ५ ख. ग. च. ङ. यस्य ।

प्राक्प्राकृतीभ्यो निर्वापो वैकृतीभ्योऽपि वाऽग्रिमः।
तण्डुलोक्तेर्वैकृतीभ्यो हविर्मात्रोपलक्षणात् ॥ ५ ॥

निर्वापात्प्राग्यदा चन्द्रोदयः, तदा चन्द्रोदयादूर्ध्वं क्रियमाणो निर्वापः प्राकृतीभ्यो देवताभ्यो युक्तः। कुतः। 'तण्डुलान्विभजेत्' इति वाक्येन तण्डुलभावादूर्ध्वं प्राकृतदेवतापनयश्रवणात्। निर्वापस्तु व्रीहीणामेवेति तस्मिन्काले प्राकृत्योऽग्न्यादिदेवता नापनीताः। इति प्राप्ते—

ब्रूमः—वैकृतीभ्यो दातृत्वादिगुणयुक्ताभ्योऽग्न्यादिदेवताभ्यो निर्वापः कर्तव्यः। कुतः। तण्डुलशब्देन हविर्मात्रस्योपलक्षणात्। अन्यथा दधिपयसोरतण्डुलत्वेन देवतापनयो न स्यात्। हविर्मात्रविवक्षायां तु व्रीहीणामपि हविष्ट्वेन प्राकृतदेवतासंबन्धमपनीय देवतान्तरसंबन्धस्य कर्तुं युक्तत्वाद्वैकृतीभ्यो निर्वपेत् ॥ ५ ॥

( पञ्चम { किंचिन्निरुप्तेऽभ्युदयेऽवशिष्टस्य तूष्णीं निर्वापाधिकरण } सूत्राणि १८-२० )।

विनिरुप्ते न मुष्टीनामपनयस्तद्गुणत्वात् ॥ १८ ॥
अप्राकृतेन हि संयोगस्तत्स्थानीयत्वात् ॥ १९ ॥
अभावाच्चेतरस्य स्यात् ॥ २० ॥

पञ्चमाधिकरणमारचयति—

प्राकृतीभ्योऽल्पनिर्वापेऽभ्युदये शिष्टतण्डुलान्।
प्राकृतीभ्यो वैकृतीभ्यस्तूष्णीं वा निर्वपेदिह ॥ ६ ॥
प्राकृतीभ्यः प्रवृत्तत्वाद्वैकृतीभ्यो निमित्ततः।
शिष्टांशस्यापदार्थत्वादसंयोगादिहान्तिमः ॥ ७ ॥

यदा प्राकृतीभ्यो मुष्टिमात्रे निरुप्ते सति चन्द्रोऽभ्युदेति, तदा मुष्टित्रयरूपोऽवशिष्टोंऽशः प्राकृतीभ्य एव निर्वप्तव्यः। कुतः। प्राकृतीनां प्रवृत्तत्वात्। इत्येकः पक्षः।

चन्द्रोदये निमित्ते सति नैमित्तिकस्य पूर्वदेवतापनयस्यावश्यंभावाद्वैकृतीभ्योऽवशिष्टांशनिर्वापः। इति द्वितीयः पक्षः।

अस्तु प्राकृतदेवतापनयो निमित्ताधीनः। अन्यदेवतासंयोगस्त्वंशस्य न संभवति। अन्याश्च देवताः प्राकृतदेवतास्थाने निवेशनीयाः। प्राकृतदेवतानां च निर्वा-

१ म. च. छ. °भ्योऽथवाऽ°। २ क. °ण्डुलाविभागाद्°। ख. च. °ण्डुलीभा°। ३ ख. ग. छ. °बनश्र°।

यपदार्थेन संयोगः क्लृप्तः, न तु पदार्थांशेन। ततस्तत्स्थानपतितानां वैकृतीनां च नायसंयोगो युक्त इत्यस्यांशस्य प्राकृतीभ्योऽपनीतत्वाद्वैकृतीभिरसंयोगाच्च तूष्णीमेव निर्वाप इति राद्धान्तः ॥ ६ ॥ ७ ॥

( षष्ठे—संनयदसंनयदुभयस्यैवाभ्युदये प्रायश्चित्ताधिकरणे सूत्राणि २१—२४ )।

सांनाय्यसंयोगान्नासंनयतः स्यात् ॥ २१ ॥
औषधसंयोगाद्वोभयोः ॥ २२ ॥ वैगुण्यान्नेति
चेत् ॥ २३ ॥ नातत्संस्कारत्वात् ॥ २४ ॥

षष्ठाधिकरणमारचयति—

सेष्टिः सांनाय्यिनो वा स्यादन्यस्यापि दधिश्रुतेः।
नान्यस्येत्यग्रिमोऽन्त्यः स्याद्देवमात्रविधानतः ॥ ८ ॥

न हि सांनाय्यरहितस्य दधिपयसी विद्येते। तदभावे च 'दधनि चरुम्, शृते चरुम्' इति विधिर्न संगच्छते। तस्मात्—सांनाय्यिन एव सा पूर्वोक्ताऽभ्युदयेष्टिः। इति चेत्।

मैवम्। अप्राप्ता देवता एवात्र विधीयन्ते। दधिपयसोरपि विधाने वाक्यं भिद्येत। ततः—तण्डुलचरमारब्धयोर्दधिपयसोरनूद्यमानतया विध्यभावात्, उदके चरुश्रपणसंभवाच्च, सांनाय्यिवदन्यस्यापि सेष्टिरस्ति ॥ ८ ॥

( सप्तमे—सत्राय प्रवृत्तमात्रस्य विश्वजिदधिकरणे सूत्राणि २५—२७)।

साम्युत्थाने विश्वजित्क्रीते विभागसंयोगात्
॥ २५ ॥ प्रवृत्ते वा प्रापणान्निमित्तस्य
॥ २६ ॥ आदेशार्थेतरा श्रुतिः ॥ २७ ॥

सप्तमाधिकरणमारचयति—

सत्राय दीक्षितानां चेत्साम्युत्थानाभिवाञ्छनम्।
यजेद्विश्वजिता क्रीते राजन्ये तत्पुराऽपि वा ॥ ९ ॥
आद्यः सोमविभागोक्तेरक्रीते तदसंभवात्।
अर्थप्राप्तविभागस्यानुवादादन्तिमो भवेत् ॥ १० ॥

---

१ ग. छ. °न। एवं तत्स्था°। २ ख. °नायिनो। ३ क. °वि श्रुतश्च। ना°। ४ ख. ग. घ. ङ. °विशृतयोर°। ५ ग. ङ. उदकेन। ६ ग. छ. °वाञ्छितम्।

इदमाम्नायते—'यदि सत्राय दीक्षितानां साम्युत्तिष्ठासेत्, सोमं विभज्य विश्वजिता यजेत' इति । 'सत्रिणां मध्ये यः कोऽपि सत्रैकदेशमनुष्ठाय सत्रं परित्यज्य यदि गन्तुमिच्छेत्, तदा स्वकीयं सोमं विभज्य तेन सोमेन विश्वजिद्यागं कुर्यात्' इत्यर्थः । तदेतद्विश्वजिदनुष्ठानं सोमे क्रीते सति पश्चादुत्तिष्ठासया भवति, न तु पूर्वम् । कुतः । उच्यमानस्य सोमविभागस्य सोमक्रयात्पूर्वमसंभवात् । इति चेत् ।

मैवम् । नात्र सोमविभागोऽङ्गत्वेन विधीयते, किंतु क्रीतराजकस्य द्रव्यान्तरविभागवद्भागप्राप्तोऽनूद्यते । सोमग्रहणं तु प्रदर्शनार्थम् । तस्मात्—उत्तिष्ठासां निमित्तीकृत्य विश्वजिन्मात्रस्य विधानात्सोमक्रयात्प्रागप्युत्तिष्ठासोर्विश्वजिद्भवति ॥ ९ ॥ १० ॥

(अष्टमे—ज्योतिष्टोमे दीक्षापरिमाणानां वैकल्पिकत्वाधिकरणे सूत्रम् ) ।

दीक्षापरिमाणे यथाकाम्यविशेषात् ॥ २८ ॥

अष्टमाधिकरणमारचयति—

ज्योतिष्टोमे द्वादश स्युर्दीक्षा एकादयोऽथवा ।
स्याद्भृतेर्वननादाद्यः प्रत्यक्षश्रुतितोऽन्तिमः ॥ ११ ॥

ज्योतिष्टोमप्रकरणे दीक्षापक्षाः श्रूयन्ते । तान्कल्पसूत्रकार उदाजहार—'एका दीक्षा, तिस्र उपसदः, पञ्चमीं प्रसुतः । तिस्रो वा दीक्षाः, तिस्र उपसदः, सप्तमीं प्रसुतः । चतस्रो दीक्षाः, तिस्र उपसदः, अष्टमीं प्रसुतः' इति । तथाऽन्यदपि श्रुतम्—'द्वादश दीक्षाः' इति । 'दीक्षणीयेष्ट्या संपन्नः संस्कारो दीक्षा । सा चैकस्मिन्दिनेऽनुष्ठानादेका भवति । तदूर्ध्वं त्रिषु दिनेषूपसन्नामका होमाः । पञ्चमे दिने सोमयागः । एवं हि त्रिषु चतुर्षु द्वादशसु वा दिनेषु दीक्षाधर्मा वाङ्नियमादयोऽनुवर्तनीयाः' इत्यर्थः । तत्र ज्योतिष्टोमे द्वादशदीक्षापक्ष उपादेयः । कुतः । 'द्वादशरात्रीर्दीक्षितो भृतिं वन्वीत' इति श्रवणात् । यज्ञार्थं याच्ञया द्रव्यसंपादनं भृतिवननम् । तच्च नित्यम् । तत्संयोगेन द्वादशत्वपक्षोऽपि नित्यः । एकादिपक्षाणां तु विकृतिषूत्कर्षः । इति *भाष्यकारस्य मतम् ।

तदेतत्पूर्वपक्षीकृत्य वार्तिककारेणैवं सिद्धान्तः कृतः—'दीक्षितो भृतिं वन्वीत' इत्येतावदेवात्र विधीयते । 'द्वादश' इत्युक्तिस्तु प्रदर्शनार्था । एवं च सति प्रत्य-

*भाष्यकारस्य मते तु—एवं पूर्वपक्षे स्थिते 'द्वादशाहस्तु—' इति सूत्रमेव सिद्धान्तभूतमिति नाधिकरणभेदः ।

१ ख. ग. च. छ. °ष्ठासायां भ° । २ च. °गप्रा° । ३ क. ख. च. °न्ते । तत्कल्प° ।

अश्रुतिसिद्धा एकादिपक्षा अबाधिता भविष्यन्ति । तस्मात्—सर्वे पक्षा ज्योतिष्टोमे विकल्पिताः ॥ ११ ॥

( नवमे—द्वादशाहे दीक्षापरिमाणानियमाधिकरणे सूत्रम्— ) ।

द्वादशाहस्तु लिङ्गात्स्यात् ॥ २९ ॥

नवमाधिकरणमारचयति—

द्वादशाहे किमेकादिविकल्पा द्वादशैव वा ।
आद्यः प्रकृतिवत्षण्णां द्विकानामुक्तितोऽन्तिमः ॥ १२ ॥

द्वादशाहस्य ज्योतिष्टोमविकृतित्वादेकादिदीक्षा[1]पक्षा द्वादशाहे विकल्पिताः इति चेत्। मैवम् । 'अभीन्धत एव दीक्षाभिः' इति श्रुतस्य दीक्षाबहुत्वस्य वाक्यशेषेण द्वादशसंख्यायां पर्यवसानात् । तथा च षट्संख्याकानि द्विकानि श्रूयन्ते— 'द्वाभ्यां लोमावद्यति, द्वाभ्यां त्वचम्, द्वाभ्यामसृक्, द्वाभ्यां मांसम्, द्वाभ्यामस्थि, द्वाभ्यां मज्जानम्' इति । किंच—'षट्त्रिंशदहो वा एषः, यद्द्वादशाहः' इत्याम्नातम् । तत्र—'उपसदो द्वादश, सुत्या द्वादश' इत्येतदविवादम् । तथा सति— दीक्षाणां द्वादशत्वमन्तरेण षट्त्रिंशत्संख्या न पूर्यते । तस्मात्—द्वादशाहे द्वादशैव दीक्षा नियताः ॥१२॥

(दशमे—गवामयने माघपौर्णमास्याः पुरस्ताद्दीक्षाधिकरणे सूत्राणि ३०-३७)।

पौर्णमास्यामनियमोऽविशेषात् ॥ ३० ॥ आनन्तर्यात्तु चैत्री स्यात् ॥ ३१ ॥ माघी वैकाष्टका श्रुतेः ॥ ३२ ॥ अन्या अपीति चेत ॥ ३३ ॥ न भक्तित्वादेषा हि लोके ॥ ३४ ॥ दीक्षापराधे चानुग्रहात् ॥ ३५ ॥ उत्थाने चानुप्ररोहात् ॥३६॥ अस्यां च सर्वलिङ्गानि ॥ ३७ ॥

दशमाधिकरणमारचयति—

गवानयन उक्ता तु या काचित्पूर्णिमाऽथवा ।
चैत्री माघ्युत काचित्स्यादविशेषात्प्रशंसया ॥ १३ ॥
चैत्री स्यात्क्रय एकाष्टकायामित्युपवर्णितम् ।
माघकृष्णाष्टमी त्वेकाऽष्टकातो माघपूर्णिमा ॥ १४ ॥

---

१ ख. ग. च. छ. °क्षा द्वा° । २ ग. छ. °द्यन्ति द्वा° ।

गवामयने श्रूयते—'चतुरहे पुरस्तात्पौर्णमास्या दीक्षेरन् । तेषामेकाष्टकायां क्रयः संपद्यते' इति । 'पौर्णमास्याः पूर्वस्मिंश्चतुरहे दीक्षेरन्—एकादश्यां दीक्षामारभेत । तथा सति पौर्णमास्या उपरितने सप्तमीदिने द्वादश दीक्षाः पूर्यन्ते । तत उपरितन्यामष्टम्यां सोमक्रय इत्यर्थः । तत्र—विशेषस्यानुक्तत्वाद्या काचित्पूर्णिमा—इत्येकः पक्षः ।

'चित्रापूर्णमासे दीक्षेरन् । मुखं वा एतत्संवत्सरस्य, याच्चित्रापूर्णमासः' इति प्रशस्यमानतया चैत्री पौर्णमासी—इति द्वितीयः पक्षः ।

याज्ञिकसमाख्यया माघकृष्णाष्टम्या एकाष्टकात्वात्तत्र सोमक्रयसंपत्तये माघ्याः पौर्णमास्याः पूर्वस्यामेकादश्यां दीक्षाऽऽरब्धव्या ॥ १३ ॥ १४ ॥

( एकादशे—दीक्षोत्कर्षे तन्नियमानामप्युत्कर्षाधिकरणे सूत्रे ३८–३९ ) ।

दीक्षाकालस्य शिष्टत्वादतिक्रमे नियतानामनुत्कर्षः प्राप्तकालत्वात् ॥ ३८ ॥ उत्कर्षो वा दीक्षितत्वाद्-विशिष्टं हि कारणम् ॥ ३९ ॥

एकादशाधिकरणमारचयति—

कुतोऽप्यवभृथोत्कर्षे जुहुयादग्निहोत्रकम् ।
न वाऽऽद्योऽप्रतिषिद्धत्वान्नैवं दीक्षानुवर्तनात् ॥ १५ ॥

ज्योतिष्टोमे दीक्षोपक्रमदिनमारभ्य पञ्चमे सप्तमेऽष्टमे वा दिने सुत्या भवति । तस्मिन्सुत्यादिने त्रिषु सवनेष्वनुष्ठितेष्ववभृथः कर्तव्यः । तस्मिन्कृते दीक्षानियमा निवर्तन्ते । तथा सति यदा कदाचिद्देवान्मानुषाद्वा निमित्तादवभृथस्य केषुचिद्दिनेषूत्कर्षो भवति । तेषु दिनेषु दीक्षितनियमा न सन्ति । कुतः । नियमावधेरवभृथकालस्य श्रुत्युक्तस्यातिक्रान्तत्वात् । ते च नियमा एवमाम्नायन्ते—'दीक्षितो न ददाति, न पचति, न जुहोति' इति । एतेषां च नियमानामभावे प्रागवभृथाद्दानहोमादयः कार्याः—इति प्राप्ते—

ब्रूमः—दीक्षामोचनस्यावभृथः साधनम्, न तु कालः । अतोऽवभृथकालेऽतिक्रान्तेऽपि यावदवभृथं दीक्षाऽनुवर्तत इत्यवभृथोत्कर्षे दीक्षितधर्माणां निषेधानामप्युत्कर्षाद्दानहोमादयस्तेषु दिनेषु न कार्याः ॥ १५ ॥

१ ख. च. °मास्यै दी° । ग. छ. °मास्ये दी° । २ ग. च. छ. तवुष° । ३ ग. छ. °त्रापौर्ण° । ४ ग. छ. °मे षष्ठे वा । ५ क. °षु नि° । ६ ख. ग. च. छ. दीक्षोन्मोच° ।

( द्वादशे—दीक्षानुवृत्तौ प्रतिहोमनिराकरणाधिकरणे सूत्रे ४०—४१ ) ।

तत्र प्रतिहोमो न विद्यते यथा पूर्वेषाम् ॥ ४० ॥

कालप्राधान्याच्च ॥ ४१ ॥

द्वादशाधिकरणमारचयति—

दीक्षानुवृत्तौ कर्तव्यः प्रतिहोमो न वाऽग्रिमः ।
पुंदोषान्न तथाऽप्यस्य दीक्षायां शास्त्रवारणात् ॥ १६ ॥

अवभृथोत्कर्षे दीक्षानुवृत्तौ यावत्सु दिनेष्वाग्निहोत्रं न हुतम्, तावत्कालीनापराधपरिहाराय प्रतिहोमः कर्तव्यः । यथा सायंकालीने प्रातःकालीने वा होमे पुरुषापराधादतिपतिते कालान्तरे प्रतिहोमः क्रियते, तद्वत् । अस्ति ह्यत्र पुरुषापराधः । अवभृथोत्कर्षस्य तत्कृतत्वात् । न खल्ववभृथोत्कर्षः शास्त्रेण विहितः । तस्मात्—'प्रतिहोमः कार्यः'—इति प्राप्ते—

ब्रूमः—भवत्ववभृथोत्कर्षोऽपराधकृतः । तथाऽपि दीक्षायामनुवृत्तायाम् 'दीक्षितो न ददाति' इत्यादिशास्त्रेणैव होमो निवारित इति नास्ति होमकर्तव्यता । सायंकालीनादिहोमस्य तु कर्तव्यस्यैव सतोऽकरणात्प्रतिहोमः प्राप्नोतीति वैषम्यम् ॥ १६ ॥

(त्रयोदशे—उदवसानीयोत्कर्षेऽपि प्रतिहोमनिराकरणाधिकरणे सूत्रम् )।

प्रतिषेधाच्चोर्ध्वमवभृथादेष्टेः ॥ ४२ ॥

त्रयोदशाधिकरणमारचयति—

दैवादुदवसानीयोत्कर्षे होमे कृतिर्न वा ।
कृतिर्दीक्षोन्मोचनान्नो पुनराधेयसंमितेः ॥ १७ ॥

कृतेऽवभृथे पश्चादुदवसानीयेष्टिर्विहिता । सा यदि केनापि निमित्तेनोत्कृष्टा, तदानीमवभृथेन दीक्षाया उन्मुक्तत्वात् 'दीक्षितो न ददाति' इत्यादिनिषेधाभावाद्धोमः कर्तव्यः । तदकरणे च प्रतिहोमः कर्तव्यः—इति चेत् ।

मैवम् । 'एतया पुनराधेयसंमितयेष्ट्वाऽग्निहोत्रं जुहुयात्' इति वचनेनोदवसानीयायां कृतायां पश्चादग्निहोत्राधिकारप्रतिपादनात् । अतः—तदुत्कर्षेऽग्निहोत्रं प्रतिहोमं वा न कुर्यात् ॥ १७ ॥

---

१ ग. छ. होमकृ° । २ ख. ग. च. छ. °मिते ॥१७॥ कृ° । ३ क. च. कार्यः । ४ क. ततः । ५ च. वा कु° ।

(चतुर्दशे—प्रतिहोमे सायमग्निहोत्रप्रभृत्यारम्भाधिकरणे सूत्रे ४३—४४)।

प्रतिहोमश्चेत्सायमग्निहोत्रप्रभृतीनि हूयेरन्

॥ ४३ ॥ +प्रातस्तु षोडशिनि ॥ ४४ ॥

चतुर्दशाधिकरणमारचयति—

क्रत्वाचिन्ताक्रमो नो चेत्प्रतिहोमेऽतिपातिनः।

क्रमोऽस्त्वग्निष्टोमकादौ सायं षोडशिनीतरः ॥ १८ ॥

अवभृथोदवसानीययोरुत्कर्षे होमकर्तव्यताम्, तदकरणे प्रतिहोमं वाऽभ्युपेत्य क्रत्वाचिन्ता क्रियते। अवभृथोदवसानीययोरिष्ट्योरनुष्ठितयोः सत्योः पूर्वमतिपन्नानां होमानां प्रतिहोमा युगपद्भवः प्रात्ताः। तेषु नियामकाभावान्नास्ति नियतः क्रमः—इति पूर्वपक्षः।

अतिपातक्रमस्य बुद्धिस्थस्य त्यागे कारणाभावात्प्रतिहोमेऽपि स एव क्रमः—इति राद्धान्तः। तत्र—अग्निष्टोमस्य सूर्यास्तमयात्प्रागेव समाप्तत्वात्सायंहोमः प्रथममतिपद्यते। षोडशिनस्तु रात्रौ समाप्तेः प्रातर्होमः प्रथममतिपद्यते। तस्मात्—तेनैव क्रमेण प्रतिहोमं कुर्यात् ॥ १८ ॥

( पञ्चदशे—भेदनादिनिमित्तकहोमस्य दर्शपूर्णमासाङ्गताधिकरणे सूत्राणि ४५—४७ )।

प्रायश्चित्तमधिकारे सर्वत्र दोषसामान्यात् ॥ ४५ ॥

प्रकरणे वा शब्दहेतुत्वात् ॥ ४६ ॥ अतद्विकारश्च ॥ ४७ ॥

पञ्चदशाधिकरणमारचयति—

भिन्ने होमो यत्र तत्र प्रकृते वा निमित्ततः।

सर्वत्र स्यात्फलित्वाय प्रकृतेनैकवाक्यता ॥ १९ ॥

दर्शपूर्णमासयोः श्रूयते—'भिन्ने जुहोति। स्कन्ने जुहोति' इति। अत्र—पात्रभेदस्कन्दनयोर्होमनिमित्तत्वात्क्रत्वन्तरेषु लोकव्यवहारे वा यत्र यत्र निमित्तं संपद्यते, तत्र सर्वत्र होतव्यम्—इति चेत्।

मैवम्। फलकल्पनाप्रसङ्गात्। प्रकृतेन तु दर्शपूर्णमासकर्मणा सहैकवाक्यतायां

+ भाष्यकारस्तु—इदं सूत्रमधिकरणान्तरत्वेन व्याचष्टे।

१ क. °होमो निपातितः। क°। २ च. °पातत:। ३ क. °ययोः सतोः पू°। ४ क. °क्रमतः। ५ ग. च. छ. अनेनैव। ६ ग. च. ज. तत्र। ७ ख. ग. ङ. तत्र। ८ क. ख. °ते तु।

तत्कर्त्वेनैव फलवत्त्वं सिध्यति । तस्मात्—दर्शपूर्णमासयोरुक्तनिमित्तेन क्रियमाणो होमस्तदङ्गम्, न तु गृहदाहेष्टिवत्स्वतन्त्रं कर्म ॥१९॥

( षोडशे—व्यापन्नशब्दार्थनिर्णयाधिकरणे—सूत्रम्— ) ।

व्यापन्नस्याप्सु गतौ यदभोज्य-
मार्याणां तत्प्रतीयेत ॥ ४८ ॥

षोडशाधिकरणमारचयति—

व्यापन्नमप्सु किं तत्स्यादनिश्चेयमहेतुतः ।
आर्याभोज्यं केशकीटदूषितं तत्प्रसिद्धितः ॥ २० ॥

इदमाम्नायते—'व्यापन्नमप्सु हरन्ति'[1] इति । तत्र—व्यापन्नशब्दस्यार्थो निश्चेतुमशक्यः, शक्यो वा, इति संशये निश्चायकस्य हेतोरभावादशक्यः—इति चेत् । मैवम् । केशकीटादिभिर्दूषितं यद्द्रव्यमार्यैरभोज्यम्, तदेवात्र प्रसिद्धिबलात् 'व्यापन्नम्' इति निश्चेतुं शक्यते ॥ २० ॥

( सप्तदशे—अपच्छेदयौगपद्येऽपि प्रायश्चित्ताधिकरणे सूत्रे ४९-५० ) ।

विभागश्रुतेः प्रायश्चित्तं यौगपद्ये न विद्यते
॥ ४९ ॥ स्याद्वा प्राप्तनिमित्तत्वात्कालमा-
त्रमेकम् ॥ ५० ॥

सप्तदशाधिकरणमारचयति—

उद्गातुः प्रतिहर्तुश्च सहापच्छेदनेऽस्ति नं ।
प्रायश्चित्तमुतास्त्यत्र, न निमित्तविघाततः ॥ २१ ॥
एकैकस्यैव विच्छेदकर्तृत्वान्न विहन्यते ।
कालमात्रं तु तत्रैकं प्रायश्चित्तमतो भवेत् ॥ २२ ॥

ज्योतिष्टोमे श्रूयते—'यद्युद्गाताऽपच्छिद्येतादक्षिणो यज्ञः संस्थाप्यः, अथान्यं आहत्यस्तत्र तद्दद्यात्, यत्पूर्वस्मिन्दास्यन्स्यात् । यदि प्रतिहर्ताऽपच्छिद्येत, सर्वस्वं दद्यात्' इति । अस्यायमर्थः—'प्रातःसवने बहिष्पवमानेनं स्तोष्यमाणा ऋत्विजः शालाया बहिः प्रसर्पन्ति, तदानीम् 'एकस्य पृष्ठतोऽन्यः' इत्येवं पिपीलिकावत्पङ्क्त्याकारेण गन्तव्यम् । तत्र पुरतो गन्तुः कच्छं गृहीत्वैव पृष्ठतोऽन्यो

१ ख. ग. छ. प्रहरन्ति । २ क. ख. ग. घ. छ. संशयो । ३ग. छ. नो. ४ च. °न्यथाऽऽहर्तव्यस्त° । ५ क. °ने स्तो° ।

गच्छेत्। एवं सति यदि प्रमादादुद्गाता गृहीतं कच्छं मुञ्चेत्, तदा दक्षिणामदत्त्वा प्रक्रान्तो यज्ञः समापनीयः। तं समाप्य पुनरपि स यज्ञः प्रयोक्तव्यः। तस्मिन्प्रयोगे पूर्वं यद्दित्सितं द्रव्यम्, तद्दद्यात्। यदा प्रतिहर्ता मुञ्चेत्, तदा तस्मिन्नेव प्रयोगे सर्वस्वं दद्यात्' इति। तत्र—यद्युद्गातृप्रतिहर्तारौ युगपदुन्मुञ्चेताम्, तदानीमुक्तं प्रायश्चित्तनिमित्तं विहन्येत। एकैककर्तृको ह्यपच्छेदो निमित्तत्वेन श्रुतः। अयं तूभयकर्तृकत्वान्नैकेन व्यपदेष्टुं शक्यते। तस्मात्—श्रूयमाणस्य निमित्तस्य विहतत्वान्नास्ति प्रायश्चित्तम्—इति प्राप्ते,

**ब्रूमः**—द्वौ ह्यत्रापच्छेदौ, तयोरेकैकस्यैक एव कर्ता—इति निमित्तस्य नास्ति विघातः। कालमात्रैक्यादेकापच्छेदभ्रान्तिः। तस्मात्—निमित्तविघाताभावादस्ति प्रायश्चित्तम्॥ २२॥

(अष्टादशे—यौगपद्येऽदाक्षिण्यसर्वस्वदाक्षिण्यविकल्पाधिकरणे सूत्राणि ५१—५३)।

**तत्र विप्रतिषेधाद्विकल्पः स्यात्॥ ५१॥ प्रयोगान्तरे वोभयानुग्रहः स्यात्॥ ५२॥ न चैकसंयोगात्॥ ५३॥**

अष्टादशाधिकरणमारचयति—

**समुच्चयो विकल्पो वा प्रायश्चित्तद्वयेऽग्रिमः।**
**अदाक्षिणत्वं पूर्वस्मिन्प्रयोगेऽन्यत्तु पश्चिमे॥ २३॥**
**प्रयोगे पश्चिमे नास्ति निमित्तं तेन तद्द्वयम्।**
**प्राप्तमेकप्रयोगेऽतो विरुद्धत्वाद्विकल्प्यते॥ २४॥**

अदाक्षिणत्वं सर्वस्वदक्षिणत्वं चेति यत्प्रायश्चित्तद्वयं निमित्तभेदेन श्रुतम्, तन्निमित्तद्वयसंनिपाते समुच्चेतव्यम्। यदि—अदक्षिणत्वसर्वस्वदानयोरन्योन्यविरोधः, तर्हि प्रयोगभेदेन व्यवस्थापनीयम्। अपच्छेदयुक्ते प्रथमप्रयोगे दक्षिणा न दातव्या, उत्तरप्रयोगे सर्वस्वं दातव्यम्। सत्यपि प्रयोगभेदे कर्मण एकत्वात्समुच्चयः। इति प्राप्ते,

**ब्रूमः**—नह्युत्तरप्रयोगेऽपच्छेदो विद्यते। न चासति निमित्ते प्रायश्चित्तं युक्तम्। तस्मात्—प्रथमप्रयोग एव निमित्तद्वयवशात्प्रायश्चित्तद्वयं प्राप्तम्। तच्चान्योन्यविरुद्धत्वाद्विकल्प्यते॥ २३॥ २४॥

---

१ क. °न्मुच्येयाता°। २ च. विहित°। ३ क. °दनभ्रा°। ग. च. छ. °दस्य भ्रा°।
४ क. °गे न तु प°। ५ ग. च. छ. °कल्पते। ६ ग. च. °कल्पते।

(एकोनविंशे— {आनुपूर्व्येणापच्छेद उत्तरापच्छेदनिमित्तप्रायश्चित्तानुष्ठानाधिकरणे} सूत्रम्— )।

पौर्वापर्ये पूर्वदौर्बल्यं प्रकृतिवत् ॥ ५४ ॥

एकोनविंशाधिकरणमारचयति—

अपच्छेदक्रमे पूर्वः प्रबलः स्यादुतोत्तरः ।
असंजातविरोधेन पूर्वेणोत्तरबाधनम् ॥ २५ ॥
निरपेक्षोत्तरज्ञानं जायते पूर्वबाधया ।
न बाधकान्तरं तस्य तेन प्रबलमुत्तरम् ॥ २६ ॥

उद्गातृप्रतिहर्त्रोरपच्छेदयोर्यौगपद्ये समानबलत्वादस्तु प्रायश्चित्तयोर्विकल्पः। यदा तु क्रमेणापच्छेदौ स्याताम्, तदानीमसंजातविरोधित्वेन प्रबलत्वाच्छ्रुतिलिङ्गादाविवोत्तरस्य प्रवृत्तिर्निरुध्यते । इति चेत् ।

मैवम् । श्रुतिलिङ्गादावुत्तरस्य पूर्वसापेक्षत्वात्पूर्वेण विरोधे सत्युत्तरस्योत्पत्तिरेव नास्ति । इह तु ज्ञानद्वयमन्योन्यनिरपेक्षं वाक्यद्वयादुत्पद्यत इति नास्त्युत्पत्तिप्रतिबन्धः । उत्पद्यमानं चोत्तरज्ञानं स्वविरुद्धस्य पूर्वज्ञानस्य बाधेनैवोत्पद्यते । ननु निरपेक्षत्वस्य समानत्वात्पूर्वज्ञानमेवोत्तरस्य बाधकमस्तु- इति चेत्। न। पूर्वज्ञानोत्पत्तिदशायामविद्यमानस्योत्तरज्ञानस्य बाध्यत्वायोगात् । उत्तरकाले तु स्वयंबाधितं पूर्वज्ञानं कथमुत्तरस्य बाधकं भवेत् । न वाऽन्यत्किंचिदुत्तरस्य बाधकं पश्यामः । तस्मात्—उत्तरकालीनापच्छेदनिमित्तं प्रायश्चित्तमनुष्ठेयम् ॥२५॥२६॥

( विंशे—उद्गात्रुत्तरापच्छेदेऽपि सर्वस्वदाक्षिणादानाधिकरणे सूत्रम्— )।

यद्युद्गाता जघन्यः स्यात्पुनर्यज्ञे सर्ववेदसं दद्याद्यथेतरस्मिन् ॥ ५५ ॥

विंशाधिकरणमारचयति—

उद्गातुः पश्चिमच्छेदे पुनर्यागस्य दक्षिणा ।
शतं द्वादशयुक्तं स्याद्यदि वा सर्ववेदसम् ॥ २७ ॥
तद्दद्याद्यत्पुरा दित्सुरित्युक्तेः शतदक्षिणा ।
प्रतिहर्तुः पुरा छेदात्सर्ववेदसबाधितम् ॥ २८ ॥

---

१ क. °र्वेणैवोत्तरोऽबलः ॥ २५ ॥ नि° । ख. °र्वेणैव तु बा° । २ ख. °रयोरुपपत्ति° । ३ ग. क. °श्चिम छे° ।

शतदानं पूर्वयागे सर्ववेदसदित्सुता ।
प्राप्तेत्यूर्ध्वं प्रयोगे तद्दातव्यं सर्ववेदसम् ॥ २९ ॥

यद्युद्गाता पश्चादपच्छिद्यते, तदा तस्यापच्छेदस्य प्रबलत्वात्तन्निमित्तं प्रायश्चित्तमनुष्ठेयम् । तच्च प्रायश्चित्तमीदृशम्—‘ प्रथमप्रयोगं दक्षिणारहितमनुष्ठाय द्वितीयप्रयोगे पूर्वं दित्सिता दक्षिणा दातव्या’ इति । पूर्वं च गवां द्वादशाधिकं शतं दित्सितम् । तस्य ज्योतिष्टोमदक्षिणारूपेण विहितत्वात् । तस्मात्—‘ उत्तरप्रयोगे द्वादशशतं देयम्’ इति प्राप्ते—

**ब्रूमः**—प्रतिहर्तुः प्रथममपच्छेदे सति तन्निमित्तकं सर्वस्वदानरूपं प्रायश्चित्तं प्रथमप्रयोगे प्राप्तम् । तेन च क्रतुस्वभावप्रयुक्तस्य द्वादशशतस्य बाधात्सर्वस्वं दित्सितम् । न च—उद्गात्रपच्छेदेन पश्चाद्भाविना सर्वस्वदित्सा प्रबाध्यते—इति शङ्कनीयम् । बाधकस्य दक्षिणान्तरस्य तत्रानुक्तत्वात् । यद्दित्सितम्, तदुत्तरप्रयोगे देयम्—इत्येतावदेव तत्रोच्यते । दित्सितं च सर्वस्वमित्युक्तम् । अत उत्तरकालीनोद्गात्रपच्छेदनिमित्तेऽपि पुनः प्रयोगे पूर्वकालीनप्रतिहर्त्रपच्छेदप्रयुक्तं सर्वस्वमेव दातव्यम् ॥ २९ ॥

( एकविंशे—अहर्गणेऽपच्छेदे सर्वावृत्तिनिराकरणाधिकरणे सूत्रम्— ) ।

अहर्गणे यस्मिन्नपच्छेदस्तदावर्तेत कर्मपृथक्त्वात् ॥ ५६ ॥

एकविंशाधिकरणमारचयति—

अहर्गणे चेदुद्गातृच्छेद आवर्त्यतां गणः ।
किंवा यत्र दिने छेदस्तदेवाऽऽवर्त्यतां दिनम् ॥ ३० ॥
गणावृत्तिः प्रयोगैक्यात्प्रयोगोऽवान्तरः पृथक् ।
तेनाहरेकमावर्त्यमनङ्गत्वान्न हीतरत् ॥ ३१ ॥

द्वादशाहाद्यहर्गणे यदि कस्मिंश्चिदहन्युद्गाताऽपच्छिद्येत, तदा तमहर्गणं दक्षिणारहितं समाप्य पुनरपि गण आवर्तनीयः । तत्र पूर्वं दित्सिता दक्षिणा दातव्या । कुतः । गणप्रयोगस्यैकत्वात् । इति प्राप्ते—

**ब्रूमः**—महाप्रयोगस्यैकत्वेऽप्यवान्तरप्रयोगस्य भिन्नत्वात्तद्दशेनैकमेवाहरावर्तनीयम् । न ह्यन्येषामह्नामेतदङ्गत्वमस्ति । तत्र—एकस्याह्न आवृत्तावितरावृत्तिप्रसङ्गो नास्ति । तस्मात्—एकस्यैवाह्न आवृत्तिः ॥ ३० ॥ ३१ ॥

१ ग. च. °त्यूध्वप्र° । २ ख. °मविच्छे° । ३ क. तद्दित्सितं । ४ च. °योमेऽवा° । ५ ग. च. °न्तरं पु° । ६ ग. च. तमेवाह° ।

इति श्रीमाधवीये जैमिनीयन्यायमालाविस्तरे षष्ठाध्यायस्य पञ्चमः पादः ॥ ५ ॥

| | अत्र पादे | आदितः । |
|---|---|---|
| अधिकरणानि | २१ | ४४२ । |
| सूत्राणि | ५६ | ११७१। |

---

( अथ षष्ठाध्यायस्य षष्ठः पादः ) ।

( प्रथमे-सत्रे समानकल्पानां सहाधिकाराधिकरणे सूत्राणि १-११ ) ।

संनिपातेऽवैगुण्यात्प्रकृतिवत्तुल्यकल्पा यजेरन् ॥१॥ वचनाद्वा शिरोवत्स्यात् ॥ २ ॥ न वाऽनारभ्यवादत्वात् ॥ ३ ॥ स्याद्वा यज्ञार्थत्वादौदुम्बरीवत् ॥ ४ ॥ न तत्प्रधानत्वात् ॥ ५ ॥ औदुम्बर्याः परार्थत्वात्कपालवत् ॥ ६ ॥ अन्येनापीति चेत् ॥७॥ नैकत्वात्तस्य चानधिकाराच्छब्दस्य चाविभक्तत्वात् ॥ ८ ॥ संनिपातात्तु निमित्तविघातः स्याद्बृहद्रथंतरवद्विभक्तशिष्टत्वाद्वसिष्ठनिर्वर्त्ये ॥९॥ अपि वा कृत्स्नसंयोगादविघातःप्रतीयेत स्वामित्वेनाभिसंबन्धात् ॥ १० ॥ साम्नोः कर्मवृद्ध्यैकदेशेन संयोगे गुणत्वेनाभिसंबन्धस्तस्मात्तत्र विघातः स्यात् ॥ ११ ॥

षष्ठपादे प्रथमाधिकरणमारचयति-

भिन्नप्रयाजादिकल्पा अपि सत्रेऽधिकारिणः ।
तुल्यकल्प एव वाऽऽद्यो वसिष्ठादिविधानतः ॥ १ ॥

---

१ ख. °द्यो नासि° ।

नाराशंसाद्यङ्गतायां स्वामित्वोद्देशपूर्वकम्।
नाराशंसविधौ संनिकर्षात्साद्‌गुण्यतोऽन्तिमः ॥ २ ॥

प्रयाजेषु पुरुषभेदेनानुष्ठानप्रकारो भिद्यते । राजन्यवसिष्ठादीनां नाराशंसो द्वितीयः प्रयाजः । तनूनपादन्येषाम् । तत्र वसिष्ठाविवाध्न्यश्वशुनककण्वकश्यपसंकृतिगोत्रोत्पन्ना ये नाराशंसप्रयाजवन्तः, ये चान्ये तनूनपात्प्रयाजवन्तः, त एते भिन्नकल्पा अपि मिलित्वा सप्तदशावराः सत्रेऽधिकारिणः स्युः । कुतः । नाराशंसमुद्दिश्य तदङ्गत्वेन वसिष्ठादिविधानात् । तथा सति सत्रिणां मध्ये केषांचिद्वसिष्ठादिगोत्रजत्वेऽपि तदङ्गत्वं सिध्यति इति प्राप्ते—

ब्रूमः—वसिष्ठादीन्यजमानानुद्दिश्य नाराशंसो विधीयते । तथा सति विधायकपदगतस्य धात्वर्थस्य विधेयत्वात्संनिकर्षः । वसिष्ठादिविधौ तु पदान्तरोपात्तत्वाद्विप्रकर्षः । अतो वसिष्ठाद्युद्देशेन नाराशंसविधौ, नाराशंसानुष्ठाने वसिष्ठादीनां साद्‌गुण्यम् । इतरेषां तु वैगुण्यम् । तनूनपादनुष्ठाने तु वैपरीत्यम् । अतः सर्वथाभिन्नकल्पानां सर्वेषां साद्‌गुण्यं न सिध्यति । अतः साद्‌गुण्याय तुल्यकल्पा एवाधिकारिणः ॥१॥२॥

( द्वितीये–भिन्नकल्पयोरपि राजपुरोहितयोः कुलाययज्ञेऽधिकाराधिकरणे सूत्राणि १२–१५ )।

वचनात्तु द्विसंयोगस्तस्मादेकस्य पाणित्वम् ॥ १२ ॥ अर्थाभावात्तु नैवं स्यात् ॥ १३ ॥ अर्थानां च विभक्तत्वान्न तच्छ्रुतेन संबन्धः ॥ १४ ॥ पाणेः प्रत्यङ्गभावादसंबन्धः प्रतीयेत ॥ १५ ॥

द्वितीयाधिकरणमारचयति—

सायुज्यकामौ यजतोऽनेन राजपुरोहितौ ।
राज्ञः पुरोहितौ राज्ञोस्तौ वा राजात्मकावुभौ ॥ ३ ॥
द्वयोर्द्वंद्वसमासो वा तुल्यत्वायाग्रिमो द्वयोः ।
सिद्ध्यै द्वितीयो राजोक्तिसार्थत्वाय तृतीयकः ॥ ४ ॥

---

१ क. 'शंस्याय° । २ ग. छ. °तायाः स्वा° । ३ ग. च. छ. °म् । नरा° । ४ ख. ग. च. छ. नराशंसो । ५ ख. ग. च. छ. ये नरा° । ६ ख. ग. च. छ. °तः–नरा° । ७ ख. ग. च. छ. नराशंसो । ८ ख. ग. च. छ. °न नरा° । ९ ख. ग. च. छ. °धौ नरा° । १० ग. ङ. च. °बुत ॥ ३ । ह° । ११ च. छ. °जोक्ते

अव्याहत्यै चतुर्थः स्याद्वचनाद्भिन्नकल्पता ।
तनूनपान्नराशंसौ विकल्प्येते समत्वतः ॥ ५ ॥

कुलाययज्ञं प्रकृत्य श्रूयते—'अनेन राजपुरोहितौ सायुज्यकामौ यजेयाताम्' इति । तत्र—राज्ञः पुरोहितस्य[१] च भिन्नकल्पत्वात्[२], अभिन्नप्रजाकल्पत्वाय पुरोहितयोरधिकारो वाच्यः । तथा सति 'राज्ञः पुरोहितौ' इति षष्ठीसमास इत्याद्यः पक्षः ।

'पुरोहितं वृणीते' इत्युपादेयगतस्यैकत्वस्य विवक्षितत्वाद्राजद्वयमन्तरेण पुरोहितद्वयासंभवात्—'राजपुरोहितश्च राजपुरोहितश्च' इत्यस्मिन्नर्थे कृतैकशेषत्वादुभयो राज्ञोः पुरोहितौ—इति द्वितीयः पक्षः ।

अराज्ञः पुरोहिताभावाद्व्यावर्त्याभावेन राजपदं व्यर्थम्[३] । ततः—'राजानौ च तौ पुरोहितौ च' इति कर्मधारयसमास इति तृतीयः पक्षः ।

राजत्वपुरोहितत्वधर्मौ भिन्नजातिवर्तिनावेकस्मिन्व्याहतौ । तस्मात् 'राजा च पुरोहितश्च' इति द्वंद्वसमास इति चतुर्थः परिशिष्यते । तत्र वचनबलाद्भिन्नकल्पयोरपि सहाधिकारः । उभयोः समप्रधानत्वान्नाराशंसतनूनपातौ विकल्प्येते ॥ ४ ॥ ५ ॥

(तृतीये—सत्रे ब्राह्मणमात्रस्याधिकाराधिकरणे सूत्राणि १६—२३)।

सत्राणि सर्ववर्णानामविशेषात् ॥१६॥ लिङ्गदर्शनाच्च ॥१७॥ ब्राह्मणानां वेतरयोरार्त्विज्याभावात् ॥१८॥ वचनादिति चेत् ॥ १९ ॥ न स्वामित्वं हि विधीयते ॥२०॥ गार्हपते वा स्यातामविप्रतिषेधात् ॥२१॥ न वा कल्पविरोधात् ॥२२॥ स्वामित्वादितरेषामहीने लिङ्गदर्शनम् ॥२३॥

तृतीयाधिकरणमारचयति—

सत्रं वर्णत्रयस्योत विप्रस्यैवाविशेषतः ।
त्रयस्य नैवं स्वामित्वं विप्राणामृत्विजां यतः ॥ ६ ॥

---

१ ग. च. छ. एतेन । २ ग. छ. °स्य विभि° । ३ ग. छ. °त, तुल्यक° । ४ क. °र्थमिति । रा° । ५ ख. ग, च. छ. °त्वान्नरा° ।

'ऋद्धिकामाः सत्रमासीरन्' इत्यत्र 'विप्राः' इति विशेषो न श्रूयते। तस्मात्—वर्णत्रयस्य सत्राधिकारः। इति चेत्।

मैवम्। 'विप्राणामेवाऽऽर्त्विज्यम्' इति द्वादशे वक्ष्यते। ऋत्विक्कार्ये यजमानाः सत्रे समाम्नाताः—'ये यजमानास्त ऋत्विजः' इति। तस्मात्—विप्राणामेव सत्रम् ॥ ६ ॥

(चतुर्थे विश्वामित्रतत्समानकल्पाना-
मेवाधिकाराधिकरणे सूत्राणि २४—२६)।
वासिष्ठानां वा ब्रह्मत्वनियमात् ॥२४॥
सर्वेषां वा प्रतिप्रसवात् ॥२५॥ विश्वा-
मित्रस्य हौत्रनियमाद्भृगुशुनकवसिष्ठा-
नामनधिकारः ॥ २६ ॥

चतुर्थाधिकरणमारचयति—

विप्रस्य सत्रं सर्वस्य वासिष्ठस्यैव वा भवेत्।
विश्वामित्रस्यैव वाऽऽद्य ऋद्धीच्छुत्वेन मध्यमः ॥ ७॥
ब्रह्मत्वाय ह्यवासिष्ठे ब्रह्मता स्तोममागतः।
वैश्वामित्रसमानानामेव होतृत्वसिद्धये ॥ ८ ॥

ऋद्धिकामस्य सत्रं विहितम्। ब्राह्मणश्च[1] सर्व[2] ऋद्धिं वाञ्छति[3]। तस्मात्—'विप्रस्य सर्वस्य सत्राधिकारः' इत्याद्यः पक्षः।

'वासिष्ठो[4] ब्रह्मा भवति' इति वचनादवासिष्ठस्य ब्रह्मत्वासंभवाद्ब्रह्मत्वाय वासिष्ठस्याधिकारो वाच्यः। तथा सति भिन्नकल्पत्ववारणाय तत्तुल्यकल्पा एवाधिक्रियन्ते—इति द्वितीयः पक्षः।

'वासिष्ठो ब्रह्मा—' इति वाक्यं न वासिष्ठस्य ब्रह्मत्वाधिकारबोधकम्।

'रश्मिरसि क्षयाय त्वा—' इत्यादयो मन्त्राः स्तोमभागाः, तानधीयानः[5] स्वयमवासिष्ठोऽपि ब्रह्मतामर्हति—इति स्तोमभागप्रशंसारूपेऽर्थवादे 'वासिष्ठो ब्रह्मा' इति पठितत्वात्। तस्मात्—'वैश्वामित्रो होता' इति विहितस्य होतृत्वस्य सिद्धये वैश्वामित्रस्य तत्समानकल्पानां चाधिकारः, नान्येषाम् ॥ ७ ॥ ८ ॥

---

१ ख. °ह्मणाश्च। २ ग. छ. सर्वामृद्धिं। ३ ख. वाञ्छन्ति। ४ क. ख. वसिष्ठो। ५ क. ख. °यानश्चाय°।

( पञ्चमे—सत्र आहिताग्नेरेवाधिकाराधिकरणे सूत्राणि २७—३२ )।

विहारस्य प्रभुत्वादनग्नीनामपि स्यात् ॥ २७ ॥
सारस्वते च दर्शनात् ॥ २८ ॥ प्रायश्चित्तविधा-
नाच्च ॥ २९ ॥ साग्नीनां वेष्टिपूर्वत्वात् ॥ ३० ॥
स्वार्थेन च प्रयुक्तत्वात् ॥ ३१ ॥ संनिवापं च
दर्शयति ॥ ३२ ॥

पञ्चमाधिकरणमारचयति—

अनाधातुश्च तत्किंवाऽऽधातुरेवाग्रिमो यतः ।
एकस्याग्निषु तत्सिद्धिर्न स्वाग्निष्वात्मनेपदात् ॥ ९ ॥

तत्सत्रमग्न्याधानरहितस्यापि संभवति । कुतः । सत्रिणां मध्ये कस्यचिदाहिताग्नित्वे तदीयेष्वग्निषु तेन सह प्रवृत्तैरनाहिताग्निभिरपि तस्य सत्रस्य साधयितुं शक्यत्वात् । इति चेत् ।

मैवम् । 'आदधीत' इत्यात्मनेपदमाधानफलस्य कर्तृगामितां दर्शयति । तत्फलं चाग्नीनां कर्मयोग्यता । ततो येऽनाहिताग्नयः, न तेऽधिकारिणः । यश्चाऽऽहिताग्निः, तस्यैव कर्मयोग्यत्वम्, नान्यस्य । किंच—सोमविकृतीनामिष्टिपूर्वत्वं निर्णीतम् । इष्टिश्चाऽऽधानपूर्विका । तस्मात्—आधातुरेव सत्राधिकारः॥९॥

( षष्ठे—जुह्वादीनां साधारण्याधिकरणे सूत्राणि ३३—३५)।

जुह्वादीनामप्रयुक्तत्वात्संदेहे यथाकामी प्रतीयेत
॥ ३३ ॥ अपि वाऽन्यानि पात्राणि साधारणा-
नि कुर्वीरन्विप्रतिषेधाच्छास्त्रकृतत्वात् ॥ ३४ ॥
प्रायश्चित्तमापादि स्यात् ॥ ३५ ॥

षष्ठाधिकरणमारचयति—

जुह्वादयो यस्य कस्य कार्याः साधारणा उत ।
अविरोधादग्रिमोऽन्त्यो मृतदाहे विरोधतः ॥ १० ॥

सत्रिणां मध्ये यस्य कस्यचित्संबन्धिभिर्जुह्वादिपात्रैः सत्रं प्रयोक्तव्यम् । कुतः। अविरोधात् । अन्यदीयेष्वग्निष्वात्मनेपदं यथा विरुध्यते, नैवमत्र विरोधः कश्चिदुपलभ्यते । इति प्राप्ते ।

ब्रूमः—' यस्य जुह्वादयः स चेत्सत्रमध्ये म्रियेत, तदा मृतेन सह जुह्वादयो

१ ग. ञ. °वृत्तैर° । २ क. ख. कर्मयोग्यताम् । ३ ग. च. ञ. कर्मयोग्यता । ४ ग. ञ. मन्त्रवि° ।

दह्यन्ते। आहिताग्निमग्निभिर्दहन्ति यज्ञपात्रैश्च दक्षिणहस्ते जुहूमासादयति' इत्यादिवचनैस्तदवगमात्। पात्रदाहे चावशिष्टः सत्रप्रयोगो विगुणः स्यात्। तस्मात्—साधारणा जुह्वादयः सर्वे संपादनीयाः ॥१०॥

( सप्तमे विकृतसप्तदशसामिधेनीषु वर्णत्रयाधिकाराधिकरणे सूत्राणि ३६–३९ )।

**पुरुषकल्पेन वा विकृतौ कर्तृनियमः स्याद्यज्ञस्य तद्गुणत्वादभावादितरान्प्रत्येकस्मिन्नाधिकारः स्यात् ॥ ३६ ॥ लिङ्गाच्चेज्याविशेषवत् ॥ ३७ ॥ न वा संयोगपृथक्त्वाद्गुणस्येज्याप्रधानत्वादसंयुक्ता हि चोदना ॥ ३८ ॥ इज्यायां तद्गुणत्वाद्विशेषेण नियम्येत ॥ ३९ ॥**

सप्तमाधिकरणमारचयति—

**सामिधेनीसाप्तदश्यं वैकृतं वैश्यगाम्युत।**
**वर्णत्रयस्य वाऽऽद्योऽस्तु वैश्यकर्तृविधानतः ॥ ११ ॥**
**प्रकृतौ पाञ्चदश्यस्य बाधकं वैश्य ईरितम्।**
**विकृतौ त्रयगं वाक्यं त्रयोऽतोऽत्राधिकारिणः ॥ १२ ॥**

अध्वरकल्पादिष्विष्टिविकृतिषु श्रूयते—'सप्तदश सामिधेनीरनुब्रूयात्' इति। तदेतत्सामिधेनीसाप्तदश्यं वैश्यस्य भवितुमर्हति। कुतः। प्रकृतौ 'सप्तदशानुब्रूयाद्वैश्यस्य' इति वाक्येन साप्तदश्याङ्गभूतकर्तृतया वैश्यस्य विहितत्वात्। तस्मात्—साप्तदश्यद्वारा वैश्य एवाध्वरकल्पादिष्वधिक्रियते। इति प्राप्ते—

ब्रूमः—प्रकृतौ 'पञ्चदश सामिधेनीरन्वाह' इति वर्णत्रयसाधारण्येन पाञ्चदश्यं विधाय वैश्यं निमित्तीकृत्य पाञ्चदश्यबाधकतया साप्तदश्यं विहितम्। ततः—साप्तदश्यवाक्यस्य प्रकृतावेवान्वयसंभवान्न विकृतिषूत्कर्षः। यत्तु—विकृतिगतं साप्तदश्यवाक्यं तद्वर्णत्रयसाधारणम्। तस्मात्—अध्वरकल्पादौ वर्णत्रयाधिकारः ॥ ११ ॥ १२ ॥

**इति श्रीमाधवीये जैमिनीयन्यायमालाविस्तरे षष्ठाध्यायस्य षष्ठः पादः ॥ ६ ॥**

| | अत्र पादे | आदितः। |
|---|---|---|
| अधिकरणानि | ७ | ४४९। |
| सूत्राणि | ३९ | १२१०। |

---

१ ग. ङ. 'कर्तुर्विधा°'। २ ख. ग. च. छ. 'त्रयस्याधि°'।

( अथ षष्ठाध्यायस्य सप्तमः पादः ) ।

( प्रथमे विश्वजिति पित्रादीनामदेयत्वाधिकरणे सूत्रे १—२ ) ।

**स्वदाने सर्वमविशेषात् ॥१॥ यस्य वा प्रभुः स्यादितरस्याशक्यत्वात् ॥ २ ॥**

सप्तमपादे प्रथमाधिकरणमारचयति—

**सर्वस्वदाने पित्रादावपि तद्धन एव वा ।**
**स्वत्वादाद्यः पितृत्वादावत्यागाद्धन एव तत् ॥ १ ॥**

इदमामनन्ति—'विश्वजिति सर्वस्वं ददाति' इति । तत्र—धन इव पित्रादावप्यात्मीयत्वस्य समानत्वादस्ति पित्रादीनामपि तद्दानम् । इति प्राप्ते—

ब्रूमः—आत्मसंबन्धत्यागपूर्वकं परकीयस्वत्वापादनम् 'दानम्' इत्युच्यते । न हि दीयमाने पितरि स्वकीयपितृत्वत्यागः परकीयपितृत्वापादनं वा संभवति । किंच स्वशब्दस्य—'आत्मा, ज्ञातिः, आत्मीयम्, धनं च' इति चत्वारोऽर्थाः । ते-ष्वेकस्मिन्प्रयोग एक एवार्थो वाच्यः । प्रकृतौ च गवादिधनस्य दक्षिणात्वादि-हापि धनवाचित्वं युक्तम् । तस्मात्—धनस्यैव दानम् ॥ १ ॥

( द्वितीये—विश्वजिति भूमेरदेयत्वाधिकरणे सूत्रम् ) ।

**न भूमिः स्यात्सर्वान्प्रत्यविशिष्टत्वात् ॥ ३ ॥**

द्वितीयाधिकरणमारचयति—

**देया न वा महाभूमिः स्वत्वाद्राजा ददातु ताम् ।**
**पालनस्यैव राज्यत्वान्न स्वं भूर्दीयते न सा ॥ २ ॥**

यदा सार्वभौमो राजा विश्वजिदादौ सर्वस्वं ददाति, तदा गोपथराजमार्गजलाशयाद्यन्विता महाभूमिस्तेन दातव्या । कुतः । भूमेस्तदीयधनत्वात् । 'राजा सर्वस्येष्टे ब्राह्मणवर्जम्' इति स्मृतेः । इति प्राप्ते—

ब्रूमः—दुष्टशिक्षाशिष्टपरिपालनाभ्यां राज्ञ ईशितृत्वं स्मृत्यभिमेतम्-इति न राज्ञो भूमिर्धनम् । किंतु तस्यां भूमौ स्वकर्मफलं भुञ्जानानां सर्वेषां प्राणिनां साधारणं धनम् । अतोऽसाधारणस्य भूखण्डस्य सत्यपि दाने महाभूमेर्दानं नास्ति ॥२॥

---

१ ग. च. छ. ज. °रसंबन्धापा° । २ क. तेष्वस्मि° । ३ ग. छ. ज. °तौ ग° । ४क. ख. राजत्वा° । ५ ज. °णवजम् । ६ ख. °जनम् । ७ क. °रण्यम् । ८ ख. °ण्डलस्य ।

( तृतीये—विश्वजित्यश्वादीनामदेयताधिकरणे—सूत्रम्— ) ।

**अकार्यत्वाच्च ततः पुनर्विशेषः स्यात् ॥ ४ ॥**

तृतीयाधिकरणमारचयति—

**ज्ञानं केसरिणां नो वा, विहितप्रतिषेधतः ।**
**विकल्पः पर्युदासोऽयं ये यजामहनीतितः ॥ ३ ॥**

'न केसरिणो ददाति' इति विश्वजिति श्रूयते । तत्र—सर्वस्वदानविधानात्, केसरिदाननिषेधाच्चाश्वदानं विकल्पितम् । इति प्राप्ते—

ब्रूमः—नायं प्रतिषेधः, किंतु पर्युदासः । तत्प्रकारश्च दशमस्याष्टमे पादे 'ये यजामहे'—' मन्त्रोदाहरणेन व्युत्पादयिष्यते । ततस्तेन न्यायेनाश्वपर्युदासे सति 'अश्वव्यतिरिक्तं सर्वस्वं देयम्' इति विधिनिषेधयोरेकवाक्यतालाभान्नास्त्यश्वस्य पाक्षिकमपि दानम् ॥ ३ ॥

( चतुर्थे—विश्वजित्यविद्यमानसर्वस्वदाननिराकरणाधिकरणे—सूत्रम्— ) ।

**नित्यत्वाच्चानित्यैर्नास्ति संबन्धः ॥ ५ ॥**

चतुर्थाधिकरणमारचयति—

**अर्जयित्वाऽपि किं सर्वं देयं यद्वा यदस्ति तत् ।**
**सर्वोद्देशविधेराद्यो न प्राप्ते सर्वताविधिः ॥ ४ ॥**

पूर्वोक्ते सर्वस्वदाने सर्वमुद्दिश्य दानं विधीयते—'पुरुषेण भोग्यं शय्यासनादि यत्सर्वं तद्दातव्यम्' इति । तस्मात्—अविद्यमानं सर्वमर्जयित्वाऽपि देयम् । इति चेत् ।

मैवम् । चोदकप्राप्तं दानमुद्दिश्य सर्वत्वविधानात् । सर्वशब्दश्च प्रसिद्धवाचित्वाद्विद्यमानविषयः । तस्मात्—यदस्ति तदेव देयम् ॥ ४ ॥

( पञ्चमे—विश्वजिति धर्मार्थसेवकशूद्रस्यादेयताधिकरणे सूत्रम्— ) ।

**शूद्रश्च धर्मशास्त्रत्वात् ॥ ६ ॥**

पञ्चमाधिकरणमारचयति—

**धर्मार्थसेवकः शूद्रो देयो नो वा, स दासवत् ।**
**देयोऽस्वत्वात्पराधीनत्वाभावाच्च न दीयते ।**

---

१ ग. छ. 'हे "—इति म° । २ क. सर्वं । ३ ग. च. छ. °न्नाश्व° । छ. °द्विकं य° । ५ घ. छ. °व्दस्य प्र° । ६ ख. ग. छ. ज° मार्थं से° ।

यस्तु शूद्रो विहितं स्वधर्ममेवानुगन्तुं सेवते, सोऽपि सर्वस्वमध्यपतितत्वाद्धर्मदास-वदेयः। इति चेत्।

मैवम्। जीविकाद्यदानेन तस्मिन्सेवके स्वत्वाभावात्, स्वेच्छाचारित्वेन पर-स्वत्वापादनासंभवाच्च न देयः ॥ ५ ॥

( षष्ठे विश्वजिति दक्षिणाकाले विद्यमानानामेव सर्वस्वानां देय-ताधिकरणे सूत्रम्– )।

**दक्षिणाकाले यत्स्वं तत्प्रतीयेत तद्दानसंयोगात् ॥ ७ ॥**

षष्ठाधिकरणमारचयति–

**भूतं भावि च देयं स्यात्कालेऽवस्थितमेव वा।**
**आद्यः सर्वश्रुतेरन्त्योऽसंभवादन्ययोस्तदा ॥ ६ ॥**

'विश्वजिन्मया कर्तव्यः' इत्यध्यवसायादूर्ध्वं दक्षिणाकालात्पूर्वं यत्स्वेन भोग्यं संचितं, तद्भूतम्। यच्च दक्षिणाकालादूर्ध्वं भविष्यत्येवेति निश्चितं, तद्भावि। तदुभ-यमपि सर्वशब्दार्थत्वाद्दातव्यम्। इति चेत्।

मैवम्। भूतस्य विनाशसंभवात्, भाविनस्तदानीमप्राप्तत्वात्, अविद्यमानस्य दानायोगाच्च दक्षिणाकालेऽवस्थितमेव सर्वं देयम् ॥६॥

( सप्तमे–विश्वजिति दक्षिणादानोत्तराङ्गाणामनुष्ठानाधिकरणे सूत्राणि ८–१३ )।

**अशेषत्वात्तदन्तः स्यात्कर्मणो द्रव्यसिद्धित्वात् ॥८॥ अपि वा शेषकर्म स्यात्क्रतोः प्रत्यक्ष-शिष्टत्वात् ॥ ९ ॥ तथा चान्यार्थदर्शनम् ॥ १० ॥ अशेषं तु समञ्जसादानेन शेषकर्म स्यात् ॥११॥ नादानस्य नित्यत्वात् ॥१२॥ दीक्षासु तु विनिर्देशादक्रत्वर्थेन संयोगस्त-स्मादविरोधः स्यात् ॥ १३ ॥**

सप्तमाधिकरणमारचयति–

**दक्षिणाक्रतुभुक्त्यर्थं त्रयं देयमुतेष्टये।**
**शिष्टाऽथवा दक्षिणार्थमेवाऽऽद्यः सर्वशब्दतः ॥ ७ ॥**

---

१ ख. ग. छ. ज. झ. ञ. °ध्यपातित्वा°। २ क. ख. ञ. °दनयो°। ३ ञ. तद्भूतम्। ४ ख. ग. छ. ज. झ. ञ. सर्वस्वं। ५ ग. छ. ज. °तु भक्तार्थं। ६ ग. ङ. °णार्थं तत्राऽऽद्यः।

क्रतुशेषस्तदा बाध्यः प्रधानत्वादबाधनात्।
मध्योऽन्त्यो दक्षिणार्थस्यानुवादात्सर्वताविधेः॥ ८॥

प्रकृतौ कर्मारम्भ एव यजमानेनाऽऽत्मीयं धनं वचनबलात्त्रिधा व्यवस्थापितम्—'इदं मे भुक्त्यर्थम्, इदं मे यज्ञार्थम्, इदं मे दक्षिणार्थम्' इति। तदेतत्सर्वमपि दक्षिणार्थत्वाद्दातव्यम्—इत्येकः पक्षः॥

दक्षिणा हि माध्यंदिनसवने दीयते। तत ऊर्ध्वं तृतीयसवनमारभ्योदवसानीयान्तः क्रतुभागोऽवशिष्टः। स च द्रव्याभावाद्बाध्येत। न च—अङ्गभूतया दक्षिणया प्रधानस्य क्रतोर्बाधो युक्तः। ततस्तदबाधाय क्रत्वर्थं भागमवस्थाप्यावशिष्टं सर्वं देयम्—इति द्वितीयः पक्षः।

'यद्दक्षिणात्वेन विधीयते, तत्सर्वम्' इत्यनूद्य विधानाद्दक्षिणार्थ एव भागो दातव्यः—इति राद्धान्तः॥ ७॥ ८॥

( अष्टमे—अहर्गणस्थेऽपि विश्वजिति सर्वस्वदानाधिकरणे सूत्राणि १४–१७ )।

अहर्गणे च तद्धर्मा स्यात्सर्वेषामविशेषात्॥१४॥
द्वादशशतं वा प्रकृतिवत्॥ १५॥ अतद्गुणत्वात्तु
नैवं स्यात्॥ १६॥ लिङ्गदर्शनाच्च॥ १७॥

अष्टमाधिकरणमारचयति—

विश्वजित्यष्टरात्रादौ किं शतं द्वादशाधिकम्।
सर्वं वाऽऽद्यश्चोदकोक्तेरन्त्यो नामातिदेशतः॥ ९॥
एतद्भाष्ये, वार्तिके तु सप्ताहानुजिघृक्षया।
आद्यः सिद्धान्तितः प्राप्तिमात्रत्वेनेदमीरितम्॥ १०॥

इदमाम्नायते—'अथैतस्याष्टरात्रस्य विश्वजिदभिजितावेकाहावभितः, उभयतो ज्योतिः, मध्ये षडहः पशुकामो ह्येतेन यजेत' इति। 'ज्योतिः, गौः, आयुः' इत्येतैस्त्रिभिर्नामभिरभिधेयानां त्रयाणां यागानामारोहावरोहाभ्यामुभयतो ज्योतिः षडहो भवति। सोऽयं मध्ये प्रयोक्तव्यः। आदौ विश्वजित्। अन्तेऽ-

१ ख. च. ञ. °विधिः॥ ८॥ प्र°। २ ग. छ. ज. भक्तार्थम्। ३ ञ. °पि भुक्त्यर्थं°। ४ क. ग. घ. छ. ज. झ. ञ. °बाधनाय°। ५ ञ. °शादिक°। ६ क. अनेन। ७ ग. झ. इति त्रिभि°।

भिजित्—इत्यर्थः । तत्र—अहर्गणस्य द्वादशाहविकृतित्वात्, द्वादशाहस्य च ज्योतिष्टोमविकृतित्वात्, चोदकपरम्परया द्वादशशतदक्षिणाऽष्टरात्रे प्राप्ता । ततः प्रथमस्याह्नो विश्वजितोऽपि सैव दक्षिणा—इति प्राप्ते,

ब्रूमः—स्वतन्त्र एकाहो विश्वजित् । तस्य नाम्ना तदीया धर्माः प्रथमेऽहनि विश्वजित्यतिदिश्यन्ते । तस्मात्—सर्वस्वं देयम् । तदेतद्भाष्यकारस्य मतम् ।

वार्तिककारस्तु—'द्वादशशतम्' इत्येवं सिद्धान्तितवान् । विश्वजिद्व्यतिरिक्तेषु सप्तस्वहःसु चोदकप्राप्तां द्वादशशतदक्षिणामबाधितुं विश्वजिति नामातिदेशप्राप्ता सर्वस्वदक्षिणा बाधनीया । युक्तो हि बहूनामनुग्रहः । न च—' विश्वजिति सर्वस्वम्, इतरत्र द्वादशशतम् ' इति वक्तुं शक्यम् । ' अहर्गणस्यैकैव दक्षिणा ' इति दशमे वक्ष्यमाणत्वात् ।

सूत्रकारस्तु—नामातिदेशस्य प्राबल्यप्राप्तिमात्रं व्युत्पादितवान् । इति द्रष्टव्यम् । ॥ ९ ॥ १० ॥

( नवमे—विश्वजिति द्वादशशतन्यूनधनस्यानधिकाराधिकरणे सूत्राणि १८—२० ) ।

**विकारः सन्नुभयतोऽविशेषात् ॥ १८ ॥ अधिकं वा प्रतिप्रसवात् ॥ १९ ॥ अनुग्रहाच्च पादवत् ॥ २० ॥**

नवमाधिकरणमारचयति—

**न्यूनेऽप्युक्तशतात्किं स्यात्सर्वताऽधिक एव वा ।**
**संभवादग्रिमोऽन्त्यः स्याद्दानस्यै सर्ववर्णनात् ॥ ११ ॥**

यदेतत्—द्वादशशतं प्रकृतितो विश्वजिति प्राप्तम्, तस्मान्न्यूनं कस्यचिद्धनम्, तस्मिन्नपि सर्वता संभवति । विद्यमानस्यानवशेषितत्वात् । तस्मात्—अल्पधनयुक्तस्यापि विश्वजित्यधिकारः । इति प्राप्ते—

ब्रूमः—ज्योतिष्टोमे हि द्वादशशतं विधाय पश्चादुक्तम्—' यद्येतावता नाऽऽनमेयुरपि सर्वस्वेन ' इति । तत्राधिकस्यैव सर्वत्वात्, इहापि तदेव युक्तम् । तत्तु चोदकप्राप्तमपि पाक्षिकत्वपरिहारायेह नियम्यते । तस्मात्—ऋत्विजां वशीकाराधिक एव सर्वता द्रष्टव्या ।

१ क. °स्य त° । २ क. °तिदेश्य° । ३ क. °रगतम° । ४ ख. च. ञ. °रत्रासर्वस्वम्, व° । ५ ग. ञ. °शशतत्व° । ६ ख. प्राप्ति° । च. प्राबल्यमात्रं । ७ क. °नप्रयुक्तोऽपि । ८ क. °ीकरणाया° ।

( दशमे—अपरिमितशब्दस्य संख्यान्तरत्वाधिकरणे सूत्रे २१-२२ ) ।

अपरिमिते शिष्टस्य संख्याप्रतिषेधस्तच्छ्रुतित्वात्

॥ २१ ॥ कल्पान्तरं वा तुल्यवत्प्रसंख्यानात् ॥ २२ ॥

दशमाधिकरणमारचयति—

देयैका षट्शतं वाऽपरिमितं त्विति वारयेत् ।

एकादिकां पूर्वसंख्यां यद्वा संख्यान्तरे विधिः ॥ १२ ॥

नञ्प्रयोगान्निषेधः स्याद्व्युत्पत्त्या मानशून्यता ।

रूढ्या बहुत्वं नैकादिनिषेधोऽन्यविधिस्ततः ॥ १३ ॥

आधाने श्रूयते—' एका देया षड्देयाः, द्वादश देयाः, चतुर्विंशतिर्देयाः, शतं देयम्, सहस्रं देयम्, अपरिमितं देयम् ' इति । तत्र—अपरिमितशब्दगतेन नञा परिमाणं निषिध्यते । तथा सत्यपरिमितशब्दव्युत्पत्त्या देयद्रव्यस्य परिमाणशून्यता प्रतीयते । इत्येकादिकों पूर्ववाक्योक्ता गवां संख्या निवार्यते । इति प्राप्ते—

ब्रूमः—अपरिमितशब्दस्य रूढ्या बहुत्वमर्थः । तथैव प्रयोगबाहुल्यात् । ततो नैकादिपक्षा निवार्यन्ते, किंतु—संख्यान्तरं विधीयते ॥१२॥१३॥

( एकादशे—अपरिमितशब्देन सहस्राधिकग्रहणाधिकरणे सूत्राणि २३-२५ ) ।

अनियमोऽविशेषात् ॥ २३ ॥ अधिकं वा

स्याद्बह्वर्थत्वादितरेषां संनिधानात् ॥ २४ ॥

अर्थवादश्च तद्वत् ॥ २५ ॥

एकादशाधिकरणमारचयति—

अर्वागपि बहुत्वं तत्सहस्रादूर्ध्वमेव वा ।

संभवादाग्रिमोऽन्त्यः स्यात्सहस्रानन्तरोक्तितः ॥ १४ ॥

अपरिमितशब्देन यद्बहुत्वं विधीयते, तत्सहस्रादर्वागपि भवति । कुतः । द्विशत—त्रिशतादौ बहुत्वसंभवात् । इति चेत् ।

मैवम् । एकादिपक्षेषूत्तरोत्तराभिवृद्धिदर्शनेनात्रापि सहस्रपक्षमुपन्यस्य पश्चादभिधीयमानं बहुत्वं सहस्रादूर्ध्वं पर्यवस्यति ॥ १४ ॥

---

१ ग. छ. ज. झ. °तं चाप । २ ञ. °तेनापदेन प° । ३ ख. ग. च. छ. ज. झ. न-ञ्पदेन । ४ ग. छ. ज. °दिकाः पू° । ५ ग. छ. निवार्यन्ते ।

( द्वादशे–इति ह स्मेत्यादिपरकृतिपुराकल्पानामर्थवादता-
धिकरणे सूत्राणि २६–३० ) ।

परकृतिपुराकल्पं च मनुष्यधर्मः स्यादर्थाय ह्यनु-
कीर्तनम् ॥ २६ ॥ तद्युक्ते च प्रतिषेधात् ॥ २७ ॥
निर्देशाद्वा तद्धर्मः स्यात्पञ्चावत्तवत् ॥२८॥ विधौ
तु वेदसंयोगादुपदेशः स्यात् ॥ २९ ॥ अर्थवादो
वा विधिशेषत्वात्तस्मान्नित्यानुवादः स्यात् ॥३०॥

द्वादशाधिकरणमारचयति–

माषान्मे पचतेत्येतद्वार्ष्णिष्वेवाखिलेषु वा ।
उक्तेर्विधेश्च तौ पक्षौ कृत्वाचिन्ताऽर्थवादतः ॥ १५ ॥

इदमाम्नायते–'इति ह स्माऽऽह–वर्कुर्वार्ष्णिः–माषानेव मह्यं पचत, न वा
एतेषां हविर्गृह्णाति' इति । तत्र–'वार्ष्णिः' इत्युक्तत्वाद्वृष्णिगोत्राणामेवायं माष-
पाकविधिः । इति चेत् ।

मैवम् । वृष्णिगोत्रोत्पन्नेन वर्कुनाम्ना माषपाकस्य संबन्धो नात्र विधीयते ।
किंतु माषपाकमात्रम् । वर्कुसंबन्धस्तु स्तावकत्वेनोपन्यस्यते । तस्मात्–सर्वेषां
माषपाकाधिकारः । तावेतौ पूर्वोत्तरपक्षौ कृत्वाचिन्तयोपन्यस्तौ । परमार्थतस्तु–
माषपाकवाक्यमर्थवादः, 'तस्मादारण्यमेवाश्नीयात्' इत्यनेन दर्शपूर्णमासयोरारण्या-
शनविधिना सह स्तावकत्वेनान्वयात् ॥ १५ ॥

( त्रयोदशे–सहस्रसंवत्सरशब्दस्य सहस्रादिनपरताधिकरणे
सूत्राणि ३१–४० ) ।

सहस्रसंवत्सरं तदायुषामसंभवान्मनुष्येषु ॥ ३१ ॥
अपि वा तदधिकारान्मनुष्यधर्मः स्यात्
॥ ३२ ॥ नासामर्थ्यात् ॥ ३३ ॥ संबन्धाद-
र्शनात् ॥ ३४ ॥ स कुलकल्पः स्यादिति

१ ग. छ. वकुर्वा° । ख. च. वट्रकुर्वा° । ज. वहुर्वा° । २ ब. °षान्मे प° । ३ ख. च. वट्रकुना° । ४ ख. च. वट्रकुसं° ।

काष्णाजिनिरेकस्मिन्नसंभवात् ॥ ३५॥ अपि वा कृत्स्नसंयोगादेकस्यैव प्रयोगः स्यात् ॥३६॥ विप्रतिषेधात्तु गुणयन्यतरः स्यादिति लावुकायनः ॥ ३७ ॥ संवत्सरो विचालित्वात् ॥ ३८ ॥ सा प्रकृतिः स्यादधिकारात् ॥ ३९ ॥ अहानि वाऽभिसंख्यत्वात् ॥ ४० ॥

त्रयोदशाधिकरणमारचयति—

सहस्रसवत्सरं सत्रं गन्धर्वादेर्नृणामुत ।
रसायनेन सिद्धानां कुलकल्पोऽथवोक्तितः ॥ १६ ॥
तदायुर्वाऽथ सार्धद्विशतानामुत मासगा ।
वत्सरोक्तिरुत द्वादशरात्रेषु दिनेषु वा ॥ १७ ॥
आद्यो दीर्घायुषः सत्त्वान्नृणामेवाग्निसंभवे ।
द्वितीयोऽस्तु रसस्याऽऽयुरहेतुत्वे तृतीयकः ॥ १८ ॥
कृत्स्नकर्तुः फलित्वेऽस्तु तुर्योऽर्थासंभवे सति ।
पञ्चमोऽस्तु चतुर्विंशत्युत्तमाः सत्रिणो यदि ॥ १९ ॥
षष्ठोऽस्तु यो मास एव संवत्सर इतीरणात् ।
सहस्रमासा नाऽऽधानादूर्ध्वं चेदस्तु सप्तमः ॥ २० ॥
वत्सरप्रतिमा द्वादश रात्रय इति श्रुतेः ।
न रात्रिष्वब्दशब्दोऽत्र प्रतिमाया विशेषणात् ॥ २१ ॥
स्वारस्यात्त्रिवृदाद्युक्तेरष्टमः पक्ष इष्यते ।
त्रिवृदादिपदैः स्तोमविशिष्टमहरुच्यते ॥ २२ ॥
नाहःसंघस्ततोऽहःसु गौणी संवत्सराभिधा ।
तस्माद्विश्वसृजां सत्रं सहस्रदिनमिष्यते ॥ २३ ॥

इदमाम्नायते—'पञ्चपञ्चाशतस्त्रिवृतः संवत्सराः पञ्चपञ्चाशतः पञ्चदशाः पञ्चपञ्चाशतः सप्तदशाः पञ्चपञ्चाशत एकविंशाः, विश्वसृजामयनं सहस्रसंवत्सरं

१ ज. झ. °सानयेन । २ क. °रोक्तेरु° । ३ क. °शमात्रे° । ४ ग. ङ. ज. °रात्रिषु° । ५ ज. एव । ६ ग. ङ. °हःसङ्घस्त° ।

इति तत्र—सहस्रसंवत्सरसत्रे गन्धर्वादीनामेवाधिकारः। तेषां दीर्घायुषां सद्भावात्। इत्याद्यः पक्षः।

'वसन्ते ब्राह्मणोऽग्नीनादधीत' इत्यादिविधानान्मनुष्याणामेवाऽऽहवनीयाद्यग्नयः संभवन्ति, नान्येषां गन्धर्वादीनाम्। इति चेत्। तर्हि 'रसायनेन सिद्धानां दीर्घायुषां मनुष्याणामधिकारः' इत्यस्तु द्वितीयः पक्षः।

रसस्याऽऽरोग्यपुष्ट्यादिजनकत्वमेव, न त्वायुर्हेतुत्वम्। इति चेत्। तर्हि 'एकस्मिन्कुले समुत्पन्नानां पितृपुत्रपौत्रादीनां बहूनां सहस्रायुः संभवात्कुलाधिकारः' इति तृतीयः पक्षोऽस्तु।

कृत्स्नकर्तुः फलं भवति। न च—पितृपुत्रादिष्वेकोऽपि कृत्स्नं करोति। तस्मान्नास्ति फलम्। इति चेत्। तर्हि 'सत्रविधायकवचनबलादेव सात्रिणां दीर्घायुर्भविष्यति' इति चतुर्थः पक्षोस्तु।

न ह्यस्य वचनस्य सोऽर्थः संभवति। तद्वाचकपदाभावात्। न च-कल्पयितुं शक्यते। संभावितायुष्काणामपि सत्रान्तरेषु प्रवृत्तानां दैवान्म्रियमाणानां तत्तत्सत्रविधिबलादायुर्वृद्ध्यदर्शनात्। इति चेत्। तर्हि 'पञ्चपञ्चाशतः' इत्यस्य शब्दस्य पुरुषत्वपरमङ्गीकृत्य सार्धद्विशतानां पुरुषाणामधिकारेऽभिहिते वत्सरचतुष्टयेन सत्रस्य सहस्रसंवत्सरत्वं संपद्यत इति' पञ्चमः पक्षोऽस्तु।

'चतुर्विंशतिपरमाः सत्रमासीरन्' इति वचनादभ्यधिकानां न तत्राधिकारः। इति चेत्। तर्हि 'यो मासः स संवत्सरः' इति वचनात्संवत्सरशब्दस्य मासपरत्वे सति 'सहस्रमासं सत्रम्' इत्येष षष्ठः पक्षोऽस्तु।

अष्टमे वत्सर उपनीतो द्वादश वर्षाणि वेदमधीत्य विंशतिवयस्को विवाहं कृत्वा जातपुत्रोऽग्निमादधीत। तस्मात्—आधानादूर्ध्वमवस्थितेऽऽयुषि न सन्ति सहस्रं मासाः। इति चेत्। तर्हि—'संवत्सरस्य प्रतिमा वै द्वादश रात्रयः' इति वचनात्संवत्सरशब्दो द्वादशरात्रपरः। तथा सति रात्रीणां द्वादश सहस्राणि संपद्यन्ते। तासु च रात्रिषु षष्ट्युत्तरशतत्रयदिवसरूपसंवत्सरत्वेन गण्यमानासु त्रयस्त्रिंशत्संवत्सरेभ्य ऊर्ध्वं मासचतुष्टयं भवति। तावत्परिमितं चाऽऽयुराधानादूर्ध्वमपि संभवति। इति सप्तमः पक्षोऽस्तु।

'संवत्सरस्य प्रतिमा वै द्वादश रात्रयः' इत्यस्मिन्वाक्ये संवत्सरशब्दो न रात्रिपरः।

---

१ ख. च. ञ. दीर्घायुषः। २ क. ख. च. झ. ञ. °णोऽग्निमाद°। ३ ञ. °यनासि°। ४ ग. ङ. °नां पु°। ५ ख. °तृपौ°। ६ च. ञ. °दीर्घमायु°। ७ ज. झ. °स्य सोऽ°। ८ क. °णानामुत्तरसत्र°। ९ ख. च. ज. झ. तत्स°। १० ग. छ. °त्। मैवम्। त°। ११ झ. न. सत्रा। १२ क. °र इति श°। १३ क. च. °स्याऽऽयुषि। १४ क. ज. झ. °रप्र°। १५ क. ख. ग. च. छ. ज. झ. ञ. °रात्रिप°। १६ क. ज. झ. °रप्र°।

किं तु तेन शब्देन प्रतिमा विशिष्यते। तस्मात्—न सप्तमः पक्षो युक्तः। इति चेत्। एवं तर्हि संवत्सरशब्दो दि*नपरः' इत्यष्टमः पक्षोऽस्तु। तथासति 'त्रिवृतः संवत्सराः' इत्यादिवाक्यानां स्वारस्यं भवति। त्रिवृत्, पञ्चदशः, सप्तदशः, एकविंशः, इत्येते शब्दाः स्तोमवाचकाः सन्तः स्तोमयुक्त एकैकस्मिन्नहनि यागरूपे लक्षणया वर्तन्ते। सत्रेषु तथाविधप्रयोगबाहुल्यात्। न तु—अहःसंघे क्वचिदपि त्रिवृदादिशब्दाः प्रयुक्ताः। तैश्च शब्दैः सामानाधिकरण्यात्संवत्सरशब्दः स्वावयवभूतेऽहनि लक्षणया वर्तते। 'त्रिवृतः संवत्सराः' इत्युक्ते त्रिवृत्स्तोमकयागयुक्तान्यहानि' इत्युक्तं भवति। तस्मात्—विश्वसृजामृषीणामिदं सत्रं सहस्रदिनम्—इति राद्धान्तः ॥१६॥१७॥१८॥१९॥२०॥२१॥ ॥२२॥२३॥

इति श्रीमाधवीये जैमिनीयन्यायमालाविस्तरे षष्ठाध्यायस्य सप्तमः पादः ॥ ७ ॥

| | अत्र पादे | आदितः |
|---|---|---|
| अधिकरणानि | १३ | ४६२ |
| सूत्राणि | ४० | १२५० |

( अथाष्टमः पादः )

(प्रथमे—चतुर्होतृहोमेऽनाहिताग्नेरेवाधिकाराधिकरणे सूत्राणि १—१०)

इष्टिपूर्वत्वादक्रतुशेषो होमः संस्कृतेष्वग्निषु स्यादपूर्वोऽप्याधानस्य सर्वशेषत्वात् ॥ १ ॥ इष्टित्वेन तु संस्तवश्चतुर्होतॄनसंस्कृतेषु दर्शयति ॥ २ ॥ उपदेशस्त्वपूर्वत्वात् ॥ ३ ॥ स सर्वेषामविशेषात् ॥ ४ ॥ अपि वा क्रत्वभावादनाहिताग्नेरशेषभूतनिर्देशः ॥५॥ जपो वाऽनग्निसंयोगात् ॥६॥ इष्टित्वेन तु संस्तुते

* अत एव—"आदित्यो वा सर्व ऋतवः—स यदोदेत्यथ वसन्तः, यदा संगवोऽथ ग्रीष्मः, यदा मध्यंदिनोऽथ वर्षाः, यदाऽपराह्णोऽथ शरद् यदाऽस्तमेत्यथ हेमन्तशिशिरौ" इति ब्राह्मणवाक्यमनुकूलं भवति ॥

१ क. पक्षोऽस्ति।

होमः स्यादनारभ्याग्निसंयोगादितरेषामवाच्यत्वात् ॥ ७ ॥ उभयोः पितृयज्ञवत् ॥ ८ ॥ निर्देशो वाऽनाहिताग्नेरनारभ्याग्निसंयोगात् ॥ ९ ॥ पितृयज्ञे संयुक्तस्य पुनर्वचनम् ॥ १० ॥

अष्टमपादे प्रथमाधिकरणमारचयति—

चतुर्होत्राख्यमन्त्रेण होमः साग्नेरुतोभयोः ।
अनाग्निके विधिर्वाऽऽद्यो होमत्वात्क्रतुहोमवत् ॥ १ ॥
उभयोः पुरुषार्थत्वात्तृतीयो वचनात्तु तत् ।
अनाहिताग्नेरेषा वा इत्यग्नौ लौकिके हुतिः ॥ २ ॥

इदमाम्नायते—'प्रजाकामं चतुर्होत्रा[1] याजयेत्' इति । 'पृथिवी होता, द्यौरध्वर्युः—' इत्यादिको मन्त्रश्चतुर्होता । तेन प्रजाकामं याजयेत् । सोऽयं होम आहिताग्निना कर्तव्यः, अग्निहोत्रादिक्रतुहोमेषु तथात्वदर्शनात् । इत्येकः पक्षः ॥

अनारभ्याधीतत्वेन क्रतुप्रवेशाभावात्पुरुषार्थतया विहितो होम आहिताग्नेरनाहिताग्नेश्च साधारणः । इति द्वितीयः पक्षः ॥

अनाहिताग्नेरयं होमविधिः—इति तृतीयः पक्षो युक्तः । कुतः ।—वचनबलात् । तत्तु वचनमेवमाम्नातम्—'एषा वा अनाहिताग्नेरिष्टिर्यच्चतुर्होतारः' इति । तस्य चाऽऽहवनीयाद्यभावाल्लौकिकेऽग्नौ तद्धोमः ॥ १ ॥ २ ॥

( द्वितीये—अनाहिताग्निषूपनयनहोमाधिकरणे सूत्राणि ११–१९ ) ।

उपनयन्नादधीत होमसंयोगात् ॥ ११ ॥ स्थपतीष्टिवल्लौकिके वा विद्याकर्मानुपूर्वत्वात् ॥ १२ ॥ आधानं च भार्यासंयुक्तम् ॥ १३ ॥ अकर्म चोर्ध्वमाधानात्तत्समवायो हि कर्मभिः ॥ १४ ॥ श्राद्धवदिति चेत् ॥ १५ ॥ न श्रुतिविप्रतिषेधात् ॥ १६ ॥ सर्वार्थत्वाच्च पुत्रार्थो न प्रयोजयेत् ॥ १७ ॥ सोमपानात्तु प्रापणं द्वितीयस्य तस्मा-

[1] ग. च, चातुर्होत्रा ।

तुपयच्छेत् ॥ १८ ॥ पितृयज्ञे तु दर्शनात्प्रागाधा-
नात्प्रतीयेत ॥ १९ ॥

द्वितीयाधिकरणमारचयति—

यस्तूपनयने होमो वैदिके वा स लौकिके ।
वह्नौ पूर्ववदुक्तेरभावाद्वैदिकेऽस्तु सः ॥ ३ ॥
आधानं विदुषो विद्याऽनुपनीतस्य नास्त्यतः ।
असंभवो वैदिकाग्नेर्होमोऽग्नौ लौकिके ततः ॥ ४ ॥

यथा पूर्वत्रानाहिताग्नेर्होमविधायकं वाक्यमस्ति, तथोपनयनहोमस्य लौकि-काग्निविधायकवचनाभावादाहवनीये स होमः । इति चेत् ।

मैवम् । विद्वानेव ह्याधानेऽधिकारी । न च—अनुपनीतस्य विद्याऽस्ति । अत आहवनीयासंभवाल्लौकिकेऽग्नावुपनयनहोमः कर्तव्यः ॥ ३ ॥ ४ ॥

( तृतीये—अनाहितेऽग्नौ स्थपतीष्ट्यधिकरणे सूत्रे २०—२१ ) ।

स्थपतीष्टिः प्रयाजवदन्त्याधेयं प्रयोजयेत्तादर्थ्याच्चा-
पवृज्येत ॥ २० ॥ अपि वा लौकिकेऽग्नौ स्यादाधा-
नस्यासर्वशेषत्वात् ॥ २१ ॥

तृतीयाधिकरणमारचयति—

स्थपतीष्टिर्वैदिकेऽग्नौ लौकिके वाऽऽद्य आक्षिपेत् ।
आधानमिष्टिरन्त्यः स्यादवैधेनाग्न्यसंस्कृतेः ॥ ५ ॥

'एतया निषादस्थपतिं याजयेत्' इति विहिताया इष्टेश्चोदकप्राप्तेष्वाहवनी-यादिषु कर्तव्यत्वादाधानमन्तरेणाऽऽहवनीयाभावादाधानमाक्षिप्याऽऽहिते तस्मिन्वै-दिकेऽग्नावियमिष्टिः । इति चेत् ।

मैवम् । अत्रैवर्णिकत्वादविहितेनाऽऽधानेनाग्निसंस्कारासिद्धेः । तस्माल्लौकि-केऽग्नौ सेष्टिः ॥ ५ ॥

( चतुर्थे—अनाहितेऽग्नाववकीर्णिपश्वनुष्ठानाधिकरणे सूत्रम्— ) ।

अवकीर्णिपशुश्च तद्वदाधानस्याप्राप्तकालत्वात् ॥ २२ ॥

चतुर्थाधिकरणमारचयति—

१ ग. ङ. सल्लौकि॰ । २ ज. झ. ॰तेः ॥ ५ ॥ " य ए॰ । ३ ग. ङ. ॰स्कारसि॰ ।

अवकीर्णिपशुः कुत्र विप्राद्याधानसंभवात् ।
वैदिके लौकिके ब्रह्मचारिण्याधानवर्जनात् ॥ ६ ॥

इदमाम्नायते—'यो ब्रह्मचार्यवकिरेत्, स गर्दभं पशुमालभेत' इति । तत्र—अवकीर्णिनो विप्रादेस्त्रैवर्णिकस्याऽऽधानसंभवाद्वैदिकेऽग्नावयं पशुः । इति चेत् ।

मैवम् । 'जायापती अग्नीनादधीयाताम्' इत्युक्त्या ब्रह्मचारिण आधानाभावात् । तस्मात्—लौकिकेऽग्नौ पशुः कार्यः ॥ ६ ॥

( पञ्चमे—दैवकर्मणामुदगयनादिकालताधिकरणे सूत्रे २३–२४ ) ।

उदगयनपूर्वपक्षाहःपुण्याहेषु दैवानि स्मृतिरूपान्यार्थदर्शनात् ॥ २३ ॥ अहनि च कर्मसाकल्यम् ॥ २४ ॥

पञ्चमाधिकरणमारचयति—

चौलादि सर्वदा पुण्याहादौ वाऽत्राविशेषतः ।
आद्योऽन्त्यः पूर्वपक्षादौ दैवानां स्मृतितो विधेः ॥ ७ ॥

चौलोपनयनादीनां दैविकानां च कर्मणां तिथ्यादिविशेषस्याश्रवणात्सर्वदा तदनुष्ठानं युक्तम् । इति चेत् ।

मैवम् । शुक्लपक्षोत्तरायणपुण्यदिनादीनां स्मृतिषु विहितत्वात्* ॥ ७ ॥

( षष्ठे—ज्योतिष्टोमाङ्गयाच्ञाक्रययोर्नित्यताधिकरणे सूत्रे २६–२७ ) ।

याच्ञाक्रयणमविद्यमाने लोकवत् ॥ २६ ॥ नियतं वाऽर्थवत्त्वात्स्यात् ॥ २७ ॥

षष्ठाधिकरणमारचयति—

याच्ञाक्रयावभावे स्तो विद्यमानेऽपि वाऽग्रिमः ।
द्रव्यार्थत्वादपूर्वार्थं कुर्यात्तौ द्रव्यवानपि ॥ ८ ॥

ज्योतिष्टोमे धनभिक्षा समाम्नाता—'द्वादश रात्रीर्दीक्षितो भृतिं वन्वीत' इति ।

---

* भाष्यवार्तिकयोरुपलभ्यमानमपि "इतरेषु तु पित्र्याणि" ॥ २५ ॥ इत्यधिकरणं सर्वस्मृतिषु पित्र्यकर्मणो दैवविरुद्धत्वोक्त्यैव संशयस्यादृढत्वेन न्यायमालाकृता नोपन्यस्तम् ।

---

१ ज. झ. कीर्णिः प° । २ क. ख. च. झ. अग्निमाद° । ग. छ. अग्नी आद° । ३ ज. झ. विधिः । ४ ख. ग. च. छ. झ. ञ. वैदिकानां ।

सोमक्रयश्चाऽऽम्नातः—'अरुणया पिङ्गाक्ष्या सोमं क्रीणाति' इति । तदुभया-म्नानं च धनसोमयोर्द्रव्ययोर्लाभार्थमिति द्रव्याभावे तदनुष्ठेयम् । इति चेत् ।

मैवम् । इतराङ्गवदेतदुभयं क्रत्वङ्गतया नित्यवदाम्नातम् । तथा सति यदि द्रव्याभावे 'वन्वीत, क्रीणाति च' इति पाक्षिकत्वं कल्प्यते, तदा नित्यवच्छ्र-वणमुपरुध्येत । तस्मात्—सत्यपि द्रव्ये तदुभयमदृष्टार्थं कर्तव्यम् ॥ ८ ॥

( सप्तमे—ज्योतिष्टोमादिषु पयोव्रतादीनामपि नित्यताधिकरणे सूत्रम्— )।

तथा भक्षप्रैषाच्छादनसंज्ञप्तहोमद्वेषम् ॥ २८ ॥

सप्तमाधिकरणमारचयति—

अन्याभावेऽथ भावेऽपि पयोभक्षादयोऽग्रिमः ।
निमित्ते सत्यनुष्ठानान्नियमादृष्टतोऽन्तिमः ॥ ९ ॥

ज्योतिष्टोमे श्रूयते—'पयो ब्राह्मणस्य व्रतम्' इति । तदेतदसत्यन्यस्मिन्भक्ष्ये कर्तव्यम् । कुतः । अन्याभावस्य निमित्तत्वात् । निमित्ते सति नैमित्तिकस्यानु-ष्ठेयत्वात् । इति चेत् ।

मैवम् । नह्यत्रान्याभावो निमित्तत्वेन श्रुतः । तस्मात्—सत्यप्यन्यस्मिन्भक्ष्ये नि-यमादृष्टाय पय एव व्रतयेत् ।

एवमन्यत्रापि द्रष्टव्यम् । 'अग्नीदग्नीन्विहर' इति प्रैषार्थे पूर्वमेवाऽऽग्नीध्रेण बुद्धेऽपि दर्शपूर्णमासयोः स प्रैषः कर्तव्यः । वाजपेये सत्यपि वस्त्रान्तरे 'दर्भ-मयं परिदधाति' इति विहितमनुष्ठेयम् । पशौ 'यत्पशुर्मायुमकृत' इति मन्त्रेण संज्ञप्तहोमो विहितः, स च मारणवेलायामकृतेऽपि पशुना शब्दे कर्तव्यः॥९॥

( अष्टमे—अपररात्रे व्रतस्यानित्यताधिकरणे—सूत्रम्— )।

अनर्थकं त्वनित्यं स्यात् ॥ २९ ॥

अष्टमाधिकरणमारचयति—

अजीर्णसंभवे कार्यं व्रतं नो वाऽग्रिमो विधेः ।
रोगोत्पत्त्या प्रधानस्य विरोधान्न पयोव्रतम् ॥ १० ॥

ज्योतिष्टोमे श्रूयते—'मध्यंदिनेऽपररात्रे व्रतं व्रतयति' इति । तत्र—यस्या-जीर्णिः संभाविता, तेनापि विहितत्वात्पयो व्रतयितव्यमेव । इति चेत् ।

---

१ च. कल्प्येत । २ क. रुध्यते । त° । ३ ज. °वेऽन्यभा° । ४ ग. च. °क.° । ५ ग. छ. ज. °जीर्णिसं ।

मैवम् । रोगोत्पत्त्या प्रधानानुष्ठाने विघ्नप्रसङ्गात् । तस्मात्—यथाविधवेत्रार्या वयो वर्जयेत् ॥ १० ॥

( नवमे—छागस्यैवाग्नीषोमीयपशुताधिकरणे सूत्राणि ३०—४२ ) ।

पशुचोदनायामनियमोऽविशेषात् ॥ ३० ॥ छागो वा मन्त्रवर्णात् ॥ ३१ ॥ न चोदनाविरोधात् ॥ ३२ ॥ आर्षेयवदिति चेत् ॥ ३३ ॥ न तत्र ह्यचोदितत्वात् ॥ ३४ ॥ नियमो वैकार्थ्यं ह्यर्थभेदाद्भेदः पृथक्त्वेनाभिधानात् ॥ ३५ ॥ अनियमो वाऽर्थान्तरत्वादन्यत्वं व्यतिरेकशब्दभेदाभ्याम् ॥ ३६ ॥ रूपाल्लिङ्गाच्च ॥ ३७ ॥ छागे न कर्माख्या रूपलिङ्गाभ्याम् ॥ ३८ ॥ रूपान्यत्वान्न जातिशब्दः स्यात् ॥ ३९ ॥ विकारो नौत्पत्तिकत्वात् ॥ ४० ॥ स नैमित्तिकः पशोर्गुणस्याचोदितत्वात् ॥ ४१ ॥ ज्ञातेर्वा तत्प्रायवचनार्थवत्त्वाभ्याम् ॥ ४२ ॥

नवमाधिकरणमारचयति—

अग्नीषोमीयकः कोऽपि च्छाग एवोत चोदिते ।
अविशेषेण कोऽपि स्याच्छागो मन्त्रे विशेषणात् ॥११॥

ज्योतिष्टोमे श्रूयते—'अग्नीषोमीयं पशुमालभेत' इति । तत्र—विहिते पशौ विशेषाश्रवणाद्यः कोऽपि पशुरालब्धव्यः । इति चेत् ।

मैवम् । छागस्य वपाया मेदसोऽनुब्रूहि' इति मन्त्रे विशेषितत्वात् । तस्मात्—

१ क. ज. ञ. °म् । प्रधा° ।

छाग एवाऽऽलब्धव्यः । शाखान्तरे विधावेव 'अजोऽग्नीषोमीयः' इत्येवं विशेषः श्रूयते । इति चेत् । तर्हि क्त्वाचिन्ताऽस्तु ॥ ११ ॥

इति श्रीमाधवीये जैमिनीयन्यायमालाविस्तरे षष्ठाध्यायस्याष्टमः पादः ॥ ८ ॥

षष्ठोऽध्यायश्च समाप्तः ॥ ६ ॥

| | अत्र पादे | आदितः । |
|---|---|---|
| अधिकरणानि | ९ | ४७१ । |
| सूत्राणि | ४२ | १२९२ । |

---

१ ग. छ. ज. झ. °मीयश्छागः ' इ° ।

( अथ सप्तमोऽध्यायः ) ।

प्रमाणाद्यधिकारान्तैः षड्भिर्विचारैर्निरूपिते ।
उपदेशेऽतिदेशोऽथ तत्सापेक्षो निरूप्यते ॥ १ ॥

अनेन षष्ठसप्तमयोरध्याययोः पूर्वोत्तरभाव उपपादितः । तथा हि—यन्नापेक्षितस्यार्थजातस्य प्रतिपादको ग्रन्थसंदर्भः पठ्यते, स उपदेशः । अतिदेशस्तु—पूर्वाचार्यैर्दर्शितः—

'अन्यत्रैव प्रणीतायाः कृत्स्नाया धर्मसंततेः ।
अन्यत्र कार्यतः प्राप्तिरतिदेशोऽभिधीयते' ॥ इति ।
'प्राकृतात्कर्मणो यस्मात्तत्समानेषु कर्मसु ।
धर्मोपदेशो येन स्यात्सोऽतिदेश इति स्मृतः' ॥ इति च ।

तत्र—उपदेशः षड्भिरध्यायैर्विचारितः । ततः षष्ठाध्यायस्योपदेशविचारितत्वात्पूर्वभावित्वम् । सप्तमाध्यायस्यातिदेशविचारत्वादुत्तरभावित्वम् ॥१॥

( प्रथमे—प्रयाजादिधर्माणामपूर्वप्रयुक्तताधिकरणे सूत्राणि १–१२ ) ।

श्रुतिप्रमाणत्वाच्छेषाणां मुख्यभेदे यथाधिकारं भावः स्यात् ॥ १ ॥ उत्पत्त्यर्थाविभागाद्वा सत्त्ववदैकधर्म्यं स्यात् ॥ २ ॥ चोदनाशेषभावाद्वा तद्भेदाद्व्यवतिष्ठेरन् उत्पत्तेर्गुणभूतत्वात् ॥ ३ ॥ सत्त्वे लक्षणसंयोगात्सार्वत्रिकं प्रतीयेत ॥ ४ ॥ अविभागात्तु नैवं स्यात् ॥ ५ ॥ द्व्यर्थत्वं च विप्रतिषिद्धम् ॥६॥ उत्पत्तौ विध्यभावाद्वा चोदनायां प्रवृत्तिः स्यात्ततश्च कर्मभेदः स्यात् ॥ ७ ॥ यदि वाऽप्यभिधानवत्सामान्यात्सर्वधर्मः स्यात् ॥ ८ ॥ अर्थस्य त्ववि-

---

१ ञ. °णाद्यधि° । २ ञ. षड्भिर्वेदैर्नि° । ३ ख. ज. झ. ञ. प्रतीता° । ४ क. ख. घ. °चारत्वा° । झ. °चारितत्वा° ।

भक्तत्वात्तथा स्यादभिधानेषु पूर्ववत्त्वात्प्रयोगस्य, कर्मणः शब्दभाव्यत्वाद्विभागाच्छेषाणामप्रवृत्तिः स्यात् ॥ ९ ॥ स्मृतिरिति चेत् ॥१०॥ न पूर्ववत्त्वात् ॥११ ॥अर्थस्य शब्दभाव्यत्वात्प्रकरणनिबन्धनाच्छब्दादेवान्यत्र भावः स्यात् ॥१२॥

सप्तमाध्यायस्य प्रथमे पादे प्रथमाधिकरणमारचयति—

सर्वार्थं प्रकृतार्थं वा प्रयाजाद्युपदेशनम् ।
यज्यन्वयेन सार्वार्थ्यान्नातिदेशो विचार्यताम् ॥ २ ॥
अङ्गप्रधानयोर्मुख्यापूर्वभेदसमन्वयात् ।
प्रकृतार्थं ततः कार्यमतिदेशविचारणम् ॥ ३ ॥

दर्शपूर्णमासप्रकरणे प्रयाजादय उपदिष्टाः। ज्योतिष्टोमप्रकरणे दीक्षणीयादयः। तत्र—एते सर्वे धर्माः सर्वयागार्थत्वेनोपदिश्यन्ते। कुतः। यज्यन्वयात्। यागः करणम्, प्रयाजादय इतिकर्तव्यता, इत्येतावत्तावदविवादम्। तत्र यदि प्रयाजादयो यागवदानुपूर्व्येणान्विताः स्युस्तदानीम्, अपूर्वनिष्पादकत्वमुभयत्र समानम्—इति कृत्वा करणोपकरणत्वलक्षणं सर्वसंमतमवान्तरवैषम्यं बाध्येत। किंच—अवघातपेषणादीनां यागनिष्पादकत्वेन यज्यन्वयो दृष्टः। तद्वदङ्गत्वसामान्यात्प्रयाजादीनामपि यज्यन्वयो युक्तः। यजिधातुश्च दर्शपूर्णमासज्योतिष्टोमसौर्यश्येनादिषु सर्वेषु विशेषेष्वनुगतं यागमात्रं ब्रूते।। तथा सति सौर्यश्येनादिष्वप्युपदेशेनैव कृत्स्नधर्मप्राप्तेरतिदेशविचारो न कर्तव्यः। इति प्राप्ते—

ब्रूमः—अपूर्वं हि मुख्यं फलित्वात्। यजिर्न मुख्यः। फलरहितत्वात्। फलवति मुख्ये प्रयाजविधानं युक्तम्। अतः करणेतिकर्तव्यतयोरुभयोरपूर्वेण प्रथममन्वयः। पश्चात्तु परस्परं गुणप्रधानभावेनान्वयः। तथा सत्यपूर्वभेदस्य द्वितीयाध्याये निरूपितत्वादपूर्वविशेषेण तत्करणभूतयजिविशेषेण वाऽन्विताः प्रयाजादिधर्मा ये यस्मिन्प्रकरण आम्नाताः, ते तत्रैव व्यवतिष्ठन्ते। सत्येवं प्रकरणमर्थवद्भवति। सर्वेषां धर्माणां सर्वत्र प्राप्तौ प्रकरणमनर्थकं स्यात्। तस्मात्—सौर्यश्येनादिप्रकरणे धर्मोपदेशाभावाद्धर्माकाङ्क्षां पूरयितुमतिदेशविचारः कर्तव्यः ॥ २ ॥ ३ ॥

---

१ ज. °चारिता°। २ ञ. °मुख्यपू°। ३ क. °त्र—स°। ४ ख. च. ञ. °त्येतत्ता°। ५ ख. च. झ. ञ. फलवत्त्वात्।

( द्वितीये—इषौ श्येनीयविशेषधर्मातिदेशाधिकरणे सूत्राणि १३—१६ )।

समाने पूर्ववत्त्वादुत्पन्नाधिकारः स्यात् ॥ १३ ॥

श्येनस्येति चेत् ॥ १४ ॥ नासंनिधानात् ॥१५॥

अपि वा यद्यपूर्वत्वादितरदधिकार्थे ज्यौतिष्टोमिकाद्विधेस्तद्वाचकं समानं स्यात् ॥ १६ ॥

द्वितीयाधिकरणमारचयति—

इषौ समानमितरच्छ्येनेनेत्यनुवादकम् ।
श्येनवैशेषिकाणां वाऽतिदेशोऽत्रानुवादकः ॥ ४ ॥
ज्योतिष्टोमविकारत्वात्तद्धर्माश्चोदकात्समाः ।
श्येनेष्वोरितरत्वोक्तिरिषुवैशेषिकं प्रति ॥ ५ ॥
इषुवैशेषिकादुक्तादितरच्छेनगं स्फुरेत् ।
वैशेषिकं लोहितोष्णीषादि तेनातिदिश्यते ॥ ६ ॥

इषुनामकः श्येननामकश्च द्वावेकाहौ ज्योतिष्टोमविकारौ । तयोरुभयोर्ज्योतिष्टोमधर्माश्चोदकेन प्राप्ताः । ते चोभयत्र समानाः । तच्च समानत्वमिषुप्रकरणेऽनेन वाक्येनानूद्यते—'समानमितरच्छ्येनेन' इति । ननु—अत्रेतरशब्दोक्तिरनुपपन्ना। तत्प्रतियोगिनः कस्यचिदप्यनिर्दिष्टत्वात्—इति चेत् । न । पूर्ववाक्यविहितस्य विशेषधर्मस्य प्रतियोगित्वात् । 'इषौ यो वैशेषिको धर्मो विहितः, तं परित्यज्य, इतरच्चोदकप्राप्तं सर्वं श्येनेन समानम्' इत्यर्थः । तस्मात्—'अनुवादकमिदं वाक्यम्' इति प्राप्ते,—

ब्रूमः—इतरशब्दः प्रतियोगिसजातीयं ब्रूते । तद्यथा—'देवदत्त एवाधीते, नेतरः कश्चित्' इत्युक्ते—अध्ययनप्रसक्तिमान्यज्ञदत्तादिर्माणवकः प्रतीयते, न तु गवाश्वघटपटादिः । एवमत्रापि—इषुवैशेषिकस्य पूर्ववाक्योक्तस्य प्रतियोगित्वात्तत्सजातीयं श्येनगतं लोहितोष्णीषादिरूपं वैशेषिकं धर्मजातमितरशब्देन प्रतिभाति । तच्च प्रकृतावभावान्न चोदकेन प्राप्तम् । तस्मात्—इषावनुष्ठेयत्वेनातिदिश्यते ॥ ४ ॥ ५ ॥ ६ ॥

(तृतीये—पञ्चहविःषु सार्थवादविध्यतिदेशाधिकरणे सूत्राणि १७—२१)।

पञ्चसंचरेष्वर्थवादातिदेशः संनिधानात् ॥ १७ ॥

सर्वस्य वैकशब्द्यात् ॥ १८ ॥

---

१ ज. झ. °दकम् ॥ ४ ॥ ज्यो° । २ क. °तवि° । ३ क. °तरः' इ° ।

लिङ्गदर्शनाच्च ॥ १९ ॥ विहिताम्नानान्नेति चेत् ॥ २० ॥ नेतरार्थत्वात् ॥ २१ ॥

तृतीयाधिकरणमारचयति—

वैश्वदेवब्राह्मणस्यातिदेशो वादमात्रगः ।
स वादाङ्गविधिस्थो वा हविर्विध्यन्वयाद्भवेत् ॥ ७ ॥
अर्थवादैकनिष्ठोऽसौ नैवमङ्गविधेरपि ।
समानः सोऽन्वयोऽङ्गानां विधिरप्यतिदिश्यताम् ॥ ८ ॥

चातुर्मास्येषु वैश्वदेव—वरुणप्रघास—साकमेध—शुनासीरीय—नामकानि चत्वारि पर्वाणि । तत्र—वैश्वदेवेष्टौ हवींषि विहितानि—'आग्नेयमष्टाकपालं निर्वपति' 'सौम्यं चरुम्' 'सावित्रं द्वादशकपालम्' 'सारस्वतं चरुम्' 'पौष्णं चरुम्' 'मारुतं सप्तकपालम्' 'वैश्वदेवीमामिक्षाम्' 'द्यावापृथिव्यमेककपालम्' इति । तेषां हविषां ब्राह्मणेऽर्थवादः समाम्नातः—'वार्त्रघ्नानि वा एतानि हवींषि' इति । अङ्गविधयोऽपि तत्राऽऽम्नाताः—'त्रेधा संनद्धं बर्हिर्भवति' 'त्रेधा संनद्ध इध्मः' 'नव प्रयाजा इज्यन्ते' 'नवानुयाजाः' इति । एवं स्थिते वरुणप्रघासेषु पूर्वोक्तान्याग्नेयादीनि पञ्च हवींषि विधाय तदीयं पूर्वोदाहृतं ब्राह्मणमेतेषु पञ्चस्वतिदिशति—'एतद्ब्राह्मणान्येव पञ्च हवींषि, यद्ब्राह्मणानीतराणि' इति । तत्र—अर्थवादमात्रस्यातिदेशो न्याय्यः । तस्य हविर्विधिभिः सह स्तुत्यस्तावकरूपेणान्वयसंभवात् । अङ्गविधीनां तदसंभवात् । इति चेत् ।

नैवम् । उपकार्योपकारकभावेन हविषामङ्गानां चान्वयात् । तस्मात्—अर्थवादसहितानामङ्गविधीनामतिदेशः ॥ ७ ॥ ८ ॥

( चतुर्थे—एककपालैन्द्राग्नयोः सार्थवादविध्यतिदेशाधिकरणे सूत्रम्—)।

एककपालैन्द्राग्नौ च तद्वत् ॥ २२ ॥

चतुर्थाधिकरणमारचयति—

श्रुतमेककपालस्य ब्राह्मणस्यातिदेशनम् ।
तत्पूर्ववत्तथैन्द्राग्न एतद्ब्राह्मण इत्यपि ॥ ९ ॥

एककपालब्राह्मणं वैश्वदेवे वरुणप्रघासेषु च पठितम् । ऐन्द्राग्नब्राह्मणं वरुणप्रघासेष्वेवाऽऽम्नातम् । एवं स्थिते साकमेधेषु विहितयोरेककपालैन्द्राग्नयोर्ब्राह्मणा

१ च. झ. । भवेदङ्ग° । २ क. अनुवा° । ३ च. ज. झ. °ध—शुना° । ४ ख. ज. झ. ञ. °वाद आम्ना° । ५ ज. °लस्थना° । ६ क. °वास एवाऽऽ° ।

तिदेश आम्नायते—' एतद्ब्राह्मण ऐन्द्राग्नः, एतद्ब्राह्मण एककपालो यद्ब्राह्मण इतरश्चेतरश्च ' इति । तत्रोभयत्र पूर्वन्यायेनार्थवादसहिताङ्गविधिकाण्डस्य सर्वस्यातिदेशः । पूर्वन्यायस्य विषयव्याप्तये वक्ष्यमाणोदाहरणस्मारणाय बीजकथनम् ॥ ९ ॥

(पञ्चमे—साकमेधे वारुणप्रघासिकैककपालातिदेशाधिकरणे सूत्रम्—) ।

एककपालानां वैश्वदेविकः प्रकृतिराग्रयणे सर्वहोमापरिवृत्तिदर्शनादवभृथे च सकृद्व्यवदानस्य वचनात् ॥ २३ ॥

पञ्चमाधिकरणमारचयति—

किं वैश्वदेविकादेककपालादतिदेशनम् ।
साकमेधेषु वरुणप्रघासस्थादुताग्रिमः ॥ १० ॥
प्रकृतावर्थबाहुल्यादन्तिमः संनिधानतः ।
ऐन्द्राग्नसाहचर्याच्च सार्थत्वमधिकत्वतः ॥ ११ ॥

वैश्वदेवे द्यावापृथिव्य एककपालः, वरुणप्रघासेषु काय एककपालः । तयोः पृथग्ब्राह्मणं समाम्नातम् । साकमेधेषु वैश्वकर्मण एककपालः । तस्मिन्वैश्वदेविकैककपालब्राह्मणमतिदेष्टव्यम् । कुतः । प्रकृतित्वेन तस्मिन्नुपदिश्यमानधर्मबाहुल्यात् । वारुणप्रघासिकस्य तद्विकृतित्वादल्पा एव धर्मविशेषा उपदिष्टाः—'शमीमय्यो हिरण्मय्यो वा स्रुचो भवन्ति' इत्यादयः तत्र बह्वनुग्रहो न्याय्यः । इति प्राप्ते—

ब्रूमः—वारुणप्रघासिकब्राह्मणस्य प्रत्यासन्नत्वात्तस्यैवातिदेशो युक्तः । ऐन्द्राग्नब्राह्मणं तत्रत्यमेवातिदिश्यते । वैश्वदेवे तदभावात् । तत्साहचर्यादिदमपि तत्रत्यमेव । ननु—प्रकृतिभूताद्वैश्वदेविकैककपालादेव वारुणप्रघासिक इव साकमेधीयेऽपि चोदकेन धर्मातिदेशसिद्धौ ब्राह्मणातिदेशवाक्यमिदं व्यर्थम्—इति चेत् । न । हिरण्मयत्वाद्यधिकधर्मातिदेशायापेक्षितत्वात् । तस्मात्—वारुणप्रघासिकैककपालस्यैवात्रातिदेशः ॥ १० ॥ ११ ॥

इति श्रीमाधवीये जैमिनीयन्यायमालाविस्तरे सप्तमाध्यायस्य प्रथमः पादः ॥ १ ॥

| | अत्र पादे | आदितः । |
|---|---|---|
| अधिकरणानि | ५ | ४७६ । |
| सूत्राणि | २३ | १३१५ । |

१ झ. °स्य पूर्व° । २ ख. घ. ज. झ. ञ. °ह्मणमा° । ३ ख. झ. ञ. °श्वदेवक° । ४ क. °नकर्म° । ५ ञ. °त् । वरु° । ६ ख. च. ञ. बह्वनामनु° । ७ ज. झ. °णं च त° ।

( अथ सप्तमाध्यायस्य द्वितीयः पादः ) ।

(प्रथमे रथंतरादिशब्दानां गानविशेषार्थताधिकरणे सूत्राणि १-२१)।

साम्नोऽभिधानशब्देन प्रवृत्तिः स्याद्यथाशिष्टम् ॥१॥ शब्दैस्त्वर्थविधित्वादर्थान्तरेऽप्रवृत्तिः स्यात्पृथग्भावात्क्रियाया ह्यभिसंबन्धः ॥ २ ॥ स्वार्थे वा स्यात्प्रयोजनं क्रियायास्तदङ्गभावेनोपदिश्येरन् ॥ ३ ॥ शब्दमात्रमिति चेत् ॥४॥ नौत्पत्तिकत्वात् ॥ ५ ॥ शास्त्रं चैवमनर्थकं स्यात्॥६॥स्वरस्येति चेत् ॥७॥ नार्थाभावाच्छ्रुतेरसंबन्धः ॥ ८ ॥ स्वरस्तूत्पत्तिषु स्यान्मात्रावर्णाविभक्तत्वात् ॥ ९ ॥ लिङ्गदर्शनाच्च ॥ १० ॥ अश्रुतेस्तु विकारस्योत्तरासु यथाश्रुति ॥ ११ ॥ शब्दानां चासामञ्जस्यम् ॥ १२ । अपि तु कर्मशब्दः स्याद्भावोऽर्थः प्रसिद्धग्रहणत्वाद्विकारो ह्यविशिष्टोऽन्यैः ॥ १३ ॥ अद्रव्यं चापि दृश्यते ॥१४॥ तस्य च क्रिया ग्रहणार्था नानार्थेषु विरूपित्वादर्थो ह्यासामलौकिको विधानात् ॥ १५ ॥ तस्मिन्संज्ञाविशेषाः स्युर्विकारपृथक्त्वात् ॥ १६ ॥ योनिशस्याश्च तुल्यवदितराभिर्विधीयन्ते ॥ १७ ॥ अयोनौ चापि दृश्यतेऽतथायोनि ॥ १८॥ ऐकार्थ्ये नास्ति वैरूप्यमिति चेत् ॥ १९ ॥ स्यादर्थान्तरेष्वनिष्पत्तेर्यथा लोके ॥ २० ॥ शब्दानां च सामञ्जस्यम् ॥ २१ ॥

द्वितीयपादे प्रथमाधिकरणमारचयति—

अतिदेश्यं विनिश्चेतुं कवतीषु रथंतरम् ।
गायतीत्यृग्गानयुक्ता शब्दार्थो गानमेव वा ॥ १ ॥
इति चिन्ता गानयुक्ता त्वभि त्वेत्यृक्प्रसिद्धितः ।
लाघवादतिदेशस्य योग्यत्वाच्चान्तिमो भवेत् ॥ २ ॥

इदमाम्नायते—'कवतीषु रथंतरं गायति' इति । 'कया नश्चित्र आभुवत्'—इत्याद्यास्तिस्र ऋचः कवत्यः । तासु वामदेव्यं सामाध्ययनतः प्राप्तम् । तद्बाधितुं रथंतरं साम तास्वतिदिश्यते । तत्र—अतिदेश्यस्वरूपं निश्चेतुं रथंतरशब्दस्यार्थश्चिन्त्यते । गानविशेषयुक्ता 'अभि त्वा शूर नोनुमः—' इतीयमृक् 'रथंतरम्' इत्युच्यते । कुतः । अध्येतृप्रसिद्धितः। 'रथंतरं गीयताम्' इति केनचिदुक्ता अध्येतारः स्वरस्तोभविशेषयुक्ताम् 'अभि त्वा—' इत्यृचं पठन्ति, न तु स्वरस्तोभमात्रम् । तस्मात्—गानविशिष्टाया ऋचो रथंतरशब्दार्थत्वम् । इति प्राप्ते—

ब्रूमः—स्वरादिविशेषानुपूर्वीमात्रस्वरूपमृगक्षरव्यतिरिक्तं यद्गानम्, तदेव रथंतरशब्दस्यार्थः । कुतः । लाघवात् । किंच—कवतीष्वृक्षु गानमतिदेष्टुं योग्यम् । न त्वृचस्तद्योग्यताऽस्ति । 'कया नः—' 'अभि त्वा—' इत्यनयोर्ऋचोर्युगपदाधाराधेयभावेन पठितुमशक्यत्वात् । तस्मात्—गानविशेष एव रथंतरादिशब्दार्थः ॥ १ ॥ २ ॥

इति श्रीमाधवीये जैमिनीयन्यायमालाविस्तरे सप्तमाध्यायस्य द्वितीयः पादः ॥ २ ॥

| | अत्र पादे | आदितः । |
|---|---|---|
| अधिकरणानि | १ | ४४७ । |
| सूत्राणि | २१ | १३३६ । |

---

( अथ सप्तमाध्यायस्य तृतीयः पादः ) ।

( प्रथमे—अग्निहोत्रादिनाम्ना धर्मातिदेशाधिकरणे सूत्राणि १—४ ) ।

उक्तं क्रियाभिधानं तच्छ्रुतावन्यत्र विधिप्रदेशः स्यात् ॥ १ ॥ अपूर्वे वाऽपि भागित्वात् ॥ २ ॥ नाम्नस्त्वौत्पत्तिकत्वात् ॥ ३ ॥ प्रत्यक्षाद्गुणसं-

१ क. °तरसा° । २ ज. स्वतो° । ३ ञ. °शब्दार्थः । ४ ख. च. ञ. °तरश° ।

योगात्क्रियाभिधानं स्यात्, तदभावेऽप्रसिद्धं स्यात् ॥ ४ ॥

तृतीयपादे प्रथमाधिकरणमारचयति—

मासं जुहोत्यग्निहोत्रमिति नामाग्निहोत्रतः।
नित्यान्मासाग्निहोत्रेऽस्मिन्धर्माणां नातिदेशकम् ॥ १ ॥
उतातिदेशकं नैव द्वयोर्नाम्नः समत्वतः।
अग्नये होत्रमित्यस्य नित्ये संपादितत्वतः ॥ २ ॥
तत्र मुख्यं ततोऽन्यत्र गौणत्वस्य प्रसिद्धये।
नित्याग्निहोत्रगान्धर्मांस्तन्नामातिदिशेदिह ॥ ३ ॥

कौण्डपायिनामयने श्रूयते—'मासमग्निहोत्रं जुहोति' इति। तत्र—'अग्निहोत्रम्' इत्येतन्नाम नित्याग्निहोत्रादस्मिन्मासाग्निहोत्रे धर्मानतिदेष्टुं नार्हति। कुतः। तस्य नाम्न उभयोरग्निहोत्रयोर्मुख्यवृत्त्या समानत्वात्। इति प्राप्ते—

ब्रूमः—'अग्नये होत्रं यस्मिन्कर्मणि तदग्निहोत्रम्' इत्येतमवयवार्थं नित्याग्निहोत्रे संपाद्य तन्नामधेयत्वं प्रथमाध्याये ( तत्प्रख्यं चान्यशास्त्रम् १।४।४ इति सूत्रे ) निर्णीतम्। अतस्तत्रैवाग्ये शब्दो मुख्यः। न च—उभयत्र मुख्यत्वं संभवति। अनेकार्थत्वस्यान्याय्यत्वात्। मुख्यत्वासंभवेन मासाग्निहोत्रे गुणयोगाद्वर्तितुं नित्याग्निहोत्रगुणानतिदिशति ॥ १ ॥ २ ॥ ३ ॥

(द्वितीये—प्रायणीयनाम्नां धर्मानतिदेशाधिकरणे सूत्रम्—)।

अपि वा सत्रकर्माणि गुणार्थैषा श्रुतिः स्यात् ॥ ५ ॥

द्वितीयाधिकरणमारचयति—

गवामयन आद्येऽह्नि प्रायणीयेति नाम यत्।
तद्द्वादशाहिकादह्नो धर्मानतिदिशेन्न वा ॥ ४ ॥
पूर्वन्यायेनातिदेशो नैवं प्रथमता द्वयोः।
अह्नोस्तुल्येति मुख्यत्वं समं नातिदिशेदतः ॥ ५ ॥

द्वादशाहे प्रथमस्याह्नः 'प्रायणीयम्' इति नाम। तथा गवामयनेऽपि। तत्र—'अग्निहोत्रनाम'—( ७।३।१ ) न्यायेनातिदेशः। इति चेत्।

मैवम्। प्रायणीयशब्दप्रवृत्तिनिमित्तस्य प्राथम्यस्य द्वयोस्तुल्यत्वेनो

१ ख. च. इत्यव°। २ ज. झ °त्येवम°। ३ क. °स्तस्यैवा°। ४ च. °तिदिशेन्नैव। ५ ख. ज. झ. मैवं। ६ ज. झ. °णीश°। ७ ज. झ. प्राथम्यस्य।

मुख्यत्वेऽप्यनेकार्थत्वमसङ्गाभावात् । 'प्रारम्भार्यते गच्छति प्रवर्तते कर्मानेन- प्रायणीयम् । अतो नैतन्नामधेयं धर्मानतिदिशति ॥ ४ ॥ ५ ॥

( तृतीये-सर्वपृष्ठशब्देन षट्पृष्ठानामतिदेशाधिकरणे सूत्राणि ६-११ ) ।

विश्वजिति सर्वपृष्ठे तत्पूर्वकत्वाज्ज्योतिष्टोमिकानि पृष्ठानि अस्ति च पृष्ठशब्दः ॥ ६ ॥ षडहाद्वा तत्र हि चोदनाः ॥ ७ ॥ लिङ्गाच्च ॥ ८ ॥ उत्पन्नाधिकारो ज्योतिष्टोमः ॥ ९ ॥ द्वयोर्विधिरिति चेत् ॥ १० ॥ न व्यर्थत्वात्सर्वशब्दस्य ॥ ११ ॥

तृतीयाधिकरणमारचयति-

विश्वजित्सर्वपृष्ठः किमनुवादो रथंतरम् ।
बृहता वा समुच्चेयं यद्वा षाडहिकानि षट् ॥ ६ ॥
अतिदेश्यानि तत्राऽऽद्यो माहेन्द्रादिचतुष्टये ।
पृष्ठशब्दाच्चोदकेन सर्वेषामिह संभवात् ॥ ७ ॥
समुच्चयो वा विषये सर्वत्वं बह्वपेक्षया ।
न तु द्वयोरतः षण्णां पृष्ठानामतिदेशनम् ॥ ८ ॥

'विश्वजित्सर्वपृष्ठो भवति' इति श्रूयते । तत्र सर्वपृष्ठशब्दोऽनुवादः । कुतः । प्राप्तत्वात् । तथा हि-ज्योतिष्टोमे माध्यंदिनपवमानानन्तरभावीनि माहेन्द्रादीनि चत्वारि स्तोत्राणि सन्ति । 'अभि त्वा शूर नोनुमः' 'कया नश्चित्र आभुवत्' 'तं वो दस्ममृतीषहम्' 'तरोभिर्वो विदद्वसुम्'-इत्येतेषु चतुर्षु सूक्तेषु तानि स्तोत्राणि सप्तदश*स्तोमतामापाद्य गीयन्ते । एकस्मिन्सूक्ते विद्यमानानां तिसृणामृचां ब्राह्मणोक्तविधानेन सप्तदशधाऽभ्यासः सप्तदशस्तोमः । तादृशेषु स्तोत्रेषु पृष्ठशब्दः श्रूयते-'सप्तदशानि पृष्ठानि' इति । तानि च चत्वारि पृष्ठानि विश्वजिति चोदकप्राप्तत्वात्सर्वपृष्ठशब्देनानूद्यन्ते-इत्येकः पक्षः ।

रथंतरपृष्ठबृहत्पृष्ठयोर्ज्योतिष्टोमे विकल्पितयोरिहापि चोदकेन विकल्पप्राप्तौ सर्व-

---

* स्तोमशब्द एव गानविशेषवाची ।

---

१ झ. °र्थम° । २ क. ख. च. ञ. °वति ग° । ३ ख. च. ज. झ. ञ. °म ष° । ४ ख. °श्रये वा । ५ ख. °नि पृ° ।

शब्देन समुच्चयो विधीयते। तथा सति—अनुवादकृतं वैयर्थ्यं न भविष्यति—इति द्वितीयः पक्षः।

सर्वत्वं बहुषु मुख्यम्, न तु द्वयोः। तस्मात्—अनेन सर्वपृष्ठशब्देन षट्संख्यकानि पृष्ठान्यतिदिश्यन्ते। षडहे प्रतिदिनमेकैकं पृष्ठं विहितम्। तानि च षट् पृष्ठानि रथंतर—बृहत्—वैरूप—वैराज—शाक्कर—रैवत—सामभिर्निष्पाद्यानि। यद्यपि विश्वजित ऐकाहिकत्वाज्ज्योतिष्टोमविकृतित्वमेव, न षडहविकृतित्वम्' तथाऽपि सर्वपृष्ठोक्तिबलात्तानि षट् पृष्ठान्यतिदिश्यन्ते ॥ ६ ॥ ७ ॥ ८ ॥

(चतुर्थे—अवभृथनाम्नां सौमिकधर्मातिदेशाधिकरणे सूत्राणि १२—१५)॥

तथाऽवभृथः सोमात् ॥ १२ ॥ प्रकृतेरिति चेत् ॥ १३ ॥
न भक्तित्वात् ॥ १४ ॥ लिङ्गदर्शनाच्च ॥ १५ ॥

चतुर्थाधिकरणमारचयति—

निष्कासेन तुषैश्चावभृथं यन्तीत्यनूद्यते।
नीरोत्सेकः कर्मणो वा विधिः सौमिकधर्मणः ॥ ९ ॥
यो दर्शपूर्णमासाभ्यां वारुण्यां चोदकागतः।
व्युत्सेकोऽनूद्यतामेष मैवं कर्मणि सौमिके ॥ १० ॥
मुख्यावभृथशब्दो यस्तत्सादृश्यविवक्षया।
धर्मानतिदिशन्कर्म विधत्ते धर्मसंयुतम् ॥ ११ ॥

वरुणप्रघासेषु श्रूयते—'वारुण्या निष्कासेन तुषैश्चावभृथं यन्ति' इति। निष्कासं आमिक्षायाँ लेपः। 'प्राच्यां दिशि देवा ऋत्विजो मार्जयन्ताम्' इत्यादिमन्त्रैर्दर्शपूर्णमासयोर्दिक्षु सर्वास्वप उत्सिच्यन्ते। सोऽयं व्युत्सेको निष्कासविधानार्थमवभृथशब्देनाऽऽमिक्षायोगे चोदकप्राप्तोऽनूद्यते। अस्ति हि व्युत्सेकस्यावभृथत्वम्। 'एष वै दर्शपूर्णमासयोरवभृथः' इति श्रुतत्वात्। इति प्राप्ते—

ब्रूमः—सौमिके कर्मण्यवभृथशब्दो मुख्यः। तस्य शब्दस्योद्भिदादिवद्विधेयक्रियासामानाधिकरण्येन नामधेयत्वात्। तत्रैव वैदिकप्रयोगबाहुल्याच्च। व्युत्सेके त्वप्संबन्धादुपचर्यते। न हि सौमिककर्मणीव व्युत्सेकेऽवभृथभावनामन्त्रत्रयवर्ती चर्यामः,

---

१ क. ज. झ. °शाक्कर°। २ ख. च. ज झ. ञ. °त एकाहत्वा°। ३ ख. च. ञ. °ब्दोऽयं तत्सा°। ज. झ. °ब्दोऽनस्त°। ४ ज. झ. °शत्कर्म। ५ ज. झ. °भृथय°। ६ ख. °ष्कासो व्युत्सेकोऽवभृथशब्देनाऽऽमिक्षायागे। ७ ज. झ. ञ. °सविधित्सयाऽपां व्युत्सेकोऽवभृथशब्देनाऽऽमिक्षाके चो°। ८ क. °यागे। ९ क. स्तुतत्वात्।

येन तत्र मुख्यत्वमाशङ्क्येत । तस्मात्—सौमिककर्मवाचिनमवभृथशब्दं वरुणप्रघासप्रकरणे प्रयुञ्जान आम्नायो मासाग्निहोत्रन्यायेन सौमिकधर्मानतिदिशन्कर्मान्तरं तद्धर्मसंयुक्तं विधत्ते । न च—विपर्ययेणात्रैव मुख्योऽवभृथोऽस्तु—इति शङ्कनीयम् । अपेक्षितस्य धर्मकलापस्यात्राभावात् । तस्मात्—सौमिकधर्मोपेतकर्मान्तरविधिः ॥ ९ ॥ १० ॥ ११ ॥

( पञ्चमे—वारुणप्रघासिकावभृथस्य तुषनिष्कासद्रव्यकत्वाधिकरणे सूत्रम्— ) ।

द्रव्यादेशे तद्द्रव्यः श्रुतिसंयोगात्पुरोडाशस्त्वनादेशे तत्प्रकृतित्वात् ॥ १६ ॥

पञ्चमाधिकरणमारचयति—

तत्र द्रव्यं पुरोडाशस्तुषनिष्कासकावुत ।
प्राप्तोऽवभृथशब्देन पुरोडाशोऽतिदेशतः ॥ १२ ॥
तुषनिष्कासयोरत्र साक्षाच्छ्रुत्युपदेशतः ।
अतिदेशप्रापितस्य पुरोडाशस्य बाधनम् ॥ १३ ॥

तत्र पूर्वोक्ते कर्मान्तरे धर्मातिदेशकेनावभृथशब्देन पुरोडाशोऽतिदिश्यते। अतिदेशश्चोपदेशाद्दुर्बलः । तस्मात्—तुषनिष्कासाभ्यां पुरोडाशो बाध्यते ॥१२॥१३॥

( षष्ठे—वैष्णवशब्दादातिथ्ये धर्मानतिदेशाधिकरणे—सूत्रम्— ) ।

गुणविधिस्तु न गृह्णीयात्समत्वात् ॥ १७ ॥

षष्ठाधिकरणमारचयति—

वैष्णवे त्रिकपाले वैष्णवान्नवकपालतः ।
धर्मातिदेशः स्यान्नो वा विद्यतेऽत्राग्निहोत्रवत् ॥ १४ ॥
श्रुत्या वैष्णवशब्दोऽयं देवताया विधायकः ।
न गौणवृत्तिमाश्रित्य धर्माननतिदिशत्यतः ॥ १५ ॥

आतिथ्येष्टौ वैष्णवो नवकपालो विहितः । तत्र—श्रुतो वैष्णवशब्दो राजसूयगते वैष्णवे त्रिकपाले. प्रयुज्यमानोऽग्निहोत्रशब्दवन्नवकपालधर्मानतिदिशति । इति पूर्वः पक्षः ।

'विष्णुर्देवताऽस्य' इति विग्रहे विहितस्तद्धितप्रत्ययो देवतामभिधत्ते, न तु धर्मान् । तस्मात्—नातिदिशति ।

१ च. अत्र ।

( सप्तमे-निर्मन्थ्यादिशब्दैर्धर्मानतिदेशाधिकरणे-सूत्रम्- ) ।

निर्मन्थ्यादिषु चैवम् ॥ १८ ॥

सप्तमाधिकरणमारचयति—

निर्मन्थ्येनेष्टकापाके बर्हिषाऽवटसंस्कृतौ ।

अतिदेशो न वाऽऽद्योऽस्तु धर्मार्थं तच्च पूर्ववत् ॥ १५ ॥

अग्नीषोमीयपशौ धर्मवान्निर्मन्थ्योऽग्निराम्नातः । स च निर्मन्थ्यशब्दोऽग्निचयन इष्टकापाके प्रयुक्तः—' निर्मन्थ्येष्टकाः पचन्ति ' इति । तथा—दर्शपूर्णमासयोः सधर्मकं बर्हिराम्नातम् । स च बर्हिःशब्दः पशौ प्रयुक्तः—' बर्हिषा यूपावटमवस्तृणाति ' इति । तत्र—उभयत्र तद्रूपसिद्ध्यर्थमतिदेशः । इति चेत् ।

न । पूर्वोक्तवैष्णवशब्दवन्मुख्यया वृत्त्या विधिसंभवे धर्मलक्षकत्वायोगात् । अग्निमन्थनस्य बर्हिर्लवनस्य च लोकसिद्धत्वेन शास्त्रीयधर्माभावेऽपि लौकिकधर्मैरुभयं निष्पद्यते । तस्मात्—नास्त्यतिदेशः ॥ १६ ॥

( अष्टमे—प्रणयनशब्देन सौमिकधर्मानतिदेशाधिकरणे सूत्राणि १९–२२ ) ।

प्रणयनं तु सौमिकमवाच्यं हीतरत् ॥ १९ ॥ उत्तरवेदिप्रतिषेधश्च तद्वत् ॥ २० ॥ प्राकृतं वाऽनामत्वात् ॥ २१ ॥ परिसंख्यार्थं श्रवणं गुणार्थमर्थवादो वा ॥ २२ ॥

अष्टमाधिकरणमारचयति —

सौमिकं प्राकृतं वा स्याद्द्वयोः प्रणयनं श्रुतम् ।

आद्योऽप्राप्तवतो मैवमनामत्वेन वादृगाः ॥ १७ ॥

चातुर्मास्येषु श्रूयते—'द्वयोः प्रणयन्ति । तस्माद्द्वाभ्यां *यन्ति' इति । तत्र—सौमिकं यत्सधर्मकमग्निप्रणयनम्, तदेव ग्रहीतव्यम् । कुतः । सोमस्य चातुर्मास्यप्रकृतित्वाभावेन तदीयप्रणयनस्यात्र चोदकाप्राप्तस्य विध्यर्हत्वात् । दर्शपूर्णमासगं त्वग्निप्रणयनं चोदकप्राप्तत्वादविधेयम् । तस्मात्—सौमिकस्य धर्मा अत्र प्रणयनशब्देनातिदिश्यन्ते । इति प्राप्ते—

ब्रूमः—नायं प्रणयनशब्दः सौमिकस्य प्रणयनकर्मणो नामधेयम्, किंतु निर्म-

* 'तस्माद्द्वाभ्यामेति' इति शाबरभाष्यस्थपाठः ।

१ क. °तो । धर्मार्थमतिदेशो न वाऽऽद्योऽस्तु त° । २ क. °क्षणत्वा° । ञ. झ. ञ. °क्षणक° । ३ क. °वे त° । ४ ख. च. छ. ञ. °सगतं त्व° । ५ क. °कम्प्र° ।

न्थयबर्हिरादिशब्दवल्लौकिक एव । ततो न धर्मातिदेशः । यदि प्राकृतप्रणयनस्य प्राप्तत्वाद्विधिवैयर्थ्यम्, तर्ह्यर्थवादसंबन्धाय तद्वाक्यमस्तु ॥१७॥

( नवमे—मध्यमयोर्द्वयोरेव प्रणयनाधिकरणे सूत्राणि २३—२५ ) ।

**प्रथमोत्तमयोः प्रणयनमुत्तरवेदिप्रतिषेधात् ॥२३॥ मध्यमयोर्वा गत्यर्थवादात् ॥ २४ ॥ औत्तरवेदिकोऽनारभ्यवादप्रतिषेधः ॥ २५ ॥**

नवमाधिकरणमारचयति—

**आद्यन्तयोर्मध्ययोर्वा पर्वणोस्तत्प्रसञ्जकात् ।**
**आद्यन्तयोरूरुगत्या मध्ययोः पर्वणोर्भवेत् ॥ १८ ॥**

'तस्माद्द्वाभ्यां यन्ति' इत्यनेनार्थवादेन संबन्धाय पुनर्विधानाय प्राकृतमग्निप्रणयनं चोदकप्राप्तमपि श्रूयते—इत्युक्तम् । तद्वैश्वदेवसुनासीरीययोराद्यन्तयोः पर्वणोर्भवितुमर्हति । कुतः । प्रसञ्जकात् । तथा हि—'न वैश्वदेव उत्तरवेदिमुपवपन्ति । न सुनासीरीये' इत्युत्तरवेदिप्रतिषेधस्तयोः पर्वणोरुत्तरवेदिं प्रसञ्जयति । अप्रसक्तस्य प्रतिषेधायोगात् । उत्तरवेदिश्चाग्निप्रणयनार्था । तस्मात्—उत्तरवेदिप्रसक्तिद्वारेणाऽऽद्यन्तयोरिदमग्निप्रणयनम् । इति प्राप्ते—

**ब्रूमः**—'ऊरू वा एतौ यज्ञस्य—यद्वरुणप्रघासाः, साकमेधश्च' इति गमनसाधनत्वमूरुत्वं मध्यमयोः पर्वणोरुपन्यस्तम् । तत्संनिधौ 'द्वयोः प्रणयन्ति' इति चोदकप्राप्तमग्निप्रणयनमर्थवादार्थं पुनर्विधाय 'द्वाभ्यां यन्ति' इत्यर्थवादेनोरुत्वकल्पनायुक्ताभ्यां पर्वभ्यां गमनमुपन्यस्यते । तस्मात्—मध्यमयोस्तत्प्रणयनम् । किमर्थं चोदकप्राप्तमाग्निप्रणयनं मध्यमयोः कीर्त्यते-इति चेत् । उत्तरवेद्यग्निनिधानगुणाविधानार्थम् । न च--अत्रोत्तरवेद्यभावात्प्रणयनाभावः--इति शङ्कनीयम् । 'उपात्र वपन्ति' इत्यनारभ्य श्रुतेन वाक्येनोत्तरवेद्युपवापस्य विहितत्वात् । सा चोत्तरवेदिराद्यन्तयोः पर्वणोर्निषेधान्मध्यमयोर्व्यवतिष्ठते । तस्यां चोत्तरवेद्यां प्रणीतोऽग्निर्निधीयते । एतदर्थमेव हि सार्थवादं पुनर्विधानम् ।

उक्तमधिकरणद्वयमेकीकृत्य वार्तिककारेण योऽर्थोऽभिहितः, तं दर्शयति--

**अनाम्नत्वाच्च वैयर्थ्यात्सौमिकं प्राकृतं न वा ।**
**अपूर्वं तत्प्रणयनं शाखान्तरसमोक्तितः ॥ १९ ॥**

---

१ ख. णोऽस्तु प्रस° । २ ज. °वणा भव° । ञ. °र्वणो भवे° । ३ ख. च. इत्येतन्ना° । ४ क. °मपि प्र° । ५ क. ताभ्यां । ६ क. °त्यनुवा° । ७ च. ज. झ. ञ. योऽभिहितो निर्णयः, तं । ८ ख. च. ज. झ. च । ९ क. °समत्वतः ।

'आहवनीयोद्वाऽग्निं प्रणयते' इति शाखान्तरे मध्यमयोर्नूतनं प्रणयनं विहितम्। तेन समानवचनत्वात्तत्राप्यपूर्वं प्रणयनं विधीयते ॥ १८ ॥ १९ ॥

( दशमे—स्वरसामादिशब्देन धर्मातिदेशाधिकरणे सूत्रे २६–२७ )।

स्वरसामैककपालामिक्षं च लिङ्गदर्शनात् ॥ २६ ॥

चोदनासामान्याद्वा ॥ २७ ॥

दशमाधिकरणमारचयति—

न विकारा विकारा वा स्वरसामादयो, न हि।
वैष्णवन्यायतो भैवमनन्यगतिलिङ्गतः ॥ २० ॥

गवामयने द्वयोर्मासषट्कयोर्मध्ये वर्तमानं विषुवन्नामकं प्रधानभूतमेकमहर्विधते। तच्च दिवाकीर्त्यम्। तस्मात्प्राचीनास्त्रयः स्वरसामनामका अहर्विशेषाः। तथोपरिष्टादपि त्रयः स्वरसामानः। तदेतदभिप्रेत्य श्रूयते—'अभितो दिवाकीर्त्यं त्रयः स्वरसामानः' इति। तेषु च प्रैहसात्तयसप्तदशस्तोमादयो धर्मा विहिताः। अन्यत्र त्वेवं श्रूयते—'पृष्ठ्यः षडहः, द्वौ स्वरसामानौ' इति। तावेतावहर्विशेषौ पूर्वोक्तानां स्वरसाम्नां न विकारौ। कुतः। वैष्णवसमानत्वात्। यथा वैष्णवशब्दो देवतारूपगुणविधानेन मुख्यवृत्तित्वान्न लक्षणया धर्मानतिदिशति, तथा सामविशेषरूपगुणविधायकः स्वरसामशब्दः। इति प्राप्ते—

ब्रूमः अनन्यगतिकलिङ्गवशात्स्वरसामानौ विकारौ भवतः। तथा हि—'षडहः, द्वौ स्वरसामानौ' इत्येवं योऽयमष्टाह उपन्यस्तः, तत्र षट्स्वहःसु क्रमेण 'त्रिवृत्, पञ्चदशः, सप्तदशः, एकविंशः, त्रिणवः, त्रयस्त्रिंशः, इत्येवं स्तोमषट्कं चोदकेन प्राप्तम्। एवं स्थिते तृतीयषष्ठदिवसगतयोः सप्तदश—त्रयस्त्रिंशयोर्व्यत्यासं विधाय सप्तमाष्टमयोरह्नोः सप्तदशस्तोमं सिद्धवत्कृत्वा त्रिषु चरमेष्वहःसु सप्तदशस्तोमनैरन्तर्यमर्थवादेनानुवदति। 'यत्तृतीयं सप्तदशमहः, तत्त्रयस्त्रिंश *स्थानमभिव्याहरन्ति' इति व्यत्यासविधिः। 'त्रयाणां सप्तदशानामनूचीनत्वायाः' इत्यनुवादः। तत्र यद्युपान्त्यान्त्ययोरह्नोः सप्तदशस्तोमं स्वरसामशब्दोऽतिदिशेत्, तदा नैरन्तर्यमुपपद्येत, न त्वन्यथा। तस्मात्—न वैष्णवन्यायेन गुणविधिः, किंतु धर्माणामतिदेशकः ॥ २० ॥

* त्रयस्त्रिंशस्य स्था' इति शाबरभाष्यस्थपाठः।

१ ञ. °याद्याग्निं। २ ज. झ. °हर्सात°। ३ झ. तया। ४ ञ. °षगुणरू°। ५ ब. ञ. सिद्धवत्कृत्य। ६ ज. झ. °महस्तत्र त्रय°। ७ ख. ज. झ. °मनवान°। ८ ख. च. ज. झ. ञ. °त्यर्थवा°। ९ च. यद्यन्त्य°। ज. झ. यद्यन्तयो°।

(एकादशे— { 'वासो ददाति' इत्यादौ वासआदि-शब्दानामाकृतिनिमित्तताधिकरणे } सूत्रे २८—२९)।

**कर्मजे कर्म यूपवत् ॥ २८ ॥ रूपं वाऽशेषभूतत्वात् ॥ २९ ॥**

एकादशाधिकरणमारचयति—

**वासोनसी दानतक्षणातिदेशकरे न वा ।**
**आद्यः क्रियानिमित्तत्वाज्जातिवाचित्वतोऽन्तिमः ॥ २१ ॥**

'वासो ददाति' 'अनो ददाति' इति श्रूयते। तत्र यथा—यूपशब्दस्य शाखा-च्छेदनतक्षणादिक्रिया प्रवृत्तिनिमित्तम्, तथा वासःशब्दस्य लौकिकी कुविन्द-कर्तृका तन्तुवानक्रिया, अनःशब्दस्य वर्धकिकर्तृका दारुतक्षणक्रिया। तस्मात्—वासोनःशब्दयोः क्रियातिदेशकत्वाद्वानतक्षणे कारयित्वा तदुभयं दातव्यम्। इति चेत्। न। गवाश्वादिशब्दवज्जातिवाचित्वात्। पाठकादिशब्दानां क्रियामुपलभ्यैव प्रयु-ज्यमानत्वात्क्रियैव प्रवृत्तिनिमित्तम्। वासःशकटादिषु क्रियामनुपलभ्यापि जाति-मुपलभ्य शब्दं प्रयुञ्जते। तस्मात्—वासोनःशब्दौ न क्रियामतिदिशतः ॥ २१ ॥

(द्वादशे—गर्गत्रिरात्रे लौकिकेऽग्नावुपनिधानाधिकरणे सूत्राणि ३०—३२)।

**विशये लौकिकः स्यात्सर्वार्थत्वात् ॥ ३० ॥**
**न वैदिकमर्थनिर्देशात् ॥ ३१ ॥ तथो-त्पत्तिरितरेषां समत्वात् ॥ ३२ ॥**

द्वादशाधिकरणमारचयति—

**वैदिको लौकिको वाऽग्निर्निधेयः संस्कृतेर्वशात् ।**
**आद्यो होमाय संस्कारो जात्यर्थत्वेन लौकिकः ॥ २२ ॥**

गर्गत्रिरात्र आज्यदोहसामानि प्रकृत्य श्रूयते—'अग्निमुपनिधाय स्तुवीत' इति। तत्र—उपनिधेयोऽग्निर्वैदिकः स्यात्। कुतः। आधानादिसंस्कारस्य प्रयो-जनाकाङ्क्षितया समस्तवैदिककर्मशेषत्वात्। इति प्राप्ते—

**ब्रूमः**—'आहवनीये जुहोति' 'गार्हपत्ये हवींषि श्रपयति' इत्यादिभि-र्होमादिभिः संस्काराकाङ्क्षा निवर्तिता। ततो नाऽऽहवनीयादिशब्दवदग्निशब्दः संस्कारनिमित्तः। किंतु वासःशब्दवज्जातिवाची। तथा सति—लौकिकत्वा-न्नाऽऽधानादिसंस्कारमतिदिशति। लौकिककार्येष्विव वैदिककार्येष्वग्निर्लौकिकः

१ ज. झ. °देशः कृते न। २ ज. झ. पाचका°। ३ ज. झ. °वनि°।

शेषभावं भजते। तस्य सर्वकार्यसमर्थत्वात्। ततोऽग्निशब्दो जातिमात्रमुपस्थाप-यल्लौकिकवह्निमात्रेण चरितार्थो विनाऽऽहवनीयादिसंस्कारवाचकं विशेषणं न वैदिकोपस्थापको भवति ॥ २२ ॥

( त्रयोदशे—यूपशब्दस्य संस्कारप्रयोजकताधिकरणे सूत्रे ३३—३४ )।

संस्कृतं स्यात्तच्छब्दत्वात् ॥ ३३ ॥ भक्त्या वाऽय-ज्ञशेषत्वाद्गुणानामभिधानत्वात् ॥ ३४ ॥

त्रयोदशाधिकरणमारचयति—

संस्कारः स्यादुपशये न वा, यूपोक्तितोऽग्रिमः।
न स्यान्नियोजनाभावाच्चूर्णोच्छेदेन यूपता ॥ २३ ॥

यूपैकादशिन्यां श्रूयते—'उपशयो यूपो भवति' इति। एकादशानां यूपानां समूह एकादशिनी। तत्र दक्षिणतोऽवस्थापित एकादशो यूप उपशयः। तथा च श्रूयते—'यद्दक्षिणत उपशयः' इति। तस्मिन्नुपशये परिव्याणादिको यूपसं-स्कारोऽस्ति। संस्कारनिमित्तकस्य यूपशब्दस्य तत्र प्रयुक्तत्वात्। इति चेत्।

न। संस्कारप्रयोजनस्यात्राभावात्। पशुं नियोक्तुं यूपः संस्क्रियते। तच्च नियोजनमितरेषु दशसु यूपेष्वस्ति, न त्वेकादश उपशये। तथा च तैत्तिरीय-ब्राह्मणम्—'सर्वे वा अन्ये यूपाः पशुमन्तः, अथोपशय एवापशुः' इति। परिव्याणादिसंस्काराभावेऽप्यमन्त्रकाश्छेदनादयः केचिद्धर्मास्तत्र वाचनिका विद्यन्ते। तावतोऽल्पेन तादृश्येन गौणी तत्र यूपत्वोक्तिः। तस्मात्—न यूपशब्दो धर्मा-नतिदिशति। २३।

( चतुर्दशे—पृष्ठशब्दस्यर्ग्वेदवाचित्वाधिकरणे सूत्रे ३५—३६ )।

कर्मणः पृष्ठशब्दः स्यात्तथाभूतोपदेशात् ॥ ३५ ॥
अभिधानोपदेशाद्वा विप्रतिषेधाद्‌द्रव्येषु पृष्ठशब्दः स्यात् ॥ ३६ ॥

चतुर्दशाधिकरणमारचयति—

पृष्ठैरुपस्तुतौ स्तोत्रधर्माः सन्ति न वाऽग्रिमः।
अग्निहोत्रनयान्नैवं मन्त्रोक्तेरात्मनेपदात् ॥ २४ ॥

---

१ ज. °त्रिकस्यापि°। २ ज. झ. °तोऽस्ति सः। न। ३ ज. झ. °वेऽपि म°। ४ क. °न्त्रच्छेद°। ५ क. °ताऽन्येन। ६ छ. ज. यूपोक्तिः।

अग्निचयने श्रूयते-' पृष्ठैरुपतिष्ठते ' इति । पृष्ठशब्दो ज्योतिष्टोमे माध्यंदिनसवनगतस्य स्तोत्रस्य कर्मणो नामधेयमिति प्रथमाध्याये ( अ० १ पा० ४ सू० ३ ) निर्णीतम् । सोऽग्निचयनगतोपस्थानकर्मणि प्रयुज्यमानोऽग्निहोत्रशब्दन्यायेन पृष्ठस्तोत्रधर्मानुपस्थानेऽतिदिशति । इति चेत् ।

मैवम् । अत्र पृष्ठशब्दस्य मन्त्रपरत्वेन कर्मपरत्वाभावात् । ' मासमग्निहोत्रं जुहोति ' इत्यत्राग्निहोत्रशब्दो जुहोतिधातुना समानाधिकृतः कर्मपरः । अत्र तु 'उपान्मन्त्रकरणे' (पा० सू० १ । ३ । २५ ) इत्येतत्पाणिनीयं सूत्रमुपशब्दयुक्तात्तिष्ठतेर्धातोरात्मनेपदं विदधत्तृतीयान्तस्य पृष्ठशब्दस्य मन्त्रात्मककरणपरतां दर्शयति । यद्यपि स्तोत्रकर्मवाची पृष्ठशब्दः, तथाऽपि तत्साधनभूतान्रथंतरादिसामोपेतान् ' अभि त्वा शूर '-इत्यादिमन्त्रानुपलक्षयति । न च-लक्षणाश्रयणमेव दोषः-इति वाच्यम् । त्वत्पक्षेऽप्याश्रयणीयत्वात् । किंच-त्वत्पक्षे यथाऽग्निहोत्रशब्देन तद्धर्मानुपलक्ष्य तैश्च धर्मैस्तद्युक्तं मासाग्निहोत्रात्मकं कर्मान्तरं लक्ष्यते, तथा स्तोत्रवाचिना पृष्ठशब्देन तद्धर्मोपलक्षणद्वारेणोपस्थानरूपं कर्मान्तरं लक्षणीयमिति विप्रकृष्यते । तस्मात्-पृष्ठशब्दो न स्तोत्रधर्मानतिदिशति ॥२४॥

इति श्रीमाधवीये जैमिनीयन्यायमालाविस्तरे सप्तमाध्यायस्य तृतीयः पादः ॥ ३ ॥

| | अत्र पादे: | आदितः । |
|---|---|---|
| अधिकरणानि | १४ | ४९१ । |
| सूत्राणि | ३६ | १३७२ । |

---

( अथ सप्तमाध्यायस्य चतुर्थः पादः ) ।

( प्रथमे-सौर्ये चरावितिकर्तव्यतावत्त्वाधिकरणे सूत्रम्- ) ।

इतिकर्तव्यताविधेर्यजतेः पूर्ववत्त्वम् ॥ १ ॥

चतुर्थपादे प्रथमाधिकरणमारचयति-

सौर्ये चरौ न धर्माः स्युः स्युर्वा, मानविवर्जनात् ।
न स्युः, स्युः करणं यागोऽपेक्ष्यते ह्युपकारिणः ॥ १ ॥

' सौर्यं चरुं निर्वपेद्ब्रह्मवर्चसकामः ' इत्यत्रावघातादयो धर्मा न प्राप्यन्ते । कुतः । प्रापकप्रमाणानां श्रुतिलिङ्गादीनामभावात् । इति चेत् ।

१ ज. झ. ञ. °त्रक° । २ स. च. °स्य ना° । ३ च. सोऽयमग्नि° । ४ च. झ. °कृत्यः क° ।

मेवम् । 'विमतो याग उपकरणापेक्षः, करणत्वात्, लौकिकवैदिकभोजनदर्शपूर्णमासवत्' इत्यनुमानेन तत्प्रापणात् ॥ १ ॥

( द्वितीये—सौर्ये चरौ वैदिकेतिकर्तव्यताधिकरणे सूत्राणि २—१२ ) ।

स लौकिकः स्याद्दृष्टप्रवृत्तित्वात् ॥ २ ॥ वचनात्तु ततोऽन्यत्वम् ॥ ३ ॥ लिङ्गेन वा नियम्येत लिङ्गस्य तद्गुणत्वात् ॥ ४ ॥ अपि वाऽन्यायपूर्वत्वाद्यत्र नित्यानुवादवचनानि स्युः॥ ५॥ मिथो विप्रतिषेधाच्च गुणानां यथार्थकल्पना स्यात् ॥ ६ ॥ भागित्वात्तु नियम्येत गुणानामभिधानत्वात्संबन्धादभिधानवत्, यथा धेनुः किशोरेण ॥ ७ ॥ उत्पत्तीनां समत्वाद्वा यथाधिकारं भावः स्यात् ॥ ८ ॥ उत्पत्तिशेषवचनं च विप्रतिषिद्धमेकस्मिन् ॥ ९ ॥ विध्यन्तो वा प्रकृतिवच्चोदनायां प्रवर्तेत तथा हि लिङ्गदर्शनम् ॥ १० ॥ लिङ्गहेतुत्वादलिङ्गे लौकिकं स्यात् ॥ ११ । लिङ्गस्य पूर्ववत्त्वाच्चोदनाशब्दसामान्यादेकेनापि निरूप्येत यथा स्थालीपुलाकेन ॥ १२ ॥

द्वितीयाधिकरणमारचयति—

विध्यन्तोऽपेक्षितस्तत्र लौकिको वाऽथ वैदिकः ।
आद्यो निबन्धराहित्यादन्त्यो धर्मसंनिकर्षतः ॥ २ ॥

तत्र सौर्ये चरावपेक्षितैः प्रधानविधेः शेषोऽङ्गकलापः स्थालीपाकादिगतो लौकिको ग्रहीतव्यः । कुतः । अनिबद्धत्वात् । वैदिकस्तु प्रकरणेन कर्मविशेषे निबद्धः सन्न ततो वियोजयितुं शक्यः । इति चेत् ।

१ क. °क्षितवि° । २ ख. घ. छ. °वि°शेषो° । ३ ख. घ. छ. शक्यते ।

मेवम् । वैदिके करणे वैदिकविध्यन्तस्य बुद्धिसंनिकर्षात् । यथा प्रकरणेन क्वचिन्निबद्धः, तथा चोदकेनान्यत्रापि निबध्यताम् । किंच—' प्रयाजे प्रयाजे कृष्णलं जुहोति ' इति सौर्ययागविशेषे कृष्णलहोमविधानाय सिद्धवत्प्रयाजोऽनूद्यते । तच्च वैदिकेतिकर्तव्यतायां लिङ्गम् । तस्मात्—वैदिको ग्राह्यः ॥२॥

( तृतीये गवामयन ऐकाहिकेतिकर्तव्यतानुष्ठानाधिकरणे सूत्राणि १३–२० ) ।

द्वादशाहिकमहर्गणे तत्प्रकृतित्वादैकाहिकमधिकागमात्तदाख्यं स्यादेकाहवत् ॥ १३ ॥ लिङ्गाच्च ॥ १४ ॥ न वा क्रत्वभिधानादधिकानामशब्दत्वम् ॥ १५ ॥ लिङ्गं संघातधर्मः स्यात्तदर्थापत्तेर्द्रव्यवत् ॥ १६ ॥ न वाऽर्थधर्मत्वात्संघातस्य गुणत्वात् ॥ १७ ॥ अर्थापत्तेर्द्रव्येषु धर्मलाभः स्यात् ॥ १८ ॥ प्रवृत्त्या नियतस्य लिङ्गदर्शनम् ॥ १९ ॥ विहारदर्शनं विशिष्टस्यानारभ्यवादानां प्रकृत्यर्थत्वात् ॥ २० ॥

तृतीयाधिकरणमारचयति—

गावामयनिके ज्योतिरादौ किं द्वादशाहिकी ।
ऐकाहिकी वाऽनुमानादाद्योऽन्त्यो नामबाधनात् ॥ ३ ॥

गवामयने—ज्योतिः, गौः, आयुः, इति ज्योतिरादिनामकास्त्रयो यागा विहिताः । तेषु द्वादशाहिकीतिकर्तव्यता युक्ता । कुतः । अनुमितवाक्येन तत्प्रापणात् । 'गवामयनं हि द्वादशाहविकृतिः' इति वक्ष्यति । अतस्तत्संबन्धित्वलिङ्गेन तदीयधर्मप्रापकश्चोदकोऽनुमीयते । इति प्राप्ते—

ब्रूमः—सन्ति ज्योतिरादिनामकास्त्रयो यागा एकाहाः, तदीयधर्मा गावामयनिकेषु ज्योतिरादिषु ज्योतिरादिभिस्त्रिभिर्नामभिः प्राप्ताः । नाम चाऽऽनुमानि-

१ ज. झ. ञ. विधिशे° । २ ख. च. ज. °ताया लि° । ३ क. ख. ज. झ. °ति—गवा° । ४ क. च. °न्धिलि° । ज. झ. ञ. °न्धिना लि° । ५ ख. च. ज. झ. ञ. °न्नय ए° ।

काम्योदकात्प्रबलम्। प्रत्यक्षश्रुतत्वात्। अतः—चोदकस्य बाधितत्वादेतेष्वैकाहिकीतिकर्तव्यता प्राप्ता ॥ ३ ॥

इति श्रीमाधवीये जैमिनीयन्यायमालाविस्तरे सप्तमाध्यायस्य चतुर्थः पादः ॥ ४ ॥

| | अत्र पादे | आदितः। |
|---|---|---|
| अधिकरणानि | ३ | ४९४। |
| सूत्राणि | २० | १३९२। |

अध्यायश्च समाप्तः ॥

---

( अथाष्टमोऽध्यायः )।

**सामान्येनातिदेशो योऽनुमानात्स निरूपितः ।**

**विशेषेणातिदेशो यः सोऽष्टमेऽथ निरूप्यते ॥ १ ॥**

अनेन सप्तमाष्टमयोरध्याययोः पूर्वोत्तरभाव उपपादितः । सप्तमस्य चतुर्थपादे प्रथमाधिकरणेन 'आनुमानिकवाक्यकृतोऽतिदेशोऽस्ति' इति सत्तामात्रं निरूपितम् । अष्टमे तु तद्विशेषा निरूप्यन्ते ॥ १ ॥

( प्रथमे–**विशेषचिन्ताधिकरणे** सूत्रम्– ) ।

**अथ विशेषलक्षणम् ॥ १ ॥**

अष्टमाध्यायस्य प्रथमपादे प्रथमाधिकरणमारचयति–

**कस्माच्चिदतिदिश्यन्ते नियतात्कर्मणोऽथवा ।**

**अविशेषादादिमोऽन्त्यः शास्त्रार्थस्य व्यवस्थितेः ॥ २ ॥**

विहितेतिकर्तव्यतारहिते सौर्यादौ कर्मणि तद्युक्ताद्यतः कुताश्चित्कर्मणो धर्मा अतिदिश्यन्ते । कुतः । नियामकस्य विशेषस्याभावात् । अतो विशेषचिन्ता न कार्या । इति चेत् ।

मैवम् । शास्त्रार्थव्यवस्थाया नियामकत्वात् । तस्मात्–नियतादेकस्मात्कर्मणो धर्मातिदेशः । तेन विशेषचिन्ता कर्तव्या ॥ २ ॥

( द्वितीये–**विशेषकर्मणो धर्मातिदेशाधिकरणे** सूत्रम्– ) ।

**यस्य लिङ्गमर्थसंयोगादभिधानवत् ॥ २ ॥**

द्वितीयाधिकरणमारचयति–

**तद्धितोक्त्यादिलिङ्गं किं न विशेषनियामकम् ।**

**भवेद्वा, न ह्यशब्दत्वाद्भवेच्छब्दे प्रवेशतः ॥ ३ ॥**

दर्शपूर्णमासयोः–'आग्नेयमष्टाकपालं निर्वपति' इत्यत्र तद्धितोक्त्या देवतानिर्देशः, एकदेवतायोगित्वम्, औषधद्रव्यैकत्वं निर्वापः, इत्येतान्याग्नेययागसंबन्धितया श्रूयमाणत्वादाग्नेयलिङ्गानि । 'सौर्यं चरुं निर्वपेत्' इत्यत्रापि तान्युपलभ्यन्ते । न तेषामाग्नेयधर्मातिदेशं नियन्तुं सामर्थ्यमस्ति । कुतः । तेषामशब्दरूपत्वेन शब्दैकसमधिगम्येऽर्थे प्रामाण्यायोगात् । इति प्राप्ते–

---

१ ञ. द्वितीयाधिकरणे । २ ञ. °स्त्रार्थे व्य° । ३ च. °र्थस्य व्य° । ४ क. °द्धं तद्विशे° । ५ ज. झ. निर्वपेत् । ६ क. °ध्यनि° ।

उत्तमः—लिङ्गस्मारितोपकारसहितमेव सौर्ययागं तच्छब्दो विदधाति। तथा सति प्रणाड्या(ल्या) लिङ्गस्य शब्दे प्रवेशात् 'आग्नेयवत्सौर्योऽनुष्ठेयः' इत्येतादृशं चोदकवाक्यमनुमापयता लिङ्गेन धर्मविशेषा नियम्यन्ते॥ ३॥

( तृतीये—सोम ऐष्टिकधर्मानतिदेशाधिकरणे सूत्राणि ३-१० )।

प्रवृत्तित्वादिष्टेः सोमे प्रवृत्तिः स्यात्॥ ३॥ लिङ्गदर्शनाच्च॥ ४॥ कृत्स्नविधानाद्वाऽपूर्वत्वम्॥५॥ मुगभिघारणाभावस्य च नित्यानुवादात्॥ ६॥ विधिरिति चेत्॥ ७॥ न वाक्यशेषत्वात्॥ ८॥ शक्ते चानुप्रेषणात्॥ ९॥ दर्शनमैष्टिकानां स्यात्॥ १०॥

तृतीयाधिकरणे प्रथमं वर्णकमारचयति—

विध्यन्त ऐष्टिकः सोमे स्यान्नो वा स्यात्प्रवृत्तितः।
उपदिष्टैर्नैरपेक्ष्याद्विध्यन्तो नैष्टिकोऽत्र हि॥ ४॥

ऐष्टिको विध्यन्तः प्रयाजादिः। स च सोमाङ्गभूते दीक्षणीयादौ प्रवृत्तत्वात्सोमेऽप्यनिवार्यः। इति चेत्।

मैवम्। प्रत्यक्षोपदिष्टैरभिषवाद्यङ्गकलापैः सोमस्य निराकाङ्क्षत्वात्। तस्मात्—नैष्टिको विध्यन्तः॥ ४॥

द्वितीयं वर्णकमारचयति—

इष्ट्यग्निहोत्रसोमानां मूलप्रकृतिता न हि।
अस्ति वा नालौकिकत्वादियत्तानवधारणात्॥ ५॥
लोकवत्संनिपत्यारादुपकारिद्वयश्रुतेः।
इयत्ताया निश्चितत्वान्मूलप्रकृतिता त्रिषु॥ ६॥

अलौकिकत्वेन 'एतावद्भिरङ्गैः संपूर्ण उपकारः' इति निश्चेतुमशक्यत्वादिष्ट्यादौ नास्ति मूलप्रकृतित्वम्। इति चेत्।

मैवम्। लौकिकसदृशत्वात्। यथा लौकिकभुजिक्रियायामोदनः करणम्, तस्याः संनिपत्योपकारिणः शाकसूपादयः, आरादुपकारिणः पीठदीपादयः। तथा भावनायां यागः करणम्, अवघातादयः संनिपातिनः, प्रयाजादय आरादुप-

१ च. प्रनाड्या। २ ज. °ष्टैर्निरपेक्ष्या विध्य°। ३ क. ञ. °तीयाधिकरणमा°। ४ ख. च. ज. झ. ञ. °ष्ट्यादीनां न°। ५ क. ख. च. ज. झ. ञ. तस्य।

कारिणः। अतो नात्यन्तमलौकिकत्वम्। इयत्ता तु लौकिके यथा प्रत्यक्षेण निश्चीयते, तथा श्रौते श्रुत्या निश्चीयताम्। तस्मात्–इष्टयग्निहोत्रसोमानां मूलप्रकृतित्वमस्ति ॥ ५ ॥ ६ ॥

( चतुर्थे–ऐन्द्राग्नादावैष्टिकधर्मातिदेशाधिकरणे सूत्रम्– )।

**इष्टिषु दर्शपूर्णमासयोः प्रवृत्तिः स्यात् ॥ ११ ॥**

चतुर्थाधिकरणमारचयति–

**ऐन्द्राग्नादौ सौमिकः स्यादैष्टिको वा द्वयोरिह।**

**संभवादैच्छिकोऽन्त्योऽत्र स्यात्कपालादिलिङ्गतः ॥ ७ ॥**

'ऐन्द्राग्नमेकादशकपालं निर्वपेत्प्रजाकामः' इत्यादौ सौमिकैष्टिकयोर्विध्यन्तयोरन्यतर इच्छया ग्राह्यः। कुतः। उभयत्र विध्यन्तसंभवेनातिदेष्टुमर्हत्वात्। इति चेत्।

न। कपालनिर्वापादिभिर्लिङ्गविशेषरैष्टिकस्यैवात्रोचितत्वात् ॥ ७ ॥

(पञ्चमे–अग्नीषोमीयपशौ दार्शपूर्णमासिकधर्मातिदेशाधिकरणे सूत्रम्– )।

**पशौ च लिङ्गदर्शनात् ॥ १२ ॥**

पञ्चमाधिकरणमारचयति–

**न पशावैष्टिकः स्याद्वा, न कपालाद्यभावतः।**

**स्याद्व्यक्तद्रव्यदेवत्वप्रयाजस्रुच्यसाम्यतः ॥ ८ ॥**

अग्नीषोमीयपशावैष्टिको विध्यन्तो नास्ति। कुतः। पूर्ववदत्र निर्वापकपालादिलिङ्गाभावात्। इति चेत्।

मैवम्। 'आग्नेयमष्टाकपालम्' इत्यत्रोत्पत्तिवाक्ये यथा द्रव्यदेवते व्यक्ते, तथा 'अग्नीषोमीयं पशुम्' इत्यत्रापि। न तु 'सोमेन यजेत' इत्यत्रेव देवताया अव्यक्तत्वम्। तदेतद्व्यक्तद्रव्यदेवत्वमेकं लिङ्गम्। 'एकादश प्रयाजान्यजति' इति प्रयाजवत्त्वं द्वितीयम्। 'स्रुच्यमाघार्य जुह्वा पशुमनक्ति' इत्याघाराञ्जने लिङ्गान्तरे। आलम्भो लिङ्गान्तरम्, इष्टावपि 'इषामालभते' इति दर्शनात्। तस्मात्–अस्ति पशावैष्टिकः। ८॥

( षष्ठे सवनीयपशावग्नीषोमीयधर्मातिदेशाधिकरणे सूत्रम्– )।

**दैक्षस्य चेतरेषु ॥ १३ ॥**

षष्ठाधिकरणमारचयति–

---

१ च. °च्यमामिघा°। २ च. इत्यभिघा°।

सवनीयादिके दार्शो दैक्षो, वा प्रकृतित्वतः।
आद्योऽन्त्यो लिङ्गतोऽन्यत्र विकृतिः प्रकृतिर्भवेत्॥ ९॥

सवनीयानुबन्ध्यनिरूढादिपशुषु दर्शपूर्णमाससंबन्धी विध्यन्तः। कुतः। दर्शस्य प्रकृतित्वात्। दैक्षोऽग्नीषोमीयपशुविध्यन्तः। दीक्षितेनानुष्ठेयेषु पशुविध्यन्तेषु प्रथमभावित्वात्। तस्य चाग्नीषोमीयस्येष्टिविकृतित्वान्न प्रकृतित्वमस्ति। अतो न तस्य विध्यन्तोऽतिदेशार्हः। इति प्राप्ते—

ब्रूमः—आलम्भोऽग्नीषोमीयपशौ लिङ्गम्। तच्च सवनीयादिष्वस्ति। तथा प्रातःसवनीयादिषु वपादिप्रचारोऽपरं लिङ्गम्। इष्टिं प्रति विकृतेरप्यन्यत्र सवनीयादौ प्रकृतित्वं न विरुध्यते। तस्मात्—अग्नीषोमीयपशोर्विध्यन्तं सवनीयादिपशुष्वतिदिशेत्॥ ९॥

(सप्तमे—ऐकादशिनपशौ समानधर्मातिदेशाधिकरणे सूत्रम्—)।

ऐकादशिनेषु सौत्यस्य द्वैरशन्यस्य दर्शनात्॥ १४॥

सप्तमाधिकरणमारचयति—

स्यादैकादशिने दैक्षात्सौत्याद्वाऽऽद्योऽस्तु पूर्ववत्।
रशनाद्वयसौत्यत्वविशेषाल्लिङ्गतोऽन्तिमः॥ १०॥

ऐकादशिनाः पशव एवमाम्नायन्ते—'आग्नेयः *कृष्णग्रीवः। सारस्वती मेषी। बभ्रुः सौम्यः। पौष्णः श्यामः। शितिपृष्ठो बार्हस्पत्यः। शिल्पो वैश्वदेवः। ऐन्द्रोऽरुणः। मारुतः कल्माषः। ऐन्द्राग्नः संहितः। अधोरामः सावित्रः। वारुणः कृष्णः। एकशितिपात्पे(त्पे)त्वः।' इति। यद्यप्यश्वमेधप्रकरण एते पठिताः, तथाऽपि ज्योतिष्टोमप्रकरणेऽप्येते विधीयन्ते—×'अत्रैवाऽऽग्नेयेन वापयति। मिथुनं सारस्वत्या करोति। रेतः सौम्येन दधाति। प्रजनयति पौष्णेन' इत्यादिना। तेष्वैकादशिनेषु दैक्षादग्नीषोमीयाद्विध्यन्तस्यातिदेशः स्यात्। कुतः। अग्नीषोमीयस्य पशुप्रकृतित्वेन पूर्वाधिकरणे निर्णीतत्वात्। इति चेत्।

मैवम्। सौत्यगतविशेषैर्लिङ्गैर्दर्शनात्। सुत्याकाले भवः सौत्यः सवनीयः पशुः।

*'कृष्णशीर्षा आग्नेयः' इति शाबरभाष्ये। ×'अन्येषां चाऽऽग्नेयेन वापयाति। मिथुनं सारस्वत्या करोति। प्रजनयति सौम्येन' इति शाबरभाष्ये।

१ ख. ज. झ. °बन्धा वि°। २ झ. पशुषु। ३ ज. झ. ञ. °पशोर्लिङ्ग°। ४ ज. ञ. °वनादि°। ५ क. °पशौ विध्य°। ६ क. ख. ञ. दैक्ष्यात्सौ°। ७ ख. एकशितिपा त्येत इ°। च. एकः शितिपृष्ठस्तु शृङ्गरहित इ°। ८ क. अत्रैवाऽऽग्नेयेन। ख. एवमाग्नेयेन। च. तत्रैवाऽऽग्नेयेन। ९ क. °क्षाग्नी°। १० ख. न। ११ ज. झ. °बद°।

तत्र चोदकप्राप्ता रशनैका । वाचनिकी द्वितीया । एतत्तु तृतीये निर्णीतम् । तदेतद्रशनाद्वयमग्नीषोमीयपशावसंभवात्सवनीयस्य विशेषलिङ्गमेकम् सुत्याकालीनत्वं द्वितीयम् । ते च द्वे लिङ्गे ऐकादशिनेषु दृश्येते । तत्रेदमाम्नायते—'द्वे द्वे रशने आदाय द्वाभ्यां द्वाभ्यां रशनाभ्यामेकैकं यूपं परिव्ययति' इति । सुत्याकालीनत्वं च तेष्वस्ति । ततः सौत्याद्धर्मातिदेशः ॥ १० ॥

( अष्टमे—पशुगणेष्वैकादशिनधर्मातिदेशाधिकरणे सूत्रम्— ) ।

तत्प्रवृत्तिर्गणेषु स्यात्प्रतिपशु यूपदर्शनात् ॥ १५ ॥

अष्टमाधिकरणमारचयति—

**ललामादिगणे दैक्षादैकादशिनतोऽथवा ।**

**आद्यो विशेषराहित्यान्न गणत्वाविशेषतः ॥ ११ ॥**

काम्यपशुकाण्डे पशुगणः श्रूयते—'वसन्ते ललामांस्त्रीन्वृषभानालभेत' इति । तत्र—रशनाद्वयादिविशेषलिङ्गाभावाद्दैक्षादग्नीषोमीयाद्धर्मातिदेशः । इति चेत् ।

न । गणत्वेन विशेषलिङ्गेनैकादशिनेभ्योऽतिदेशात् । ऐकादशिनानां पशुगणप्रकृतित्वं लिङ्गादवगम्यते । तथा हि—सौत्रामण्यां पशुगणं प्रकृत्यैवमाम्नायते—'यत्त्रिषु यूपेष्वालभेत । बहिर्धाऽस्मादिन्द्रियं वीर्यं दध्यात् । भ्रातृव्यमस्मै जनयेदेकयूप आलभते' इति । यद्यत्राग्नीषोमीयः प्रकृतिः स्यात्, तदा चोदकादेकस्यैव यूपस्य प्राप्तत्वेन यूपत्रयप्रसक्त्यभावात्तदुपन्यासेन दोषाभिधानम्, पुनरेकयूपविधानं च व्यर्थं स्यात् । ऐकादशिनानां प्रकृतित्वे तु प्रतिपशु पृथग्यूपातिदेशेन प्रसक्तिसद्भावात्तदुपपद्यते । तस्मात्पशुगणेष्वैकादशिनेभ्योऽतिदेशः ॥ ११ ॥

( नवमे—अव्यक्तपशौ सौमिकधर्मातिदेशाधिकरणे सूत्रम्— ) ।

अव्यक्तासु तु सोमस्य ॥ १६ ॥

नवमाधिकरणमारचयति—

**इष्टेः सोमस्य वा धर्मा विश्वजित्प्रमुखेष्विह ।**

**अविशेषादैच्छिकाः स्युः सोमस्याव्यक्तिसाम्यतः ॥ १२ ॥**

'विश्वजिता यजेत' 'अभिजिता यजेत' 'द्वादशाहेन यजेत' इत्यादिषु नियामकाभावादिष्टिसोमयोरन्यतरस्य धर्मा इच्छया ग्रहीतव्याः । इति चेत् ।

---

१ ज. झ. ञ. °तच्च तु° । २ ञ. °शः सिद्धः ॥ न° । ३ झ ञ. °दैष्टिकाः ।

मैवम् । अव्यक्तत्वलिङ्गेन सोमसाम्यात् । उत्पत्तिवाक्ये देवतानभिधानमव्यक्तिः । तस्मात्—सोमस्य धर्मानतिदिशेत् ॥ १२ ॥

( दशमे--अहर्गणेषु द्वादशाहिकधर्मातिदेशाधिकरणे सूत्रम् ) ।

गणेषु द्वादशाहस्य ॥ १७ ॥

दशमाधिकरणमारचयति—

अहर्गणेषु सोमस्य द्वादशाहस्य वाऽग्रिमः ।
पूर्ववद्दिनसंघादिविशेषैरन्तिमो भवेत् ॥ १३ ॥

द्विरात्रमारभ्य शतरात्रपर्यन्तेषु गवामयने च पूर्ववदव्यक्तिलिङ्गेन सोमस्य धर्माः । इति चेत् ।

न । विशेषलिङ्गसद्भावात् । द्वादशाहपदान्तर्गतोऽहःशब्दः षष्टिघटिकात्मकदिनपरः। द्विरात्रादिपदान्तर्गतो रात्रिशब्दश्च तादृशः । एतदेकं विशेषलिङ्गम् । अहःसंघो द्वितीयम् । द्वादश दीक्षास्तृतीयम्। तच्च गवामयने विद्यते । तत्र हि 'अभीन्धत एव दीक्षाभिः' इत्युक्त्वा दीक्षायुग्मानि षडुपन्यस्तानि—'द्वाभ्यां लोमावद्यन्ति । द्वाभ्यां त्वचम् । द्वाभ्यामसृक् । द्वाभ्यां मांसम् । द्वाभ्यामस्थि । द्वाभ्यां मज्जानम्' इति । तस्मात्—अहर्गणेषु द्वादशाहस्य धर्माः ॥ १३ ॥

(एकादशे—संवत्सरसत्रेषु गवामयनिकधर्मातिदेशाधिकरणे सूत्रम्) ।

गव्यस्य च तदादिषु ॥ १८ ॥

एकादशाधिकरणमारचयति--

द्वादशाहस्य गव्यस्य वाऽऽदित्याद्याङ्कितायने ।
पुरेवाऽऽद्यो गव्यधर्मा वत्सरत्वादिलिङ्गतः ॥ १४ ॥

आदित्यानामयनम्, गवामयनम्, तपस्विनामयनम्, इत्यादिष्वहर्गणत्वादिलिङ्गेन द्वादशाहस्य धर्माः । इति चेत् ।

न । गव्यलिङ्गस्य विशेषस्य सत्त्वात् । गवां संबन्धि गव्यम् । गवामयनमिति यावत् । तस्य धर्मा एतेषु प्राप्ताः । कुतः । संवत्सरसाध्यत्वसामान्यात् । षष्ट्युत्तरशतत्रयदिवससाध्यत्वनियमसद्भावाच्च । 'पत्नय उपगायन्ति' इत्येतस्य गवामयनगतपाहाम्नातिकधर्मस्य दर्शनाच्च । तस्मात्—गव्यस्य धर्माः ॥ १४॥

* 'पत्नय उपगायन्ति' इति शाबरभाष्ये ।

१ क. ज. °क्तलि° । ख. °क्तत्वेन लि° । २ ख. ञ. °भ्य दशरात्रपर्यन्तेष्वहर्गणेषु ग° । ३ क. ख. ञ. °गताहः° । ४ ज. झ इत्युक्तो । ञ. इत्युक्त्वा । ५ क. पत्नय । च. ज. झ. ञ. त्रय ।

(द्वादशे—निकायिनामुत्तरेषु पूर्वनिकायिधर्मातिदेशाधिकरणे सूत्रम्—)।

**निकायिनां च पूर्वस्योत्तरेषु प्रवृत्तिः स्यात् ॥ १९ ॥**

द्वादशाधिकरणमारचयति—

**साद्यस्के सौमिकः पूर्वधर्मो वाऽव्यक्तभावतः ।**
**सौमिकः स्यादेकनामैकसंघस्थत्वतोऽन्तिमः ॥ १५ ॥**

साद्यस्का इत्येकनामका एकसंघवर्तिनो बहवो यागाः श्रुताः। तथा—'साहस्राः' इति । तस्मिन्साद्यस्कसंघे प्रथमः साद्यस्को धर्मसंयुक्त आम्नातः । एवं साहस्रे-ष्वपि । तत्र—धर्मरहिते द्वितीयादिके साद्यस्के साहस्रे चाव्यक्तत्वसाम्यात्सौमिको धर्मः । इति चेत् ।

मैवम् । एकनामत्वैकसंघवर्तित्वाभ्यां विशेषलिङ्गाभ्यां प्रथसाद्यस्कप्रथमसा-हस्रधर्मस्यैवोचितत्वाद्द्वितीयादिसाद्यस्कादिष्वतिदेशः ॥ १५ ॥

( त्रयोदशे फलादीनामनतिदेशाधिकरणे सूत्राणि २०—२२ ) ।

**कर्मणस्तवप्रवृत्तित्वात्फलनियमकर्तृसमुदायस्यानन्वयस्तद्बन्धनत्वात् ॥ २० ॥ प्रवृत्तौ चापि तादर्थ्यात् ॥ २१ ॥ अश्रुतित्वाच्च ॥ २२ ॥**

त्रयोदशाधिकरणमारचयति—

**फलं च नियमः कर्ता संघः सौर्ये न वाऽग्रिमः ।**
**प्रयाजवन्न विध्यादिविध्यन्तत्वविभेदतः ॥ १६ ॥**

इष्टौ फलादयश्चत्वारः सन्ति । फलं—स्वर्गः, नियमः—यावज्जीवंकर्तृत्वम् , कर्ता—स्वर्गकामः, संघः—आग्नेयादीनां षण्णां साहित्यम् । त एते चत्वारः सौर्ये प्रयाजादिवदतिदेष्टव्याः । इति चेत् ।

न । वैषम्यात् प्रयाजादिराकाङ्क्षितविध्यन्तत्वादतिदिश्यते । विध्यादिस्तु नाऽऽकाङ्क्षितः । 'सौर्यं चरुं निर्वपेत्' इति मुख्यविधेः प्रत्यक्षश्रवणात् । अन्यथा विध्यन्तेऽपि कस्याऽऽकाङ्क्षा वर्धेत । तस्मात्—प्रधानकर्मणोऽनाकाङ्क्षितस्य विकृतावप्रवृत्तेस्तत्संबद्धाः फलादयोऽप्यनाकाङ्क्षितत्वान्नातिदिश्यन्ते ।

---

१ ज. झ. साद्यस्त्रे । ञ. साद्यस्के । २ ख. साद्यस्का । ३ ज. झ. °युत आ° । ४ क. ख. ज. ञ. °त्वात् । ५ च. जीविक° । ६ ज. झ. °कर्तृत्व° । ७ ञ. °दिस्त्वना° । ८ ख. °त्वाद्धो नाति° ।

( चतुर्दशे—गुणकामानां गोदोहनादीनामनतिदेशाधिकरणे सूत्राणि २३—२५ ) ।

गुणकामेष्वाश्रितत्वात्प्रवृत्तिः स्यात् ॥ २३ ॥
निवृत्तिर्वा कर्मभेदात् ॥ २४ ॥ अपि वाऽत-
द्विकारत्वात्क्रत्वर्थत्वात्प्रवृत्तिः स्यात् ॥ २५ ॥

चतुर्दशाधिकरणमारचयति—

गोदोहनाद्यस्ति नो वा भवेत्प्रणयनाश्रयात् ।
अनङ्गत्वादपेक्षाया अभावान्नातिदिश्यते ॥ १७ ॥

'चमसेनापः प्रणयेत् । गोदोहनेन पशुकामस्य' इति दर्शपूर्णमासयोः श्रुतं गोदोहनं सौर्येऽप्यतिदेष्टव्यम् । कुतः। तदाश्रयस्य प्रणयनस्य सद्भावात् । इति चेत् ।

मैवम् । क्रत्वङ्गतया चमस एव प्रणयनसाधनमपेक्षितम् । न त्वनङ्गं पुरुषार्थं गोदोहनम् । अतः फलनियमादिवन्नातिदेशः ॥ १७ ॥

( पञ्चदशे—सौर्ये चरावभिमर्शनद्वयस्य विकल्पाधिकरणे सूत्रम् ) ।

एककर्माणि विकल्पोऽविभागो हि चोदनैकत्वात् ॥ २६ ॥

पञ्चादशाधिकरणमारचयति—

स्पर्शद्वयं व्यवस्थाप्यं विकल्प्यं वा, व्यवस्थितिः ।
प्रकृताविव नो तत्रे तस्याः शाब्दत्ववर्जनात् ॥ १८ ॥

दर्शपूर्णमासयोर्हविषां स्पर्शनद्वयं व्यवस्थितमन्त्रद्वयसाध्यमाम्नातम्—'चतुर्होत्रा पौर्णमासीमभिमृशेत् । पञ्चहोत्राऽमावास्याम्' इति । 'पृथिवी होता'—इत्यादिमन्त्रश्चतुर्होता । 'अग्निर्होता'—इत्यादिमन्त्रः पञ्चहोता । तदेतदुभयं सौर्यादौ चोदकप्राप्तं सत्कालभेदेनानुष्ठानद्वये व्यवस्थापनीयम् । कुतः । प्रकृतौ पौर्णमास्यमावास्ययोः कालयोर्भेदेन व्यवस्थितत्वात् । इति चेत् ।

न । प्रकृतौ व्यवस्थाया आर्थिकत्वात्[१] । शाब्दस्यैवाङ्गत्वेनातिदेशार्हत्वात् । तस्मात्—उभयं विकृताविच्छया विकल्प्यताम्[४] ॥ १८ ॥

(षोडशे—सौर्यचरावाग्नेयधर्मातिदेशाधिकरणे सूत्राणि २७—३१ ) ।

लिङ्गसाधारण्याद्विकल्पः स्यात् ॥ २७ । ऐका-

१ ज. °त्र स्याच्च शब्द° । झ. °त्र स्याच्च शा° । २ ञ. तरय । ३ ज. झ. °त । श-ब्द° । ४ ज. झ. ञ. विकल्प्यते ।

स्याद्वा नियम्येत पूर्ववत्त्वाद्विकारो हि ॥ २८ ॥
अश्रुतित्वान्नेति चेत् ॥ २९ ॥ स्याल्लिङ्गभावात्
॥ ३० ॥ तथा चान्यार्थदर्शनम् ॥ ३१ ॥

षोडशाधिकरणमारचयति—

षट्सु कस्याप्युताऽऽग्नेयस्यैव सौर्येऽग्निमो यतः ।
अविशेषो, न देवैक्यादौषधद्रव्यकत्वतः ॥ १९ ॥

दर्शपूर्णमासगतेषु षट्सु यागेषु यस्य कस्यापि विध्यन्तः सौर्ये कर्तव्यः । 'अस्यैव' इति विशेषनियामकस्याभावात् । इति चेत् ।

न । देवतैक्यस्य नियामकत्वात् । सौर्यशब्दगततद्धितप्रत्ययविग्रहस्य 'सूर्यौ' इति द्विवचनेनापि कर्तुं शक्यत्वात्–देवतैक्यमनिश्चितम्--इति चेत् । न । विधिशेषार्थवादोक्तौ 'अमुमेवाऽऽदित्यम्' इत्येकवचनेन तद्व्यपदेशादाग्नेयार्थवादेऽपि 'सोऽग्नयेऽध्रियत' इत्येकवचनं व्यपदिष्टम् । अत आग्नेयस्यैव विध्यन्तः, न त्वग्नीषोमैन्द्राग्नयोः। यद्यपि--ऐन्द्रयोर्दधिपयसोः प्राजापत्य उपांशुयाजेऽपि देवतैक्यमस्ति, तथाऽपि—औषधद्रव्यकत्वमाग्नेये विशिष्यते । तस्मात्—तस्यैव विध्यन्तः ॥१९॥

(सप्तदश— { हविर्देवतयोः संनिपाते हविः— / सामान्यस्य बलीयस्त्वाधिकरणे } सूत्राणि ३२—३४)।

विप्रतिपत्तौ हविषा नियम्येत कर्मणस्तदुपास्यत्वात्
॥ ३२ ॥ तेन च कर्मसंयोगात् ॥ ३३ ॥ गुणत्वेन
देवताश्रुतिः ॥ ३४ ॥

सप्तदशाधिकरणमारचयति—

देवो बली हविर्वैन्द्रे पुरोडाशेऽग्रिमो यतः ।
देवो मुख्योऽन्तरङ्गं तद्धविः कर्मण्यतो बलि ॥ २० ॥

'ऐन्द्रमेकादशकपालं निर्वपेत्' इत्यत्र देवतासाम्येन सांनाय्यधर्मः प्राप्नोति। हविःसाम्येन पुरोडाशधर्मः । तत्र देवो बली । कुतः । मुख्यत्वात् । तच्च प्राथमिकेन पदेनोच्यमानत्वात्प्रातिपदिकार्थत्वाच्च द्रष्टव्यम् । हविस्तु द्वितीयेन पदेनोच्यते । तत्रापि—'एकादशसु कपालेषु संस्कृतः' इत्यस्मिन्नर्थे विहितस्य प्रत्ययस्यार्थः । अतो मुख्यत्वाद्देवतासामान्यं प्रबलम् । इति प्राप्ते—

१ ञ. °व सूर्येऽ° । २ झ. °ति । तत्र । वि° । ३ क. ज. विशेष्यते । ४ ज. स.

ब्रूमः—त्यज्यमानतया त्यागरूपे कर्मणि हविः प्रत्यासन्नम्। देवता तु मनसैवोद्दिश्यमानत्वाद्यागक्रियाया बहिरङ्गम्। यत्तु—मुख्यत्वमुक्तम्। तत्—शब्दोपाधिकम्। न तु स्वाभाविकम्। तस्मात्—स्वाभाविकेनान्तरङ्गत्वेन हविःसामान्यस्य प्रबलत्वात्पुरोडाशधर्मः कर्तव्यः। एवम्—'आग्नेयं पयः' इत्यत्र सांनाय्यधर्मो द्रष्टव्यः॥ २०॥

( अष्टादशे—शतकृष्णलाख्यहिरण्य औषधधर्मातिदेशाधिकरणे सूत्राणि ३५–३९ )।

हिरण्यमाज्यधर्म तेजस्त्वात्॥ ३५॥ धर्मानुग्रहाच्च॥ ३६॥ औषधं वा विशदत्वात्॥ ३७॥ चरुशब्दाच्च॥ ३८॥ तस्मिंश्च श्रपणश्रुतेः॥३९॥

अष्टादशाधिकरणमारचयति—

कृष्णलेषु घृतस्योत व्रीहेस्तेजोयुतेर्भवेत्।
घृतस्य नैवं वैशद्याच्चरुशब्दयुतेस्तथा॥ २१॥

'प्राजापत्यं घृते चरुं निर्वपेच्छतकृष्णलम्' इत्यत्र कृष्णलेषूपांशुयाजद्रव्यस्य घृतस्य धर्माः कर्तव्याः। कृष्णलाख्यसुवर्णस्य घृतस्य च तेजस्वित्वसाम्यात्। इति चेत्।

नैवम्। सुवर्णशकलव्रीह्योर्वैशद्यसाम्यात्। न हि घृतस्य प्रबलकाठिन्यविरलत्वादिरूपं वैशद्यमस्ति। चरुशब्दश्चौषधद्रव्यविषयः कृष्णलेषु प्रयुज्यमान औषधधर्मान्प्रापयति। तस्मात्—व्रीहिधर्माः कर्तव्याः॥ २१॥

( एकोनविंशे—मधूदक उपांशुयाजीयाज्यधर्मातिदेशाधिकरणे सूत्राणि ४०–४३ )।

मधूदके द्रवसामान्यात्पयोविकारः स्यात्॥४०॥ आज्यं वा वर्णसामान्यात्॥४१॥ धर्मानुग्रहाच्च॥ ४२॥ पूर्वस्य चाविशिष्टत्वात्॥ ४३॥

एकोनविंशाधिकरणमारचयति—

---

१ ख. च. ञ. °व्यघृ°। २ क. ब. °र्णसक°।

क्षीरस्याऽऽज्यस्य वा नीरे मधुन्यप्यग्रिमो यतः ।
द्रवत्वं न घृतेऽप्यस्य सत्त्वाद्वर्णाच्च संभवात् ॥ २२ ॥

चित्रायागे श्रूयते—'दधि, मधु, घृतम्, आपः, धानाः, तण्डुलाः, तत्संसृष्टं प्राजापत्यम्' इति । तत्र—मधुन्युदके च द्रवत्वसामान्येन सांनाय्यगतस्य पयसो धर्माः । इति चेत् ।

न । घृतेऽप्यग्निसंपर्केण द्रवत्वसद्भावाच्छुक्लवर्णत्वादाज्यधर्माणामुत्पवनादीनां संभवात्, पयोधर्माणां दोहनादीनामसंभवाच्चोपांशुयाजगतस्याऽऽज्यस्य धर्माः कर्तव्याः ॥ २२ ॥

इति श्रीमाधवीये जैमिनीयन्यायमालाविस्तरेऽष्टमाध्यायस्य प्रथमः पादः ॥ १ ॥

| | अत्र पादे | आदितः । |
|---|---|---|
| अधिकरणानि | १९ | ५१३ । |
| सूत्राणि | ४३ | १४३५ । |

( अथाष्टमाध्यायस्य द्वितीयः पादः ) ।

(प्रथमे—ऐष्टिकसौत्रामण्योरैष्टिकधर्मातिदेशाधिकरणे सूत्राणि १—९) ।

वाजिने सोमपूर्वत्वं सौत्रामण्यां च ग्रहेषु ताच्छब्द्यात् ॥ १ ॥ अनुवषट्काराच्च ॥ २ ॥ समुपहूय भक्षणाच्च ॥ ३ ॥ क्रयणश्रपणपुरोरुगुपयामग्रहणासादनवासोपनहनं च तद्वत् ॥ ४ ॥ हविषा वा नियम्येत तद्विकारत्वात् ॥ ५ ॥ प्रशंसा सोमशब्दः ॥ ६ ॥ वचनानीतराणि ॥ ७ ॥ व्यपदेशश्च तद्वत् ॥८॥ पशुपुरोडाशस्य च लिङ्गदर्शनम् ॥९॥

द्वितीयपादे प्रथमाधिकरणमारचयति—

सुरावाजिनयोः सोमस्येष्टेर्वा सोमशब्दतः ।
आद्यो मैवं हविःसाम्यात्सोमशब्दः प्रशस्तये ॥ १ ॥

सौत्रामण्यां सुराग्रहाः—'आश्विनं गृह्णाति' इत्यादिना । चातुर्मास्येषु वाजिन-

१ ज. झ. °त्वे सा° । २ ख. °हधर्माणाम° ।

यागः श्रुतः—' वाजिभ्यो वाजिनम् ' इति । तत्र—उभयत्र सोमस्य विध्यन्तः कर्तव्यः । कुतः—' सोमो वै वाजिनम् ', ' सुरा सोमः ' इति वाजिने सुरायां च सोमशब्दप्रयोगात् । सोमशब्दश्चाग्निहोत्रशब्दवद्धर्मातिदिशति । इति चेत् ।

मैवम् । ऐष्टिकहविःसाम्यात् । औषधविकृता सुरा । सांनाय्यविकृतं वाजिनम् । तस्मात्—ऐष्टिको विध्यन्तः । सोमशब्दस्त्वर्थवादगतत्वान्नाग्निहोत्रादिनामवदतिदेशकः । यदि—वाजिनस्य प्रतिपत्तिकर्मत्वान्नास्ति धर्मापेक्षा, तर्हि—तस्मिन्नंशे कृत्वाचिन्ताऽस्तु ॥ १ ॥

( द्वितीये—पशौ सांनाय्यधर्मातिदेशाधिकरणे सूत्राणि १०—१४ ) ।

पशुः पुरोडाशविकारः स्याद्देवतासामान्यात् ॥ १० ॥ प्रोक्षणाच्च ॥ ११ ॥ पर्यग्निकरणाच्च ॥ १२ ॥ सांनाय्यं वा तत्प्रभवत्वात् ॥ १३ ॥ तस्य च पात्रदर्शनात् ॥ १४ ॥

द्वितीयाधिकरणमारचयति—

पुरोडाशस्य सांनाय्यस्य वा धर्मः पशौ यतः ।
देवैक्यमाद्यस्तस्माज्जो हविर्जन्मादिसाम्यतः ॥ २ ॥

अग्नीषोमीये पशावग्नीषोमीयपुरोडाशस्य धर्मः कार्यः । कुतः । देवतैक्यात् । इति चेत् ।

मैवम् । सांनाय्यं पशोरुत्पन्नम्, पशुरपि पशोरुत्पन्नः । श्रपणार्थमुखा सांनाय्यपश्वोः समा । ' हविःसाम्यं च बलीयः ' इत्युक्तम् । तस्मात्—सांनाय्यस्य धर्मः ॥ २ ॥

(तृतीये—पशौ पयोधर्मातिदेशाधिकरणे सूत्राणि १५—१८ )।

दध्नः स्यान्मूर्तिसामान्यात् ॥ १५ ॥ पयो वा कालसामान्यात् ॥ १६ ॥ पश्वानन्तर्यात् ॥ १७ ॥ द्रवत्वं चाविशिष्टम् ॥ १८ ॥

तृतीयाधिकरणमारचयति—

दध्नोऽत्र पयसो वाऽऽद्यो घनत्वस्य समत्वतः ।
द्रवत्वासत्तिकालेभ्यो धर्मः स्यात्पयसः पशौ ॥ ३ ॥

---

१ अ. °रा वा सो° । २ ख. °त्र्यधर्मव° । ३ च. °शब° । ४ च. °य्यधर्माः । तृ° । ५ ज. दध्नाऽत्र ।

सांनाय्यधर्मवत्यस्मिन्पशौ घनत्वेन दध्नो धर्मः । इति चेत् ।

मैवम् । 'द्रवति गच्छति' इति द्रवत्वं पशावस्ति । पयसि च तद्विद्यते । प्रत्यासन्नं च पयः। साक्षात्पशुप्रभवत्वात् । दधि तु पयसा व्यवहितम्, एकाहकालीने च पशुपयसी । द्व्यहकालीनं दधि । तस्मात्—पशौ पयसो धर्मः कार्यः॥३॥

(चतुर्थे–आमिक्षायां पयोधर्मातिदेशाधिकरणे सूत्राणि १९–२३)।

आमिक्षोभयभाव्यत्वादुभयविकारः स्यात् ॥ १९ ॥ एकं वा चोदनैकत्वात् ॥ २० ॥ दधिसंघातसामान्यात् ॥ २१ ॥ पयो वा तत्प्रधानत्वाल्लोकवत्, दध्नस्तदर्थत्वात् ॥ २२ ॥ धर्मानुग्रहाच्च ॥ २३ ॥

चतुर्थाधिकरणमारचयति—

द्वयोर्दध्नोऽथ पयस आमिक्षायां द्विजत्वतः ।
द्वयोर्दध्नो घनत्वेन प्राधान्यात्पयसो भवेत् ॥ ४ ॥

'तप्ते पयसि दध्यानयति सा वैश्वदेव्यामिक्षा'[1] इति श्रुतायामामिक्षायां सांनाय्यगतयोर्दधिपयसोर्द्वयोर्धर्मः कार्यः। कुतः। आमिक्षाया उभयजन्यत्वात्। इत्येकः पक्षः।

घनत्वसाम्यस्याऽऽधिक्याद्दधिधर्मः । इति द्वितीयः पक्षः ।

पयस्यामिक्षामुत्पादयितुं सहकारित्वेन दध्यानीयते । ततः पयस एव मुख्यकारणत्वात्तद्धर्म एव न्याय्यः ॥४॥

( पञ्चमे–द्वादशाहे सत्राहीनयोर्व्यवस्थया धर्मातिदेशाधिकरणे–सूत्राणि २४–२८ )।

सत्रमहीनश्च द्वादशाहः, तस्योभयथा प्रवृत्तिरैककर्म्यात् ॥ २४ ॥ अपि वा यजतिश्रुतेरहीनभूतप्रवृत्तिः स्यात्, प्रकृत्या तुल्यशब्दत्वात् ॥ २५ ॥ द्विरात्रादीनामैकादशरात्रादहीनत्वं

---

१ ख. च. °दध्यास्ति । २ ज. झ. ञ. °त्—पय° । ३ ज. झ. ञ. °त्वस्य सा° ।

यजातिचोदनात् ॥ २६ ॥ त्रयोदशरात्रादिषु सत्रभूत-
स्तेष्वासनोपायिचोदनात् ॥ २७ ॥ लिङ्गाच्च ॥ २८ ॥

पञ्चमाधिकरणमारचयति—

अहीनसत्रयोर्द्वादशाहान्तावव्यवस्थितौ ।
व्यवस्थितौ वाऽविशेषादाद्योऽन्त्यः स्वस्वलिङ्गतः ॥ ५ ॥

प्रायणीयः, अतिरात्रः, पृष्ठ्यः, षडहः, त्रयश्छन्दोमाः, अविवाक्यमहः, उदयनीयोऽतिरात्रः । इत्येवमहर्गणो द्वादशाहः । स च याज्ञिकप्रसिद्ध्या द्विविधः—सत्रम्, अहीनश्चेति । संज्ञाव्यवस्थया द्वयोर्धर्मा आम्नाताः—'एको द्वौ बहवो वाऽहीनेन यजेरन्' । ×'अदीक्षिता याजयेयुः । गृहपतिसप्तदशाः स्वयमृत्विजो ब्राह्मणाः सत्रमुपेयुः' इत्यादयः । ततो द्विविधो द्वादशाहस्य विध्यन्तः । 'द्वादशाहश्चाहर्गणानां प्रकृतिः' इत्युक्तम् । अहर्गणाश्च द्विविधाः—द्विरात्रादयः, एकादशरात्रान्ता अहीनाः । त्रयोदशरात्रादीनि च सत्राणि । तत्राहीनसत्रयोर्द्वादशाहविध्यन्तावव्यवस्थया प्राप्नुतः । कुतः । व्यवस्थापकविशेषाभावात् । इति चेत् ।

मैवम् । तत्तल्लिङ्गस्य व्यवस्थापकत्वात् । 'आसीरन्' 'उपेयुः' इति चोदनाद्वयम्, यजमानबहुत्वनियमः, ऋत्विग्यजमानैक्यं च सत्रलिङ्गम् । यजतिचोदना, यजमानबहुत्वविकल्पः, ऋत्विग्यजमानभेदश्चाहीनलिङ्गम् । एतच्च दशमाध्याये ( ६ पादे, अधि० १६ ) एवं विचारयिष्यते—

"अहीनसत्रयोर्लिङ्गभेदो नास्त्यस्ति वा नहि ।
आवृत्तिसाम्यादाद्यः स्यादिज्यासिभ्यां तयोर्भिदा " इति ।

एतच्च लिङ्गद्वयं द्वादशाहे श्रूयते—' द्वादशाहेन प्रजाकामं याजयेत् ' इति, ' द्वादशाहमृद्धिकामा उपेयुः ' इति, ' द्वादशाहमृद्धिकामा आसीरन् ' इति च । द्विरात्रादिषु यजतिचोदनैव—' द्विरात्रेण यजेत ' 'त्रिरात्रेण यजेत' इत्यादि । त्रयोदशरात्रादिषु सत्रलिङ्गमेव—' त्रयोदशरात्रमृद्धिकामा उपेयुः ' इति, 'चतुर्दशरात्रं प्रतिष्ठाकामा आसीरन् ' इति च । तस्मात्—यथालिङ्गं धर्मव्यवस्था ॥ ५ ॥

---

× ' तान्दीक्षिता याजयेयुः ' इति शाबरभाष्ये ।

---

१ क. ज. झ. °शाहगो न व्य° । २ क. ख. ज. झ. ञ. °न् । न दी° । ३ °शाः सत्रमासीरन् । स्व° । ४ ख. ज. झ. द्विविधौ । ५ ख. ज. झ. विध्यन्तौ । ६ ञ. झ. °ध्यन्तौ च व्य° । ७ क. तत्र लिङ्ग° । ८ क. ञ. एव । ९ क. ख. ञ. °लक्ष्मभे° । १० क. ज. झ. °दावस्य यज्या° ।

( षष्ठे पञ्चदशरात्रादिषु सत्रधर्मातिदेशाधिकरणे सूत्राणि २९–३२)।

अन्यतरतोऽतिरात्रत्वात्पञ्चदशरात्रस्याहीनत्वं कुण्ड-पायिनामयनस्य च तद्भूतेष्वहीनत्वस्य दर्शनात् ॥२९॥ अहीनवचनाच्च ॥ ३० ॥ सत्रे वोपायिचोद-नात् ॥ ३१ ॥ सत्रलिङ्गं च दर्शयति ॥ ३२ ॥

षष्ठाधिकरणमारचयति—

किं पञ्चदशरात्रस्य कुण्डपाय्ययनस्य च ।
अहीनत्वं सत्रता वाऽतिरात्रैकत्वतोऽग्रिमः ॥ ६ ॥
उपायिलिङ्गतः सत्रे प्रबलं विधिवाक्यगम् ।
सत्रान्तरेभ्योऽहीनत्वालिङ्गेनैतत्प्रशस्यते ॥ ७ ॥

पञ्चदशरात्र एवंविधः—' त्रिवृदाग्निष्टुदाग्निष्टोमस्त्रिरात्रो दशरात्र उदयनीयोऽ-तिरात्रः ' इति । कुण्डपायिनामयनस्योपक्रमे—मासाग्निहोत्रम्, अवसाने—दश-रात्रः, महाव्रतम्—उदयनीयोऽतिरात्रः, इति । तयोरुभयोरादावतिरात्रो नास्ति, अन्ते तु विद्यते । तदिदमन्यतरतोऽतिरात्रत्वमहीनलिङ्गम् । संप्रतिपन्नाहीनेषु तद्दर्शनात् । श्रुतिश्च भवति—' यदन्यतरतोऽतिरात्रस्तेनाहीनः ' इति । तस्मात्—सत्रलिङ्गस्योभयतोतिरात्रत्वस्याभावादहीनलिङ्गसद्भावाच्च तयोरहीनत्वम् । इति चेत् ।

मैवम् । उपायिचोदनारूपस्य सत्रलिङ्गस्य दर्शनात् । सत्रे—' * यज्ञे यं काममिच्छन्ति त एनं पञ्चदशरात्रमुपेयुः ' इति । कुण्डपायिनामयनेऽपि—भूति-कामा उपेयुः ' इति । इदं च लिङ्गं विधिवाक्यगतत्वात्प्रबलम् । या तु पञ्च-दशरात्रे सलिङ्गा श्रुतिरुदाहृता, तया सत्रान्तरेभ्योऽधिकत्वेन प्रशस्यते—' इत-राणि केवलसत्राण्येव । पञ्चदशरात्रस्तु स्वरूपेण सत्ररूपोऽप्यन्यातिरात्रत्व-लिङ्गेन ' अहीनः ' इत्यपि व्यवहारमर्हति ' इति । तस्मात्—सत्रे एते उभे । तयोः सत्रधर्मानेवातिदिशेत् ॥ ६ ॥ ७॥

इति श्रीमाधवीये जैमिनीयन्यायमालाविस्तरेऽष्टमाध्यायस्य

द्वितीयः पादः ॥ २ ॥

| | अत्र पादे | आदितः । |
|---|---|---|
| अधिकरणानि | ६ | ५१९ । |
| सूत्राणि | ३२ | १४६७ । |

* ' य एव भूतिकार्यमिच्छन्तः ' इति शाबरभाष्ये ।

१ ज. झ. °पाधिलि° । २ ज. °तोऽत्रिरा° । ३ ज. यद्यन्य° । ४ ज. झ. °पाधिभ्यो° । ५ ज. झ. °त्रे—"यं । ६ स. सल्लिङ्गा । ज. झ. ञ. सत्रलि° । ७ ज. झ. तथा ।

( अथाष्टमाध्यायस्य तृतीयः पादः )।

( प्रथमे—शुचिदेवक आग्नेयस्य, आग्नावैष्णवे चाग्नीषोमीयस्य, धर्मातिदेशाधिकरणे सूत्रे १—२ )।

हविर्गणे परमुत्तरस्य देशसामान्यात् ॥१॥ देवतया वा नियम्येत शब्दवत्त्वादितरस्याश्रुतित्वात् ॥२॥

तृतीयपादे प्रथमाधिकरणमारचयति—

आग्नावैष्णव आग्नेयविकृतिः शुचिदेवकः।
अग्नीषोमीयविकृतिरथवा व्यत्ययो द्वयोः ॥ १ ॥
प्रथमत्वद्वितीयत्वसाम्यादाद्योऽन्तिमो भवेत्।
द्विदेवत्वैकदेवत्वसाम्यस्य श्रुतिमत्त्वतः ॥ २ ॥

हविर्गणः क्वचिच्छ्रूयते—"आग्नावैष्णवमेकादशकपालं निर्वपेत्। ×सरस्वत्यै चरुम्। बार्हस्पत्यं चरुम्" इति। गणान्तरं चैवमाम्नायते—'अग्नये पावकाय, अग्नये शुचयेऽष्टाकपालम्' इति। तत्र—आग्नावैष्णवस्य प्रथमस्थानत्वादाग्नेयविकृतित्वं युक्तम्। शुचिदेवकस्य द्वितीयस्थानत्वादग्नीषोमीयविकृतित्वम्। इति चेत्। न। द्विदेवत्वादिसाम्यस्य श्रूयमाणत्वेनार्थसिद्धस्थानतो बलीयस्त्वात्। तस्मात्—आग्नावैष्णवोऽग्नीषोमीयविकृतिः। शुचिदेवक आग्नेयविकृतिः ॥१॥२॥

( द्वितीये—जनकसप्तरात्रे त्रिवृत्स्वहःसु द्वादशाहधर्मातिदेशाधिकरणे सूत्राणि ३—५ )।

गणचोदनायां यस्य लिङ्गं तदावृत्तिः प्रतीयेताऽऽग्नेयवत् ॥ ३ ॥ नानाहानि वा संघातत्वात्प्रवृत्तिलिङ्गेन चोदनात् ॥४॥ तथा चान्यार्थदर्शनम् ॥५॥

द्वितीयाधिकरणमारचयति—

त्रिवृत्स्वहःस्वादिमस्य द्वादशाहस्य वाऽग्रिमः।
शाब्दात्त्रिवृत्त्वतोऽन्त्यः स्यादहःसंख्यानुसारतः ॥ ३ ॥

×'सारस्वतं चरुम्' इति शाबरभाष्ये।

१ ख. °ये पवमानायाग्नये शुचयेऽग्नये पावकायाष्टा°। च. ज. झ. ञ. °ये पवमानायाग्नये पा°। २ ख. च. झ. ञ. °स्य तृती°। ३ क. च. ज. झ. °संख्यानु°।

चतुश्चत्वारिंशद्रात्रे श्रूयते—'चत्वारि त्रिवृन्त्यहान्यग्निष्टोममुख्यानि' इति। तत्र—त्रिवृत्स्तोमविशिष्टं यत्प्रथममहः, तस्य विध्यन्त उत्तरेषु त्रिष्वहःसु कर्तव्यः। पूर्वन्यायेन शाब्दस्य त्रिवृत्त्वसामान्यस्य विद्यमानत्वात्। इति चेत्।

मैवम्। तदानीमेकस्यैवाह्नश्चतुरावृत्त्या चत्वार्यहानि न सिध्येयुः। किंच—'अग्निष्टोममुख्यानि' इत्याद्यस्यैकस्यैवाग्निष्टोमत्वं विधीयते। त्वत्पक्षे तूत्तरेषामपि त्रयाणामग्निष्टोमत्वान्मुख( ख्य )शब्दो नोपपद्यते। ततो द्वादशाहस्य विध्यन्तो न्याय्यः। द्वादशाहे प्रथमे षडहे त्रिवृत्, पञ्चदशः, सप्तदशः एकविंशः, इत्येतेषां चतुर्णामह्नां परस्परविलक्षणानां संघत्वयोग्यानां विध्यन्ते स्वीकृते सति नोक्तदोषः। ननु—पञ्चदशानां त्रिवृत्त्वमयुक्तम्—इति चेत्। वचनेन स्तोममात्रबाधात्। तद्व्यतिरिक्तस्तु विध्यन्तोऽतिदेष्टव्यः॥ ३॥

( तृतीये—षट्त्रिंशद्रात्रे षडहधर्मातिदेशाधिकरणे सूत्रे ६–७ )।

कालाभ्यासेऽपि बादरिः कर्मभेदात्॥ ६॥ तदावृत्तिं तु जैमिनिरह्नामप्रत्यक्षसंख्यत्वात्॥ ७॥

तृतीयाधिकरणमारचयति—

चत्वारः षडहा द्वादशाहस्य षडहस्य वा।
चतुर्विंशतिसंघार्थमाद्योऽन्त्यः षडहश्रुतेः॥ ४॥

चतुर्विंशद्रात्रे श्रूयते—'षडहा भवन्ति चत्वारो भवन्ति' इति। तत्र—अहःसंज्ञकानां सोमयागानां संख्याविशेषः षडहपदान्तर्गतेन षट्शब्देनाभिधीयते। सा च षट्संख्या पुनश्चतुःसंख्यया विशिष्यमाणा चतुर्विंशतिसंख्याकानामह्नां संघे पर्यवस्यति। अहःसंघस्य च प्रकृतिर्द्वादशाहः। अतस्तल्लिङ्गस्य संघत्वस्य दर्शनात्तस्यैव विध्यन्तः प्रवर्तते। यदि सकृत्प्रवृत्त्या चतुर्विंशतिसंख्या न पूर्येत तर्हि यावत्पूर्ति सोऽभ्यस्यताम्। इति प्राप्ते—

ब्रूमः—षड्भिरहोभिर्निष्पाद्यः कर्मविशेषः षडहशब्दवाच्यः। ते च कर्मविशेषाश्चत्वारः। तथा सति चतुर्विंशतिशब्दो नात्र शाब्दः। ततः शाब्दस्य षडहनामकस्य कर्मविशेषस्य विध्यन्तो न्याय्यः। यदि विलक्षणाः षडहाश्चत्वारो न स्युः, तर्ह्येक एव चतुरभ्यस्यताम्। त्वत्पक्षेऽपि द्वादशाहोऽभ्यस्यते। तस्मात्—षडहत्वविशेषलिङ्गात्तस्यैव विध्यन्तः॥४॥

---

१ ख. च. 'त्रवशरा°'। २ ख. च. ञ. 'मुखानि'। ३ ख. च. ञ. मुखानि। ४ ञ. °मस्य वा°। ५ ज. झ. °संख्यावि°। ६ ख. दि(वि)शिष्य° ७ ख. च. ञ. °त्वलि°।

(चतुर्थे-संस्थाशब्देषु द्वादशाहिकधर्मातिदेशाधिकरणे सूत्रे ८-९)।

संस्थागणेषु तदभ्यासः प्रतीयेत कृतलक्षणग्रह-
णात् ॥ ८ ॥ अधिकाराद्वा प्रकृतिस्तद्विशिष्टा
स्यादभिधानस्य तन्निमित्तत्वात् ॥ ९ ॥

चतुर्थाधिकरणमारचयति—

* शतोक्थ्ये ज्योतिषो यद्वा द्वादशाहस्य नामतः।
आद्यः समाप्तिनामैतत्संघत्वादन्तिमो भवेत् ॥ ५ ॥

शतोक्थ्यं भवति। शतातिरात्रं भवति। पञ्चाग्निष्टोमः पञ्चोक्थ्यः' इत्यादयः श्रूयन्ते। तेषु ज्योतिष्टोमस्य विध्यन्तः कार्यः। कुतः। उक्थ्यः, षोडशी, अतिरात्रः, अग्निष्टोमः, इत्यादीनां ज्योतिष्टोमनामत्वात्। इति चेत्। मैवम्। उक्थ्यादीनि स्तोत्राणि। तथा सति यस्य कर्मणः समाप्तिर्येन स्तोत्रेण क्रियते, तस्मिन्कर्मणि संस्थानिमित्तक उक्थ्यादिशब्दो वर्तते। ततो द्वादशाहगतेष्वहःसूक्थ्यादिनामसंभवात्संघत्वलिङ्गेन द्वादशाहस्य विध्यन्तो भवति। तत्र—आद्यन्तौ प्रायणीयोदयनीयौ वर्जयित्वा मध्यवर्तिनो दशरात्रस्य विध्यन्तो द्विरात्रादिविकृतिष्वतिदेष्टव्यः, इति दशमाध्याये वक्ष्यते। तथा सत्यत्र दशरात्रो दशकृत्वोऽभ्यस्यमानः प्रत्यहमुक्थ्यस्तोत्रेण समाप्यमानः शतोक्थ्यनामतामापद्यते। एवमितरत्रापि योज्यम् ॥ ५ ॥

(पञ्चमे-शतोक्थ्यादौ ज्योतिष्टोमात्स्तोत्रोपचयाधिकरणे सूत्रे १०-११)।

गणादुपचयस्तत्प्रकृतित्वात् ॥ १० ॥ एकाहाद्वा
तेषां समत्वात्स्यात् ॥ ११ ॥

पञ्चमाधिकरणमारचयति—

शतोक्थ्यादौ स्तोत्रवृद्धिर्गणादेकाहतोऽथवा।
आद्यो गणविकारत्वादन्त्योऽत्र स्तोत्रजन्यतः ॥ ६ ॥

पूर्वोदाहृते शतोक्थ्ये, शतातिरात्रे च स्तोत्रवृद्धिरपेक्षिता। तथा हि ज्योति-

*शाबरभाष्ये, ख. च. ज. झ. ञ. पुस्तकेषु च, यकारविशिष्ट एवोक्थ्यशब्दो दृश्यते। क. पुस्तके, माधवीयधातुवृत्तौ च—'उक्थं यज्ञायज्ञियात्परं साम। "पातॄतुदिवचिरिचिसिचिभ्यस्थक्" इति थक्' इति वचधातुग्रन्थे च यकाररहित एवोक्थशब्दो दृश्यते।

१ ज. झ. °णीयो द°।

ष्टोमः सप्तसंस्थः। तत्राग्निष्टोमः प्रथमसंस्था। तत्र द्वादश स्तोत्राणि। प्रातः-सवने—बहिष्पवमानस्तोत्रमेकम्, चत्वार्याज्यस्तोत्राणि। माध्यंदिनसवने माध्यंदिनः पवमान एकं स्तोत्रम्, चत्वारि पृष्ठस्तोत्राणि। तृतीयसवने -आर्भवः पवमान एकं स्तोत्रम्, यज्ञायज्ञियसामसाध्यमाग्निष्टोमस्तोत्रमपरम्। तेन स्तोत्रेणायं प्रकृतिरूपो यज्ञः संतिष्ठते। तद्विकृतिषु प्रथमायामाग्निष्टोमस्तोत्रादूर्ध्वं त्रीण्युक्थ्यस्तोत्राणि भवन्ति। तैः सा विकृतिः संतिष्ठते—ततोऽप्यूर्ध्वं षोडशेन स्तोत्रेणान्या विकृतिः संतिष्ठते। एवं विकृत्यन्तरेषु द्रष्टव्यम्। तस्मात्--समाप्तिनिमित्तान्यग्निष्टोमोक्थ्य-षोडश्यतिरात्रादिनामानि। एतदेवोपजीव्य पूर्वाधिकरणे द्वादशाहगतानामह्नामु-क्थ्यादिनामसंभवात्तदीयदशरात्रविध्यन्तः शतोक्थ्यादावतिदिष्टः। तस्य च दशरा-त्रस्याऽऽद्यन्तौ द्वावग्निष्टोमौ। तथा सति दशकृत्वस्तदभ्यासे विंशतिरग्निष्टोमाः संप-द्यन्ते। तेषामुक्थ्यत्वं संपादयितुं प्रत्यग्निष्टोममुक्थ्यनामकं स्तोत्रं वर्धनीयम्। अन्य-था शतोक्थ्यत्वं न स्यात्, किंत्वशीत्युक्थ्यत्वमेव स्यात्। एवं सति—अतिरात्रेऽपि प्रत्यहमतिरात्रत्वप्रयोजकं स्तोत्रं वर्धनीयम्। तत्र गणत्वेन द्वादशाहविकारत्वा-त्तदीयस्तोत्रातिदेशः। इति प्राप्ते—

ब्रूमः—उक्थ्यादिस्तोत्राण्येकाहज्योतिष्टोम उत्पन्नानि। तस्मात्—एकाहाद्यथा द्वादशाहेऽतिदिश्यन्ते, तथा शतोक्थ्येऽप्येकाहादेवातिदिश्यन्ताम्। अन्यथा 'भि-क्षुको भिक्षुकान्तराल्लिप्सते' इति न्याय आपतेत्। या त्वतिदेशपरम्परा तत्र त-त्रोदाहृता, तत्र सर्वत्र प्रबलं लिङ्गमुपन्यस्तम्। इह तु गणत्वमहर्गतम्, न तु स्तोत्रगतम्। तस्मात्—द्वादशाहीयस्तोत्रगतान्विशेषानुपेक्ष्य तद्विशेषरहितानि स्तो-त्राणि ज्योतिष्टोमादतिदेष्टव्यानि ॥६॥

(षष्ठे—गायत्रीषूत्पत्तिगायत्रीणामतिदेशाधिकरणे सूत्राणि १२—३६)।

गायत्रीषु प्राकृतीनामवच्छेदः प्रवृत्त्याधिका-रात्, संख्यात्वादग्निष्टोमवद्व्यतिरेकात्तदाख्य-त्वम् ॥१२॥ तन्नित्यवच्च पृथक्सतीषु तद्वचनम् ॥ १३ ॥ न विंशतौ दशेति चेत् ॥ १४ ॥ ऐकसंख्यमेव स्यात् ॥ १५ ॥ गुणाद्वा द्रव्य-शब्दः स्यादसर्वविषयत्वात् ॥ १६॥ गोत्ववच्च

१ ज. झ °काह ज्यो°। २ ज. झ. °काह्नि°।

समन्वयः ॥१७॥ संख्यायाश्च शब्दवत्त्वात् ॥१८॥ इतरस्याश्रुतित्वाच्च ॥ १९ ॥ द्रव्यान्तरे निवेशादुक्थ्यलोपैर्विशिष्टं स्यात् ॥ २० ॥ अशास्त्रलक्षणत्वाच्च ॥२१॥ उत्पत्तिनामधेयत्वाद्भक्त्या पृथक्सतीषु स्यात् ॥२२॥ वचनमिति चेत् ॥ २३ ॥ यावदुक्तम् ॥२४॥ अपूर्वे च विकल्पः स्याद्यदि संख्याविधानम् ॥ २५ ॥ ऋग्गुणत्वान्नेति चेत् ॥ २६ ॥ तथा पूर्ववति स्यात् ॥ २७ ॥ गुणावेशश्च सर्वत्र ॥ २८ ॥ निष्पन्नग्रहणान्नेति चेत् ॥ २९ ॥ तथेहापि स्यात् ॥ ३० ॥ यदि वाऽविशये नियमः प्रकृत्युपबन्धाच्छब्देष्वपि प्रसिद्धः स्यात् ॥ ३१ ॥ दृष्टः प्रयोग इति चेत् ॥ ३२ ॥ तथा शरेष्वपि ॥ ३३ ॥ भक्त्येति चेत् ॥ ३४ ॥ तथेतरस्मिन् ॥ ३५ ॥ अर्थस्य चासमाप्तत्वान्न तासामेकदेशे स्यात् ॥ ३६ ॥

षष्ठाधिकरणमारचयति—

**अहर्गायत्रमित्यत्र वर्णलोप ऋचोऽथवा ।**
**आद्यः संख्योक्तितो मैवं गद्यादौ तत्प्रसङ्गतः ॥ ७ ॥**

'वाजपेयेनेष्ट्वा बृहस्पतिसवेन यजेत' इति श्रुतम् । तत्रेदमपरमाम्नातम्—'गायत्रमेतदहर्भवति' इति । तस्मिन्नेकाहे बृहस्पतिसवरूपे प्रकृतिभूताज्ज्योतिष्टोमादानाच्छन्दांसि त्रिष्टुबादीन्यतिदिष्टानि । तेष्वधिकाक्षराणि विलोप्य चतुर्विंशत्यक्षराणि परिशेष्य गायत्रीत्वं संपादनीयम् । कुतः । 'चतुर्विंशत्यक्षरा गायत्री' इत्यक्षरसंख्यायास्तच्छब्दप्रवृत्तिनिमित्तत्वश्रवणात् । इति चेत् ।

मैवम् । अतिप्रसङ्गात् । कविभिर्निर्मिते गद्ये, तत्तद्देशीयभाषासु च तथाक्षरसंख्यया गायत्रीत्वं केन वार्येत । तस्मात्[1]—दशतय्यामुत्पन्नासु चतुर्विंशत्यक्षरास्ववर्तमानः कश्चिदवान्तरजातिविशेषस्तत्प्रवृत्तिनिमित्तम् । तस्मात्—तासामागमः कर्तव्यः ॥ ७ ॥

---

१ क. ख. ज. झ. ञ. °त्—दाश°।

इति श्रीमाधवीये जैमिनीयन्यायमालाविस्तरेऽष्टमाध्यायस्य तृतीयः पादः ॥ ३ ॥

---

| | अत्र पादे | आदितः । |
|---|---|---|
| अधिकरणानि | ६ | ५२५ । |
| सूत्राणि | ३६ | १५०१ । |

( अथाष्टमाध्यायस्य चतुर्थः पादः ) ।

( प्रथमे-दर्विहोमस्य कर्मनामधेयताधिकरणे सूत्रम्- ) ।

दर्विहोमो यज्ञाभिधानं होमसंयोगात् ॥ १ ॥

चतुर्थपादे प्रथमाधिकरणमारचयति-

दर्विहोमो गुणो नाम वा गुणो दधिहोमवत् ।
गुणासंभवतो लोकवेदयोर्नाम तद्भवेत् ॥ १ ॥

इदमाम्नायते-'यदेकया जुहुयाद्दर्विहोमं कुर्यात्' इति । तत्र 'दर्व्या होमो दर्विहोमः' इति तृतीयासमासे सति 'दध्ना जुहोति' इत्यादाविव होमानुवादेन गुणविधित्वसंभवाद्दर्व्याख्यो गुणो विधीयते । इति चेत् ।

मैवम् । न तावल्लोके स्थालीपाकाष्टकादिहोमे दर्विगुणोऽपि विधातुं शक्यः। लौकिकशिष्टाचारादेव तत्र साधनप्राप्तेः । नापि वेदसिद्धाग्निहोत्रनारिष्ठादिहोमे । तत्र विहितजुह्वादिबाधप्रसङ्गात् । तस्मात् 'दर्विहोमः' इति कर्मनामधेयम् ॥ १ ॥

( द्वितीये-दर्विहोमस्य लौकिकवैदिकोभयकर्मनामधेयताधिकरणे सूत्रे २-३ ) ।

स लौकिकानां स्यात्कर्तुस्तदाख्यत्वात् ॥ २ ॥
सर्वेषां वा दर्शनाद्वास्तुहोमे ॥ ३ ॥

द्वितीयाधिकरणमारचयति-

लौकिकस्योत सर्वस्य नामाऽऽद्योऽम्बष्ठवाक्यतः ।
निमित्तसाम्याद्वेदेऽपि तदुक्तेः सर्वनाम तत् ॥ २ ॥

---

१ ख. च. ञ. °लोकसिद्धे स्था° । २ च. झ. °सिद्धेऽग्नि° । ३ ख. च. °ति ना° । ४ ञ. °बो °वाऽष्टवा° ।

'अम्बष्ठानां दार्विहोमिको ब्राह्मणः' इति स्मृतावम्बष्ठस्वामिके स्मार्तहोमे तत्प्रयोगाल्लौकिकस्यैव होमस्य तन्नाम। इति चेत्।

मैवम्। 'दर्व्यां होमो दर्विहोमः' इति प्रवृत्तिनिमित्तस्य लौकिकवैदिकयोः समानत्वात्। 'दर्विहोमं कुर्यात्' इति श्रुत्युक्ते वैदिकहोमनामलिङ्गत्वाच्च सर्वस्यैव होमस्यैतन्नाम ॥ २ ॥

(तृतीये—दर्विहोमशब्दस्य होमनामधेयताधिकरणे—सूत्रम्—)।

जुहोतिचोदनायां वा तत्संयोगात् ॥ ४ ॥

तृतीयाधिकरणमारचयति—

यजतेरपि नाम स्याज्जुहोतेरेव वाऽग्रिमः।
अविशेषेण मुख्यत्वाज्जुहोतेर्लक्षणाऽन्यथा ॥ ३ ॥

तन्नाम जुहोतिचोदनानां यजतिचोदनानां च भवितुमर्हति। कुतः। विशेषाश्रवणात्। इति चेत्।

मैवम्। जुहोतिचोदनासु होमशब्दस्य मुख्यत्वात्। यजतिचोदनानां तन्नामत्वे लक्षणा स्यात्। तस्मात्—जुहोतिचोदनानामेव नाम ॥३॥

(सिंहावलोकितन्यायेन पुनरपि प्रथमाधिकरणशेषभूतान्येव सूत्राणि ५—९)।

द्रव्योपदेशाद्वा गुणाभिधानं स्यात् ॥ ५ ॥ न लौकिकानामाचारग्रहणत्वाच्छब्दवतां चान्यार्थविधानात् ॥६॥ दर्शनाच्चान्यपात्रस्य ॥ ७॥ तथाऽग्निहविषोः ॥८॥ उक्तश्चार्थसंबन्धः ॥ ९॥

(चतुर्थे-दर्विहोमशब्दस्यापूर्वताधिकरणे सूत्राणि १०—२८)।

तस्मिन्सोमः प्रवर्तेताव्यक्तत्वात् ॥१०॥ न वा स्वाहाकारेण संयोगात्, वषट्कारस्य च निर्देशात्, तन्त्रे तेन विप्रतिषेधात् ॥ ११ ॥ शब्दान्तरत्वात् ॥१२॥ लिङ्गदर्शनाच्च ॥१३॥ उत्तरार्थस्तु

१ अ. °नां दर्वि°। २ ज. झ. सर्वस्य।

स्वाहाकारो यथा साप्तदश्यं तात्राविप्रतिषिद्धा पुनः-
प्रवृत्तिर्लिङ्गदर्शनात्पशुवत् ॥ १४ ॥ अनुत्तरार्थो
वाऽर्थवत्त्वात्, आनर्थक्याद्धि प्राथम्यस्योपरोधः
स्यात् ॥ १५ ॥ न प्रकृतावपीति चेत् ॥ १६ ॥
उक्तं समवाये पारदौर्बल्यम् ॥ १७ ॥ तच्चोदना
वेष्टेः प्रवृत्तित्वात्ताद्विधिः स्यात् ॥ १८ ॥ शब्दसा-
मर्थ्याच्च ॥ १९ ॥ लिङ्गदर्शनाच्च ॥२० ॥ तदा-
भावस्य हेतुत्वाद्गुणार्थे स्याददर्शनम् ॥ २१ ॥
विधिरिति चेत् ॥ २२ ॥ न वाक्यशेषत्वाद्गुणार्थे
च समाधानं नानात्वेनोपपद्यते ॥ २३ ॥ येषां
वाऽपरयोर्होमः, तेषां स्यादविरोधात् ॥ २४ ॥
तत्रौषधानि चोद्यन्ते, तानि स्थानेन गम्येरन्
॥ २५ ॥ लिङ्गाद्वा शेषहोमयोः ॥ २६॥ प्रतिपत्ती
तु ते भवतः, तस्मादतद्विकारत्वम् ॥२७॥ संनिपाते
विरोधिनामप्रवृत्तिः प्रतीयेत विध्युत्पत्तिव्यवस्थाना-
दर्थस्यापरिणेयत्वाद्वचनादतिदेशः स्यात् ॥ २८ ॥

चतुर्थाधिकरणमारचयति—

दर्विहोमे सोमधर्मा अपूर्वत्वमुताग्रिमः ।
अव्यक्तेर्यज्यभावाच्च स्वाहोक्त्यादेरपूर्वता ॥ ४ ॥

जयाभ्यातानराष्ट्रभृदादिषु[1] दर्विहोमेषूत्पत्तिवाक्ये देवताया अश्रवणादव्यक्तिलि-
ङ्गेन सोमधर्माः कर्तव्याः । इति चेत् ।

मैवम् । सोमे श्रुतस्य यजतिलिङ्गस्यात्राभावात् । किंच 'पृथिव्यै स्वाहा ।

1 ज. °ता नाम ना° ।

अन्तरिक्षाय स्वाहा' इति दर्विहोममन्त्रेषु स्वाहाकार आम्नातः। स च सोम-विध्यन्तातिदेशे विरुध्येत। तेन स्वाहाकारविरोधिनो वषट्कारस्य प्राप्यमाण-त्वात्। किंचोदाहृतैर्मन्त्रगतचतुर्थ्यन्तैः पदैर्देवतासमर्पणाच्चास्त्यपेक्षितत्वम्। त-स्मात्—दर्विहोमानामपूर्वकर्मत्वान्नास्ति तत्र कस्यापि विध्यन्तस्यातिदेशः॥ ४॥

**इति श्रीमाधवीये जैमिनीयन्यायमालाविस्तरेऽष्टमाध्यायस्य चतुर्थः पादः॥ ४॥**

| | अत्र पादे | आदितः। |
|---|---|---|
| अधिकरणानि | ४ | ५२९। |
| सूत्राणि | २८ | १५३१। |

समाप्तश्चायमष्टमोऽध्यायः॥ ८॥

———

( अथ नवमोऽध्यायः )।

अतिदेशोऽष्टमेऽध्याये समाप्तौ नवमे पुनः ।
अतिदिष्टपदार्थानामूहानूहविचारणा ॥ १ ॥

अष्टमनवमयोरध्याययोरनेन पूर्वोत्तरभाव उपजीव्योपजीवकरूपेणोपन्यस्तः । मन्त्रसामसंस्कारेष्वतिदिष्टपदार्थेषु यत्रास्त्यूहः, यत्र च नास्ति, तदुभयमत्र विचार्यम् । ऊहस्य लक्षणमेवमाहुः—

" प्राकृतस्थानपतितपदार्थान्तरकार्यतः ।
ऊहः प्रयोगो विकृत ऊह्यमानतयोदितः " ॥ इति ।

( प्रथमे—अग्निहोत्रादिषूक्तानां धर्माणामपूर्वप्रयुक्तत्वाधिकरणे सूत्रम्— )।

यज्ञकर्मप्रधानम्, तद्धि चोदनाभूतम्, तस्य द्रव्येषु संस्कारस्तत्प्रयुक्तस्तदर्थत्वात् ॥ १ ॥

नवमाध्यायस्य प्रथमपादे प्रथमाधिकरणे प्रथमवर्णकमारचयति—

इष्ट्यग्निहोत्रसोमानां धर्मः किं यजयेऽथवा ।
अपूर्वायात्र निर्णीतिः स्मार्यते सप्तमोदिता ॥ २ ॥

सप्तमस्याऽऽद्याधिकरणेऽवघातादीनां धर्माणां यज्यन्वयं निराकृत्यापूर्वान्वयो निर्णीतः । स एवात्रोहारम्भोपयोगित्वेन स्मार्यते । यदि यज्यर्थाः स्युः, तदा सर्वे सर्वत्रोपदिश्यन्ते, न त्वतिदेशः क्वाप्यस्ति । ततोऽतिदिष्टपदार्थविषय ऊहो नाऽऽरम्यते । अपूर्वार्थत्वे तु प्रकरणानियमितत्वादश्रुतधर्मकेष्वतिदेशादूह आरम्भणियः ॥१॥

द्वितीयवर्णकमारचयति—

अवघाते व्रीहिरूपं विवक्ष्येत न वा श्रुतेः ।
आद्यः साधनतामात्रमवर्ज्यत्वाद्विवक्ष्यते ॥ ३ ॥

'व्रीहीनवहन्ति ' इत्यत्र व्रीहीणां स्वरूपं श्रूयमाणत्वाद्विवक्षितम् । तथा सति नैवारश्चरुर्भवति " इत्यत्र नीवाराणां प्रयोगे नोहः । यदा व्रीहिष्वेव नियतोऽवघातो व्रीहिनिवृत्तौ निवर्तते, तदा कुत ऊहावसरः । इति प्राप्ते,

ब्रूमः—व्रीहिस्वरूपविवक्षायामपि व्रीहिगतोऽपूर्वसाधनत्वाकारो न वर्जयितुं शक्यः । अन्यथाऽवघातवैयर्थ्यापत्तेः । ततोऽपूर्वसाधनत्वाकारोऽवश्यं विवक्षितव्यः ।

१ क. ख. °योः पू° । २ ज. झ. °दार्थोत्तर° । ३ ज. °णेविधा° । ४ ञ. °योग ऊहः ।

तत्र व्रीहिस्वरूपस्यापि विवक्षायां गौरवं स्यात्। तदविवक्षायां तु नीवाराणामपि विहितत्वेनापूर्वसाधनत्वाकारसद्भावादवघातविषयत्वेनोहः सिध्यति ॥३॥

तृतीयवर्णकमारचयति—

नापूर्वस्य निमित्तत्वमस्ति वा, न प्रयोक्तृतः।
अस्ति शाब्दप्रयोक्तृत्वमार्थिकी तु निमित्तता ॥ ४ ॥

अवघातप्रयाजाद्यनुष्ठाननिमित्तत्वमपूर्वस्य नास्ति। कुतः। अपूर्वस्य प्रयोजकत्वात्। निमित्तत्वप्रयोजकत्वयोः सिद्धसाध्यरूपेण विरुद्धत्वात्। यस्मिन्विद्यमाने क्रियते, तन्निमित्तम्। यस्य सिद्ध्यर्थं क्रियते, तत्प्रयोजकम्। वर्णिता चापूर्वस्य सप्तमाद्याधिकरणनिर्णयस्मारकेण प्रयोजकता। ततो यजेर्निमित्तत्वं वक्तव्यम्। तथा सति यजिवद्व्रीह्यादिस्वरूपस्यापि निमित्तत्वेन तदभावे त्ववघाताभावान्नीवाराद्यूहो नास्ति। इति प्राप्ते—

ब्रूमः—अपूर्वस्य शाब्दं प्रयोजकत्वं सप्तमे वर्णितम्। इह तु—आर्थिकी निमित्तता वर्ण्यते। यद्यपि स्वरूपेण साध्यमपूर्वम्, तथाऽपि मनसि विपरिवर्तमानत्वाकारेण सिद्धत्वमप्यस्ति। अतो यजेर्निमित्तत्वाभावात्तद्दृष्टान्तेन व्रीहिस्वरूपस्याप्यनिमित्तत्वान्नीवाराद्यूहः संभवति ॥ ४ ॥

( द्वितीये प्रोक्षणस्यापूर्वप्रयुक्तत्वाधिकरणे सूत्रे २—३ )।

संस्कारे युज्यमानानां तादर्थ्यात्तत्प्रयुक्तं स्यात् ॥ २ ॥ तेन त्वर्थेन यज्ञस्य संयोगाद्धर्मसंबन्धस्तस्माद्यज्ञप्रयुक्तं स्यात्संस्कारस्य तदर्थत्वात् ॥ ३ ॥

द्वितीयाधिकरणे प्रथमवर्णकमारचयति—

मुसलाद्युक्षणं हन्त्यै स्यादपूर्वाय वोक्षितः।
आद्यः प्रकरणादन्त्यो व्यर्थं तत्स्यादिहान्यथा ॥ ५ ॥

'प्रोक्षिताभ्यामुलूखलमुसलाभ्यामवहन्ति' इति श्रूयते। तत्र—प्रोक्षणमुलूखलमुसलद्रव्यद्वारा हन्त्यर्थः। कुतः। वाक्येन तच्छेषत्वप्रतीतेः। इति चेत्।

मैवम्। प्रकरणेनापूर्वशेषत्वावगमात्। न च—वाक्यं प्रकरणाद्बलीयः—इति वाच्यम्। अपूर्वशेषत्वाभावे वैयर्थ्यप्रसङ्गात्। पूर्वपक्षे—यत्रावघातः, तत्रैव प्रोक्षणम्। तथा सति नक्तंचरौ 'कृष्णानां व्रीहीणां नखनिर्भिन्नानाम्' इति श्रुतेषु नखेषु प्रोक्षणं नोह्यते। सिद्धान्ते तु—अपूर्वस्य प्रयोजकत्वादस्ति तत्रोहः ॥५॥

---

१ ख. च. ञ. °स्ति शब्दात्प्रयोक्तृ। ज. झ. °स्ति शब्दे प्र°। २ ख. °माद्यधि°। ज. झ. °माधि। ३ ख. ञ. °लाभ्युक्ष°।

( वर्णकान्तरे (उच्चावचध्वनेः परमापूर्वाप्रयुक्तताधिकरणे) सूत्रम्–) ।

तेन त्वर्थेन यज्ञस्य संयोगाद्धर्मसंबन्धस्तस्मादयज्ञप्र-
युक्तं स्यात्संस्कारस्य तदर्थत्वात् ॥ ३ ॥

द्वितीयवर्णकम् रचयति—

मन्द्रादिकमपूर्वाय परायावान्तराय वा ।
फलादाद्यो नो समं तल्लक्षणा तु विशिष्यते ॥ ६ ॥

ज्योतिष्टोमे श्रूयते–यावत्या वाचा कामयेत तावत्या दीक्षिणीयायामनुब्रूयात्, मन्द्रं प्रायणीयायाम्, मन्द्रतरमातिथ्यायाम्, उपांशूपसत्सु, उच्चैरग्नीषोमीये ' इति । तत्र ध्वनेरुच्चावचीभावः परमापूर्वप्रयुक्तः । तस्य फलवत्त्वात् । इति चेत् । मैवम् । अवान्तरापूर्वेऽपि समानं फलवत्त्वम् । परमापूर्वजननद्वारेण फलसंब-न्धात् । समाने च फलवत्त्वे संनिकृष्टलक्षणया निर्णयः। तथा हि—दीक्षणीयादि-शब्दा अङ्गकर्मवाचिनः । न च—मन्द्रत्वादिधर्माणां कर्मस्वरूपं प्रयोजकम् । अपूर्व-प्रयुक्ते निर्णीतत्वात् । ततो दीक्षणीयादिशब्दैरपूर्वं लक्षणीयम् । तत्र वाक्यगत-मवान्तरापूर्वं संनिकृष्टम् । तद्द्वारकं परमापूर्वं विप्रकृष्टम् । तस्मात् अवान्तरापूर्वप्र-युक्ता एते धर्माः । अश्वमेधगत—त्रैधातवीयायामूहाभावः फलम् । तथा हि—अश्व-मेधे समाम्नायते—' त्रैधातवीया दीक्षणीया भवति ' इति । यदि परमापूर्वप्र-युक्तः स्यात्, ततस्तस्योपकारविशेषनिबन्धन इति तत्कार्यापन्नायां त्रैधा-तवीयायामूहो भविष्यति । अथ—आग्नावैष्णवापूर्वप्रयुक्तः, तदा त्रैधातवीयायां तदपूर्वं न भवति । किंतु—अन्यदेवेति नास्त्यूहः ॥ ६ ॥

(तृतीये—फलदेवतासंबद्धधर्माणामप्यपूर्वप्रयुक्तताधिकरणे सूत्रे ४—५) ।

फलदेवतयोश्च ॥ ४ ॥ न चोदनातो हि ताद्गुण्यम् ॥ ५ ॥

तृतीयाधिकरणमारचयति—

अगन्मादेः स्वर्गदेवौ हेतू यद्वाऽत्र चोदितम् ।
आद्यो लिङ्गान्मैवमङ्गस्यापूर्वाकाङ्क्षितत्वतः ॥ ७ ॥

दर्शपूर्णमासयोर्मन्त्रौ श्रुतौ—' अगन्म सुवः '—इत्येकः । ' अग्नेरहमुज्जि-तिमनूज्जेषम् ' इत्यपरः। तयोरुभयोः स्वर्गदेवौ क्रमेण प्रयोजकौ ।कुतः। तल्लिङ्ग-

१ ज. झ. °यानन्त° । २ ञ. समत्वाङ्ग° । ३ ञ. कामयीत । ४ झ. °म्र, पर-मापू° । ५ ज. झ. ञ. °त्र स्ववा° । ६ ज. झ. °धातवीया° ।

दर्शनात्। तथा सति 'सौर्यं चरुं निर्वपेद्ब्रह्मवर्चसकामः' इत्यत्र स्वर्गाग्न्योरभावान्नास्त्यूहः। इति प्राप्ते—

ब्रूमः—चोदितं यदपूर्वं तस्यैव फलवत्त्वेनानुष्ठेयतयेतिकर्तव्यताकाङ्क्षा युक्ता। ततो मन्त्रयोरपूर्वं प्रयोजकम्। तथा सति विकृतौ 'अगन्म ब्रह्मवर्चसं सूर्यस्याहमुज्जितिमनूज्जेषम्' इत्येव मन्त्रयोरस्त्यूहः॥ ७॥

( चतुर्थे—धर्माणामदेवताप्रयुक्तत्वाधिकरणे सूत्राणि ६—१० )।

देवता वा प्रयोजयेदतिथिवद्भोजनस्य तदर्थत्वात् ॥६॥ आर्थपत्यात् ॥७॥ ततश्च तेन संबन्धः ॥८॥ अपि वा शब्दपूर्वत्वाद्यज्ञकर्म प्रधानं स्याद्गुणत्वे देवताश्रुतिः ॥ ९ ॥ अतिथौ तत्प्रधानत्वमभावः कर्मणि स्यात्तस्य प्रीतिप्रधानत्वात् ॥ १० ॥

चतुर्थाधिकरणमारचयति—

देवः प्रयोजकोऽपूर्वं वाऽऽद्योऽस्य फलदत्वतः।
न विधेये गुणो ह्येषोऽपूर्वस्य फलितोचिता ॥ ८ ॥

'आग्नेयोऽष्टाकपालः'—इत्यादिषु सर्वेषु कर्मसु धर्माणामग्न्यादिर्देवः प्रयोजकः। कुतः। यागेन पूजिताया देवतायाः फलप्रदत्वात्। संभवति हि फलप्रदत्वम्। मन्त्रार्थवादादिभ्यो विग्रहादिपञ्चकावगमात्। विग्रहः, हविःस्वीकारः, तद्भोजनम्, तृप्तिः, प्रसादश्च, इत्येतच्चेतनस्योचितं पञ्चकम्। 'सहस्राक्षो गोत्रभिद्वज्रबाहुः'—इति विग्रहः। 'अग्निरिदं हविरजुषत' इति हविःस्वीकारः। ×अद्धीन्द्र प्रस्थिते मा हवींषि'—इति हविर्भोजनम्। 'तृप्त एवैनमिन्द्रः प्रजया पशुभिस्तर्पयति' इति तृप्ति—प्रसादौ। ततः सेवितराजादिवत्पूजितदेवतायाः फलप्रदत्वेन प्राधान्यात्सैव धर्माणां प्रयोजिका। तथा सति यत्र 'सौर्यादावग्निर्नास्ति,' तत्र—अग्निदेवतायां नियता धर्मा एव तावन्नातिदिश्यन्ते, कुतस्तत्रोहस्य प्राप्तिः। इति पूर्वपक्षः।

किं देवतायाः फलप्रदत्वलक्षणं प्राधान्यं शब्दादापाद्यते, वस्तुसामर्थ्याद्वा। नाऽऽद्यः। 'स्वर्गकामो यजेत' इति शब्देन विधेयस्यं यागस्य फलप्रदत्वावगमात्। इत्यदेवते तु सिद्धत्वेन सिद्ध्यनर्हे। तत्र यथा द्रव्यस्य विधेयं प्रति गुणत्वम्, तथा देवताया अपि। यदि यागस्य कालान्तरभाविफलं प्रति

× 'अद्धीन्द्र पिब च प्रस्थितस्य' इति शाबरभाष्ये।

१ ख. °तोऽपू°। २ ज. ख. ख्येषा पू°। ३ ज. देवकर्मसु। ४ ज. वसुसा ख. ज. °स्य फ°।

हितत्वम्, तर्हि तत्साधनभूता देवता ततोऽपि व्यवहिता। का तर्हि फलस्य गतिः। 'अपूर्वम्' इति वदामः। तच्च श्रुत्या श्रुतार्थापत्त्या वा प्रतीयमानत्वाच्छाब्दमिति तस्य फलप्रदत्वमुचितम्। नापि-वस्तुसामर्थ्याद्देवस्य फलप्रदत्वम्। विग्रहादिपञ्च-कप्रतिपादकयोर्मन्त्रार्थवादयोः स्वार्थे तात्पर्याभावात्। अन्यथा 'वनस्पतिभ्यः स्वाहा। मूलेभ्यः स्वाहा' इत्यादिमन्त्रेष्वपि देवत्वं विग्रहादिपञ्चकयुक्तं कल्प्येत। तच्च प्रत्यक्षविरुद्धम्। ततो न राजादिवत्फलप्रदत्वम्। किंच-विग्रहादिमद्देवता-षाद्यपि न विना कर्मणा फलमभ्युपैति। ततः-प्राप्ताप्राप्तविवेकेनोभयवादिसि-द्धस्य यागस्यैव फलप्रदत्वमस्तु। किंच-मातापितृगुर्वादिशुश्रूषायां विनाऽपि देव-तां फलप्रदत्वमुभयवादिसिद्धम्। तस्मात् फलप्रदमपूर्वमेव धर्माणां प्रयोजकम्। तथा सत्यग्न्यादिदेवताभावेऽप्यपूर्वप्रयुक्तधर्माणामतिदेशादस्ति तत्रोहस्यावकाशः ॥८॥

( पञ्चमे-प्रोक्षणादीनामपूर्वप्रयुक्तताधिकरणे सूत्राणि ११-१९ )।

द्रव्यसंख्याहेतुसमुदायं वा श्रुतिसंयोगात् ॥ ११ ॥
अर्थकारिते च द्रव्येण न व्यवस्था स्यात् ॥१२॥
अर्थो वा स्यात्प्रयोजनमितरेषामचोदनात्तस्य च
गुणभूतत्वात् ॥१३॥ अपूर्वत्वाद्व्यवस्था स्यात्॥१४॥
तत्प्रयुक्तत्वे च धर्मस्य सर्वविषयत्वम् ॥ १५ ॥
तद्युक्तस्येति चेत् ॥ १६ ॥ नाश्रुतित्वात्। १७॥
अधिकारादिति चेत् ॥ १८ ॥ तुल्येषु नाधिकारः
स्यादचोदितश्च संबन्धः। पृथक्सतां यज्ञार्थेनाभि-
संबन्धस्तस्माद्यज्ञप्रयोजनम् ॥ १९ ॥

पञ्चमाधिकरणमारचयति-

व्रीह्यादयः प्रयोक्तारोऽपूर्वं वा प्रोक्षणादिषु।
वाक्यश्रुतिभ्यामाद्यः स्याच्चोदिताकाङ्क्षयाऽन्तिमः ॥९॥

'व्रीहीन्प्रोक्षति' इत्यत्र वाक्येन द्वितीयाश्रुत्या च प्रोक्षणे व्रीहिस्वरूपं प्रयो-जकम्। इति चेत्।

१ क. सं- च. स्वार्थता°। २ ज. ञ. °हा। तेभ्यः स्वाहा " इ°। ३ ज. ञ. म. °षाया वि°।

मैवम्। फलवत्त्वेन कर्तव्यतया चोदितस्यापूर्वस्येतिकर्तव्यतायामाकाङ्क्षा भवति। व्रीहिस्वरूपं तु सिद्धत्वान्न कर्तव्यतया चोद्यते, किंतु गुणत्वेन। ततो द्रव्यस्वरूपस्य नेतिकर्तव्यताकाङ्क्षा। तस्मात्—वाक्यश्रुती उपेक्ष्य प्रकरणादपूर्वस्य प्रयोजकत्वमेवेष्टव्यम्। न च—अपूर्वप्रयुक्ते स्रुवादौ प्रोक्षणस्यातिप्रसङ्गः। प्रकृतापूर्वाय हविराकारस्य विवक्षितत्वात्। सप्तमस्य प्रथमाधिकरणे—संनिपत्योपकारिणामारादुपकारिणां च सामान्येनापूर्वप्रयुक्तत्वमतिदेशारम्भसिद्धये वर्णितम्। तदेवात्रापि प्रथमाधिकरणस्य प्रथमवर्णके ऊहारम्भसिद्धये स्मारितम्। द्वितीयवर्णके—पुनः संनिपत्योपकारिणां विशेषाकारेण साधितम्। पुनरपि दार्ढ्यार्थ द्वितीयाधिकरणस्य प्रथमवर्णके, तृतीय—पञ्चमाधिकरणयोश्च क्रमेण वाक्यं लिङ्गं श्रुतिं चोपजीव्य प्रवृत्तास्त्रयः पूर्वपक्षा निराकृताः। अतो—न पुनरुक्तिभ्रमः कर्तव्यः॥९॥

( षष्ठे—अग्निष्टोम उपांशुत्वस्य प्राचीनपदार्थप्रयुक्तत्वाधिकरणे सूत्राणि २०—२५ )।

देशबद्धमुपांशुत्वं तेषां स्याच्छ्रुतिनिर्देशात्तस्य च तत्र भावात् ॥ २० ॥ यज्ञस्य वा तत्संयोगात् ॥ २१ ॥ अनुवादश्च तदर्थवत् ॥ २२ ॥ प्रणीतादि तथेति चेत् ॥ २३ ॥ न यज्ञस्याश्रुतित्वात् ॥ २४ ॥ तद्देशानां वा संघातस्याचोदितत्वात् ॥ २५ ॥

षष्ठाधिकरणमारचयति—

प्राचीनोपांशुताऽपूर्वे परमेऽवान्तरेऽपि वा।
यज्ञयोगादादिमोऽन्त्यो देशबन्धश्रुतत्वतः॥ १० ॥

ज्योतिष्टोमे श्रूयते—"त्सरा वा एषा यज्ञस्य, तस्माद्यत्किंचित्प्राचीनमग्नीषोमीयात्, तेनोपांशु चरन्ति" इति। अत्र—उपांशुतरता परमापूर्वे संबद्धा। परमापूर्वप्रयुक्तेत्यर्थः। कुतः। शाकुनिग्राहकगतिन्यायेन यज्ञसंबन्धावगमात्। तथा हि—यज्ञस्य संबन्धि यत्किंचिदग्नीषोमीयात्प्राचीनमारादुपकारकं प्रधानहविःसंस्कारकं च, तस्य सर्वस्योपांशुत्वं विधीयते। यज्ञो नाम परमापूर्वम्। तस्य यज्ञसाध्यत्वात्। येयमुपांशुत्वानुष्ठितिः, एषा त्सरा छद्मगतिः। यथा शाकुनिं जिघृक्षवः प्रच्छन्न

१ झ. स्रुवादौ। ञ. ध्रुवादौ। २ क. ख. छ. ज. झ. ञ. °पूर्वीयह°। ३ ज. झ. °तरे त°। ४ क. तत्र। ५ क. ज. झ. °कत्वा°। ६ ज. झ. °ज्ञस्य सा°। ७ ख. जिघ्रक्षोः।

गतिर्भवति । शनैः पदन्यासो दृष्टिप्रणिधानमशब्दकरणं चेति तत्सर्वं शकुनिग्रह-णाय । तथैव-अनुष्ठातुरुपांशुत्वानुष्ठानं छद्मगतिरूपमनुष्ठानसाध्याय यज्ञशब्द-निर्दिष्टाय परमापूर्वाय । सति च परमापूर्वप्रयुक्तत्वे कुण्डपायिनामयनेऽप्यग्नीषोमीय-पशोः प्राचीनेषूपांशुत्वस्योहः । इति प्राप्ते-

ब्रूमः-अवान्तरापूर्वप्रयुक्तमुपांशुत्वम् । कुतः । देशबन्धेन श्रुतत्वात् । 'अग्नी-षोमीयात्प्राचीनं यत्किंचित्' इति मर्यादया देशलक्षिता ये पदार्थाः, ते श्रूयमाणेन वाक्येनोपांशुत्वसंबद्धाः प्रतीयन्ते । यज्ञसंबन्धस्तु न वाक्येन श्रूयते । 'यज्ञस्य त्सरा' इत्यन्वयप्रतीतेः । न हि 'यज्ञस्य यत्किंचित्प्राचीनम्' इत्यन्वयः संभवति । 'तस्मात्' इत्यनेन पदेन व्यवधानात् । तस्मात्-मर्यादावच्छिन्नपदार्थ-जन्यावान्तरापूर्वप्रयुक्तमुपांशुत्वम् । 'यज्ञस्य त्सरा' इत्यनेनार्थवादेनावान्तरापूर्व-प्रयुक्तमेवोपांशुत्वं प्रशस्यते । एवं सत्युदाहृतोहाभावः फलम् । यत्तु-द्वितीया-धिकरणस्य द्वितीयवर्णके अग्नीषोमीयात्प्राचीने दीक्षणीयादौ स्वरान्तरमुक्तम्, तद्दीक्षणीयादिसंयोगात्तत्रत्यप्रधानविषयम् । इदं तूपांशुत्वमङ्गविषयमिति न विरोधः ।

× सप्तमाधिकरणमारचयति-

प्रणीतावाग्यमे पक्षौ योजनीयौ पुरेव तौ ।
पुरा हविष्कृदाह्वानाद्ये तत्रापूर्वकारिता ॥ ११ ॥

दर्शपूर्णमासयोः श्रूयते-'यज्ञं तनिष्यन्तावध्वर्युयजमानौ वाचं यच्छतः' इति । तत्र-प्रणीतासंबन्धिनि वाङ्नियमे यज्ञसंयोगात्परमापूर्वं प्रयोजकम् । इति पूर्वः पक्षः ।

यज्ञशब्दस्य 'तनिष्यन्तौ' इत्यनेनान्वयः, न तु वाग्यमेन । ततो न परमापूर्वं प्रयोजकम् । तथा सति हविष्कृदाह्वाने वाग्विसर्गस्य विहितत्वात्ततः पुरा ये प्रोक्षणादिपदार्थास्तेष्वन्विताास्तत्रत्येन परमापूर्वेण प्रयुज्यन्ते ॥ १० ॥ ११ ॥

× 'उदाहरणान्तरमारचयति' इत्येव युक्तं प्रतिभाति । अत्र एवैतन्मूलभूतसूत्राणि पृथ-ङ्नोपलभ्यन्ते । शास्त्रदीपिकायामपि--षष्ठाधिकरण एव प्रणीतावाग्यमस्योल्लेखः कृतः । तस्मात्-इत आरभ्य पादसमाप्तिपर्यन्तमधिकरणसंख्यैकोना ज्ञातव्या । तथा सत्येव शा-बरभाष्यशास्त्रदीपिकयोरधिकरणसंख्यातुल्यत्वं भवति ।

१ झ. ञ. च परमापूर्वसंबन्धे हि यज्ञस्य यः प्राग्भागः, तद्धर्मः सन्परमापूर्वप्रयुक्तं ततो विकृतिषु तद्भागारम्भके प्राकृतोऽपदार्थ ऊहितव्यो भवति । प° । २ क. यज्ञतनिष्यताव° । ख. यदध्वर्युयजमानौ वाचं इच्छतः, तत्प्रजापतिर्भूयं गतौ यज्ञं तन्वाते । तस्मात्प्रणीताः प्रणे-ष्यन्वाचं यच्छति " इ° । ञ. यज्ञतन्त्रनिष्पत्ताव° । ३ क. तनिष्पत्तौ । ञ. तन्त्रनिष्पत्तौ ।

(अष्टमे—इष्टकासु सकृद्विकर्षणाद्यनुष्ठानाधिकरणे सूत्राणि २६–२८)।

अग्निधर्मः प्रतीष्टकं संघातात्पौर्णमासीवत् ॥२६॥

अग्नेर्वा स्याद्द्रव्यैकत्वादितरासां तदर्थत्वात् ॥२७॥

चोदनासमुदायात्तु पौर्णमास्यां तथा स्यात् ॥२८॥

अष्टमाधिकरणमारचयति—

विकर्षप्रोक्षणे कार्ये प्रतीष्टकमुतैकधा ।

आद्योऽवयव्यसत्त्वेन मैवं भूदेशसत्त्वतः ॥ १२ ॥

'इष्टकाभिरग्निं चिनुते' इति श्रुतम् । तत्रेदमाम्नायते—'मण्डूकेनाग्निं विकर्षति । वेतसशाखयाऽवकाभिश्चाग्निं विकर्षति । हिरण्यशकलसहस्रेणाग्निं प्रोक्षति । दध्ना मधुमिश्रेणाग्निं प्रोक्षति' इति । 'शाखाग्रे मण्डूकं बद्ध्वा तेन विकर्षयति' इत्यर्थः । ते च विकर्षणप्रोक्षणे प्रतीष्टकं कर्तव्ये । कुतः । चिताभ्य इष्टकाभ्यः पृथगग्निशब्दार्थस्य कस्यचिदवयविद्रव्यस्याभावात् । इति चेत् ।

मैवम् । उपहिताभिरिष्टकाभिः संयुक्तस्य प्रदेशस्यावयविद्रव्यत्वात् । तस्य चाग्न्याधारत्वेनाग्निशब्दार्थत्वम् । तस्मात्—अग्नेरेकत्वात्सकृदेव विकर्षणप्रोक्षणे कुर्यात्[1] ॥ १२ ॥

(नवमे-उत्तमान्यानामह्नां पत्नीसंयाजसंस्थाधिकरणे सूत्राणि २९–३२)।

पत्नीसंयाजान्तत्वं सर्वेषामविशेषात् ॥ २९ ॥

लिङ्गाद्वा प्रागुत्तमात् ॥३०॥ अनुवादो वा दीक्षा यथा नक्तं संस्थापनस्य ॥३१॥ स्याद्वाऽनारभ्य विधानादन्ते लिङ्गविरोधात् ॥ ३२ ॥

नवमाधिकरणमारचयति—

पत्नीसंयाजसंस्था किं सर्वेष्वन्त्येतरेषु वा ।

अविशेषादादिमोऽन्त्योऽसंस्थितत्वोक्तिलिङ्गतः ॥ १३ ॥

द्वादशाहे श्रूयते—'पत्नीसंयाजान्तान्यहानि संतिष्ठन्ते' इति । तत्र—द्वादशसंख्याकेषु सर्वेष्वहःसु पत्नीसंयाजान्तं कर्मानुष्ठायावशिष्टं हारियोजनादिकं त्याज्यम् । कुतः । 'एतावत्सु पत्नीसंयाजैः समाप्तिर्नेतरेषु' इति नियामकाभावात् । इति चेत् ।

मैवम् । असंस्थितत्ववाक्योक्तलिङ्गेन प्रागुत्तमादह्नो य

1 ग. कुर्यात् । २ ग. °स्य भूप° ।

पत्नीसंयाजान्तत्वं व्यवतिष्ठते । तथा हि–‘ पत्नीसंयाजान्तान्यहानि संतिष्ठन्ते ’ इत्यस्य विधेः शेष एवमाम्नायते–‘ न बर्हिरनुप्रहरत्यसंस्थितो हि तर्हि यज्ञः ’ इति । तत्र पत्नीसंयाजैः सर्वेषामह्नां समाप्तावसंस्थितत्वं व्याहन्यते । तस्मात्–‘ संतिष्ठते ’ इति संशब्दो न समाप्तिवचनः, किं तर्हि सत्येव तदहःसंबन्धि-कर्तव्यशेषे व्यापारोपरममात्रं ब्रूते । अयं च कर्तव्यशेषश्चरमेऽहन्यनुष्ठातव्यः । तथा सति–द्वादशानामह्नां विहितः सहप्रयोगोऽनुगृहीतो भवति । तथा हि–‘ द्वादशाहेन यजेत ’ इति सहप्रयोगो विहितः । अत एव दीक्षोपसदादिकं तन्त्रेणानुष्ठीयते । तत्र प्रथममहः पत्नीसंयाजान्तमनुष्ठाय हारियोजनादिकं बर्हि-प्रहरणान्तं कर्तव्यत्वेनावस्थाप्य द्वितीयमहः प्रक्रमेत । एवमुत्तरत्रापि । तत्र सर्वत्रावशिष्टं कर्तव्यमुत्तमेऽहन्यनुष्ठातव्यम् । तथा सत्युपक्रमैक्यवदुपसंहारस्याप्येकत्वाद्विहितः सहप्रयोगः सिध्यति । एकैकस्याह्नः पत्नीसंयाजैः समाप्तौ भिन्नाः प्रयोगाः प्रसज्येरन् । यत्तु––दशमस्याह्नो मानसग्रहेण समापनम्, तद्वाचनिकम् । तस्मात्––उत्तमव्यतिरिक्तानामेवाह्नां पत्नीसंयाजानन्तरं व्यापारोपरमः ॥१३॥

( दशमे–सामिधेनीनामभ्यासस्य स्थानधर्मताधिकरणे सूत्रम्– ) ।

**अभ्यासः सामिधेनीनां प्राथम्यात्स्थानधर्मः स्यात् ॥ ३३ ॥**

दशमाधिकरणमारचयति–

**त्रिरनूक्तिर्ऋचो धर्मः स्थानधर्मोऽथवाऽग्रिमः ।**
**स्त्रीलिङ्गत्वान्न तत्प्रातिपदिकप्रबलत्वतः ॥ १४ ॥**

**दर्शपूर्णमासयोः** सामिधेनीः प्रकृत्य श्रूयते–‘ त्रिः प्रथमामन्वाह ’ इति । सोऽयं त्रिरभ्यास आदौ पठितस्य ‘ प्र वो वाजा ’ इत्यृग्विशेषस्य धर्मः । कुतः । ‘ प्रथमाम् ’ इत्यस्य पदस्य स्त्रीलिङ्गत्वादृक्परत्वोपपत्तेः । इति चेत् ।

नैतद्युक्तम् । स्त्रीलिङ्गवाचिनष्टाप्प्रत्ययादपि पूर्वपठितस्य स्थानवाचिनः ‘ प्रथम ’ इत्यस्य प्रातिपदिकस्य प्रबलत्वात् । अतो विकृतिष्वन्यस्या अप्यृचः प्रथमस्थाने पठितायास्त्रिरभ्यासः कर्तव्यः । स्थानान्तरे पठिताया ‘ प्र वो वाजा ’ इत्यस्या ऋचो नास्त्यभ्यासः ॥ १४ ॥

( एकादशे–आरम्भणीयेष्ट्यधिकरणे सूत्रे ३४–३५ ) ।

**इष्ट्यावृत्तौ प्रयाजवदावर्तेताऽऽरम्भणीया ॥ ३४ ॥**

---

१ ख. च. झ. ञ. शब्दो । २ ञ. °शेषो व्या° । ३ स. °हप्रप° । ४ ञ. °नष्ट° । ५ क. च. झ. ञ. °स्या अप्यृचो ।

सकृद्वाऽऽरम्भसंयोगादेकः पुनरारम्भो यावज्जीवप्रयोगात् ॥ ३५ ॥

एकादशाधिकरणे (यावज्जीवदर्शपूर्णमासयोरारम्भणीयेष्टेः सकृदनुष्ठानाङ्गीकर्तृ—) वृत्तिकारमतमारचयति—

प्रतिप्रयोगमारम्भयजिरस्ति न वाऽस्त्ययमौ।
अङ्गत्वेन, न तत्सर्वधर्म आधानवद्भवेत् ॥ १५ ॥

'आग्नावैष्णवमेकादशकपालं निर्वपेद्दर्शपूर्णमासावारिप्समानः' इति विहितेयमारम्भणीयेष्टिर्दर्शपूर्णमासयोर्यावज्जीवमावर्त्यमानयोः प्रतिप्रयोगमावर्तनीया। कुतः। प्रयाजादिवदङ्गत्वात्। इति चेत्।

नैतद्युक्तम्। कुतः। सर्वप्रयोगसाधारणत्वात्। 'यावज्जीवं मया दर्शपूर्णमासौ कर्तव्यौ' इत्यध्यवसाय आरम्भः। स चैक एव। तेन चाऽऽरम्भेण प्रयुक्तेयमिष्टिः। तस्मात्—नाऽऽवर्तनीया। यथा—आधानं सर्वक्रतुसाधारणत्वात्सकृदेव कर्तव्यम्, तद्वत्। आधानस्य सकृदनुष्ठानमेकादशस्य तृतीयपादे वक्ष्यते ॥ १५॥

('आरम्भणीयेष्टेः पुरुषार्थत्वान्नाऽऽवृत्तिः' इति) स्वकीयं मतमारचयति—

अन्वाधानाङ्गमारम्भो यद्वा पुरुषसंस्कृतिः।
फलवत्त्वादादिमोऽन्त्यः पुंयोगान्न पृथक्फलम् ॥ १६ ॥

दर्शपूर्णमासयोरन्वाधानस्य प्रथमपदार्थत्वेनाऽऽरम्भरूपत्वादारम्भप्रयुक्तेयमिष्टिरन्वाधानस्याङ्गम्। तथा सति—यागफलेनैव फलवती स्यात्। कर्तृसंस्कारपक्षे पृथक्फलं कल्प्येत। तस्मात्-प्रतिप्रयोगमन्वाधानावृत्तौ तदङ्गभूतेयमिष्टिरावर्तनीया। इति प्राप्ते—

ब्रूमः—आरम्भो नाम पुरुषस्य प्रथमप्रवृत्तिः, न त्वन्वाधानपदार्थः। अतो नान्वाधानाङ्गम्। किंतु 'आरिप्समानो निर्वपेत्' इति पुरुषसंयोगात्तत्संस्कारोऽयम्। न च फलकल्पनाप्रसङ्गः। कृतारम्भस्य पुरुषस्य प्रयोगपरिगृहीतत्वेन पृथक्फलाकाङ्क्षाया अभावात्। ननु—एवमपि तत्तत्प्रयोगानारिप्समानस्य संस्कारायाऽऽवृत्तिः स्यात्। न स्यात्। 'प्रयोगमारिप्समानः' इत्यश्रुतत्वात्। 'दर्शपूर्णमासावारिप्समानः' इति हि श्रूयते। तयोश्चैक एवाऽऽरम्भः। तस्मात्—नास्त्यावृत्तिः ॥ १६ ॥

(द्वादशे निर्वापमन्त्रे सावित्रादिपदानामनूहाधिकरणे सूत्रे ३६—३७

अर्थाभिधानसंयोगान्मन्त्रेषु शेषभावः स्यात्त-

१ च. झ. ञ. °वारप्स्यमा°। २ क. °म्भप्र°। ३ ज. झ. °मवृ°। ४ ख. च. ज. झ. ञ. आरप्स्यमा°। ५ ख. च. ज. झ. ञ. °नारप्स्यमा°। ६ क. च. ज. झ. ञ. °मा॰रप्स्यमा°। ७ ख. च. ज. झ. ञ. °वारप्स्यमा°।

आचोदितमप्राप्तं चोदिताभिधानात् ॥३६॥
ततश्चावचनं तेषामितरार्थं प्रयुज्यते ॥३७॥

द्वादशाधिकरणमारचयति—

सवित्रद्यत्राद्यूहनीयं न वाऽर्थः संगतस्ततः ।
ऊहो नाविकृतस्यैव निर्वापान्वयसंभवात् ॥ १७ ॥

दर्शपूर्णमासयोर्निर्वापमन्त्रः श्रूयते—'देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामग्नये जुष्टं निर्वपामि' इति । तत्र—सवित्रश्विपूषशब्दाः कर्मणि संगतं देवतारूपमर्थमभिधातुमर्हन्ति । तथा सति—दृष्टप्रयोजनलाभात् । अग्निश्च कर्मसमवेतदेवता । ततः कयाचिदपि व्युत्पत्त्या सवित्रादिशब्दैरग्निरभिधीयताम् । अथोच्येत—'अग्निशब्देनैवाग्नेरभिधानात्पुनस्तदभिधानं व्यर्थम् । किंच—देवान्तरेषु रूढास्ते शब्दा नाग्निमभिदध्युः' इति । एवं तर्हि तास्तिस्रो देवता अग्निना साकं कर्मणि विकल्प्यन्ताम् । ततः—प्राकृतस्य मन्त्रस्य विकृतिष्वतिदेशे सति सवित्रादिशब्दस्थाने तत्तद्देवतावाचकः शब्द ऊहनीयः । इति प्राप्ते—

ब्रूमः—नात्रोहः कर्तव्यः । कुतः । अविकृतस्यैव मन्त्रस्य निर्वापशेषत्वेनान्वयसंभवात् । नहि—प्रकृतावग्निना सह सवित्रादिदेवतानां विकल्पः । वाक्यभेदादिदोषप्रसङ्गात् । तस्मात्—नास्त्यूहः ॥१७॥

( त्रयोदशे वर्णकद्वयसहितेऽधिकरणे सूत्रे ३८—३९ ) ।
गुणशब्दस्तथेति चेत् ॥ ३८ ॥ न समवायात् ॥ ३९ ॥

त्रयोदशाधिकरणे ( विकृतावग्निशब्दोहप्रदर्शकं ) प्रथमवर्णकमारचयति—

तत्राग्निशब्दो नोह्यः स्यादूह्यो वा स्तावकत्वतः ।
सवित्रादिवदाद्यो नो समवेतार्थवर्णनात् ॥ १८ ॥

तस्मिन्पूर्वोदाहृत एव मन्त्रे 'अग्नये जुष्टम्' इत्ययमग्निशब्दो विकृतिषु नोहनीयः । कुतः । देवतान्तरवाचिसवित्रादिशब्दवदग्निशब्दस्याप्यत्र निर्वापस्तावकत्वेन पाठात् । इति प्राप्ते—

ब्रूमः—विषमो दृष्टान्तः । कर्मण्यसमवेतार्थाः सवित्रादिशब्दाः । अग्निशब्दस्त्वाग्नेये कर्मणि समवेतमर्थं ब्रूते । ननु—अत्र जुष्टशब्दोऽसमवेतार्थः । निर्वापात्पूर्वं हविषो जुष्टत्वाभावात् । तद्योगादग्निशब्दोऽपि तथा स्यात्—इति चेत् ।

---

१ क. च. °वित्राख्याद्य° । ख. °वित्राग्न्याद्यु° । २ ख. घ. ज. झ. ञ. सह । ३ ज. झ. °ब्दोऽनूह्यः । ४ ज. झ ञ. °र्वापः स्ता° ।

मैवम् । 'जुष्टं यथा भवति तथा निर्वपामि' इति क्रियाविशेषणत्वेन भविष्यज्जोषणपरत्वे सति समवेतार्थत्वात् । तस्मात्—सौर्ये यागे 'सूर्याय जुष्टं निर्वपामि' इत्येवमूहनीयम् ॥१८॥

( तण्डुलनिर्वापमन्त्रे धान्यशब्दोहप्रदर्शकं ) द्वितीयवर्णकमारचयति—

नोह्य ऊह्योऽथवा धान्यशब्दो नासंगतोक्तिता ।
ऊह्यो लक्षणयाऽर्थस्य गोपानस्येव संगतेः ॥ १९ ॥

दृषदि पेषणाय तण्डुलावापे मन्त्रो विहितः—'धान्यमसि धिनुहि देवान्' इति । सोऽयं धान्यशब्दोऽसमवेतमर्थं ब्रूते निस्तुषाणां तण्डुलानां धान्यशब्दार्थत्वाभावात् । ततः सवित्रादिशब्दवन्नोहनीयः । इति चेत् ।

मैवम् । लक्षणया वृत्त्या धान्यशब्दस्य तण्डुलरूपेऽर्थे समवेतत्वात् । यथा 'गावः पीयन्ते' इत्यत्र मुख्यवृत्त्यभावेऽपि नासमवेतार्थत्वं लोका वर्णयन्ति, किंतु—दुग्धं लक्षयित्वाऽर्थं समवेतमेव प्रतियन्ति । तद्वत् । तस्मात्—शाक्यानामयने—षट्त्रिंशत्संवत्सरे धान्यशब्द ऊहनीयः । तत्र ह्येवमाम्नायते—'संस्थिते संस्थितेऽहनि गृहपतिर्मृगयां याति, स तत्र यान्मृगान्हन्ति, तेषां तरसमयाः सवनीयाः पुरोडाशा भवन्ति' इति । तत्र—दृषदि पेषणाय मांसमावपन् 'मांसमसि धिनुहि देवान्' इत्येवं मन्त्रमूहेत । न च—धान्यशब्दवल्लक्षको मृगशब्द ऊहे प्रयोक्तव्यः—इति वाच्यम् । लक्षणावृत्तेः प्रकृतावार्थिकत्वेनातिदेशानर्हत्वात् ॥ १९ ॥

( चतुर्दशे—इडोपह्वानमन्त्रे यज्ञपतिशब्दस्यानूहाधिकरणे सूत्रम्— ) ।

चोदिते तु परार्थत्वाद्विधिवदविकारः स्यात् ॥४०॥

चतुर्दशाधिकरणमारचयति—

ऊह्यो यज्ञपतिर्नो वा वृद्ध्यर्थोत्साहतोऽग्रिमः ।
प्रत्यक्षोक्त्या कृत्स्नमन्त्र इडार्थो नोहनं ततः ॥ २० ॥

दर्शपूर्णमासयोरिडोपह्वानमन्त्रे वाक्यमेतदाम्नायते—'दैव्या अध्वर्यव उपहूता उपहूता मनुष्याः, य इमं यज्ञमवान्, ये च यज्ञपतिं वर्धान्' इति । 'ये दैव्या अध्वर्यवो यज्ञमवन्ति, ये च मनुष्या यज्ञपतिं वर्धयन्ति, ते सर्वेऽप्यत्रोपहूताः' इत्यर्थः। अस्मिन्वाक्ये यज्ञपतेरभिवृद्धिकथनेनोत्साहज[न]नेन समवेतोऽर्थः

१ ज. झ. गृह्णामि । २ क. ख. च. ञ. संगतिः । ज. झ. संगतः । ३ ज. झ. °त्वाभावात् । यथा 'गावः' । ४ क. शाग्याना° । ज. झ. शाक्त्याना° । ५ ज. °बह्वाक्षणिकोऽपि मृ° । झ. °बह्वाक्षणिको । ६ ञ. झ. °ति । 'यद्दैव्या ।

प्रतीयते । तत इडोपह्वानमन्त्रात्पृथक्कृत्याभिवृद्ध्यर्थं जपे मन्त्रवाक्यमिदं लिङ्गेन विनियुज्यताम् । तथा सति सत्रे यज्ञपतीनां बहुत्वाद्बहुवचनान्ततया शब्द ऊहनीयः । इति प्राप्ते—

ब्रूमः—प्रत्यक्षश्रुत्या कृत्स्नो मन्त्र इडोपह्वाने विनियुक्तः । एकवाक्यत्वं च कृत्स्ने मन्त्र उपलभ्यते । प्रकरणं चेदमिडायाः । ततः श्रुतिवाक्यप्रकरणैर्विरोधान्न लिङ्गविनियोगः संभवति । तदभावे च यज्ञपतिवृद्धिप्रतिपादकमवान्तरवाक्यमिडाप्रतिपादकेन महावाक्येन सहैकवाक्यतामापन्नमिडां प्रशंसति । प्रशंसा चैकवचनान्तेनापि यज्ञपतिशब्देन सिध्यतीति नास्ति सत्रे तदूहः ॥२०॥

(पञ्चदशे—प्रस्तरप्रहरणकरणसूक्तवाके यजमानपदस्योहाधिकरणे सूत्रम् ) ।

विकारस्तत्प्रधाने स्यात् ॥ ४१ ॥

पञ्चदशाधिकरणमारचयति—

यजमानो नोहितव्य ऊह्यो वा नहि पूर्ववत् ।
मन्त्रः फलप्रधानोऽत ऊह्यः सर्वफलित्वतः ॥ २१ ॥

दर्शपूर्णमासयोः 'सूक्तवाकेन प्रस्तरं प्रहरन्ति' इति प्रहरणकरणत्वेन विनियुक्ते सूक्तवाकमन्त्रे[1] वाक्यमेतदाम्नायते—' अयं यजमान आयुराशास्ते ' इति । तत्र पूर्वोक्तयज्ञपतिशब्दवत्सत्रेषु यजमानशब्दो नोहितव्यः । इति चेत् ।

नैवम् । वैषम्यात् । तथा हि—सर्वत्र प्रकरणे मन्त्रो द्विविधः—क्रियाप्रकाशकः, फलप्रकाशकश्चेति । पूर्वोदाहृतो मन्त्र इडोपह्वानक्रियाप्रकाशकः । 'उपहूतं रथंतरं सह पृथिव्या' इत्यस्मिन्ननुवाके तदुपह्वानमन्त्ररूपे सर्वस्मिन्नपि तदवभासात् । 'इडोपहूता, उपहूतेडा, उपो अस्या इडा ह्वयताम् । इडोपहूता दैव्या अध्वर्यव उपहूताः' इत्यादिभिरवान्तरवाक्यैरुपह्वानक्रियाया एव प्राधान्यावभासात् । तन्मध्यपतितं त्वेकमेव यज्ञपतिवाक्यं वृद्धिफलं गमयतीति न तस्य स्वार्थो विवक्षितः । सूक्तवाकमन्त्रस्तु फलमेव प्रकाशयति, न तु प्रहरणक्रियाम् । 'इदं द्यावापृथिवी भद्रमभूत्' इत्यस्मिन्ननुवाके सूक्तवाकमन्त्रे[2] सर्वस्मिन्फलावभासात् । 'अयं यजमान आयुराशास्ते, सुप्रजास्त्वमाशास्ते[3], उत्तरां देवयज्यामाशास्ते, भूयो हविष्करणमाशास्ते, दिव्यं धामाऽऽशास्ते ' इत्यादिभिः सर्वैरप्यवान्तरवाक्यैः फलस्यैवावभासनात् । तस्मात्—विवक्षितं फलम् । फलिनश्च सत्रेषु सर्वे यजमानाः ततः—सर्वेषां फलसिद्ध्यै यजमानशब्दो बहुवचनान्तत्वेन सर्वेषु सत्रेषूहनीयः ॥ २१ ॥

---

१ क. मन्त्रैः । २ ञ. °कमन्त्रेषु । ३ क. ख. च. ज. झ. ञ. °प्रजास्त्व° ।

( षोडशे वर्णकद्वयसहिते सूत्राणि ४२-४४ )।

असंयोगात्तदर्थेषु तद्विशिष्टं प्रतीयेत ॥४२॥ कर्माभावादेवमिति चेत् ॥ ४३ ॥ न परार्थत्वात् ॥४४॥

( षोडशाधिकरणे—{ सुब्रह्मण्याह्वाननिगदे हरिवच्छब्दस्यानूहप्रदर्शकं } प्रथमवर्णकमारचयति—

हरिवच्छब्द ऊह्यः स्यान्नो वेन्द्रे समवायतः।
ऊह्यो नैवं स्तावकत्वादसता स्तुतिसंभवात् ॥ २२ ॥

ज्योतिष्टोमे सुब्रह्मण्याह्वानार्थे निगदे पठ्यते—'इन्द्राऽऽगच्छ, हरिव आगच्छ-मेधातिथेर्मेष, वृषणश्वस्य मेने गौरावस्कन्दिन्नहल्यायै जार' इति। सोऽयं निगदो विकृतावग्निष्टुति चोदकेनातिदिष्टः। तत्र—आग्नेयी सुब्रह्मण्या भवति' इत्यग्निसंबन्धविधानादिन्द्रपदं परित्यज्य 'अग्न आगच्छ' इत्यूहः कृतः। 'तस्मिन्निगदे यानीन्द्रपदस्य विशेषणानि 'हरिवः' इत्यादिसंबुद्ध्यन्तपदानि तान्यप्यूहनीयानि' इति तावत्प्राप्तम्। कुतः। इन्द्र एव नियमेन समवेतस्यार्थस्याभिधानात्। अग्नौ तस्याभावात्। स चार्थस्तत्तत्संबुद्ध्यन्तपदमनूद्य व्याचक्षाणेन ब्राह्मणेन स्पष्टीकृतः. तथा च श्रूयते—'हरिव आगच्छेति, पूर्वपक्षापरपक्षौ वा इन्द्रस्य हरी, ताभ्यां ह्येष सर्वं हरतीति। मेधातिथेर्मेषेति, मेधातिथिं काण्वायनिं मेषो भूत्वा जहार। वृषणश्वस्य मेन इति, वृषणश्वस्य मेनका नाम दुहिता बभूव, तामिन्द्रश्चकमे। गौरावस्कन्दिन्निति, गौरमृगो भूत्वा *राजानं पिबति' इति। एतस्यार्थस्येन्द्र एवान्वितस्याग्नावसंभवात्तत्परित्यागेनाग्नेरुचितानि कानिचिद्विशेषणान्यूहनीयानि। इति प्राप्ते—

ब्रूमः—इन्द्रशब्दस्य कर्मसमवेतदेवताप्रकाशकत्वान्न स्तावकत्वमित्यस्ति तस्योहः। हरिवदादिशब्दा ब्राह्मणव्याख्यातगुणाभिधानद्वारेणेन्द्रं स्तुवन्ति। स्तुतिश्च विद्यमानगुणवदविद्यमानेनापि गुणेन कर्तुं शक्यते। तस्मात्—अग्निस्तुतिसंभवान्नास्त्यूहः ॥ २२ ॥

( सोमक्रयसाधनप्रकाण्डे 'तस्मै शृतम्' इत्याद्यनूहप्रदर्शकं )

द्वितीयवर्णकमारचयति—

ऊह्यं तस्मै शृतं नो वा भाविवृत्त्या समन्वयात्।
एकाब्दायां साण्ड ऊहो नोहः साम्यात्स्तुतिर्द्वयोः ॥ २३ ॥

* 'गौरमृगो भूत्वा, अरण्याद्राजानं सोमं पिबति, इति शाबरभाष्ये।

१ ख. च. ज. वेन्द्रस॰। २ ख. ज. ॰स्कन्दन्न॰। ३ ज. एतु नियमेन समवेतस्यार्थस्याभिधा॰। ४ ज. झ. ॰मे। गो। गौरावस्कन्दन्नि॰।

ज्योतिष्टोम एकहायन्या मन्त्र एवमाम्नायते—'इयं गौः सोमक्रयणी, तया ते क्रीणामि। तस्यै शृतम्, तस्यै शरः, तस्यै दधि, तस्यै मस्तु, तस्या आतञ्चनम्, तस्यै नवनीतम्, तस्यै घृतम्, तस्या आमिक्षा, तस्यै वाजिनम्' इति। साद्यस्के त्वेवमाम्नातम्—'त्रिवत्सः साण्डः सोमक्रयणः' इति। तस्मिन्साण्डे पूर्वो मन्त्रश्चोदकेनातिदिष्टः। तस्मिन्मन्त्रे पूर्वभागस्य समवेतार्थत्वात् 'अयं साण्डः सोमक्रयणः, तेन क्रीणामि' इत्येवमूहोऽस्ति। तथैव 'तस्यै शृतम्' इत्याद्युत्तरभागेऽप्यस्त्यूहः। यद्यप्येकहायन्या शृतादिकं न संभवति, तथाऽपि त्रिचतुरवर्षोत्तरकाले भविष्यति। साण्डोऽपि कस्यचिद्गवि वत्सोत्पादनेन क्षीरादिनिमित्तम्। ततस्तस्मिन्नपि समवेतार्थ उत्तरभाग ऊहनीयः। तथा सति 'तस्मै शृतम्' इत्येवं पुंलिङ्गतया पठनीयम्। इति प्राप्ते—

ब्रूमः—एकहायन्यामपि मुख्यया वृत्त्या समवेतार्थत्वाभावेन स्तुतित्वात्साण्डेऽपि स्तुतित्वान्नास्त्यूहः॥ २३॥

( सप्तदशे—सारस्वत्यां मेष्यामध्रिगुवचनानूहाधिकरणे सूत्राणि ४५–४९ )।

**लिङ्गविशेषनिर्देशात्समानविधानेष्वप्राप्ता सारस्वती स्त्रीत्वात्॥ ४५॥ पश्वभिधानाद्वा तद्धि चोदनाभूतं पुंविषयं पुनः पशुत्वम्॥४६॥ विशेषो वा तदर्थनिर्देशात्॥ ४७॥ पशुत्वं चैकशब्द्यात्॥ ४८॥ यथोक्तं वा संनिधानात्॥ ४९॥**

सप्तदशाधिकरणमारचयति—

**दैव्या इत्यस्ति मेष्यां नो वाऽस्मा इति पशूक्तितः।**
**अस्ति मैवं पश्वनुक्तेः पुंव्यक्तित्वाविवक्षया॥ २४॥**

अध्रिगुनामा दैव्यः शमिता। तं प्रति प्रैषमन्त्रो हौत्रे पाशुके पठ्यते—'दैव्याः शमितार आरभध्वम्, उत मनुष्या उपनयत मेध्याः' इत्यादि। अतिरात्रे सवनीयपशुरेवमाम्नायते—'सारस्वती मेष्यतिरात्रे' इति। तस्यां मेष्यामप्युदाहृतो मन्त्रोऽस्ति। कुतः। पशुधर्मविधेः सर्वपशुसाधारणत्वेनाग्नीषोमीयपशाविव मेष्यां संभवात्। ननु—तस्मिन्मन्त्रे 'प्रास्मा अग्निं भरत' इति पुंलिङ्गं चतुर्थ्यन्तं पदं श्रुतम्। तच्च न मेष्या युक्तम्—इति चेत्। मैवम्। 'अस्मै पशवः' इत्युक्त्वा प्रातिपदिकार्थस्य जातिमात्रस्य विवक्षितत्वात्। इति प्राप्ते—

---

१ ज. झ. °ण्ढः' इ°। २ ज. साङ्केऽपि। ३ ख. °गुर्नामा। ज. झ. °गुनामा।

सूत्तमः—पशुशब्दस्तावन्न मन्त्रे पठितः। तथा सति प्रयुक्त इदंशब्दः पुरोव-र्तिनीं व्यक्तिमाचष्टे। व्यक्तिविशेषश्चाग्नीषोमीये पुंमात्मक इति श्रूयमाणचतुर्थ्य-र्थकवर्चनघोत्यं लिङ्गमपि विवक्षितम्। तस्मात्—न मेष्यामस्त्ययं मन्त्रः। ननु—'पशुधर्मा अग्नीषोमीय एवोपदिष्टाः, प्रकरणेन तन्नियमात्' इति तृतीयेऽभिहितम्। अष्टमेऽपि 'अग्नीषोमीयपशुः सवनीयादिपशूनां प्रकृतिः' इत्युक्तम्। ततो मेष्या-मयं मन्त्रश्चोदकप्राप्तः। पुंलिङ्गं चोहनीयम्—इति चेत्। एवं तर्हि कृत्वाचि-न्ताऽस्तु॥ २४॥

(अष्टादशे—यज्ञायज्ञीये गिराशब्दस्य स्थान इराशब्दस्यैव कर्तव्यताधिकरणे सूत्राणि ५०—५३)।

आम्नातादन्यदधिकारे बचनाद्विकारः स्यात्॥५०॥ द्वैधं वा तुल्यहेतुत्वात्सामान्यविकल्पः स्यात्॥५१॥ उपदेशाच्च साम्नः॥ ५२॥ नियमो वा श्रुतिवि-शेषादितरत्सामदश्यवत्॥ ५३॥

अष्टादशाधिकरणमारचयति—

इरागिराविकल्पः स्यादुतैरैवाविशेषतः।
आद्यो मैवं बाधपूर्वमिराया विहितत्वतः॥ २५॥

ज्योतिष्टोमे श्रूयते--'यज्ञायज्ञीयेन स्तुवीत' इति। 'यज्ञायज्ञ' इत्यनेन शब्दे-न युक्तायामृच्युत्पन्नं साम यज्ञायज्ञीयम्। तस्यामृचि गिराशब्दः पठ्यते--'यज्ञा-यज्ञा वो अग्नये गिरागिरा च दक्षसे' इति। तत्र—सामगा योनिगानमधीयाना[1] सहैव गकारेण गायन्ति—'गायीरा, गिरा' इति। ब्राह्मणे तु—गकारलोपपूर्वकमा-कारयकारादिकं गानं विधीयते—'ऐरं कृत्वोद्गेयम्' इति। 'गिराशब्दे गकारलो-पादिराशब्दो भवति। इरायाः संबन्धि गानमैरम्। तादृशं कृत्वा प्रयोगकाल उद्गानं कर्तव्यम्' इत्यर्थः। तत्र— योनिगान—ब्राह्मणयोः समानबलत्वेन विशे-षाभावाद्विकल्पेन प्रयोक्तव्यम्। इति प्राप्ते—

सूत्तमः—'न गिरागिरेति ब्रूयात्' यद्गिरागिरेति ब्रूयादात्मानमेव तदुद्गाता गिरेत्' इति गकारसहितगाने बाधमुक्त्वा गकाररहितमिरापदं गेयत्वेन विधीयते। तत्पदादेरिकारस्य गानार्थमाकारो यकार इकारश्चेति त्रीन्वर्णान्प्रयुङ्क्ते। ततः—'आयीरा यीरा' इत्येव गातव्यम्।

---

१ ज. झ. ञ. पुरोडाशात्म°। २ ज. झ. °धनाया°। ३ स. आईरा। ञ. आईरा ईरा°।

( एकोनविंशे—इरापदस्य प्रगीतताधिकरणे सूत्राणि ५४—५८)।

अप्रगाणाच्छब्दान्यत्वे तथाभूतोपदेशः स्यात् ॥ ५४ ॥ यत्स्थाने वा तद्गीतिः स्यात् पदान्यत्वप्रधानत्वात् ॥५५॥ गानसंयोगाच्च ॥५६॥ वचनमिति चेत् ॥५७॥ न तत्प्रधानत्वात्॥५८॥

एकोनविंशाधिकरणमारचयति—

इरापदं न गेयं स्याद्गेयं वा गीत्यनुक्तितः।
न गेयं, गीयमानस्य स्थाने पातात्प्रगीयते ॥ २६ ॥

ब्राह्मणेन विहित इराशब्दो न गातव्यः। कुतः। 'ऐरम्' इति शब्देन गीतेरनुक्तत्वात्। पाणिनीयेन 'विमुक्तादिभ्योऽण्' (५। २। ६१) इति सूत्रेणेराशब्दादणप्रत्ययो मत्वर्थीयो विहितः। तथा सति 'इरापदोपेतं कृत्वा' इत्येतावानेवार्थो भवति। यदि प्रगीतेरापदसंबन्धस्तद्धितेन विवक्ष्येत, तदानीमाकारो यकार ईकारो रेफ आकारश्चेत्येतैः पञ्चभिर्वर्णैर्निष्पन्नम्—आयीरा—रूपं गीयमानेराशब्दप्रातिपदिकं भवति। तादृशात्प्रातिपदिकात्पाणिनीयेन 'वृद्धाच्छः'(४।२।११४)इति सूत्रेण प्रत्ययान्तरे सति 'आयीरीयं कृत्वा' इति ब्राह्मणपाठो भवेत्। तस्मात्—न गेयम्। इति प्राप्ते—

ब्रूमः—गीयमानस्य गिरापदस्य स्थान इरापदं विधीयत इति पदमात्रस्य बाधः। गानं तु न बाध्यते। किंच 'विमुक्तादिभ्योऽण्' (पा० सू० ५।२।६१) इति सूत्रेणाणप्रत्ययेऽपि पूर्वस्मात् 'मतौ छः सूक्तसाम्नोः'(पा० सू० ५।२।५९) इति सूत्रात्सामानुवृत्तेः 'ऐरं साम' इत्यर्थो भवति। सामत्वं च गीतिसाध्यम्। यदा तु 'तस्य विकारः' (पा० सू०४।३।१३४) इत्यस्मिन्नर्थेऽणप्रत्ययः, तदानीम् 'इराया विकारः' इति विग्रहे यथोक्तं गानं लभ्यते। तस्मात्—गातव्यम् ॥२६॥

इति श्रीमाधवीये जैमिनीयन्यायमालाविस्तरे नवमाध्यायस्य प्रथमः पादः ॥ १ ॥

| | अत्र पादे | आदितः। |
|---|---|---|
| अधिकरणानि | १८ | ५४७। |
| सूत्राणि | ५८ | १५८९। |

(अथ नवमाध्यायस्य द्वितीयः पादः)।

( प्रथमे—वर्णकद्वयसहितेऽधिकरणे सूत्रे १—२ )।

सामानि मन्त्रमेके स्मृत्युपदेशा-
भ्याम् ॥१॥ तदुक्तदोषम् ॥ २ ॥

द्वितीयपादस्य प्रथमाधिकरणे (गीतीनां सामनामताप्रदर्शकं) प्रथमवर्णकमारचयति—

सामोक्तिबृहदाद्युक्ती गीतायामृचि केवले।
गाने वा, गान एवेति स्मार्यते सप्तमोदितम् ॥ १ ॥

'सामान्यवाची सामशब्दः, विशेषवाचिनो बृहद्रथंतरादिशब्दाश्च गानमात्रे वर्तन्ते, न तु गानविशिष्टायामृचि' इत्ययं निर्णयः सप्तमस्य द्वितीयपादे सिद्धः। सोऽत्र वक्ष्यमाणविचारोपयोगितया स्मार्यते ॥ १ ॥

( ऊहग्रन्थस्य पौरुषेयत्वप्रदर्शकं ) द्वितीयवर्णकमारचयति—

ऊहग्रन्थोऽपौरुषेयः पौरुषेयोऽथवाऽग्रिमः।
वेदसामसमानत्वाद्विधिसार्थत्वतोऽन्तिमः ॥ २ ॥

यस्मिन्ग्रन्थे सामगास्तृचे तृचे सामैकैकं गायन्ति, सोऽयमूहग्रन्थो नित्यः, न तु पुरुषेण निर्मितः। कुतः। अनध्यायवर्जनेन, कर्तुरस्मरणेन, अध्यापकानां वेदत्वप्रसिद्ध्या च वेदसामनामकयोनिग्रन्थसदृशत्वात्। इति चेत्।

मैवम्। अपौरुषेयत्वे विधिवैयर्थ्यप्रसङ्गात्। "यद्योन्यां, तदुत्तरयोर्गायति" इति विधीयते। अयमर्थः—'अपौरुषेयत्वेन संप्रतिपन्ने वेदसामनामके ग्रन्थे 'कया नश्चित्र आभुवत्' इत्येतस्यां योन्यामेकस्यामृचि यद्वामदेव्यनामकं सामोपदिष्टम्, तदेवोत्तरयोर्ऋचोः—'कस्त्वा सत्यो मदानाम्'—'अभी षुणः सखीनाम्—'इत्यनयोर्द्वितीय—तृतीययोर्गातव्यम्'—इत्ययं विधिरूहग्रन्थस्य वेदत्वे व्यर्थः स्यात्। वेदसामैवदध्ययनादेव तत्सिद्धेः। उपरितन ऋग्द्वये सामोहस्य पौरुषेयत्वेऽपि सामस्वरूपस्य तदाधारभूतानां तिसृणामृचां च वेदत्वादनध्याया वर्जनीयाः। कर्तुरस्मरणं जीर्णकूपारामादिष्विव चिरकालव्यवधानादुपपन्नम्। अस्मरणमूलैवाध्यापकानां वेदत्वप्रसिद्धिः। यथा बह्वृचा अध्यापका महाव्रतप्रयोगप्रतिपादकमाश्वलायननिर्मितं कल्पसूत्रमरण्येऽधीयानाः पञ्चमारण्यकमिति वेदत्वेन व्यवहरन्ति। न च—तस्यापि वेदत्वमस्तु—इति वाच्यम्। प्रथमारण्यकेन पुनरुक्तत्वात्, अर्थवाद-

१ अ. °तु। सामवेदाध्य°। २ ज. अ. °मतव°।

राहित्येन ब्राह्मणसादृश्याभावाच्च ।

तस्मात्--पञ्चमारण्यकवदूहः पौरुषेयः। पौरुषेयस्य च न्यायमूलत्वाभावेन वक्ष्यमाणन्यायविरोधः, तदप्रमाणम् ॥ २ ॥

(द्वितीये-साम्न ऋक्संस्कारकर्मताधिकरणे सूत्राणि ३-१३)।

कर्म वा विधिलक्षणम् ॥ ३ ॥ तद्द्रव्यं वचनात्पाकयज्ञवत् ॥ ४ ॥ तत्राविप्रतिषिद्धो द्रव्यान्तरे व्यतिरेकः प्रदेशश्च ॥५॥ शब्दार्थत्वात्तु नैवं स्यात् ॥ ६ ॥ परार्थत्वाच्च शब्दानाम् ॥ ७ ॥ असंबन्धश्च कर्मणा शब्दयोः पृथगर्थत्वात् ॥ ८ ॥ संस्कारश्चाप्रकरणेऽग्निवत्स्यात्प्रयुक्तत्वात् ॥ ९ ॥ अकार्यत्वाच्च शब्दानामप्रयोगः प्रतीयेत ॥ १० ॥ आम्नातत्वाच्च ॥ ११ ॥ प्रयुज्यत इति चेत् ॥ १२ ॥ ग्रहणार्थं प्रयुज्येत ॥ १३ ॥

द्वितीयाधिकरणमारचयति--

सामर्चं प्रति मुख्यं स्याद्गुणो वा बाह्यपाठतः ।
मुख्यमभ्यसितुं पाठो गुणो गीताक्षरैः स्तुतेः ॥ ३ ॥

'रथंतरं गायति' इत्यादौ यद्गानं विहितं, तदेव सामशब्दार्थः-इति प्रतिपादितं स्मारितं च । तदेतद्गानमृचं प्रति प्रधानकर्म स्यात् । कुतः । यागप्रयोगाद्बहिरध्ययनकालेऽपि पठ्यमानत्वात् । गुणकर्मत्वे तु व्रीहिप्रोक्षणादिवद्यागप्रयोगमध्य एव गानमनुष्ठीयेत । ततो बहिर्गानस्य विश्वजिदादिवत्फलं कल्पनीयम् । मध्यकालीनगानं तु प्रयाजादिवदारादुपकारकम् । तस्मात्-मुख्यमेतत्, न तु गुणकर्म । इति प्राप्ते-

ब्रूमः-न तावद्बहिः पाठः प्रधानकर्मत्वं कल्पयितुं शक्नोति । भूमिरथिकशुष्केष्टिन्यायेन प्रयोगपाटवाय गानाध्ययनोपपत्तेः । यथा भूमिरथिको भूमौ रथमालिख्याभ्यासं करोति, यथा वा छात्रः शुष्केष्ट्या प्रयोगपाटवं संपादयति, तद्वत् । नापि-गुणकर्मत्वे प्रयोजनाभावात्प्रधानकर्मत्वम्-इति वाच्यम् । गानेन संस्कृतैर्ऋगक्षरैः स्तुतिसंभवात् । 'आज्यैः स्तुवते' 'पृष्ठैः स्तुवते' इति

१ ज. ञ. 'योगाभा' ।

स्तुतिविधानात् । तस्मात्—ऋगक्षराणां स्वरविशिष्टत्वाकाराभिव्यक्तिर्दृष्टं प्रयोजनमित्यदृष्टस्याकल्पनीयत्वाद्गानं संस्कारकर्म ॥ ३ ॥

( तृतीये—तृचे प्रत्यृचं कृत्स्नसाम्नः समापनाधिकरणे सूत्राणि १४—२० ) ।

तृचे स्याच्छ्रुतिनिर्देशात् ॥ १४ ॥ शब्दार्थत्वाद्विकारस्य ॥ १५ ॥ दर्शयति च ॥ १६ ॥ वाक्यानां तु विभक्तत्वात्प्रतिशब्दं समाप्तिः स्यात्संस्कारस्य तदर्थत्वात् ॥ १७ ॥ तथा चान्यार्थदर्शनम् ॥१८॥ अनवानोपदेशश्च तद्वत् ॥ १९ ॥ अभ्यासेनेतरा श्रुतिः ॥ २० ॥

तृतीयाधिकरणमारचयति—

अंशैः सामर्क्षु कृत्स्नं वा प्रत्यृचं तिसृभिः श्रुतेः ।
अंशैर्मैवं स्तुतेरंशैरसिद्धेः प्रत्यृचं भवेत् ॥ ४ ॥

'एकं साम तृचे क्रियते स्तोत्रीयम्' इति श्रूयते । तत्र—त्रेधाविभक्तेषु सामांशेष्वेकैकोंऽश एकैकस्यामृचि गातव्यः । कुतः । एकस्य साम्नस्तिसृभिर्ऋग्भिर्निष्पादनस्य श्रवणात् । इति प्राप्ते—

ब्रूमः—'स्तोत्रीयम्' इति स्तुतिनिष्पादकत्वं कृत्स्नस्य साम्नो विधीयते, न तु सामांशानाम् । स्तुतिर्नाम गुणकथनपरमेकं वाक्यम् । तच्च वाक्यमेकस्यामृचि संपूर्णम् । ततः कृत्स्नेन साम्ना तद्वाक्यं संस्कार्यमिति प्रत्यृचं सामाप्यतनीयम् । तथा सति द्वितीयतृतीययोर्ऋचोस्तस्यैव साम्न आवर्तमानतया सामान्तरत्वाभावादेकसामनिष्पाद्यत्वमप्यविरुद्धम् । तस्मात्—प्रत्यृचं कृत्स्नं साम समापनीयम् ॥४॥

( चतुर्थे—समास्वेव तिसृष्वृक्षु गानाधिकरणे सूत्रे—२१—२२ ) ।

तदभ्यासः समासु स्यात् ॥२१॥ लिङ्गदर्शनाच्च ॥२२॥

चतुर्थाधिकरणमारचयति—

तिसृष्वृक्षूदितं साम विषमासु समासु वा ।
यथेच्छानियमादन्त्यः शरलेशापनुत्तये ॥ ५ ॥

---

१ अ. ख. 'नस्याप्र' ।

विषमच्छन्दस्कासु समच्छन्दस्कासु वा तिसृष्वृक्षु स्वेच्छया साम गातव्यम् । 'इत्थमेव' इति नियामकस्य कस्यचिदभावात् । इति चेत् ।

मैवम् । शरलेशप्रसङ्गस्य नियामकत्वात् । शरो हिंसा । लेशोऽल्पत्वम् । 'शॄ हिंसायाम्' 'लिश अल्पीभावे' इत्येतद्धातुद्वयदर्शनात् । यद्याधिकच्छन्दस्कायां योनावुत्पन्नं साम न्यूनच्छन्दस्कयोरुत्तरयोर्गायेत्, तदा सामभागेनैव तत्पूर्तेरवशिष्टः सामभाग आश्रयाभावाद्विनश्येत् । यदि योनेरप्यधिकच्छन्दस्कयोर्गायेत्, तदा साम्नोऽल्पत्वादवशिष्ट ऋग्भागः सामरहितः स्यात् । तस्मात्—समानच्छन्दस्कास्वेव गातव्यम् ॥ ५ ॥

( पञ्चमे प्रथमवर्णके { 'उत्तरयोर्गायति' इत्यत्रोत्तरा-ग्रन्थस्थयोर्ऋचोर्ग्रहणाधिकरणे } सूत्र २३-२४)।

नैमित्तिकं तूत्तरात्वमानन्तर्यात्प्रतीयेत ॥ २३ ॥

ऐकार्थ्याच्च तदभ्यासः ॥ २४ ॥

पञ्चमाधिकरणे प्रथमवर्णकमारचयति—

छन्दःस्थयोरुत्तरास्थयोर्वा गीतेरिहोहनम् ।
अविशेषाद्विकल्पः स्यादन्त्यः संज्ञाबलित्वतः ॥ ६ ॥

सामगानामृक्पाठाय द्वौ ग्रन्थौ विद्येते—छन्दः, उत्तरा चेति । तत्र—छन्दोनामके ग्रन्थे-नानाविधानां साम्नां योनिभूता ऐवर्चः[1] पठिताः। उत्तराग्रन्थे--तृचात्मकानि सूक्तानि पठितानि । एकस्मिंस्तृचे छन्दोगता योन्यृक्प्रथमा, इतरे द्वे उत्तरे । एवं स्थिते सति 'रथंतरमुत्तरयोर्गायति । यद्योन्यां तदुत्तरयोर्गायति' इत्यत्र विविधे उत्तरे संभाविते । रथंतरस्य च्छन्दोग्रन्थे—'अभि त्वा शूर'—इतीयमृग्योनित्वेन पठिता । तस्या उपरि 'त्वामिद्धि हवामहे' इत्यादयो बृहदादिसाम्नां योनयः पठिताः । उत्तराग्रन्थे तु—'आत्वा शूर'—इति सूक्ते तस्या ऋच ऊर्ध्वं 'न त्वा वाँ अन्ये'—इत्येषा साम्नः कस्याप्ययोनिभूता पठिता । तत्र च्छन्दोग्रन्थापेक्षया सामान्तरयोर्योनी द्वे रथंतरस्य स्वयोन्युत्तरे भवतः। उत्तराग्रन्थापेक्षया सूक्तगते द्वितीयतृतीये स्वयोन्युत्तरे भवतः। तत्र विशेषनियामकाभावोऽनयोः कयोश्चिदुत्तरयोर्गानम् । इति चेत् ।

मैवम् । 'उत्तरा' इति संज्ञा सहसा बुद्धिस्था भवति । प्रतियोगिनिरपेक्षत्वात् ।

---

१ क. च । २ ज. ञ. गेयम् । ३ क. झ. ञ. नवर्चः । ४ ज. ञ. योनिः प्रथ° । ५ क. °वात्कयो° ।

पूर्वपठितानां योनिमृचमपेक्ष्य यदुत्तरात्वम्, तद्विलम्बेन प्रतीयमानत्वाद्दुर्बलम्। ईदृशमेवोत्तरात्वं छन्दसि पठितयोः स्वयोन्यनन्तरभाविन्योः सामान्तरयोन्योर्द्वयोर्ऋचोः। तृचगतयोस्तु द्वितीयतृतीययोरुत्तरात्वं संज्ञया वर्तते। अतस्तयोरेव गानम्। एवं सति पूर्वाधिकरणनिर्णीतं समास्वेव गानमनुगृहीतं भवति। किंच—तृचात्मकेषु सूक्तेषु या प्रथमा योनिभूता तन्नाम्ना छन्दोग्रन्थस्य 'योनिग्रन्थः' इत्यध्यापकसमाख्या। इतरस्य तु तृचसंघरूपस्य ग्रन्थस्योपरितनयोर्ऋचोर्नामधेयेन 'उत्तरा' इति समाख्या। स एव ग्रन्थः कर्माङ्गसमर्पकं प्रकरणम्। पञ्चदशसप्तदशादिस्तोमानां तृचेष्वेवोत्पत्तेः। तस्मात्—उत्तराग्रन्थस्थयोस्तृचगतयोर्द्वितीयतृतीययोरयमूहः ॥ ६ ॥

( द्वितीयवर्णके— अतिजगत्यामभ्यस्यमानायां त्रिशोकगानाधिकरणे सूत्राणि २१—२४ )।

तदभ्यासः समासु स्यात् ॥ २१ ॥ लिङ्गदर्शनाच्च ॥ २२ ॥ नैमित्तिकं तूत्तरात्वमानन्तर्यात्प्रतीयेत ॥२३॥ ऐकार्थ्याच्च तदभ्यासः॥२४॥

द्वितीयवर्णकमारचयति—

त्रैशोकेति जगत्यौ द्वे आग्नेये गीतयेऽथवा।
बृहत्या वाऽऽदिमः न्याय्योत्तरात्वश्रुतेर्बलात् ॥ ७ ॥

द्वादशाहे चतुर्थेऽहनि त्रैशोकनामकं साम विहितम्। तच्च 'विश्वाः पृतनाः'—इत्येतस्यामतिजगत्यामुत्पन्नम्। तस्मिंश्च तृचे तस्या योनेरुत्तरे बृहत्यौ 'नेमिं नमन्ति'—* इत्यादिके आम्नाते। तत्र बृहत्यावुपेक्ष्य तयोः स्थाने द्वे उत्पत्तिसिद्धे अतिजगत्यावानीय तासु तिसृषु गेयम्। तथा सति समासु गानं पूर्वत्र निर्णीतमनुगृह्यते। 'अतिजगतीषु स्तुवन्ति' इति श्रूयमाणमतिजगतीबहुत्वमन्यथा नोपपद्येत। इति चेत्।

मैवम्। 'उत्तरयोर्गायति' इत्युक्तस्य संज्ञारूपस्योत्तराशब्दस्याधीयमानयोर्बृहत्योर्मुख्यत्वात्। श्रुतिश्च बहुत्वलिङ्गात् 'समासु गानम्' इति न्यायाच्च बलीयसी। यदेतदतिजगतीबहुत्वम्, तद्बृहत्योः स्वीकारेऽप्युपपद्यते। एकविंशस्तोमस्यात्र विहितत्वेन तत्सिद्धये प्रथमाया अतिजगत्याः सप्तकृत्व आवर्तनीयत्वात्। तस्मात्—त्रैशोकं साम बृहत्योरूहनीयम् ॥ ७ ॥

* द्वितीया बृहती तु—'समीं रेभासो अस्वरन्',—इति शाबरभाष्ये दर्शिता।

१ क. °तरत्वं। ख. °शाराछन्द°। ज. झ. °शारच्छन्द°। २ क. ख. ज. झ. ञ. °न्यन्त°। ३ ज. झ. °स्याश्रुचि ज°।

( षष्ठे वर्णकचतुष्टयसहिते सूत्राणि २५-२८ ) ।

प्रागाथादिकं तु ॥ २५ ॥ स्वे च ॥ २६ ॥ प्रगाथे च ॥ २७ ॥ लिङ्गदर्शनाव्यतिरेकाच्च ॥ २८ ॥

षष्ठाधिकरणे ( बृहतीपङ्क्त्योरेव प्रगाथेन रथंतरस्य गानसाधकं )

प्रथमवर्णकमारचयति-

रथंतरे ककुब्ग्राह्या ग्रथ्या वाऽऽद्योऽर्थवत्त्वतः ।
पुनःपदाप्रसिद्ध्यादेरन्त्योऽर्थोऽन्यत्र वीक्ष्यताम् ॥८॥

इदमाम्नायते-'न वै बृहद्रथंतरमेकच्छन्दो यत्तयोः पूर्वा बृहती, ककुभावुत्तरे' इति । अयमर्थः-'बृहद्रथंतरं तदेतत्सामद्वयमितरसामवदेकच्छन्दस्कं न भवति । यस्मात्कारणात्-तयोर्बृहद्रथंतरसाम्नोराश्रयभूतास्वृक्षु पूर्वा बृहतीछन्दस्का । उत्तरे तु द्वे ऋचौ ककुप्छन्दस्के । इतरेषां वामदेव्यादिसाम्नामाश्रये तृचेऽवस्थितास्तिस्र ऋच एकच्छन्दस्का उत्तराग्रन्थ आम्नाताः, संचारविशेषपरिहाराय 'समासु गायेत्' इति न्यायेन निर्णीताश्च । इह तु वाचनिकं विषमच्छन्दस्कासु गानम्'-इति । तत्र रथंतरस्याऽऽश्रयतया तृचो नोत्तराग्रन्थे समाम्नातः। किं तर्हि, प्रगाथस्तदाश्रयत्वेनाऽऽम्नातः। स च द्वाभ्यामृग्भ्यां निष्पन्नत्वात्त्र तृचो भवति । तयोश्च द्वयोर्ऋचोः-'अभि त्वा शूर'-इत्येषा प्रथमा, सा च बृहती । 'न त्वा वा अन्यो दिव्यः-'इत्येषा द्वितीया, सा च पङ्क्तिच्छन्दस्का । तथा सति तां पङ्क्तिमपनीय तस्याः स्थाने दाशतयीगते द्वे उत्पत्तिककुभावृचौ ग्रहीतव्ये । कुतः ।:अर्थवत्त्वात् । उदाहृतेन 'ककुभावुत्तरे' इति वाक्येन रथंतरसाम्न आश्रयत्वेन ककुभोर्विनियुज्यमानयोः ककुबुत्पत्तिरर्थवती भवति । अन्यथा वैयर्थ्यं स्यात् । किंच-आम्नाताया एकस्याः पङ्क्तेः स्वीकारे तत्पूर्वयोर्द्वयोरेव ऋचोर्भावात्[1] 'एकं साम तृचे क्रियते, स्तोत्रीयम्' इति वचनं विरुध्येत । तस्मात्-रथंतरसाम्नि द्वे ककुभावुत्तरे ग्रहीतव्ये[2] । अयमेव न्यायो बृहत्साम्न्यपि योजनीयः। इति प्राप्ते-

ब्रूमः[3]-आम्नातयोर्बृहतीपङ्क्त्योरेव ककुब्ग्रथनीया । तथा हि-'अभि त्वा शूर'-इत्येषा बृहती प्रथमा स्तोत्रीया । तस्यामविकृतायामेव रथंतरं गातव्यम् । तत्तस्यास्तस्यामपि चतुर्थं पादं पुनरुपादायोत्तरस्याः पङ्क्तेः पूर्वार्धेन सह ग्रथनीयम् । सैषमष्टाविंशत्यक्षरा त्रिपदा द्वितीया स्तोत्रीया । सा चैका ककुप्संपद्यते । तस्यां च ककुभि चरमं पादं पङ्क्त्युत्तरार्धेन सह ग्रथित्वा तृतीया स्तोत्रीया कर्तव्या,

१ ख. ग. °ता एव । इ° । च. °ताश्चैव । इ° । २ ज. ग्रं. ग्रहीतव्यो । ३ ज. ञ. ट. । ब्रूमः° ।

सा च द्वितीया ककुप्संपद्यते । अनेन प्रग्रथनप्रकारेण द्वयोर्ऋचोराम्नातयोस्तृचानिष्पत्तेर्नास्त्युक्तो वचनविरोधः । अस्मिन्प्रथने 'पुनःपदा' इति श्रौतोक्तिर्लिङ्गम् । तथा च श्रूयते—'एषा वै प्रतिष्ठिता बृहती या पुनःपदा । तस्मात्पदं पुनरारभते । तस्माद्वत्सो मातरमभिहिंकरोति' इति । अयमर्थः—'या बृहती पुनःपदा भवति, सैषा प्रतिष्ठिता स्थिरा भवति। पदं चतुर्थः पादः । स ऋगन्तरसंपादनाय पुनः पठ्यते । ततः सा बृहती पुनःपदा । सेयमृग्माता । तस्याः पोतो वत्सः । तथा सति यस्मादृक्चतुर्थपादमुद्गाता पुनरारभते तस्मात्—लोके वत्सो मातरमभिलक्ष्य हिमिति शब्दं करोति' इति । न केवलं लिङ्गमात्रेण प्रग्रथनम्, किंतु—छन्दोगानां प्रसिद्ध्याऽपि ते ह्येवं स्मरन्ति—काकुभः प्रगाथः' इति। किंच—प्रगाथशब्दार्थपर्यालोचनेनापि ग्रथनं गम्यते । प्रकर्षेण गानं यत्र स प्रगाथः। प्रकर्षो नामाऽऽम्नाताद्दक्पाठादाधिक्यम् । तच्च पूर्वोक्तनीत्या पादाभ्यासपुरःसरमृगन्तरसंपादनेनोपजायते । तस्मात्—नोत्पत्तिककुभौ ग्रहीतव्ये, किं तर्हि प्रग्रथनेन द्वे उत्तरे ककुभौ संपाद्य तासु तिसृषु रथंतरं गातव्यम् । तथा बृहदपि । एवं सति पङ्क्तेः पाठः सार्थो भवति । न च—एवं ककुबुत्तरेष्वैयर्थ्यम्—इति शङ्कनीयम्। वाचः स्तोमे तदुपयोगात् । तस्मात्—न काऽपि प्रग्रथनेऽनुपपत्तिः ॥८॥

(बृहतीविस्तारपङ्क्त्योः प्रग्रथनेन रौरव—यौधाजयसाम्नोर्गानसाधकं)

द्वितीयवर्णकमारचयति—

यौधाजये रौरवे च बृहत्योरागमोऽथवा ।
ग्रथनं पूर्ववत्पक्षौ षष्ठिलिङ्गमिहोच्यते ॥ ९ ॥

इदमाम्नायते—' रौरव—यौधाजये बार्हते तृचे भवतः ' इति । अयमर्थः—' रौरवनामकं किंचित्साम, तथा—यौधाजयनामकमपरम् । तयोर्द्वयोः साम्नोर्बृहतीछन्दस्कस्तृच आश्रयः ' इति । उत्तराग्रन्थे तु—तस्य सामद्वयस्याऽऽश्रय एकः प्रगाथ आम्नातः । तस्मिंश्च प्रगाथे—' पुनानः सोम '—इत्यसावृक्प्रथमा । सा च बृहती । ' दुहान ऊधर्दिव्यम्'—इत्यसावृग्द्वितीया । सा तु विष्टारपङ्क्तिः । तामेनां विष्टारपङ्क्तिमपनीय तस्याः स्थान उत्पत्तिबृहत्यौ द्वे ऋचावानेतव्ये । इति पूर्वः पक्षः ।

बृहतीविष्टारपङ्क्त्योः प्रग्रथनविशेषेण द्वे बृहत्यावुत्तरे संपादनीये इति राद्धान्तः । तत्रोभयत्र युक्तिः पूर्वन्यायेन द्रष्टव्या । लिङ्गं त्वेवमाम्नायते—'षष्टिस्त्रिष्टुभो माध्यंदिनं सवनम् ' इति । अयमर्थः—' रौरव—यौधाजयनामके सामनी

१ ज. झ. पदो । २ ख. च. °कर्रात्या । ३ ख. °त्पत्तिर्वैय° । ज. झ. °त्पत्तो वैय° । ४ ख. च. ज. ञ. तामेतां । ५ क. °वे द्वे ।

माध्यंदिनसवने गीयेते । तस्मिंश्च सवने त्रिष्टुप्छन्दस्का ऋचः षष्टिर्भवन्ति' इति । सेयं षष्टिसंख्या प्रग्रथनपक्ष उपपद्यते । तथा हि—माध्यंदिनसवने—पवमान एकः । पृष्ठस्तोत्राणि चत्वारि । पवमाने—त्रीणि सूक्तानि । 'उच्चा ते जातम्'—इत्येकं सूक्तम् । तत्र—गायत्र्यस्तिस्र ऋचः । 'पुनानः सोम'—इति द्वितीयं सूक्तम् । तच्च प्रगाथरूपम् । तत्र—पूर्वा बृहती, उत्तरा विष्टारपङ्क्तिः । 'प्र तु द्रव परि-कोशम्'—इति तृतीयं सूक्तम् । तत्र—त्रिष्टुभस्तिस्रः । पृष्ठस्तोत्रेषु—'अभि त्वा शूर' इति—प्रगाथरूपं प्रथमं सूक्तम् । तत्र—पूर्वा बृहती, उत्तरा पङ्क्तिः । 'कया नश्चित्र' इति द्वितीयम् । तत्र तिस्रो गायत्र्यः । 'तं वो दस्ममृतीषहम्' इति तृतीयं प्रगाथरूपम् । तत्र—बृहतीपङ्क्त्यौ । 'तरोभिर्वो विदद्वसुम्' इति प्रगाथरूपं चतुर्थम् । तत्रापि बृहतीपङ्क्त्यौ । एवमस्मिन्सवने सप्त सूक्तानि । तेषु नव सामानि गेयानि । प्रथमे सूक्ते—गायत्रम्, आमहीयवं चेति द्वे सामनी । द्वितीये—रौरवं, यौधाजयं च । तृतीये—औशनम् । चतुर्थे—रथंतरम् । पञ्चमे—वामदेव्यम् । षष्ठे—नौधसम् । सप्तमे—कालेयम् । तत्र—प्रथमसूक्तस्य सामद्वयनिष्पत्तये द्विरावृत्तावाश्रयभूता ऋचः षड्गायत्र्यो भवन्ति । पञ्चमसूक्त-गता वामदेव्यसामाश्रयभूतास्तिस्र ऋचः सप्तदशस्तोमसिद्ध्यर्थमावर्तमानाः सप्त-दश गायत्र्य इत्येवं मिलित्वा त्रयोविंशतिर्गायत्र्यः । षष्ठे सूक्ते बृहतीपङ्क्त्योः प्रग्रथनेन बार्हतस्तृचो भवति । तथा—सप्तमेऽपि । तत्रोभयत्र सप्तदशस्तोमे सति चतुस्त्रिंशद्बृहत्यो भवन्ति । द्वितीयसूक्तेऽपि प्रग्रथनेन बार्हतं तृचं संपाद्य सामद्व-यार्थमावृत्तौ षड्बृहत्यो भवन्ति । चतुर्थसूक्ते—रथंतरसामार्थं पूर्ववर्णकोक्तरीत्या प्रग्रथने सति द्वे ककुभावुत्तरे भवतः । प्रथमा तु स्वतःसिद्धा बृहती । तत्र सप्तदशस्तोमे कृते सति पञ्च बृहत्यो द्वादश ककुभश्च संपद्यन्ते । तस्य च स्तोम-विधायकं ब्राह्मणमेवमाम्नायते—'पञ्चभ्यो हिंकरोति स तिसृभिः, स एकया, स एकया पञ्चभ्यो हिंकरोति । स एकयाः, स तिसृभि, स एकया । सप्तभ्यो हिंकरोति स एकया, स तिसृभिः, स तिसृभिः' इति । अयमर्थः—'एका स्वतःसिद्धा बृहती, प्रग्रथिते द्वे ककुभौ—इत्येवंविधस्तृचस्त्रिभिः पर्यायैरावर्तनीयः । प्रथमे पर्याये—त्रिर्बृहती गातव्या । सकृत्सकृत्ककुभौ । द्वितीये पर्याये—सकृद्-बृहती, त्रिवारमनन्तरा ककुप्, सकृदन्त्या ककुप् । तृतीये पर्याये—सकृद्बृहती, त्रिस्त्रिः ककुभौ, इति । हिंकरोति हिंकारोपलक्षितं गानं कुर्यादित्यर्थः । तदेवं तृतीयसूक्तव्यतिरिक्तेषु षट्सु सूक्तेषु त्रयोविंशतिर्गायत्र्यः, पञ्चचत्वारिंशद्बृहत्यः, द्वादश ककुभः संपन्नाः । तत्र—ककुबष्टाविंशत्यक्षरा । तस्यां षोडशाक्षरे गाय-

१ क. °ती माध्यंदिने—उ° । २ ज. झ. °वर्त्यं पा° । ३ क. °क्तरीत्या । ४ ज. झ. °भ्यो द्वा° ।

त्रीपादद्वये योजिते चतुश्चत्वारिंशदक्षरा त्रिष्टुप्संपद्यते। अनया दिशा द्वादशानां ककुभां त्रिष्टुप्संपादनाय चतुर्विंशतिर्गायत्रीपादा योजनीयाः। तथा सति अष्टौ गायत्र्यो गताः, पञ्चदश गायत्र्योऽवशिष्यन्ते। तासां पञ्चचत्वारिंशत्पादाः। तांश्च तावतीषु बृहतीषु संयोज्य त्रिष्टुभः संपादनीयाः। तत एताः पञ्चचत्वारिंशत्ककुप्सु निष्पन्ना द्वादश तृतीये सूक्ते स्वतःसिद्धास्तिस्रः, इत्येवं प्रग्रथनपक्षे षष्टिस्त्रिष्टुभ उत्तराग्रन्थे समाम्नाता एव लभ्यन्ते। उत्पत्तिबृहत्यानयने तु प्रकरणाम्नातानां तावतीनामलाभात्प्रकृतहानाप्रकृतप्रक्रिये प्रसज्येयाताम्। तस्मात्—'त्रिष्टुभः षष्टिः' इत्येतद्बृहतीप्रग्रन्थ(थन)स्य लिङ्गम्। प्रग्रथनप्रकारस्त्वभिधीयते—'पुनानः सोम'—इत्यस्या बृहत्याश्चतुर्थं पादं पुनरुपादाय द्विरभ्यस्य 'दुहान ऊधर्दिव्यम्'—इत्येतस्या विष्टारपङ्क्तेः पूर्वार्धेन संयोजयेत्। सा बृहती भवति। एतदीयं चतुर्थं पादं द्विरभ्यस्योत्तरार्धेन योजयेत्। साऽपि बृहती भवति। तस्मात्—यौधाजय—रौरवयोर्बृहत्यावुत्तरे प्रथनीये। एवं नौधसकालेययोरपि द्रष्टव्यम्॥ ९॥

( अनुष्टुब्गायत्र्योः प्रग्रथनेन श्यावाश्वान्धीगवयोर्गानसाधकं )

तृतीयं वर्णकमारचयति—

श्यावाश्वान्धीगवेऽनुष्टुबानेया ग्रथ्यतेऽथवा।
पुरेव लिङ्गं जगतीचतुर्विंशतिकीर्तनम्॥ १०॥

इदमाम्नायते—'पञ्चच्छन्दा आवापः, आर्भवः पवमानः सप्तसामा। गायत्रसंहिते गायत्रे तृचे भवतः। श्यावाश्वान्धीगवे आनुष्टुभे तृचे भवतः। उष्णिहि सफम्। ककुभि पौष्कलम्। कावमन्त्यं जगतीषु' इति। अयमर्थः—'अस्ति तृतीयसवने—पवमान आर्भवसंज्ञकः। तस्मिन्—पञ्च सूक्तानि, सप्त सामानि। 'स्वादिष्ठया मदिष्ठया'—इत्येकं सूक्तम्। तस्मिन्गायत्र्यस्तिस्र ऋचः। तासु गायत्रं संहितं चेति द्वे सामनी। 'पुरोजिती वो अन्धसः'—इति सूक्तान्तरम्। तत्र—एकाऽनुष्टुप्, उत्तरे द्वे गायत्र्यौ। तासु श्यावाश्वम्, आन्धीगवं चेति द्वे सामनी। 'इन्द्रमच्छसुता इमे' इत्यपरं सूक्तम्। तस्मिन्नुष्णिहस्तिस्रः। तासु सैफं साम। 'पवस्व मधुमत्तमः'—इति प्रगाथः। तस्मिन्पूर्वा ककुप्, उत्तरा पङ्क्तिः। तत्र पौष्कलं साम। 'अभि प्रियाणि पवते च नो हितः' इत्यन्यत्सूक्तम्। तत्र तिस्रो जगत्यः। तासु कावं साम। एतेषां पञ्चानां सूक्तानां मध्ये पुरोजितीयः।'पवस्व' इत्यनयोः सूक्तयोर्यद्यपि द्वे द्वे छन्दसी, तथाऽपि समासु गानं निष्पादयितुं प्रग्रथने कृते सत्येकैकमेव च्छन्दः संपद्यते। ततो गायत्र्यनुष्टुबुष्णिक्ककुब्जगतीभिः पञ्च च्छन्दाः। 'पवमानोऽस्मिन्सवन आवपनीयः'—इति। तत्र 'पुरोजिती वो' इत्यस्मिन्सूक्ते श्यावाश्वमान्धीगवं च समासु गातुमुत्तरे गायत्र्यावाम्नाते परित्यज्य

१ ख. °तिगाय°। २ ञ. °गतेऽनु°। ३ ज. झ. °हिता गा°। ४ ञ. हिते गायते तृ°। ५ क. ख. ञ. °न्द्र गच्छ। ६ ज. शफं। ७ ज. झ. सामसु। ञ. सामासु। ८ क. आह्वानी°।

द्वे उत्तरस्यनुष्टुभावानेतव्ये । इति पूर्वः पक्षः ।

चतुर्थं पादं पुनरादाय द्वे अनुष्टुभौ ग्रथनीये—इति राद्धान्तः । तत्रोभयत्र पूर्ववर्णकद्वयन्यायेन युक्तिर्द्रष्टव्या । लिङ्गं त्वेवमाम्नायते—'चतुर्विंशतिर्जगत्यस्तृतीयसवन एका च ककुप्' इति । सेयं संख्या प्रग्रथन उपपद्यते । तथा हि—गायत्रसंहितयोः साम्नोराश्रये गायत्रे तृचे द्विरभ्यस्ते सति षड्गायत्र्यो भवन्ति । चतुर्विंशत्यक्षरा गायत्री । अष्टाचत्वारिंशदक्षरा जगती । ततः षड्भिर्गायत्रीभिस्तिस्रो जगत्यो भवन्ति । श्यावाश्वान्धीगवयोराश्रयभूता प्रग्रथिता द्विरभ्यस्ताः षडनुष्टुभो *भवन्ति । मिलित्वा सप्त जगत्यः संपन्नाः । सफस्य पौष्कलस्य च सामान्तरवत्तृचे गानं न कर्तव्यम्, किंत्वेकैकस्यामृचि । तत्कुतोऽवगम्यते—'उष्णिहि, ककुभि' इति सप्तम्येकवचनान्ताभ्यां विशेषविधानात् । अष्टाविंशत्यक्षरयोरुष्णिक्ककुभोरेका जगती, गायत्रीपादश्च संपद्यते । ककुभि मध्यमः पादो द्वादशाक्षरः, उष्णिहि च परः पादः—इति तयोर्भेदः । कावस्याऽऽश्रयभूताः स्वतःसिद्धास्तिस्रो जगत्य इति मिलित्वा पवमानेऽस्मिन्नेकादश जगत्यो भवन्ति । गायत्रीपादश्चातिरिच्यते । आर्भवपवमानवत्तृतीयसवने यज्ञायज्ञीयस्तोत्रमेकमस्ति । तस्य चाऽऽश्रयः 'यज्ञायज्ञा वो अग्नयः'—इत्यसौ प्रगाथः । तत्र—पूर्वा जगती, उत्तरा विष्टारपङ्क्तिः । तयोः प्रग्रथनेन ककुभावुत्तरे कर्तव्ये । तत्रैकविंशस्तोमः । तस्य विधायिका विष्टुतिरेवमाम्नायते—'सप्तभ्यो हिंकरोति—स तिसृभिः, स तिसृभिः, स एकया । सप्तभ्यो हिंकरोति—स एकया, स तिसृभिः, स तिसृभिः । सप्तभ्यो हिंकरोति—स तिसृभिः, स एकया, स तिसृभिः' इति । अयमर्थः—'प्रथमायां बृहत्यां त्रिषु पर्यायेषु क्रमेण त्रिवारमेकवारं पुनस्त्रिवारम्—इति सप्त बृहत्यः । मध्यमायाः प्रथमद्वितीययोः पर्याययोस्त्रिस्त्रिः पाठः । अन्त्ये सकृत् । उत्तमायाः ककुभ आदौ सकृत्, द्वितीयतृतीययोस्त्रिस्त्रिः' इत्येवं चतुर्दश ककुभः । तासु ककुप्सु द्वादशाक्षरा मध्यपादाश्चतुर्दश । तेषु सप्त पादाः सप्तसु बृहतीषु योजनीयाः । ततः सप्त जगत्यो भवन्ति । अवशिष्टाक्षराः ककुभामाद्यपादा अन्त्यपादाश्च मिलित्वाऽष्टाविंशतिः । तेषु षड्भिः पादैरेका जगती, इत्यनेन क्रमेण चतुर्विंशतिपादैश्चतस्रो जगत्यो भवन्ति । ये तु द्वादशाक्षराः सप्त पादाः पूर्वमवशिष्टाः, तेषु पवमानशेषोऽष्टाक्षरः पादो योजनीयः । ककुभां शेषेष्वष्टाक्षरेषु चतुर्षु पादेषु चत्वार्यक्षराणि योजनीयानि । ते द्वे जगत्यौ भवतः । तदेवं

*'षड्भिरनुष्टुब्भिश्चतस्रो जगत्यो भवन्ति' इति तु युक्तम् ।

१ ख. च. ज. झ. ञ. °नरुपाद्दा° । २ ज. °संहत° । ३ ज. झ. °श्वाङ्गीग° । ४ ञ. स्ततद्दश । ५ ज. झ. सफलस्य । ६ ञ. चरमः पा° । ७ ज. झ. कायस्या° । ञ. कायवस्या° । ८ क. माने च तृती° । ९ च. ज. झ. °ध्यमपा° । १० ख. च. ज. झ. °शिष्टा अष्टाक्ष° । ११ च. झ. ञ. °षु चानि च° । १२ च. झ. ञ. °णि तान्यत उद्धृत्य पूर्वत्र यो° ।

यज्ञायज्ञीयस्तोत्रे त्रयोदश जगत्यः, पूर्वोक्ताः पवमानगता एकादश, इति चतुर्विंशतिर्जगत्यः। चतुरक्षरवर्जिताश्चत्वारोऽष्टाक्षरपादा मिलित्वा ककुबेका भवति। अनेन लिङ्गेन श्यावाश्वमान्धीगवं च प्रग्रथिते तृचे गातव्यम्। न तु तयोरत्पत्य-नुष्ठानयनमिति स्थितम्॥ १०॥

( पादप्रग्रथनेन ब्रह्मसामगानसाधकं ) चतुर्थवर्णकमारचयति—

चतुःशते प्रग्रथनमृचः पादस्य वाऽग्रिमः।
तृचे मुख्यत्वतो मैवमृगन्यत्वस्य वर्णनात्॥ ११॥

गवामयने ब्रह्मसाम विहितम्—'अभीवर्तो ब्रह्मसाम भवति' इति। तत्प्रकरणे श्रूयते—'चतुःशतमैन्द्रा बार्हताः प्रगाथाः' इति। चतुरुत्तरशतसंख्याका इन्द्रदेवताका बृहतीछन्दस्काः प्रगाथा ऋग्द्वयात्मकाः। तेषु—एकप्रगाथगते द्वे ऋचौ द्वितीयप्रगाथगतामृचं च प्रग्रथ्य तृचेऽभीवर्तनामकं साम गातव्यम्। तथा सति—आम्नातानामविकृतानामेव तिसृणामृचां लाभात्तृचस्य मुख्यत्वं भवति। पूर्वोक्तनीत्या पादप्रग्रथने तु विकृतत्वादमुख्यस्तृचः स्यात्। इति प्राप्ते—

ब्रूमः—'अन्या अन्या ऋचो भवन्ति, तदेव साम' इत्यृचामन्यत्वमत्र वर्ण्यते। तच्च पादप्रग्रथने संभवति। ऋक्प्रग्रथने तु येयमृक्पूर्वस्य तृचस्यान्त्या, सैवोत्तरस्य तृचस्याऽऽद्या, इत्यन्यत्वमृचो न स्यात्। तस्मात्—पादस्य प्रग्रथनम्॥ ११॥

( सप्तमे—गीतिसंपादकाक्षरविकारादीनां विकल्पाधिकरणे सूत्रम्— )।

अर्थैकत्वाद्विकल्पः स्यात्॥ २९॥

सप्तमाधिकरणमारचयति—

समुच्चेया विकल्प्या वा विभिन्ना गीतिहेतवः।
आद्यः प्रयोगग्रहणादर्थैकत्वाद्विकल्पनम्॥ १२॥

छान्दोग्ये तलवकारादिशाखाभेदेषु विलक्षणा गीतिहेतवोऽक्षरविकारादय आम्नायन्ते। ते सर्वे कर्मानुष्ठाने समुच्चेतव्याः। कुतः। प्रयोगवचनेन सर्वेषां परिगृहीतत्वात्।

मैवम्। एकैकशाखोक्तैरेवाक्षरविकारादिभिरध्ययनकाल इव गीतिस्वरूपनिष्पत्तेः। तन्निष्पत्तिलक्षणस्य प्रयोजनस्यैकत्वात्प्रयोगवचनपरिगृहीता अपि व्रीहियववद्बृहद्रथंतरवच्च विकल्प्यन्ते॥ १२॥

१ क. न. ञ. °करीत्या। २ ज. ञ. °रस्याऽऽद्या। ३ ख °मुच्चये कर्तव्याः।

( अष्टमे—वर्णकत्रयसहिते सूत्रे ३०–३१ )।

अर्थैकत्वाद्विकल्पः स्यादृक्सामयोस्तदर्थत्वात्
॥ ३० ॥ वचनाद्विनियोगः स्यात् ॥ ३१ ॥

अष्टमाधिकरणे ( साम्नैव स्तवविधानसाधकं ) प्रथमवर्णकमारचयति—

ऋक्सामाभ्यां विकल्पेन स्तुतिः साम्नैव वाऽग्रिमः।
पुरेव नैवमृङ्निन्दासामप्राशस्त्यदर्शनात् ॥ १३ ॥

क्वचित्कर्मविशेषे श्रूयते—'ऋचा स्तुवते। साम्ना स्तुवते' इति। तत्र पूर्वन्यायेन विकल्पः। इति चेत्।

नैवम्। ऋङ्निन्दा—सामप्रशंसयोर्वाक्यशेषेऽवगमात्। 'यदृचा स्तुवते, तदसुरा अन्ववायन्। यत्साम्ना स्तुवते, तदसुरा नान्ववायन्। य एवं विद्वान्साम्ना स्तुवीत' इत्यृचं निन्दित्वा साम प्रशस्य लिङ्प्रत्ययेन साम विहितम्। तस्मात्—साम्नैव स्तोतव्यम् ॥ १३ ॥

( प्रगीतयैवर्चा वह्न्युपस्थानसाधकं)द्वितीयवर्णकमारचयति—

गानस्य नियमो नोत विद्यते वह्न्युपस्थितौ।
नाऽऽम्नानद्वयतोऽस्त्येव प्रकृतत्वाच्छ्रुतेरपि ॥ १४ ॥

क्वचित्कर्मविशेषे श्रूयते—'अयं सहस्रमानवः—इत्येतयाऽऽहवनीयमुपतिष्ठते' इति। असावृगप्रगीता संहिताग्रन्थे समाम्नाता, प्रगीता गानग्रन्थे। ततो वह्न्युपस्थाने तस्यामृचि गानं न नियतम्, किंतु विकल्पितम्। इति प्राप्ते—

ब्रूमः—अस्त्येव नियमो गाने। कुतः। सामवेदे गानस्यैव प्रकृतत्वात्। ऋचां संहितापाठोऽप्य गानायैव। नह्याधारमन्तरेण गातुं शक्यते। अथोच्येत—'अयं सहस्र'—इत्यृक्प्रतीकपूर्वकेण वाक्येनोपस्थानविधानाद्वाक्यस्य प्रकरणात्प्रबलत्वादृचैवोपस्थानम्—इति। तन्न। प्रकृतप्रगीतमन्त्रवाचिन्याः 'एतया' इति सर्वनामश्रुतेः प्रबलतरत्वात्। तस्मात्—प्रगीतयोपस्थानम् ॥ १४॥

( याज्यानुवाक्यादीनां तानेन प्रयोगसाधकं ) तृतीयवर्णकमारचयति—

त्रैस्वर्यादि समुच्चेयं विकल्प्यं तान एव वा।
प्रयोगादर्थतो द्वौ नो वचनात्स्मृतिकल्पितात् ॥ १५ ॥

'अग्निर्मूर्धा'—इत्यादियाज्यानुवाक्यादयो मन्त्राः सामप्रसङ्गाद्विचार्यन्ते। ते च कस्यांचिच्छाखायां त्रैस्वर्येणाधीयन्ते कैश्चिच्चातुःस्वर्येण। उदात्तानुदात्तस्वरिते-

१ च. °क्सामभ्यां। २ ञ. °णाद्बलवादृ°। ३ क. ज. झ. °तवा°। ४ च. ज. झ. ञ. °न्यापुरोनु°।

भ्यो व्यतिरिक्तश्चतुर्थस्वर एकश्रुतिः। तां चाध्यापकाः 'प्रचयः' इत्याचक्षते। तत्र—प्रयोगवचनस्य सर्वाङ्गोपसंहारित्वात्समुच्चयस्त्रैस्वर्यादीनाम्। इत्येकः पक्षः।

अध्ययननिर्वृत्तिलक्षणस्य प्रयोजनस्यैकत्वाद्विकल्पः। इति द्वितीयः पक्षः।

नैतौ द्वौ पक्षौ युक्तौ। एकश्रुतेर्व्याकरणस्मृतौ विहितत्वात्। तथा च पाणिनीयं सूत्रम्—'यज्ञकर्मण्यजपन्यूङ्खसामसु' (१।२।३४) इति। 'अग्निं गृह्णामि सुरथम्—इत्यादयो मन्त्रा यजमानेनैव जप्यन्ते। न्यूङ्खाः प्रणवाः। सामानि रथंतरादीनि। एतेभ्यो जपादिभ्यो व्यतिरिक्तानां मन्त्राणां यज्ञकर्मण्येकश्रुतिर्भवति। अनया च स्मृत्याऽनुमितं वेदवाक्यमेतत्—'तानो यज्ञकर्मणि' इति। 'तानः' इत्येकश्रुतेः पूर्वाचार्यसंज्ञा। न च—एकश्रुतित्वे स्वराध्ययनं व्यर्थम्—इति वाच्यम्। स्वरविशेषेण बहुव्रीहितत्पुरुषसमासादिनिश्चये सत्यर्थविशेषस्यावबोद्धुं शक्यत्वात्। जपादिषु तु यथाध्ययनं स्वरः प्रयोक्तव्यः॥१५॥

(नवमे—उत्तरावर्णवशेन गानाधिकरणे सूत्रे ३२—३३)।

सामप्रदेशे विकारस्तदपेक्षः स्याच्छास्त्रकृतत्वात्॥ ३२॥

वर्णे तु बादरिर्यथाद्रव्यं द्रव्यव्यतिरेकात्॥ ३३॥

नवमाधिकरणमारचयति—

आयीभावो योनिवशादुत्तरावशतोऽथवा।

गीत्यर्थत्वादादिमोऽन्त्यो वर्णाभिव्यञ्जकत्वतः॥ १६॥

'यद्योन्याम्, तदुत्तरयोर्गायति' इति श्रूयते। तत्र—'कया नश्चित्र आभुवत्' इत्यसावृग्योनिः। तस्यामृचि 'कया' इत्यक्षरद्वयमाद्यो भागः। 'नश्चित्र आभुवत्' इत्यक्षरषट्कं द्वितीयो भागः। तस्मिन्भागे द्वितीयाक्षरे चकारस्योपरितनमिकारं विलोप्य तस्य स्थाने *आयीभावमाम्नाय गीतिर्निष्पादिता। 'कस्त्वा सत्यो मदानाम्' इत्यनन्तरभाविन्युत्तरा। तस्यां योनिन्यायेन चतुर्थाक्षरे तकारस्योपरितनं यकारमोकारं च लोपयित्वा तयोः स्थान आयीभावः। 'अभीषुणः'—इत्यसावपरोत्तरा।

तस्यामपि चतुर्थाक्षरे णकारस्योपरितनमकारं लोपयित्वा तस्य स्थान आयीभावः कर्तव्यः। अन्यथा गीतिनाशप्रसङ्गात्। इति प्राप्ते—

ब्रूमः—नात्र योनौ वर्णान्तरस्याऽऽगमः कृतः। किं तर्हि विद्यमान एव चकारस्योपरितन इकारः सामप्रसिद्धया प्रक्रियया वृद्धः सन्नैकारो भवति। तस्य

*'आयी' इत्यस्य स्थाने 'आई' इति पाठः शाबरभाष्ये।

१ क. ख. सूत्रम्। २ ख. °चस्य यो°। ३ क. ख. °नामप्र°। ४ क. ख. कुतः।

संध्यक्षरत्वादकारः पूर्वभागः, ईकार उत्तरभागः । तावुभौ विश्लेषेण गीयमाना-वायीभावं प्रतिपद्येते। तथा च सामगा आहुः—'वृद्धं तालव्यमायी भवति' इति। तथा सति चतुर्थाक्षरे नास्ति तालव्य इकार इत्यायीभावो न कर्तव्यः। 'अभी-षुणः सखीनामविता जरितृणाम्' इत्येतस्यामुत्तरायां द्वादशाक्षरगतस्य रेफस्यो-परितन इकारः पूर्ववदायी भवति। सोऽयमायीभाव उक्तनीत्या वर्णाभिव्यञ्जक-त्वादुत्तरागतवर्णवशेन कर्तव्यः । गीत्यर्थत्वाभावेन योनिक्रमे तेन विनाऽपि न गीतिर्विनश्यति ॥ १६ ॥

( दशमे—उत्तरयोः स्तोभातिदेशाधिकरणे सूत्राणि ३४–३८ )।

स्तोभस्यैके द्रव्यान्तरे निवृत्तिमृग्वत् ॥ ३४ ॥ सर्वातिदेशस्तु सामान्याल्लोकवद्विकारः स्यात् ॥ ३५ ॥ अन्वयं चापि दर्शयति ॥ ३६ ॥ निवृत्तिर्वाऽर्थलोपात् ॥ ३७ ॥ अन्वयो वाऽर्थ-वादः स्यात् ॥ ३८ ॥

दशमाधिकरणमारचयति—

स्तोभा नोत प्रदिश्यन्ते नागीतित्वेन वर्णवत् ।
स्वरादिवत्प्रदिश्यन्ते गीतिकालोपयोगतः ॥ १७ ॥

वामदेव्यसाम्नो योनौ द्वयोरर्धयोर्मध्य ओकारद्वयेन होशब्देन हायीशब्देन च निष्पन्नः स्तोभ एवमाम्नातः—'ओ ओ हो हायी' इति। सोऽयं स्तोभो नोत्तर-योरतिदिश्यते। कुतः। अगीतित्वात्। 'यद्योन्यां तदुत्तरयोर्गायति' इति गीति-मात्रमतिदिश्यते। तत्र प्रथमाया ऋचो वर्णा यथा नातिदिश्यन्ते, तथा स्तोभा अपि। इति प्राप्ते—

ब्रूमः—स्वरो वर्णविशेषो विराम इत्येते गीत्युपयोगित्वाद्यथाऽतिदिश्यन्ते, तथा स्तोभा अपीति कालपरिच्छेदकत्वादतिदिश्यन्ताम् ॥ १७॥

( एकादशे—स्तोभलक्षणाधिकरणे सूत्रम्— )।

अधिकं च विवर्णं च जैमिनिः स्तोभशब्दत्वात् ॥ ३९ ॥

एकादशाधिकरणमारचयति—

---

१ ख. ञ. इकार। २ ख. च. ञ. °करीत्या। ३ ख. एवाऽऽम्ना°। ४ च. °तः—'ओ हो। ख. °तः—'१२ ३७ हो। ञ, °तः—'ओ हो।

स्तोभस्य लक्षणं नास्ति किंवाऽस्ति, न विवर्णता।
आधिक्यमप्यतिव्याप्तं विशिष्टं लक्षणं भवेत्॥ १८॥

न तावद्विवर्णत्वं तल्लक्षणम्। वर्णविकारस्य विपरीतवर्णत्वेन स्तोभत्वप्रसङ्गात्। 'अग्न आयाहि'—इत्यस्यामृचि, अकारस्य स्थाने ओकारं कृत्वा गायन्ति—'ओग्नायी' इति। 'अधिको वर्णः स्तोभः' इत्युक्ते सत्यभ्यासेऽतिव्याप्तिः। 'पिबा सोममिन्द्र मन्दतु त्वा' इत्येतस्यामृचि 'दतु त्वा' इत्यक्षरत्रयं गानकाले विरभ्यस्तम्। अतो विकाराभ्यासयोरतिव्याप्तेर्नास्ति लक्षणम्। इति चेत्।

मैवम्। 'अधिकत्वे सत्यृग्विलक्षणवर्णः स्तोभः—इति विशिष्टस्य तल्लक्षणत्वात्। लोकेऽपि सभायां विप्रलम्भकेनोच्यमानं प्रकृतार्थानन्वितं कालक्षेपमात्रहेतुं शब्दराशिं 'स्तोभः' इत्याचक्षते। तस्मात्—अस्ति लक्षणम्॥ १८॥

(द्वादशे—नीवारादिषु प्रोक्षणाघातादिधर्मानुष्ठानाधिकरणे सूत्रम्)।

धर्मस्यार्थकृतत्वाद्द्रव्यगुणविकारव्यतिक्रमप्रतिषेधे चोदनानुबन्धः समवायात्॥ ४०॥

द्वादशाधिकरणमारचयति—

न स्युः स्युर्वाऽत्र नीवारा व्रीहिस्थाने*ऽमितेर्नहि।
विकारताद्धिताच्च स्युः, प्रोक्षणादिरतो भवेत्॥ १९॥
मध्वाशनस्वपूतत्वपरिधीरापदेष्वपि।
ये धर्माः षडहादीनां ते कार्याः स्थानपाततः॥ २०॥

सामोहो गतः। अथ संस्कारोहः। वाजपेये नैवारश्चरुः श्रुतः। तत्र नीवाराणां व्रीहिस्थानपाते प्रमाणाभावाद्व्रीहिधर्माः प्रोक्षणावघातादयो नीवारेषु न कर्तव्याः। इति चेत्।

मैवम्। 'नैवारः' इत्यस्य विकारार्थतद्धितस्य व्रीहिस्थानीयत्वे प्रमाणत्वात्। यथा व्रीहयस्तण्डुलद्वारेण हविर्निष्पादसाधनम्, तथा नीवारा अपि। तस्मात्—सन्ति प्रोक्षणादयः।

अयं न्यायो मध्वशनादौ योजनीयः। 'संस्थिते पृष्ठ्ये षडहे मध्वाशयेत्।

* 'डुमिञ् प्रक्षेपणे' इत्यस्य रूपम्। तथा च 'अपतनात्' इत्यर्थः पर्यवस्यति।

१ ख. °भवत्प्रस°। २ ख. ञ. °न ओंका°। ज. झ. °न उका°। ३ ख. ञ. °न्ति—नोत्वा°। [illegible]. झ. °न्ति—उक्ता°। ४ ञ. °ध्वाशन°।

घृतं वा' इत्यत्र षडहधर्मो व्रतनियमादिर्मध्वशनैः कर्तव्यः । राजसूये 'नैकवं चरुं नखावपूतानाम्' इत्यत्रोलूखलमुसलयोर्धर्मः प्रोक्षणं नखेषु कर्तव्यम् । चातुर्मास्येषु 'परिधौ पशुं नियुञ्जीत' इत्यत्र यूपधर्मः पशुनियोजनं विस्पष्टमेव पशौ श्रुतम् । ज्योतिष्टोमे 'ऐरं कृत्वोद्गेयम्' इत्यत्र गिरापदधर्म आग्निभावादिरिरापदे कर्तव्यः ॥१९॥२०॥

( त्रयोदशे—परिधौ यूपधर्मानुष्ठानाधिकरणे सूत्राणि ४१—४३ ) ।

तदुत्पत्तेस्तु निवृत्तिस्तत्कृतत्वात्स्यात् ॥४१॥ आवेश्येरन्वाऽर्थवत्त्वात्संस्कारस्य तदर्थत्वात्॥४२॥ आख्या चैवं तदावेशाद्विकृतौ स्यादपूर्वत्वात् ॥ ४३॥

त्रयोदशाधिकरणमारचयति—

न यूपधर्माः परिधौ सन्ति वाऽन्यार्थजत्वतः ।
नाविरोधादञ्जनाद्याः स्युर्नियोजनसाधने ॥ २१ ॥

चातुर्मास्येषु यूपकार्यं पशुनियोजनं स्थविष्ठे मध्यमे परिधावाम्नायते—'परिधौ पशुं नियुञ्जीत' इति । तत्र नियोजनकार्येण परिधेर्यूपस्थानीयत्वेऽपि न यूपधर्मास्तक्षणादयोऽञ्जनादयश्च तत्र युक्ताः । कुतः । अग्निपरिधानार्थं मध्यमपरिधेरितरपरिधिवदुत्पन्नत्वात् । इति चेत् ।

बाढम् । अन्यार्थमुत्पन्नस्यापि वचनान्नियोजनसाधनत्वमस्ति । यूपोऽपि पशुनियोजनार्थं संस्क्रियते । ततो नियोजसाधने परिधौ युक्ताः संस्काराः । ननु—परिधिस्त्वक्सहितः, शयानश्च । तत्र तक्षणोच्छ्रायौ यूपधर्मौ विरुध्येते । एवं तर्हि तौ मा भूताम् । अविरुद्धास्त्वञ्जनादयः कर्तव्याः । तथा सति संस्कारनिमित्तस्य यूपशब्दस्य परिधावपि मुख्यत्वात् । 'यूपायाज्यमानायानुब्रूहि' इत्यस्मिन्प्रैषमन्त्रे 'परिधयेऽज्यमानाय' इत्येवमूहो न कर्तव्यः ॥२१॥

( चतुर्दशे—शृतादौ प्रणीताधर्मानुष्ठानाधिकरणे सूत्रे ४४—४५ ) ।

परार्थेन त्वर्थसामान्यं संस्कारस्य तदर्थत्वात् ॥४४॥ क्रियेरन्वाऽर्थनिर्वृत्तेः ॥ ४५ ॥

चतुर्दशाधिकरणमारचयति—

---

१ ख. च. °र्थकृत्वतः । ञ. °र्थवत्त्वतः । २ ञ. न च ।

शृतदध्नोः प्रणीतानां न धर्माः सन्ति वा न हि।
अपाकार्थत्वतः, सन्ति पाकहेतुत्वसाम्यतः॥ २२॥

अभ्युदयेष्ट्यां 'शृते चरुम्। दधनि चरुम्' इति शृतदधिनी आम्नाते। तयोः प्रणीताधर्मा न कर्तव्याः। हविःश्रपणार्थमुत्पन्ना उत्पवनादिधर्मसंस्कृता आपः प्रणीताः। दधिपयसी तु श्रपणार्थं नोत्पन्ने। किंतु हविष्ट्वेन प्रदानार्थमुत्पन्ने। ततः साम्याभावान्नोत्पवनादयो धर्मास्तयोः। इति चेत्।

मैवम्। अन्यार्थमुत्पन्नयोरपि दधिपयसोरत्र चन्द्रोदयं निमित्तीकृत्य चरुश्रपणहेतुत्वं वाचनिकम्। ततः समानत्वात्तद्धर्माः सन्ति॥ २२॥

( पञ्चदशे—बृहद्रथंतरयोर्धर्मव्यवस्थाधिकरणे सूत्रे ४६–४७ )।

एकार्थत्वादविभागः स्यात्॥ ४६॥
निर्देशाद्वा व्यवतिष्ठेरन्॥ ४७॥

पञ्चदशाधिकरणमारचयति—

बृहद्रथंतरे धर्मैः संकीर्णे वा व्यवस्थिते।
पृष्ठैक्यात्संकरो धर्मे निर्देशादेर्व्यवस्थितिः॥ २३॥

ज्योतिष्टोमे विकल्पितं पृष्ठस्तोत्रं विहितम्—'बृहत्पृष्ठं भवति। रथंतरं पृष्ठं भवति' इति। तत्रोभयत्र धर्माः श्रुताः—'बृहति स्तूयमाने मनसा समुद्रं ध्यायेत्। रथंतरे प्रस्तूयमाने संनी(मी)लयेत्' इत्यादयः। ते ह्युभयत्र संकीर्येरन्। पृष्ठस्तिखिलक्षणस्य कार्यस्यैकत्वात्। इति चेत्।

न। निर्देशभेदात्। सांकर्ये त्ववैलक्षण्येन 'बृहत्' इति, 'रथंतरम्' इति च द्वौ निर्देशौ नोपपद्येयाताम्। किंच——उभयधर्मसाहित्यं विरुद्धम्। 'उच्चैर्गेयम्। बलवद्गेयम्' इति बृहद्धर्माः। 'नोच्चैर्गेयम्। न बलवद्गेयम्' इति रथंतरधर्माः। तस्मात्—उभयोर्धर्मा व्यवतिष्ठन्ते॥ २३॥

( षोडशे—कण्वरथंतरे बृहद्रथंतरधर्मसमुच्चयाधिकरणे सूत्रम्— )।

अप्राकृते तद्विकाराद्विरोधाद्व्यवतिष्ठेरन्॥ ४८॥

षोडशाधिकरणमारचयति—

तयोर्धर्माः समुच्चेया न वा कण्वरथंतरे।
द्विस्थानत्वाद्द्वाभ्य आद्यो विरोधाद्वार्तिकेऽन्तिमः॥ २४॥

---

१ख. च. °न,। कुतः। पृ°।

वैश्यस्तोमे ' कण्वरथंतरं पृष्ठं भवति ' इति श्रूयते । तत्र—कण्वरथंतराख्यसाम्नः प्राकृतयोः पृष्ठस्तोत्रसाधनयोर्बृहद्रथंतरयोरुभयोः स्थाने पतितत्वादुभयसंबन्धिधर्माः समुच्चेतव्याः । ये तु विरुद्धधर्माः—' उच्चैर्गेयम् ' ' नोच्चैर्गेयम् ' इत्यादयः, ते विकल्प्यन्ताम् । समुद्रध्याननिमीलनादीनां विरोधाभावात् । प्रकृताविव निर्देशभेदस्यात्राभावाच्च समुच्चयः । इति भाष्यकारस्य मतम् ।

विकल्पितयोरेव द्वयोः स्थाने पतितत्वाद्विरुद्धधर्मस्वारस्याच्च विकल्प एव युक्तः, न तु समुच्चयः । इति वार्तिककारस्य मतम् ।

तत्रोभयत्र तत्तन्मतविपरीतः पूर्वः[1] पक्ष उन्नेयः ॥२४॥

( सप्तदशे—द्विसामके बृहद्रथंतरयोर्व्यवस्थाधिकरणे सूत्रे ४९—५० ) ।

**उभयसाम्नि चैवमेकार्थापत्तेः ॥ ४९ ॥ स्वार्थत्वाद्वा व्यवस्था स्यात्प्रकृतिवत् ॥ ५० ॥**

सप्तदशाधिकरणमारचयति—

**द्विसामके द्वयोर्धर्मसांकर्यं वा व्यवस्थितिः ।**
**पृष्ठैक्यात्संकरो नैवं धर्माणां सामगत्वतः ॥ २५ ॥**

' गोसव उभे कुर्यात् ' इत्यादिना गोसवादौ बृहद्रथंतरसामद्वयसाध्यं पृष्ठस्तोत्रं विहितम् । तत्र पृष्ठस्तोत्रस्यैकत्वेन धर्मव्यवस्थाया असंभवाद्बृहत्युभयधर्माः कर्तव्याः । रथंतरेऽप्युभयधर्मा इत्येवं सांकर्यम् । इति चेत् ।

नैवम् । न ह्येते पृष्ठस्तोत्रप्रयुक्ता धर्माः, किंतु सामप्रयुक्ताः । ततः—साम्नोर्भेदाद्धर्मा व्यवतिष्ठन्ते ॥ २५ ॥

(अष्टादशे—सौर्यादिषु पार्वणहोमाद्यननुष्ठानाधिकरणे सूत्राणि ५१-५६) ।

**पार्वणहोमयोस्त्वप्रवृत्तिः समुदायार्थसंयोगात्तदभीज्या हि ॥ ५१ ॥ कालस्येति चेत् ॥ ५२ ॥ नाप्रकरणत्वात् ॥ ५३ ॥ मन्त्रवर्णाच्च ॥ ५४ ॥ तदभावेऽग्निवदिति चेत् ॥ ५५ ॥ नाधि(वि?)कारिकत्वात् ॥ ५६ ॥**

अष्टादशाधिकरणमारचयति—

---

1 ख. ग. पूर्वप°

सौर्यादौ पार्वणौ होमौ स्तो न वा कालदेवकौ ।
स्तः संघदेवकौ संघाविकारत्वान्न तत्र तौ ॥ २६ ॥

दर्शपूर्णमासयोः श्रूयते–'स्रुवेण पार्वणौ जुहोति' इति । तत्र–पर्वशब्दः कालविशेषवाची । ततः–कालदेवकौ तौ होमावारादुपकारकतया प्रयाजादिवत्सौर्यादिविकृतिष्वतिदिश्येते । इति चेत् ।

मैवम् । पर्वशब्दस्याऽऽग्नेयादित्रिकसंघपरत्वात् । दानार्थवाचिनः पृणातेर्धातोर्निष्पन्नोऽयं पर्वशब्दः । स च 'प्रियते दीयतेऽस्मिन्' इत्यधिकरणव्युत्पत्त्या कालमाचष्टे । भावव्युत्पत्त्या तु क्रियापरः सन्प्रकरणवशादाग्नेयादिकर्मत्रयसंघमाह । तथा च मन्त्रवर्णोऽप्यनुगृहीतो भवति–'ऋषभं वाजिनं वयं पूर्णमासं यजामहे' इत्येको मन्त्रः । 'अमावास्या सुभगा सुशेवा धेनुरिव भूय आप्यायमाना' इत्यपरो मन्त्रः । तत्र–अग्नीषोमवत्कर्मत्रयसंघस्य व्यासक्तदेवतात्वम् । न च संघस्य विकृतिः सौर्यादिः, किंतु–आग्नेयस्यैव । ततः–संघार्थयोर्होमयोर्नास्ति सौर्यादौ प्राप्तिः ॥२६॥

( एकोनविंशे–दर्शपूर्णमासयोर्होमद्वयस्य व्यवस्थाधिकरणे–सूत्रे ५७–५८ ) ।

उभयोरविशेषात् ॥ ५७ ॥ यदभीज्या वा तद्विषयौ॥५८॥

एकोनविंशाधिकरणमारचयति–

संकीर्णौ संघयोर्होमौ न वा प्रकरणादुभौ ।
संकीर्णावुपकार्यस्य भेदादेतौ व्यवस्थितौ ॥ २७ ॥

दर्शपूर्णमासप्रकरणे पठितत्वात्प्रयाजादिवद्दर्शेऽपि होमद्वयं कर्तव्यम् । पूर्णमासेऽपि तथा । इति चेत् ।

मैवम् । उपकार्ययोः संघयोर्व्यवस्थितत्वेनोपकारकयोर्होमयोरपि व्यवस्थाया युक्तत्वात् ॥ २७ ॥

( विंशे–समिदादीनां यागनामधेयताधिकरणे सूत्राणि५९–६० ) ।

प्रयाजेऽपीति चेत् ॥ ५९ ॥ नाचोदितत्वात् ॥ ६० ॥

विंशाधिकरणमारचयति–

देवता यजयो वा स्युः प्रयाजे समिदादयः ।
विष्ण्वादिवद्देवतात्वं न चतुर्थ्याद्यभावतः ॥ २८ ॥

---

१ क. ज. झ. सुसेवा ।

दर्शपूर्णमासयोः प्रयाजपञ्चकमाम्नातम्-'समिधो यजति' इत्यादिना। तत्र-यथा 'विष्णुं यजति' 'वरुणं यजति' इत्यादौ द्वितीयानिर्दिष्टा विष्ण्वादयो देवताः, तथा समिदादीनां देवतात्वम्। ततो यागैर्देवताः संस्क्रियन्ते, इति दृष्टार्थत्वलाभः। इति चेत्।

मैवम्। सर्वत्र चतुर्थ्या तद्धितेन वा देवता निर्दिश्यन्ते। तद्यथा-'यदग्नये सायं जुहुयात्' 'आग्नेयोऽष्टाकपालः' इति। न च-अत्र समिदादिषु चतुर्थीतद्धितौ विद्येते। तादर्थ्यप्रतीतौ देवता भवति। न च-द्वितीयया तादर्थ्यं प्रतीयते, किंतु-ईप्सिततमत्वम्। तच्च कर्मनामत्व उपपद्यते। 'अग्निहोत्रं जुहोति' इत्यादौ तद्दर्शनात्। यथा 'पाकं पचति' इत्युक्ते पचिक्रियायाः कर्तव्यता प्रतीयते। तथा 'समिधो यजति' इत्युक्ते समिद्यागः कर्तव्य इत्यर्थो भवति। 'विष्णुं यजति' इत्यादौ तादर्थ्यमुपचर्यते। प्रयाजमन्त्रेषु 'समिधो अग्न आज्यस्य व्यन्तु' इत्यादिषु समिदादिशब्दैर्बहुवचनैकवचनान्तैर्देवता निर्दिष्टाः। तदेव निमित्तीकृत्य तादृशैरेवशब्दैरिह यागा अभिधीयन्ते-'समिधो यजति। तनूनपातं यजति। इडो यजति। बर्हिर्यजति। स्वाहाकारं यजति' इति। तस्मात्-नात्र देवतासंस्कारविधिः, किंतु यागाः केवला विधीयन्ते। तेषां च श्रुत्यादिभिः कार्यविशेषानवगमात्प्रकरणेनाऽऽरादुपकारकत्वम्। पञ्चमप्रयाजस्य तु वक्ष्यमाणाज्यभागादिदेवतादिसंस्कारकत्वं दशमेऽभिधास्यते॥ २८॥

इति श्रीमाधवीये जैमिनीयन्यायमालाविस्तरे नवमाध्यायस्य द्वितीयः पादः॥ २॥

| | अत्र पादे | आदितः। |
|---|---|---|
| अधिकरणानि | २० | ५६७। |
| सूत्राणि | ६१ | १६५०। |

---

(अथ नवमाध्यायस्य तृतीयः पादः)।

(प्रथमे-विकृतौ मन्त्रगतव्रीह्यादिशब्दानामूहाधिकरणे सूत्रे १-२)।

प्रकृतौ यथोत्पत्तिवचनमर्थानां तथो-
त्तरस्यां ततो तत्प्रकृतित्वादर्थे चाकार्य-

---

१ ख. °र्थी तद्धितो वा वि°। २ ख. वियन्तु। ३ क. ख. च. ञ. तु वक्ष्य°।

त्वात् ॥ १ ॥ लिङ्गदर्शनाच्च ॥ २ ॥

तृतीयपादस्य प्रथमाधिकरणमारचयति—

अग्निर्वीह्यादयो नोह्या ऊह्या वा नहि चोदनात् ।
विवक्षा देवहविषोर्दृष्टत्वादूह्यते ततः ॥ १ ॥

प्रकृतौ—'अग्नये जुष्टं निर्वपामि' इति देवताविषयो मन्त्र आम्नातः । 'व्रीहीणां मेधं सुमनस्यमानः' इति द्रव्यविषयः। विकृतिषु—'सूर्याय जुष्टं निर्वपामि' इति, 'नीवाराणां मेधं सुमनस्यमानः' इत्येवमूहो न कर्तव्यः । कुतः । चोदकेन यथावस्थितस्यैव मन्त्रपाठस्यातिदिष्टत्वात् । इति चेत् ।

मैवम् । प्रकृतौ देवताहविर्लक्षणयोरर्थयोरेव विवक्षा । तथा सति तत्प्रकाशनरूपस्य दृष्टप्रयोजनस्य लाभात् । अग्निव्रीहिशब्दविवक्षायामदृष्टार्थो मन्त्रपाठः प्रसज्येत । तस्मात्—सूर्यनीवारलक्षणार्थप्रकाशनायोहः कर्तव्यः ॥ १ ॥

**(द्वितीये—पौण्डरीकेषु बर्हिःषु स्तरणमन्त्रस्योहाधिकरणे सूत्राणि ३–८)।**

जातिनैमित्तिकं यथास्थानम् ॥ ३ ॥ अविकारमेकेऽनार्षत्वात् ॥ ४ ॥ लिङ्गदर्शनाच्च ॥ ५ ॥ विकारो वा तदुक्तहेतुः ॥ ६ ॥ लिङ्गं मन्त्रचिकीर्षार्थम् ॥ ७ ॥ नियमो वोभयभागित्वात् ॥ ८ ॥

द्वितीयाधिकरणमारचयति—

हरितोक्तिः पौण्डरीके न त्याज्या त्यज्यतेऽथवा ।
नादृष्टार्थत्वतो मैवं गुणिद्रव्यस्य भासनात् ॥२॥

'मौद्गं चरुं निर्वपेच्छ्रियै श्रीकामः' इत्यत्र 'पौण्डरीकाणि बर्हींषि भवन्ति' इति श्रुतम् । तत्र स्तरणमन्त्रश्चोदकप्राप्तः—'दर्भैः स्तृणीत हरितैः' इति । तत्र—पूर्वन्यायेन दर्भशब्दस्थाने पुण्डरीकशब्दः प्रयोक्तव्यः । हरितशब्दस्तु प्रकृतौ नापूर्वीयद्रव्यवाची । ततोऽसमवेतार्थत्वाद्विकृतावप्यदृष्टार्थमनूहेन प्रयोक्तव्यः । इति चेत् ।

मैवम् । गुणद्वारा गुणिद्रव्यप्रकाशने सति दृष्टार्थत्वलाभेन समवेतार्थत्वात् । तस्मात्—'पुण्डरीकैः स्तृणीत रक्तैः' इत्यूहनीयम् ॥ २ ॥

---

१ ख. मेदे । ज. झ. मेधः । २ ख. ज. झ. मेधः । ३ ख. च. °योरे° । झ. °योरेवा-र्थ° । ४ ञ. झ. °द्ध्योरपि वि° । ५ ख. च. ञ.

(तृतीये—अग्नीषोमीयपशौ लौकिकयूपस्पर्शप्रायश्चित्ताधिकरणे सूत्रम्—)।

लौकिके दोषसंयोगादपवृक्ते हि चोद्यते
निमित्तेन प्रकृतौ स्यादभागित्वात् ॥९॥

तृतीयाधिकरणमारचयति—

यूपस्पर्शे वैदिके वा लौकिके मन्त्रकीर्तनम् ।
आद्यः प्रकरणान्नैवं लौकिके प्रतिषेधतः ॥ ३ ॥

ज्योतिष्टोमेऽग्नीषोमीयपशुप्रकरणे यूपस्पर्शस्य प्रायश्चित्तमाम्नातम्—'यद्येकं यूपमुपस्पृशेत् । 'एष ते वायो' इति ब्रूयात्, इति । तदिदमुच्छ्रयणाञ्जनादिकालीने वैदिकस्पर्शे भवति । कुतः । तत्प्रकरणात् । इति चेत् ।

मैवम् । ' यूपो वै यज्ञस्य दुरिष्टमामुञ्चते । यद्यूपमुपस्पृशेद्यज्ञस्य दुरिष्टमामुञ्चेत् । तस्माद्यूपो नोपस्पृश्यः' इति प्रतिषिध्य पश्चात्प्रायश्चित्ताम्नानात् । प्रतिषेधश्च लौकिकस्पर्शविषयः, । वैदिकस्य विहितत्वात् । तस्मात्—लौकिके स्पर्शे प्रायश्चित्तम् ॥ ३ ॥

(चतुर्थे—{द्विपशुयागे पाशमन्त्रयोरेकवचनान्तब- हुवचनान्तयोर्द्विवचनान्तेनोहाधिकरणे} सूत्राणि १०-१४)।

अन्यायस्त्वविकारेणादृष्टप्रतिघातित्वादविशेषाच्च तेनास्य ॥ १० ॥ विकारो वा तदर्थत्वात्॥११॥ अपि त्वन्यायसंबन्धात्प्रकृतिवत्परेष्वपि यथार्थं स्यात् ॥१२॥ यथार्थं त्वन्यायस्याचोदितत्वात् ॥ १३ ॥ छन्दसि तु यथादृष्टम् ॥ १४ ॥

चतुर्थाधिकरणमारचयति—

पाशं पाशान्द्वयोः पश्वोरेको मन्त्रोऽथवा द्वयम् ।
एकैकत्वे द्वयत्वे किमेकस्योहोऽथवा द्वयोः ॥ ४ ॥
एकेनैव कृतार्थत्वादेको मन्त्रस्तदाऽपि च ।
अविकारेण बह्वर्थ एकार्थः समवायतः ॥ ५ ॥
प्राकृतत्वादुभावूह्य एकार्थोऽत्र विवक्षया ।
बह्वर्थोऽप्यूहनीयोऽत्र द्वयोः शक्तेरकल्पितः ॥ ६ ॥

१ ख. मोपस्[illegible] । ज. ञ. नोप[illegible] । २ क. "[illegible]" ।

ज्योतिष्टोमेऽग्नीषोमीयपशावेकवचनान्तबहुवचनान्तौ द्वौ पाशमन्त्रौ भिन्नयोः शाखयोराम्नातौ—'अदितिः पाशं प्रमुमोक्त्वेतम्' इत्येकत्र। 'अदितिः पाशान्प्रमुमोक्त्वेतान्' इत्यपरत्र। तावुभौ पशुद्वयोपेतायां विकृतौ चोदकेनातिदिष्टौ। सा च विकृतिरेवमाम्नायते—'मैत्रं श्वेतमालभेत, वारुणं कृष्णम्, अपां चौषधीनां च संधावन्नकामः' इति। तत्रैकेनैव मन्त्रेण चरितार्थत्वान्न द्वयोरतिदेशः। इत्याद्यः पक्षः।

तदाऽप्यविकृतस्यैव प्रयोक्तुं शक्यत्वाद्बहुवचनान्तो मन्त्रो युक्तः। प्रकृतावेकस्मिन्पशावसमवेतार्थतया बहुवचनस्य विकृतावनूहनीयत्वात्। इत्येकः पक्षः।

तादृग्बहुवचनोपेतत्वादेव मन्त्रोऽप्यसावसमवेतार्थः प्रकृतौ भवति। एकवचनान्तस्तु मन्त्रः प्रकृतौ समवेतार्थत्वाद्विकृतावतिदिश्यताम्। स च द्विवचनान्तेनोहनीयः। इति पक्षान्तरम्।

प्रकृतौ विद्यमानयोरुभयोर्मन्त्रयोर्विकृतावतिदेशस्य वारयितुमशक्यत्वादेकमन्त्रपक्षस्यावान्तरत्वेनोपन्यस्तावुभावपि पक्षावयुक्तौ। मन्त्रद्वयातिदेशपक्षे त्वेकवचनान्तः प्रकृतौ समवेतार्थतया विकृतावूहनीयः। बहुवचनान्तो यथावस्थित एव पठनीयः। इति पूर्वः पक्षः।

लोके वेदे वा बहुवचनस्य द्वयोरर्थयोरक्लृप्तशक्तित्वाद्द्विवचनान्ततया सोऽप्यूहनीयः। इति राद्धान्तः॥ ४। ५॥ ६॥

(पञ्चमे—{अग्नीषोमीयपशौ पाशैकत्वपाशबहुत्वाभिधायिमन्त्रयोर्विकल्पाधिकरणे} सूत्राणि १५-१९)।

विप्रतिपत्तौ विकल्पः स्यात्समत्वाद्गुणे त्वन्यायकल्पनैकदेशत्वात्॥१५॥ प्रकरणाविशेषाच्च॥१६॥
अर्थाभावात्तु नैवं स्यात्, गुणमात्रमितरत्॥१७॥
यावोस्तथेति चेत्॥१८॥नोत्पत्तिशब्दत्वात्॥१९॥

पञ्चमाधिकरणमारचयति—

उत्कृष्यो न वा मन्त्रो बह्वर्थोऽसंगतस्त्वतः।
उत्कर्षो न विकल्प्योऽसौ गुणे त्वन्यायकल्पना॥ ७॥

योऽयं पूर्वोदाहृतो बहुवचनान्तः पाशमन्त्रः, तस्य प्रकरणादुत्कर्षो बहुपा-

१ अ. झ. तस्य प्र°। २ अ. झ. ञ. °नान्तत्वेनो°। ३ अ. झ. ञ. पूर्वत्रोदा°।

शयुक्तेषु पशुगणेषु कर्तव्यः । कुतः । एकस्मिन्पशौ प्रकृते तस्यानन्वितत्वात् । इति चेत् ।

नैवम् । नासावुत्क्रष्टव्यः । किंत्वेकवचनान्तेन मन्त्रेण सह विकल्पनीयः । न हि 'पाशान्' इत्यत्र प्रधानस्यांशस्यानन्वितत्वमस्ति । प्रातिपदिकविभक्त्योः प्रातिपदिकं प्रधानम् । धर्मिवाचकत्वात् । विभक्तिस्तु कर्मत्व—करणत्वादिधर्मवाचकत्वाद्गुणभूता । तथा विभक्तिवचनयोर्विभक्तेः कर्मादिकारकवाचित्वात्प्राधान्यम् । वचनस्य कारकसंख्याभिधायित्वाद्गुणत्वम् । तथा सति बहुवचनान्ते पाशशब्दे प्रातिपदिकं कर्मकारकविभक्तिश्चैकस्मिन्नपि पाशे संगच्छेते । गुणभूते तु बहुवचने लक्षणावृत्तिः कल्पनीया, पाशावयवगतं बहुत्वं लक्ष्यत इति । तस्मात्—गुणभूतं वचनमात्रमनुसृत्य कृत्स्नस्य मन्त्रस्य प्रकरणपाठो न बाधनीयः, किंतु प्रधानानुसारेण मन्त्रयोः समानत्वाद्विकल्पः कर्तव्यः ॥ ७ ॥

( षष्ठे— { दर्शपूर्णमासयोर्द्विपत्नीके प्रयोगे 'पत्नीं संनह्य' इति मन्त्रस्यानूहाधिकरणे } सूत्रम्— ) ।

अपूर्वे त्वविकारोऽप्रदेशात्प्रतीयते ॥ २० ॥

षष्ठाधिकरणमारचयति—

पत्नीमिति द्विपत्न्यादावूह्यं नो वोह्यतेऽर्थतः ।
नोपदेशस्य सामान्यादतिदेशाप्रवृत्तितः ॥ ८ ॥

दर्शपूर्णमासयोर्मन्त्र आम्नायते—'पत्नीं संनह्य' इति । तत्र—एकपत्नीकस्य यजमानस्य प्रयोगे समवेतार्थ एकवचनान्तः पत्नीशब्दः । स च द्विपत्नीकस्य बहुपत्नीकस्य च प्रयोगेऽर्थवशादूहनीयः । इति चेत् ।

नैवम् । किमुपदेशमात्रस्योहः, अतिदेशमात्रस्य वा । नाऽऽद्यः । उपदेशस्य सर्वप्रयोगसाधारणत्वात् । यदि—एकपत्नीकप्रयोगार्थमेवायं मन्त्रोपदेशः स्यात्, तदानीम्—एकवचनं विवक्ष्येत । न त्वेवमस्ति । अन्यथा द्विपत्नीक—बहुपत्नीकप्रयोगयोर्मन्त्र एव नोपदिश्येत । तत्र कुत ऊहानूहचिन्तावकाशः । साधारणे तूपदेशे सर्वप्रयोगसमवेतार्थतया पत्नीपदे प्रातिपदिकं कर्मकारकविभक्तिश्चेत्युभयमेव प्राधान्येन विवक्षितम् । एकवचनं त्वदृष्टार्थं[1] । तथा च सर्वप्रयोगे समवेतार्थतया पत्नीपदेषु यथावस्थितमेव पठनीयः । नापि 'अतिदेशमात्रस्योहः' इति द्वितीयः पक्षः । द्विबहुपत्नीकप्रयोगयोरविकृतित्वेनातिदेशायोगात् । तस्मात्—अत्र नास्त्यूहः ॥ ८ ॥

---

1 ज. झ. °गे यथावस्थितम° ।

( सप्तमे—द्विपत्नीकाविकृतियागेऽपि 'पत्नीं संनह्य' इति
मन्त्रस्यानूहाधिकरणे सूत्रम्— ) ।

विकृतौ चापि तद्वचनात् ॥ २१ ॥

सप्तमाधिकरणमारचयति—

ऊह्यो नो वैष विकृतावूह्योऽपाठेन पाशवत् ।
नाहदृच्छान्दसत्वाभ्यां पाशे छान्दसता न हि ॥ ९ ॥

एष एकवचनान्तः पत्नीमन्त्रो विकृतौ द्विबहुपत्नीकप्रयोगयोरूहनीयः। कुतः। पाठाभावात्। प्रकृतावर्थानुसारेण प्राप्तोऽप्यूहः सर्वप्रयोगसाधारणेन मन्त्रपाठेन बाधितः। विकृतौ तु बाधितस्य पाठस्याभावेनास्मदीयत्वे प्रयोगेऽर्थानुसारेणोहो युक्तः। अत एव—पूर्वत्र द्विपाशयुक्तायां विकृतावेकवचनान्तो बहुवचनान्तश्च पाशमन्त्र ऊहितः। इति चेत्।

नैवम्। 'पत्नीम्' इत्येकवचनस्याविवक्षितत्वेन प्रकृतावदृष्टार्थतया यथावस्थितपाठे सति विकृतावप्यदृष्टार्थं यथावस्थितस्यैव पठितव्यत्वात्। अथोच्येत—'प्रकृतौ छान्दसत्वेन व्यत्ययेनैकवचनमेव द्वित्वबहुत्वयोरप्यर्थयोर्वर्तते' इति। एवं तर्हि विकृतावप्यूहमन्तरेणैव द्वित्वबहुत्वाभिधानान्मा भूदूहः। न च—एवं पाशोऽप्यूह्यो मा भूत्—इति शङ्कनीयम्। प्रकृतावेकवचनबहुवचनयोरेकस्मिन्नेव पाशे वैदिकप्रयोगदर्शनात्। द्वित्वे तदभावात्। तस्मात्—पाशस्योहो विकृतौ, न तु पत्नीशब्दस्य ॥ ९ ॥

( अष्टमे—सवनीयपशूनामग्नीषोमीयसमानविधानत्वे 'प्रास्मै, अग्निम्' इति मन्त्रेऽनूहाधिकरणे सूत्रम्— )।

अग्निगौ सवनीयेषु तद्वत्समानविधानाश्चेत् ॥ २२ ॥

अष्टमाधिकरणमारचयति—

अग्नीषोमीयसवनस्थास्तुल्यविधयो यदि ।
प्रास्मा इति तदा मन्त्रे पत्नीन्यायेन नोहनम् ॥ १० ॥

अग्निष्टोमोक्थ्यषोडश्यतिरात्ररूपासु ज्योतिष्टोमस्य संस्थास्वेकोत्तरवृद्ध्या सवनीयाः पशव आम्नाताः—'आग्नेयः पशुरग्निष्टोम आलभ्यः। ऐन्द्राग्न उक्थ्ये द्वितीयः। ऐन्द्रो वृष्णिः षोडशिनि तृतीयः। सारस्वती मेष्यतिरात्रे चतुर्थी' इति। त एते सवनीयपशवोऽग्नीषोमीयपशुना समानविधयः, न तु तद्विकृतयः-

१ अ. 'दाषाय'। च. 'दायत्तप्र'। २ ज. झ. 'द्विपकुप'। ३ ख. 'तस्य प'। ४ ख. च, ज. झ. ञ. 'त्नीपदस्य'। ५ ज. झ. 'यवचन'। ६ क. 'वोहनम्'। ७ क. 'अग्नीषोमे'

इति कस्यचित्पूर्वपक्षिणो मतम् । तदेवाभ्युपगम्य क्त्वाचिन्ता क्रियते । अध्रिगुप्रैषमन्त्रे–' चास्मा अध्रिं भरता ' इति वाक्ये पुंलिङ्गचतुर्थ्येकवचनान्त इदंशब्दः पठितः । तस्य मेष्यां स्त्रीलिङ्गतया नास्त्यूहः, इति प्रथमपादे निर्णीतम् । इह त्वेकवचनस्य पशुद्वित्वबहुत्वयोः पत्नीशब्दवत्पूर्वोत्तरपक्षौ द्रष्टव्यौ । अर्थानुसारेण द्विवचनबहुवचनयोरूहः । इति पूर्वः पक्षः ।

उपदेशस्य साधारणत्वेन सर्वत्र समवेतार्थयोः प्रातिपदिकविभक्त्योरेव विवक्षितत्वेनैकवचनस्याविवक्षितत्वात् । कथंचिद्विवक्षितत्वेऽपि च्छान्दसेन वचनव्यत्ययेन द्व्यर्थबह्वर्थवाचित्वान्नास्त्यूहः । इति राद्धान्तः ।

परमार्थतस्तु सवनीयपशूनामग्नीषोमीयविकृतित्वादस्यैव लिङ्गवचनयोः प्रासङ्गिकत्वानोहः ॥ १० ॥

( नवमे–नीवाराणां व्रीहिप्रतिनिधित्वे मन्त्रे व्रीहिशब्दस्यानूहाधिकरणे सूत्राणि २३–२६ ) ।

प्रतिनिधौ चाविकारात् ॥२३॥ अनाम्नानाच्छब्दत्वमभावाच्चेतरस्य स्यात् ॥२४॥ तादर्थ्याद्वा तदाख्यं स्यात्संस्कारैरविशिष्टत्वात् ॥ २५ ॥ उक्तं च तत्त्वमस्य ॥ २६ ॥

नवमाधिकरणमारचयति–

व्रीहिप्रतिनिधावूहो व्रीहीणामिति नास्ति वा ।
अर्थादूहो न सादृश्यादंशानां साधनत्वतः ॥ ११ ॥

श्रुतस्य द्रव्यस्यापचारे भूयोवयवसामान्योपेतं द्रव्यान्तरं तस्य प्रतिनिधिर्भवति । यथा–व्रीहीणामपचारे नीवारास्तेषां स्थाने विनिधानन्ते । तदेतत्षष्ठेऽध्यायेऽवस्थितम् । प्रतिनिहितेषु नीवारेषु ' व्रीहीणां मेध '–इत्ययं मन्त्र ऊहितव्यः । कुतः । अर्थानुसारात् । इति चेत् ।

मैवम् । नैवारचरौ नीवाराणां साधनत्वेन विहितानां व्रीहिस्थानीयतया भवति मन्त्रस्योहः । इह तु न नीवाराः साधनत्वेन विहिताः, किंतु भूयोवयवसादृश्यद्वारा प्राप्यन्ते । ततोऽवयवानामेव साधनत्वम् । तथा सति व्रीह्यवयवेष्वविकारेण यथा व्रीहिशब्दः, तथा नीवारावयवेष्वपि प्रवृत्तेर्नास्त्यूहः ॥११॥

१ ख. च. छ. झ. ञ. 'वारे च' ।

( दशमे—द्विपशुयागे 'सूर्यं चक्षुर्गमयतात्' इतिमन्त्राणामनूहाधिकरणे सूत्रे— )।

संसर्गिषु चार्थस्यास्थितपरिमाणत्वात् ॥ २७ ॥

लिङ्गदर्शनाच्च ॥ २८ ॥

दशमाधिकरणमारचयति—

द्विपश्वोश्चक्षुराद्यूहो न वोहः पशुभेदतः।
तेजोमात्रस्य सूर्यादावेकीभावादनूहनम् ॥ १२ ॥

अग्नीषोमीयपशावध्रिगुप्रैषे पशुसंबन्धिनां सूर्यादिसंसर्ग आम्नायते—'सूर्यं चक्षुर्गमयतात्। वातं प्राणमन्ववसृजतात्। दिशः श्रोत्रम्—' इत्यादि। 'मैत्रं श्वेतमालभेत। वारुणं कृष्णम्' इति विहितयोर्द्वयोः पश्वोर्मन्त्रगताश्चक्षुरादिशब्दा द्विवचनान्तत्वेनोहनीयाः। कुतः। पशुभेदेन चक्षुरादीनां भिन्नत्वात्। इति चेत्।

मैवम्। न खल्वत्रेन्द्रियाधिष्ठानं शरीरगतं गोलकं चक्षुःशब्देन विवक्षितम्। तद्विवक्षायामेकस्मिन्नपि पशौ गोलकभेदादेकवचनान्तचक्षुःशब्दस्यानन्वयप्रसङ्गात्। गोलकस्य सूर्यादिप्राप्त्यसंभवाच्च। यत्तु रूपदर्शनादिसामर्थ्यलक्षणं तेजोमात्रम्, तदत्र चक्षुरादिशब्दैर्विवक्षितम्। तच्च पश्वनेकत्वेऽपि ततो निर्गत्य सूर्यादावेकीभूतत्वात्समुद्रप्रविष्टनदीवन्न भेदेनावतिष्ठते। तस्मात्—नास्त्यूहः ॥ १२ ॥

(एकादशे—{द्विपशुयागे, अध्रिगुप्रैषे 'एकधा' इत्यस्य शब्दस्याभ्यासाधिकरणे} सूत्राणि २९—३१)।

एकधेत्येकसंयोगादभ्यासेनाभिधानं स्यात् ॥ २९ ॥

अविकारो वा बहूनामेककर्मवत् ॥ ३० ॥ सकृत्त्वं त्वैकध्यं स्यादेकत्वात्त्वचोऽनभिप्रेतं तत्प्रकृतित्वात्परेष्वभ्यासेन विवृद्धावभिधानं स्यात् ॥ ३१ ॥

एकादशाधिकरणमारचयति—

एकधेत्यविकारः स्यादभ्यासो वा सहत्वतः।
आद्यो मैवं प्राकृतस्य सकृत्त्वस्योचितत्वतः ॥ १३ ॥

तस्मिन्नेवाध्रिगुप्रैषे श्रूयते—'एकधाऽस्य त्वचमाच्छयतात्' इति। द्विन्वी-

१ क. ज. झ. °प्रैषसं°। २ ज. ञ. न त्वत्रे°।

त्यर्थः । अत्र द्वयोः पश्वोरेकधेत्यस्य शब्दस्य नास्ति विकारः । कुतः । तस्य शब्दस्येह सकृत्त्ववाचित्वात् । 'एकधा गाः पाययति' इत्यत्र यौगपद्ये प्रयोगदर्शनात् । पश्वनेकत्वेऽपि त्वगुत्पाटनस्यैककालीनत्वं बहुपुरुषकर्तृकस्य घटते । इति प्राप्ते—

ब्रूमः—प्रकृतावेकस्मिन्पशौ यौगपद्यलक्षणोऽर्थो न संभवति । ततः सकृत्त्वं तस्य शब्दस्यार्थः । त्वगियमवयवशो बहुकृत्वो न च्छेत्तव्या, किंतु सर्वाऽपि सकृदेकप्रयत्नेनेत्युक्तं भवति । यत्प्रकृतौ सकृत्त्वं, तदेव विकृतावुचितम् । ततः प्रतिपशु सकृत्त्वमभिधातुम् 'एकधा' इत्ययं मन्त्रोऽभ्यासितव्यः ॥१२॥

द्वादशे—{द्विपश्वादिपशुविकृतौ मेधपतिशब्दस्य देवतानुसारेणोहाधिकरणे} सूत्राणि ३२–४०)॥

मेधपतित्वं स्वामिदेवतस्य समवायात्सर्वत्र च प्रयुक्तत्वात्, तस्य चान्यायनिगदत्वात्, सर्वत्रैवाविकारः स्यात् ॥ ३२ ॥ अपि वा द्विसमवायोऽर्थान्यत्वे यथासंख्यं प्रयोगः स्यात् ॥ ३३ ॥ स्वामिनो वैकशब्द्यादुत्कर्षो देवतायां स्यात्पत्न्यां द्वितीयशब्दः स्यात् ॥ ३४ ॥ देवता तु तदाशीष्ट्वात्संप्राप्तत्वात्स्वामिन्यनर्थिका स्यात् ॥ ३५ ॥ उत्सर्गाच्च भक्त्या तस्मिन्पतित्वं स्यात् ॥ ३६ ॥ उत्कृष्येतैकसंयुक्तो द्विदेवते संभवात् ॥ ३७ ॥ एकस्तु समवायात्तस्य तल्लक्षणत्वात् ॥ ३८ ॥ संसर्गित्वाच्च तस्मात्तेन विकल्पः स्यात् ॥ ३९ ॥ एकत्वेऽपि गुणानपायात् ॥ ४० ॥

द्वादशाधिकरणमारचयति—

अविकारो विकारो वा स्यान्मेधपतिशब्दयोः ।
विकारे स्वामिदेवार्थ एकार्थो वाऽन्तिमेऽपि किम् ॥१४॥

---

१ ज. झ. यौगपद्येन ।

स्वाम्यर्थो देवतार्थो वा स्यादन्योऽन्यत्वतोऽग्रिमः ।
अर्थभेदाद्विकारोऽत्र द्वावर्थौ शब्दयोर्द्वयोः ॥ १५ ॥
मन्त्रैक्यादर्थ एकोऽत्र स्वाम्यस्मिञ्जायया द्विता ।
देवार्थाशीर्देव एकोऽधिष्ठाने द्वे द्विधेरणम् ॥ १६ ॥

अध्रिगुप्रैषनिगदस्याऽऽदाविदमाम्नायते—'दैव्याः शमितार उत च मनुष्या आरभध्वम् । उपनयत मेध्या दुर आशासाना मेधपतिभ्यां मेधम्' इति । शाखान्तरे तु 'मेधपतये मेधम्' इति । अयमर्थः—'शमितारः पशुघातिनो द्विविधाः-दैव्याः, मानुषाश्च । तानुभयान्संबोध्य होता कर्तव्यविशेषान्निर्दिशति—आरम्भः कर्तव्यः । मेधो यज्ञः, तद्योग्यान्दुरः पदार्थान्हिंसाहेतूनिहाऽऽनयत । किं कुर्वन्तः—यज्ञपतिभ्यां यज्ञपतये वा यज्ञमाशासानाः' इति । तत्र—एकवचनान्तस्य मेधपतिशब्दस्य द्विवचनान्तस्य च बहुपशुयुक्तासु विकृतिष्वनूहः, ऊहो वा, इति संशयः । ऊहपक्षेऽपि किमेकवचनान्तस्य यजमानोऽर्थः, द्विवचनान्तस्याग्नीषोमौ देवते इत्येवमर्थभेदः । किंवा—शब्दद्वयस्यैक एवार्थ इति संशयः । एकार्थत्वपक्षेऽपि यजमान एवार्थः, देवतैव वा, इति संशयः । तत्र—अग्नीषोमीये पशौ यजमानः, अग्नीषोमौ च, इति त्रयो मेधस्य पतयः, तेष्वेकवचनस्य द्विवचनस्य वाऽन्योऽन्यनिगदत्वेन प्रकृतावविवक्षितस्य वचनस्य विकृतावनूहः । इत्याद्यः पक्षः।

प्रकृतौ समवेतार्थत्वे संपादयितुं शक्ये सत्यन्योऽन्यनिगदत्वाभावाद्विकृतावूहः कर्तव्यः । इति द्वितीयः पक्षः ।

अस्मिन्द्वितीयपक्षेऽपि प्रकृतावुपन्यस्तप्रकारेणार्थभेदाद्विकृतिषु बहुयजमानयुक्तास्वहीनादिषु यजमानानुसारेणैकवचनान्त ऊहनीयः । अनेकपशुयुक्तासु विकृतिषु देवतानुसारेण द्विवचनान्त ऊहनीयः । सोऽयं शाखाविकल्पेन प्रथमः पक्षः ।

शाखाभेदेन पाठभेदेऽपि मन्त्रभेदाभावादर्थभेदो न युक्तः, किंतु—एक एवार्थः । इति पक्षान्तरम् ।

यद्यपि देवतायाः संप्रदानत्वेन स्वामित्वाभावान्मेधपतिशब्दयोग्यता नास्तीति यजमान एव तच्छब्दार्थः। तस्मिंश्च यजमाने स्वत एकत्वम्, जायया सह द्वित्वम् इत्येकवचनद्विवचने उभे अपि समवेतार्थे । ततो यजमानद्वयोपेतायां विकृतावेकवचनान्तो द्वित्वेनोहनीयः । द्विवचनान्तो बहुत्वेन । इति पूर्वः पक्षः ।

मेधस्य यजमानार्थत्वं नैवाऽऽशासनीयम् । तस्य सिद्धत्वात् । देवतार्थत्वं

१ क. ख. 'न्यायत्व' । २ क. ख. ग. ज. झ. 'र्थसत्त्वादि' । ३ ख. ग. ज. झ. कुर्वतः । ४ ज. झ. देवार्थ' । ५ क. ग. ज. झ. 'न्यायनि' । ६ क. ग. ज. झ. 'न्या॰

त्वाशासनीयम् । ततो मेधमाशासाना इत्येतद्देवतायां समवेतार्थम् । संप्रदानत्वा-भ्युद्देश्यत्वेन प्राधान्यान्मेधपतित्वमविरुद्धम्, देवताकारेणैकत्वादाग्नित्वसोमत्वाकारेण द्वित्वाच्चैकवचनद्विवचने उपपन्ने । तस्मात्—देवतानुसारेण विकृतावूहः । इति राद्धान्तः ॥ १४ ॥ १५ ॥ १६ ॥

त्रयोदशे— { बहुदैवत्ये पशावप्येकवचनान्तमेधपतिशब्दस्य विकल्पाधिकरणे } सूत्रे ४१–४२) ।

**नियमो बहुदैवते विकारः स्यात् ॥ ४१ ॥**

**विकल्पो वा प्रकृतिवत् ॥ ४२ ॥**

त्रयोदशाधिकरणमारचयति—

**आदित्येष्वेकवाच्येष ऊह्यो नो वोह्यतेऽन्यवत् ।**

**गणार्थत्वादनूहोऽतो विकल्पः प्रकृताविव ॥ १७ ॥**

प्रजापशुसंपत्तिकामस्य बहुदैवत्यः पशुराम्नायते—'यः कामयेत—प्रथेय पशुभिः प्र प्रजया जायेय—इति, *स एतामावि वशामादित्येभ्यः कामायाऽऽलभेत' इति । वशा वन्ध्या । कामाय कामुकेभ्य इत्यर्थः । अत्र—चोदकप्राप्तो 'मेधपतये' इत्येकवचनान्तः शब्द आदित्यानां बहुत्वाद्बहुवचनान्तत्वेनोहनीयः । यथा 'मेधपतिभ्याम्' इति द्विवचनान्त ऊह्यते । यथा वा 'पाशः' इत्येकवचनान्त ऊह्यते । तद्वत् । इति चेत् ।

मैवम् । प्रकृतावग्नीषोमयोर्गणैकत्वमेकवचनान्तो ब्रूते । आदित्यानामपि गणैकत्वं समानमित्यनूहः । तस्मात्—अविकृत एकवचनान्त इतरेण सह प्रकृताविवात्रापि विकल्प्यते ॥ १७ ॥

( चतुर्दशे—एकादशिन्यामेकवचनान्तमेधपतिशब्दस्योहाधिकरणे सूत्रम्— ) ।

**अर्थान्तरे विकारः स्याद्देवतापृथक्त्वादेकाभिसमवायात्स्यात् ॥ ४३ ॥**

चतुर्दशाधिकरणमारचयति—

**कृष्णग्रीवादिके नोह ऊहो वाऽस्य न पूर्ववत् ।**

**देवत्वं न गणस्यात ऊहो बह्वभिधित्सया ॥ १८ ॥**

यूपैकादशिन्यामग्न्यादिदेवताकाः पशव आम्नाताः—'मैत्राऽऽग्नेयेन वापयति ।

*' स एतान्पशूनादित्येभ्यः ' इति शाबरभाष्ये ।

१ ज. उपपद्येते । २ ज. झ. एव ता° । ३ क. °षोमीययो° ।

मिथुनं सारस्वत्या करोति । रेतः सौम्येन दधाति । प्रजनयति पौष्णेन' इत्यादिना । ते च—स्वनामभिरन्यत्राऽऽम्नाताः—'आग्नेयः कृष्णग्रीवः । सारस्वती मेषी । बभ्रुः सौम्यः । पौष्णः श्यामः' इत्यादिना । तत्र—अस्यैकवचनान्तस्य मेषपतिशब्दस्याऽऽदित्येष्विव नोहः । इति चेत् ।

मैवम् । वैषम्यात् । आदित्यगणस्य तत्र देवत्वम्, इह त्वेकैकस्य पृथग्देवत्वम् । अतो बहून्देवानभिधातुं बहुवचनान्तत्वमूहनीयम् ॥ १८ ॥

इति श्रीमाधवीये जैमिनीयन्यायमालाविस्तरे नवमाध्यायस्य तृतीयः पादः ॥ ३ ॥

| | अत्र पादे | आदितः । |
|---|---|---|
| अधिकरणानि | १४ | ५८१ । |
| सूत्राणि | ४३ | १६९३ । |

( अथ नवमाध्यायस्य चतुर्थः पादः ) ।

( प्रथमे 'षड्विंतिरस्य वङ्क्रयः' इत्यादौ समस्योहाधिकरणे सूत्राणि १–१६ ) ।

षड्विंशतिरभ्यासेन पशुगणे तत्प्रकृतित्वाद्गुणस्य प्रविभक्तत्वादविकारे हि तासामकार्त्स्न्येनाभिसंबन्धो विकारान्न समासः स्यादसंयोगाच्च सर्वाभिः ॥ १ ॥ अभ्यासेऽपि तथेति चेत् ॥२॥ न गुणादर्थकृतत्वाच्च ॥ ३ ॥ समासेऽपि तथेति चेत् ॥ ४ ॥ नासंभवात् ॥ ५ ॥ स्वामिश्च वचनं प्रकृतौ तथेह स्यात् ॥६॥ वङ्क्रीणां तु प्रधानत्वात्समासेनाभिधानं स्यात्प्राधान्यमध्रिगोस्तदर्थत्वात् ॥ ७ ॥ तासां च कृत्स्नवचनात् ॥ ८ ॥ अपि त्वसंनिपातित्वात्पत्नीवदाम्नातेनाभिधानं स्यात् ॥ ९ ॥ विकारस्तु प्रदेशत्वाद्यजमानवत् ॥ १० ॥ अपूर्वत्वात्तथा पत्न्याम् ॥११॥ आम्नातस्त्वविकारात्सं-

स्यात्तु सर्वगामित्वात् ॥ १२ ॥ संख्या त्वेवं प्रधानं स्याद्वङ्क्रयः पुनः प्रधानम् ॥ १३ ॥ अनाम्नातवचनमवचनेन हि वङ्क्रीणां स्यान्निर्देशः ॥ १४ ॥

अभ्यासो वाऽविकारात्स्यात् ॥ १५ ॥ पशुस्त्वेवं प्रधानं स्यादभ्यासस्य तन्निमित्तत्वात्तस्मात्समासशब्दः स्यात् ॥ १६ ॥

चतुर्थपादस्य प्रथमाधिकरणमारचयति—

षड्विंशतिर्वङ्क्रयोऽस्येत्यनूहः स्यादुतोह्यते ।
ऊहेऽपि वचनान्यत्वमस्येत्स्यावर्त्यतेऽथवा ॥ १ ॥
षड्विंशतेरुताभ्यासः समस्तोक्तिर्भवेदुत ।
अनूहोऽकरणत्वेन दृष्टलाभात्तदूहनम् ॥ २ ॥
संख्यायाश्च पशौ युक्तेर्वङ्क्रीणां मुख्यतावशात् ।
अमी पक्षा युज्यतेऽन्त्यस्ता अनुष्ट्येतिशेषतः ॥ ३ ॥

अध्रिगुप्रैषे वाक्यमिदमाम्नायते—'षड्विंशतिरस्य वङ्क्रयः, ता अनुष्ठयोच्च्यावयतात्' इति । अयमर्थः—'वङ्क्रयो वक्राणि पार्श्वास्थीनि । तान्यस्य पशोः षड्विंशतिसंख्यानि । एकैकस्मिन्पार्श्वे त्रयोदशानामवस्थितत्वात् । ताश्च वङ्क्रीरनुष्ठ्य, अनुष्ठयानुक्रमेण गणयित्वेति यावत् । उच्च्यावयतादुद्धरतात्' इति । सोऽयं मन्त्रो वङ्क्रीणामुद्धरणे करणतया न विनियुक्तः, किंतु संज्ञपनात्प्राक्पशौ नीयमाने होत्रा प्रयुज्यते । ततोऽसमवेतार्थत्वादनूहः । इत्याद्यः पक्षः ।

अकरणत्वेऽपि नादृष्टार्थत्वम् । शमितृणामुद्धरणायार्थस्याऽऽवश्यकत्वेन दृष्टार्थलाभात् । तस्मात्—प्रकृतौ समवेतार्थतया विकृतावूहः । तदाऽपि चत्वारः पक्षाः ।

तत्र—संख्या मुख्यत्वेन प्रकाश्या । तेन द्वयोः पश्वोर्द्विगुणितां षड्विंशतिसंख्यां प्रकाशयितुं द्विवचनान्ततया षड्विंशतिशब्द ऊहनीयः । इत्याद्यः पक्षः ।

पशोश्चोदितत्वेन मुख्यत्वात्तद्वाचकं षष्ठ्यन्तम् 'अस्य' इति पदं पश्वनुसारेणाऽऽवर्तनीयम् । इति द्वितीयः पक्षः ।

---

१ ख. ज. झ. ञ. °वर्ततेऽ° । २ ख. च. ज. झ. पशोर्यु° । ३ ख. पार्श्वस्थान्यस्थी° । ४ झ. ञ. °स्याकानि । ५ ज. झ. ञ. °र्थस्मारक° ।

युक्तियोगः। षड्विंशतिसंख्यायाः पशुना सह संबन्धः, तस्य मुख्यत्वात्प्रतिपशुविभक्तां संख्यां प्रकाशयितुं षड्विंशतिपदस्याभ्यासः। इति तृतीयः पक्षः।

अत्र सर्वत्र मुख्यानुसारेण पदान्तराण्यूहनीयानि। संख्येयानां वङ्क्रीणां मुख्यत्वात्तासामियत्ता समस्य वक्तव्या। ततो 'द्विपञ्चाशदनयोर्वङ्क्रयः। अष्टषष्टिरेषां वङ्क्रयः' इत्येवं यथायोगमूहनीयम्। इति चतुर्थः पक्षः। अयमेव सिद्धान्तो वाक्यशेषानुगुण्यात्। 'ता अनुष्टुय' इत्ययं वाक्यशेषः स च व्याख्यातः॥ १॥ २॥ ३॥

द्वितीये—{ आश्वमेधिकसवनीयाश्वस्य चतुस्त्रिंशद्वङ्क्रिरूपविशेषवचनविकल्पाधिकरणे } (सूत्रम्—)।

अश्वस्य चतुस्त्रिंशत्तस्य वचनाद्वैशेषिकम् ॥ १७॥

द्वितीयाधिकरणमारचयति—

न चतुस्त्रिंशदित्येष निषेधो नियतो न वा।
गिरापदवदाद्यः स्यान्नैवकारहतत्वतः॥ ४॥
निषेधः प्राप्तिपूर्वोऽतः प्रापकोऽत्रानुभीयते।
निषेधकप्रापकाभ्यां चतुस्त्रिंशद्विकल्प्यते॥ ५॥

अश्वमेधे त्रयः सवनीयाः पशवः श्रुताः—'अश्वः, तूपरः, गोमृगः, ते प्राजापत्याः' इति। तेष्वश्वस्य चतुस्त्रिंशद्वङ्क्रयः। तथा च मन्त्रः—'चतुस्त्रिंशद्वाजिनो देवबन्धोर्वङ्क्रीरश्वस्य स्वधितिः समेति' इति। वाजी गन्धर्ववाहको जातिविशेषः। अत एवाऽऽम्नायते—'हयो भूत्वा देवानवहत्, वाजी गन्धर्वान्, अर्वाऽसुरान्' इति। देवबन्धुर्देवानां प्रियः। स्वधितिश्छेदनहेतुः शस्त्रम्—इत्यर्थः। एवं सत्यध्रिगुप्रैषे विशेषोऽयमाम्नायते—'न चतुस्त्रिंशदिति ब्रूयात्। षड्विंशतिरित्येव ब्रूयात्' इति। सोऽयं 'चतुस्त्रिंशद्वाजिनः'—इत्यादिकाया ऋचः प्रतिषेधो गिरापदनिषेधवन्नित्यः, न तु विकल्पितः। यथा 'न गिरा गिरेति ब्रूयात्, ऐरं कृत्वोद्गेयम्' इत्यत्र गिरापदनिषेधपुरःसरमिरापदे विहिते सति निषिद्धस्य नित्यनिवृत्तिः। तथा चतुस्त्रिंशन्मन्त्रनिषेधपुरःसरं षड्विंशतिमन्त्रे विहिते सति नित्यनिवृत्तिर्निषिद्धस्य। इति चेत्।

मैवम्। 'षड्विंशतिरित्येव ब्रूयात्' इत्येवकारेण विधित्वप्रत्ययबाधात्। षड्विंशतिमन्त्रस्तावच्चोदकप्राप्तत्वान्न विधेयः। तस्य चतुस्त्रिंशन्मन्त्रेणापवादप्रसक्तौ 'न चतुस्त्रिंशत्' इत्यपवादकं मन्त्रं प्रतिषिध्य चोदकप्राप्तस्यानपोदितत्वेन यथापूर्वमवस्थानमनूद्यते—इत्येवमर्थं सूचयितुमेवकारः प्रयुक्तः। गिरापददृष्टान्तस्तु

१ ख. ज. झ. ञ. 'हवर्वाऽसुरान्वाजी। २ ञ. 'न्धुर्वै देवा'। ३ ञ. 'मेव स्या'।

विषमः। अप्राप्तत्वादिरापदं तत्र विधीयते। तेन च विहितेन पाठप्राप्ते गिरापदे बाधिते स बाधो 'न गिरा' इति प्रतिषेधेनानूद्यते। ततो दृष्टान्ते निषेधानुवादः, दार्ष्टान्तिके विध्यनुवादः, इति महद्वैषम्यम्। ननु विधिवाक्यस्थस्यैवकारस्यानुवादत्वे सति 'न चतुस्त्रिंशत्'—इत्यस्मिन्निषेधे कृत्स्नवाक्यतात्पर्यान्निषिद्धस्य नित्यनिवृत्तिस्तदवस्था स्यात्। नैवम्। प्रापकस्यापि सद्भावेन निषेधप्राप्तिभ्यां चतुस्त्रिंशन्मन्त्रस्य विकल्पितत्वात्। अथोच्यते—'चतुस्त्रिंशद्वाजिनः' इत्येवं मन्त्रः केवलं स्वरूपेणैव पठितः। न त्वस्याश्वगुणैषत्वप्रापकं किंचिदस्ति—इति। तन्न। प्रापकवचनस्य कल्पनीयत्वात्। अन्यथा प्रसक्त्यभावेन प्रतिषेधानुपपत्तेः। तस्मात्—प्रसञ्जकेनोपजीव्येनानुमितविधिना प्रत्यक्षनिषेधेन च समानबलतया 'चतुस्त्रिंशत्'—इत्ययं मन्त्रोऽश्वस्याध्रिगुप्रैषे विकल्प्यते ॥ ४ ॥ ५ ॥

तृतीये— { आश्वमेधिकसवनीयाश्वस्य चताश्चशद्वङ्क्रिरूपविशेषवचनाधिकरणे } सूत्राणि १८—२१ ॥

तत्प्रतिषिध्य प्रकृतिर्नियुज्यते सा चतुस्त्रिंशद्वाच्यत्वात् ॥ १८ ॥ ऋग्वा स्यादाम्नातत्वादविकल्पश्च न्यायः ॥ १९ ॥ तस्यां तु वचनादैरवत्पदविकारः स्यात् ॥ २० ॥ सर्वप्रतिषेधो वाऽसंयोगात्पदेन स्यात् ॥ २१ ॥

तृतीयाधिकरणमारचयति—

पृथग्वचनमश्वस्य स्यादन्याभ्यां समस्य वा ।
आद्यः पदे निषिद्धेऽस्मिन्विशेषो नियतो यतः ॥ ६ ॥
वङ्क्रीयत्तानुक्तिदोषादृगेवात्र निषिध्यते ।
पक्षे प्राप्तः प्राकृतोऽस्मिन्समस्योक्तः पुरा यथा ॥ ७ ॥

पूर्वोक्ताश्वस्य तूपर—गोमृगाभ्यां समस्य वङ्क्रीयत्ता न वक्तव्या, किंतु पृथगेव। कुतः। यस्मात् 'चतुस्त्रिंशद्वाजिनः' इत्ययं मन्त्रविशेषोऽश्वस्य नियतः। ननु—प्रत्यक्षनिषेधेनानुमितविधिना च विकल्पः पूर्वमुक्तः। तन्न। ऋचो निषेधाभावात्। 'न चतुस्त्रिंशदिति ब्रूयात्' इति ऋचि प्रथमपदमात्रं निषिध्यते। ननु—निषेधस्य प्रसक्तिपूर्वकत्वमुपजीव्य विधिरनुमितः। तत्रानुमापकस्य निषेध-

१ ज. ञ. °क्यस्यै°। २ ज. ञ. °वृत्तिः स्या°। ३ क. ख. ञ. °न्त्रस्यानिषिद्धत्वादविक°।

स्याभावेनानुमेयस्य विधेरप्यभावात् । 'चतुस्त्रिंशत्' इत्यस्या ऋचः प्राप्तिरेव नास्ति, तत्र कुतो नियतिः—इति चेत् । न। प्रकरणपाठमन्त्रलिङ्गाभ्यां विनियोगविधेरनुमेयत्वात् । तस्मात्—अनेन मन्त्रेणाश्वस्य पृथग्वचनम् । इति प्राप्ते—

ब्रूमः—यदि 'चतुस्त्रिंशत्' इत्येकमेव पदं निषिध्येत, तदा तस्यामृचि वङ्क्रीणामियत्ता नोच्येत । ननु—'षड्विंशतिरित्येव ब्रूयात्' इत्यनेन वाक्येन संख्यावाचिपदान्तरप्रक्षेपविधानादियत्तोच्यते—इति चेत् । न । तस्य वाक्यस्यैवकारेण विधिशक्तेः कुण्ठितत्वात् । तस्मात्—न पदमात्रस्य निषेधः, किंतु कृत्स्नाया ऋचः । तथा सति पूर्वोक्तविकल्पस्य तदवस्थत्वादग्निशेषविधिपक्षे पृथग्वचनं कर्तव्यम् । तन्निषेधपक्षे-चोदकप्राप्ते प्राकृतेऽध्रिगुप्रैषे प्रथमाधिकरणन्यायेन समस्य वक्तव्यम् । तत्र तूपर-गोमृगयोः प्रत्येकं षड्विंशतित्वादश्वस्य चतुस्त्रिंशत्त्वात्समासेन 'षडशीतिरेषां वङ्क्रयः' इत्येवमूहनीयम ॥ ६ ॥ ७ ॥

(चतुर्थे—अग्नीषोमीयपशावुरूकशब्देन वपाभिधानाधिकरणे सूत्रम्—)।

वनिष्ठुसंनिधानादुरूकेण वपाभिधानम् ॥ २२ ॥

चतुर्थाधिकरणमारचयति—

पक्षी वपाऽथवोरूको रलयोरविशेषतः ।
पक्षी वपा संनिधानाद्भ्रान्तिच्छेदान्निषेधतः ॥ ८ ॥

अध्रिगुप्रैषे वचनमिदमाम्नायते—'वनिष्ठुमस्य मा राविष्टोरूकं मन्यमानाः' इति । वनिष्ठुर्वपासमीपवर्ती कश्चित्स्थूलान्त्रविशेषः । तं मा राविष्ट तस्य लवनं मा कुरुत । व्यत्ययेन लकारस्य रेफः । किं कुर्वन्तः—उरूकं मन्यमाना वनिष्ठावुलूकबुद्धिं कुर्वन्त इत्यर्थः । अत्र—उरूकशब्देन काकविरोधी कश्चिदुलूकनामा पक्षिविशेषोऽभिधीयते । कुतः । रलयोरविशेषात् । 'पर्यङ्कः, पल्यङ्कः, लोमानि, रोमाणि' इत्यादिदर्शनात् । उरूकशब्दः सादृश्यलक्षकः। 'पक्षिसदृशं वनिष्ठुं विवेकेन मन्यमाना मा राविष्ट' इति वाक्यार्थः । तस्मात्—उरूकः पक्षी इति प्राप्ते—

ब्रूमः—उरूकशब्देनात्र वपा लक्ष्यते । कुतः । वनिष्ठुसंनिधानात् । सति हि संनिधावुरूकभ्रान्तिर्वनिष्ठौ संभवति । भ्रान्तिप्राप्तं च लवनमत्र निषिध्यते । 'उरूकं मन्यमाना वनिष्ठुं मा राविष्ट' इत्युक्तत्वात् । वपालवनकाले भ्रान्त्या वनिष्ठोर्यल्लवनं तस्य निषेधे सति दृष्टोऽर्थो लभ्यते । भ्रान्तिनिवारणस्य दृष्टत्वात् । त्वत्पक्षे तु वनिष्ठोर्लवनमेव नास्ति । तच्चायुक्तम् । हृदयाद्यङ्गवल्लवितव्यत्वात् । 'वनिष्ठुमग्नीधे षडवत्तं संपादयति' इत्याद्यनुष्ठानविधानात् । ततो लव-

अविवेचकत्वात्समवेतार्थत्वेनादृष्टार्थो मन्त्रपाठः प्राप्नुयात् । तस्मात्—वपावचन उरूकशब्दः । यद्यपि वपायामप्रसिद्धः[ उरूक ]शब्दः, तथाऽपि 'उरु विस्तीर्णमूको मेदो यस्य, इत्यवयवार्थद्वारा मेदस्विन्यां वपायां युक्त उरूकशब्दः। एवं सत्यनेकवपासु विकृतिष्वेकवचनान्त उरूकशब्द ऊहनीयः ॥ ८ ॥

(पञ्चमे—अध्रिगौ प्रशसाशब्दस्य प्रशंसापरत्वाधिकरणे सूत्रे—२३—२४)।

प्रशसाऽस्यभिधानम् ॥ २३ ॥ बाहुप्रशंसा वा ॥ २४ ॥

पञ्चमाधिकरणमारचयति—

प्रशसेत्यसिरर्थः स्यात्स्तुतिर्वा छेदनादसिः ।

स्तुतिः कार्त्स्न्याय बाह्वोः स्यात्स्वधितिश्छेदसाधनम् ॥९॥

अध्रिगुप्रैषे वाक्यान्तरमाम्नातम्—'प्रशसा बाहू' इति । तत्र—'शसु हिंसायाम्' इत्यस्माद्धातोः सोपसर्गादुत्पन्नस्य सकारान्तप्रातिपदिकस्य तृतीयैकवचनान्तस्य 'प्रशसा' इति रूपं भवति । तच्चासेर्वाचकम् । तदेतत्केनचिद्ब्राह्मणवाक्येनानूद्यते—'दश प्रयाजानिष्ट्वाऽऽह—'शासमाहर' इति, असिं वै 'शास' इत्याचक्षते' इति । सोऽयमसिर्बाह्वोश्छेदनहेतुः । तस्मात्—दृष्टार्थलाभादसिः 'प्रशसा' इत्यस्य पदस्यार्थः । इति चेत् ।

मैवम् । 'शंसु स्तुतौ' इत्यस्माद्धातोरयमुत्पन्नः 'प्रशसौ' इत्यस्य द्वितीयाद्विवचनान्तस्य शब्दस्य छान्दस औकारलोप आकारादेशे च कृते 'प्रशसा' इति भवति । बाह्वोः प्रशस्तत्वं नाम कार्त्स्न्यम् । 'प्रशसा बाहू कृणुतात्' इत्युक्ते 'निःशेषेणोद्धर्तव्यौ बाहू' इतीदृशो दृष्टार्थो लभ्यते । नात्र छेदनसाधनत्वमसेः संभवति । स्वधितेस्तत्साधनत्वेन विहितत्वात् । तस्मात्—स्तुतिरेवास्य शब्दस्यार्थः । तथा सति बाहुवृद्धौ बहुवचनान्तत्वेन 'प्रशसा' इति पदमूहनीयम् ॥९॥

( षष्ठे—अध्रिगुप्रैषे श्येनादिशब्दानां कार्त्स्न्यवचनाधिकरणे सूत्राणि —२५—२७ )।

श्येन-शला-कश्यप-कवष-स्रेकपर्णेष्वाक्‍तिवचनं प्रसिद्धसंनिधानात् ॥ २५ ॥

कार्त्स्न्यं वा स्यात्तथाभावात् ॥ २६ ॥

१ क. ख. °द्धः, त° । २ ज. झ. तत्र । ३ क. ख. च. ज. झ. ञ. प्रशस्तौ ।

अग्निर्गोश्च तदर्थत्वात् ॥ २७ ॥

षष्ठाधिकरणमारचयति—

साहश्यमुत साकल्यं श्येनाद्युक्त्या विवक्षितम् ।
प्रसिद्धसंनिधेराद्यस्तत्सत्त्वादखिलोद्धृतिः ॥ १० ॥

अग्निगुप्रैषवचन एतदाम्नायते—'श्येनमस्य वक्षः कृणुतात्' इति। तत्र—यथा 'अमी पिष्टपिण्डाः सिंहाः क्रियन्ताम्' इत्युक्ते प्रसिद्धसिंहसंनिधानात्पिष्टपिण्डेषु सिंहसादृश्यं कर्तव्यतया प्रतीयते। तथैव 'अस्य पशोर्वक्षः श्येनं कृणुतात्' इत्यत्र श्येनसादृश्यं वक्षसि कर्तव्यतया प्रतीयते। ततो वक्ष उद्धृत्य कर्तनाद्युपायेन पक्षचरणचञ्च्वादिकं संपाद्य श्येनसंस्थानं कर्तव्यम्। इति प्राप्ते—

ब्रूमः—वक्षसि श्येनसादृश्यं स्वत एव पूर्वमस्ति। ततो 'यथा तत्र नश्यति तथा साकल्येनोद्धरणीयम्' इति विवक्षया श्येनशब्दः प्रयुज्यते। तथा सति हविरविकलं भवति।

* अंसादिष्वनेन न्यायेन साकल्यविवक्षया तत्तद्रूपकोक्तिर्द्रष्टव्या। एतदेवाभिप्रेत्य श्रूयते—'गात्रं गात्रमस्यानूनं कृणुतात्' इति ॥ १० ॥

( सप्तमे—दर्शार्थोद्धृताग्निलोपे प्रायश्चित्तरूपज्योतिष्मत्या अननुष्ठानाधिकरणे सूत्रम्—)।

प्रासङ्गिके प्रायश्चित्तं न विद्यते परार्थत्वात्तदर्थे हि विधीयते ॥ २८ ॥

सप्तमाधिकरणमारचयति—

ज्योतिष्मती भवेन्नो वा दर्शार्थोद्धृतलोपने ॥
निमित्तसत्त्वात्स्यान्नाग्निहोत्रार्थोद्धृतिवर्जनात् ॥ ११ ॥

अग्निहोत्रप्रक्रियायामिदमाम्नायते—'अग्नये ज्योतिष्मते पुरोडाशमष्टाकपालं निर्वपेत् । यस्याग्निरुद्धृतोऽहुतेऽग्निहोत्र उद्वायेत्' इति। 'प्रतिदिनमग्निहोत्रं होतुं गार्हपत्यादुद्धृत्याऽऽहवनीयेऽग्निः प्रक्षिप्यते, सोऽयमुद्धृतोऽग्निः कदाचिदहुतेऽग्निहोत्रे यदि शाम्येत्, तदानीमियमिष्टिः प्रायश्चित्तम्' इत्यर्थः। तत्र—दर्श-

* "शला, दोषणी, कश्यपेवांसौ, कवषोरु, स्रेकपर्णाष्ठीवन्ता" इति शबरभाष्यदर्शिते प्रैषवचनमन्त्रशेषभूते दर्शितेषु दोषादिषु—इत्यर्थो बहुव्रीहिपञ्चमीतत्पुरुषैकशेषेषु कृतेषु निष्पद्यते।

१ क. होतुर्गार्ह°।

पूर्णमासार्थमुद्धृतस्याप्यग्नेः शान्तौ सेयं ज्योतिष्मतीष्टिर्भवेत्। कुतः। अग्न्युद्वानस्य निमित्तस्य सद्भावात्। इति चेत्।

मैवम्। अग्निहोत्रार्थमुद्धृतस्यैवाग्नेरुद्वानं निमित्तमिति प्रकरणादवगम्यते। अनया चेष्ट्याऽग्निहोत्रायैवाग्निः पुनरुत्पाद्यते। तथा सत्यग्निहोत्रस्येयमिष्टिः सामवायिकमङ्गं भवति। अतोऽग्निहोत्रार्थोद्धृतोद्वानस्य निमित्तस्याभावान्नैमित्तिकीष्टिर्न प्रवर्तते ॥ ११ ॥

( अष्टमे—धार्योद्वाने प्रायश्चित्तरूपज्योतिष्मत्यननुष्ठानाधिधिकरणे सूत्रे २९–३० )।

**धारणे च परार्थत्वात् ॥ २९ ॥ क्रियार्थत्वादितरेषु कर्म स्यात् ॥ ३० ॥**

अष्टमाधिकरणमारचयति—

**धार्योद्वाने साऽस्ति नो वा सर्वार्थत्वेन विद्यते।**
**गतश्रीत्वानिमित्तं तत्परार्थत्वान्न विद्यते ॥ १२ ॥**

इदमाम्नायते—'धार्यो गतश्रिय आहवनीयः' इति। गतश्रीशब्दार्थस्त्वेवं श्रूयते—'त्रयो[1] ह वै गतश्रियः—ब्राह्मणः शुश्रुवान्, ग्रामणीः, राजन्यः' इति, 'और्वो गौतमो, भारद्वाजः' इति कल्पसूत्रकारः। गतश्रीभिर्धार्यमाणस्याऽऽहवनीयस्य सर्वकर्मार्थत्वे सत्यग्निहोत्रार्थत्वमप्यस्तीति तदुद्वाने सा ज्योतिष्मतीष्टिर्विद्यते। इति चेत्।

मैवम्। न ह्यस्य धारणेऽग्निहोत्रं निमित्तम्, किंतु गतश्रीत्वम्। सर्वकर्मसमुदायस्य चोदनया कयाचिदप्यचोदितत्वात्सर्वार्थत्वं शङ्कितुमप्यशक्यम्। गतश्रीत्वं निमित्तीकृत्य धृतोऽग्निः प्रसङ्गात्सर्वकर्मसूपकुर्वन्नग्निहोत्रेऽप्युपकरोति—इति चेत्। उपकरोतु नाम। नैतावता प्रायश्चित्तस्य निमित्तं लभ्यते। अग्निहोत्रार्थमुद्धृतस्योद्वानं तन्निमित्तम्। न चात्र तदस्ति। किंत्वन्यस्य यस्य कस्यचित्कर्मणोऽर्थे समुद्धृतस्य गतश्रीत्वनिमित्तं धारणं क्रियते। तस्मात्—निमित्ताभावान्नास्ति सेष्टिः ॥१२॥

( नवमे—दर्शार्थस्योद्धरणस्यामन्त्रकत्वाधिकरणे सूत्रम्— )।

**न तूत्पन्ने यस्य चोदनाऽप्राप्तकालत्वात् ॥ ३१ ॥**

नवमाधिकरणमारचयति—

१ ज. झ. °त्रार्थोद्ध°। २ झ. °ते 'तयो ह। ३ क. ख. ञ. ञ. °यो वै। ४ ज. झ. °र्वकामार्थ°। ५ ज. झ. कदाचि°।

दर्शार्थोद्धरणे वाचेत्यादिर्नो वा, समन्त्रकम्।
कर्तुं स्यान्न निमित्तस्य कालस्यात्र विवर्जनात् ॥ १३ ॥

अस्त्यग्निहोत्रे वह्न्युद्धरणमन्त्रः—'वाचा त्वा होत्रा, प्राणेनोद्गात्रा, चक्षुषाऽध्वर्युणा, मनसा ब्रह्मणा, श्रोत्रेणाग्नीधैतैस्त्वा पञ्चभिर्दैव्यैर्ऋत्विग्भिरुद्धरामि' इति। सोऽयं मन्त्रो दर्शपूर्णमासार्थेऽपि वह्न्युद्धरणे पठितव्यः। कुतः। तदुद्धरणस्याग्निहोत्रेऽप्यङ्गत्वात्। उद्धृते हि तस्मिन्नग्नौ पर्वणि सायं, प्रतिपदि प्रातश्चाग्निहोत्रमनुष्ठीयते। यदि तत्र मन्त्रो न पठ्यते, तदानीमग्निहोत्राङ्गमुद्धरणं विगुणं स्यात्। ततः समन्त्रकं कर्तुं मन्त्रः पठनीयः। इति चेत्।

मैवम्। अग्निहोत्राङ्गे समन्त्रकाग्न्युद्धरणे निमित्तस्य कालस्यासंभवात्। अधिवृक्षसूर्यं आविःसूर्ये च काले क्रमेण सायं प्रातश्चाग्निहोत्रवह्न्युद्धरणं विहितम्। दर्शपर्णमासार्थं तु पर्वणि प्रातरग्निहोत्रे हुते पश्चादाग्निमुद्धृत्यान्वाधानं क्रियते। अतो निमित्तस्य कालस्याभावान्नैमित्तिकं समन्त्रोद्धरणं नास्ति॥१३॥

( दशमे—प्रायणीयचरौ प्रदानधर्माणामननुष्ठानाधिकरणे
सूत्राणि ३२–४० )।

प्रदानदर्शनं श्रपणे तद्धर्मभोजनार्थत्वात्संसर्गाच्च मधूदकवत् ॥ ३२ ॥ संस्कारप्रतिषेधश्च तद्वत् ॥ ३३ ॥ तत्प्रतिषेधे च तथाभूतस्य वर्जनात् ॥ ३४ ॥ अधर्मत्वमप्रदानात्प्रणीतार्थे विधानादतुल्यत्वादसंसर्गः ॥ ३५ ॥ परो नित्यानुवादः स्यात् ॥ ३६ ॥ विहितप्रतिषेधो वा ॥ ३७ ॥ वर्जने गुणभावित्वात्तदुक्तप्रतिषेधात्स्यात्कारणात्केवलाशनम् ॥ ३८ ॥ व्रतधर्माच्च लेपवत् ॥ ३९ ॥ रसप्रतिषेधो वा पुरुषधर्मत्वात् ॥४०॥

दशमाधिकरणमारचयति—

प्रदेयधर्माः स्युर्नो वा पयसि प्रायणीयगे।
चरुवत्स्युः पाकहेतुः समन्या स्युर्न ते ततः॥ १४ ॥

१ ज. °त्यादि नो वा। २ क॰ °सत्वका°। ३ ज. ञ. °भिर्दैवैर्ऋ°।

ज्योतिष्टोमे श्रूयते—‘ आदित्यः प्रायणीयः पयसि चरुः ’ इति । तत्र—चरुपयसोरुभयोर्देवतासंबन्धेन प्रदेयद्रव्यत्वसाम्यात्, यथा चरौ निर्वापावघातादयः समन्त्रकाः प्रदेयद्रव्यधर्मा अनुष्ठीयन्ते, तथा पयसि समन्त्रकवत्सापाकरणादयः प्रदेयद्रव्यधर्मा अनुष्ठेयाः । इति चेत् ।

मैवम् । आधारवाचिन्या ‘ पयसि ’ इति सप्तम्या श्रपणहेतुत्वावगमात् । ततो न ते धर्माः कर्तव्याः, किंतु प्रणीताधर्मा उत्पवनादयस्तत्र कर्तव्याः ॥ १४ ॥

**(एकादशे—अभ्युदयेष्टौ दधिशृतयोः प्रदेयधर्मानुष्ठानाधिकरणे सूत्रे ४१-४२)।**

**अभ्युदये दोहापनयः स्वधर्मा स्यात्प्रवृत्तत्वात् ॥ ४१ ॥ शृतोपदेशाच्च ॥ ४२ ॥**

एकादशाधिकरणमारचयति—

**पयोदध्नोरभ्युदये न ते स्युर्वा, पुरेव नो ।**
**प्रवृत्तत्वाद्देवयोगमात्रोक्तेः सन्ति तेऽन्यवत् ॥ १५ ॥**

अभ्युदयेष्टिरेवमाम्नायते—‘वि वा एनं प्रजया पशुभिर्वर्धयति, वर्धयत्यस्य भ्रातृव्यम् । यस्य हविर्निरुप्तं पुरस्ताच्चन्द्रमा अभ्युदेति । त्रेधा तण्डुलान्विभजेत् । ये मध्यमाः स्युः, तानग्नये दात्रे पुरोडाशमष्टाकपालं कुर्यात् । ये स्थविष्ठाः, तानिन्द्राय प्रदात्रे दधंश्चरुम् । येऽणिष्ठाः, तान्विष्णवे शिपिविष्टाय शृते चरुम्’ इति । अयमर्थः—‘यस्य यजमानस्य दर्शकर्मार्थं हविर्भ्रान्त्या चतुर्दश्यां निरुप्तं भवति । तत उषसि पूर्वस्यां दिशि चन्द्रमा अभ्युदेति । तं यजमानमध्वर्युः प्रजया पशुभिश्च वियोजयति । तदीयं च वैरिणं वर्धयति । ततः प्रवृत्तेऽस्मिन्दर्शकर्मणि चन्द्रोदयं निमित्तीकृत्य पूर्वदेवतापनयनेन तण्डुलानां देवतान्तरसंबन्धः कर्तव्यः, इति । तदिदं षष्ठाध्याये निर्णीतम् । इह तु पूर्वोक्तप्रायणीयन्यायेन सप्तमीनिर्दिष्टयोर्दधिशृतयोः प्रदेयद्रव्यधर्मा न कर्तव्याः, किंतु प्रणीताधर्माः । इति प्राप्ते—

ब्रूमः—विषमो दृष्टान्तः । प्रायणीयस्य पूर्वमप्राप्ततया द्रव्यं, देवता, श्रपणाधारभूतं पयश्च, इत्येवमनेकैर्गुणैर्विशिष्टं कर्मैकेन वाक्येन विधातुं शक्यम् । इह तु कर्मणः प्रवृत्तत्वात्तस्मिन्कर्मणि तण्डुलानां नैमित्तिको देवतान्तरसंबन्ध एक एव गुणो विधातुं शक्यते, न तु दधिशृतयोः प्रणीतार्थत्वं गुणान्तरम् । अनेकगुणविधौ वाक्यभेदप्रसङ्गात् । तस्मात्तण्डुलवत्प्रदेयत्वेन प्रवृत्तयोर्दधिशृतयोः प्रदेयधर्माः कर्तव्याः ॥ १५ ॥

१ क. °न द्द° । २ ञ. °व्यस्य सा° । ३ क. °वमना° । ४ च. °र्वा, स्युरेवते । प्र° । ५ क. ख. ङ. ञ. पूर्वं । ६ ञ. °ता च श्र° ।

(द्वादशे-पशुकामेष्टौ दधिशृतयोः प्रदेयधर्माननुष्ठानाधिकरणे सूत्रे ४३-४४)

अपनयो वाऽर्थान्तरे विधानाच्चरुपयोवत् ॥ ४३ ॥ लक्षणार्था शृतश्रुतिः ॥ ४४ ॥

द्वादशाधिकरणमारचयति—

स न्यायः पशुकामेष्टौ प्रायणीयनयोऽथवा ।
तुल्यश्रुतित्वात्स्यादाद्योऽपूर्वकर्मत्वतोऽन्तिमः ॥ १६ ॥

'इदमाम्नायते—'यः पशुकामः स्यात्सोऽमावास्यामिष्ट्वा वत्सानपाकुर्यात्'इति । तत्रेदमपरमाम्नातम्—'ये मध्यमाः स्युः, तानग्नये दात्रे पुरोडाशमष्टाकपालं कुर्यात् । ये स्थविष्ठाः, तानिन्द्राय प्रदात्रे दधनि चरुम् । येऽणिष्ठाः, तान्विष्णवे शिपिविष्टाय शृते चरुम्' इति । तत्र—अभ्युदयेष्ट्यां समानश्रुतित्वात्तेनैव न्यायेन दधिशृ(श्रृ)तयोः प्रदेयधर्माः । इति चेत् ।

मैवम् । पाठसाम्येऽप्यपूर्वकर्मत्वादर्थसाम्यं नास्ति । ततः प्रायणीयन्यायेन सप्तम्या श्रयणाधारत्वावगमात्प्रणीताधर्मा एवात्र कार्याः ॥ १६ ॥

त्रयोदशे— {ज्योतिष्टोमे श्रयणानां प्रदेयधर्माननुष्ठानाधिकरणे} सूत्राणि ४५—५० ) ।

श्रयणानां त्वपूर्वत्वात्प्रदानार्थे विधानं स्यात् ॥ ४५ ॥ गुणो वा श्रयणार्थत्वात् ॥ ४६ ॥ अनिर्देशाच्च ॥ ४७ ॥ श्रुतेश्च तत्प्रधानत्वात् ॥४८॥ अर्थवादश्च तदर्थवत् ॥ ४९ ॥ संस्कारं प्रति भावाच्च तस्मादथ प्रधानं स्यात् ॥ ५० ॥

त्रयोदशाधिकरणमारचयति—

मिश्रणे पयआदीनां सोमधर्मा न वाऽग्रिमः ।
प्रदातुं मेलनान्मैवं संस्कारार्थत्वतः श्रुतेः ॥ १७ ॥

ज्योतिष्टोमे पयःप्रभृतिभिर्द्रव्यैर्ग्रहपात्रनिष्ठस्य सोमस्य मिश्रणमाम्नातम्—'पयसा मैत्रावरुणं श्रीणाति, सक्तुभिर्मन्थिनम्, धानाभिर्हारियोजनम्, हिरण्येन शुक्रम्, आज्येन पात्नीवतम्' इति । तत्र—मिश्रणं सोमेन सह प्रदानार्थम् । ततः प्रदेयस्य सोमस्य ये धर्माः क्रयादयः, ते पयःप्रभृतिषु कर्तव्याः । इति चेत् ।

१ ख. च. ञ. दधंश्चरु ।

नैवम् । मेक्षणस्य सोमसंस्कारार्थत्वात् 'मैत्रावरुणम्' इत्यादिभिर्द्वितीयाश्रुतिभिः सोमस्य प्राधान्यं गम्यते । 'पयसा' इत्यादिभिस्तृतीयाश्रुतिभिः पयःप्रभृतीनां तादर्थ्यम् । ततः संस्कारकाणां प्रदेयत्वाभावान्न तद्धर्माः सन्ति ॥ १७॥

( चतुर्दशे— {'ईशानाय परस्वत' इत्यत्र याागान्तरविधानाधिकरणे} सूत्राणि ५१–५५ ) ।

पर्यग्निकृतानामुत्सर्गे तादर्थ्यमुपधानवत् ॥ ५१ ॥ शेषप्रतिषेधो वाऽर्थाभावादिडान्तवत् ॥ ५२ ॥ पूर्ववत्त्वाच्च शब्दस्य संस्थापयतीति चाप्रवृत्ते नोपपद्यते ॥५३॥ प्रवृत्तेर्यज्ञहेतुत्वात्प्रतिषेधे संस्काराणामकर्म स्यात्तत्कारितत्वाद्यथा प्रयाजप्रतिषेधे ग्रहणमाज्यस्य ॥५४॥ क्रिया वा स्यादवच्छेदादकर्म सर्वहानं स्यात् ॥ ५५ ॥

चतुर्दशाधिकरणमारचयति—

स्पर्शः परस्वदालम्भो यागो वोत्सर्गतोऽग्रिमः ।
द्रव्यदेवान्वयाद्यागोऽङ्गरीतिर्विधिरुत्तमः ॥ १८ ॥

अश्वमेधे समाम्नायते—'ईशानाय परस्वत आलभते पर्यग्निकृतानारण्यानुत्सृजन्ति' इति । परस्वच्छब्देनाऽऽरण्याः पशुविशेषा उच्यन्ते । तेषामालम्भः स्पर्शमात्रम् । कुतः । पर्यग्निकृतानां तेषां पशूनामुत्सर्गविधानात् । यागपक्षे तदसंभवात् । इति चेत् ।

नैवम् । द्रव्यदेवतान्वयेन यागत्वावगमात् । 'ईशानाय' इति देवताया निर्देशः । 'परस्वतः' इति द्रव्यस्य । नहि यागमन्तरेण द्रव्यदेवतयोरन्वयः संभवति । पर्यग्निकृतोत्सर्गवाक्येन क्लृप्तोपकारैमार्कृतपर्यग्निकरणान्ताङ्गरीतिर्विधीयते । तया प्रत्यक्षविहितया निराकाङ्क्ष ईशानप्रयोगवचने न चोदकमपेक्षते । तस्मात्— आलम्भो यागः । इतरस्तत्र गुणविधिः ॥ १८ ॥

---

१ क. °न्वयी यागो° । २ ज. झ. ञ. °जन्ति. इ° । ३ ख. °कारा प्रा° । ४ ज. झ. °कृता प° । ५ क. ख. घ. ज. झ. °चनो न ।

( पञ्चदशे—'आज्येन शेषं संस्थापयति' इत्यनेन कर्मान्तरविधानाधिकरणे सूत्राणि ५६–६० )।

आज्यसंस्थाप्रतिनिधिः स्याद्द्रव्योत्सर्गात् ॥५६॥ समाप्तिवचनात् ॥ ५७॥ चोदना वा कर्मोत्सर्गादन्यैः स्यादविशिष्टत्वात् ॥५८॥ अनिज्यां च वनस्पतेः प्रसिद्धां तेन दर्शयति ॥ ५९ ॥ संख्या तद्देवतत्वात्स्यात् ॥ ६० ॥

पञ्चदशाधिकरणमारचयति—

आज्येन शेषमित्युक्तौ द्रव्यप्रतिनिधिर्भवेत् ।
कर्मान्यद्वाऽग्रिमस्त्यागशेषसंस्थापनोक्तिभिः ॥ १९ ॥
अङ्गरीत्या समाप्तत्वाद्देवतोक्त्यनुवर्तनात् ।
साम्याच्छेषः संस्थितिस्तु याग आलम्भनादिवत् ॥ २० ॥

'त्वाष्ट्रं पात्नीवतमालभेत' इति प्रकृत्य 'पर्यग्निकृतं पात्नीवतमुत्सृजति' इति श्रुतम्। तत्र पुनः श्रूयते—'आज्येन शेषं संस्थापयति' इति। तदिदमाज्यं पशुद्रव्यस्य प्रतिनिधिर्भवेत्। उत्सर्गशेषसंस्थापनशब्दैस्तदवगमात्। पर्यग्निकरणादूर्ध्वं पशुद्रव्यस्य त्यागमभिधाय 'आज्येन' इति द्रव्यान्तरं पशुस्थानीयं साधनभूतमुपादिश्य 'चोदकप्राप्तमुत्तरकालीनमङ्गजातं तेन द्रव्येण समापनीयम्' इति विधीयते। इति प्राप्ते—

ब्रूमः—पूर्वाधिकरणन्यायेनाङ्गरीत्या पात्नीवतः पशुः समाप्तः। यदि पात्नीवतमालभेत' इति विहितस्य कर्मणः समाप्तिर्न स्यात्, केवलं पशुद्रव्यत्यागः क्रियते, तदा विहितो द्रव्यदेवतासंबन्धरूपो यागो नानुष्ठितः स्यात्। ततो देवतामुद्दिश्य त्यागोऽवश्यं कर्तव्यः स्यात्। तथा सति पशुसाधनके यागे मुख्येन पशुनैव साधिते कुतः प्रतिनिधिः। देवतोद्देशत्यागस्य चोत्पत्तिवाक्येनैव सिद्धत्वात्। पर्यग्निकरणोत्सर्गवाक्येनाङ्गरीतिविधाने संस्थापनीयः शेषो न कोऽप्यस्ति। तस्मात्—आज्यवाक्येन कर्मान्तरं विधीयते। देवता तु पात्नीवतशब्दस्यानुवृत्त्या लभ्यते। कर्मान्तरत्वेऽपि शेषत्वमुपचर्यते। पश्वाज्यद्रव्यकयोः पूर्वोत्तरकर्मणोः पत्नीवदाख्याया देवताया एकत्वेनाव्यवहितानुष्ठानेन चोपक्रमोपसंहारसदृशत्वात्। संस्थितिक्रियया त्वालम्भननिर्वापादिवद्यागो विवक्ष्यते। लिङ्प-

१ ञ. °तोक्तानु°। २ क. °व्यत्या°। ३ ज. झ. °यं स्थान°। ४ ख. ज. झ. पत्नीवतः। ५ ख. ज. झ. °दि पत्नी°। ६ ख. ज. झ. °व्यः। त°। ७ क. ख. °न च प°। ८ ज. झ. °नाप्यव°। ९ ज. झ. °या चाऽऽलम्भनि°। १० ज झ. °वद्योगो। ११ ख. लिङ्प्रत्ययो वैदिकः। संस्थापयतीति लडपि प्र°।

स्यथ्यापूर्वभावनामभिधत्ते । तस्मात्–आज्यद्रव्यकं पत्नीवद्देवताकं शेष-
वत्पशुयागसमनन्तरभाविकर्मान्तरमेत्र विधीयते ॥ १९ ॥ २० ॥

इति श्रीमाधवीये जैमिनीयन्यायमालाविस्तरे नवमाध्यायस्य
चतुर्थः पादः ॥ ४ ॥
॥ समाप्तश्चायं नवमोऽध्यायः ॥ ९ ॥

| | अत्र पादे | आदितः । |
|---|---|---|
| अधिकरणानि | १५ | ५९६ । |
| सूत्राणि | ६० | १६५१ । |

---

१ च. °रमेवात्र । ञ. °रत्वं वि° ।

( अथ दशमोऽध्यायः )।

रूपान्तरत्वादासन्नं नवमे स्थितमूहनम्।
निवृत्तित्वाद्विप्रकृष्टो दशमे बाध उच्यते ॥ १ ॥

अतिदिष्टपदार्थस्य रूपान्तरमूहनम्, ततः संनिकृष्यते। बाधस्तु पदार्थनिवृत्तिस्ततो विप्रकृष्यते। तस्मान्नवमदशमयोरध्याययोः पूर्वोत्तरभाव उपपन्नः॥१॥

( प्रथमे—वर्णकत्रयसहिते सूत्राणि १—३ )।

विधेः प्रकरणान्तरेऽतिदेशात्सर्वकर्म स्यात् ॥१॥अपि वाऽभिधानसंस्कारद्रव्यमर्थे क्रियेत तादर्थ्यात् ॥ २ ॥
तेषामप्रत्यक्षविशिष्टत्वात् ॥ ३ ॥

दशमाध्यायस्य प्रथमपादे प्रथमाधिकरणे (विकृतौ लुप्तार्थप्राकृतानां बाधसाधकं) प्रथमवर्णकमारचयति—

'वेदिः स्वयंकृतेत्यादौ प्राकृतं सर्वमाचरेत्।
लुप्तार्थं बाध्यतां वाऽऽद्यश्चोदकप्रापितत्वतः ॥ २ ॥
अपेक्षासत्तियोग्यत्वहानेरुद्धननादिकम्।
बाध्यतेऽपेक्षितं सर्वं चोदकेनातिदिश्यते ॥ ३ ॥

'रत्निनामेतानि हवींषि भवन्ति' इति वाक्येन राजसूये रत्निनामकानां देवानां संबन्धीनि कानिचिद्धवींषि दर्शपूर्णमासेष्टिविकृतिरूपाणि विहितानि। तेषु मैत्राबार्हस्पत्ये हविषि श्रूयते—'स्वयंकृता वेदिर्भवति, स्वयंदितं बर्हिः, स्वयंकृत इध्मः' इति। इहाद्युद्धननखननपरिलेखनादिभिः क्रियाविशेषैर्वेदिर्निष्पाद्यते। 'स्फ्येनोत्तमां त्वचमुद्धन्ति, 'देवस्य त्वा सवितुः प्रसवे'—इति खनति, स्फ्येन वेदिं परिलिखन्परिगृह्णाति' इति तद्विधानात्। 'यज्ञस्य घोषदसि'—इत्यस्मिन्ननुवाके प्रोक्तैर्मन्त्रैर्दात्रच्छिन्नं बर्हिः संपाद्यते। 'त्रीन्परिधीन्'—इत्यादिमन्त्रोक्ताभिः क्रियाभिरिध्मः सिध्यति। विकृतिरूपे तु हविष्युद्धननाद्यपेक्षां वारयितुं 'स्वयम्' इत्युक्तम्। यथावस्थित एव भूप्रदेशो वेदित्वेन स्वीकर्तव्यः। इध्माबर्हिषी अपि

१ ज. झ. वेदिस्व°। २ ज. झ. °श्चोदितप्रापितत्व°। ञ. °श्चोदकप्रातिवत्त्वतः। ३ ख. ज. ञ. °इयताम् ॥३॥ 'र°। ४ च. रत्नीना°। ५ ज. झ. °से वि°। ६ ख. ज. झ. ञ. °स्य सवितुः सवे।

स्वत एव छिन्ने शास्त्रीयच्छेदननिरपेक्षे प्राप्ते इत्यर्थः। तत्र प्रकृतौ समयोजनानामुद्धननादीनां विकृतौ प्रयोजनं लुप्यते। उद्धननादिकृतस्य वेद्युपकारस्य स्वयंशब्देन निवारितत्वात्। बर्हिःस्तरणहविरासादनादयो वेदिधर्मा विकृतावप्यलुप्तार्थाः। तत्र संशयः—'किं लुप्तार्थमलुप्तार्थं च सर्वमङ्गजातं विकृतावप्यनुष्ठेयम्, उत लुप्तार्थं वर्जनीयम्' इति। 'चोदकस्य साधारणत्वात्सर्वमनुष्ठेयम्' इत्याद्यपक्षे प्राप्ते—

सिद्धान्तं ब्रूमः—अङ्गी सर्वैरुपकृतः फलं साधयति। तथा सत्याङ्गिनोऽङ्गकृत उपकारे साक्षादपेक्षा, उपकारद्वारा त्वङ्गेषु। प्रत्यासन्नश्चाङ्गिनं प्रत्यङ्गेभ्य उपकारः। योग्यताऽपि साक्षादपेक्षां पूरयितुमुपकारस्यैवास्ति, न त्वङ्गानाम्। वेदिनिष्पादनलक्षणदृष्टोपकारयुक्तानि प्रकृतावुद्धननाद्यङ्गानि। विकृतौ तु वेद्याः स्वतःसिद्धत्वेन निष्पादनोपकारो लुप्यते। तत उपकारद्वारकाण्याकाङ्क्षासंनिधियोग्यत्वान्युद्धननाद्यङ्गेषु हीयन्ते। तस्मात्—उद्धननादीनि नानुष्ठेयानि। सोऽयं चोदकप्रापितस्योद्धननाद्यनुष्ठेयत्वप्रत्ययस्य भ्रान्तित्वेन निश्चयो बाध इत्युच्यते। चोदकस्य त्वलुप्तोपकारैरुपकारद्वारेणाऽऽकाङ्क्षासंनिधियोग्यत्वयुक्तैर्हविरासादनाद्यैरङ्गैश्चीरतार्थता संपद्यते ॥२॥३॥

( कृष्णलेष्ववहन्तिबाधसाधकं ) द्वितीयवर्णकमारचयति—

अवघातः कृष्णलानामस्ति नो वाऽस्ति पाकवत्।
प्रत्यक्षोक्त्या चरेत्पाकमवघाते तु नास्ति सा ॥ ४ ॥

विकृतिरूपाणां काम्येष्टीनां काण्डे पठ्यते—+" प्राजापत्यं घृते चरुं निर्वपेच्छतकृष्णलमायुष्कामः" इति। कृष्णलशब्दः सुवर्णशकलवाची। प्रकृतौ 'व्रीहीनवहन्ति' इति पुरोडाशहेतूनां व्रीहीणामवघातो विहितः, सोऽत्र चरुहेतूनां कृष्णलानां चोदकवशादस्ति, नो वा, इति संदेहः। 'अस्ति' इति पूर्वपक्षप्रतिज्ञा। वितुषीकरणं प्राकृत उपकारः। लुप्तेऽप्युपकारे तदनुष्ठाया 'पाकवत्' इति निदर्शनम्। लुप्तेऽपि विक्लेदनोपकारे पाकः प्रतिवादिनोऽभिमतः, तद्वदवघातोऽप्यस्तु—इति चेत्।

'घृते श्रपयति' इति प्रत्यक्षोक्त्या पाकोऽभ्युपगन्तव्यः। अवघाते तु सोक्तिर्नास्ति,—इति वैषम्यादवघातो नास्ति ॥ ४ ॥

( वैश्वदेवचरौ विष्ण्वावाहनबाधसाधकं ) तृतीयवर्णकमारचयति—

वैश्वदेवस्य तन्त्रे यः पक्षे विष्णुः स किं पुरा।
आवाह्यो वा न वाऽऽवाह्य आग्नेयाङ्गातिदेशनात् ॥ ५ ॥

+ ' प्राजापत्यं चरुं निर्वपेच्छतकृष्णलमायुष्कामः ' इति शाबरभाष्ये।

१ ज. °रकस्य। २ क. °नादि°। ३ क. °था च स°। ४ ख. ज. झ. ञ. °न्तित्वनि°। ५ ज. झ. °तार्थः सं°। ६ ज. °तीयाधिकरणमा°। ७ क. सः। ० ञ. संदेहे ९ ख. ग. ज. झ. ञ. °स्तु "तु°।

वैश्वदेवावाहनस्य काले स्फ्याश्लेषवर्जनात्।
विष्णुयागस्य संदेहाद्विष्णोरावाहनं न हि ॥ ६ ॥

काम्येष्टिष्वेवं श्रूयते—'वैश्वदेवं चरुं निर्वपेद्भ्रातृव्यवान्। तं बर्हिषदं कृत्वा शम्यया स्फ्येन व्यूहेत्—'इदमहममुं चामुं च व्यूहामि' इति। यं द्विष्यात्तं ध्यायन्यदधो विसृज्येद्यच्च स्फ्य आश्लिष्येत्, तद्विष्णव उरुक्रमायावद्येत्' इति। अस्यायमर्थः—'अयं शत्रुक्षयार्थश्चरुः। तस्य प्रकृतिभूतादाग्नेयपुरोडाशाद्विशेष उच्यते—पुरोडाशशेषं यागोत्तरकाले बर्हिष्यवस्थाप्य चतुर्णामृत्विजां भक्ष्यविभागाय हस्तेन चतुर्धा कुर्यात्। ततः—इदं ब्रह्मणः, इदमध्वर्योः, इदं होतुः, इदमग्नीध्रः, इति तत्तद्भागान्पृथगुपदिशेत्। अत्रोग्रकर्मत्वान्न हस्तेन विभागः। किंतु तीक्ष्णाग्रेण शम्या—स्फ्यनामकेन यज्ञायुधद्वयेन। मन्त्रं च 'इदमिदमहं ब्रह्मभागं व्यूहामि' इत्येवमादिरूपं पठेत्, इत्येतावान्विशेषः। ततो यदि कदाचिच्चरुलेशो व्यूहनकाले भूमौ पतेत्, यज्ञायुधेन वा श्लिष्येत। तदा तं पतितं लिप्तं चरुलेशं तीव्रपराक्रमाय शत्रुक्षयसमर्थाय विष्णवेऽवद्येत्, व्यूहनकालेऽवदानकाले च शत्रुं तीक्ष्णं ध्यायेत्' इति। तत्र—वैश्वदेविकतन्त्रमध्ये चरुलेशस्याधःपाताश्लेषणपक्षे वैष्णवयागो विहितः। अतो वैश्वदेविकेऽनुष्ठितान्याधारप्रयाजाज्यभागादीन्यङ्गानि वैष्णवेऽपि प्रसङ्गादुपकुर्वन्ति, इति न पृथक्क्रियन्ते। आवाहनं त्वनुष्ठानवैषम्येण न प्रसङ्गात्सिध्यति। 'विश्वान्देवानावह' इति हि तत्राऽऽवाहनम्। अत्र तु 'विष्णुमावह' इति वैषम्यम्। सामिधेनीप्रयाजयोर्मध्यकाले होत्रा देवतावाहनार्थो निगदः पठ्यते। सोऽयं वैश्वदेवावाहनस्य कालः। न खलु तदानीं विष्णुः प्रसक्तः। प्रयाजाज्यभागप्रधानयागनारिष्टहोमचतुर्धाकरणेष्वनुष्ठितेष्वाश्लेषणपक्षे वैष्णवयागस्य प्राप्स्यमानत्वात्। अतोऽप्रसक्तोऽपि विष्णुर्भविष्यद्यागसिद्धये पूर्वस्मिन्काल आवाह्यो, न वा, इति संदेहः।

'आवाह्यश्चोदकवशात्' इति प्राप्तम्। न च—वैष्णवस्य वैश्वदेवप्रकृतित्वान्नास्ति चोदकः—इति शङ्कनीयम्। तयोरुभयोरप्याग्नेयविकृतित्वेनोभयत्राप्याग्नेयाङ्गानामतिदेशात्। तस्मात्—मान्यानां विप्रादीनामनिमन्त्रणे भोजनार्थागमनादर्शनान्मान्यतमाया देवताया अनावाहने हविःस्वीकारस्य दूरापेतत्वादप्रसक्तोऽपि विष्णुर्भविष्यद्यागसिद्ध्यर्थमावाह्यः। इति प्राप्ते—

ब्रूमः—किं चतुर्धाकरणादूर्ध्वमावाह्यते, किंवा प्रयाजेभ्यः पुरा। नाऽऽद्यः। 'अकाले कृतमकृतं स्यात्' इति न्यायेनाऽऽवाहनस्य निरर्थकत्वात्। न द्वितीयः। विष्णुयागनिमित्तस्य भविष्यदाश्लेषस्य पाक्षिकत्वेन नैमित्तिकस्य विष्णुयागस्यापि

१ ज झ. ञ. °म्हं चा°। २ क. ख. च. भक्षत्रि°। ३ ज. झ. °थरव्यप°। ४ ज. झ. अत्र तूग्र°। ५ ज. झ. °वविकृ°। ६ ख. ज. झ. ञ. शङ्कनीयम्। ७ ख. °नार्थम°। ८ ख. °मध्यकृ°। ९ ख. च. °षणस्य°।

पाक्षिकत्वात् । तथा सत्ययागपक्षे कृतमावाहनमनर्थायैव स्यात् । न हि निमन्त्रितो विप्रादिरभोजितः संतुष्यति, प्रत्युत शपत्येव । एतदेवाभिप्रेत्योच्यते— 'देवताभ्यो वा एष आवृश्च्यते, यो यक्ष्य इत्युक्त्वा न यजते' इति । यागपक्षे तु विनाऽप्यावाहनं याग उपपद्यते । कदाचिदनिमन्त्रितानामपि पूज्यानां स्नेहातिशयेन स्वयमेव भोक्तुमागच्छतां लोके दृष्टत्वात् । तस्मात्—नास्ति विष्णोरावाहनम् ॥ ५ ॥ ६ ॥

( द्वितीये—दीक्षणीयादिषु—आरम्भणीयाबाधाधिकरणे सूत्रम्— ) ।

**इष्टिरारम्भसंयोगादङ्गभूतान्निवर्तेताऽऽरम्भस्य प्रधानसंयोगात् ॥ ४ ॥**

द्वितीयाधिकरणमारचयति—

**आरम्भणीया सोमाङ्गदीक्षणीयादिगा न वा ।**
**अलोपादादिमोऽन्त्यः स्यादारम्भद्वारलोपनात् ॥ ७ ॥**

दर्शपूर्णमासयोरारप्स्यमानपुरुषसंस्कारार्थमारम्भणीयेष्टिर्विधीयते—'आग्नावैष्णवमेकादशकपालं निर्वपेद्दर्शपूर्णमासावारप्स्यमानः' इति । सेयं सोमयागाङ्गभूतासु दीक्षणीयादिषु दर्शपूर्णमासेष्टिविकृतिषु कार्या, न वा—इति संदेहः । दर्शपूर्णमासेष्ट्यङ्गभूता या आरम्भणीयाः, तासु प्रयाजादिवच्चोदकप्राप्ताया लोपकारणाभावात्कार्याः—इत्याद्यः पक्षः ।

किम्—आरम्भणीयाऽत्र क्रियमाणा सती सोमयागमारप्स्यमानस्य संस्कारः स्यात्, किंवा दीक्षणीयामारप्स्यमानस्य । नाऽऽद्यः । सोमयागस्य दर्शपूर्णमासविकृतित्वाभावेन सोमयागमारप्स्यमानस्य चोदकेनाऽऽरम्भणीयाया अप्राप्तत्वात् । न द्वितीयः । अङ्गानां दीक्षणीयादीनां पृथगारम्भासंभवात् । ननु—'दीक्षणीयायास्तन्त्रं प्रकल्पयति' इति कल्पसूत्रकारैः पृथगारम्भो विहितः । मैवम् । अस्याऽऽरम्भस्य पुरुषसंस्कारेष्टिं प्रत्यप्रयोजकत्वात् । अन्यथा ततः प्रागनुष्ठितानामृत्विग्वरणादीनामसंस्कृतपुरुषानुष्ठानं प्रसज्येत । तस्मात्—आरम्भाख्यद्वारलोपादारम्भणीया लुप्यत इत्यन्तिमः पक्षोऽभ्युपेयः ॥ ७ ॥

( तृतीये—अनुयाजादिष्वारम्भणीयाबाधाधिकरणे सूत्रम् ) ।

**प्रधानाच्चान्यसंयुक्तात्सर्वारम्भान्निवर्तेतानङ्गत्वात् ॥ ५ ॥**

तृतीयाधिकरणमारचयति—

१ ख. ज. झ. °प्रेत्य श्रूयते । २ ञ. एताभ्यो । ३ ज. झ. °दिषु या । ४ ज. झ. सोऽयं । ५ ज. °वच्चोद° । ६ ञ. प्रक्रमयति । ७ ज. झ. °रम्भस्य द्वा° । ८ क. ज. ञ. °[illegible]° ।

सा किमस्त्यनुमत्यादौ न वाऽङ्गिन्यस्त्युपक्रमात् ।
संघस्योपक्रमो नेष्टेर्द्वारलोपान्न सा भवेत् ॥ ८ ॥

'अनुमत्यै पुरोडाशमष्टाकपालं निर्वपति' इत्यादिना राजसूये दर्शपूर्णमासेष्टिविकृतयोऽनुमत्यादयो विहिताः, तास्वारम्भणीयाऽस्ति, न वा, इति संशयः। दीक्षणीयादिवदनुमत्यादीनामन्याङ्गत्वाभावात्सोमयागवत्सर्वासामङ्गित्वेनोपक्रमसंभवात्तद्द्वारेणाऽऽरम्भणीयाऽस्ति—इति पूर्वः पक्षः।

यद्यपि—अङ्गिभूता अनुमत्यादयः, तथाऽप्येकैकस्या इष्टेः पृथगारम्भो नास्ति। अन्यथा प्रधानेष्वाग्नेयादिष्वारम्भणीयायाः षट्कृत्वोऽनुष्ठानं प्रसज्येत। अथोच्येत—प्रधानानां षण्णामाग्नेयादीनां संघस्य दर्शपूर्णमासेष्टित्वात्तस्यैक आरम्भः—इति। तर्ह्यत्रापीष्टिपशुसोमदर्विहोमरूपाणामनेकेषां प्रधानानां संघस्य राजसूयत्वात्संघस्यैवोपक्रमोऽस्तु। न च—असौ संघो दर्शपूर्णमासविकृतिः। येन तत्राऽऽरम्भणीयाऽऽशङ्क्येत। अस्ति चात्रापरः सर्वारम्भार्थो यागः। '*अग्निष्टोममग्रे ज्योतिष्टोममाहरति' इति ज्योतिष्टोमावान्तरसंस्थाभेदरूपस्याग्निष्टोमस्याऽऽम्नानात्। तस्मात्—अनुमत्यादिष्ववेष्टिष्वारम्भद्वारस्य लोपात्साऽऽरम्भणीया न भवेत्॥८॥

(चतुर्थे—आरम्भणीयायामारम्भणीयाबाधाधिकरणे सूत्राणि ६—८)।

तस्यां तु स्यात्प्रयाजवत् ॥ ६ ॥ न वाऽङ्गभूतत्वात् ॥ ७ ॥ एकवाक्यत्वाच्च ॥ ८ ॥

चतुर्थाधिकरणमारचयति—

तस्यां साऽस्ति न वाऽङ्गत्वेऽप्यस्याः पृथगुपक्रमात् ।
अस्ति मैवं वचोऽशक्तेर्विधाने चातिदेशने ॥ ९ ॥

येयमारम्भणीया, साऽपीष्टित्वाद्दर्शपूर्णमासविकृतिः। अतस्तस्यामपि दर्शपूर्णमासयोरिवाऽऽरप्स्यमानपुरुषसंस्काराय साऽनुष्ठेया, न वा, इति संशयः। चोदकप्राप्तत्वादनुष्ठेया। ननु—सोमाङ्गदीक्षणीयादिवदस्या दर्शपूर्णमासाङ्गत्वेनाऽऽरम्भद्वारं लुप्यते—इति। न। वैषम्यात्। ऋत्विग्वरणादिना प्रयोगमारभ्यानुतिष्ठतः पुरुषस्यानुष्ठानमध्ये दीक्षणीया प्रवर्तते। दर्शपूर्णमासारम्भस्त्वारम्भणीयायामनुष्ठितायां पश्चात्संपद्यते। ततो दर्शपूर्णमासोपक्रमादन्य आरम्भणीयोप-

* 'अग्निष्टोमं प्रथममाहरति' इति शाबरभाष्ये।

१ ज. झ. °यो बह्व्यो वि°। २ ज. झ. °तासु साऽऽर°। ३ ज. झ. चापरः।

क्रमः—इति द्वारसञ्ज्ञावादारम्भणीयामारप्स्यमानः स्वसंस्कारार्थमारम्भणीयामन्यां कुर्यात् । अनवस्था तु लोकसिद्धबीजाङ्कुरादिदृष्टान्तेन समाधेया इति प्राप्ते—

ब्रूमः—आरम्भणीयायामारम्भणीयान्तरं न कार्यम् । कुतः । अङ्गान्तरवदतिदेष्टुमशक्यत्वात् । तथा हि—प्रकृतौ ‘ समिधो यजति ’ इत्यादिवाक्यैः प्रयाजाद्यङ्गानां स्वरूपमुपदिश्यते । प्रकरणेन त्वङ्गाङ्गिभावो बोध्यते । ततः—‘ सौर्यं चरुं निर्वपेद्ब्रह्मवर्चसकामः’ इत्यादिकायां विकृतौ निर्वापलिङ्गानुमितं चोदकवाक्यमेवं प्रवर्तते—‘ इष्टिवच्चरौ प्रयाजाद्यङ्गान्यनुष्ठेयानि ’ इति । एवं च सत्यारम्भणीयायामिदं वाच्यम्—‘ किम्—‘ आग्नावैष्णवमेकादशकपालं निर्वपेद्दर्शपूर्णमासावारप्स्यमानः ’ इत्येतद्वाक्यं समिदादिवाक्यवदङ्गभूतामारम्भणीयां विदधातु किंवा—यथा सौर्यादिवाक्यमङ्गातिदेशमनुमापयति, तथा दर्शपूर्णमासाङ्गभूतायामारम्भणीयायामन्यस्या आरम्भणीयाया अङ्गातिदेशमनुमापयतु उत—उभयं करोतु ’ इति । नाऽऽद्यः । अङ्गविधावुपक्षीणत्वेनातिदेशानुमाने शक्त्यभावात् । न द्वितीयः । अविहितत्वेनातिदेष्टुमयोग्यस्याङ्गस्यातिदेशे शक्त्यभावात् । न तृतीयः । वाक्यभेदापत्तेः। ननु—अनेन न्यायेन सौर्यवाक्येऽपि वाक्यभेदः स्यात्। एकस्यैव वाक्यस्य यागविध्यङ्गातिदेशयोः प्रवृत्तत्वात् । मैवम् । वाक्यद्वयसद्भावात् । प्रत्यक्षं वाक्यं यागविधायकम् । अनुमितं वाक्यमङ्गातिदेशकम् । तर्हि—अत्रापि तादृशं वाक्यद्वयं भवतु—इति चेत् । बाढम् । अत एवाऽऽरम्भणीयायां प्रयाजाद्यङ्गान्यनुष्ठीयन्ते । तद्वदारम्भणीयान्तररूपमप्यङ्गमनुष्ठीयताम्—इति चेत् । न। दर्शपूर्णमासप्रकरणे प्रयाजाद्यङ्गविधायकसमिदादिवाक्यवदारम्भणीयान्तररूपाङ्गविधायिनः कस्यचिद्वाक्यस्याभावात् । नहि प्रकृतावविद्यमानमङ्गं विकृतावतिदेशमर्हति। तस्मात्—संप्रतिपन्नस्यैवाऽऽरम्भणीयाविधायिनो वाक्यस्येष्ट्यङ्गस्वरूपविधानाय समिदादिवाक्यस्थानीयत्वम, अतिदेशाय सौर्यवाक्यस्थानीयत्वं च, इत्याकारद्वयं वर्णनीयम् । तथा सति—आवृत्तिलक्षणो वाक्यभेदः केन वार्येत । तस्मात्—आरम्भणीयायामारप्स्यमानपुरुषसंस्कारायाऽऽरम्भणीयान्तरं न कार्यम् ॥ ९ ॥

(पञ्चमे—खलेवाल्यां यूपाहुतिबाधाधिकरणे सूत्रम्— ) ।

कर्म च द्रव्यसंयोगार्थमर्थाभावान्निवर्तेत तादर्थ्यं श्रुतिसंयोगात् ॥ ९ ॥

पञ्चमाधिकरणमारचयति—

---

१ ख. ज. झ. ञ. इत्येवं । २ ज. झ. कर्तव्यम् । ३ ज. झ. °न चाङ्ग° । ४ ख. ज. झ. ञ. वक्तव्यम् । ५ ज. झ. °नादे° । ६ ख. प्रवृत्तियोग्यत्वात् । ७ ज. झ. °क्यमाति° । ८ ञ. भवति । ९ ख. ज. झ. ञ. कर्तव्यम् ।

यूपाहुतिः खलेवाल्यां कार्या नो वाऽतिदेशतः।
कार्या होमच्छेदनार्थो नोच्छेद्यायां स युज्यते ॥ १० ॥

अस्ति साद्यस्कनामकः कश्चिद्यागः। 'सद्यस्क्रियाऽनुक्रिया परिक्रिया वा स्वर्गकामः' इति तद्विधानात्। सन्ति साद्यस्काः पशवः। 'सह पशूनालभते' इति श्रुतेः। तेषु पशुषु वेद्युत्तरवेदियूपाः शास्त्रीयसंस्कारानिरपेक्षा एव गृह्यन्ते। अत एव—आश्वलायन आह—' साद्यस्केषूर्वरा वेदिः, खलेवाली यूपः' इति। खले बलीवर्दबन्धनाय निखातो मेढिः खलेवाली। तेषां च पशूनामग्नीषोमीयपशुविकृतित्वात्तदीययूपकार्याः पशुनियोजनादयः खलेवाल्यां क्रियन्ते। तथा प्रकृतौ यूपमाप्तुं गमिष्यतः पुरुषस्याऽऽहुतिर्विहिता—*'यूपमच्छैष्यता होतव्यम्' इति। तां चाऽऽहुतिमापस्तम्बो दर्शयति—'उरु विष्णो विक्रमस्व—इति स्रुवेणाऽऽहवनीये यूपाहुतिं जुहोति' इति। सेयमाहुतिः खलेवाल्यां कार्या, न वा, इति संशयः। 'तद्धर्मातिदेशात्पशुनियोजनवत्कार्या'—इति पूर्वपक्षः।

'यूपमच्छैष्यता'—इति वाक्यस्यायमर्थः—'यूपं खादिरादिकाष्ठविशेषं शास्त्रीयच्छेदनादिसंस्कारैर्यूपीकर्तुं काष्ठस्य शास्त्रीयच्छेदनयोग्यतायै होमः कर्तव्यः' इति। नहि खलेवाल्याः शास्त्रीयं छेदनमस्ति। पूर्वमेव च्छिन्नस्य काष्ठस्य कर्षीवलैः खले निखातत्वात्। तस्मात्—छेदनद्वारलोपादाहुतिर्न विद्यते ॥१०॥

( षष्ठे—खलेवाल्यां स्थाण्वाहुतिबाधाधिकरणे सूत्राणि १०—१३)।

स्थाणौ तु देशमात्रत्वादनिवृत्तिः प्रतीयेत ॥ १० ॥
अपि वा शेषभूतत्वात्तत्संस्कारः प्रतीयेत ॥ ११ ॥
समाख्यानं च तद्वत् ॥ १२ ॥ मन्त्रवर्णश्च तद्वत् ॥ १३ ॥

सप्तमाधिकरणमारचयति—

तस्यां स्थाण्वाहुतिः कार्या न वा, स्थाणौ विधानतः।
कर्तव्योपकरोत्याराात्पशौ सा प्रकृताविव ॥ ११ ॥
यूपीयाव्रश्चनस्थाणुद्वाराऽसौ यूपसंस्कृतिः।
अत्रवत्तत्संभवात्सेयमयूपाद्विनिवर्तते ॥ १२ ॥

---

* 'यूपं प्राप्तुमेष्यता। अच्छशब्दो हि आप्तुमित्यर्थे वर्तते, इति शाबरभाष्यम्।

---

१ ज. झ. ननाधार्या। ख. नाद्यार्या। २ ज. झ. °द्यस्कीना°। ३ ज. झ. °क्षा गृ°। ४ झ. ञ. ञ. °पमाच्छेत्स्यता। ५ ज. झ. °जनादिव°। ६ ज. झ. सयूपं। ७ ख. ज. झ. ततः।

अग्नीषोमीययूपप्रकरणे—'स्थाण्वाहुतिं जुहोति' इति श्रूयते। यूपे वृक्णे सत्यवशिष्टं वृक्षमूलं काष्ठरूपत्वेन स्थाणुरित्युच्यते। तत्राऽऽहुतिविशेष एवं श्रूयते—'वनस्पते शतवल्शो विरोह—इत्याव्रश्चने जुहोति' इति। सेयमाहुतिस्तस्यां खलेवाल्यां कार्या, न वा, इति संशयः। स्थाणुमुपजीव्याऽऽहुतिविधानात्खलेवाल्यामपि स्थाणुत्वात्सा कर्तव्या। न च—खलेवाल्याः शास्त्रीयसंस्काराभावेनाऽऽहुतिर्व्यर्था—इति शङ्कनीयम्। पशावारादुपकारकत्वात्। यथा प्रकृतौ यूपाद्वियोजितस्याऽऽव्रश्चनस्थाणोरसंस्कार्यत्वेन पशावुपकारः, तद्वत्। इति प्राप्ते—

ब्रूमः—'आव्रश्च्यतेऽस्मात्' इत्याव्रश्चनमवशेषं वृक्षमूलम्। न खलु स्थाणुमात्रम्, आव्रश्चनमात्रं वोपजीव्येयमाहुतिः प्रवृत्ता, किं तर्हि यूपप्रकरणबलेन यूपीयाव्रश्चनस्थाणुत्वमुपजीव्य प्रवृत्ता। ततस्तद्द्वारेणासावाहुतिर्यूपसंस्कृतिः स्यात्। तथा च दृष्टसंस्कारे संभवत्यदृष्टमारादुपकारकत्वं कल्पयितुमयुक्तम्। न च—यूपवियोजितस्थाणुगतातिशयेन यूपसंस्कारो न संभवति। यूपसंबन्धित्वेन तत्संभवात्। यथा—आचार्यस्य देवदत्तस्य शिरसोऽवतारिताया अपि स्रजः शिष्येण शुचि देशेऽवस्थापनम्। तत्संबन्धादाचार्यस्यैवं संस्कारायावकल्पते, तद्वत्। अतो यूपसंस्कारार्थेयमाहुतिरयूपात्मिकायाः खलेवाल्या निवर्तते ॥११॥१२॥

(सप्तमे—उत्तमप्रयाजस्य संस्कारकर्मताधिकरणे सूत्रे १४—१५)।

**प्रयाजे च तन्न्यायत्वात् ॥ १४ ॥ लिङ्गदर्शनाच्च ॥ १५ ॥**

सप्तमाधिकरणमारचयति—

**अन्त्यः प्रयाज आरात्किमुपकार्युत संस्कृतिः।**
**स्वाहाकारेतिदेवोक्तेर्मातृवन्मन्त्रवर्णनात् ॥ १३ ॥**
**आद्यो मैवं चतुर्थ्यादेरभावाद्यागमात्रके।**
**विधित्सयाऽत्र सौर्यादावर्थोऽग्न्यादिनिवर्तनम् ॥ १४ ॥**

दर्शपूर्णमासेष्टौ पञ्चमः प्रयाज एवमाम्नायते—'स्वाहाकारं यजति' इति। स किमिष्टेरारादुपकारकः, उत—आज्यभागादिषु वक्ष्यमाणानामग्न्यादिदेवतानां संस्कारकः, इति संशयः। तत्र स्वाहाकारशब्देन देवतोच्यते। यागस्य तदाकाङ्क्षणात्। न च—प्रत्यक्षवचनमुपेक्ष्य मन्त्रवर्णाद्देवताकल्पनमुचितम्। ननु—एवं सति विधिमन्त्रयोर्वैयधिकरण्यं प्रसज्येत। विधिना हि स्वाहाकाराख्या देवता

१ ख. °मीये यू°। ज. झ. °मीयप्र°। २ ख. वृङ्क्ते। झ. ञ. वृक्ते। ३ ज. झ. °स्थाणुत्वसं°। ४ क. °विनियो°। ५ ज. झ. °णुता°। ६ ज. झ. तथा। ७ ध. °व संस्कारोऽव°। ज. झ. °व सत्कारा°। ८ क. च. °कार्यथ सं°। ९ क. °षु वक्ष्य°। १० क. °वर्णदेव°।

विहिता, मन्त्रे तु यक्ष्यमाणाज्यभागादिदेवता अग्न्यादिदेवताः प्रतीयन्ते । 'स्वाहाऽग्निं, स्वाहा सोमं, स्वाहा प्रजापतिं, स्वाहाऽग्नीषोमौ' इत्यादिको हि तन्मन्त्रः। नैष दोषः । मातृशब्दवन्मान्त्रवर्णिकाग्न्यादिशब्दानामनेकार्थत्वसंभवात् । यथा मातृशब्दः प्रस्थादिना धान्यस्य मातारं, जननीं चाऽऽचष्टे, तथा—अग्न्यादिशब्दाः स्वाहाकाराख्यदेवतामाचक्षताम् । न च—स्वाहाकाराख्यदेवतैव संस्क्रियताम्—इति वाच्यम् । संस्कृतायास्तस्या अन्यत्रोपयोगाभावात् । तस्मात्—इष्टेराराादुपकारकः । इत्याद्यः पक्षोऽभ्युपेयः ।

मैवम् । चतुर्थ्या तद्धितेन वा सर्वत्र देवता विधीयते । न चात्र तौ विद्येते । किंच—अयं विधिर्देवतायागावुभौ विधत्ते, देवताविशिष्टं याग वा, देवतामात्रं वा, यागमात्रं वा । नाऽऽद्यः । वाक्यभेदापत्तेः । न द्वितीयः । गौरवप्रसङ्गात् । न तृतीयः । अप्राप्तस्य यागस्याननुवाद्यत्वे सति तदनुवादेन देवताविध्ययोगात् । तस्मात्—चतुर्थः परिशिष्यते । तत्र च द्वितीयान्तः स्वाहाकारशब्दः 'पौर्णमासीं यजते' इत्यादाविव कर्मनामधेयं भविष्यति । तस्मात्—आज्यभागादिदेवतासंस्कार उत्तमः प्रयाजः । एवं च सति सौर्यादिविकृतिषूत्तमप्रयाजमन्त्रे प्रधानदेवतावाच्यग्न्यादिपदपरित्यागो बाधविचारान्तर्गतस्याधिकरणस्य फलं भविष्यति ॥ १३ ॥ १४ ॥

(अष्टमे—अग्नियागस्याऽऽरादुपकारकत्वाधिकरणे सूत्राणि १६–१८) ।

तथाऽऽज्यभागाग्निरपीति चेत् ॥१६॥ व्यपदेशाद्देवतान्तरम् ॥ १७ ॥ समत्वाच्च ॥ १८ ॥

अष्टमाधिकरणमारचयति—

आज्यभागो य आग्नेयः किं मुख्याग्नेः स संस्कृतिः ।
आराद्धुतोपकारी स्यात्पूर्वन्यायेन संस्कृतिः ॥ १५ ॥
निगदेऽग्नेर्द्विरुक्तत्वाद्द्विधाऽवेकपदोक्तितः ।
उपकारी ततः सोऽग्निः सौर्यादौ न निवर्तते ॥ १६ ॥

दर्शपूर्णमासयोराम्नायते—'आज्यभागावग्नीषोमाभ्यां यजति' इति । तयोः—प्रथम आग्नेयः, द्वितीयः सौम्यः । तत्र सौम्यस्य नास्ति संदेहः । प्रधानदेवतासु केवलस्य सोमस्याभावात् । अग्निश्च केवल आग्नेयपुरोडाशे विद्यते । तस्मात्—आग्नेय आज्यभागः पुरोडाशदेवताया अग्नेः किं संस्कारः, उत—इष्टेराराादुपकारः—इति संदिह्यते । तत्र यथोत्तमप्रयाजो मन्त्रोक्तानां यक्ष्यमाणदेवतानां संस्कारः,

१ ख. नायं । २ ख. मख्योऽग्नेः । ३ ज. ञ. °कारकः—इ° । ४ क. °नां वक्ष्य° ।

तथा प्रथम आज्यभागोऽपि 'अग्निमग्न आवह' इति निगदोक्तस्य प्रधानयागदेवतारूपस्याग्नेः संस्कारः—इति पूर्वः पक्षः।

अत्रोच्यते—निगदस्तावदेवं पठ्यते—'अग्निमग्न आवह। सोममावह। अग्निमावह' इति। अस्यायमर्थः—'भो आहुत्यधिकरणभूताग्ने, हविर्ग्राहिण आज्यभागद्वयाष्टाकपालपुरोडाशदेवतारूपान्—अग्निः, सोमः, अग्निः, इत्येतांस्त्रीनिहैवावह' इति। तत्र पुरोडाशदेवतारूपादग्नेः प्रथमाज्यभागदेवतारूपोऽग्निरन्य इति गम्यते। अन्यथाऽऽवोह्यस्याग्नेरेकस्य द्विरुक्तिवैयर्थ्यात्। ततः—प्रथमाज्यभाग इज्यमानस्याग्नेः पुरोडाशदेवतात्वाभावात्तत्संस्कारकत्वमयुक्तम्। किंच—आज्यभागविधौ 'अग्नीषोमाभ्यां यजति' इति देवताद्वयं समस्तेनैकेन पदेनोच्यते। तत्र यथा सोमस्य यागं प्रति गुणत्वं भवताऽभ्युपगतम्, तथाऽग्नेरप्यभ्युपगन्तव्यम्। तच्च संस्कारपक्षे विरुद्धम्। संस्कार्यत्वेन प्राधान्यावश्यंभावात्। तस्मात्—संस्कारपक्षासंभवात्प्रथमाज्यभागो द्वितीयाज्यभागवदिष्टेरारादुपकारकः। एवं च सति सौर्ययागेऽपि प्रथमाज्यभागेऽग्निर्न निवर्तते। इति बाधापवादो विचारफलं भविष्यति ॥ १५ ॥ १६ ॥

( नवमे—पशुपुरोडाशयागस्य देवतासंस्कारकत्वाधिकरणे सूत्राणि १९–३३ )।

**पशावपीति चेत् ॥ १९ ॥ न तद्भूतवचनात् ॥ २० ॥ लिङ्गदर्शनाच्च ॥ २१ ॥ गुणो वा स्यात्कपालवद्गुणभूतविकाराच्च ॥ २२ ॥ अपि वा शेषभूतत्वात्संस्कारः प्रतीयेत स्वाहाकारवदङ्गानामर्थसंयोगात् ॥ २३ ॥ व्यूद्धवचनं च विप्रातिपत्तौ तदर्थत्वात् ॥ २४ ॥ गुणेऽपीति चेत् ॥ २५ ॥ नासंहानात्कपालवत् ॥ २६ ॥ ग्रहाणां च संप्रतिपत्तौ तद्वचनं तदर्थत्वात् ॥ २७ ॥ ग्रहाभावे च तद्वचनम् ॥ २८ ॥ देवतायाश्च हेतुत्वं प्रसिद्धं तेन दर्शयति॥२९॥ अविरुद्धोपपत्तिरर्थापत्तेः शृतवद्गुणभू-**

---

१ क. °भागेऽपि। २ ज. झ. °ग्निपाव°। ३ ज. झ. °थममा°। ४ ज. झ. °वाग्नेर्मे°। ५ ज. सतः। ६ क. °स्कार्यत्वे प्रा°। च. °स्कारत्वे प्रा°।

तविकारः स्यात् ॥ ३० ॥ स द्रव्यर्थः स्यादुभयोः श्रुतिभूतत्वाद्विप्रतिपत्तौ तादर्थ्याद्विकारत्वमुक्तं तस्यार्थवादत्वम् ॥ ३१ ॥ विप्रतिपत्तौ तासामाख्याविकारः स्यात् ॥ ३२ ॥ अभ्यासो वा प्रयाजवदेकदेशोऽन्यदेवत्यः ॥ ३३ ॥

नवमाधिकरणमारचयति—

उपकारी संस्कृतिर्वा पुरोडाशः पशूदितः ।
तद्धितोक्त्या द्वयोर्देवभेदादुपकृतिर्मता ॥ १७ ॥
संदंशाम्नितेऽङ्गत्वे दृष्टोऽर्थः स्मृतिसंस्कृतिः ।
देवान्तरं चेद्विकृतावग्नीषोमानिवर्तनम् ॥ १८ ॥

ज्योतिष्टोमाङ्गभूताग्नीषोमीयपशौ श्रूयते—'अग्नीषोमीयस्य वपया प्रचर्याग्नीषोमीयं पशुपुरोडाशमेकादशकपालं निर्वपति' इति । तत्र—पश्वाङ्गकः पुरोडाशः किं पशोरारादुपकारकः, उत पशुदेवतासंस्कारकः, इति संदेहः । तत्र—'अग्नीषोमीयं पशुमालभेत' इति पशुविधौ तद्धितोक्त्याऽग्नीषोमदेवता यथा गुणत्वेन पशौ विधीयते तथा पशुपुरोडाशे । तथा सति विधिभेदेन विषयदेवताभेदात्संस्कारो न युक्तः । गुणत्वं च संस्कार्यत्वविरोधीति पूर्वोक्तम् । तस्मात्—पशोरारादुपकारकः । इति प्राप्ते—

ब्रूमः—देवताभेदवादिना तावदिदं वक्तव्यम्—पशुः पुरोडाशश्चेत्युभौ किं स्वतन्त्रौ यागौ, किंवाऽङ्गाङ्गिरूपौ । तत्रापि—किमङ्गम्, किंवाऽङ्गी, इति । तत्र—पशुधर्मैरुभयतः संदष्टस्य पुरोडाशस्य स्वतन्त्राङ्गित्वे प्रकरणपाठो बाध्येत, तद्वदभिमतमुपकारकत्वं न सिध्येत् । अङ्गत्वेऽपि दृष्टसंभवाददृष्टकल्पनमन्याय्यम् । संभवति चात्र दृष्टम् । पुरोडाशवाक्यगतेन तद्धितान्तपदेन पशुवाक्यविहिताया देवताया अनुवादे सति तदीयस्मरणपूर्वकनिर्वापेण पशुदेवतायाः संस्क्रियमाणत्वात् । एवं च सति पशुवाक्ये गुणत्वेन प्रतीयमानाया अपि देवतायाः पुरोडाशवाक्ये प्राधान्यावगमात्संस्कार्यत्वमविरुद्धम् । तस्मात् पशुदेवतासंस्कारः पुरोडाशः । एवं च सत्यग्नीषोमीयपशुविकृतौ वायव्यपशावग्नीषोमीयदेवताया निवृत्तायां तदीयपशुपुरोडाशेऽपि सा निवर्तत इति बाधः फलिष्यति ॥ १७ ॥ १८ ॥

१ ज. ञ. °वर्तिनम् । २ क. °त्वे वि° । ३ क. ख. संदष्टस्य । ४ ञ. °त्वे तयोः प्र° । ५ ञ्. ञ. तस्वत्° । ६ ज. ञ. ञ. प्रतीताया ।

(दशमे–चरुशब्दस्यौदनवाचिताधिकरणे सूत्राणि ३४–४४)।

चरुर्हविर्विकारः स्यादिज्यासंयोगात् ॥ ३४ ॥
प्रसिद्धग्रहणत्वाच्च ॥ ३५ ॥ ओदनो वाऽन्नसं-
योगात् ॥ ३६ ॥ न द्व्यर्थत्वात् ॥ ३७॥ कपाल-
विकारो वा विशयेऽर्थोपपत्तिभ्याम् ॥ ३८ ॥
गुणमुख्यविशेषाच्च ॥ ३९॥ तच्छ्रुतौ चान्यह-
विष्ट्वात् ॥ ४० ॥ लिङ्गदर्शनाच्च ॥ ४१ ॥
ओदनो वा प्रयुक्तत्वात् ॥ ४२ ॥ अपूर्वव्यपदे-
शाच्च ॥ ४३ ॥ तथा च लिङ्गदर्शनम् ॥ ४४ ॥

दशमाधिकरणमारचयति–

सौर्ये चरौ चरुः स्थाली किंवाऽन्नं लौकिकोक्तितः।
स्थाल्यस्यां श्रपणं योग्यं कपालविकृतिस्त्वतः ॥१९॥
विद्वच्छ्रुतिप्रसिद्ध्याऽन्नं देवता तद्धितोक्तितः।
योग्यत्वेन प्रदेयं तत्पुरोडाशहविर्यथा ॥ २० ॥

'सौर्यं चरुं निर्वपेत्' इत्यादिवाक्ये चरुशब्दः किं स्थालीं वक्ति, उत–ओदनम्, इति संदेहः। तत्र लौकिका आ हिमवत आ च कुमारीभ्यः सर्वेऽपि स्वस्वदेशीयभाषाप्रसिद्ध्या यत्किंचिद्धकारवकाराद्यक्षरमुपरि प्रक्षिप्य चरुशब्द-मूले पात्रे पाकाधिकरणे ताम्रादिमये प्रयुञ्जते। निघण्टुकाराश्च–'उखा स्थाली चरुः'–इत्येतान्शब्दान्पर्यायत्वेनोपदिशन्ति। तस्मात्–चरुशब्दः स्थालीं वक्ति। यदि तस्या अदनीयत्वाभावेन पुरोडाशवत्प्रदानयोग्यता न स्यात्तर्हि मा भूत्पुरोडाशविकृतित्वम्। कपालविकृतित्वं भविष्यति। श्रपणयोग्यतायाः सद्भा-वात्। यथा कपालेषु हविः श्रप्यते तथा स्थाल्यामपि श्रपयितुं शक्यते। तस्मात्–चरुः स्थाली। इति प्राप्ते–

ब्रूमः–अन्नमेव चरुशब्देनोच्यते। कुतः। श्रुतिप्रसिद्धेः। 'आदित्यः प्राय-णीयश्चरुः' इति विधाय तद्वाक्यशेषे हि–'अदितिमोदनेन' इत्योदनशब्देन चरु-रनूद्यते। यदि भोज्यान्ने चरुशब्दः क्वापि न प्रयुज्यते, तर्हि–ओदनविशेष-वाची चरुशब्दोऽस्तु। तत्र विद्वत्प्रसिद्धेः। विद्वांसो याज्ञिकाः शब्दैकगम्यधर्मा-धर्मव्यवहारिणः शब्दार्थविप्लवे तात्पर्यवन्तोऽनवच्छिन्नवितानतन्त्रप्रवर्तके जीवतणुद्धे

१ क. °पाठादि°। २ ज. झ. यागत्वेन। ३ ज. झ. किंवा। ४ ख. ज. झ. °त्वेन प-ठन्ति। ५ ज. झ. °तु। पुरोडाशाविज्ञानक°। ६ ज. झ. °गकवाक्य°।

विषादशिवः ओदने चरुशब्दं प्रयुञ्जते । तस्योदनवाचित्वे 'सौर्यम्' इति तद्धितोऽप्युपपद्यते । यथा 'आग्नेयः' इति देवतातद्धितसंयुक्तः पुरोडाशः प्रदेयद्रव्यम्, तथा चरुरपि । अन्ये च निघण्टुकाराः 'हव्यपाके चरुः पुमान्' इति पठन्ति । तस्मात्—चरुशब्दोऽन्नवाची ॥ १९ ॥ २० ॥

( एकादशे सौर्यचरोः स्थाल्यामेव पाकाधिकरणे सूत्राणि ४५—४८ )।

स कपाले प्रकृत्या स्यादन्यस्य चाश्रुतित्वात् ॥ ४५ ॥ एकस्मिन्वा विप्रतिषेधात् ॥४६॥ न वाऽर्थान्तरसंयोगादपूपे पाकसंयुक्तं धारणार्थं चरौ भवति तत्रार्थात्पात्रलाभः स्यादनियमोऽविशेषात्॥४७॥चरौ वा लिङ्गदर्शनात् ॥४८॥

एकादशाधिकरणमारचयति—

चरुः कपाले पक्तव्यः क्वापि वा उचितेऽथवा ।
कपाले चोदकप्राप्तेरनपूपत्वतः क्वचित् ॥ २१ ॥
स्थाल्यां चरुत्वयोग्यत्वात्कटाहे योग्यता नहि ।
चिन्ताद्वयफलं त्वत्र पेषणादिनिवर्तनम् ॥ २२ ॥

विषयसंशयनिर्देशकं पूर्वार्धं स्पष्टार्थम् । यथा प्रकृतौ पुरोडाशस्य कपाले पाकः, तथा विकृता चरोः । इत्याद्यः पूर्वपक्षः ।

पुरोडाशस्यापूपत्वात्कपालगतोष्मणा पाकः संभवति, चरुस्त्वोदनत्वादुदकगतोष्मणा पक्तव्यः, अतोऽप्राकृतकार्यत्वाच्चोदकप्राप्तिर्नास्ति—इति यद्युच्येत तर्ह्यनपूपस्य चरोरुदकधारणयोग्ये कटाहघटादौ यत्र क्वापि पाकः । इति द्वितीयः पक्षः ।

निरुप्तानां मुष्टिचतुष्टयपरिमितानां तण्डुलानामल्पेनैव पात्रेण पक्तुं योग्यत्वाच्चरोः स्थाल्यामेव पाकः । इति राद्धान्तः ।

पूर्वत्र 'चरुरोदनः' इति चिन्तितम् । तस्मिन्नोदने पेषणादिरस्ति । अतः पेषणादिनिवृत्तिः पूर्वचिन्तायाः साक्षात्फलम् । तद्द्वारेण चरुनिष्पादकस्थालीचिन्ताया अपि फलमित्युपचर्यते ॥ २१ ॥ २२ ॥

पेषणादीन्यनुक्रामति—

पेषणं यवनं वापस्तापश्चोपाहितिः प्रथा ।
मार्जनाध्यूहनज्वालास्तथा व्युद्धृत्यसादनम् ॥ २३ ॥

---

१ ज. ङ. आग्नेयम् । २ ज. ङ. वा पिठरेऽथ° । ञ. वाऽप्युचितेऽथ° । ३ क. च. विवक्षितम् । ४ ज. ङ. °म् । न ह्योद° ।

पेषणं चूर्णनम् । यवनं पिष्टस्योदकमिश्रणम् । वाप उदकमिश्रणाय पिष्टस्य पात्रे प्रक्षेपः । तापः कपालानामङ्गारैः प्रतापनम् । उपहितिरङ्गारेषु कपालस्थापनम् । प्रथा कपालेष्ववस्थापितस्य पुरोडाशस्य हस्तसंघट्टनेन सर्वेषु कपालेषु प्रसारणम् । मार्जनं श्लक्ष्णीकरणम् । अभ्यूहनं भस्मनाऽङ्गारैश्चोपर्याच्छादनम् । ज्वाला दर्भपिञ्जूलैः प्रज्वालनम् । व्युद्धृत्यसादनं कपालेभ्यः पुरोडाशं पृथक्कृत्यान्तर्वेद्यवस्थापनम् ॥ २३ ॥

ननु पेषणादिनिवृत्तेः पूर्वाधिकरणद्वयफलत्वे किमिति सूत्रकारः प्रत्येकं *सूत्रैर्विचारितवान्—इत्याशङ्क्य 'मन्दमतिव्युदासाय' इत्याह—

एतानि मन्दप्रज्ञस्य कर्तव्यानीति विभ्रमः ।
अपूपस्यैव योग्यानीत्येतत् *सूत्रैर्निरूपितम् ॥ २४ ॥

---

*सौर्यचरौ पेषणबाधाधिकरणे सूत्रे ४९–५० ) ।
तस्मिन्पेषणमनर्थलोपात्स्यात् ॥ ४९ ॥
अक्रिया वा, अपूपहेतुत्वात् ॥ ५० ॥
( सौर्यचरौ संयवनबाधाधिकरणे सूत्रम्— ) ।
पिण्डार्थत्वाच्च संयवनम् ॥ ५१ ॥
( सौर्यचरौ संवपनबाधाधिकरणे सूत्रम् ) ।
संवपनं च तादर्थ्यात् ॥ ५२ ॥
( सौर्यचरौ संतापनबाधाधिकरणे सूत्रम्— ) ।
संतापनमधःश्रपणात् ॥ ५३ ॥
( सौर्यचरावुपधानबाधाधिकरणे सूत्रम्— ) ।
उपधानं च तादर्थ्यात् ॥ ५४ ॥
(सौर्यचरौ पृथुश्लक्ष्णबाधाधिकरणे सूत्रम्—) ।
पृथुश्लक्ष्णे वाऽनपूपत्वात् ॥ ५५ ॥
( सौर्यचरावभ्यूहबाधाधिकरणे सूत्रम्— ) ।
अभ्यूहश्चोपरिपाकार्थत्वात् ॥ ५६ ॥
( सौर्यचरौ ज्वलनबाधाधिकरणे सूत्रम् ) ।
तथाऽवज्वलनम् ॥ ५७ ॥
( सौर्यचरौ व्युद्धृत्यासादनबाधाधिकरणे सूत्रम्— ) ।
व्युद्धृत्यासादनं च प्रकृतावश्रुतित्वात् ॥५८॥

इति श्रीमाधवीये जैमिनीयन्यायमालाविस्तरे दशमाध्यायस्य प्रथमः पादः ॥ १ ॥

| | अत्र पादे | आदितः। |
|---|---|---|
| अधिकरणानि | ११ | ६०७। |
| सूत्राणि | ५८ | १७११। |

( अथ दशमाध्यायस्य द्वितीयः पादः ) ।

(प्रथमे—कृष्णले चरौ पाकानुष्ठानाधिकरणे सूत्रे १-२) ।

कृष्णलेष्वर्थलोपादपाकः स्यात् ॥ १ ॥

स्याद्वा प्रत्यक्षशिष्टत्वात्प्रदानवत् ॥ २ ॥

द्वितीयपादे प्रथमाधिकरणमारचयति—

नास्त्यस्ति वा कृष्णलेषु पाकः श्रौतोऽप्यसंभवी ।
अदृष्टार्थतया स स्यादौष्ण्ये तु सुतरां भवेत् ॥ १ ॥

'शृते श्रपयति' इति प्रत्यक्षश्रुतिविहितोऽपि पाको विक्लेदनायोग्येषु न कर्तव्यः। इति पूर्वः पक्षः।

दृष्टार्थस्य विक्लेदनस्यासंभवेऽप्यदृष्टार्थं कर्तव्यः। अन्यथा विधिवैयर्थ्यापत्तेः। यदा तु पाकशब्द औष्ण्यवाची, तदा न कोऽपि विवादः ॥ १ ॥

( द्वितीये—कृष्णल उपस्तरणाभिघारणयोर्बाधाधिकरणे सूत्राणि ३-१२) ।

उपस्तरणाभिघारणयोरमृतार्थत्वादकर्म स्यात्॥३॥
क्रियेत वाऽर्थवादत्वात्तयोः संसर्गहेतुत्वात् ॥ ४ ॥
अकर्म वा चतुर्भिराप्तिवचनात्सह पूर्णं पुनश्चतुरवत्तम् ॥५॥ क्रिया वा मुख्यावदानपरिमाणात्सामान्यात्तद्गुणत्वम् ॥६॥ तेषां चैकावदानत्वात् ॥७॥
आप्तिः संख्यासमानत्वात् ॥ ८ ॥ सतोस्त्वाप्तिव-

१ ख. ग. ङ. ञ. °ष्टार्थः पाकः क° ।

चमं व्यर्थम् ॥ ९ ॥ विकल्पस्त्वेकार्थत्वात्
॥ १० ॥ सर्वविकारे त्वभ्यासानर्थक्यं हविषो
हीतरस्य स्यात्, अपि वा स्विष्टकृतः स्यात्, इत
रस्यान्याय्यत्वात् ॥ ११ ॥ अकर्म वा संसर्गार्थनि-
वृत्तित्वात्, तस्मादाप्तिसमर्थत्वम् ॥ १२ ॥

द्वितीयाधिकरणमारचयति—

उपस्ताराभिघारौ स्तस्तेषु नो वा द्वयं भवेत् ।
अदृष्टार्थमसंसक्तिर्दृष्टार्थौ नेति लुप्यते ॥ २ ॥

तेषु कृष्णलेषूपस्तरणमभिघारणं चेत्युभयं पाकवददृष्टार्थं कार्यम् । इति पूर्वः पक्षः ।
न तावत्पाकवदत्र प्रत्यक्षविधिरस्ति । चोदकस्तु दृष्टं द्वारमपेक्षते । प्रकृतावु-
पस्तरणाभिघारणयोर्दृष्टार्थत्वात् । सूक्ष्माणां पुरोडाशावयवानां स्रुचि संसक्तिं
निवारयितुं तदुभयं क्रियते । कृष्णलानां तु संसक्तिप्रसङ्ग एव नास्ति । अत-
स्तन्निवारणलक्षणं द्वारं नास्तीत्युपस्तरणाभिघारणद्वयं लुप्यते ॥ २ ॥

( तृतीये—कृष्णलचरौ भक्षसद्भावाधिकरणे सूत्राणि १३–१६ ) ।

भक्षाणां तु प्रीत्यर्थत्वादकर्म स्यात् ॥ १३ ॥
स्याद्वा निर्धानदर्शनात् ॥ १४ ॥ वचनं वाऽऽज्य-
भक्षस्य प्रकृतौ स्यादभागित्वात् ॥ १५ ॥ वचनं
वा हिरण्यस्य प्रदानवदाज्यस्य गुणभूतत्वात् ॥ १६ ॥

तृतीयाधिकरणमारचयति—

भक्षो नास्त्यास्ति वा तेषु नास्ति प्रीतेरभावतः ।
चुरुचुषाकारनिर्धानवचनात्स्यात्प्रदानवत् ॥ ३ ॥

यथा पुरोडाशे प्राशित्रादिभागो भक्ष्यते न तथा तेषु कृष्णलेषु भक्षोऽस्ति ।
प्रीतिरूपस्य दृष्टद्वारस्यासंभवात् । इति पूर्वः पक्षः ।

'चुरुचुषाकारं भक्षयन्ति निर्धयन्तो भक्षयन्ति' इति प्रत्यक्षवचनमाम्नायते ।
'इक्षुदण्डभक्षणे तद्रसस्वीकारे च यः शब्दविशेषः, तस्यानुकरणं 'चुरुचुरा'

१ ख. °णद्वा° । २ क. °निर्धानाव° । ख. निर्धातव° । च. ञ. निर्धातव° । ३ ख. ग.
ङ. ञ. °स्याभावा° ।

इति। घृते निरूढेषु कृष्णलेषु यल्लिप्तमाज्यम्, तदन्तर्नैतुमिव बालाश्चुरन्तुणां कृत्वा तदाज्यं निःशेषेण पिबन्तो भक्षयेयुः' इत्यर्थः। अनदनीयद्रव्याणामपि कृष्णलानां यथा वचनात्प्रदानम्। तद्वदभक्षाणामपि भक्षणं भवेत् ॥ ३ ॥

( चतुर्थे–कृष्णलचरौ सहपरिहारविधानाधिकरणे सूत्रम्– )।

एकधोपहारे सहत्वं ब्रह्मभक्षाणां प्रकृतौ विहितत्वात् ॥ १७ ॥

चतुर्थाधिकरणमारचयति–

सकृत्सहत्वयोरेकमेकधेत्यन्त्यमेव वा।
एकं नियामकाभावादबाधादन्त्यमेव हि ॥ ४ ॥

तत्रैव कृष्णलभक्षणे श्रूयते–'एकधा ब्रह्मण उपहरति' इति। तत्र–'एकधा' इत्ययं धाप्रत्ययः प्रकारवाची सन् 'एकवारम्' इत्यमुमर्थं बहूनां सहभावं वा ब्रूते। उपहारो भक्षणाय समर्पणम्। 'एकधा' इत्यनेन सकृत्त्वसहत्वयोरन्यतरद्विवक्षितम्, उत–सहत्वमेव, इति संशयः। 'नियामकाभावादुभयोर्मध्ये यत्किंचिदन्यतरत्' इति पूर्वपक्षः।

अबाधोऽत्र नियामकः। प्रकृतौ–इडाप्राशित्रचतुर्धाकरणशंयुवाककालेषु चतुर्धाभक्षणसिद्धये चत्वार उपहारा उपदिष्टाः। अत्रापि ते चोदकप्राप्ताः। तत्र सकृत्त्वपक्षे–उपरितनास्त्रय उपहारास्तत्तत्कालविशेषाश्च बाध्येरन्। सहत्वपक्षे–कालविशेषा एव बाध्यन्ते, न तु त्रय उपहाराः। तस्मात्–अन्त्यपक्षरूपं सहत्वमेव 'एकधा' इत्यस्य शब्दस्यार्थः ॥ ४ ॥

(पञ्चमे–कृष्णलचरौ ब्रह्मणे सर्वभक्षभागार्पणाधिकरणे सूत्रे १८–१९)।

सर्वत्वं च तेषामधिकारात्स्यात् ॥ १८ ॥ पुरुषापनयो वा तेषामवाच्यत्वात् ॥ १९ ॥

पञ्चमाधिकरणमारचयति–

सर्वं ब्रह्मण इत्यत्र ब्रह्मभागस्य सर्वता।
अन्यभागस्यापि वाऽऽद्यो भागान्तरमबाधितुम् ॥ ५ ॥
सर्वत्वमन्त्रभागीयं ब्रह्मणोऽत्र विधीयते।
स्वभागीयं चोदकाप्तं बाध्यतामन्यभक्षणम् ॥ ६ ॥

---

१ भ. प्र. विलम्बन्तो। २ ख. भ. प्र. ञ. °र्थं बा ब°। ३ क. ज. ञ. °पि को°।

उच्छ्रभक्षण एवेदमपरं श्रूयते—'सर्वं ब्रह्मणे परिहरति' इति। परिहारः समर्पणम्। ब्रह्मसहितानामृत्विजामेकैकस्य चतुर्षु कालेषु चत्वारो भक्षभागाश्चोदकप्राप्ताः। तत्र—सर्वता किं ब्रह्मसंबन्धिचतुर्भागविषया, उत—इतरसंबन्धिभागचतुष्टयविषयाऽपि। इति संदेहः। अध्वर्युप्रभृतीनामृत्विजां ये ये चत्वारो भागाः, तेषां बहूनामबाधनायाऽऽद्यः पक्षोऽभ्युपेयः। तत्रैषा वचनव्यक्तिः—ब्रह्मसंबन्धमनूद्य सर्वत्वपरिहारयोरेकमनुवादेऽन्तर्भाव्येतरद्विधेयम्। 'यद्ब्रह्मणे सर्वं, तत्परिहरति' इति, 'यद्ब्रह्मणे परिहरति, तत्सर्वम्' इति। उभयथाऽपि विधेर्ब्रह्मभागमात्रे पर्यवसानाच्चोदकप्राप्ता अन्यभागा अबाधिता भविष्यन्ति। इति पूर्वः पक्षः।

सर्वत्वपरिहारावनूद्य ब्रह्मसंबन्धोऽत्र विधीयते—'यत्परिहर्तव्यं सर्वं, तद्ब्रह्मणे' इति वचनव्यक्तिः। तत्र—ब्रह्मभागानामितरभागानां च यत्सर्वत्वं, तस्य ब्रह्मसंबन्धे सति ब्रह्मभागानां ब्रह्मसंबन्धस्य चोदकादेव प्राप्तत्वात्तत्रानर्थको विधिरन्यभागानां ब्रह्मसंबन्धविधाने पर्यवस्यति। तस्मात्—अन्येषां भक्षणं बाध्यते। ॥ ५ ॥ ६ ॥

( षष्ठे—भक्षभागानां स्वस्वकाले ब्रह्मणा भक्षणाधिकरणे सूत्रम्—)।

पुरुषापनयात्स्वकालत्वम् ॥ २० ॥

षष्ठाधिकरणमारचयति—

युगपत्स्वस्वकाले वा तत्सर्वं भक्षयेद्द्वयम्।
अविलम्बादादिमोऽन्त्यस्तं तं कालमबाधितुम् ॥ ७ ॥

अतीताधिकरणद्वयेन 'युगपत्सर्वं ब्रह्मणे समर्पयेत्' इत्युक्तम्। तत्र भक्षयितुं युगपत्समर्पितस्य सर्वस्य मध्ये कियदपि भक्षयित्वाऽवशेषितस्य विलम्बे कारणाभावात्—'युगपत्' इत्यादिमः पक्षः प्राप्नोति।

चोदकप्राप्तस्य तत्तत्कालस्याबाधो विलम्बे हेतुः। तस्मात्—'स्वस्वकाले' इत्यन्त्यः पक्षोऽभ्युपेयः ॥ ७ ॥

( सप्तमे—ब्रह्मभक्षे चतुर्धाकरणादीनामभावाधिकरणे सूत्रम्)।

एकार्थत्वादविभागः स्यात् ॥ २१ ॥

सप्तमाधिकरणमारचयति—

---

१ ख. ञ. °रसर्वार्थभा°। २ ख. ज. झ. ञ. °भ्युपगन्तव्यः। ३ ख. ज. झ. °र्वत्र प°। ४ ख. °क्षः। पूर्वत्र त्वप°। ञ. °क्षः। सर्वत्र प°। ५ ख. ज. झ. ञ. °तीतेनाधि°। ६ ख. ज. झ. °भ्युपगन्तव्यः।

चतुर्धाकृतिनिर्देशौ तद्भक्षे स्तो न वाऽग्रिमः ।
चोदकात्तौ तु बह्वर्थव्यवस्थार्थत्वतोऽत्र न ॥ ८ ॥

प्रकृतौ पुरोडाशं चतुर्धा कृत्वा पश्चात् 'इदं ब्रह्मणः' इत्यादिना तत्तद्भागान्निर्दिशेत् । तौ चतुर्धाकरणनिर्देशौ पूर्वोक्ते ब्रह्मभक्षे चोदकवशाद्विधेते । इत्यग्रिमः पक्षः प्राप्नोति ।

तत्र—चतुर्धाकरणं बहूनामृत्विजां विभागार्थम् । निर्देशो भागानामसांकर्यार्थः । अत्र तु ब्रह्मण एकत्वात्तावुभौ न विद्येते ॥८॥

( अष्टमे—ऋत्विग्दानस्याऽऽनत्यर्थताधिकरणे सूत्राणि २२—२८ ) ।

ऋत्विग्दानं धर्ममात्रार्थं स्याद्ददातिसामर्थ्यात् ॥ २२॥ परिक्रयार्थं वा कर्मसंयोगाल्लोकवत् ॥ २३ ॥ दक्षिणायुक्तवचनाच्च ॥ २४ ॥ न चान्येनाऽऽनम्येत परिक्रयात्कर्मणः परार्थत्वात् ॥ २५ ॥ परिक्रीतवचनाच्च ॥ २६ ॥ सानिवन्येव भृतिवचनात् ॥ २७ ॥ नैष्कर्तृकेण संस्तवाच्च ॥ २८ ॥

अष्टमाधिकरणमारचयति—

ऋत्विग्दानमदृष्टार्थमानत्यै वाऽग्रिमः श्रुतेः ।
वैरूप्यान्नियमान्मैवं दृष्टत्वाद्दानतेः श्रुतिः ॥ ९ ॥
भृतौ च नियमादेतददृष्टं स्याद्विरूपता ।
वचनात्तेन सत्रेषु स्वामिनां न भृतिः क्वचित् ॥ १० ॥

'ऋत्विग्भ्यो दक्षिणां ददाति' इति प्रकृतौ श्रूयते । तत्किमदृष्टार्थम्, आनत्यर्थं वा, इति संशयः । भृत्या परिक्रीय वशीकार आनतिः । अदृष्टार्थं तत्स्यात् । अन्नहिरण्यादीनामदृष्टार्थे त्यागे दानशब्दस्य प्रसिद्धत्वात् । यदि—अत्र दानं भृतिः स्यात्, तदानीमल्पाधिककर्मानुरूप्येण द्रव्यं देयं स्यात् । वैरूप्यं त्वत्र दृश्यते—स्वल्पकर्मणि त्रैधातवीये सहस्रं देयम्, अधिककर्मणि, वाजपेये स्वल्पं सोमचमसमात्रं दीयते । तथा द्वादशशतादिपरिमाणनियमो मन्त्रवत्त्वनियमश्च भृतौ नोपपद्यते । कर्मकरानुमत्या न्यूनाधिकभावसंभवात् । तक्षरजकादिभृतौ मन्त्रादर्शनाच्च । तस्मात्—'अदृष्टार्थम्' इत्यग्रिमः पक्षः प्राप्नोति ।

---

१ क. ख. च. भृत्यान् । २ फ. म. च. ज. ञ. °रूपेण । ३ ख. ज. झ. ञ. °देयम् । वै° । ४ [illegible]र्याशिरः ।

भेदम् । आनतेर्दृष्टप्रयोजनत्वात् । दानप्रीतिस्तु दृष्टार्थायां भृतावप्युपलि– 'भृतिर्देया' इति प्रयोगात् । परिमाणमन्त्रवत्त्वनियमाददृष्टमस्तु । दृष्टस्याभावात् । वैरूप्यं तु वचनबलादभ्युपगम्यते । दक्षिणाया भृतिरूपत्वं प्रत्यक्षवेदवाक्यादव-गम्यते 'दीक्षितमदीक्षिता दक्षिणापरिक्रीता ऋत्विजो याजयेयुः' इति । तस्मात्– ऋत्विग्दानमानत्यर्थम् । एवं च सति सत्रे ऋत्विजां यजमानत्वाद्भृतिरूपा दक्षिणा न काऽपि देया–इत्येतद्विचारफलं द्रष्टव्यम् ॥९॥१०॥

(नवमे–ज्योतिष्टोमे भक्षस्य प्रतिपत्त्यर्थताधिकरणे सूत्राणि २९–३३)॥

शेषभक्षाश्च तद्वत् ॥ २९ ॥ संस्कारो वा द्रव्यस्य परार्थत्वात् ॥ ३० ॥ शेषे च समत्वात् ॥ ३१ ॥ स्वामिनि च दर्शनात्तत्सामान्यादितरेषां तथात्वम् ॥ ३२ ॥ तथा चान्यार्थदर्शनम् ॥ ३३ ॥

नवमाधिकरणमारचयति–

क्रयाय प्रतिपत्त्यै वा चमसेडादिभक्षणम् ।
क्रयाय पूर्ववन्मैवं यागीये स्वत्ववर्जनात् ॥ ११ ॥
अक्रीतयजमानस्य भक्षसत्त्वाच्च तेन सा ।
प्रतिपत्तिः संस्कृतित्वात्सत्रेषु न निवर्तते ॥ १२ ॥

अस्ति सोमे चमसभक्षः । अस्ति चेष्टाविडाप्राशित्रादिभक्षः । तत्र भक्षेण प्रीतानामृत्विजामानतिसंभवाद्दक्षिणान्यायेन क्रयार्थं भक्षणम् । इति पूर्वः पक्षः ।

यागदेवतायै संकल्पिते द्रव्ये स्वत्वमलभमानो यजमानो न तेन क्रेतुं शक्नोति । किंच 'यजमानपञ्चमाः संभूयेडां भक्षयन्ति' इत्यक्रीतस्यापि यजमानस्य भक्षः श्रूयते । तत्साहचर्यादृत्विजामपि भक्षणं न क्रयार्थमिति गम्यते । तस्मात्–प्रतिपत्त्यर्थो भक्षः । तेन क्रयार्थत्वाभावेन परिशिष्यमाणा सा प्रतिपत्तिर्यागोपयुक्तद्रव्यसंस्कारत्वेन सत्रेषु न बाध्यते ॥११॥१२॥

---

१ ञ. ज. झ. °सत्रेष्वृत्वि । २ ज. झ. काऽपि । ३ क. °गीये स्व° । ञ. °गीयस्व । ४ ञ. झ. °अ तत्स° । ५ क. ण. च. झ. ञ. न क्रे° ।

(दशमे—सत्रे ऋत्विग्वरणाभावाधिकरणे—सूत्रम्— ) ।

वरणमृत्विजामानमनार्थत्वात्सत्रे न स्यात्स्वकर्मत्वात् ॥ ३४ ॥

दशमाधिकरणमारचयति—

ऋत्विजां वरणं सत्रे कार्यं नो वाऽत्र सोमवत् ।
कार्यं मैवं स्वकर्मत्वात्क्रयार्था प्रकृतौ वृतिः ॥ १३ ॥

'अग्निर्होता' इत्यादिमन्त्रैः सोमे वरणमृत्विजामाम्नातम् । सोमवत्सत्रेऽपि तत्कार्यम् । अन्यथा वरणरहितानामृत्विक्त्वाभावात्सत्रं न सिध्येत् । अत एव तत्सिद्धये सत्रप्रकरणे 'ये यजमानाः, त ऋत्विजः' इति स्वतः प्रवृत्तानपि यजमानाननूद्य वरणसाध्यमृत्विक्त्वं तेष्वाधातव्यमिति विदधाति । तस्मात्—ऋत्विग्वरणं सत्रे कार्यम् ।

मैवम् । सत्रं ह्यनुष्ठातॄणां सर्वेषां स्वकर्म । नहि स्वकर्मणि क्रयार्थं वरणमपेक्ष्यते । क्रयार्थं हि प्रकृतौ वरणम् । दानमेव क्रयार्थम्, वरणं त्वदृष्टार्थम्—इति चेत् ।

मैवम् । वरणस्य भविष्यद्दानसूचनेनोत्साहजननार्थत्वात् । अन्यथा वरणकाले 'कच्चित्कल्याण्यो दक्षिणाः' इत्यृत्विजां प्रश्नः कथं संगच्छेत । न च—ऋत्विक्त्वासिद्धिः शङ्कनीया । तत्र वक्तव्यम्—ऋत्विक्त्वं नाम किं कर्मकरत्वम्, उत—यागकर्तृत्वम्, इति । आद्ये—कर्मकराणां स्वामित्वाभावेन 'ये यजमानास्त ऋत्विजः' इति वचनं विरुध्येत । द्वितीये तु स्वत एव यागं कर्तुं प्रवृत्तत्वाद्वरणमन्तरेणाप्यृत्विक्त्वं सिध्यति । इदमेवाऽऽर्त्विज्यं वचनेन विधीयते । तस्मात्—दानवद्वरणं सत्रे लुप्यते ॥ १३ ॥

( एकादशे—सत्रे परिक्रयाभावाधिकरणे सूत्राणि ३५—३८ ) ।

परिक्रयश्च तादर्थ्यात् ॥ ३५ ॥ प्रतिषेधश्च कर्मवत् ॥ ३६ ॥ स्याद्वा प्रासर्पिकस्य धर्ममात्रत्वात् ॥ ३७ ॥ न दक्षिणाशब्दात्, तस्मान्नित्यानुवादः स्यात् ॥ ३८ ॥

एकादशाधिकरणमारचयति—

क्रयः कार्यो न वा सत्रे निषेधात्क्लृप्तिकल्पनम् ।
नित्यानुवादेनाक्लृप्तेर्न क्रयो वरणं यथा ॥ १४ ॥

---

१ क. °रणं चाऽऽम्ना । ख. °रणमाम्ना° । २ ख. कच्चित्क° । ग. ञ. कच्चित्क° । ३ क. ख. °ति वि° । ४ ख. °धात्क्लृप्ति° ।

सत्कारपुरःसरम् 'अग्निर्होता'—इत्यादिप्रार्थना वरणम् । तच्च वरणं विक्री-णंयुंजमानो वरणीयेभ्यो ब्राह्मणेभ्यः सोमं ब्रूयात् । 'तेभ्यः सोमं प्राह' इत्या-पस्तम्बवचनात् । सोमाभिधानप्रकारश्चात्र कल्पे दर्शितः—'ज्योतिष्टोमेनाग्निष्टोम-संस्थेन रथंतरपृष्ठेन गवां द्वादशशतदक्षिणेनाहं यक्ष्ये, तत्र त्वमुद्गाता भव' इति । तत्र देयदक्षिणाद्रव्यनिश्चये ब्राह्मणाः स्वकीयाः कर्मविशेषे नियोक्तुं योग्या भव-न्ति । सोऽयं क्रयः । स च प्रकृताविव सत्रे कार्यः। न च दक्षिणादानस्य निरा-कृतत्वेन देयद्रव्यनिश्चये लुप्ते सति तत्साध्यः क्रयोऽपि लुप्येत—इति शङ्कनीयम् । निषेधमुपजीव्य क्रयानुष्ठानस्य कल्पयितुं शक्यत्वात् । तथा हि—'नह्यत्र गौर्दीयते, न वासः, न हिरण्यम्' इति सत्रे गवादिदानं निषिध्यते । स च निषेधोऽसत्यां प्रसक्तौ न संभवति । ततः सोमे देयद्रव्याणां सत्रे दानप्रसक्तिरभ्युपेया । सोमे च देयद्रव्याण्येवं श्रूयन्ते—'गौश्चाश्वश्चाश्वतरश्च गर्दभश्चाजयश्च व्रीहयश्च यवाश्च तिलाश्च माषाश्च तस्य द्वादशशतं दक्षिणा' इति । तत्र—गोवासोहिरण्यानां वि-शेषतो निषेधेन द्रव्यान्तराणां चोदकप्राप्तानामभ्यनुज्ञा प्रतीयते । ततो देयद्रव्य-सद्भावात्क्रयः कार्यः । इति पूर्वः पक्षः ।

'न ह्यत्र गौर्दीयते' इत्यनेन निषेधो न विधीयते । किंतु पूर्वोक्तेन निर्णयेन प्राप्त एव दानाभावोऽनूद्यते, 'अदक्षिणानि सत्राणीत्याहुः । नह्यत्र गौर्दीयते' इति श्रुतौ परोक्त्युपन्यासस्य, प्रसिद्धिवाचकहिशब्दस्य च प्रागिन्द्रमकरत्वात् । तस्मात्—नित्यानुवादस्य कल्पकत्वाभावाद्वरणवत्तदविनाभूतः क्रयोऽपि न कार्यः ॥ १४ ॥

(द्वादशे—उदवसानीये दानस्य परिक्रयार्थताधिकरणे सूत्रे ३९—४०)।

उदवसानीयः सत्रधर्मा स्यात्, तदङ्गत्वात्तत्र
दानं धर्ममात्रं स्यात् ॥ ३९ ॥ न त्वेतत्प्रकृति-
त्वाद्विभक्तचोदितत्वाच्च ॥ ४० ॥

द्वादशाधिकरणमारचयति—

सत्राङ्गं स्यान्न वा पृष्ठशमनीयो ल्यपाऽङ्कृता ।
सौत्रामण्यादिवन्मैवं त्यागादूर्ध्वं विधानतः ॥ १५ ॥
श्रूयमाणा दक्षिणेयं पूर्वपक्षेऽत्र धर्मकृत् ।
परिक्रयार्था सिद्धान्ते निमित्तं स्यात्समापनम् ॥ १६ ॥

---

१ ज. झ. °श्चानुक° । २ ख. ज. झ. °येन ब्रा° । ३ ख. ज. झ. ञ. शङ्ककनी-यम् । ४ ज. झ. गोवस्त्रहि° । ५ ज. झ कर्तव्यः । ६ ज. झ. कर्तव्यः । ७ क. ख. ग. झ. °वोऽन्यथाकृ° ।

अस्ति सोमविकृतिः पृष्ठशमनीयनामको यागः। 'सत्रादुदवसाय पृष्ठशमनीयेन ज्योतिष्टोमेन सहस्रदक्षिणेन यजेरन्' इति। 'उदवसाय' इत्यनेन ल्यप्प्रत्ययेन सत्रसमाप्तेः पूर्वकालत्वं, सत्रपृष्ठशमनीययोरेककर्तृकत्वं च प्रतीयते। तथा सति—'अग्निं चित्वा सौत्रामण्या यजेत। वाजपेयेनेष्ट्वा बृहस्पतिसवेन यजेत। संस्थाप्य पौर्णमासीमिन्द्राय वैमृधाय पुरोडाशमष्टाकपालं निर्वपति' इत्यत्र सौत्रामण्यादीनां यथा चयनाद्यङ्गत्वम्, तथा पृष्ठशमनीयस्य सत्राङ्गता भविष्यति। अङ्गत्वे सति श्रूयमाणा सहस्रदक्षिणा सत्रेष्विव परिक्रयार्था न भवतीत्यदृष्टार्थताऽभ्युपगम्यते। फलं च न कल्प्यम्। सत्रफलेनैव फलवत्त्वसिद्धेः। इति पूर्वः पक्षः।

उदवसानशब्दस्य त्यागवाचित्वात्सत्रत्यागादूर्ध्वं विधीयमानः कथं सत्राङ्गं भवेत्। 'अग्निं चित्वा' इत्यादौ त्यागशब्दो नास्तीति वैषम्यम्। एककर्तृकत्वपूर्वकालत्वे तु निमित्तविवक्षयाऽप्युपपद्येते। सत्रसमापनं निमित्तीकृत्य विधाने गृहदाहेष्टिवत्फलनैरपेक्ष्याद्विश्वजिन्न्यायेन फलं न कल्प्यम्। सत्येवमनङ्गत्वे सोमदक्षिणा परिक्रयार्था। दक्षिणायाः श्रौतत्वेनालोपः पूर्वोत्तरपक्षयोः समानः। न्यायेनाप्यलोपः सिद्धान्ते विशिष्यते॥१५॥१६॥

(त्रयोदशे—उदवसानीयस्यर्त्विजां सत्रिभ्यो भिन्नताधिकरणे सूत्रे ४१—४२)।

तेषां तु वचनाद्द्वियज्ञवत्सहप्रयोगः स्यात्॥ ४१॥

तत्रान्यानृत्विजो वृणीरन्॥ ४२॥

त्रयोदशाधिकरणमारचयति—

तत्रर्त्विजः सत्रिणः किमन्ये वा स्युर्यथोक्तितः।
त एव, यष्टृभेदेऽपि क्रीतत्वादृत्विजः परे॥ १७॥

तस्मिन्पृष्ठशमनीये सत्रिणामेवाऽऽर्त्विज्यम्, 'उदवसाय' इति ल्यबन्तसामर्थ्येन कर्त्रैक्यप्रतीतेः। इति पूर्वः पक्षः।

'उदवसाय यजेरन्' इति समभिव्याहारात्तैस्त्रिभिः सहैकत्वं यष्टॄणां प्रतीयते। न च—ऋत्विजोऽयष्टारः। यजमानेन तेषां दक्षिणया क्रीतत्वात्। तस्मात्—ऋत्विजः सत्रिभ्योऽन्ये॥ १७॥

१ ख. ज. झ. °थाऽग्निच°। २ ख. ज. झ. कल्पयितव्यम्। ञ. कल्पनीयम्। ३ ख. ज. झ. ञ. °लं कल्पनीयम्। ४ ञ. °म्। चयनाङ्ग°। ५ क. °मङ्ग°। ६ क. ख. ज. झ. ञ. °मानन्या°। ७ ख. च. °व, पृष्टभे°। क. °व, यष्टृभे°। ८ ख. ज. झ. °त्रिभिर्न स°।

( चतुर्दशे-पृष्ठशमनीये प्रत्येकं यष्टृताधिकरणे सूत्रम्- ) ।

एकैकशस्त्वविप्रतिषेधात्प्रकृतेश्चैकसंयोगात् ॥ ४३ ॥

चतुर्दशाधिकरणमारचयति—

संभूयैकैकशो वाऽत्र यष्टृताऽऽद्यो बहूक्तितः ।

द्वियागवद्बहुत्वस्य प्रापतेरन्त्योऽस्तु सोमवत् ॥ १८ ॥

अस्मिन्पृष्ठशमनीये सत्रिणां संभूय यजमानत्वम्, उत—प्रत्येकम्, इति संशयः। 'संभूय' इत्याद्यः पक्षः प्राप्नोति । कुतः । 'यजेरन्' इति बहुवचननिर्देशात् । 'एतेन राजन्यपुरोहितौ सायुज्यकामौ यजेयाताम्' इत्यत्रोपादेयगतद्वित्वस्य विवक्षितत्वादुभौ संभूय यष्टारौ, तद्वदत्रापि स्यात् ।

मैवम् । 'उदवसाय' इत्यत्रोदवसातॄणां सत्रिणां यद्बहुत्वं प्राप्तम्, तदेव तत्समानाधिकृतेन 'यजेरन्' इत्यनेनानूद्याप्राप्तो यागो विधीयते । द्वियागे तु द्वित्वमप्यप्राप्तत्वेन विधेयमिति वैषम्यम् । ततो 'ग्रहं संमार्ष्टि' इत्यत्र ग्रहैकत्वमिवो-द्देश्यगतत्वात् 'यजेरन्' इति बहुत्वमविवक्षितम् ।—एवमपीच्छया द्वियो बहवो वा यष्टुं शक्यत्वादेकैकशो न नियमः—इति चेत् ।

न । चोदकेन तन्नियमसिद्धेः । सोमे तद्दर्शनात् । तस्मात्—'सत्रिणः प्रत्येकं यजेरन्' इत्यन्त्यः पक्षोऽस्तु ॥१८॥

( पञ्चदशे-कामेष्टौ दानस्यादृष्टार्थताधिकरणे सूत्रे ४४—४५ ) ।

कामेष्टौ च दानशब्दात् ॥ ४४ ॥ वचनं वा सत्रत्वात् ॥ ४५ ॥

( पञ्चदशे-कामेष्टौ दानस्यादृष्टार्थताधिकरणे सूत्रे ४४—४५ )

कामेष्टौ च दानशब्दात् ॥ ४४ ॥ वचनं वा सत्रत्वात् ॥ ४५ ॥

पञ्चदशाधिकरणमारचयति—

अश्वीं पुरुषीं वाऽऽनत्यै धर्मार्थं वाऽऽनतिर्यतः ।

इष्टिर्न सत्रं धर्मार्थे सत्रादङ्गं बहिर्न हि ॥ १९ ॥

सारस्वतसत्रे कामेष्टौ—'अश्वीं पुरुषीं धेनुके दत्त्वा' इति तुरगमनुष्यगोजातीयानां स्त्रीणां दक्षिणात्वेन दानं श्रुतम् । तच्च—आनत्यर्थम् । कुतः । इष्टेरसत्रत्वात् । सत्रत्वे तु यजमानानामेवाऽऽर्त्विज्याद्दानसाध्यक्रयाभावेन तत्साध्यमानमनमसंभवि स्यात् । इष्टिर्न सत्रम् । तल्लक्षणाभावात् । 'आसीरन्, उपेयुः' इत्यनयोरन्यतरचोदना तल्लक्षणम् । इह तु—इष्टिलक्षणभूता निर्वपतिचोदना

१ ख. ग. ञ. °यो न तूक्ति° । २ ज. झ. प्राप्तिर° । ३ क. °त्ययं प° । ४ क. ख. ग. ज. अश्वीं । ५ क. ख, च, ञ. अश्वीं । ६ ज. झ. °मपि न स्यात् ।

पठ्यते—'अग्नये कामायाष्टाकपालं निर्वपति' इति । इष्टौ च यजमानाद्दत्विजां पृथक्त्वाद्दानमत्यर्थं दानम् । इति पूर्वः पक्षः ।

धर्मार्थं दानम् । कुतः । इष्टेः स्वरूपेणासत्रत्वेऽपि सत्राङ्गत्वेनेतराङ्गेष्विवेष्टाव-प्यस्यां यजमानानामेवाऽऽर्त्विज्यात् । ननु—द्वादशाहः सत्राणां प्रकृतिः । न च तत्र कामेष्टिरस्ति । अतो न सत्रचोदकेनेष्टौ यजमानार्त्विज्यप्राप्तिः । इष्टिचोदकेन त्वन्य एवर्त्विजः प्राप्नुवन्ति ।

नैवम् । सत्रप्रयोगान्तःपातित्वेन प्रसङ्गाद्यजमानकर्तृकत्वसिद्धेः । तस्मात्—अत्र दानमदृष्टार्थम् ॥ १९ ॥

( षोडशे—दर्शपूर्णमासयोर्द्वेष्याय दानस्यादृष्टार्थताधिकरणे—सूत्रम्— )।

द्वेष्ये चाचोदनाद्दक्षिणापनयः स्यात् ॥ ४६ ॥

षोडशाधिकरणमारचयति—

क्रीत्यै धर्माय वा द्वेष्ये दानं स्याद्दक्षिणोक्तितः ।
क्रयाय मैवं द्वेष्यत्वं नार्त्विजो धर्मकृत्ततः ॥ २० ॥

दर्शपूर्णमासयोः श्रूयते—'यदि पत्नीः संयाजयन्कपालमभिजुहुयात्, वैश्वानरं द्वादशकपालं निर्वपेत् । तस्यैकहायनी गौर्दक्षिणा । तां द्वेष्याय दद्यात्' इति । अत्र यजमानेन द्वेषणीये पुरुषे यद्दानं, तत्क्रयार्थम् । दक्षिणाशब्देन व्यवहृतानां प्रकृतौ क्रयार्थत्वदर्शनात् । इति पूर्वः पक्षः ।

न तावदृत्विजो द्वेष्यत्वं युक्तम् । 'ऋत्विगाचार्यौ नातिचरितव्यौ' इति शास्त्रात् । यस्तु द्वेष्यः पुरुषः, नासावृत्विक्त्वाभावेन यागे कर्मकरत्वाभावात्क्रयमर्हति । तस्मात्—इदं दानमदृष्टार्थम् ॥ २० ॥

( सप्तदशे—जीवतामस्थियज्ञाधिकरणे सूत्रे ४७—४८ )।

अस्थियज्ञोऽविप्रतिषेधादितरेषां स्याद्विप्रतिषेधा-
दस्थ्नाम् ॥४७॥ यावदुक्तमुपयोगः स्यात् ॥४८॥

सप्तदशाधिकरणमारचयति—

अस्थियागः किमस्थ्नां स्याज्जीवतां वाऽस्थिशब्दतः ।
अस्थ्नां मैवमनर्हत्वाल्लक्ष्यन्ते जीविनोऽस्थितः ॥ २१ ॥

---

१ ख. °गान्तरपा° । २ ज. ख. अब्दे था° । ख. आज्योर्याग° ।

इदं श्रूयते—‘ यदि सत्राय संदीक्षितानां यजमानः प्रमीयेत । अथ तं दग्ध्वा तस्य कृष्णाजिनेऽस्थीन्युपनह्य योऽस्य नेदिष्ठः स्यात्, तं तस्य स्थाने दीक्षयित्वा तेन सह यजेरन् । ततः संवत्सरेऽस्थीनि याजयेयुः ’ इति । अत्र—संवत्सरेऽतीते यो यागः श्रुतः तत्रास्थीन्येव कर्तॄणि । कुतः । अस्थिशब्दस्य तत्र मुख्यत्वात् ।

नैवम् । अचेतनानामस्थ्नां यष्टुमनर्हत्वात् ।—जीवतामश्रुतत्वादयुक्तोऽयं यागः—इति चेत् । न । अस्थिशब्दस्य तल्लक्षकत्वात् । एतादृशास्थिमता सह पुरुषेण पूर्वं यष्टुं प्रक्रान्तत्वेन लक्ष्यलक्षकयोरस्ति संबन्धः ।—जीवतां यष्टृत्वात् । ‘ याजयेयुः ’ इत्युक्तणिजर्थभूताः के स्युः । न खल्वत्रान्ये संभवन्ति । अस्य यागस्य सत्राङ्गत्वात्—इति चेत् । तर्हि परस्परं याजकाः सन्तु । तस्मात्—जीवतामयं यागः ॥ २१ ॥

( अष्टादशे—अस्थियागे, अस्थ्नां जपाद्यननुष्ठानाधिकरणे सूत्रम्— ) ।

यदि तु वचनात्तेषां जपसंस्कारमर्थलुप्तं सेष्टितदर्थत्वात् ॥ ४९ ॥

अष्टादशाधिकरणमारचयति—

अस्थिकर्तृमते चिन्तापञ्चकं स्याज्जपादिकम् ।
न वा, तच्चोदकात्कुर्युर्न कुर्वीरन्नसंभवात् ॥ २२ ॥

‘ अस्थीनि कर्तॄणि ’ इति पूर्वाधिकरणे पूर्वपक्षिणो मतम् । तदनुसारेणाधिकरणपञ्चकं कृत्वाचिन्तारूपेण प्रवर्तते ।

प्रकृतौ—यजमानस्य मन्त्रजपः केशश्मश्रुवपनं दीक्षानियमा इत्येवमादय कर्तव्याः सन्ति । तत्सर्वं चोदकप्राप्तमस्थीनि कुर्युः । इति पूर्वः पक्षः ।

अचेतनानां तदसंभवान्न कुर्युः । इति राद्धान्तः ॥ २२ ॥

(एकोनविंशे—अस्थियज्ञे शाखामानशुक्रस्पर्शानुष्ठानाधिकरणे सूत्रम्—)

* क्रत्वर्थं तु क्रियेत गुणभूतत्वात् ॥ ५० ॥

एकोनविंशाधिकरणमारचयति—

औदुम्बरीमानशुक्रस्पर्शौ नोतास्ति तद्द्वयम् ।
पूर्ववन्नेति चेन्मैवमचैतन्येऽपि संभवात् ॥ २३ ॥

* इदं शबरभाष्यशोधकैर्वैङ्गैर्न प्रकाशितम् ।

१ अ. ब्र. यष्टृत्वे । २ अ. ब्र. लक्ष्यलक्षकाख्ये । ३ अ. ब्र. 'प्राप्तमूर्ध्वी'।

प्रकृतौ औदुम्बर्याः शाखाया यजमानप्रमाणत्वम्, तथा—शुक्रग्रहस्य यजमानस्पर्शः। तावुभावचेतनानामस्थ्नां जपादिवन्न विद्येते। इति पूर्वः पक्षः।

अचेतनैरपि दण्डेनेव मातुं स्प्रष्टुं च शक्यत्वाद्विद्येते। इति राद्धान्तः॥२३॥

( विंशे—अस्थियज्ञेऽस्थ्नां काम्यकर्माद्यननुष्ठानाधिकरणे सूत्रम्— )।

काम्यानि तु न विद्यन्ते कामाज्ञानाद्यथेतरस्यानुच्यमानानि॥ ५१॥

विंशाधिकरणमारचयति—

वृष्टिकामः सदो नीचैरिति कामोऽस्ति वा न वा।
विद्यते स्पर्शवत्कामश्चेतनस्थस्ततो न हि॥ २४॥

'यदि कामयेत—वर्षुकः पर्जन्यः स्यात्—इति, नीचैः सदो मिनुयात्' इत्यत्र 'सदोनामकस्य मण्डपस्य नीचमानेन गुणेन वृष्टिः फलति' इत्युक्तम्। तस्यां वृष्टौ कामः स्पर्शवदस्थ्नां विद्यते। इति मन्दप्रज्ञस्य पूर्वः पक्षः।

कामस्य चेतनधर्मत्वान्नास्ति। इति राद्धान्तः॥२४॥

( एकविंशे—अस्थियज्ञेऽस्थ्नां सूक्तवाकगताशासनाननुष्ठानाधिकरणे सूत्राणि ५२—५४ )।

ईहार्थाश्चाभावात्सूक्तवाकवत्॥ ५२॥ स्युर्वाऽर्थवादत्वात्॥ ५३॥ नेच्छाभिधानात्तदभावादितरस्मिन्॥ ५४॥

एकविंशाधिकरणमारचयति—

सूक्तवाकाशासनं स्यान्न वा, नित्यप्रवृत्तितः।
स्यान्नैवं फलनिर्देशात्फलेच्छाऽस्थ्नां न युज्यते॥ २५॥

'इदं द्यावापृथिवी भद्रमभूत्'—इत्यादिः सूक्तवाको होत्रा पठ्यते। तत्रैवं श्रूयते—'आशास्तेऽयं यजमानोऽसौ, आयुराशास्ते, सुप्रजास्त्वमाशास्ते' इत्यादिः। तत्र सूक्तवाकगतो योऽयं यजमानाशासनप्रतिपादको मन्त्रभागः, तमस्थियज्ञे होता पठेत्, न वा, इति संशयः। अस्थियज्ञगतायाः प्रायणीया-

---

१ ख. ज. झ. सिद्धान्तः। २ अ. ञ. वर्षकः। ३ क. च. ञ. °तोऽयं।

देरिष्टेः प्रस्तरप्रहरणमन्त्रम्, तस्य नित्यत्वात्तस्मिन्विनियुक्तस्य सूक्तवाकमन्त्रस्य नित्यप्रवृत्ततया तद्भागपाठोऽपि स्यात्। इति पूर्वः पक्षः।

यथा ‘स्वर्गकामः’–इत्यत्र कामियोगेन साध्यताप्रतीतेः स्वर्गशब्देन फलनिर्देशः, एवमाशासनयोगादायुरादिशब्दैः फलं निर्दिश्यते। फलेच्छा चास्थ्नां न युक्ता। तस्मात्–तद्भागपाठो बाध्यते ॥ २५ ॥

( द्वाविंशे–अस्थियज्ञे होतृकामाभावाधिकरणे सूत्रे ५५–५६ )।

**स्युर्वा होतृकामाः ॥ ५५ ॥ न तदाशीष्ट्वात् ॥ ५६ ॥**

द्वाविंशाधिकरणमारचयति–

**होतृकामो भवेन्नो वा होतुर्जीवनतो भवेत्।**
**यजमानेष्टमेवासौ + कामयेत्तेन नास्त्यसौ ॥ २६ ॥**

प्रकृतौ–अस्ति होतृकामः–‘यं कामयेत–’ * वसीयान्स्यात्’–इति, उच्चैस्तरां तस्य वषट्कुर्यात्’ इत्यादिः। सोऽस्थियज्ञेऽपि निर्दिश्यताम्। कामयितुर्होतुर्जीवतस्तत्संभवात्। इति पूर्वः पक्षः।

‘यां वै कांचन यज्ञे ऋत्विज आशिषमाशास्ते, यजमानायैव तामाशिषमाशासते’ इति श्रुतेर्यजमानेष्टमेव होत्रा कामयितव्यम्। अस्थीनि त्वचेतनान्येष्टुं न शक्नुवन्ति। तस्मात्–अत्र नास्ति होतृकामः।

तदेदधिकरणपञ्चकं ‘जीवतामयं यागः’ इत्यस्मिन्सिद्धान्तिपक्षे विरुद्धम्। अचेतनत्वमुपजीव्य प्रवृत्तत्वात्। तस्मात्–तत्पक्षे चोदकप्राप्तानां यथोक्तधर्माणां नास्ति बाधः ॥२६॥

( त्रयोविंशे–यजमानस्य मरणेऽपि सर्वस्वारस्य समापनाधिकरणे सूत्रे ५७–५८ )।

**सर्वस्वारस्य दिष्टगतौ समापनं न विद्यते कर्मणो जीवसंयोगात् ॥ ५७ ॥ स्याद्वोभयोः प्रत्यक्षशिष्टत्वात् ॥ ५८ ॥**

त्रयोविंशाधिकरणमारचयति–

+ ‘कामयेत्’ इति परस्मैपदं चिन्त्यम्। * ‘वर्षीयान्’ इति शाबरभाष्ये पाठः।

१ क. ञ. वशीया°। २ ज. झ. °ज्ञप्यतिदिश्य°। ३ ज. झ. ञ. °तुर्जी°। ४ ज. झ. °यैवैता°। ५ ज. झ. इत्येतस्मि°।

सर्वस्वारो मृतेरूर्ध्वं त्यज्यतां वा समाप्यताम्।

त्यज्यतां स्वाम्यभावेन प्रैषादन्यैः समाप्यताम् ॥ २७ ॥

सर्वस्वाराख्यः क्रतुरेवं श्रूयते—'मरणकामो ह्येतेन यजेत। यः कामयेत—अनामयः स्वर्गं लोकमियाम्' इति। तस्य च क्रतोस्तृतीयसवने यजमानस्याग्निप्रवेश आम्नायते—'आर्भवे स्तूयमान औदुम्बरीं दक्षिणेन देशेनाऽऽहतेन वाससा परिवेष्ट्य 'ब्राह्मणाः समापयत मे यज्ञम्' इति *संप्रैष्य संविशति' इति। तस्य संशयपूर्वोत्तरपक्षा विस्पष्टाः ॥ २७ ॥

( चतुर्विंशे—सर्वस्वारे कार्यबाध्यव्यवस्थाधिकरणे सूत्रम्— )।

गते कर्मास्थियज्ञवत् ॥ ५९ ॥

चतुर्विंशाधिकरणमारचयति—

किं कार्यमत्र किं बाध्यमिति प्रश्ने तदुत्तरम्।

क्रत्वर्थमस्थिवत्कार्यं बाध्यते मृतकर्तृकम् ॥ २८ ॥

मरणादूर्ध्वं समापनीयः सर्वस्वारशेषो विषयः। तत्र बाध्याबाध्यानध्यवसायः संशयः। अनध्यवसायस्य संशयत्वं न्यायविद्भिर्दर्शितम्—'अनवधारणत्वाविशेषात्संशयानध्यवसाययोर्न संशयादर्थान्तरभावः' इति। विप्रतिपत्त्यभावान्नास्त्यत्र पूर्वपक्षः। यद्वा—नियामकाभावादिच्छया किमपि कार्यम्, किमपि बाध्यम्। इति पूर्वः पक्षः।

अस्थिकर्तृत्वपक्षे—'शुंकस्पर्शादिकं क्रत्वर्थं योग्यत्वात्कार्यम्, मृतयजमानकर्तृकमन्नजपादिकमयोग्यत्वाद्बाध्यम्' इति निर्णीतम्। एवमत्रापि यद्योग्यं क्रत्वर्थं तत्कार्यम्, यदयोग्यं यजमानकर्तृकं तद्बाध्यम् ॥ २८ ॥

( पञ्चविंशे— {सर्वस्वारे यजमानस्य दिष्टगतावप्यायुराशंसनाधिकरणे} सूत्रे ६०—६१)।

जीवत्यवचनमायुराशिषस्तदर्थत्वात् ॥ ६० ॥

वचनं वा भागित्वात्प्राग्यथोक्तात् ॥ ६१ ॥

पञ्चविंशाधिकरणमारचयति—

मृतेः प्रागायुराशीर्नो स्याद्वा नो मृतिकामनात्।

प्रागार्भवाज्जीवनार्थमायुराशासनं भवेत् ॥ २९ ॥

---

* 'संप्रैष्याग्निं विशति' इति शाबरभाष्ये पाठः।

---

१ ख. °श एवमाम्ना°। २ ज. झ. °रत्यप्रेति पु°। ३ क. नो मृतिका°।

होता पठितव्ये सूक्तवाके योऽयम् 'आयुराशास्ते' इति भागो यजमानविषयः, स किं सर्वसत्रे यजमानमरणात्पूर्वं वर्जनीयः, पठितव्यो वा, इति संशयः। मुमूर्षोर्यजमानस्याऽऽयुर्निरपेक्षत्वेनार्थलोपाद्वर्जनीयः। इति पूर्वः पक्षः।

आर्भवाख्यस्य पवमानस्य स्तूयमानत्वं यजमानस्य मरणकालः, ततः पूर्वं जिजीविषुत्वात्पठितव्यः ॥२९॥

(षड्विंशे—द्वादशाहे, ऋतुयाज्याद्यनुष्ठानाधिकरणे सूत्रम्—)

क्रिया स्याद्धर्ममात्राणाम् ॥ ६२ ॥

षड्विंशाधिकरणमारचयति—

आत्रेयदानर्तुयाज्यावृती सत्रेषु नाऽऽचरेत्।
कुर्याद्वाऽऽनतिलोपान्नो धर्मार्थं क्रियतां द्वयम् ॥ ३० ॥

प्रकृतौ—'हिरण्यमात्रेयाय ददाति' इति श्रुतम्, ऋतुयाज्यावरणं चास्ति। तदुभयं सत्रेषु न कार्यम्। द्वारभूताया आनतेर्लुप्तत्वात्। यद्यपि—आत्रेयः कर्मकरेभ्यो बहिर्भूतः, तथाऽपि तद्दानेन यजमानस्यौदार्यं पश्यन्त ऋत्विजो धनकामा आनता भवन्ति। वरणस्य चाऽऽनत्यर्थत्वमृत्विग्वरणे प्रारम्भकालीने प्रसिद्धम्। तस्मात्—आनत्यर्थमुभयं नाऽऽचरेत्। इति पूर्वः पक्षः।

प्रथमवरणेनैवाऽऽनतिसिद्धेः कालान्तरे वरणमदृष्टार्थम्। धनकामानामपि कर्मकराणां प्रारम्भकाले स्वयमङ्गीकृताया भृतेरधिकं धनं न लभ्यत इत्याश्रयदानदर्शनं नाऽऽनतिकरम्। तस्मात्—अदृष्टार्थमुभयं कर्तव्यम् ॥ ३० ॥

( सप्तविंशे—पवमानेष्टौ निर्वापानुष्ठानाधिकरणे सूत्रम्— )।

गुणलोपे च मुख्यस्य ॥ ६३ ॥

सप्तविंशाधिकरणमारचयति—

लुप्यते पवमानेष्टौ निर्वापः क्रियतेऽथवा।
लुप्यते साधनाभावात्तेन मुख्यो न लुप्यते ॥ ३१ ॥

आधानप्रकरणगतायां पवमानेष्टौ निर्वापसाधनं नास्ति। अग्निहोत्रहवणी हि प्रकृतौ निर्वापसाधनम्। सा च नाऽऽधानकाले संभवति। अग्निहोत्रस्याऽऽधानोत्तरकालीनत्वेन तद्धोमसाधनभूतायास्तस्या अपि तथात्वात्। इति प्राप्ते—

---

१ क. °नत्वे य°। ञ. °नस्वस्य°। २ ञ. मरणकाल। ३ क. °याज्यवृत्ती स°। ४ ख. ज. झ. ञ. कर्तव्यम्। ५ ज. झ. °रणपा°। ६ ञ. काले प्र°। ७ क. °स्ति। कुतः। अग्निहोत्रस्या°।

ब्रूमः—मुख्यो निर्वापः। तं प्रति गुणभूताऽग्निहोत्रहवणी। न हि गुणलोपेन मुख्यो लोपमर्हति। किंच—प्रधानकाले स्वरूपेणैवाविद्यमानाया अग्निहोत्रहवण्याः साधनत्वं दूरापेतम्। ततः—'साधनाभावात्' इत्युपन्यासः। तस्मात्—न निर्वापो लुप्यते ॥२१॥

(अष्टाविंशे—वाजपेये मुष्टिलोपाधिकरणे सूत्राणि ६४—६७)।

मुष्टिलोपात्तु संख्यालोपस्तद्गुणत्वात्स्यात् ॥६४॥
न निर्वापशेषत्वात् ॥ ६५ ॥ संख्या तु चोदनां
प्रतिसामान्यात्तद्विकारः संयोगाच्च परं मुष्टेः॥६६॥
न चोदनाभिसंबन्धात्प्रकृतौ संस्कारयोगात् ॥६७॥

अष्टाविंशाधिकरणमारचयति—

शरावैः सप्तदशभिर्यश्चरुस्तत्र मुष्टयः।
चत्वारः सन्ति नो वोत स्यादेकं मुष्टिसंख्ययोः ॥ ३२ ॥
तत्किमाद्यश्चोदितत्वाच्छरावापूरणान्न सः।
द्वितीयोऽस्त्विति चेन्मैवं द्विलोपे बाधगौरवात् ॥ ३३ ॥
तृतीयोऽस्त्वेकलोपोऽत्र धर्मः संख्यैव लुप्यताम् ॥३३॥
क्रियायोगाच्च तद्धर्मः प्राथम्यात्साऽनुगृह्यताम् ॥ ३४ ॥

प्रकृतौ—'चतुरो मुष्टीन्निर्वपति' इति मुष्टितत्संख्ये श्रुते। तथा वाजपेये विकृतिरूपः सप्तदशशरावश्चरुः श्रुतः। तत्र चरौ किं मुष्टिसंख्ये द्वे अपि विद्येते, किंवा—द्वे अपि न विद्येते, उत—उभयोरेकमस्ति अन्यन्नास्ति, यदा एकम्, तदाऽपि—किं मुष्टिरेव, किंवा संख्यैव इति संशयः। चोदकप्राप्तेः 'उभयमस्ति' इत्याद्यः पक्षः प्राप्नोति।

चतुर्भिर्मुष्टिभिः सप्तदशशरावपूरणासमर्थस्य चरोरनिष्पत्तेः स पक्षो न युक्तः। तर्हि 'मुष्टितत्संख्ये द्वे अपि बाध्येते' इति द्वितीयः पक्षोऽस्तु। इति चेत्।

मैवम्। एकबाधेनैव पूरणाभावपरिहारे सिद्धे सति द्वयोर्बाधे गौरवप्रसङ्गात्। ननु—अत्रोपदिष्टेन शरावद्रव्येणातिदिष्टं मुष्टिद्रव्यं बाध्यते। तथा सप्तदशसंख्यया चतुःसंख्या बाध्यते। इत्युभयबाधोऽवश्यंभावी।

---

१ ज. झ, लोपं मु°। २ ख. ञ. लोपाच्च च°। ३ ञ. °पेयो वि°। ४ क. च. °तौ मु°। ५ ख. ज. झ. ञ. आहोस्वित्। ६ ज. झ. °भावप°।

मैवम् । भिन्नविषयत्वेन बाधासंभवात् । शरावसप्तदशसंख्ये यागसंबन्धे, मुष्टिचतुःसंख्ये तु निर्वापसंबन्धे, इति विषयभेदः । कथं तर्ह्यत्र बाधप्रसङ्गः, 'अन्यथानुपपत्त्यैव' इति वदामः । अनुपपत्तिश्च पूरणासंभवेन दर्शिता । पूरणं चैकबाधेनाप्युपपद्यते । मुष्टिबाधे—यथोचितं चतुःसंख्योपेतैः कुडवादिभिः पूर्तिः स्यात्, चतुःसंख्याबाधे—यथोचितमधिकसंख्योपेतैर्मुष्टिभिः पूर्तिर्भविष्यति । एवं तर्हि 'एकलोपः' इति तृतीयः पक्षोऽस्तु ।

तत्र संख्या धर्मः, मुष्टिर्धर्मी । तथा सति मुष्टौ लुप्ते सति निराश्रयस्य धर्मस्यासिद्धेः । संख्यालोपोऽप्यवश्यंभावी । संख्यायां लुप्तायां मुष्टिः शक्नोत्यवस्थातुम् । तस्मात्—'संख्यैव लुप्यताम्' । इति प्राप्ते—

ब्रूमः—चतुःसंख्या तावन्न मुष्टिनाऽन्वेति कर्मकारकवाचिद्वितीयाविभक्त्यन्तस्य चतुःशब्दस्य सकर्मकेण निर्वपतिधातुना साक्षादन्वयात् । अतश्चतुःसंख्या न मुष्टिधर्मः पार्ष्ठिकान्वयेन तु मुष्टिविशेषणं भविष्यति । संख्यामुष्ट्योः क्रियासंबन्धे समाने सत्यपि प्रथमश्रुतत्वात्साऽनुगृह्यते । चरमश्रुतत्वेन दुर्बलो मुष्टिर्बाध्यते इति राद्धान्तः ॥ ३२ ॥ ३३ ॥ ३४ ॥

(एकोनत्रिंशे—धेन्वादिशब्दानां गोवाचिताधिकरणे सूत्रम्—)

औत्पत्तिके तु द्रव्यतो विकारः स्यादकार्यत्वात् ॥ ६८ ॥

एकोनत्रिंशाधिकरणमारचयति—

धेनुवत्सर्षभाश्छागे गावि वा गुणकीर्तनात् ।
अजेऽतिदिष्टे स्युर्मैवं गोजात्येकगुणोक्तितः ॥ ३५ ॥

पशुविकृतिषु श्रूयते—'द्यावापृथिव्यां धेनुमालभेत । मारुतं वत्सम् । ऐन्द्रमृषभम्' इति । तत्र धेनुशब्दो नवप्रसूतिकामाचष्टे वत्सशब्दो बालम् । ऋषभशब्दः पुमांसम् । तथा सति गुणवाचिन एते शब्दा अतिदिष्टमजद्रव्यमबाधित्वा तदेव द्रव्यं यथोक्तगुणविशिष्टं वदन्ति । गौस्तु न प्रत्यक्षमिह श्रूयते, नाप्यतिदिश्यते प्रकृतावनुपदिष्टत्वात् । अतो न गां विशिंषन्ति । इति पूर्वः पक्षः ।

न खल्वेते यथोक्तगुणसामान्यवाचिनः, किं तर्हि गोगतानेव तान्गुणानाहुः । अतस्ते शब्दा अजेऽनुपपन्नाः सन्तोऽनुपदिष्टमनतिदिष्टमपि गां मुख्यवृत्त्या विशिंषन्तश्छागं बाधन्ते । इति राद्धान्तः ॥ ३५ ॥

---

१ ख. ज. झ. ञ. °पत्त्या, । इ° । २ क. ख्या मुष्टिधर्मो भवति । त° । च. °ख्याधर्मो मुष्टिधर्मः । त° । ३ क. च. पाक्षिका° । ख. पार्ष्ठिकत्वानये° । ४ ज. झ. °र्षभाश्छा° । ५ क. ख. ज. झ. ञ. ऐन्द्रं वृष° ।

(त्रिंशे—' वायव्यं श्वेतम् ' इत्यत्राजस्यैवाऽऽलम्भनाधिकरणे सूत्रम्–)

नैमित्तिके तु कार्यत्वात्प्रकृतेः स्यात्तदापत्तेः ॥ ६९ ॥

त्रिंशाधिकरणमारचयति—

वायव्यं श्वेतमित्यत्र यः कोऽपि च्छाग एव वा ।

विशेषानुक्तितः कोऽपि च्छाग एवास्त्वबाधनात् ॥ ३६ ॥

'वायव्यं श्वेतमालभेत भूतिकामः' इत्यत्र श्वेतशब्दस्य धेन्वादिशब्दवज्जातिविशेषवाचित्वाभावाद्यं कंचिदपि पशुं श्वेतगुणकं समर्पयति । इति पूर्वं पक्षः ।

चोदकप्राप्तस्याजस्य बाधे कारणाभावात्तमेव समर्पयति । इति राद्धान्तः ॥३६॥

(एकत्रिंशे—खलेवालीतण्डुलयोः खादिरत्वैहत्वानियमाधिकरणे सूत्रम्–)

विप्रतिषेधे तद्वचनात्प्राकृतगुणलोपः
स्यात्तेन च कर्मसंयोगात् ॥ ७० ॥

एकत्रिंशाधिकरणमारचयति—

खलेवालीतण्डुलयोः । खादिरत्वैहता न वा ।

यूपोक्तेर्मुख्यकृत्यर्थमुद्देशात्खादिरी हि सा ॥ ३७ ॥

अवघाताद्यबाधार्थं वैहता तण्डुलेष्वपि ।

प्रत्यक्षवचनत्वार्थं कार्यं यूपेन लक्ष्यताम् ॥ ३८ ॥

अन्तरेण हविर्देवयोगान्नात्रातिदेशनम् ।

न नियन्तुं शक्यतेऽतः खादिरत्वैहतोऽनयोः ॥ ३९ ॥

'खलेवाली यूपो भवति' इति साद्यस्क्रे श्रुतम् । तथा—'दधि घृतमापो धानास्तण्डुलास्तत्संसृष्टं प्राजापत्यम्' इति चित्रायागे श्रुतम् । तत्र प्रकृतौ यद्यूपस्य खादिरत्वम्, यच्च तण्डुलानां व्रीहिसंबन्धित्वम्, तदुभयमनयोर्विकृत्योरस्ति, न वा, इति संशयः । तत्र 'या खलेवाली सा यूपो भवति' इत्येवमुद्देश्यविधेयभावे यूपशब्दस्य मुख्यवृत्तिर्न सिध्येत्' यूपाहुतिशास्त्रीयतक्षणादिरहितायाः खलेवाल्या यूपशब्दवाच्यत्वासंभवात् । अतो यूपशब्देन यूपकार्यं पशुनियोजनादिकं लक्षणीयं स्यात् । यो यूपः सा खलेवाली, इत्येवमुद्देश्यविधेयभावे तु संस्कृतस्य खादिरयूपस्य खले मेढित्वेन स्थापयितुं शक्यत्वान्न कस्यापि शब्दस्य लक्षणावृत्तिः।

१ ख. ज. झ. ञ. °पगुणवा° । २ क. बाधकर° । ज. झ. ञ. बाधकार° । ३ ज. झ. सिद्धान्तः । ४ क. °चनार्थत्वात्कार्यं । ५ ज. झ. °ता तयोः । ६ ज. झ. °त्संपृक्तं प्रा° । ७ क. °यलक्ष° ।

तस्मात्-अस्ति खलेवाल्याः खादिरत्वम्, तथा चोदकप्राप्तावघाताद्यबाधार्थं तण्डुलेष्वपि व्रीहित्वम् अस्ति। इति पूर्वः पक्षः।

यूपमुद्दिश्य खलेवालीत्वविधाने यूपशब्दव्यवहितयोः खलेवालीशब्दप्रकृतिशब्दयोरश्रुतस्य नैरन्तर्यपाठस्य कल्प्यत्वेन वाक्यं परोक्षं स्यात्। ततः प्रत्यक्षवाक्यपरित्यागाद्वरं यूपशब्दस्य मुख्यवृत्तिमात्रहानम्। तथासति 'खलेवाल्यां पशुनियोजनादिकं कार्यम्, इति वाक्यार्थः संपद्यते। तत्र कुतो यूपः, कुतस्तरां तदीयं खादिरत्वम्। तथा तण्डुलानां पेषणसंयवनादिरहितानामेव प्रजापतिदेवतासंबन्धोऽत्र श्रूयते। प्रकृतौ तु पेषणादिपरम्परया निष्पन्नस्य तण्डुलकार्यस्य पुरोडाशस्य हविषो देवतासंबन्धः। अतोऽसमानत्वान्नात्र चोदकातिदेशः। तथा सति खादिरत्वव्रीहित्वनियमाभावाद्या काचित्खलेवाली, तण्डुलाश्च ये केचित्सन्तु। इति राद्धान्तः॥३७॥३८॥३९॥

( द्वात्रिंशे-खलेवाल्यां तक्षणाद्यननुष्ठानाधिकरणे सूत्रे ७१-७२)।

परेषां प्रतिषेधः स्यात्॥ ७१ ॥ प्रतिषेधाच्च॥ ७२ ॥

द्वात्रिंशाधिकरणमारचयति-

खलेवाल्यां जोषणं च च्छेदनं तक्षणोच्छ्रयौ।
स्युर्वा नो चोदकात्स्युर्नो वैयर्थ्याच्च विरोधतः॥ ४० ॥

जोषणं प्रीतिपूर्वको यूपीयवृक्षस्य लक्षणलक्षिततया सेव्यत्वनिश्चयः। तल्लक्षणानि चाऽऽपस्तम्बेनोक्तानि-'समेजातमशाखोजं बहुपर्णशाखमप्रतिशुष्काग्रमसुषिरम्' इत्यादीनि। खलेवाल्यां चोदकप्राप्ता अपि जोषणादयो नो कर्तव्याः। कुतः-वैयर्थ्यात्। पूर्वसिद्धाया एव खलेवाल्या यूपकार्ये विनियोगमात्रेण शास्त्रार्थस्य कृतत्वादन्यज्जोषणादिकं कृतमप्यनर्थकम्। अपि च तक्षणादीनि यूपस्वसंपादकानि। खलेवाली तु न यूपः। किंतु-अयूपे केवलं यूपकार्यमतिदिश्यते। तस्मात्-तक्षणादीनि तत्र न कर्तव्यानि। किंच यथा वृक्षस्य च्छेदनादिना वृक्षत्वमपैति, तथा खलेवालीत्वमेवापेयात्। न हि वरघाताय कन्योद्वाहः। जोषणस्य तु वृक्षत्वदशायां कर्तव्यस्य न खलेवालीत्वदशायां प्राप्तिरस्ति। तस्मात्-जोषणादयो न सन्ति।

( त्रयस्त्रिंशे-खलेवाल्यां पर्यूहणादिसंस्काराणामनुष्ठानाधिकरणे-सूत्रम्-- )

अर्थाभावे संस्कारस्त्वं स्यात्॥ ७३ ॥

( त्रयस्त्रिंशाधिकरणमारचयति-

१ च. °साल ब°। २ ज. ञ. °तिमुष्का°।

पर्यूहणाद्यञ्जनादि न स्यात्स्याद्वाऽत्र पूर्ववत् ।
न स्याद्दृष्टादृष्टभावादविरोधाच्च तद्भवेत् ॥ ४१ ॥

सन्ति प्रकृतौ पर्यूहणादयः । तथा च कल्पसूत्रकारः—'ब्रह्मवनिं त्वा क्षत्रवनिम्'—इति प्रदक्षिणं पांसुभिः पर्यूह्य, 'ब्रह्म दृंह क्षत्रं दृंह'—इति मैत्रावरुणदण्डेन समभूमिपरिदृंहणं कृत्वा, 'उत्तम्भय पृथिवीम्'—इत्यद्भिः परिषिञ्चति' इति । अस्ति चाञ्जनप्रोक्षणादि । तदेतदुभयविधमत्र खलेवाल्यां नास्ति, अयूपत्वेन च्छेदनादिवत्तन्निवृत्तेः । इति पूर्वः पक्षः ।

न तावदुभयं छेदनादिवद्दृष्टार्थम्, बलीवर्दादिभिश्चालितस्य मेढेः पर्यूहणादिभिर्दृढीकरणस्य दृष्टप्रयोजनस्य संभवात् । अञ्जनादिकं प्रकृताविवादृष्टार्थम् । न चैतेनोभयेन खलेवालीत्वमपैति । तस्मात्—अयूपत्वेऽपि यत् ) सार्थकमविरुद्धं च, तद्भवेत् ॥ ४१ ॥

( चतुर्विंशे—मतद्वयसहितेऽधिकरणे सूत्रम्— ) ।

अर्थेन च विपर्यासे तादर्थ्यात्तत्त्वमेव स्यात् ॥ ७४ ॥

चतुर्विंशाधिकरणं (महापितृयज्ञे धानास्ववघातानुष्ठानबोधक) भाष्यमते नाऽऽरचयति—

नावघातोऽवघातो वा धानानां नाविनश्यये ।
न नाशः क्रमबाधेऽतोऽवघातो नात्र बाध्यते ॥ ४२ ॥

महापितृयज्ञे हविः किंचिच्छ्रूयते—'पितृभ्यो बर्हिषद्भ्यो धानाः' इति । धानाशब्देन भृष्टं धान्यमभिधीयते । तासां धानानामवघाते सति सक्तुभावापत्तेर्धानात्वमेव विनश्येत् । अतस्तासामविनाशाय नास्त्यवघातः । इति पूर्वः पक्षः ।

'धाना अवहन्तव्याः' इति यत्र चोदकवाक्यम् । तस्मिंश्च वाक्ये भर्जनसंपादितं धानात्वं पूर्वभावि, पश्चाद्भावी त्ववघातः, इति क्रमः प्रतीयते । तं क्रमं बाधित्वा प्रथमतोऽवघाते सति नास्ति धानात्वनाशः । अवघातस्य पदार्थस्य बाधाद्वरं तद्धर्मस्य क्रममात्रस्य बाधनम् । तस्मात्—अवघातः कार्यः ॥ ४२ ॥

तदेवाधिकरणं ( पेषणस्य प्राकृततताबोधक ) वार्तिकमतेनाऽऽरचयति—

पेषणं नूतनं मन्थे प्राकृतं वा क्रमान्तरात् ।
नूतनं प्राकृतं धर्ममात्रबाधस्य लाघवात् ॥ ४३ ॥

महापितृयज्ञ एवं श्रूयते—'पितृभ्योऽग्निष्वात्तेभ्योऽभिवान्यायै दुग्धे मन्थम्' इति।

---

१ ख. °णाभ्यञ्ज° । २ क. ख. च. ज. °रिबृंह । ३ ज. मेधेः । ४ ज. झ. ञ. °ढी-कार । ५ ज. झ. °र्थम° । ६ च. °धे नोऽव° । ७ ज. झ. विनश्यते । ८ क. °घाताहस्य° । ९ ज. °[illegible]थ प्रा° ।

मृतवत्सा धेनुरभिधान्या । द्रवद्रव्ये प्रक्षिप्य मथिताः सक्तवो मन्थः । तत्र यत्पेषणम्, तन्न प्राकृतम् । कुतः—क्रमव्यत्यासात् । प्रकृतौ हि प्रथमतः पेषणम्, पश्चात्पुरोडाशश्रपणम्, अत्र तु प्रथमतः श्रपणेन धानाः संपाद्य पश्चात्तासामुत्पाद्य पेषणम् । तस्मात्—नूतनम् । इति प्राप्ते—

ब्रूमः—चोदकप्राप्तप्राकृतपेषणतत्क्रमयोरुभयोर्बाधे गौरवात्क्रमभात्रं बाध्यम् । पेषणपदार्थस्तु स एवेति तद्धर्माः 'दृषदि मन्थः' इत्यादयोऽत्र कर्तव्याः ।

इति श्रीमाधवीये जैमिनीन्यायमालाविस्तरे दशमस्याध्यायस्य द्वितीयः पादः ॥ २ ॥

| | अत्र पादे | आदितः । |
|---|---|---|
| अधिकरणानि | ३४ | ६५१ । |
| सूत्राणि | ७४ | १७८५ । |

( अथ दशमाध्यायस्य तृतीयः पादः ) ।

(प्रथमे—पश्वादौ सामिधेन्यादिप्राकृतेतिकर्तव्यतानुष्ठानाधिकरणे सूत्राणि १—१२ ) ।

विकृतौ शब्दवत्त्वात्प्रधानस्य गुणानामधिकोत्पत्तिः संनिधानात् ॥ १ ॥ प्रकृतिवत्तस्य चानुपरोधः ॥२॥ चोदनाप्रभुत्वाच्च ॥ ३ ॥ प्रधानं त्वङ्गसंयुक्तं तथाभूतमपूर्वं स्यात्तस्य विध्युपलक्षणात्सर्वो हि पूर्ववान्विधिरविशेषात्प्रवर्तितः ॥४॥ न चाङ्गविधिरनङ्गे स्यात् ॥ ५ ॥ कर्मणश्चैकशब्द्यात्संनिधाने विधेराख्यासंयोगो गुणेन तद्विकारः स्याच्छब्दस्य विधिगामित्वाद्गुणस्य चोपदेश्यत्वात् ॥ ६ ॥ अकार्यत्वाच्च नाम्नः ॥ ७ ॥ तुल्या च प्रभुता गुणे ॥ ८ ॥ सर्वमेवं

१ ज. झ. ञ. मन्थम् । २ ज. झ. °डाशे श्र° । ३ ज. ञ. °नमिदम् । ४ क. दृषदावित्यमन्थः । ज. झ. दृषदि मन्त्रः ।

प्रधानमिति चेत् ॥ ९ ॥ तथाभूतेन संयोगाद्यथार्थं-
विधयः स्युः ॥१०॥ विधित्वं चाविशिष्टमेवं प्राकृता-
नां वैकृतैः कर्मणा योगात्तस्मात्सर्वं प्रधानार्थम् ॥११॥
समत्वाच्च तदुत्पत्तेः संस्कारैरधिकारः स्यात् ॥ १२ ॥

तृतीयपादे प्रथमाधिकरणमारचयति—

प्रयाजैकादशत्वादिविशेषविधिभिर्युते ।
पश्वादौ सामिधेन्यादिर्विध्यन्तो नास्त्युतास्त्यसौ ॥ १ ॥
विशिष्टाङ्गविधौ नासौ चोदकस्याप्रवृत्तितः ।
लाघवाद्गुणमात्रस्य विधेः सोऽस्त्यातिदेशतः ॥ २ ॥

अग्नीषोमीयपशावेकादश प्रयाजाः श्रुताः, चातुर्मास्येषु नव प्रयाजाः, वायव्यपशौ 'हिरण्यगर्भः'-इत्याघारमन्त्रः, इत्यादिभिर्युतेषु पश्वादिषु प्राकृतेतिकर्तव्यता सामिधेन्यादिर्नास्ति । कुतः—संख्यामन्त्रादिगुणविशिष्टस्य प्रयाजाघाराद्यङ्गस्य प्रत्यक्षविधौ सत्युपदिष्टेनैवाङ्गेन निराकाङ्क्षे पश्वादौ चोदकस्याप्रवृत्तेः । इति पूर्वः पक्षः ।

पश्वादिविधिस्तावदितिकर्तव्यतामाकाङ्क्षति । तत्र—'प्राकृताङ्गान्यतिदिश्य वा तदाकाङ्क्षा पूर्यताम्, विवक्ष्यमाणान्यङ्गान्तराण्युपदिश्य वा' इति वीक्षायां क्लृप्तोपकारतया प्राकृताङ्गातिदेश एव न्याय्यः । ततश्चातिदेशतः प्राप्तप्रयाजा-द्यङ्गमनूद्य गुणमात्रविधौ लाघवं भवति । गुणविशिष्टाङ्गविधौ तु गौरवं स्यात् । तस्मात्—संख्यान्तरमन्त्रान्तराभ्यां पूर्वयोः संख्यामन्त्रयोर्बाधेऽपि प्रयाजाघारसामि-धेन्यादीतिकर्तव्यता प्राप्नोत्येवातिदेशात् । इति राद्धान्तः ॥ १ ॥ २ ॥

(द्वितीये—हिरण्यगर्भमन्त्रस्योत्तराघारगुणताधिकरणे सूत्राणि १३—१७)॥

हिरण्यगर्भः पूर्वस्य मन्त्रलिङ्गात् ॥ १३ ॥ प्रकृ-
त्यनुपरोधाच्च ॥ १४ ॥ उत्तरस्य वा मन्त्रार्थित्वात्
॥१५॥ विध्यातिदेशात्तच्छ्रुतौ विकारः स्याद्गुणा-

---

१ ज. झ. °पादस्य प्र° । २ ख. ज. झ. °त्रिर्विध्य° । ३ ज. झ. नास्ति वाऽस्त्य° । ४ ख. °कस्य प्र° । ५क. विवक्षायाः । ६ ज. झ. °यां प्राकृतोपकारकत° । ७ झ. °बाधि-तेऽपि । ८ ख. °प्नोत्यत एवा° ।

नामुपदेश्यत्वात् ॥ १६ ॥ पूर्वस्मिंश्चामन्त्रदर्शनात् ॥ १७ ॥

द्वितीयाधिकरणमारचयति—

हिरण्यगर्भ आघारे पूर्वस्मिन्नुत्तरेऽथवा ।
लिङ्गादाद्ये समं लिङ्गं क्लृप्तकार्यत्वतोऽन्तिमे ॥ ३ ॥

वायव्यपशौ—'हिरण्यगर्भः समवर्तताग्रे—इत्याघारमाघारयति' इति श्रुतो मन्त्रः पूर्वस्मिन्नाघारे स्यात् । कुतः—मन्त्रलिङ्गात् । 'प्रकृतौ प्राजापत्यः पूर्व आघारः' अस्मिन्नपि मन्त्रे हिरण्यगर्भशब्देन प्रजापतिरभिधीयते । 'प्रजापतिर्वै हिरण्यगर्भः' इति वाक्यशेषात् । इति प्राप्ते—

ब्रूमः—अन्तिम आघारेऽयं मन्त्रः । कुतः—क्लृप्तकार्यत्वात् । प्रकृतावमन्त्रकः प्रथमाघारः 'प्रजापतिं मनसा ध्यायन्नाघारयति' इति ध्यानमात्रस्याभिधानात् । यतः 'तूष्णीमाघारमाघारयति' इत्यमन्त्रकत्वं साक्षादेव श्रुतम् । द्वितीये त्वाघारे 'ऊर्ध्वोऽध्वरः' इत्याद्यैन्द्रो मन्त्रो विहितः । अतो मन्त्रकार्यं तत्र क्लृप्तम् । तस्मात्—द्वितीये आघारे 'हिरण्यगर्भः'—मन्त्रविधिः । यत्तु प्रजापतिदेवता लिङ्गम्, तदिन्द्रेऽपि समानम् । इन्द्रोऽपि हि प्रजानां पतिः । तस्मात्—'ऊर्ध्वोऽध्वरः' इति मन्त्रं बाधित्वा हिरण्यादिमन्त्रस्तत्र विधीयते ॥ ३ ॥

( तृतीये— { चातुर्मास्येषु सोमेऽध्वासादननियोजनयोः प्राकृतगुणविधित्वाधिकरणे } सूत्राणि १८—२२)।

संस्कारे तु क्रियान्तरं तस्य विधायकत्वात् ॥ १८ ॥ प्रकृत्यनुपरोधाच्च ॥ १९ ॥ विधेस्तु तत्र भावात्संदेहे यस्य शब्दस्तदर्थः स्यात् ॥ २० ॥ संस्कारसामर्थ्याद्गुणसंयोगाच्च ॥ २१ ॥ विप्रतिषेधात्क्रियाप्रकरणे स्यात् ॥ २२ ॥

तृतीयाधिकरणमारचयति—

---

१ ख. श्रुतो । ज. झ. ततो । २ क. च. °रेम° । ३ ख. ज. झ. °थम आघा° । ४ क. ख. ञ. °तीय आघा° । ५ क. °रे "इन्द्र ऊ° । ६ ज. झ. °तीयाघ° । ७ ज. झ. °तिर्दे°।

किमुत्करासादनं च परिधौ च नियोजनम् ।
कर्मान्तरे प्राकृतयोर्गुणो वाऽऽद्योऽस्त्वसंभवात् ॥ ४ ॥
पृथुतामुत्कराग्रस्य परिधेश्च स्थविष्ठताम् ।
आश्रित्य संभवात्कर्तुं गुणौ तौ लाघवान्मतौ ॥ ५ ॥

सौमिकेषु चातुर्मास्येषु श्रूयते-'उत्करे वाजिनमासादयति-परिधौ पशुं नियुञ्जीत' इति । एते आसादननियोजने प्राकृताभ्यामन्ये कर्मणी विधीयते, इत्याद्यः पक्षो युक्तः । कुतः—प्राकृतयोरत्यन्तमसंभवात् । वेदेरुद्धृतानां पांसूनां तीक्ष्णाग्रो राशिरुत्करः । न हि तत्र वाजिनाख्यनीरस्याऽऽसादनं संभवति । नाप्यङ्गुलीवद्णीयसि परिधौ पशुर्नियोक्तुं शक्यते । ततः प्राकृतस्य दृष्टप्रयोजनस्यासंभवाददृष्टार्थत्वम् । तदेतत्सदृशे आसादननियोजने कर्मान्तरे विधीयेते । इति प्राप्ते ।

ब्रूमः—प्रयाजैकादशत्वादिवल्लाघवात्प्राकृतयोरेव वाजिनासादनपशुनियोजनयोरुत्करपारिधिगुणो विधीयेते । न च तीक्ष्णत्वेऽपि सूच्यग्रवदयोग्यत्वम्, मूलाग्रस्य पृथुत्वेन स्वल्पपात्रासादनयोग्यत्वात् । परिधिश्चैष्टिकवेद्यामिव नाणीयान्, किं तूत्तरवेद्यां स्थविष्ठः । तस्मात्—गुणविधिः ॥ ४ ॥ ५ ॥

( चतुर्थे— { आग्नचयने प्राकृतवैकृतोभयदीक्षाहुतीनामनुष्ठानाधिकरणे } [सू २९ ) ।

षड्भिर्दीक्षयतीति तासां मन्त्रविकारः श्रुतिसंयोगात् ॥ २३ ॥ अभ्यासात्तु प्रधानस्य ॥ २४ ॥ आवृत्त्या मन्त्रकर्म स्यात् ॥ २५ ॥ अपि वा प्रतिमन्त्रत्वात्प्राकृतानामहानिः स्यादन्यायश्च कृतेऽभ्यासः ॥ २६ ॥ पौर्वापर्यं चाभ्यासे नोपपद्यते नैमित्तिकत्वात् ॥ २७ ॥ तत्पृथक्त्वं च दर्शयति ॥ २८ ॥ न चाविशेषाद्व्यपदेशः स्यात् ॥ २९ ॥

चतुर्थाधिकरणमारचयति—

षड्भिर्दीक्षयतीत्यग्निगतं प्राकृतबाधकम् ।
समुच्चितं वा बाधः स्यात्कार्यैक्यात्तच्च वाक्यतः ॥ ६ ॥

---

१ क. °दने च. । २ क. ख. घ. ञ. सपशुकेषु । ३ क. ख. च. विधीयते । ४ ज. झ. °क्यात्पारबा° ।

अग्नौ होमाक्लृप्तताक्लृप्तेरतिदिष्टेन तुल्यता ।
विनाऽऽवृत्तिं द्वादशत्वसिद्ध्यै स्यात्समुच्चयः ॥ ७ ॥

अग्निचयने दीक्षाहुतयः श्रूयन्ते-'बह्वीभिर्दीक्षयति' इति । प्राकृतावपि 'स्रुवेण चतस्रो जुहोति दीक्षितत्वाय'-इत्यादिना दीक्षाहुतयः षड्विहिताः । तत्र मन्त्रा भिन्नाः-आकूत्यै प्रयुजेऽग्नये स्वाहा'-इत्यादयः ×प्राकृता मन्त्राः । आकूतिमग्निं प्रयुजं स्वाहा' इत्यादयो वैकृताः । तत्र 'वैकृतमाहुतिमन्त्रषट्कं किं प्राकृतस्य बाधकम्, किंवा प्राकृतेन समुच्चितम्' इति संशये-'बाधकम्' इति तावत्प्राप्तम् । कुतः-कार्यैक्यात् । दीक्षणीयेष्ट्यङ्गभूताहुत्युपकारलक्षणं यत्कार्यं प्राकृतानां मन्त्राणाम्, तदेव वैकृतानामपि । न च-विकृतौ तत्र प्रतीयते-इति शङ्क्यम्, स्वाहान्ततारूपेण लिङ्गेन मन्त्राणामाहुत्युपकारकत्वप्रतीतेः । आहुतीनां च 'बह्वीभिर्दीक्षयति' इति वाक्येन दीक्षणीयाङ्गत्वप्रतीतेः । तस्मात्-श्रूयमाणैर्मन्त्रैरतिदिष्टानां बाधः । इति पूर्वः पक्षः ।

अग्नौ मन्त्राणां स्वरूपं यद्यपि प्रत्यक्षश्रुतिसिद्धम् । तथाऽपि होमाङ्गत्वं लिङ्गेन कल्प्यम् । तथा चातिदेशकल्प्यैर्मन्त्रैस्तुल्यबलत्वान्न बाध्यबाधकता । एवमपि न समुच्चये प्रमाणमस्ति इति चेत् ।

अस्त्येव, 'द्वादश जुहोति' इति संख्याविधानेन तत्सिद्धेः । न च-वैकृतानामेव षण्णामावृत्त्या सिध्यति-इति वाच्यम्, आवृत्तेरश्रुतत्वात् । न च-सा कल्पयितुं शक्यते अन्यथाऽपि संख्योपपत्तेः । तस्मात्-समुच्चयः इति सिद्धान्तः।

( पञ्चमे-पुनराधानेऽग्न्याधानदक्षिणानां निवृत्त्यधिकरणे सूत्राणि ३०-३३ ) ।

आग्न्याधेयस्य नैमित्तिके गुणविकारे दक्षिणा दानमधिकं स्याद्वाक्यसंयोगात् ॥ ३० ॥
शिष्टत्वाच्चेतरासां यथास्थानम् ॥ ३१ ॥ विका-

×'अग्नौ प्रकृतितो दीक्षाहुतयः षट्प्राप्ताः । तासां षण्मन्त्राः प्रकृतित एव प्राप्ताः-'आकूत्यै प्रयुजेऽग्नये स्वाहा' इत्यादयः । अग्नावपरे षण्मन्त्राः-'आकूतिमग्निं प्रयुजं स्वाहा' इत्यादय-इत्यादिशास्त्रदीपिकाऽप्येतत्संवादिनी । परं तु शाबरभाष्ये-आकूतिमग्निं प्रयुजं स्वाहा'-इति प्राकृत्यः । तथा वैकृत्यः-'अग्नये प्रयुजेऽग्नये स्वाहा' इति इत्यभिहितम् ।

१ ख. ज. झ. ञ. कल्पनीयम् । २ क. देशिकक° । ३ क. °त् । न । अस्त्ये° । ४ ख. ज. झ. ञ. अस्त्येवम् । ५ क. °व समुच्चयसिद्धेः ष° । ६ ख. च. ज. झ. ञ. राद्धान्तः ।

रसत्वप्रकरणे हि काम्यानि ॥ ३२ ॥ शङ्कते
च निवृत्तेरुभयत्वं हि श्रूयते ॥ ३३ ॥

पञ्चमाधिकरणमारचयति—

एकादिना समुच्चेयं पुनर्निष्कृत इत्यदः ।
बाधकं वा समुच्चेयमुभयीरित्युदीरणात् ॥ ८ ॥
आधानदक्षिणोपेतमुभयीरित्यनूद्यते ।
ददातीत्यविधायित्वात्कार्यैक्याद्बाधकं भवेत् ॥ ९ ॥

आधाने विकल्पिता गोद्रव्यदक्षिणा द्रव्यान्तरदक्षिणाश्चैवं श्रूयन्ते—'एका देया, षड् देयाः, द्वादश देया' इत्यादिना । पुनराधाने तु 'पुनर्निष्कृतो रथो दक्षिणा' इत्यादि श्रुतम् । भग्नः सन्पुनः समाहितः पुनर्निष्कृतः । सेयं पुनर्निष्कृतादिदक्षिणा किमतिदिष्टयैकादिसंख्यया समुच्चीयते, उत तां बाधते, इति संशयः । 'उभयीर्ददात्याधेयिकीः पौनराधेयिकीश्च' इत्युक्त्वात्समुच्चयः । इति पूर्वः पक्षः ।

'ददाति' इति वर्तमाननिर्देशस्य विधित्वाभावादाधानकाले पूर्वं दत्तं पुनराधानकाले तदेव दीयमानं च मिलित्वा 'उभयीः' इत्यनूद्यते । दक्षिणास्वरूपस्य कार्यस्यैकत्वादुपदिष्टमतिदिष्टस्य बाधकम् ॥ ८ ॥ ९ ॥

(षष्ठे आग्रयणे वासोवत्साभ्यामन्वाहार्यस्य निवृत्त्यधिकरणे सूत्रम्—)।

वासो वत्सं च सामान्यात् ॥ ३४ ॥

षष्ठाधिकरणमारचयति—

वासो वत्सं समुच्चेयमन्वाहार्येण वा न वा ।
अविरोधात्समुच्चेयं न कार्यैक्याद्विरोधतः ॥ १० ॥

आग्रयणे श्रूयते—'वासो दक्षिणा, वत्सः प्रथमजो दक्षिणा' इति । तदेतदतिदेशप्राप्तेनान्वाहार्येण सह विरोधाभावात्समुच्चीयते । इति मन्दः पूर्वपक्षः ।

एककार्यत्वेन विरोधित्वान्न समुच्चयः, किंतु बाधः । इति राद्धान्तः ॥ १० ॥

( सप्तमे—आग्रयणे वासोवत्सयोरन्वाहार्यधर्मानुष्ठानाधिकरणे सूत्रम् ) ।

अर्थापत्तेस्तद्धर्मा स्यान्निमित्ताख्याभिसंयोगात् ॥ ३५ ॥

सप्तमाधिकरणमारचयति—

---

१ ज. झ. धायकं । २ क. °पेते उभ° । ३ ख. त्यभिधा° । ४ ख. ज. झ. ञ. °णा० श्च बह्व्य श्रू° । च. णाश्च बह्व्यः श्रू° । ५ ख. °निष्कृतो र° । ६ ख. ज. झ. °त्स्यामन्वाहे° ७ क. °मानापदेश° । ८ ज. झ. °णात्वरू° ।

अन्वाहार्यस्य धर्मोऽत्र न कार्यः क्रियतेऽथ वा ।
न तद्धर्मत्वतो मैवं साधनत्वप्रयुक्तितः ॥ ११ ॥

सन्त्यन्वाहार्यधर्माः । तान्कल्पसूत्रकार उदाजहार—'दक्षिणतद्भ्य उपहर्तवा इति संप्रेष्यति । ये ब्राह्मणा उत्तरतः, तान्यजमान आह—दक्षिणत एत—इति । तेभ्योऽन्वाहार्यं ददाति । 'ब्राह्मणा अयं व ओदनः, प्रतिगृह्णीत । उत्तरतः परीत' इति संप्रेष्यति' इति । सोऽयं धर्मोऽत्र वासोवत्से न कार्यः, तस्यान्वाहार्यनिमित्तत्वात् ।

मैवम् । अन्वाहार्यस्य दक्षिणारूपत्वेनानतिसाधनत्वप्रयुक्तास्ते धर्माः क्रियन्ते । तत्साधनत्वं वाससि वत्सेऽपि समानम् । तस्मात्—अत्रापि सन्ति ते धर्माः ॥ ११ ॥

( अष्टमे—आग्रयणे वत्से पाकाभावाधिकरणे—सूत्रम्— ) ।

दाने पाकोऽर्थलक्षणः ॥ ३६ ॥

अष्टमाधिकरणमारचयति—

पाकोऽस्ति नो वा वत्से स्यादन्वाहार्यस्य दर्शनात् ।
न वत्सनाशादश्रौती दक्षिणा मांसदानतः ॥ १२ ॥

अन्वाहार्ये पाकोऽस्ति । पूर्वन्यायेन तद्धर्मातिदेशाद्वत्सेऽपि पाकः स्यात् । इति चेत् ।

न । वत्सनाशप्रसङ्गात् । ' अस्तु ' इति चेत् । न । तथासति मांसदानेन श्रुतहानाश्रुतकल्पने प्रसज्येयाताम् । तस्मात्—नास्ति वत्से पाकः ॥ १२ ॥

( नवमे—आग्रयणे वाससि पाकाभावाधिकरणे सूत्रम्— ) ।

पाकस्य चान्नकारितत्वात् ॥ ३७ ॥

नवमाधिकरणमारचयति—

वासस्यस्ति न वा पाको विनाशाभावतोऽस्त्ययसौ ।
वैयर्थ्यादप्यशक्यत्वात्पाको वाससि नोचितः ॥ १३ ॥

वाससि उष्णोदकभाण्डप्रक्षेपेण वत्सस्येव विनाशो नास्ति । तस्मात्—अन्वाहार्यवत्पाकोऽस्ति । इति चेत् ।

---

१ ज, झ. °त्वथपूक्ति° । २ च. ज. झ. ञ. °र्माः । तत्कल्प° । ३ क. °क्षिणास° । ४ क. ख. ञ. उपहर्तव्या । ५ क. ख. एत्र । ६ ख. ञ. °नः, प्रीता गृ° । ७ ज. झ. °प्रयोक्त्या तेन ध° । ८ ख. °न्ते । तत्तत्सा° । ९ ख. °स्ति । तद्ध° । १० ख. ज. झ. °हान्यश्रु° । ११ ख. °तो ह्यसौ ।

न। ओदनत्वार्थो हि पाकः। न हि वाससः सहस्रधा पच्यमानस्याप्योदनता संभवति। न च पाकः कर्तुं शक्यते। नह्युष्णोदकसंयोगः पाकशब्दार्थः, किं तर्हि तण्डुलानां विक्लित्तिं जनयितुं कृतः पुरुषप्रयत्नः। न च वाससि विक्लित्तिः। तस्मात्—अतिदिष्टः पाको बाध्यते ॥१३॥

( दशमे—आग्रयणे वासोवत्सयोरभिघारणाभावाधिकरणे सूत्रम्— )।

तथाऽभिघारणस्य ॥ ३८ ॥

दशमाधिकरणमारचयति—

अभिघारोऽस्ति नो वाऽत्र शक्यत्वाद्वत्सवाससोः।
अस्त्यन्वाहार्यवन्मैवं स्वादुताया असंभवात् ॥ १४ ॥

स्पष्टोऽर्थः ॥ १४ ॥

( एकादशे— {ज्योतिष्टोमे गवामेव द्वादशशतस्य दक्षिणात्वाधिकरणे} सूत्राणि ३९—४९ )।

द्रव्यविधिसंनिधौ संख्या तेषां गुणत्वात्स्यात् ॥ ३९ ॥ समत्वात्तु गुणानामेकस्य श्रुतिसंयोगात् ॥ ४० यस्य वा संनिधाने स्याद्वाक्यतो ह्यभिसंबन्धः ॥ ४१ ॥ असंयुक्ता तु तुल्यवदितराभिर्विधीयन्ते तस्मात्सर्वाधिकारः स्यात् ॥ ४२ ॥ असंयोगाद्विधिश्रुतावेकजाताधिकारः स्याच्छ्रुत्याकोपात्क्रतोः ॥ ४३ ॥ शब्दार्थश्चापि लोकवत् ॥ ४४ ॥ +सा पशूनामुत्पत्तितो विभागात् ॥४५॥

+ शाबरभाष्ये तु—इतः पूर्वैः सूत्रैः—'एकजातीयानामेव द्वादशशतसंख्या' इति साधितम्। इत आरभ्य 'सा संख्या गवामेव' इतिसाधितम्। इत्यधिकरणद्वयमङ्गीकृतम्। न्यायमाला तु शास्त्रदीपिकानुसारिणी।

१ क. पाकः। ओदनदाने क्रियमाणे यजमानेन प्रैषः क्रियते—'दक्षिणभाग आगन्तव्यम्' उत्तर आगन्तव्यम्, इति। अयं प्रैष ओदनदानस्य धर्मत्वादोदनधर्म इत्युच्यते। अयंधर्मो वाससि वत्से च न कर्तव्य इति पूर्वपक्षः। सिद्धान्ते कर्तव्यः। न हि वाससः। २ क. 'स्ति—आघारोऽस्ति न वा यत्र। ख. च. ज. ति—आघारोऽत्रास्ति।'

अनियमोऽविशेषात् ॥ ४६ ॥ भागित्वाद्वा गवां स्यात् ॥ ४७ ॥ प्रत्ययात् ॥ ४८ ॥ लिङ्गदर्शनाच्च ॥ ४९ ॥

एकादशाधिकरणमारचयति—

दक्षिणा द्वादशशतं तस्येत्येतद्गवादिषु ।
सर्वेषु केषुचिद्वाऽऽद्ये प्रत्येकं मिलितेषु वा ॥ १५ ॥
संख्यागुणस्य प्रत्येकं गवाद्यन्वयतोऽग्रिमः ।
वाक्यभेदान्न तत्किंतु मिलितेषु समुच्चयात् ॥ १६ ॥
संख्यानौचित्यतो धान्ये सर्वेषां न समुच्चयः ।
असर्वेष्विति पक्षेऽपि पशवो वैकमेव वा ॥ १७ ॥
संख्यौचित्येन पशवो नैतत्तस्येत्यनन्वयात् ।
एकत्वेऽप्यत्र यत्किंचिन्माषा वा गाव एव वा ॥ १८ ॥
यत्किंचिन्नियमाभावान्माषाः सन्ति हि तत्त्वतः ।
माषा निराकृता गावः प्राथम्याच्चोपकारतः ॥ १९ ॥
तस्येति वाक्याद्द्रव्यं न युक्तः प्रकृतः क्रतुः ।
संख्यान्तरं चेद्विकृतौ स्याद्गवां बाध्यतामियम् ॥ २० ॥

ज्योतिष्टोमे देयद्रव्याण्यनुक्रम्य संख्याविशिष्टा दक्षिणा विधीयते—'गौश्चाश्वश्चाश्वतरश्च गर्दभश्चाजाश्चावयश्च व्रीहयश्च यवाश्च तिलाश्च माषाश्च तस्य द्वादशशतं दक्षिणा' इति । द्वादशाधिकं शतम् । तत्र संशयः—सेयं संख्या किं गवादिसर्वद्रव्यविषया किंवा कतिपयविषया । सर्वत्वपक्षेऽपि—प्रतिद्रव्यमियं संख्या, उत मिलितानाम् । तत्र—गवादिद्रव्याणि प्रधानानि, संख्या, तद्गतो गुणः । प्रतिप्रधानं च गुणावृत्तिर्न्याय्या । तस्मात्—'गवादिद्रव्येषु प्रत्येकमियं संख्या' इति प्रथमपक्षगते प्रथमे संख्याविकल्पे प्राप्ते—

ब्रूमः—नैतद्युक्तम् । वाक्यभेदप्रसङ्गात् । अतो 'मिलितानामियं संख्या' इति द्वितीयसंख्याविकल्पोऽभ्युपेयः । तथा च सति समुच्चयवाचिनश्चशब्दा अनुगृह्यन्ते ।

एतदप्ययुक्तम् । अनौचित्यात् । न हि व्रीहियवादिधान्येषु द्वादशाधिकशतान्तर्गता द्वित्रादिसंख्योचिता । परिक्रीतस्यार्त्विजो द्वित्रैर्व्रीहिबीजैः प्रयोजना-

१ क. ख. ज. झ. ञ. °त् ॥ १६ ॥ असंख्यानौचि° । २ ज. झ. °वो वैकृतस्य° । ३ ख. ज. झ. ञ. °मे शाखावि । ४ ख. ज. झ. ञ. 'यशाखावि' । ५ ख. ज. झ. ञ. अनुपपत्तेरस्य । ६ ज. झ. °गतावि° ।

माषाणामप्रस्थाधिकवायादिसंख्या तत्रोचिता । न चेयमत्र श्रुता । तस्मात्—'मिलितानां सर्वेषां समुच्चयः' इत्ययं पक्षो न युक्तः । 'कतिपयविषया संख्या' इत्यस्मिन्नपि पक्षे—किमाद्याः षड्विधाः पशवः, किंवा गवादिद्रव्येष्वेकं द्रव्यम् । तत्र पशुषु श्रूयमाणायाः संख्याया उचितत्वात् 'पशवः' इति प्राप्ते—

ब्रूमः—नैतद्युक्तम् । 'तस्य द्वादशशतं दक्षिणा' इत्यत्र 'तस्य' इत्येकवचनान्तेन षण्णां गवादिपशूनामन्वेतुमयोग्यत्वात् । एकत्वपक्षे—किं यत्किंचिदेकम्, किंवा माषद्रव्यम्, उत गोद्रव्यम् । तत्र-नियामकाभावात् । 'यत्किंचित्' इति प्राप्तम् ।

तन्न । संनिधेर्नियामकत्वात् । 'माषाश्च तस्य द्वादशशतं दक्षिणा' इति माषाः संनिहिताः । तर्हि 'अस्तु माषद्रव्यम्' इति चेत् ।

न । प्रस्थादिपरिमाणसंख्यौचित्येन निराकृतत्वात् । तस्मात् 'गोद्रव्यम्' इति पक्षः परिशिष्यते । प्रथमभूतत्वोपकारौ तत्र नियामकौ । अस्ति हि महानुपकारः । ऋत्विजः प्रतिग्रहीतुर्गवेनाऽऽज्यक्षीरादिनाऽग्निहोत्रदर्शपूर्णमासादिसिद्धेः । ननु—'तस्य प्रकृतस्य क्रतोर्द्वादशशतं दक्षिणा' इत्यन्वयाद्गोद्रव्यं न प्रतीयते—इति चेत् । न । 'यद्गोद्रव्यं तस्य द्वादशशतम्' इति वाक्येन तत्प्रतीतेः । वाक्यं हि प्रकरणाद्बलीयः । तस्मात्-'गवां द्वादशशतम्' इति राद्धान्तः । विकृतिषु यत्र गोदक्षिणायाः संख्यान्तरं श्रुतम् । तत्रास्याः संख्याया बाधो विचारफलम् ॥१९॥२०॥

( द्वादशे—विभज्य गोदक्षिणाया दानाधिकरणे सूत्राणि ५०—५२) ।

तस्य दानं विभागेन प्रदानानां पृथक्त्वात्
॥ ५० ॥ परिक्रयाच्च लोकवत् ॥ ५१ ॥
विभागं चापि दर्शयति ॥ ५२ ॥

द्वादशाधिकरणमारचयति—

गोदाने विहिते स्वेच्छा नियतिर्वाऽन्तिमेऽपि किम् ।
अविभागो विभागो वा नियमानुक्तितोऽग्रिमः ॥ २१ ॥
अविभागो बहुत्वोक्तेर्बहुत्वं न विवक्षितम् ।
विभागे स्वामिभिः स्वत्वसिद्धेर्लिङ्गं च दृश्यते ॥ २२ ॥

पूर्वोक्त एव गवां दाने संशयः—ऋत्विग्भ्यो देयानामुक्तसंख्यानां गवां विभागाविभागयोर्यजमानेच्छैव प्रयोजिका, उतास्त्यन्यतरनियतिः । यदाऽपि नियतिः,

१ झ. °क्कुडवादि° । २ क. मन्त्राश्रु° । ३ ख. ज. झ. °यद्रव्यवि° । ४ ज. झ. °मस्तुत° ५ ज. झ. ञ. सिद्धान्तः । ६ ख. ज. झ. ञ. °भिः स्वत्वसि° ७ ज. झ. देवाना° ।

तदाऽपि अविभागः, विभागो वा । विभागनियामकस्यानुक्तत्वात् ' इच्छा ' इति तावत्प्राप्तम् । ' ऋत्विग्भ्यो दक्षिणां ददाति' इति बहुवचनश्रवणेन समूहस्य प्रतिग्रहीतृत्वात् 'अविभागः' इति पक्षान्तरम् ।

ग्रहैकत्ववदुद्देश्यगतत्वाद्बहुत्वं न विवक्षितमित्येकैकः प्रतिग्रहीता । तथा सति विभागावश्यंभावात् । समूहाय दत्ते सत्येकैकस्य स्वामित्वाभावे परस्वत्वापादनलक्षणो दानशब्दार्थो न सिध्येत् । किंच 'तुथो वा विश्ववेदा विभजतु' इति मन्त्रे विभागलिङ्गं दृश्यते । तस्मात्–विभागानियमो राद्धान्तः ॥ २२ ॥

( त्रयोदशे–ज्योतिष्टोमे समाख्यानुसारेण दक्षिणाविभागाधिकरणे सूत्राणि ५३–५५ ) ।

**समं स्यादश्रुतत्वात् ॥ ५३ ॥ अपि वा कर्मवैषम्यात् ॥५४॥ अतुल्याः स्युः परिक्रये विषमाख्या विधिश्रुतौ परिक्रयान्न कर्मण्युपपद्यते दर्शनाद्विशेषस्य तथाऽभ्युदये ॥ ५५ ॥**

त्रयोदशाधिकरणमारचयति–

**स विभागः समो नो वा विशेषाश्रवणात्समः ।**
**वैषम्यं स्याद्यथायासमेवं तत्स्यात्समाख्यया ॥ २३ ॥**

पूर्वोक्तः स विभागः समः स्यात् । कुतः। वैषम्यहेतोर्विशेषस्याश्रवणात् । साम्यहेतुस्तु लौकिको न्यायः । लोके हि पुत्राणां पितृधने समविभागो दृष्टः। तस्मात्–'समः' इत्येकः पक्षः ।

कर्मकरेषु प्रयासानुरूपेण भृतितारतम्यं दृष्टम् । तद्वदत्रापि । इति द्वितीयः पक्षः । द्वादशाहे दीक्षायामेवं समाम्नायते–'अर्धिनो दीक्षयति, पादिनो दीक्षयति' इति । अर्धं येषामृत्विजां तेऽर्धिनः । एवं पादिनो योजनीयाः । तद्विशेषो याज्ञिकमुखादवगन्तव्यः । ततः श्रौतसमाख्यानुरूपेण केषांचिदर्धम्, केषांचित्पादः, इत्यादिविषमो विभागः । इति राद्धान्तः ॥ २३ ॥

( चतुर्दशे भूनाम्नि धेनुदानेन निखिलदक्षिणाबाधाधिकरणे सूत्राणि ५६–५८ ) ।

**तस्य धेनुरिति गवां प्रकृतौ विभक्तचोदितत्वा-**

---

१ ख. ज. झ. °भावी । स° । २ ख. किंचित्तथो । ३ च. झ. ञ. तुर्थो । ४ क. ख. च. ञ. °यासं मैवं । ज. झ. °यासमैवं । ५ ज. झ °तुषु लौ° । ६ ज. झ. तुसमो वि° । ७ क. अर्धेन । ८ क. पादेन । ९ च. तद्विशेषा । १० न. °न्तव्याः । त° । ११ ख. ज. झ. °षयो वि° ।

त्सामान्यात्तद्विकारः स्याद्यथेष्टिर्गुणशब्देन ॥ ५६ ॥
सर्वस्य वा क्रतुसंयोगादेकत्वं दक्षिणार्थस्य गुणानां
कार्यैकत्वादर्थे विकृतौ श्रुतिभूतं स्यात्तस्मात्समवा-
याद्धि कर्मभिः ॥ ५७ ॥ चोदनानामनाश्रयाल्लि-
ङ्गेन नियमः स्यात् ॥ ५८ ॥

चतुर्दशाधिकरणमारचयति—

भूनाम्नि धेनुर्बाधेत गाः किंवा कृत्स्नदक्षिणाम् ।
धेन्वा विशेषितत्वाद्गा दक्षिणैकत्वतोऽखिलाम् ॥ २४ ॥

अतीताभ्यामधिकरणाभ्यां बाधोपोद्घातत्वेन प्रकृतौ दक्षिणा निरूपिता। अत्र विकृतौ बाधो निरूप्यते । 'अथैष भूः' इति भूनामकमेकाहविशेषमुपक्रम्य 'धेनुर्दक्षिणा' इति श्रूयते । सेयं धेनुर्गोमात्रं बाधते । कुतः। 'या गौः सा धेनुः' इति विशेषयितुं योग्यत्वात् । न हि 'योऽश्वः, सा धेनुः' इति विशेषणं युज्यते। तस्मात्—गोविशेषरूपया धेन्वा प्राकृतस्य गोसामान्यस्यैव बाधो नेतरस्य इति प्राप्ते—

ब्रूमः—इयं धेनुरखिलां दक्षिणां बाधते । कुतः । गवादीनां प्राशान्तानां सर्वेषामेव दक्षिणारूपत्वात् 'दक्षिणा' इत्येकवचनमिह प्रयुज्यते । 'गौश्च'—इत्यादयः समुच्चयवाचिनश्चशब्दा एकत्व एवोपपद्यन्ते । आनतिश्चैवं सत्यरयन्तसुलभा । यदि दक्षिणा भिद्येरन्, तदानीमेकयैवाऽऽनतिसिद्धेरितरासां वैयर्थ्यं दुर्वारम् । तस्मात्—निखिलदक्षिणाबाधः ॥ २४ ॥

( पञ्चदशे 'एकां गाम्' इत्यनेन गोगतसंख्याबाधाधिकरणे सूत्रम्—) ।

एकां पञ्चेति धेनुवत् ॥ ५९ ॥

पञ्चदशाधिकरणमारचयति—

एकां पञ्चेति कृत्स्नां वा गोसंख्यां वा निवर्तयेत् ।
स्यादाद्यो दक्षिणायोगान्नैवं व्यवहितत्वतः ॥ २५ ॥

इदं श्रूयते—'यस्य सोममपहरेयुरेकां गां दक्षिणां दद्यात् । अभिदग्धे पञ्च गाः' इति । तदिदं संख्याविशिष्टं द्रव्यं विधीयमानं गवाश्वादिदक्षिणां कृत्स्नां निवर्तयेत् । तस्य दक्षिणाशब्दयोगेन कार्यैकत्वात् ।

नैवम् । विशिष्टविधौ गौरवात्, गवां प्राप्तत्वाच्च, संख्यामात्रं विधेयम् ।

---

१ क. च. ञ. वादि ।

यस्य च गोपदेन व्यवधानान्न दक्षिणायोगोऽस्ति । योगे तु गोगतां स्वविरोधिनीं पुंमात्रां संख्यामेव निवर्तयेत्, न त्वन्यत्किंचित् । इति राद्धान्तः ॥ २५ ॥

( षोडशे–साद्यस्के त्रिवत्सेन सोमक्रयसाधनमात्रबाधाधिकरणे सूत्राणि ६०–६२ )।

त्रिवत्सश्च ॥ ६० ॥ तथा च लिङ्गदर्शनम् ॥ ६१ ॥

एके तु श्रुतिभूतत्वात्संख्यया गवां लिङ्गविशेषेण ॥ ६२ ॥

षोडशाधिकरणमारचयति–

त्रिवत्सेनर्षभो बाध्यः कृत्स्नं वा क्रयसाधनम् ।
ऋषभः पुंगवत्वान्न क्रयोद्देशविधानतः ॥ २६ ॥

साद्यस्के वर्षत्रयोपेतो गौः श्रूयते–' त्रिवत्सः साण्डः सोमक्रयणः ' इति । प्रकृतौ–' अजया क्रीणाति, हिरण्येन क्रीणाति, वृषभेण क्रीणाति, ' इत्यादिना क्रयसाधनान्याम्नातानि । तत्र पुंगवत्वसाम्येन बाध्यं वृषभमात्रम् । इति पूर्वः पक्षः ।

नैतद्युक्तम् । कुतः । क्रयमुद्दिश्य त्रिवत्सविधानात् । साण्डत्वोद्देशेन तद्विधानेऽग्नीषोमीयादावपि त्रिवत्सः प्रसज्येत । तस्मात्–क्रयसाधनं कृत्स्नं बाध्यम् ॥ २६ ॥

( सप्तदशे–अश्वमेधे प्राकाशेनाध्वर्युभागबाधाधिकरणे सूत्रे ६३-६४)।

प्राकाशौ तथेति चेत् ॥ ६३ ॥ अपि त्ववयवार्थत्वाद्विभक्तप्रकृतित्वाद्गुणेदंताविकारः स्यात् ॥ ६४ ॥

सप्तदशाधिकरणमारचयति–

किं प्राकाशौ बाधकौ स्तः कृत्स्नस्याध्वर्यवस्य वा ।
ददातियोगात्कृत्स्नस्य न विशिष्टेन योगतः ॥ २७ ॥

अश्वमेधे श्रूयते–' हिरण्मयौ प्राकाशावध्वर्यवे ददाति ' इति । प्राकाशौ दीपस्तम्भावित्येके । दर्पणावित्यपरे । तौ किं प्राकृतस्य दक्षिणाद्रव्यस्य कृत्स्नस्य बाधकौ, उत–अध्वर्युभागस्यैव । तत्र ' प्राकाशौ ददाति ' इति कर्मकारकवाचिद्वितीयाश्रुतिकृतेन दानसंबन्धेन ' प्राकाशावध्वर्यवे ' इति वाक्यकृते पुरुषसंबन्धेऽपोदिते सति देयद्रव्यप्रतीतेर्वैयर्थ्यावान्तरस्य कृत्स्नस्य बाधः । इति पूर्वः पक्षः ।

' अध्वर्यवे ददाति ' इति संप्रदानवाचिचतुर्थीश्रुतिकृतस्य दानक्रियासंबन्ध-

१ अ. गोयोगे । २ क. च. °न्वै चोदि° । ३ क. °यान्त° । ४ ख. °तुर्थीश्रुतिकृ° । च. °तुर्थश्रु° ।

स्यापवदितुमशक्यत्वात्संप्रदानविशिष्टदानक्रियया संबन्धेऽपि द्वितीयाश्रुतेरविरोधादध्वर्युभागस्यैव बाधः। इति राद्धान्तः ॥ २७ ॥

(अष्टादशे—उपहव्ये श्यावाश्वेनाखिलदक्षिणाबाधाधिकरणे सूत्राणि ६५–६७)।

धेनुवच्चाश्वदक्षिणा स ब्रह्मण इति पुरुषापनयो यथा हिरण्यस्य ॥ ६५ ॥ एके तु कर्तृसंयोगात्स्रग्वत्तस्य लिङ्गविशेषेण ॥ ६६ ॥ अपि वा तदधिकाराद्धिरण्यवद्विकारः स्यात् ॥ ६७ ॥

अष्टादशाधिकरणमारचयति—

श्यावाश्वो ब्रह्मभागस्य बाधको निखिलस्य वा।
आद्यः प्राकाशवन्मैवं धेनुवत्सोऽपि नान्यगः ॥ २८ ॥

अस्त्युपहव्यनामक एकाहविशेषः। तत्र श्रूयते—'अश्वः श्यावो रुक्मललाटो दक्षिणा' 'स ब्रह्मणे देयः' इति। प्राकाशन्यायेनायं ब्रह्मभागस्यैव बाधकः। इति पूर्वः पक्षः।

दक्षिणाशब्दसंयोगाद्धेनुन्यायेन कृत्स्नस्य बाधकः। उपरितनेन तु 'ब्रह्मणे देयः' इति वाक्यान्तरेण तस्याश्वस्य ब्रह्मव्यतिरिक्तपुरुषान्तरसंबन्धो बाध्यते। तथा सति पुरुषान्तरस्यातिदिष्टोपदिष्टदक्षिणाद्वयबाधाल्लौकिकदानादिना केनचिदुपायेनाऽऽनतिः सिध्यति ॥ २८ ॥

( एकोनविंशे—सोमचमसेन कृत्स्नदक्षिणापुरुषान्तरयोर्बाधाधिकरणे सूत्राणि ६८–७३ )।

तथा च सोमचमसः ॥ ६८ ॥ सर्वविकारो वा क्रत्वर्थे प्रतिषेधात्पशूनाम् ॥ ६९ ॥ ब्रह्मदानेऽविशिष्टमिति चेत् ॥ ७० ॥ उत्सर्गस्य क्रत्वर्थत्वात्प्रतिषिद्धस्य कर्म स्यान्न च गौणः प्रयोजनमर्थः स दक्षिणानां स्यात् ॥ ७१ ॥ यदि तु ब्रह्मणस्तदूनं तद्विकारः स्यात् ॥ ७२ ॥ सर्वं वा पुरुषापनयात्ता-

---

१ ख. ँ ह्यबाधस्य। २ ज. झ. ँकादे विँ।

सा क्रतुप्रधानत्वात् ॥ ७३ ॥

एकोनविंशाधिकरणमारचयति—

किं सोमचमसो ब्रह्मभागहार्युत कृत्स्नहृत् ।
पशूनां निन्दया सर्वप्रसक्तेर्ब्रह्मभागहृत् ॥ २९ ॥
निन्देयं न निषेधाय चमसस्तुतये त्वसौ ।
श्यावाश्ववत्सर्वदेयपुरुषान्तरबाधकः ॥ ३० ॥

क्रतपेये श्रूयते—'औदुम्बरः सोमचमसो दक्षिणा' 'स प्रियाय सगोत्राय ब्रह्मणे देयः' इति । सोऽयं सोमचमसो ब्रह्मभागमेव बाधते । कुतः । 'यत्पशून्दद्यात्, सोऽनृतं कुर्यात्' इति पैशुदाननिन्दया सर्वदानप्रसक्तेः । तस्मात्—न सर्वबाधकः । इति प्राप्ते—

ब्रूमः-नात्र निषेधाय पशुनिन्दोच्यते । किंतु विधित्सितसोमचमसस्तुत्यर्थोऽयमर्थवादः । तेन निन्दायाः सर्वप्रसञ्जकत्वं नास्ति । तस्मात्-सर्वप्रसक्तिरूपाया अभ्यधिकाशङ्काया निराकृतत्वात्पूर्वाधिकरणन्यायेनात्र निर्णयो द्रष्टव्यः ॥२९॥३०॥

तस्मिन्नेवाधिकरणे कृत्वाचिन्तारूपं विचारं बुद्धिव्युत्पादनाय रचयति—

पूर्वोक्तं निर्णयं पूर्वपक्षयित्वैकवाक्यताम् ।
भ्रान्त्या कृत्वा दक्षिणांशं ब्रह्मभागं निवर्तयेत् ॥ ३१ ॥

श्यावाश्वाधिकरणे—'रुक्मललाटो दक्षिणा' इत्यस्य 'स ब्रह्मणे देयः' इत्यस्य चान्तराले 'स ह्यनिरुक्तः' इति वाक्यान्तरं पठितम् । तेन व्यवधानाद्विस्पष्टो वाक्यभेदः । इह त्वव्यवधानादेकं वाक्यमिति भ्रान्तिः । एकवाक्यतायां तु चमसशब्दस्य दक्षिणाशब्देन ब्रह्मशब्देन च संबन्धे सति कृत्स्नदक्षिणायाः पुरुषान्तरस्य च निवृत्तिः । तथा सति पूर्वोक्तसिद्धान्त एवात्र पूर्वपक्षी भवति ।

दक्षिणामुद्दिश्य चमस एको विधेयः । तस्य ब्रह्मसंबन्धोऽपरो विधेयः । ततोऽर्थभेदाद्वाक्यभेदो दुर्वारः। तस्मात्—दक्षिणाशब्देन तदंशं लक्षयित्वा ब्रह्मसंबद्धदक्षिणांशमनूद्य चमसमात्रविधानात्तद्भागस्यैव निवृत्तिः ।

कृत्वाचिन्तामुद्घाटयति—

१ क. कृत्स्नवत् । च. ञ. कृत्स्नहृत् । २क. निन्दया । ३ ख. श्रोत्रियाय । ४ क. सोमश्चम° । ५ झ. °शुरूपदक्षिणाभागनिषेधाय निन्द्यते । तौ च निन्दानिषेधौ सर्वदैव प्रसक्तिगमयतः । तन्मा° । ६ क. °काया । ज. झ. °कासंज्ञाया । ७ क. वयतः । भ्रा° । ८ क. ख. ज. झ. ञ. °बन्धद° । च. °बन्धे द° । ९ च. °ति । विंशाधिकरणमारचयति—ब्र° ।

दक्षिणोक्तिः क्रतौ दृष्टा सर्वत्रासौ न पुंसि सा।
वाक्यभेदश्च दुर्वारो युक्तोऽतः पूर्वनिर्णयः ॥ ३२ ॥

प्रायेण वैदिकव्यवहारेषु दक्षिणाशब्दः क्रतुविषय एव दृष्टः, न तु पुरुषविषयः। अतः क्रतुदक्षिणारूपश्चमसः सर्वां क्रतुदक्षिणां निवर्तयेत्। वाक्यभेदस्तु विस्पष्टं भासमानः काशकुशमवलम्ब्य न्यायविदा न निवारयितुं युक्तः। तस्मात्—कृत्स्नदक्षिणापुरुषान्तरयोर्बाधः। इत्ययमेव सिद्धान्तो युक्तः ॥ ३१ ॥ ३२ ॥

(विंशे—वाजपेये रथस्य भागनियामकताधिकरणे सूत्रे ७४—७५)।

यजुर्युक्ते त्वध्वर्योर्दक्षिणा विकारः स्यात् ॥ ७४ ॥ अपि वा श्रुतिभूतत्वात्सर्वासां तस्य भागो नियम्यते ॥ ७५ ॥

विंशाधिकरणमारचयति—

यजुर्युक्तोऽध्वर्युभागं बाधते यमयत्युत।
बाधः प्राकाशवन्मैवं पक्षे प्राप्तेर्नियम्यते ॥ ३३ ॥

वाजपेये श्रूयते—'यजुर्युक्तं रथमध्वर्यवे ददाति' इति। अस्यायमर्थः—'रथशकटदासीनिष्कादीनि सप्तदश द्रव्याणि प्राकृतगवाश्वादिदक्षिणाद्रव्यबाधकान्यत्र विहितानि। तेषु च प्रतिद्रव्यं सप्तदशसंख्या विहिता। ततो रथाः सप्तदश। तेषु मुख्यं रथं यजमानारोहणाय 'इन्द्रस्य वज्रोऽसि'—इत्यादियजुर्वेदोक्तैर्मन्त्रैः सज्जी करोति। सोऽयं यजुर्युक्तो रथः। तं च दक्षिणाकालेऽध्वर्यवे दद्यात्' इति। 'प्राकाशावध्वर्यवे ददाति' इत्यत्र यथा चोदकप्राप्तस्याध्वर्युभागस्य बाधः, एवमत्रापि। ननु—सप्तदशद्रव्यैर्विधानेनैव प्राकृतद्रव्यबाधसिद्धिः। बाढम्। तथाऽपि 'अर्धिनः, पादिनः', इत्यादिसमाख्याप्रापिता विषमविभागविशेषक्लृप्तिः। सा यजुर्युक्तरथरूपभागविशेषविधिना बाध्यते। तस्मात्—अध्वर्योर्न रथान्तरभागोऽस्ति, नापि शकटदास्यादिभागः। इति पूर्वः पक्षः।

नैतद्युक्तम्। प्राकाशदृष्टान्तवैषम्यात्। अत्यन्तमप्राप्तौ हि प्राकाशौ तत्र विधेयौ। यजुर्युक्तरथस्तु पक्षे प्राप्तः। तथा हि—'सप्तदश रथान्ददाति' इत्युक्ते 'कस्य को रथः' इति चिन्तायां यजमानेच्छाया नियामकत्वात्। 'यदाऽध्वर्यवे[14] तं दातुमिच्छति, तदा प्राप्नोति, यदा नेच्छति, तदा न प्राप्नोति' इति

१ ख. ञ. ते। च. तु। ज. झ. नो। २ ज. श्चतुर्वा°। ३ ज. झ. षये। अ°। ४ ज. झ. काशं कु°। ५ ज. झ. °र्बाधते। इ°। ६ ज. झ ञ. सिद्धान्तो। ७ च. एकविंशा°। ८ ञ. °धयेद्यम°। ९ ज. झ. °ष्कानीति स°। १० ख. प्राकृतद्रव्यं। ११ ज. झ. °व्यव्यवथा°। १२ ख. ज. झ. ञ. °षयवि°। १३ ख. वक्षायां। ज. झ. जिज्ञासायां। १४ क. °वे त्वद्दातु°।

पक्षे प्राप्तः । ततो यो यजुर्युक्तो रथः, सोऽध्वर्यवेऽवश्यं देय इति नियम्यते । तेनो न कस्याप्यनेन बाधः ॥ ३३ ॥

इति श्रीमाधवीये जैमिनीयन्यायमालाविस्तरे दशमाध्यायस्य तृतीयः पादः ॥ ३ ॥

| | अत्र पादे | आदितः । |
|---|---|---|
| अधिकरणानि | २० | ६६१ । |
| सूत्राणि | ७५ | १८६० । |

( अथ दशमाध्यायस्य चतुर्थः पादः ) ।

( प्रथमे—नारिष्ठहोमादिभिर्नक्षत्रेष्ट्यादीनां समुच्चयाधिकरणे सूत्र १–२ ) ।

**प्रकृतिलिङ्गसंयोगात्कर्मसंस्कारं विकृतावधिकं स्यात् ॥ १ ॥ चोदनालिङ्गसंयोगे तद्विकारः प्रतीयेत प्रकृतिसंनिधानात् ॥ २ ॥**

चतुर्थपादे प्रथमाधिकरणमारचयति—

**नक्षत्रेष्ट्युपहोमादिर्नारिष्ठादेर्निवर्तकः ।**
**समुच्चितो वा कार्यैक्यादाद्योऽन्त्योऽपूर्वभेदतः ॥ १ ॥**

सन्ति नक्षत्रेष्टौ—'अग्नये स्वाहा, कृत्तिकाभ्यः स्वाहा, अम्बायै स्वाहा, दुलायै स्वाहा' इत्यादय उपहोममन्त्राः । प्रकृतौ प्रधानहोमादूर्ध्वं नारिष्ठहोमो विहितः । 'नारिष्ठान्होपाञ्जुहोति' इत्युक्तत्वात् । 'दश ते तनुवो यज्ञ यज्ञियाः' इत्यादयस्तत्र मन्त्राः । अयमेको विषयः । तथा श्येने श्रूयते—'लोहितोष्णीषा लोहितवसना निवीता ऋत्विजः प्रचरन्ति' इति । प्रकृतावुपवीतं विहितम्—'उपव्ययते' इति । अयं द्वितीयो विषयः । तथा—पृष्ठ्ये षडहे श्रूयते—'मध्वाशये-द्घृतं वा' इति । प्रकृतौ श्रुतम्—'पयो व्रतं ब्राह्मणस्य, यवागू राजन्यस्य, आमिक्षा वैश्यस्य' इति । अयं तृतीयो विषयः । तत्र—उपहोमनिवीतमध्वशनानि क्रमेण नारिष्ठहोमोपवीतपयोव्रतानां निवर्तकानि । कुतः। कार्यैक्यात् । उपहोमनारिष्ठहोमयोस्तावञ्जुहोतिशब्दैक्यतदर्थैक्याभ्यां कार्यैक्यं प्रतीयते । अशन-

१ ख. प्राप्तिः । ज. झ. ञ. प्राप्नोति । २ ख. तन्नैक° । ३ ज. झ. ञ. °त्रेषूप° । ४ ज. झ. दुलयायै । ५ ज. झ. यज्ञाय° । ६ झ. मध्वशनं घृतं । ७ ज. झ. °ब्दैक्यात्कार्यै° । ८ ज. झ. °नपयोव्र° ।

नतयोः शब्दभेदेऽप्यर्थभेदो नास्ति । निवीतोपवीतयोः शब्दार्थभेदेऽपि[1] वीतशब्द-स्मारितं[2] कार्यमेकं स्यात् । तस्मात्—बाधः । इति पूर्वः पक्षः ।

भवतु नाम दृष्टार्थेषु कार्यैक्यं दृष्ट्वा बाधः । उदाहृतानि त्वपूर्वार्थानि । अपूर्वं च विध्येकगम्यतया विधिभेदेन भिद्यते । तस्मात्—कार्यभेदात्समुच्चयोऽ-भ्युपेयः[3] । न च—निवीतोपवीतयोर्विरोधः शङ्कनीयः । वासोभ्यां तदुभयोपपत्तेः । नापि—पयोव्रतस्य दृष्टार्थत्वम् । अल्पेन पयसा तृप्तिपुष्ट्यसंभवात् । उदाहरण-द्वये कृत्वाचिन्ता वाऽस्तु[4] ॥ १ ॥

( द्वितीये वर्णकद्वयसहिते सूत्रम्— ) ।
चोदनालिङ्गसंयोगे तद्विकारः प्रती-
येत प्रकृतिसंनिधानात् ॥ २ ॥

*द्वितीयाधिकरण( स्य शरमयबर्हिषा कौशबर्हिर्बाधसाधकं प्रथम-वर्णक )मारचयति—

समुच्चेयं शरमयं कोशेनोतास्य बाधकम्[5] ।
प्राचुर्यस्य विधेराद्यो मैवं प्रतिपदोक्तितः ॥ २ ॥

'सौपारौद्रं चरुं निर्वपेत्कृष्णानां व्रीहीणामभिचरन्'[6] इत्यत्र 'शरमयं बर्हिर्भ-वति' इति श्रुतम् । तदिदं प्राकृतेन कुशबर्हिषा सह समुच्चीयते । कुतः । मयट्-शब्देन शरप्राचुर्यस्य विधानादबाधेनापि तदुपपत्तेः । इति पूर्वः पक्षः ।

'नित्यं वृद्धशरादिभ्यः' [ पा० सू० ४।३।१४३ ] इति सूत्रेण शरशब्दाद्वि-कारार्थे मयट्प्रत्ययः[7] प्रतिपदोक्तः । अतस्तं परित्यज्य प्राचुर्यार्थो न ग्रहीतुं शक्यः[8] । किंच—प्राचुर्यार्थे[9] कार्यान्तरं कल्प्यं[10] स्यात् । तस्मात्—कुशबर्हिषो बाधः । इति राद्धान्तः ॥ २ ॥

( वाजपेये—रथघोषदुन्दुभिघोषाभ्यां दर्भमन्त्रयोरुभयोर्बाधबोधकं ) ।

द्वितीयवर्णकमारचयति—

रथदुन्दुभितद्घोषौ किं बर्हिर्मन्त्रयोः क्रमात् ।
बाधकावुत तद्घोष एक एव हि बाधकः ॥ ३ ॥

---

* शास्त्रदीपिकायां तु वर्णकद्वयसहितमपीदमधिकरणं प्रथमाधिकरणवर्णकान्तरत्वेनाङ्गीकृतम् ।

---

१ क. °पि निवीतोपवी° । ख. ञ. °पि निवी° । ज. झ. °पि विहित° । २ ज. झ. °स्मात्स° । ३ ज. झ. °भ्युपगन्तव्यः । ४ ज. झ. °न्ताऽस्तु । ५ ञ. बाधनम् । ६ क. °पेत्स्वक्-ष्णानां । ७ ज. झ. °मपच° । ८ ज. झ. समूहः । ९ ज. °र्थार्थो म° । १० ज. झ. कल्पनीयम् ।

रथघोषेत्ययं द्वंद्वस्तेनैतौ बाधकौ, न तत् ।
घोषाभ्यामिति वा घोषे लक्षणा वा प्रसज्यते ॥ ४ ॥
पूर्वपक्षेऽन्यदीयोऽपि शब्दोऽत्रास्तु रथे सति ।
राद्धान्ते रथदुन्दुभ्योरेव घोषः प्रयोजकः ॥ ५ ॥

वाजपेये श्रूयते—'रथघोषेण माहेन्द्रस्य स्तोत्रमुपाकरोति । दुन्दुभिघोषेण माहेन्द्रस्य स्तोत्रमुपाकरोति' इति । प्रकृतौ त्वेवं श्रूयते—'उपावर्तध्वमिति बर्हिर्भ्यां स्तोत्रमुपाकरोति' इति । उपाकरणं नाम स्तोत्रं प्रति प्रेरणम् । तत्र—रथद्रव्यं दुन्दुभिद्रव्यं च द्वयं बार्हिर्द्रव्यस्य बाधकम् । घोषो मन्त्रस्य बाधकः, इति तावत्प्राप्तम् । रथश्च घोषश्चेति द्वंद्वसमासेनोभयोः प्राधान्यात् ।

नैतद्युक्तम् । इतरेतरयोगद्वंद्वे 'रथघोषाभ्याम्' इति द्विवचनप्रसङ्गात् । समाहारद्वंद्वे तु घोषशब्दस्य समाहारलक्षकतया मुख्यवृत्तिर्हीयेत । 'रथस्य घोषः' इति तत्पुरुषसमासे मुख्यवृत्तिर्न हीयते । तत्रापि रथप्राधान्यं हीयते—इति चेत् । समाहारेऽपि समानम् । तस्मात्—घोषो द्रव्यमन्त्रयोर्बाधकः । ननु यद्युभयं बाधकम्, यदि वैकं बाधकम्, सर्वथा द्रव्यमन्त्रौ बाध्येते । *तत्र कोऽतिशयः—इति चेत् । उच्यते-पूर्वपक्षे स्वयमघुष्यन्नपि रथः सद्भावमात्रेण बर्हिर्निवर्तयति । घोषश्च रथेनाविशेषितत्वादन्यदीयोऽपि मन्त्रं निवर्तयेत् । सिद्धान्ते तु नान्यघोषः। इत्यतिशयः ॥ ३ ॥ ४ ॥ ५ ॥

तृतीये— {बार्हस्पत्यग्रहादिभिः प्राकृतेन्द्रवायवादिग्रहाणां समुच्चयाधिकरणे} सूत्राणि ३—५)।

सर्वत्र तु ग्रहाम्नानमधिकं स्यात्प्रकृतिवत् ॥ ३ ॥ अधिकैश्चैकवाक्यत्वात् ॥ ४ ॥ लिङ्गदर्शनाच्च ॥ ५ ॥

तृतीयाधिकरणमारचयति—

बार्हस्पत्यादयः किं स्युः प्राकृतग्रहबाधकाः ।
समुच्चिता उताऽऽद्योऽस्तु कार्यैक्याद्ग्रहलिङ्गतः ॥ ६ ॥

---

* 'तत्र यद्युभयं बाधकम् । यदि वैकं बाधकम्, सर्वथा द्रव्यमन्त्रौ बाध्येते' इतः परं पाठः पञ्चस्वपि पुस्तकेषु नोपलभ्यते। केवलं'झ.'पुस्तकेऽपि केनचित्त्रुटिपूरणायोपरि लिखितः।

---

१ ज. झ. °कौ मतौ । २ ज झ. °पि घोषा शब्द र° । ञ. °पि शब्दो घोषो र° । ३ च. °ते—'उपावृत्य उ° । ज. झ. °ते'—'उपावर्तध्व° । ४ च. °ति मन्त्रब° । ५ क. °द्रव्यं दुन्दुभिद्रव्यमेतद्द्वयं । ज. झ. °द्रव्यदुन्दुभिद्रव्यद्वयं । ६ ज. झ. °से चोभ° । ७ क. ख. ग. ञ. तत्र ।

समुच्चयः प्रमाणाभ्यां ग्रहाणां प्रकृतौ यथा।
विधेयोक्तेर्न लिङ्गं तच्चोक्तं लिङ्गं सुराग्रहे ॥ ७ ॥

बृहस्पतिसवे—श्रूयते—'बार्हस्पत्यं ग्रहं गृह्णाति' इति। विषुवति—'अर्कं गृह्णाति' इति। महाव्रते—'शुक्रं गृह्णाति' इति। अश्वमेधे श्रूयते 'सौवर्णराजताभ्यां महिमानौ गृह्णाति' इति। तत्र बार्हस्पत्यादयो ग्रहाः प्राकृतानामैन्द्रवायवादिग्रहाणां बाधकाः। कुतः। यागनिष्पादनलक्षणस्य कार्यस्यैकत्वात्। ग्रहशब्दसंयोगः कार्यैक्यगमकः। तस्मात्—बाधः। इति प्राप्ते—

ब्रूमः—यथा प्रकृतौ प्रथमचोदितस्यैन्द्रवायवग्रहस्य, पश्चाच्चोदितानां मैत्रावरुणादिग्रहाणां च समुच्चयः तथाऽत्रोपदिष्टानामतिदिष्टानां च समुच्चयः स्यात्। अथोच्यते—प्राकृतानां परस्परमेककार्यत्वे मानाभावात्, प्रत्युत प्रयोगवचनेन संभूयकारित्वावगमाद्युक्तः समुच्चयः—इति। तर्ह्यत्रापि समानम्। यागनिष्पादकत्वं तु प्रयोगवचनप्रापितत्वात्सहितानामेव, त्वेकैकस्य, 'अर्केण यजेत' 'शुक्रेण यजेत' इत्येवं पृथक्पृथक्यागसंबन्धाभावात्। ग्रहशब्दोऽपूर्वविधेयग्रहणक्रियां ब्रूते, न तु प्रकृतौ क्लृप्तकार्यं पदार्थमनुवदति, येन लिङ्गं स्यात्। किंच—'वाजपेये सोमग्रहाः सुराग्रहाश्च' इत्यदिष्टानामुपदिष्टानां च समुच्चयार्थमुच्यमानश्चशब्दः सर्वत्र समुच्चयं गमयति। तस्मात्—न बाधः ॥६॥७॥

(चतुर्थे—वाजपेये प्राजापत्यपशुभिः क्रतुपशूनां समुच्चयाधिकरणे सूत्रम्—)।

प्राजापत्येषु चाऽऽम्नानात् ॥ ९ ॥

चतुर्थाधिकरणमारचयति—

प्राजापत्यैः पशूनां किं बाधो यद्वा समुच्चयः।
अक्रियार्था पशूक्तिः स्याल्लिङ्गं तत्रास्ति बोधनम् ॥ ८ ॥
पशूनुद्दिश्य संख्याया देवस्य च विधौ भिदा।
कर्मान्यत्वे ग्रहन्यायाद्बोधनाच्च समुच्चयः ॥ ९ ॥

वाजपेये श्रूयते—'सप्तदश प्राजापत्यान्पशूनालभते' इति। तैरेतैः प्राकृतपशूनामाग्नेयादीनां बाधः स्यात्। कुतः। पशुत्वलिङ्गात्। न हि पशुशब्दो ग्रहशब्दवदपूर्वां विधेयां क्रियां ब्रूते, येन लिङ्गत्वं हीयेत। इति प्राप्ते—

१ ज. झ. °चोक्तलि°। २ ज. झ. °त्यं तं ग्र°। ३ ख. °त्। न ग्र°। ४ ज. झ. °मकत्वात्। त°। ५ क. °ष्टानां चाति°। ६ क. प्रकृतप्र°। ७ ख. °पिता°। ज. झ. ञ. °पितत्वात्संहिता°। ८ ख. °पूर्वो वि°। ज. झ. पूर्वा वि°। ९ ख. ञ. बाधकम्। १०ज. झ. विधा। ११ क. °पूर्ववि°। ज. झ. °पूर्वां विधेयक्रि°।

भूयः—किमत्र प्रकृतपश्वनुवादेन सप्तदशसंख्या, प्रजापतिर्देवता च, इति गुणद्वयं विधीयते, उत विशिष्टमन्यत्कर्म । नाऽऽद्यः । वाक्यभेदापत्तेः । द्वितीये तु न पशुशब्दो लिङ्गम् । ततो ग्रहन्यायो योजनीयः । किंचं—अवरोधनमेवमाम्नायते—'ब्रह्मवादिनो वदन्ति—नाग्निष्टोमो नोक्थ्यो न षोडशी नातिरात्रः । अथ कस्माद्वाजपेये सर्वे यज्ञक्रतवोऽवरुध्यन्त इति । पशुभिरिति ब्रूयात् । आग्नेयं पशुमालभतेऽग्निष्टोममेतेनावरुन्धे । ऐन्द्राग्नेनोक्थ्यम् । ऐन्द्रेण *षोडशिनः स्तोत्रम् । सारस्वत्याऽतिरात्रम् । मारुत्या बृहत्स्तोत्रम् । एतावन्तो वै यज्ञक्रतवः । तान्पशुभिरेवावरुन्धे' इति । अस्मिन्नवरोधनाम्नाये चोदकप्राप्ताग्नेयादिपशुसद्भावस्य सिद्धवदनुवादात्समुच्चयोऽवगम्यते ॥ ८ ॥ ९ ॥

(पञ्चमे—सांग्रहणीष्टौ, आमनहोमैरनुयाजानां समुच्चयाधिकरणे-सूत्रम्—)।

आमने लिङ्गदर्शनात् ॥ ७ ॥

पञ्चमाधिकरणमारचयति—

आमनाहुतिभिर्बाध्या अनुयाजा न वाऽग्रिमः ।
त्रित्वलिङ्गाद्विशिष्टोक्तेर्भेदो मध्योक्तितोऽन्तिमः ॥ १० ॥

सांग्रहण्यां श्रूयते—'÷आमनमस्यामनमस्य देवा ये सजाता इति तिस्र आहुतीर्जुहोति' इति । एताभिस्तिसृभिराहुतिभिः प्राकृतास्त्रयोऽनुयाजा बाध्याः । कुतः । त्रित्वलिङ्गात् । पूर्वाधिकरणे सप्तदशसंख्याविशिष्टप्राकृतपश्वभावेन मा भूद्बाधत्वम्, इह तु त्रित्वविशिष्टत्वादनुयाजा बाध्यन्ताम् । यद्वा—तदनुवादेन मन्त्रगुणविधानात्प्राकृतमन्त्रबाधः । इति पूर्वः पक्षः ।

किं त्रित्वमात्रमनूद्य मन्त्रसहिता आहुतयो विधीयन्ते, उत त्रित्वविशिष्टा आहुतीरनूद्य मन्त्रविधिः । आद्ये—त्रित्वमग्न्यादिष्वपि सत्त्वेनान्वयान्न लिङ्गम् । द्वितीये—विशेषणविशेष्ययोर्भेदेन वाक्यं भिद्येत । तस्मात्—कर्मान्तरविधानान्न बाधः, किं तर्हि समुच्चयः । तत्र मध्योक्तिर्लिङ्गम् । तथा चाऽऽम्नायते—'पुरस्ताच्चोपरिष्टाद्वा ×जुहुयाद्बहिरात्मनः सजातीयान्दध्यात् । यन्मध्यतो जुहोति मध्यत एव सजातीयान्मनुते' इति । तस्मात्—आमनहोमानामनुयाजैः सह समुच्चयः ॥ १० ॥

* 'षोडशिनः' इति शबरभाष्ये । ÷ 'आमनस्या देवा' इति शबरभाष्ये । × 'जुहुयाद्बहिरात्मानं सजातानामादधीत । अथ यन्मध्यतो जुहोति मध्यत एव सजातानामात्मानं धत्ते' इति शाबरभाष्ये ।

१ ख. च. ज. झ. ञ. °च-रो° । २ ज. झ. °थ कः स्याद्वा° । ३ च. °मेव ते° । ४ ख. ज. झ. ञ. °ज्ञस्य क° । ५ ज. झ. °मरमस्यारमस्य । ६ च. °नस्यं दे° । ७ ज. झ. ञ. आहोस्वित् । ८ च. °त्वस्य गार्हपत्यादि° ।

( षष्ठे—महाव्रते पत्न्युपगानेनर्त्विगुपगानस्य समुच्चयाधिकरणे सूत्रे ८—९. ) ।

उपगेषु शरवत्स्यात्प्रकृतिलिङ्गसंयोगात् ॥ ८ ॥

आनर्थक्यात्त्वधिकं स्यात् ॥ ९ ॥

षष्ठाधिकरणमारचयति—

पत्नय उपगायन्तीत्यृत्विजां विनिवर्तिकाः ।
न वाऽऽद्यः सामगानोपचयः काण्डादिजस्ततः ॥ ११ ॥
नदनं दुन्दुभीनां हि चित्ते विपरिवर्तते।
उपगानं भवेत्तेन योग्यं वीणादिजं ततः ॥ १२ ॥

गवामयने महाव्रतं नामैकाहः । तत्र श्रूयते—' पत्नय उपगायन्ति ' इति । तत्र पत्नय उपगायन्त्यः प्राकृतानामृत्विजामुपगातॄणां निवर्तिकाः। शारीरसामगानोपचयहेतुकाण्डवीणादिजोपगानकर्तृत्वात् । इति चेत् ।

न । ' दिक्षु दुन्दुभयो नदन्ति ' इति दुन्दुभिगानानामनन्तरविहितानां चित्ते विपरिवर्तमानानामिदमुपगानं कर्मान्तरम् । न च शारीरमेव गानम् , तस्येदमुपगानम् । दुन्दुभिनदनस्याशारीरत्वान्न पत्नीभिः क्रियमाणमुपगानमिति तन्त्रीगानेऽपि गानशब्दप्रयोगात् । किंच—काण्डवीणादिभिः क्रियमाणमुपगानं दुन्दुभिगानसजातीयम् । तस्मात्—पत्न्यो नर्त्विग्निवर्तिकाः ॥११॥१२॥

(सप्तमे— { अञ्जनाभ्यञ्जने नवनीताभ्यञ्जनस्य गौग्गुलवाभ्यञ्जनादिभिः समुच्चयाधिकरणे } सूत्राणि १०-१२)

संस्कारे चान्यसंयोगात् ॥ १० ॥ प्रयाजवदिति चेत् ॥ ११ ॥ नार्थान्यत्वात् ॥ १२ ॥

सप्तमाधिकरणमारचयति—

अभ्यङ्गो नावनीतः किं बाध्यो गौग्गुलवादिभिः ।
न वाऽऽद्यो लेपजैकत्वान्न शैत्यस्नेहभेदतः ॥ १३ ॥

अस्त्यञ्जनाभ्यञ्जनसंज्ञक एकोनपञ्चाशद्रात्रः सत्रविशेषः। तत्र श्रूयते— ' +गौग्गुलवेन प्रातःसवनेऽभ्यञ्जते, पैलुदारवेण माध्यंदिने सवने, सौगन्धिकेन

---

+" गौग्गुलवेन प्रातःसवनेन समञ्जतेऽभि वाऽञ्जते " इति शाबरभाष्ये पाठः ।

१ झ. °त्नयो ह्युप° । २ ख. विनिवर्तिकीः । च. विनिवर्तकाः। ३ झ. °सतनास्तैका° । ४ क. ख. च. ञ. °नां वि° । ५ च. °स्याशरीरजत्वा° । ६ च. °गानप्र° । ७ ख. च. झ. ञ. °नप्र° । ८ ज. झ. °ङ्गो वा नवीभूतो वा° । ९ ज. झ. °द्रात्रो रात्रित्रि° । १० क. °ञ्जनम्. पै° ।

तृतीयसवने ' इति । प्रकृतौ तु ' नवनीतेनाभ्यङ्गः ' इति श्रुतम् । सोऽयमभ्यङ्गो बाध्यः । लेपजन्यस्य शरीरगतस्नेहकार्यस्योभयत्रैकत्वात् । इति पूर्वः पक्षः।

नैतद्युक्तम् । कुतः । कार्यभेदात् । गौग्गुलवादिलेपजन्यं कार्यं चन्दनवच्छैत्यम् । तच्च नावनीतस्नेहाद्भिन्नम् । किंच–नावनीतो दीक्षाकालीनः, इतरः सुत्याकालीनः । तस्मात्–बाध्याभावात्समुच्चयः ॥१३॥

( अष्टमे–महाव्रते अहतवाससस्तार्यादिभिः समुच्चयाधिकरणे सूत्राणि १३–१५ )।

**आच्छादने त्वैकार्थ्यात्प्राकृतस्य विकारः स्यात् ॥ १३ ॥ अधिकं वाऽन्यार्थत्वात् ॥ १४ ॥ समुच्चयं च दर्शयति ॥ १५ ॥**

अष्टमाधिकरणमारचयति–

**तार्याद्यहतवस्त्रस्य बाधकं स्यान्न वाऽग्रिमः ।**
**गुह्याच्छादनकार्यैक्यादयोग्यत्वात्समुच्चयः ॥ १४ ॥**

महाव्रते श्रूयते–'तार्यं यजमानः परिधत्ते दर्भमयं पत्नी' इति । प्रकृतौ–'अहतं वासः परिधत्ते' इति । घृताक्तः कम्बलस्तार्यमित्युच्यते । ताभ्यां तार्यदर्भमयाभ्यां दंपत्योरहतं वस्त्रं बाध्यते । कुतः । 'परिधत्ते' इत्यनेन प्रकृतिलिङ्गेन गुह्याच्छादनलक्षणस्य कार्यस्यैकत्वावगमात् ।

मैवम् । तार्यदर्भमययोर्गुह्यमाच्छादयितुमयोग्यत्वात् । तार्यादिपरिधानं 'वासांसि विस्रंसयति' इति वासोबहुत्वानुवादादुपरितनं प्रावरणं विधीयते । तस्मात्–कार्यभेदात्समुच्चयः ॥ १४ ॥

( नवमे–महाव्रते रथंतरादिसाम्नां श्लोकादिसामभिः समुच्चयाधिकरणे सूत्रे १६–१७ )।

**सामस्वर्थान्तरश्रुतेरविकारः प्रतीयेत ॥१६॥ अर्थे त्वश्रूयमाणे शेषत्वात्प्राकृतस्य विकारः स्यात् ॥१७॥**

नवमाधिकरणमारचयति–

---

१ ज. झ. 'भ्यङ्गे' इ° । २ ख. च. ज. झ. ञ. °न्दनादिव° । ३ क. °दर्भाभ्यां । ४ क. °न लि° । ५ क. ख. °त्वान्न ता° । च. ज. झ. °त्वात् । परि° । ञ. °त्वादुपरितनं ।

**बाध्यं श्लोकादिनाऽऽज्यादि न वाऽऽद्यः स्तुतिलिङ्गतः।**
**देशसाम्नोर्विधौ भेदे वैशिष्ट्याच्च समुच्चयः ॥ १५ ॥**

महाव्रते श्रूयते—'श्लोकेन पुरस्तात्सदसः स्तुवते, अनुश्लोकेन पश्चात्' इत्यादि। तत्र श्लोकानुश्लोकनामकैः सामभिः प्राकृतान्याज्यपृष्ठादिस्तोत्रगतानि रथंतरवामदेव्यनामकानि सामानि बाध्यानि। कुतः। 'स्तुवते' इति प्रकृतिलिङ्गदर्शनात्। प्रकृतौ—'आज्यैः स्तुवते' 'पृष्ठैः स्तुवते' इति हि श्रुतम्।

नैतत्सारम्। किमत्र स्तुतिमनूद्य देशसामगुणौ विधीयेते, किंवा गुणद्वयविशिष्टा स्तुतिः। नाऽऽद्यः। वाक्यभेदापत्तेः। द्वितीये तु कार्यभेदेन बाधाभावात्समुच्चयः स्यादिति ॥ १५ ॥

( दशमे—विकृतिविशेषे प्राकृतसाम्नां कौत्सादिभिर्बाधाधिकरणे सूत्रम्— )।

**अर्थे त्वश्रूयमाणे शेषत्वात्प्राकृतस्य विकारः स्यात् ॥ १७ ॥**

*दशमाधिकरणमारचयति—

**समुच्चीयेत कौत्सादि यद्वा प्राकृतबाधकम्।**
**स्तुत्यभावादादिमोऽन्त्यो लिङ्गप्रकरणद्वयात् ॥ १६ ॥**

विकृतिविशेषे श्रूयते—'कौत्सं भवति, काण्वं भवति' इति। तदेतत्कौत्सादिनामकं साम प्राकृतेन साम्ना समुच्चीयते। कुतः। प्राकृतस्य स्तुतिलिङ्गस्याभावेन कार्यैक्याभावात्।

मैवम्। प्रकरणात्क्रत्वङ्गत्वे सति ऋगक्षराभिव्यक्तिसामर्थ्यलक्षणप्राकृतलिङ्गेन कार्यैक्यावगमात्। तस्मात्—बाधकम् ॥ १६ ॥

( एकादशे—कौत्सादिभिर्व्यवस्थयैकादिबाधाधिकरणे सूत्रे १८—१९ )।

**सर्वेषामविशेषात् ॥ १८ ॥ एकस्य वा श्रुतिसामर्थ्यात्प्रकृतेश्चाविकारात् ॥ १९ ॥**

एकादशाधिकरणमारचयति—

* शास्त्रदीपिकायां तु नवमवर्णकान्तर्गत्वेनैवेदमधिकरणमङ्गीकृतम्।

१ ज. झ. बाध्यः। २ ख. ज. झ. °द्याचु स°। ३ क. °स्ताच्छन्दसः। ४ क. स्तुवन्ति। ५ क. °थ तद्देश°। ६ क. ख. च. बाध्याभा°। ७ ज. झ. °रादिमि°। ८ ख. ज. झ. ञ. °मर्थ्येन लक्षणेन प्रा°।

तत्सर्वबाधकं सर्वमेकद्व्याद्युक्तितोऽथवा ।
अविशेषादादिमोऽन्त्य एकाद्युक्तिविशेषतः ॥ १७ ॥

तत्पूर्वोक्तं कौत्सादिसाम विषयः । तत्र—किं कौत्सं साम प्राकृतसामनिवर्तकम्, काण्वमपि तथा, इत्येकैकस्य सर्वनिवर्तकत्वमुच्यते, आहोस्वित्—एकवचनान्तनिर्दिष्टमेकस्य निवर्तकम्, द्विवचनान्तनिर्दिष्टं द्वयोः, बहुवचनान्तनिर्दिष्टानि बहूनाम् । तत्र नियामकाभावादाद्यः पक्षः प्राप्नोति ।

एकादिवचनरूपाणां श्रुतीनां नियामकत्वादन्त्यः पक्षोऽभ्युपेयः । तथा हि—'कौत्सं भवति, + वासिष्ठस्य जनित्रे भवतः, कौञ्चानि भवन्ति' इति निवर्तकेषु श्रूयमाणान्येकद्विबहुवचनानि निवर्त्यानामेतत्संख्यावत्त्वं प्रत्यासत्त्या बोधयन्ति । किंचैवं सत्यबाधितसामविषयचोदकोऽनुगृहीतो भवति । कृत्स्नबाधे तु सर्वचोदको निरुध्येत । तस्मात्—न सर्वबाधकः ॥ १७ ॥

( द्वादशे—विवृद्धाविवृद्धस्तोमक्रतुषु क्रमेण प्राकृतसामबाधाबाधाधिकरणे सूत्रम्— ) ।

स्तोमविवृद्धौ त्वधिकं स्यादविवृद्धौ द्रव्यविकारः स्यादितरस्याश्रुतित्वाच्च ॥ २० ॥

द्वादशाधिकरणमारचयति—

स्तोमस्थयोर्वृद्ध्यवृद्ध्योः प्राकृतः किं निवर्तते ।
अवृद्धावेव वाऽऽद्यः स्यात्सामोत्पत्त्युपयोगतः ॥ १८ ॥
अवृद्धावुपयोगाय प्राकृतस्य निवर्तकम् ।
वृद्धिं प्रत्युपयोगित्वाद्वृद्धौ तु न निवर्तकः ॥ १९ ॥

सन्ति विवृद्धस्तोमका अविवृद्धस्तोमकाश्च विकृतिरूपाः क्रतवः । तत्रोभयत्रापि यानि सामान्युपदिष्टानि, तैरतिदिष्टानां साम्नां निवृत्तिः स्यात् । अन्यथा सामोत्पत्तिवैयर्थ्यात् । इति पूर्वः पक्षः । सिद्धान्तः स्पष्टार्थः ॥ १८ ॥ १९ ॥

( त्रयोदशे पवमाने विवृद्धाविवृद्धस्तोमकक्रतूनां सामावापोद्वापाधिकरणे सूत्रे—२१·२२ ) ।

पवमाने स्यातां तस्मिन्नावापोद्वापदर्शनात् ॥ २१ ॥

---

+ [सर्वेषु]पुस्तकेषु 'वाशिष्ठस्य' इति पाठः ।

---

१ ख. ञ. झ. ञ. °भ्युपगन्तव्यः । २ ख. ज. झ. ञ. °र्त्यानामपि त° । घ. °र्त्यानां त° । ३ ख. ञ. झ. ञ. बोधकम् । ४ क. निरुध्यते । ५ ज. झ. °मन्तयो° । ६ ज. झ. °द्धानुपयोगात्तु श्रा° । ञ. °द्धानुप° । ७ ख. ज. झ. ञ. °न्ति वृ° । घ. °न्ति वृद्धिस्तो° ।

वचनानि त्वपूर्वत्वात् ॥ २२ ॥

त्रयोदशाधिकरणमारचयति—

कापि स्तोत्रे ऋचि कापि स्यादावापस्तथोद्धृतिः ।
पवमानेषु गायत्र्यादिष्वेवोताविशेषतः ॥ २० ॥
आद्यो नो परिसंख्यानादत्र ह्येवेति तद्विधेः ।
विध्यन्तराशेषभूतमपूर्वं तद्विधीयते ॥ २१ ॥

अवृद्धस्तोमकेषु प्राकृतस्यातिदिष्टस्य साम्न उद्वापः । प्रत्यक्षोपदिष्टानामावापः । 'वृद्धस्तोमकेष्वावाप एव' इति पूर्वाधिकरणे स्थितम् । तावेवाऽऽवापोद्वापौ यस्मि-न्कस्मिंश्चित्स्तोत्रे यस्यां कस्यांचिदृचि स्याताम् । कुतः । नियामकाभावात् । इति पूर्वः पक्षः ।

नो खल्वेतद्युक्तम् । एवकारेण प्रकृतपवमानव्यतिरिक्तेष्वाज्यादिस्तोत्रेषु, गाय-त्रीबृहत्यनुष्टुब्व्यतिरिक्तास्वृक्ष्वावापोद्वापयोः परिसंख्यातत्वात् । एवंकारश्चैवमाम्नायते— 'त्रीणि ह वै यज्ञस्योदराणि गायत्री, बृहती, अनुष्टुप्, च । अत्र ह्येवाऽऽव-पन्ति, अत एवोद्वपन्ति' इति । ननु-मा भूतामन्यत्राऽऽवापोद्वापौ । विवक्षितदेशेषु कथं प्राप्नुतः-इति चेत् । अनेन वाक्येन तद्विधानात् । इति ब्रूमः । न च—अय-मर्थवादः । अनन्यशेषत्वात् । नाप्यनुवादः । अपूर्वार्थत्वात् । तस्मात्—पवमानेष्वेव गायत्र्यादिष्वावापोद्वापौ ॥ २० ॥ २१ ॥

(चतुर्दशे—यागादौ विधिशब्देनैव देवताभिधानाधिकरणे सूत्रे २३–२४)।

विधिशब्दस्य मन्त्रत्वे भावः स्यात्तेन चोदना ॥ २३ ॥
शेषाणां चोदनैकत्वात्तस्मात्सर्वत्र श्रूयते ॥ २४ ॥

चतुर्दशाधिकरणमारचयति—

पर्यायेणापि देवोक्तिर्विधेनैव पदेन वा ।
अर्थभेदादादिमोऽन्त्यः शब्दपूर्वान्वयित्वतः ॥ २२ ॥

दर्शपूर्णमासयोर्ये निगमाः, तेष्वग्न्यादिदेवताः किं पावकशुच्यादिना येन केनापि पर्यायेणाभिधातव्याः, किंवा तत्तद्विध्युद्देशगतेनाग्न्यादिपदेनैव, इति संशयः । तत्र—शब्दोऽर्थप्रत्यायनार्थः, तत्पर्यायाणां स्वरूपभेदेऽप्यर्थाभेदाद्येन केनाप्यभिधानम् । इति पूर्वः पक्षः ।

येन सर्वैः कार्यमाप्यते तत्र शब्दोऽर्थप्रत्यायनार्थो भवति । यत्र पुनः शब्द

१ ज. झ. °त्र ऋचि । २ क. °वोत वि° । ३ ख. च. ज. झ. ञ. °ष्टुब्व्यतिरिक्ता° । ४ ज. झ. °वमाका° । ५ ज. झ. °क्तिर्वेदने° । ञ. ° क्तिर्विधिने° । ६ ज. झ. °मासे ये योनि° । ७ झ. °भिधेयाः, किं° । ८ ज. झ. तत्र विध्यु° । ९ ज. झ. तत्र सर्वै का° ।

एव कार्यम्, तत्र कार्यसंबन्धार्थं शब्द एव प्रत्याययितव्यः । तद्यथा—देवदत्ते गौरवातिशयमुत्पादयितुं राजसभायामाचार्योपाध्यायादिशब्दैस्तं व्यवहरन्ति । पितृमातृमातुलादयश्च तत्तत्संबन्धविशेषवाचकशब्देन यथा तुष्यन्ति न तथा स्वनामग्रहणेन । प्रत्युत कुप्यन्त एव । तद्वदत्रापि—अग्न्यादिवैधशब्द एव कार्यमात्रकम् । विधिं विना यागदेवतयोः संबन्धाभावात् । विधिकृते तु तत्संबन्धे शब्दस्य प्रयोजकत्वं दुर्वारम् । अत एव—अयाट्स्वाहाकारोज्जित्यादिनिगमेषु नियमेन वैधा एवाग्न्यादिशब्दाः प्रयुज्यन्ते—"अयाडग्नेः प्रिया धामानि" 'अयाट् सोमस्य प्रिया धामानि' 'स्वाहाऽग्निम्' 'स्वाहा सोमम्' 'अग्नेरहमुज्जितिमनूज्जेषम्' 'सोमस्याहमुज्जितिमनूज्जेषम्' इत्यादिना । तस्मात्—वैधपदैरेव तत्तद्देवताभिधानम् ॥२२॥

(पञ्चदशे—अतिदेशस्थलेऽपि वैधशब्देनैव देवताभिधानाधिकरणे सूत्रम्) ।

**तथोत्तरस्यां ततौ तत्प्रकृतित्वात् ॥ २५ ॥**

पञ्चदशाधिकरणमारचयति—

**सौर्यादिनिगमे कोऽपि शब्दः स्याद्वैध एव वा ।**
**चरौ सूर्यान्वयादाद्यः प्रयोगान्वयतोऽन्तिमः ॥ २३ ॥**

'सौर्यं चरुं निर्वपेत्' इत्यादिविकृतिषु चोदकातिदिष्टा ये निगमाः, तेष्वग्न्यादिशब्दस्थाने सूर्याद्यर्थप्रत्यायकः शब्द ऊहितव्यः । स चार्थ आदित्यादिना पर्यायेणापि प्रत्याययितुं शक्यते । वैधस्तु सूर्यशब्दश्चरुयाग एवान्वितः । न त्वग्न्यादिशब्दवन्निगमेषु पठितः । तस्मात्—यः कोऽपि । इति प्राप्ते—

ब्रूमः—अत्र 'सौर्यं निर्वपेत्' इति प्रयोगवचनेन सूर्यान्वयो भवति । न तु 'सौर्यश्चरुः' इति चरुणा । कारकविभक्त्यर्हा द्वितीया । सा चाऽऽख्यातेन संबध्यते न नाम्ना । सति प्रयोगान्वये याज्यापुरोनुवाक्ययोर्निगमे वा यत्र प्रयोगोऽपेक्षितः, तत्र सर्वत्र सूर्यशब्द एव युक्तः । प्रकृतावपि निगमेषु नार्थमात्रविवक्षयाऽग्निशब्दः प्रयुज्यते, किं तर्हि वैधविवक्षयाऽपि । तथा सत्यतिदेशोऽपि वैधशब्दविषय एव भविष्यति । तस्मात्—सूर्यशब्द एव प्रयोक्तव्यः ॥२३॥

---

१ ख. °न्वश° । क. च. °न्वता° । २ क. °व-पाट् । ज. °व पट । ३ ज. झ. विधा । ४ क. ख. च. ज. °त्—विधिप । ५ ज. झ. °र्यादिनिगमोऽप्यर्थ° । ६ क. ख. च. चाऽऽदि° । ७ क. ख. च. ज. °रुत्याग° । ८ क. °यान्तेन । सा । ९ ज. झ. °गानपेक्ष्य या° । १० ज. निगमेन ।

(षोडशे—आधानेऽग्नेः सगुणेनाभिधानाधिकरणे सूत्राणि २६—२९)।

प्राकृतस्य गुणश्रुतौ सगुणेनाभिधानं स्यात् ॥ २६ ॥

अविकारो वाऽर्थशब्दानपायात्स्याद्द्रव्यवत् ॥ २७ ॥

तथाऽऽरम्भासमवायाद्वा चोदितेनाभिधानं स्यादर्थस्य श्रुतिसमवायित्वादवचने च गुणशास्त्रमनर्थकं स्यात् ॥ २८॥

द्रव्येष्वारम्भगामित्वादर्थे विकारः सामर्थ्यात् ॥ २९॥

षोडशाधिकरणमारचयति—

निगमे पावकाग्न्योः किमग्निः स्यादथवोभयम् ।
अग्निश्चोदकतो मैवं वैधोऽग्निः सगुणो यतः ॥ २४ ॥

आधाने श्रूयते 'अग्नये पवमानाय पुरोडाशमष्टाकपालं निर्वपेत् । अग्नये पावकाय । अग्नये शुचये' इति । तत्र गुणगुणिनोः पावकाग्न्योर्मध्येऽग्निशब्द एव निगमे प्रयोक्तव्यः । कुतः । तस्यैव चोदकप्राप्तमन्त्रपठितत्वात् ।

मैवम् । पावकगुणयुक्तस्याग्नेर्वैधत्वेन सर्वप्रयोगेषु तथैव प्राप्तत्वात् । तस्मात्—शब्दद्वयं पठनीयम् ॥ २४ ॥

(सप्तदशे—आधानाज्यभागयोरग्नेर्निर्गुणेनाभिधानाधिकरणे सूत्रे ३०—३१)।

बुधन्वान्पवमानवद्विशेषनिर्देशात् ॥ ३० ॥

मन्त्रविशेषनिर्देशान्न देवताविकारः स्यात् ॥ ३१ ॥

सप्तदशाधिकरणमारचयति—

*बृधन्वदादिगुणको देवो वाच्योऽथ केवलः ।
आद्यो देवगुणत्वेन मैवं मन्त्रगुणत्वतः ॥ २५ ॥

आधाने पवमानेष्टिष्वाज्यभागौ प्रकृत्य श्रूयते—'बृधन्वानाग्नेयः कार्यः, पावकवान्सौम्यः' इति । तत्र निगमेषु 'बृधन्वन्तमग्निमावह, पावकवन्तं सोममावह' इत्येवं सगुणो देवो वक्तव्यः । कुतः । बृधन्वत्त्वादेर्देवगुणत्वात् । तथा हि श्रूयते—'बृधन्वानाग्नेयः कार्यः, पावकवान्सौम्यः' इति । न खल्वाज्यभागस्य देवद्वारेण

*शबरभाष्ये तु 'बुध' इत्येव पाठः समालोक्यते । शास्त्रदीपिकायामपि तथैव । न्यायमालापुस्तकेषु 'बृध' इत्येवोपलब्धः ।

१ क. 'कयु' । २ ज. झ. ञ. पठितव्यम् ।

विना साक्षाद्वृधन्वच्छब्दः संभवति । तस्मात्—देवगुणत्वात्तद्गुणो देवो वाच्यः ।

नैवम् । वृधन्वत्ताया मन्त्रगुणत्वात् । न ह्यत्राऽऽग्नेयशब्दो यागपरः । किं तर्हि मन्त्रपरः । संभवति हि मन्त्रस्य साक्षाद्वृधन्वच्छब्दयोगः । 'अग्निं स्तोमेन बोधय' इत्यस्मिन्मन्त्रे वृधिधातोः प्रयुक्तत्वाद्वृधन्वत्ताविधिनाऽऽग्नेयमन्त्रान्तरं निवर्त्यते । न च तद्धितान्त आग्नेयपद उपसर्जनीभूतो देवतावाचकोऽग्निशब्दो वृधन्वच्छब्देन विशेष्टुमर्हति । तस्मात्—केवलोऽग्निशब्दो निगमे पठितव्यः ॥ २५ ॥

(अष्टादशे-{गवानुबन्धपृषदाज्यहोमयोर्विधिशब्दाभ्यामेवोभावनस्पतिशब्दाभ्यामभिधानाधिकरणे} सूत्रे ३२-३३)

विधिनिगमभेदात्प्रकृतौ तत्प्रकृतित्वाद्विकृतावपि भेदः स्यात् ॥ ३२ ॥ यथोक्तं वा विप्रतिपत्तेर्न चोदना ॥ ३३ ॥

अष्टादशाधिकरणमारचयति—

किं गोवनस्पती केनाप्युतोक्ताविधिशब्दतः ।
वैकल्प्यौ निगमाद्भेदो विधेर्दृष्टस्तथाऽग्रिमः ॥ २६ ॥
स भेद आर्थिकस्तं तु प्रापयेच्चोदको न हि ।
उक्ता प्रकरणाम्नानाद्विधत्वेन वनस्पतिः ॥ २७ ॥

ज्योतिष्टोमे पशुः श्रूयते—'गौरनुबन्ध्यः' इति । तथा पशौ स्विष्टकृद्विकारः पठितः—'पृषदाज्येन वनस्पतिं यजति' इति । तावेतौ गोवनस्पती निगमेषु येन केनापि पर्यायशब्देन वक्तव्यौ । कुतः। प्रकृतौ विधिनिगमयोर्भेददर्शनेन वैधशब्दनियमाभावात् । तथा हि—अग्नीषोमीयपशुरनुबन्ध्यस्य प्रकृतिः। तत्र पशुशब्दो वैधः।'अग्नीषोमीयं पशुमालभेत'इति तद्विधानात्।निगमेषु च्छागशब्दः:'छागस्य वपाया मेदसोऽनुब्रूहि' इति । तथा—वनस्पतियागस्य स्विष्टकृद्यागः प्रकृतिः । तत्र स्विष्टकृच्छब्दसहितोऽग्निशब्दो वैधः । 'अग्निं स्विष्टकृतं यजति' इति विधानात् । निगमेषु केवलोऽग्निशब्दः पठितः—'ये देव्या ऋत्विजस्तेभिरग्ने' इति । सत्येवं विधिनिगमभेदे वैधशब्दानियमस्य प्रकृतावभावाद्विकृतावपि तदभावे सति येन

१ ज. ञ. °ब्द एव सं° । २ ज. ञ. किंतु । ३ ज. ञ. °क्षादेव वृध° । ४ क. ख. °शेषम° । ५ ज. ञ. °कोऽप्यग्नि° । ६ क. ख. ग. वक्तव्यौ । ७ ज. ञ. ञ. तत्रैवमावि° । ८ ज. ञ. °वाधक° ।

केनाप्यभिधानम् । इति पूर्वः पक्षः । प्रकृतो योऽयं विधिनिगमभेदः स आर्थिकः । न चाऽऽर्थिकं चोदकः प्रतिदिशति । तस्मात्—वैध एव निगमेषु प्रयोक्तव्यः । न चैवमनुबन्ध्यानिगमे वैधो गोशब्दः प्राप्नुयात्, इति शङ्कनीयम् । तत्रोस्राशब्दस्य साक्षादाम्नातत्वात् । 'उस्राया वपाया मेदसोऽनुब्रूहि' इति ह्याम्नायते । तस्मात्—उस्रावनस्पतिशब्दौ वक्तव्यौ । इति राद्धान्तः ॥ २६ ॥ २७ ॥

(एकोनविंशे— {अवभृथेऽग्नीवरुणयोः स्विष्टकृच्छब्देनाभिधानाधिकरणे} सूत्रे ३४—३५ ) ।

स्विष्टकृद्देवतान्यत्वे तच्छब्दत्वान्निवर्तेत ॥ ३४ ॥

संयोगो वाऽर्थापत्तेरभिधानस्य कर्मजत्वात् ॥ ३५ ॥

एकोनविंशाधिकरणमारचयति—

किमग्नीवरुणौ स्विष्टकृच्छब्देन विवर्जितौ ।

वक्तव्यौ सहितौ वाऽऽद्यो रूढत्वादगुणोक्तितः ॥ २८ ॥

कदाचित्कृतवान्स्विष्टमिति योगाद्गुणे सति ।

पावकाग्निनयेनात्र वक्तव्यौ सगुणाविमौ ॥ २९ ॥

अवभृथे श्रूयते—'अग्नीवरुणौ स्विष्टकृतौ यजति' इति । तत्र निगमेषु स्विष्टकृच्छब्दवर्जितावग्नीवरुणौ वक्तव्यौ । कुतः । स्विष्टकृच्छब्दस्य योगासंभवेन वह्नौ रूढस्य गुणवाचित्वाभावात् । 'स्विष्टं कृतवान्' इत्येवं भूतार्थे क्विप्प्रत्ययाभिधानात्तादृशो योगो वक्तव्यः । न चासावत्र संभवति । स्विष्टस्य करिष्यमाणत्वात् । रूढौ तु कार्यलक्षणया 'स्विष्टकृत्कार्ये, अग्नीवरुणौ' इति वचनव्यक्तिः संपद्येत । तस्मात्—स्विष्टकृच्छब्देन वर्जितौ । इति प्राप्ते—

ब्रूमः—तेन सहितौ वक्तव्यौ । कुतः । अस्मिन्प्रयोगे स्विष्टस्य करिष्यमाणत्वेऽप्यतीतप्रयोगे कृतत्वेन योगसंभवे केवलप्रयोगं परित्यज्य कल्प्यरूढ्याश्रयणायोगात् । ततः—पावकत्वगुणयुक्ताग्निवत्स्विष्टकृत्त्वगुणयुक्तौ वक्तव्यौ ॥ २८ ॥ २९ ॥

---

१ ख. आर्थिकः, न तु शाब्दः । अतश्चोदकेन तं भेदमतिदिशति । तथा सति पूर्वोक्ता- न्यादिनिगमन्यायेन विधिशब्दः प्राप्नोति । ततो वनस्पतिशब्द एव । २ क. ख. शङ्कयम् । ३ क. ख. च. ज. झ. ञ. °मग्निव° । ४ क. रावो । ज. झ. पावौ । ५ ख. °प्रियमेवा° । झ. °प्रिवदेवात्र । ६ क. ख. ज. झ. ञ. अग्निव° । ७ ज. झ. ञ. वस्तुतं प° ।

विंशे {अग्नीषोमीयपशौ सर्वत्रैव प्रयोगे निर्गुणेनाग्निशब्देनाग्नेरभिधानाधिकरणे} सूत्रे ३६-३७)।

सगुणस्य गुणलोपे निगमेषु यावदुक्तं स्यात् ॥ ३६ ॥ सर्वस्य वैककर्म्यात् ॥ ३७ ॥

विंशाधिकरणमारचयति—

स्विष्टकृत्त्वगुणो लोप्यो याग एवाखिलेषु वा।
यज्यन्वयाद्याग एव प्रयोगान्वयतोऽन्तिमः ॥ ३० ॥

पशुपुरोडाशे स्विष्टकृति गुणरहितः केवलोऽग्निः श्रूयते—'अग्निं यजति' इति। तत्र—गुणरहितस्याग्नेर्यजिधातुनाऽन्वयाद्याग एव स्विष्टकृत्त्वगुणो लोप्यः। मैवम्। यजतिशब्दस्य प्रयोगवचनत्वादखिलेषु निगमप्रयोगेष्वसौ लोप्यः ॥ ३० ॥

एकविंशे—अनुयाजेषु स्विष्टकृद्यागस्य संस्कारकर्मताधिकरणे सूत्रम्—)।

स्विष्टकृदावापिकोऽनुयाजे स्यात्प्रयोजनवदङ्गानामर्थसंयोगात् ॥ ३८ ॥

एकविंशाधिकरणमाह—

अनुयाजोऽन्तिमो योऽसौ किमारादुपकारकः।
स्विष्टकृत्संस्कृतिर्वाऽऽद्योऽनुयाजान्तरसाम्यतः ॥ ३१ ॥
स्विष्टकृत्त्वगुणस्याग्नेः प्रत्यभिज्ञार्थवत्त्वतः।
दृष्टार्थत्वाच्च संस्कारो भवेदन्त्यप्रयाजवत् ॥ ३२ ॥

दर्शपूर्णमासयोस्त्रयोऽनुयाजाः समाम्नाताः। तत्र प्रथमद्वितीयानुयाजवत्तृतीयोऽप्यारादुपकारः। इति पूर्वः पक्षः।

अस्ति प्रधानहोमनारिष्ठहोमानन्तरभावी प्राशित्रादिभक्षणात्प्राचीनः पुरोडाशादिद्रव्यकः स्विष्टकृद्धोमः सर्वेषां हविषाम्। 'उत्तरार्धात्सकृत्स्विष्टकृतेऽवद्यति' इत्यादिना प्राशित्रादिभक्षणोत्तरकालीनेष्वाज्यद्रव्यकेष्वनुयाजेषु तृतीये स्विष्टकृत्त्वगुणेन प्रत्यभिज्ञाऽस्ति। 'देवोऽग्निः स्विष्टकृत्' इति मन्त्रपाठात्। सा च पूर्वस्विष्टकृद्देवतास्मरणसंस्कारे सत्यर्थवती स्यात्, प्रथमद्वितीययोस्तु नास्ति सा, इति वैषम्यम्। किंच—संस्कारपक्षे दृष्टार्थस्तृतीयः स्यात्। तस्मात्—अन्त्यप्रयाजवदन्त्योऽनुयाजः स्यात्।

१ अ. झ. योग। २ क. ख. ज. झ. नियम°। ३ ज. झ. °स्याग्ने प्र°। ४ ज. ज्ञायमानतः ५ ज. झ. °दिलक्ष°। ६ ख. ज. झ. ञ. °कृदव°। ७ ख. °न तत्र प्रत्यभिज्ञा दे°। अ. झ. °न गुणप्रत्यभिज्ञानस्य दे°। ञ. °न गुणाग्नेः प्रत्यभिज्ञायमानत्वात्। दे°। ८ ख. झ. संस्कारः।

( द्वाविंशे-दर्शपूर्णमासयोर्याज्यापुरोनुवाक्ययोः संस्कारकर्मताधिकरणे सूत्राणि ३९-४१ )।

अन्वाहेति च शस्त्रवत्कर्म स्याच्चोदनान्तरात् ॥ ३९ ॥ संस्कारो वा चोदितस्य शब्दवचनार्थत्वात् ॥ ४० ॥ स्याद्गुणार्थत्वात् ॥ ४१ ॥

द्वाविंशाधिकरणमारचयति—

अन्वाहेत्यर्थकर्म स्यात्संस्कारो वाऽर्थकर्मता।
शस्त्रवत्कार्यताज्ञानाद्दृष्टार्थत्वेन संस्कृतिः ॥ ३३ ॥

'तिष्ठन्याज्यामन्वाह, आसीनः पुरोनुवाक्याम्' इति दर्शपूर्णमासयोः श्रुतम्। तदेतच्छस्त्रादिवदर्थकर्म स्यात्। यथा 'स्तौति शंसति' इत्यत्र कर्तव्यताप्रतीतेः स्तोत्रशस्त्रयोरर्थकर्मत्वम्, तथाऽनुवचनस्यापि।

मैवम्। चोदितदेवतास्मरणसंस्कारस्य दृष्टप्रयोजनत्वात्। तस्मिन्सत्यदृष्टस्य कल्पयितुमशक्यत्वात्। ननु मन्त्रसामर्थ्यादेव देवतास्मरणसिद्धेः 'अन्वाह' इति तद्विधानं व्यर्थम्। एवं तर्हि प्रागनुवचनमनूद्य 'तिष्ठन्, आसीनः' इति स्थानासनगुणौ विधीयेयाताम् ॥ ३३ ॥

( त्रयोविंशे—मनोतायामूहाभावाधिकरणे सूत्रम्— )।

मनोतायां तु वचनादविकारः स्यात् ॥ ४२ ॥

त्रयोविंशाधिकरणमारचयति—

मनोतामन्त्र ऊहोऽस्ति वायव्ये नास्ति वाऽस्त्यसौ।
आग्नेय्यैवेतिवचनं प्रकृतौ सार्थकं यथा ॥ ३४ ॥
अग्नीषोमावग्निनैव लक्ष्येतां वचनं विना।
अनर्थकात्तत्र वाक्याद्विकृतावूहवारणम् ॥ ३५ ॥

'त्वं ह्यग्ने प्रथमो मनोता' इत्ययं मनोतामन्त्रोऽग्नीषोमीयपशौ पठितः। वायव्यपशावप्ययं चोदकप्राप्तः। तत्र—'त्वं हि वायो प्रथमः' इत्येवमूहोऽस्ति। यत्तु वचनम्—'यद्यप्यन्यदेवत्यः पशुः, आग्नेय्येव मनोता कार्या' इति। तत्प्रकृतौ

---

१ ख. प्राप्तव°। २ ख. ज. झ. ञ. विधीयेताम्। ३ ज. वायव्यो। ४ क. प्राकृतौ। ५ ज. झ. ञ. °वयं।

पठितं तत्रैव सार्थकम् । द्विदेवत्यप्रशावैकदेवत्यमन्त्रस्य प्रकरणपठितस्याप्ययो-ग्यत्वशङ्कायां पुनर्विधानार्थत्वात् ।

मैवम् । 'अग्निर्णो गच्छन्ति' इत्यादिवन्मन्त्रगतस्याग्निशब्दस्याग्नीषोमलक्षकत्वेनायोग्यत्वाशङ्काया अनुदयात्प्रकृतावनर्थकं तद्वाक्यं विकृतावूहनिवारणेन चरितार्थं भवति । तस्मात्-ऊहो नास्ति ॥३४॥३५॥

( चतुर्विंशे-कण्वरथंतरस्य स्वयोनौ गानाधिकरणे सूत्राणि ४३-४६)॥

पृष्ठार्थेऽन्यद्रथंतराद्यद्योनिपूर्वत्वात्स्यादृचां प्रविभक्त-त्वात् ॥ ४३ ॥ स्वयोनौ वा सर्वाख्यत्वात् ॥४४॥ यूपवदिति चेत् ॥ ४५ ॥ न कर्मसंयोगात् ॥४६॥

चतुर्विंशाधिकरणमारचयति-

बृहद्रथंतरैकीययोनौ कण्वरथंतरम् ।
रथंतरस्यैव योनौ किं स्वयोनावुताग्रिमः ॥ ३६ ॥
चोदकस्याविशेषेण, द्वितीयो नामसाम्यतः ।
अनङ्गत्वान्नातिदेशः स्वयोनौ पाठितत्वतः ॥ ३७ ॥

वैश्यस्तोमे पृष्ठस्तोत्रे सामविशेषो विहितः-' कण्वरथंतरं पृष्ठं भवति ' इति । प्रकृतौ पृष्ठस्तोत्रे बृहद्रथंतरसामनी विकल्पिते । ' त्वामिद्धि हवामहे '-इतीय-मृग्बृहतो योनिः । ' अभि त्वा शूर '-इति रथंतरस्य । ' पुनानः सोम '-इति कण्वरथंतरस्य । तत्र बृहद्रथंतरयोरन्यतरस्य साम्नो योनौ कण्वरथंतरं गेयम् । कुतः । चोदकप्राप्तयोर्विशेषानियामकाभावात् ।

अथवा रथंतरस्यैव योनौ गेयम् । कुतः । 'रथंतर' इति नामसाम्यस्य धर्मा-तिदेशार्थत्वेन नियामकत्वात् ।

नैतद्युक्तम् । बृहद्रथंतरसाम्नोरेव प्रकृतावङ्गत्वेन विधानम्, न तु तद्योन्योः । अतो नास्ति तयोरतिदेशतः प्राप्तिः । तस्मात्-' स्वयोनौ गेयम् ' इति परि-शिष्यते । प्रातिश्च सामगानामुत्तराग्रन्थपाठादवगन्तव्या । एवं सति श्रुतहान्यश्रु-तकल्पने न भविष्यतः ॥ ३६ ॥ ३७ ॥

---

१ ज. झ. °यात् । अत. प्रकृ° । २ ज. झ. ञ. °स्यैकयो° । ३ ज. झ. पृष्ठसूत्रे । ४ क. ख. °तीयं पृथग्बृ° । ५ क. °योर्विशेषे नि° । ज. झ. °योस्तयोर्वि° । ६ ञ. वा कण्वरथंतरं र° । ७ ज. झ. ञ. तयोन्याः । ८ ज. झ. ञ. तत्प्राप्तिश्च ।

( पञ्चविंशे—कण्वरथंतरस्य स्वयोन्युत्तरयोर्गानाधिकरणे सूत्रे ४७–४८ ) ।

**कार्यत्वादुत्तरयोर्यथाप्रकृति ॥ ४७ ॥ समानदेवते वा तृचस्याविभागात् ॥ ४८ ॥**

पञ्चविंशाधिकरणमारचयति—

**संदेहनिर्णयौ पूर्ववदेवोत्तरयोर्ऋचोः ।**
**योनित्यागः समश्चेन्न तृचशब्देन बाधनात् ॥ ३८ ॥**

'एकं साम तृचे क्रियते' इति श्रुतेः कण्वरथंतरसाम्न ऋचां त्रयमाश्रयः । तत्र—एका स्वयोनिः, इतरे स्वयोन्युत्तरे । एवं बृहद्रथंतरसाम्नोर्द्रष्टव्यम् । तत्र—बृहदुत्तरयो रथंतरोत्तरयोर्वाऽतिदेशप्राप्त्यविशेषेण स्वेच्छया गेयम् इत्याद्यः पक्षः। नामसाम्याद्रथंतरोत्तरयोरेव गेयम् । इति द्वितीयः ।

प्रकृतावृचः साक्षादङ्गत्वाभावेऽपि सामद्वारकप्रङ्गत्वमङ्गीकृत्य चोदकप्राप्त्या पक्षद्वयोपन्यासः ।

योनिवदुत्तरयोरप्यृचोरुत्तराग्रन्थे[1] पठितत्वात्स्वयोन्युत्तरयोर्गेयम् । इति तृतीयपक्षो राद्धान्तः ।

बृहदुत्तरयोः स्वयोन्युत्तरयोर्वा गीयताम् । सर्वथाऽपि स्वयोन्युक्त्यागः, ऋगन्तरपरिग्रहश्च समानः । तथा सति चोदकोऽत्र प्रापकः । इति पूर्वपक्षिणोऽभ्यधिका शङ्का । तृचशब्दः समानच्छन्दस्कानामेकदेवत्यानामृचां त्रये प्रसिद्धः । अतस्तृचश्रुत्या प्रत्यक्षया चोदकप्राप्तस्य बाधः । इति राद्धान्ताशयः ॥३८॥

( षड्विंशे—अग्निष्टुति स्तुतशस्त्रयोरविकाराधिकरणे सूत्रम्— ) ।

**ग्रहाणां देवतान्यत्वे स्तुतशस्त्रयोः कर्मत्वादविकारः स्यात् ॥ ४९ ॥**

षड्विंशाधिकरणमारचयति—

**आग्नेयेषु ग्रहेषूहो नास्ति वा स्तुतशस्त्रयोः ।**
**संस्कारत्वादस्ति मैवमर्थकर्मत्वनिश्चयात् ॥ ३९ ॥**

अग्निष्टुदाख्य एकाहे श्रूयते—'आग्नेया ग्रहा भवन्ति' इति । तेषु चोदकप्राप्तयोनानादेवतयोः स्तुतशस्त्रयोः संस्कारकर्मत्वभ्रमेणास्त्यूहः ।

---

१ ज. झ. °र्वपदे योत्त° । २ ज. झ. °रे द्वे यो° । ३ क. ख. च. °ग्रन्थप° । ४ ज. झ. °कस्यानुमेयस्य । ५ झ. सिद्धान्तः । ६ ज. झ. °निणर्यात् ।

इति वदन्तं प्रत्येतदुत्तरम्–'द्वितीयाध्याये तयोरर्थकर्मत्वस्य निर्णीतत्वान्नास्त्यूह इति ॥ ३९ ॥

( सप्तविंशे–चातुर्मास्येष्वाज्यशब्दस्याविकारेणाऽऽवाहनाधिकरणे सूत्राणि ५०–५९ )।

उभयपानात्पृषदाज्ये दध्नः स्यादुपलक्षणं निगमेषु पातव्यस्योपलक्षणात् ॥ ५० ॥ न वा परार्थत्वाद्यज्ञपतिवत् ॥ ५१ ॥ स्याद्वाऽऽवाहनस्य तादर्थ्यात् ॥ ५२ ॥ न वा संस्कारशब्दत्वात् ॥ ५३ ॥ स्याद्वा द्रव्याभिधानात् ॥ ५४ ॥ दध्नस्तु गुणभूतत्वादाज्यपा निगमाः स्युर्गुणत्वं श्रुतेराज्यप्रधानत्वात् ॥ ५५ ॥ दधि वा स्यात्प्रधानमाज्ये प्रथमान्त्यसंयोगात् ॥५६॥ अपि वाऽऽज्यप्रधानत्वाद्गुणार्थे व्यपदेशे भक्त्या संस्कारशब्दः स्यात्॥५७॥ अपि वाऽऽख्याविकारत्वात्तेन स्यादुपलक्षणम् । ॥ ५८ ॥ न वा स्याद्गुणशास्त्रत्वात् ॥ ५९ ॥

सप्तविंशाधिकरणमारचयति–

चातुर्मास्यातिदिष्टेषु निगमेष्वाज्यपानिति ।
विक्रियेत न वाऽऽद्येऽपि किं स्याद्दध्याज्यपानिति॥४०॥
दधिपानिति वा यद्वेत्येवं स्यात्पृषदाज्यपान् ।
द्रव्यद्वयोक्तेराद्यः स्याद्दधिमात्रहविष्ट्वतः ॥ ४१ ॥
द्वितीयः स्यात्तृतीयोऽस्तु द्रव्यान्तरविधानतः ।
गुणो दध्नां चित्रताऽऽज्ये ततो विक्रियते नहि ॥४२॥

चातुर्मास्येषु चोदकेनाऽऽवाहनस्वाहाकाराथाङ्जोषणनिगमा अतिदिष्टाः । तत्र आज्यपशब्दः प्रयुक्तः । 'देवानाज्यपानावह' 'स्वाहा देवानाज्यपान्,' 'अयाड्देवानामाज्यपानां प्रिया धामानि' 'देवा आज्यमजुषन्त' इति । सोऽय-

---

१ क. ख. च. ञ. °ति तावद्द्वे° । २ क. °कारोत्तमप्रयाजस्विष्टकृत्सूक्तवाकनि° । ञ. °काराज्योष° । ३ ज. झ. °शवः प्र° ।

माज्यपशब्दो विक्रियते, न वा, इति संशयः। विकारोऽपि त्रिविधः। तत्र— 'दध्याज्यपान्' इत्याद्यस्तावत्प्राप्नोति। कुतः। 'अथ पृषदाज्यं गृह्णाति द्वयं वा, इदं सर्पिश्चैव दधि च' इति द्रव्यद्वयस्योक्तत्वात्।

आज्यस्योपस्तरणाभिघारणार्थत्वेन हविःशेषत्वाद्धविष्ट्वं नास्तीति दध्येव हविः। ततः 'दधिपान्' इति द्वितीयः पक्षः।

पृषदाज्यशब्देन द्रव्यान्तरमुच्यते। 'पृषदाज्येनानुयाजान्यजति' इति तस्य हविष्ट्वम्। ततः 'पृषदाज्यपान्' इति तृतीयः पक्षः। पृषत्त्वं नाम चित्रता। सा चाऽऽज्यगतो गुणः। स च दधिमेलनेन निष्पाद्यते। तस्मात्—आज्यस्यैव द्रव्यत्वादाज्यपशब्दोपेता एव निगमाः पठितव्याः ॥४०॥४१॥४२॥

इति श्रीमाधवीये जैमिनीयन्यायमालाविस्तरे दशमाध्यायस्य चतुर्थः पादः ॥ ४ ॥

| | अत्र पादे | आदितः। |
|---|---|---|
| अधिकरणानि | २७ | ६८८। |
| सूत्राणि | ५९ | १९११। |

(अथ दशमाध्यायस्य पञ्चमः पादः)।

(प्रथमे-एकदेशग्रहणे प्राथमिकानामेव ग्रहणाधिकरणे सूत्राणि १—६)।

**आनुपूर्व्यवतामेकदेशग्रहणेष्वागमवदन्त्यलोपः स्यात् ॥ १ ॥ लिङ्गदर्शनाच्च ॥ २ ॥ विकल्पो वा समत्वात् ॥ ३ ॥ क्रमादुपजनोऽन्ते स्यात् ॥ ४ ॥ लिङ्गमविशिष्टं संख्याया हि तद्वचनम् ॥ ५ ॥ आदितो वा प्रवृत्तिः स्यादारम्भस्य तदादित्वाद्वचनादन्त्यविधिः स्यात् ॥ ६ ॥**

पञ्चमपादस्य प्रथमाधिकरणमारचयति—

**प्राकृतानामेकदेशे कोऽपि स्यादाद्य एव वा।**
**अविशेषेण कोऽप्याद्यः पूर्वेणास्यैव बोधनात् ॥ १ ॥**

---

१ ज. झ. विक्रीय°। २ क. °तः—'यत्पृष°। ज. °तः—अत्र पृ°। ३ ज. झ. °त्वाच्च विशिष्टं नामकं द्रव्यं ना°। ४ ज. झ. °ते। 'तेन चानुयाजा इज्यन्ते' इ°। ५ ज. °ति प्रकृ°।

प्रकृतौ—'आग्नेयमष्टाकपालम्' इत्यष्टसंख्याकानि कपालानि विहितानि। विकृतिषु—'द्यावापृथिव्यमेककपालम्, आश्विनं द्विकपालकम्, वैष्णवं त्रिकपालम्' इत्यादिष्वष्टानामेकदेशः। तत्र आद्यो मध्यमोऽन्त्यो वा यः कोऽप्येकदेश इच्छया स्वीकार्यः। उत आद्य एवैकदेशः। नियामकाभावात्। यः कोऽपि। इति प्राप्ते—

ब्रूमः—'आचतुर्थात्कर्मणोऽभिसमीक्षेत—इदं करिष्यामि, इदं करिष्यामि' इत्युक्तत्वादनुक्रमेण स्मृत्वाऽनुष्ठेयानि। तत्र प्राकृतोऽनुक्रम एवंविधः—उपवेशनामकेन काष्ठविशेषेण प्रथममङ्गारविशेषं सम्यगवस्थाप्य 'ध्रुवमसि'—इति मन्त्रेण तस्मिन्नङ्गारे पुरोडाशकपालमुपदधाति। सोऽयमनुक्रमश्चोदकप्राप्तस्यैव स्मर्यते। तत्राङ्गारावस्थापनेन पूर्वपदार्थेनानन्तरभावि प्रथमकपालोपधानमेव बुद्धावुपस्थाप्यते। तेन च द्वितीयम्। न च—प्रथमद्वितीययोर्विशेषाभावः। द्वितीयस्य हि 'धर्त्रमसि' इति मन्त्रः प्राचीनदेशश्च विशिष्यते। सत्येवं क्रमनियमे प्रतीतपरित्यागाप्रतीतस्वीकारयोरयुक्तत्वादाद्य एवैकदेशः स्वीकार्यः। अवशिष्टस्तु प्रयोजनाभावाल्लुप्यते। 'एकां सामिधेनीमन्वाह' इत्यस्मिन्पञ्चदशसामिधेन्येकदेशे, द्विरात्रत्रिरात्रादिषु द्वादशाहैकदेशेषु च, अयमेव न्यायो योज्यः॥ १॥

( द्वितीये—एकत्रिके आद्ये तृचे गानाधिकरणे सूत्राणि ७—९)।

> एकत्रिके तृचादिषु माध्यंदिने छन्दसां श्रुतिभूतत्वात् ॥ ७॥ आदितो वा तन्न्यायत्वादितरस्याऽऽनुमानिकत्वात् ॥८॥ यथानिवेशं च प्रकृतिवत्संख्यामात्रविकारत्वात् ॥ ९॥

द्वितीयाधिकरणमारचयति—

> तृचाद्यासु तृचे वाऽऽद्ये तिसृष्वित्युच्यतेऽग्रिमः।
> त्रिच्छन्दस्त्वात्प्राकृतं तत्क्रमादत्र तृचोऽखिलः॥ २॥

एकसंख्यायास्त्रिसंख्यायाश्च व्यतिषङ्गविधानादेकत्रिकनामकः कश्चित्क्रतुर्भवति। स चैवं श्रूयते—'अथैष एकत्रिकः। तस्यैकस्यां बहिष्पवमानम्, तिसृषु होतुराज्यम्। एकस्यां मैत्रावरुणस्य, तिसृषु ब्राह्मणाच्छंसिनः। एकस्यामच्छावाकस्य,

---

१ ञ. °थिवीयमे°। २ क. °पदेश°। च. ज. °पवेषना°। ३ ज. झ. °रकवि°। ४ ज. झ. ञ. विशेष्यते। ५ क. °रनुक्र°। ६ ख. झ. ञ. °धास्तु तु°। ७ ज. झ. °ते—'अथैक°।

तिसृषु माध्यंदिन पवमान:' इति। सन्ति प्रकृतौ माध्यंदिनपवमानस्य त्रयस्तृचाः'— 'उच्चा ते जातम्'—इत्ययं प्रथमो गायत्रीच्छन्दस्कः। 'पुनानः सोमः'— इत्ययं द्वितीयो बृहती छन्दस्कः। 'प्रतुद्रव'—इत्ययं तृतीयस्त्रिष्टुप्छन्दस्कः। एतदेवाभिप्रेत्य श्रुतम्—'त्रिच्छन्दा आवापो माध्यंदिनः पवमानः' इति। एवं सति 'एकत्रिकस्य माध्यंदिने तिसृषु' इति यदुक्तम्, तत्र त्रयाणां तृचाना-माद्यास्तिस्र ऋचो ग्राह्याः, किंवा प्रथमतृचस्थाः क्रमाम्नातास्तिस्रः, इति संशयः। तत्र त्रिच्छन्दस्त्वश्रुत्या प्रबलया दुर्बलं पाठक्रमं बाधित्वा प्रथमपक्षो ग्राह्यः। इति प्राप्ते—

अभिधीयते—यदेतत्त्रिच्छन्दस्त्वम्, तदेतत्प्राकृतम्। तत्र च्छन्दस्त्रयोपेतस्य तृच-त्रयस्योपदिष्टत्वात्। विकृतावपि तत्सर्वमतिदिष्टम्—इति चेत्। बाढम्। अत एव पाठक्रमोऽप्यतिदिष्टः। तथा सति प्रक्रान्तगायत्रीछन्दस्कस्य तृचस्य समाप्तौ सत्यां पश्चाद्बृहतीछन्दस्के तृचे प्रथमायाः प्रारम्भावसरः। स चाऽऽरम्भः 'तिसृषु' इति विशेषविधानेन बाध्यते। तस्मात्-आद्यस्तृचो निखिलो ग्राह्यः॥२॥

( तृतीये—एकस्यामृचि धूर्गानाधिकरणे सूत्रे १०-११)।

त्रिकस्तृचे धुर्ये स्यात्॥ १० ॥ एकस्यां वा स्तोमस्याऽऽवृत्तिधर्मत्वात् ॥ ११ ॥

तृतीयाधिकरणमारचयति—

तृचे स्याद्वाचि वैकस्यां धूर्गानं प्रकृताविव।
तृचे भवेदिहैकस्यां श्रुत्याऽऽवृत्तिविधानतः॥ ३ ॥

एकत्रिक एव क्रतौ व्यतिषङ्गेणैकस्यां तिसृषु च स्तोत्रेषु संपाद्यमानेषु धूर्गानम्, तत्किं तृचे स्यात्, उत एकस्यामृचि, इति संशयः। तत्र—चोदकेन तृचे भवेत्। इति प्राप्ते—

ब्रूमः—इहैकत्रिकक्रतावेकस्यामृचि धूर्गानं भवेत्। कुतः। 'आवृत्तं धूर्षु स्तुवते' इत्यावृत्तिविधानात्। ननु—तृचे गीतेऽपि साम्नस्त्रिरावृत्तिर्भवेत्। न। आवृत्तेः स्तुतिविशेषणत्वात्। गुणसंकीर्तनपरः पदसमूहः स्तुतिः। तेच्चर्गावृत्तिं विना तिसृष्वृक्षु न सिध्यति। तस्मात्—एकस्यां धूर्गानम्॥३॥

---

१ ख. च. क्रमपठिता°। ज. झ. क्रमपरिपाठिता°। २ ज. झ गृह्यते। ३ ज. झ. ञ. ब्रूमः। ४ क. ख ञ. °त्र त्रयो°। ५ च. °ति क्रमान्त°। ६ क. विकृताविव। ७ ज. झ. ञ. आहोस्वित्। ८ ज. झ. तृचे गानेऽपि°। ञ. तृचगानेऽपि। ९ ज. तस्माच्चाऽऽवृत्तिर्नाऽऽस्वृक्षु। झ. तच्चाऽऽवृत्ति वि°। ञ. तच्च वृ°।

(चतुर्थे–द्विरात्रादिषु दशरात्रस्य विध्यन्तानुष्ठानाधिकरणे सूत्रे १२-१३)।

चोदनासु त्वपूर्वत्वाल्लिङ्गेन धर्मनियमः स्यात्

॥ १२ ॥ प्राप्तिस्तु रात्रिशब्दसंबन्धात् ॥ १३ ॥

चतुर्थाधिकरणमारचयति–

द्विरात्रादौ द्वादशाहप्रायणीयादिकः क्रमः।
आद्यन्तौ वर्जयित्वा वा विशेषाभावतोऽग्रिमः ॥ ४ ॥
द्वादशाहे द्वितीयस्य त्रिरात्रे प्रथमत्वतः।
जागतस्यान्तरायाच्च विध्यन्तो दशरात्रगः ॥ ५ ॥

अहीनरूपस्य द्वादशाहस्य विकृतयो द्विरात्रत्रिरात्रादयः। तेषु किं द्वादशाहस्य प्रथममहः प्रायणीयसंज्ञमारभ्य क्रमेण विध्यन्तः प्रवर्तते, किंवा प्रायणीयोदयनीयावाद्यन्तौ वर्जयित्वा तन्मध्यगस्य दशरात्रस्य विध्यन्तः प्रवर्तते, इति संशयः। 'ईदृशमहरुपादेयम्, ईदृशं वर्जनीयम्, इति विशेषनियामकाभावादादित आरभ्य प्रवर्तते। इति पूर्वः पक्षः।

द्विरात्रप्रकरण एवमाम्नायते–'यत्प्रथमं तद्द्वितीयम्, यद्द्वितीयं तत्तृतीयम्' इति। अयमर्थः–'यद्द्विरात्रस्य प्रथममहरनुष्ठेयम्, तद्द्वादशाहस्य द्वितीयम्' इति। एवमुत्तरत्रापि योज्यम्। तदेतत्प्रायणीयवर्जने लिङ्गम्। तथा 'जगतीमन्तर्गच्छति' इति जागतस्याह्नोऽन्तराय आम्नायते। तच्चोदयनीयवर्जने लिङ्गम्। एवमादिभिर्लिङ्गैरुभयं वर्जयित्वाऽवशिष्टस्य विध्यन्तो यत्र यावानपेक्षितः, तत्र तावान्प्रवर्तते–इत्यवगन्तव्यम् ॥४॥५॥

(पञ्चमे–अग्नौ धूननाद्यर्थानां मन्त्राणामनियमेनोपादानाधिकरणे सूत्रम्–)।

अपूर्वासु तु संख्यासु विकल्पः
स्यात्सर्वासामर्थवत्त्वात् ॥१४॥

पञ्चमाधिकरणमारचयति–

धूनने वपने चाग्नौ सप्त चोक्ताश्चतुर्दश।
किमाद्यारम्भनियमः किंवाऽऽरम्भो निजेच्छया ॥ ६ ॥

---

१ ज. ञ. °दितः क्र°। २ ज. ञ. °रात्रा°। ३ ज. ञ. °गतस्य। ४ ज. ञ. °नियमाभा°। ५ ख. एवाऽऽम्ना°। ६ क. °तर्याजयन्ति' इ°। ख. ब. °न्तर्यमयति। ज. ञ. °न्तर्यति°। ७ क. ख. ज. झ. ञ. तच्च वर्जने। ८ ख, किमाज्यार°। ज ञ, °किमप्यार°।

कपालवत्क्रमः प्राप्तः केचित्प्रकरणोचिताः।
व्यर्थाः स्युस्तेन मन्त्राणामारम्भोऽत्र विकल्पितः॥ ७॥

अग्निचयने मन्त्रा आधूननार्था वपनार्थाश्च बहवः पठिताः। प्रयोगे तु तदेकदेशसंख्याविहिताः—' सप्तभिराधुनोति, चतुर्दशभिर्वपति ' इति। तत्र प्रथमाधिकरणोक्तकपालसामिधेन्यादिन्यायेन प्रथमपठितस्यैव मन्त्रस्योपक्रमः प्राप्नोति।

तदयुक्तम्। कुतः। यथोक्तसंख्यातिरिक्तानां प्रकरणपठितमन्त्राणां वैयर्थ्यप्रसङ्गात्। प्रकरणेन क्रमं बाधित्वा निजेच्छया प्रथमतो मध्यतोऽन्ततश्चोपक्रम्य विहितसंख्या पूरणीया॥ ६॥ ७॥

( षष्ठे—विवृद्धस्तोमकेऽप्राकृतानां साम्नामागमाधिकरणे सूत्राणि १५–२५)।

स्तोमविवृद्धौ प्राकृतानामभ्यासेन संख्यापूरणमविकारात्संख्यायां गुणशब्दत्वादन्यस्य चाश्रुतित्वात् ॥ १५॥ आगमेन वाऽभ्यासस्याश्रुतित्वात् ॥ १६॥ संख्यायाश्च पृथक्त्वनिवेशात् ॥ १७॥ पराक्शब्दत्वात् ॥ १८॥ उक्ताविकाराच्च ॥ १९॥ अश्रुतित्वान्नेति चेत् ॥ २०॥ स्यादर्थचोदितानां परिमाणशास्त्रम् ॥ २१॥ आवापवचनं चाभ्यासे नोपपद्यते ॥ २२॥ साम्नां चोत्पत्तिसामर्थ्यात् ॥ २३॥ धुर्येष्वपीति चेत् ॥ २४॥ नाऽऽवृत्तिधर्मत्वात् ॥ २५॥

षष्ठाधिकरणमारचयति—

स्तोमवृद्धिः किमभ्यासादागमाद्वाऽग्रिमो यतः।
तत्कल्प्यमश्रुतं मैवं संख्याऽऽवापादिलिङ्गतः॥ ८॥

विवृद्धस्तोमकः क्रतुरेवमाम्नायते—'एकविंशेनातिरात्रेण प्रजाकामं याजयेत्, त्रिणवेनौजस्कामम्। त्रयस्त्रिंशेन प्रतिष्ठाकामम्' इति। प्रकृतिगतेभ्यस्त्रिवृत्पञ्चदशादिस्तोमेभ्यो विवृद्धा एकविंशति–त्रिणव-त्रयस्त्रिंशस्तोमाः। तेषु किं प्राकृतानां

१ क. आधाना°। ञ. आवपना°। २ ज. झ. °ममन्त्यं वोप°। ३ क. °ख्या वा यदि लि°। च. °ख्या वा पादलि°। ४ ज. झ. °जातानां साम्नामभ्यासाद्वृद्धिः का°।

साम्नामभ्यासाद्वृद्धिर्भवति, किंवा सामान्तरागमात्, इति संशयः। अश्रुतस्य सामगानस्य कल्पयितुमशक्यत्वात्—अभ्यासाद्वृद्धिः। इति प्राप्ते—

ब्रूमः—अभ्यासोऽपि न साक्षाच्छ्रुतः। किंत्वेकाविंशादिसंख्यापूरणाय कल्प्यते। संख्या च द्रव्यगता भिन्नद्रव्यैरेव पूर्यते, न त्वेकद्रव्यावृत्त्या। न हि—आहृत्य एकं घटमानीय 'मद्गृहे सन्त्यष्टौ घटाः' इति व्यवहरन्ति। ततः स्तोमावयवगता संख्या तदवयवभूतानां साम्नां पदार्थानां भेदं गमयति। स च भेदः सामान्तरागमे लिङ्गम्। 'अत्र ह्येवाऽऽवपन्ति' इत्यावापोद्देशेन देशविशेषविधिरपरं लिङ्गम्। सामान्तरोत्पत्त्यर्थत्वमन्यल्लिङ्गम्। तस्मात्—आगमेन वृद्धिः॥ ८॥

( सप्तमे—बहिष्पवमान ऋगागमाधिकरणे सूत्रम्— )।

**बहिष्पवमाने तु ऋगागमः सामैकत्वात्॥ २६॥**

सप्तमाधिकरणमारचयति—

**किं बहिष्पवमानर्धौ साम्नचां वाऽभिपूरणम्।**
**साम्ना पूर्वोक्तितो मैवं सामैकत्वपराक्श्रुतेः॥ ९॥**

प्रकृतो प्रातःसवने बहिष्पवमानस्यात्रिवृद्स्तोमः। तस्य विकृतिषु वृद्धौ सत्यां पूर्वोक्तरीत्या सामान्तरागमे प्राप्ते—

ब्रूमः—'एकं हि तत्र साम' इति बहिष्पवमानं प्रकृत्यैव सामैकत्वमाम्नायते। अतो न सामान्तरागमः संभवति। एवं तर्ह्यभ्यासेन संख्यापूरणमस्तु—इति न वाच्यम्। 'पराग्बहिष्पवमानेन स्तुवन्ति' इति पराक्शब्देनाभ्यासप्रतिषेधात्। तस्मात्—ऋगागमः॥ ९॥

( अष्टमे—सामिधेनीष्ववशिष्टानामागमेन संख्यापूरणाधिकरणे—सूत्राणि २७—३३ )।

**अभ्यासेन तु संख्यापूरणं सामिधेनीष्वभ्यासप्रकृतित्वात्॥ २७॥ अविशेषान्नेति चेत्॥ २८॥ स्यात्तद्धर्मत्वात्प्रकृतिवदभ्यस्येताऽऽसंख्यापूरणात्॥ २९॥ यावदुक्तं वा कृतपरिमाणत्वात्**

---

१ ख. °ता त्रिगता भि°। २ ज. झ. ञ. °ति कश्चिद्व्यवहरति। त°। ३ ञ. °तः सोमात्रसाधनीभूता ऋचः स्तो°। ४ ख. ज. झ. °वद्द्रव्यग°। ५ क. ख. °गमलि°। ६ ख. च. ज. झ. °धिप°। ७ ख. ज. झ. °र्थवत्त्वम°। ८ क. ख. °मानेऽष्टौ सा°। ९ ज. झ. साम्नः किं वर्च आगमः। सा°। १० ज. झ. साम्नः। ११ क. °राक्यतः। ख °राकतः। च. ञ. °रात्कुतः°। ज. झ. °राक्रान्तः। १२ क. ख. °मः। सोमस्य वि°। १३ ज. झ. °क्तनीत्या। १४ ञ. °त्य यत्स्वरसा°। १५ क. शङ्कनीयम्। १५ ज. झ. ऋच अवग°।

॥ ३० ॥ अधिकानां च दर्शनात् ॥ ३१ ॥ न कर्मस्वपीति चेत् ॥३२॥ न चोदितत्वात् ॥ ३३ ॥

अष्टमाधिकरणमारचयति--

सामिधेनीविवृद्धौ किमागमोऽभ्यस्यतामुत ।
आगमः पूर्ववन्मैवमभ्यासः प्रकृतित्वतः ॥ १० ॥
तत्राप्याद्यन्तयोर्यावत्पूर्त्यभ्यासो यथोक्ति वा ।
अभ्यस्याऽऽगमतः पूर्तिः पूरणार्थत्वतोऽग्रिमः ॥ ११ ॥
त्रित्वं न पूरणायोक्तमन्यथाऽप्यत्र पूरणात् ।
विवक्षितमबाधित्वा भवेत्पूरणमागमात् ॥ १२ ॥

दर्शपूर्णमासयोः पञ्चदश सामिधेनीर्विधाय काम्यासु तदावृत्तिर्विधीयते--'एकविंशतिमनुब्रूयात्प्रतिष्ठाकामस्य' इत्यादिना । यथा बहिष्पवमान ऋगागमः, तथाऽत्रापि । इति प्राप्ते--

ब्रूमः--एकादशभिः पठिताभिः पञ्चदशसंख्याया अपूर्तावृगन्तरागमेन तत्पूरणं न कृतम् । किंतु तत्पूरणायाभ्यासो विहितः--'त्रिः प्रथमामन्वाह, त्रिरुत्तमाम्' इति । अतः काम्यानामप्यभ्यासेन पूरणं युक्तम् । अभ्यासपक्षेऽपि यावत्कृत्वोऽभ्यासे सत्येकविंशतिसंख्या पूर्यते, तावत्कृत्वः प्रथमोत्तमे अभ्यसनीये । कुतः । विहितस्य त्रिरभ्यासस्य पूरणार्थत्वदर्शनात् ।

मैवम् । न हि त्रित्वं पूरणार्थं विहितम् । प्रथमाया द्विरभ्यासेनापि पञ्चदशसंख्यायाः पूरणात् । अतो विवक्षितं त्रित्वम् । तथा सति तदबाधाय प्रथमोत्तमे त्रिरभ्यस्य षण्णामृचामागमेनैकविंशतिसंख्या पूरणीया ॥१०॥११॥१२॥

( नवमे--षोडशिनां प्राकृतत्वाधिकरणे सूत्राणि ३४--४१ ) ।

षोडशिनो वैकृतत्वं तत्र कृत्स्नविधानात् ॥ ३४ ॥ प्रकृतौ चाभावदर्शनात् ॥ ३५ ॥ अयज्ञवचनाच्च ॥ ३६ ॥ प्रकृतौ वा शिष्टत्वात् ॥ ३७ ॥ प्रकृतिदर्शनाच्च ॥ ३८ ॥ आम्नातं परिसंख्यार्थम् ॥३९॥

---

१ ज. झ. यथोक्तिवत् । २ क. अभ्यासाग° । ३ झ. ञ. °धायैकादशसु । ४ ख. तद् वृद्धिर्वि° । ५ ज. झ. °ति ब्रू° । ६ ज. झ. पूर्यतां । ७ ज. झ. त्रिवारमभ्य° ।

उत्क्रमभावदर्शनम् ॥ ४० ॥ गुणादयज्ञत्वम् ॥ ४१ ॥

नवमाधिकरणमारचयति—

विकृतौ प्रकृतौ वा स्यात्षोडश्युत्कर्षतोऽग्रिमः ।
अविरुद्धेन वाक्येनानुत्कर्षात्प्रकृतावसौ ॥ १३ ॥

ज्योतिष्टोमप्रकरणे श्रूयते—' य एवं विद्वान्षोडशिनं गृह्णाति ' इति । सोऽयं षोडशिग्रहो विकृतौ निविशते । कुतः । प्रबलेन वाक्येन तस्य ग्रहस्य प्रकरणादुत्कृष्यमाणत्वात् । ' उत्तरेऽहन्द्विरात्रस्य गृह्यते, मध्यमेऽहंस्त्रिरात्रस्य ' इति हि वाक्यम् । द्विरात्रादीनां च विकृतित्वं प्रसिद्धम् । अतः प्रकरणं बाधित्वा विकृतौ निवेशः । इति प्राप्ते—

ब्रूमः—' अग्निष्टोमे राजन्यस्य गृह्णीयात् ' इत्यन्यद्वाक्यमस्ति । तेन प्रकृतिभूतेऽग्निष्टोमे निविशते । न चात्र प्रकरणबाधः । अग्निष्टोमस्य ज्योतिष्टोमावान्तरसंस्थारूपत्वेन ततोऽनन्यत्वात् । न च—एवं सति चोदकेनैव द्विरात्रादिषु प्राप्तत्वात्पुनर्विधिवाक्यं व्यर्थम्—इति शङ्कनीयम् । अहर्विशेषसंबन्धाय राजन्यादिनिमित्तनैरपेक्ष्याय वाक्योपपत्तेः । तस्मात्—प्रकृतौ निवेशः ॥ १३ ॥

( दशमे—आग्रयणादेव षोडशिग्रहणाधिकरणे—सूत्रे ४२–४३ ) ।

तस्याऽऽग्रयणाद्ग्रहणम् ॥ ४२ ॥ उक्थ्याच्च वचनात् ॥ ४३ ॥

दशमाधिकरणमारचयति—

उक्थ्याग्रयणतः स स्यात्केवलाग्रयणादुत ।
आद्य उक्तिद्वयादन्त्य उक्थ्योर्ध्वत्वविधित्वतः ॥ १४ ॥

स पूर्वोक्तः षोडशी वचनद्वयबलेनोक्थ्यपात्रादाग्रयणपात्राच्च ग्रहीतव्यः । ' उक्थ्यान्निगृह्णाति षोडशिनम् ' इत्येकं वाक्यम् । ' आग्रयणाद्गृह्णाति षोडशिनम् ' इति द्वितीयं वाक्यम् ।

अत्रोच्यते—आग्रयणपात्रादेव ग्रहीतव्यः । कुतः । उक्थ्यवाक्यस्योत्तरकालविधिपरत्वात् । 'तं पराञ्चमुक्थ्यान्निगृह्णाति' इत्यूर्ध्वकालवाचिनः पराक्शब्दस्य प्रयोगात् । अतो नोभयस्माद्ग्रहणम् ॥ १४ ॥

---

१ क. ग्रहणस्य । २ क. अथाप्यग्नि° । ज. झ. ञ. अप्यग्नि । ३ ख. °संस्थारू° । ४ ञ. °तोऽजस्वा° । ५ ज. झ. शङ्कनीयम् । ६ क. इत्यपूर्वका° । ७ ज. झ. ततो ।

(एकादशे—तृतीयसवन एव षोडशिग्रहणाधिकरणे सूत्राणि ४४–४८)।

तृतीयसवने वचनात्स्यात् ॥ ४४ ॥ *अनभ्यासे पराक्शब्दस्य तादर्थ्यात् ॥ ४५ ॥ उक्थ्याविच्छेदवचनत्वात् ॥ ४६ ॥ आग्रयणाद्वा पराक्शब्दस्य देशवाचित्वात्पुनराधेयवत् ॥ ४७ ॥ विच्छेदः स्तोमसामान्यात् ॥ ४८ ॥

एकादशाधिकरणमारचयति—

सवनेषु तृतीये वा स त्रयोक्त्या भवेत्त्रिषु।
द्वे निन्दित्वा तृतीयस्य विधेस्तत्रैव गृह्यताम् ॥ १५ ॥

स पूर्वोक्तः षोडशिग्रहस्त्रिषु सवनेषु भवेत्। कुतः। सवनत्रयस्योक्तत्वात्। षोडशिनं प्रकृत्याऽऽम्नायते—'प्रातःसवने ग्राह्यः, माध्यंदिनसवने ग्राह्यः, तृतीयसवने ग्राह्यः' इति।

नैतत्। सवनद्वयस्यार्थवादत्वेन तृतीयसवनस्योक्तत्वात्। अत एव वाक्यशेषे सवनद्वयं निन्दित्वा तृतीयसवनं विधीयते 'यत्प्रातःसवने—(गृह्णीयात्, वज्र उत्तरे सवने व्यतिरिच्येत, यन्माध्यंदिने मध्यतो वज्रं निहन्यात्') इत्यादिना सवनद्वये वज्रपातदोषोऽभिहितः। 'तृतीयसवने ग्राह्यः, न सर्वेषु सवनेषु गृह्णाति' इति प्रशंसापूर्वकं विहितम्। तस्मात्—तृतीयसवन एव षोडशिग्रहः ॥ १५ ॥

(द्वादशे—षोडशिग्रहस्य सस्तोत्रशस्त्रताधिकरणे सूत्राणि ४९–५२)।

उक्थ्याग्निष्टोमसंयोगादस्तुतशस्त्रः स्यात्सति हि संस्थान्यत्वम् ॥ ४९ ॥ सस्तुतशस्त्रो वा तदङ्गत्वात् ॥ ५० ॥ लिङ्गदर्शनाच्च ॥ ५१ ॥ वचनात्संस्थान्यत्वम् ॥ ५२ ॥

द्वादशाधिकरणमारचयति—

अग्निष्टोमोक्थ्यसंबन्धी षोडश्यस्तुतशस्त्रकः।
तद्युक्तो वाऽग्रिमः प्राप्तस्तत्तत्संस्थामबाधितुम् ॥ १६ ॥

---

* एतदानीनि चत्वारि सूत्राणि पूर्वाधिकरणशेषभूतानि। न त्वेतदधिकरणशेषाणि—इति शाबरभाष्यतो व्यज्यते।

---

१ ज. झ. प्रत्या°। २ ज. झ. ञ. °नस्तावकत्वा°। ३ ज. झ. ञ. °त्रघात°। ४ ज. झ. °मवस्थितम्।

स्तोत्रं भवत्येकविंशं हरिवच्छस्यते ततः ।
इष्यते ह्यन्यसंस्थात्वं स्तुतशस्त्रयुतस्ततः ॥ १७ ॥

षोडशिनं प्रकृत्याऽऽम्नायते-'अग्निष्टोमे राजन्यस्य गृह्णीयात्, अप्युक्थ्ये ग्राह्यः' इति । सोऽयमग्निष्टोमोक्थ्यसंस्थयोर्विहितः षोडशिग्रहः स्तुतशस्त्रवर्जितो भवितुमर्हति । अन्यथा तदीयाभ्यां स्तुतशस्त्राभ्यां क्रतुसमाप्तौ षोडशिसंस्थात्वं प्रसज्येत, अग्निष्टोमसंस्थात्वं च बाध्येत । तत्संबन्धिसमाप्त्यभावात् । इति प्राप्ते-

ब्रूमः-'एकविंशं स्तोत्रं भवति प्रतिष्ठायै हरिवच्छस्यते' इति षोडशिनि प्रत्यक्षविधिना स्तुतशस्त्रे विहिते । किंच-'ग्रहं वा गृहीत्वा, चमसं वोन्नीय स्तोत्रमुपाकरोति' इति ग्रहणचमसोन्नयनयोस्तत्र निमित्तत्वं श्रुतम् । न हि सति निमित्ते नैमित्तिकं त्यक्तुं शक्यम् । तस्मात्-पूर्वसंस्थात्वहानिमन्यसंस्थात्वं चाभ्युपेत्य स्तुतशस्त्रयुतत्वं द्रष्टव्यम् ॥ १६ ॥ १७ ॥

( त्रयोदशे-अङ्गिरसां द्विरात्रे षोडशिनः परिसंख्याधिकरणे सूत्रे ५३-५४ ) ।

अभावादतिरात्रेषु गृह्यते ॥ ५३ ॥
अन्वयो वाऽनारभ्यविधानात् ॥ ५४ ॥

त्रयोदशाधिकरणमारचयति-

द्विरात्रेऽङ्गिरसां षोडश्यप्राप्तः किं विधीयते ।
परिसंख्यायते वाऽऽद्यश्चोदकाच्छीघ्रबुद्धितः ॥ १८ ॥
अनारभ्य विधेः प्राप्ते परिसंख्याऽतिदेशतः ।
विकल्पोऽन्यद्विरात्रेषु प्रोक्तं वृत्तिकृतो मतम् ॥ १९ ॥

सन्ति बहवो द्विरात्राः । तेष्वाङ्गिरसां द्विरात्रे श्रूयते-'वैखानसं पूर्वेऽहन्साम भवति, षोडश्युत्तरे' इति । सोऽयं षोडश्यप्राप्तः सन्विधीयते । न च चोदकप्राप्तिः शङ्कनीया । प्रत्यक्षवचनस्य शीघ्रप्रवृत्तेः । चोदको ह्यानुमानिकत्वेन विलम्बते । इति प्राप्ते-

ब्रूमः-मा भूच्चोदकः । अस्ति ह्यनारभ्याधीतं प्रत्यक्षं विध्यन्तरम्-'उत्तरेऽहनि द्विरात्रस्य गृह्यते' इति । तेन सर्वेषु प्राप्तः सन् 'अङ्गिरसां द्विरात्र एव, नान्येषु द्विरात्रेषु' इति परिसंख्यायते । ततः-अङ्गिरसां द्विरात्रेषु नियमेन षोडशी गृह्यते, तदितरेष्वतिरात्रविकृतित्वेनातिदेशाद्विकल्प्यते । तदेतद्वृत्तिकारमतम् ।

१ क. ज. झ. अथाग्नि° । च. ञ. अप्यग्नि° । २ क. अप्युक्थ्यो । ज. झ. अप्युक्थे । ३ क. ख. सोमा° । ४ ज. झ. तत्र संब° । ५ ख. च. ज. झ. ञ. प्रतिष्ठित्यै । ६ ज. झ. किंचिद्धीयते । ७ ज. झ. ञ. शङ्कनीया । ८ क. ख. च. विलम्बितः । ९ च. उत्तरेऽह° । १० क. °रात्रादिषु वि° ।

एतदेवाधिकरणं भाष्यकारमतेनाऽऽचरयति—

परिसंख्या पूर्वपक्षो न सा युक्ता त्रिदोषतः।
अप्राप्तस्यार्थवादेन विधेयः स न गम्यते ॥ २० ॥

वृत्तिकारस्य सिद्धान्तरूपा परिसंख्या, सैव भाष्यकृन्मते पूर्वपक्षः। सिद्धान्तस्तु—'षोडश्युत्तरे' इत्ययं विधिरेव न भवति। विधित्सितवैश्वानसत्तामवाक्यशेषत्वेनार्थवादत्वात्। अतः परिसंख्यात्वं दोषत्रयोपेतं नाऽऽत्र कल्प्यम्। प्राप्तस्य विध्यर्थस्य परित्यागः। अप्राप्तस्य निषेधार्थस्य स्वीकारः। अन्यत्र प्राप्तबाधः। इति दोषत्रयम् ॥ २० ॥

( चतुर्दशे—नानाहीने षोडशिग्रहग्रहणाधिकरणे सूत्राणि ५५—५७ )।

चतुर्थे चतुर्थेऽहन्यहीनस्य गृह्यत इत्यभ्यासेन प्रतीयेत भोजनवत् ॥ ५५ ॥ अपि वा संख्यावत्त्वान्नानाहीनेषु गृह्यते पक्षवदेकस्मिन्संख्यार्थभावात् ॥ ५६ ॥ भोजने तत्संख्यं स्यात् ॥ ५७ ॥

चतुर्दशाधिकरणमारचयति—

किं चतुर्थेष्वहीनस्य ग्रहो नानागतेषु वा।
वीप्सैकवचनाभ्यां स्यादेकस्मिन्नेव स ग्रहः ॥ २१ ॥
चतुर्थाष्टमतापत्तेर्नानाहीनेषु स ग्रहः।
जात्यैकवचनं वीप्सा न्यायप्राप्तानुवादिनी ॥ २२ ॥

षोडशिनं प्रकृत्याऽऽमनन्ति—'चतुर्थे चतुर्थेऽहन्यहीनस्य गृह्यते' इति। सोऽयमेकस्मिन्नेवाहीने प्रथममारभ्य गणिते चतुर्थेऽहनि ग्राह्यः। पुनरपि पञ्चममारभ्य गणिते चतुर्थेऽहनि ग्राह्यः। एवं सति वीप्सा चरितार्था भविष्यति। नानाहीनगतचतुर्थदिवसविवक्षायां 'चतुर्थेऽहनि' इत्येतावतैव तत्सिद्धेर्वीप्साऽनर्थिका। 'अहीनस्य' इत्येकवचनं तु बहुषु नोपपन्नम्। इति प्राप्ते—

ब्रूमः—'एकाहीनपक्षे—चतुर्थे वाऽष्टमे वा' इत्येवमुच्येत। एकवचनं तु नानाहीनपक्षे जात्यभिप्रायम्। वीप्सा बहुप्रदेशगतचतुर्थदिनध्ये न्यायप्राप्तं बहुत्वमनुवदति। तस्मात्—नानाहीनेषु चतुर्थे स ग्रहः ॥२१॥ २२॥

---

१ क. ज. झ. ञ. तदेवा°। २ क. ख. च. अप्राप्तस्यैवानुवादेना ज. ञ. अप्राप्तस्यानुवादेन। ३ ज. झ. समस्यते। ४ क. ञ. संग्रहः। ५ क. ञ. संग्रहः। ६ ञ. °वाहीने प्र°। ७ क. ग्रहः। ८ क. ग्रहः। ९ क. °प्सा निरर्थि°। १० क. च. ज. झ. ञ. संग्रहः।

( पञ्चदशे—वर्णकद्वयविशिष्टेऽधिकरणे सूत्रम्— )।

**जगत्साम्नि सामाभावादृक्तः साम तदाख्यं स्यात् ॥५८॥**

पञ्चदशाधिकरण( स्य विकृतौ ग्रहाणामाग्रयणाग्रतासाधकं ) प्रथमं वर्णकमारचयति—

**प्रकृतौ विकृतौ वा स्याद्ग्रहेष्वाग्रयणाग्रता ।**
**आद्यः प्रकरणादन्त्यो जगत्सामत्वसंभवात् ॥ २३ ॥**

ज्योतिष्टोमप्रकरणे श्रूयते—'यदि रथंतरसामा सोमः स्यात्, ऐन्द्रवायवाग्रान्ग्रहान्गृह्णीयात् । यदि बृहत्सामा शुक्राग्रान् । यदि जगत्सामा, आग्रयणाग्रान्' इति । अयमर्थः—'माध्यंदिनसवने पृष्ठस्तोत्रे रथंतरनामकं साम यस्य सोमयागस्य स सोमो रथंतरसामा । एवमितरत्रापि' इति । तत्र जगत्साम[1]सोमे ग्रहाणामाग्रयणादित्वं प्रकरणपाठात्प्रकृतौ निविशते[2] । इत्याद्यः पक्षः ।

जगन्नाम्नः[3] साम्नः क्वाप्यभावाज्जगत्यामृच्युत्पन्न[4]स्य तु साम्नो विकृतिषु विषुवन्नामकेषु मुख्येऽहनि संभवाद्विकृतौ निविशते[5] ॥२३॥

( जगत्साम्नो जगत्यृगुत्पन्नसामतासाधकं ) द्वितीयवर्णकमारचयति—

**बृहद्रथंतरैकं किं द्वयं वोत रथंतरम् ।**
**यद्वा जगत्यामुत्पन्नं जगत्सामाग्रिमो भवेत् ॥ २४ ॥**
**ज्योतिष्टोमस्य तादृक्त्वादविकल्पाय तु द्वयम् ।**
**जगत्त्वं सर्वताऽत्रास्ति तदुक्तिर्व्यर्थता तदा ॥ २५ ॥**
**रथंतरं जगच्छब्दाद्विप्रकृष्टाऽत्र लक्षणा ।**
**जगत्यृचि स्थितं सामेत्येतत्स्यात्संनिकर्षतः ॥ २६ ॥**

पूर्वोक्तोदाहृतवाक्ये 'जगन्नामकं साम यस्य सोमस्यासौ जगत्सामा' इत्यत्र जगद्विशेषणेन विशिष्यमाणे[6] साम्नि चतुर्धा संशयः । तत्र बृहद्रथंतरयोरन्यतरत्स्यात् । कुतः[7] । 'बृहता रथंतरसाम्ना वा' इति ज्योतिष्टोमस्यान्यतरसाध्यत्वावगमात् । जगच्छब्दश्च 'गच्छति प्रवर्तते ज्योतिष्टोमोऽनेन' इति व्युत्पत्त्या तत्र संभवति । इति प्रथमः पक्षः ।

नैतद्युक्तम् । विकल्पप्रसङ्गात् । स चाष्टदोषग्रस्तः । तस्मात्—सामद्वयसमुच्चयोऽभ्युपेयः[9] । उदाहृतो वाशब्दोऽपि चकारार्थो ज्ञेयः । जगच्छब्दश्च कृत्स्नवाची । कृत्स्नत्वं चात्रास्ति । एकस्यापि साम्नोऽपरित्यक्तत्वात् । इति द्वितीयः पक्षः ।

---

१ ज. झ. ञ. °मके सो° । २ ज. झ. निवेश्यः । ३ च. जगन्नाम्ना । ज. झ. ञ. जगन्नामकस्य । ४ क. झ. °न्नस्यानुसा° । ५ ज. झ. निविश्यते । ६ ख. ज. झ. विशिष्यमाणे । ७ ज. झ. °तः—'रथंतरसाम्ना बृहत्साम्ना वा' । ८ ख. ज. ञ. जगति । ख. झ. जगती । ९ ख. °भ्युपेतव्यः । ज. झ. ञ. °भ्युपगन्तव्यः ।

एतदप्ययुक्तम्। 'यदि जगत्सामा' इत्यस्य वैयर्थ्यप्रसङ्गात्[1]। अन्यतरपक्षस्यैन्द्रवायवाग्रत्वशुक्राग्रत्वाभ्यामवरुद्धत्वेन परिशेषेण समुच्चयपक्षस्यैवाऽऽश्रयणीयत्वात्पुनस्तदुक्तिर्व्यर्था। वाशब्दश्च विकल्पे मुख्योऽत्र बाध्येत। तस्मात्—रथंतरमेव स्यात्। तद्योनौ 'ईशानमस्य जगतः' इति जगच्छब्दश्रवणेन जगत्सामत्वसंभवात्। इति तृतीयः पक्षः।

तदप्ययुक्तम्। तत्र ह्यर्थपरं जगत्पदं शब्दपरत्वेनोपलक्ष्यते। तेन शब्देन च शब्दोपेतामृचमुपलक्ष्य तया च तन्निष्ठं सामोपलक्षणीयम्। इति विप्रकर्षः। तस्मात्—जगत्यामुत्पन्नं साम इति चतुर्थः पक्षोऽभ्युपेयः[2]। यद्यपि च्छन्दोवाचिना जगतीशब्देन तद्युक्तामृचमुपलक्ष्य[3] सामोपलक्षणीयम्, तथाऽपि तत्संनिकृष्यते[4]। यतो वैदिको जगच्छब्दो जगतीपर्यायः[5]। तस्माच्चतुर्थः पक्षो राद्धान्तः ॥ २४ ॥ २५ ॥ २६ ॥

( षोडशे—गोसवे—उपवत्यग्रवत्योरभावाधिकरणे सूत्राणि ५९–६१ )।

**उभयसाम्नि नैमित्तिकं विकल्पेन समत्वात्स्यात् ॥ ५९ ॥ मुख्येन वा नियम्येत ॥ ६० ॥ निमित्तविघाताद्वा क्रतुयुक्तस्य कर्म स्यात् ॥ ६१ ॥**

षोडशाधिकरणमारचयति—

**उपवत्यग्रवत्यौ स्तो गोसवे यदि वा नहि।**
**आद्ये विकल्प आहोस्विदुपवत्येव केवला ॥ २७ ॥**
**विकल्पो द्विनिमित्तत्वाद्व्याघातः स्यात्समुच्चये[6]।**
**रथंतरस्य मुख्यत्वादुपवत्येव युज्यते ॥ २८ ॥**
**एकैकस्य निमित्तत्वं प्रकृतावत्र तु द्वये।**
**मिलिते पृष्ठता तस्मान्निर्निमित्ते[7] उभे न हि ॥ २९ ॥**

गोसवादिषु क्रतुषु रथंतरपृष्ठबृहत्पृष्ठयोः समुच्चयो विहितः—'गोसव उभे कुर्यात्' इत्यादिना। प्रकृतौ त्विदमाम्नातम्—'उपवतीं[8] रथंतरपृष्ठस्य प्रतिपदं कुर्यात्, अग्रवतीं बृहत्पृष्ठस्य' इति। ते इमे उपवत्यग्रवत्यावृचौ[9] पृष्ठद्वयस्याङ्गभूते गोसवादिष्वतिदेशतः प्राप्ते विकल्प्येते[10]। कुतः। तन्निमित्तयोः पृष्ठयोर्द्विविधत्वात्। न च—अत्र समुच्चयः शङ्क्यः[11]। ऋचोर्द्वयोः प्राथम्यस्य

१ ञ. °प्रसंगमात्। २ ज. झ. °भ्युपगन्तव्यः। ख. °भ्युपेतव्यः। ३ ज. झ. °क्ष्य तया सा°। ४ ज. झ. ततः। ५ ज. झ. °ते। जगच्छब्दश्च वैदिके जगतीप°। ६ ज. झ. °ल्पो हि नि°। ७ क. °न्निमित्ते ते उ°। ८ च. °रबृ°। ९ ख. ज. झ. ञ. उपवीती। १० च. विकल्प्येते। ११ ज. झ. ञ. शङ्कनीयः।

व्याहतत्वात्। तस्मात्—विकल्पः। इत्येकः पूर्वपक्षः।

प्रथमश्रुतत्वेन रथंतरस्य मुख्यत्वादुपवतीमेव प्रतिपदं कुर्यात्। इति द्वितीयः पूर्वपक्षः।

प्रकृतावेकैकं पृष्ठमितरनिरपेक्षमेव निमित्तम्। अत्र तु मिलितस्यैव पृष्ठत्वम्। तथा सति प्राकृतस्य निमित्तस्यात्राभावेन नैमित्तिके प्रतिपदावपि न स्तः ॥ २७ ॥ २८ ॥ २९ ॥

( सप्तदशे—ऐन्द्रवायवस्य सर्वादावप्रतिकर्षाधिकरणे सूत्राणि ६२–६४ )।

ऐन्द्रवायवस्याग्रवचनादादितः प्रतिकर्षः स्यात् ॥ ६२ ॥ अपि वा धर्माविशेषात्तद्धर्माणां स्वस्थाने प्रकरणादग्रत्वमुच्यते ॥ ६३ ॥ धारासंयोगाच्च ॥ ६४ ॥

सप्तदशाधिकरणमारचयति—

पुरोपांशोरुत स्वस्य स्थाने स्यादैन्द्रवायवः।
आद्योऽग्रत्वविधेर्मैवं धारायुक्ताग्रतोक्तितः ॥ ३० ॥

ज्योतिष्टोमे श्रूयते—'ऐन्द्रवायवाग्रा ग्रहा गृह्यन्ते' इति। मन्त्रकाण्डविधिकाण्डयोर्ग्रहाणामयं पाठक्रमः—'उपांशुग्रहः प्रथमः, अन्तर्यामग्रहो द्वितीयः, ऐन्द्रवायवग्रहस्तृतीयः, मैत्रावरुणग्रहश्चतुर्थः' इत्यादि। तत्र—ऐन्द्रवायवस्याग्रत्वविधानादुपांशुपूर्वमेव ग्रहणम्। इति पूर्वः पक्षः।

नैतद्युक्तम्। अग्रत्वस्य धाराग्रहापेक्षत्वात्। ऐन्द्रवायवादयो धाराग्रहाः। तद्वाक्ये 'धारया गृह्णाति' इति श्रुतत्वात्। एवं सति पाठक्रमो न बाध्यते। तस्मात्—ऐन्द्रवायवः स्वस्यैव स्थाने ग्रहीतव्यः ॥ ३० ॥

( अष्टादशे—कामसंयोगेऽप्यैन्द्रवायवस्याऽऽदावप्रतिकर्षाधिकरणे सूत्रे ६५–६६ )।

कामसंयोगे तु वचनादादितः प्रतिकर्षः स्यात् ॥ ६५ ॥ तद्देशानां वाऽग्रसंयोगात्तद्युक्तं कामशास्त्रं स्यान्नित्यसंयोगात् ॥ ६६ ॥

अष्टादशाधिकरणमारचयति—

१ क. व्याहत°। २ ज. झ. °वैकं। ३ क. उपांशोरुत्तरस्यैव स्था°। ञ. पुरोडाशोरुभ स्व°। ४ ज. झ. ञ. °युक्तोऽग्र°। ५ ञ. °यत्रग्रहा। ६ ज. झ. तेषु। ७ क. ख. च. °म। वा°। ८ झ. °यवस्तस्यै°।

सर्वादौ स्वस्य वा स्थाने काम्यः स्यादैन्द्रवायवः।
पुनर्विधेरादिमोऽन्त्यः कामायैतद्विधानतः ॥ ३१ ॥

ज्योतिष्टोम एव श्रूयते—'ऐन्द्रवायवाग्रान्ग्रहान्गृह्णीयात्, यः कामयेत यथापूर्वं प्रजाः कल्पेरन्' इति। सोऽयं काम्य ऐन्द्रवायवः सर्वेषामुपांशुप्रभृतीनां ग्रहाणामादौ स्यात्। कुतः। धाराग्रहादित्वस्य पूर्वमेव सिद्धौ सत्यां पुनरप्यग्रताविधानात्। इति पूर्वः पक्षः।

नात्र सर्वाग्रत्वं विधातुं शक्यम्। धाराग्रहाणां प्रकृतत्वात्। अतो यथाप्राप्ताग्रत्वोपेतानां धाराग्रहाणां कामसंयोगोऽत्र विधीयत इति स्वस्थान एवायं ग्रहः ॥ ३१ ॥

( एकोनविंशे—आश्विनाग्रादीनां ग्रहाणां प्रतिकर्षाधिकरणे सूत्राणि ६७—६९ )।

परेषु चाग्रशब्दः पूर्ववत्स्यात्तदादिषु ॥६७॥ प्रतिकर्षो वा नित्यार्थेनाग्रस्य तदसंयोगात् ॥ ६८ ॥
प्रतिकर्षं च दर्शयति ॥ ६९ ॥

एकोनविंशाधिकरणमारचयति—

स्वस्थाने प्रतिकर्षो वा शुक्रादेः पूर्ववद्भवेत्।
स्थाने मैवं तदग्रत्वाप्राप्तेः स प्रतिकृष्यते ॥३२॥

तत्रैव श्रूयते—'शुक्राग्रान्ग्रहान्गृह्णीयादभिचरतो मन्थ्यग्रान्गृह्णीयादभिचर्यमाणस्य' इत्यादि। पूर्वन्यायेन च शुक्रादीनां स्वस्थाने ग्रहणम्। इति प्राप्ते—

ब्रूमः—ऐन्द्रवायवस्य धाराग्रहाग्रत्वं स्वस्थाने पाठादेव प्राप्तम्। शुक्रादीनां तु तन्न। इति वैषम्यम्। तथा सति विधीयमानाग्रत्वं पाठक्रमबाधमन्तरेणानुपपन्नत्वात्प्रतिकृष्यते ॥ ३२ ॥

( विंशे—आश्विनादीनां ग्रहाणामैन्द्रवायवस्य पुरस्तात्प्रतिकर्षाधिकरणे सूत्राणि ७०—७२ )।

पुरस्तादैन्द्रवायवस्याग्रस्य कृतदेशत्वात् ॥ ७० ॥
तुल्यधर्मत्वाच्च ॥७१॥ तथा च लिङ्गदर्शनम् ॥७२॥

विंशाधिकरणमारचयति—

---

१ क. °चर्यमाणो म°। २ ख. च. ज. झ. ञ. °मन्थ्यग्रा°। ३ ज. झ. नूतनेति।

स सर्वादावैन्द्रवायवादौ वाऽत्राविशेषतः ।
सर्वादावाश्रयादैन्द्रवायवादौ धृतेरपि ॥ ३३ ॥

स पूर्वोक्तः प्रतिकर्षः सर्वेषामुपांश्वादीनां ग्रहाणामादौ युक्तः । कुतः । विशेषाश्रवणात् । सामान्यतः श्रुतमग्रत्वमनपेक्षितत्वात्सर्वमुख्यम् ।

नैतदेवम् । प्राकृतान्धाराग्रहानाश्रित्य फलाय शुक्राग्रत्वविधानात् । किंच 'धारयेयुस्तं, यं कामाय गृह्णीयुः । ऐन्द्रवायवं गृहीत्वा सादयेत्' इति श्रूयते । तत्र काम्यस्य शुक्रादेर्धारणानन्तरमैन्द्रवायवस्य ग्रहणं विवक्षितार्थे लिङ्गम् । तस्मात्—ऐन्द्रवायवादौ प्रतिकर्षः ॥ ३३ ॥

( एकविंशे—सादनस्यापि प्रतिकर्षाधिकरणे सूत्रे ७३—७४ ) ।

सादनं चापि शेषत्वात् ॥ ७३ ॥ लिङ्गदर्शनाच्च ॥७४॥

एकविंशाधिकरणमारचयति—

नापकर्षोऽपकर्षो वा सादनस्याश्रुतत्वतः ।
नैवं ग्रहशेषत्वात्तच्चाशक्तेर्ग्रहान्तरम् ॥ ३४ ॥

सर्वत्र ग्रहान्गृहीत्वा साद्यन्ते । तथा सति यत्र काम्यस्य ग्रहस्यापकर्षः, तत्र सादनस्यापकर्षो न शङ्कनीयः । कुतः । अश्रुतत्वात् । 'शुक्राग्रान्' इत्यग्रशब्देन यथा ग्रहणस्यापकर्षः श्रूयते, न तथा सादनापकर्षप्रतिपादकः कश्चिच्छब्दोऽस्ति । तस्मात्—नापकर्षः ।

नैतद्युक्तम् । सादनस्य ग्रहशेषत्वमशक्तेरवगम्यते । न तु पूर्वग्रहमसादयित्वा ग्रहान्तरं शक्यं ग्रहीतुम् । अतो ग्रहापकर्षे तच्छेषभूतसादनमप्यपकृष्यते ॥ ३४ ॥

( द्वाविंशे—प्रदानस्याप्रतिकर्षाधिकरणे सूत्रे ७५—७६ ) ।

प्रदानं चापि सादनवत् ॥ ७५ ॥ न वा
प्रधानत्वाच्छेषत्वात्सादनं तथा ॥ ७६ ॥

द्वाविंशाधिकरणमारचयति—

प्रदानस्यापकर्षोऽस्ति नं वा सादनवद्भवेत् ।
प्रदानस्य तु मुख्यत्वान्नापकर्षोऽत्र युज्यते ॥ ३५ ॥

---

१ क. ज. झ. वाऽत्र वि°। २ क. °दौ श्रुते°। ३ ज. झ. प्रतिकार्यः। ४ ञ. तन्नैवं। ५ क. ज. झ. °शक्ते ग्रहा°। ६ ज. झ. ञ. कामस्य ग्रहणस्या°। ७ ज. ञ. शङ्कनीयः। ८ झ. °षत्वात्। तच्च शेषत्व°। ९ ञ. पूर्वं ग्र°। १० ज. झ. ग्रहणाप°। ११ ज. झ. नं वाऽऽसा°।

पूर्वोक्तकाम्यानां ग्रहाणां ग्रहणापकर्षानुसारेण सादनस्य यथाऽपकर्षः, तद्वत् प्रदानस्यापि। इति चेत्।

नैवम्। वैषम्यात्। सादनं हि ग्रहणशेषः प्रदानं तु न तथा। प्रत्युत—ग्रहणमेव प्रदानस्य शेषः। अत एव शेषानुसारेण न शेषिणोऽपकर्षो युक्तः॥३५॥

( त्रयोविंशे— {व्यनीकायामैन्द्रवायवाग्रतोक्तेः समानविध्यर्थताधिकरणे} सूत्रे ७७–७८ )।

व्यनीकायां न्यायोक्तेष्वाम्नानं गुणार्थं स्यात्॥ ७७ ॥ अपि वाऽहर्गणेष्वग्निवत्समानविधानं स्यात्॥ ७८ ॥

त्रयोविंशाधिकरणमारचयति—

व्यनीकायामैन्द्रवायवशुक्राग्रानुवादता।
परिसंख्या वाऽर्थवादो वा विधिर्वा नहि त्रयम्॥ ३६ ॥
वैयर्थ्येन त्रिदोषत्वाल्लक्षणापातितस्तथा।
विधिराग्रयणाग्रत्व इवानैमित्तिको हि सः॥ ३७ ॥

अस्ति द्वादशाहे व्यनीका। 'ऐन्द्र[वा]यवाग्रौ प्रायणीयोदयनीयौ दशमं चाहः, अथेतरेषां नवानामह्नामैन्द्रवायवाग्रं प्रथममहः, अथ शुक्राग्रम्। अथाऽऽग्रयणाग्रम्, अथैन्द्रवायवाग्रम्, अथ शुक्राग्रम्, अथाऽऽग्रयणाग्रम्, अथैन्द्रवायवाग्रम्, अथ शुक्राग्रम्, अथाऽऽग्रयणाग्रम्' इति। तत्र द्वादशाहगतेषु द्वितीयतृतीयचतुर्थेष्वहःसु क्रमेणेन्द्रवायवाग्रत्वशुक्राग्रत्वाग्रयणाग्रत्वानि विहितानि। तेष्वाद्यं रथंतरनिमित्तम्। द्वितीयं बृहन्निमित्तम्। एतच्च प्रकृतौ व्यवस्थितम्। उभयमत्र चोदकेन प्राप्तम्। तत्र चतुर्धा संशयः—अनुवादो वा, परिसंख्या वा, अर्थवादो वा, विधिर्वा, इति। तत्र—'प्राप्तत्वादनुवादः' इति चेत्।

न। वैयर्थ्यापत्तेः। तर्हि—गुणान्तरपरिसंख्याऽस्तु—इति चेत्।

न। दोषत्रयापत्तेः।—चतुर्थेऽहन्यप्राप्तस्याऽऽग्रयणाग्रत्वस्य प्रशंसार्थोऽयमर्थवादः—इति चेत्।

न। लक्षणावृत्तिप्रसङ्गात्। तस्मात्—आग्रयणाग्रत्वे यथा विधिः, तथेतरयोरपि द्रष्टव्यः। न च—प्राप्तत्वादविधिः—इति वाच्यम्। अस्य विधेर्नैमित्तिक-

१ क. °हणे शे°। २ ज. झ. तेष्वाज्यं। ३ क. ज. झ. ञ. उभयत्र। ४ च. तृतीयेऽह°। ५ क. °योरिति त्र°। ६ क. °रनिमित्तत्वाभ्यु°।

त्वाभ्युपगमात् । रथंतरादिनिमित्तकयोरेव हि चोदकेन प्राप्तिः । प्रयोजनं द्वादशाहविकृतिषु यत्र क्वापि रथंतरनिमित्ताभावेऽप्यैन्द्रवायवाग्रत्वसिद्धिः ॥३६॥३७॥

( चतुर्विंशे—व्यूढद्वादशाहस्य समूढविकारत्वाधिकरणे सूत्राणि ७९–८२ )।

द्वादशाहस्य व्यूढसमूढत्वं पृष्ठवत्समानविधानं स्यात् ॥ ७९ ॥ व्यूढो वा लिङ्गदर्शनात्समूढविकारः ॥ ८० ॥ कामसंयोगात् ॥ ८१ ॥ तस्योभयथा प्रवृत्तिरैककर्म्यात् ॥ ८२ ॥

चतुर्विंशाधिकरणमारचयति—

व्यूढोऽपि प्रकृतिः किंवा विकृतिः स्याद्धि पृष्ठवत् ।
विधिसाम्यादादिमोऽन्त्यो लिङ्गात्कामे विधेरपि ॥ ३८ ॥

द्विविधो हि द्वादशाहः समूढो व्यूढश्च । तत्र समूढः पूर्वमुदाहृतः । अथ व्यूढ उदाह्रियते ।—'ऐन्द्रवायवाग्रौ प्रायणीयोदयनीयौ, अथेतरेषां दशानामह्नामैन्द्रवायवाग्रं प्रथममहः, अथ शुक्राग्रम्, अथ द्वे आग्रयणाग्रे । अथैन्द्रवायवाग्रम्, अथ द्वे शुक्राग्रे । अथाऽऽग्रयणाग्रम्, अथ द्वे ऐन्द्रवायवाग्रे ' इति । तत्र समूढस्य तावत्प्रकृतित्वमविवादम् । तद्वद्व्यूढोऽपि—किं प्रकृतिः किंवा समूढस्य विकृतिः, इति संशयः । 'प्रकृतिः' इति तावत्प्राप्तम् । कुतः । विधिसामान्यात्[1] । यथा समूढप्रकारः क्रत्वर्थो विहितः, तथा व्यूढप्रकारोऽपि । न चात्र कश्चिद्विशेषोऽस्ति, येन तयोः प्रकृतिविकृतिभावो निर्श्चीयेत[2] । न च—प्रकारद्वयस्य प्रकृतित्वमदृष्टचरम् । रथंतरबृहत्पृष्ठयोर्ज्योतिष्टोमप्रकारयोस्तद्दर्शनात् । इति पूर्वः पक्षः ।

व्यूढः समूढस्य विकृतिः । कुतः । लिङ्गदर्शनात् । 'ऐन्द्रावायवस्य वा एतदायतनं यच्चतुर्थमहः ' इति[4] व्यूढे श्रूयते । एतच्च विकृतित्वे सति भवति, नान्यथा । तथा हि—व्यूढे प्रायणीयोदयनीयव्यतिरिक्तेषु दशस्वहःसु यच्चतुर्थं तदाग्रयणाग्रत्वान्नैन्द्रवायवायतनम् । समूढे तु तदहर्नवानामह्नां मध्ये त्रिकादित्वादैन्द्रवायवाग्रम् । तच्च व्यूढस्य विकृतितायां चोदकेन प्राप्यमाणं विधिसिद्धाग्रयणाग्रस्तुतयेऽनूद्यते, इति युक्तम् । किंच—'यः कामयेत बहु स्यां प्रजायेय ' इति कामाय व्यूढो विधीयते । तथा सति समूढवत्क्रत्वर्थे विध्यभावाद-

१ ज. झ. व्यूढादुदा° । ञ. व्यूढमुदा । २ ज. झ. °साम्यात् । ३ क. निर्श्चीयते । ४ क. ख. °ति श्रू° । ञ. °ति व्यूढः श्रू° ।

थंतरबृहत्पृष्ठवैषम्येण विकल्पितं प्रकृतित्वं नास्ति। ततः—समूढस्य द्वादशाहस्य विकृतिः। अहर्गणेषु तयोरन्यतरस्यातिदेशः पूर्वपक्षिणः, समूढस्यैवातिदेशः सिद्धान्तः॥ ३८॥

( पञ्चविंशे—संवत्सरसत्रेऽनीकानां त्रिवृद्ध्यधिकरणे सूत्राणि ८३–८७)।

एकादशिनवत्त्र्यनीका परिवृत्तिः स्यात् ॥ ८३॥ स्वस्थानविवृद्धिर्वाऽह्नामप्रत्यक्षसंख्यत्वात् ॥ ८४॥ पृष्ठ्यावृत्तौ चाऽऽग्रयणस्य दर्शनात्त्रयस्त्रिंशे परिवृत्तौ पुनरैन्द्रवायवः स्यात् ॥ ८५॥ वचनात्परिवृत्तिरेकादशिनेषु ॥ ८६॥ लिङ्गदर्शनाच्च ॥ ८७॥

पञ्चविंशाधिकरणमारचयति—

दण्डाकलितवत्सत्रे त्र्यनीकावृत्तिरिष्यते।
स्वस्थानवृद्धिरथवा स्यादाद्योऽहर्विवक्षया॥ ३९॥
न विवक्षा वाक्यभेदान्नवानीकैस्तु पूरणम्।
एकैकवृद्ध्या न विना तेनैकैकं विवर्धते॥ ४०॥

अस्ति समूढस्य द्वादशाहस्य विकृतिर्गवामयनं संवत्सरसत्रम्। तत्र त्र्यनीका चोदकेन प्राप्ता। त्रीण्यनीकान्यग्राण्यैन्द्रवायवशुक्राग्रयणरूपाणि यस्यां क्रियायां सा त्र्यनीका। तया च त्रिःपरिवृत्तया द्वादशाहाद्यन्तयोः प्रायणीयोदयनीययोरह्नोर्मध्ये वर्तमानेषु दशस्वहःसु दशमव्यतिरिक्तानि नवसंख्याकान्यहानि पूरितानि। अतः संवत्सरसत्रेऽपि प्रायणीयोदयनीयमध्यवर्तीनि पूरयितव्यानि। तत्पूरणं च यथोक्तायास्त्रिःपरिवृत्ताया नवदिवसयुक्तायास्त्र्यनीकायाः संमूहावृत्तिमन्तरेण न सिध्यतीति साऽऽवृत्तिः प्राप्ता। तस्यां च द्वैविध्यं विद्यते। यथा—दण्डस्याऽऽवृत्त्या भूमावाकलितव्यायामादिमध्यावसानभागैः सहितं कृत्स्नदण्डं पुनः पुनरावर्तयन्ति, न त्वेकैकं भागम्, तथा नवदिवसानामावृत्तिरित्येकः प्रकारः। यथा—अध्येतारः प्रपाठकमावर्तयितुकामा एकैकभागमसकृत्पठन्ति, तथा नवदिवससमूहवर्त्येकैकस्याह्नोऽसकृदनुष्ठानमित्यपरः प्रकारः। तत्राऽऽद्यस्तावत्प्राप्नोति। कुतः। अहःशब्दस्य विवक्षितत्वात्। 'ऐन्द्रवायवाग्रं प्रथममहः' इत्युक्तोऽहःशब्दः

१ क. °कृतिरहर्गणः। त°। च. °कृतिष्वहर्ग°। २ ञ. पूर्वपक्षिणः प्रयोजनम्। ३ च. °त्सूत्रे। ४ ञ. °स्याद्यथोऽह°। ५ ञ. समूहस्य। ६ ज. झ. ञ. °तानि। त्री°। ७ ज. झ. ञ. °शाहस्याऽऽद्य°। ८ क. ख. दशाहःसु। ९ ज. झ. अहःसं°। १० ज. झ. सकृद्वावृ°। ११ ज. झ. ञ. °कलयित°। १२ ज. झ, °वसम ( मि )द्देरावृ°।

'अथ शुक्राग्रम् । अथाऽऽग्रयणाग्रम्' इत्याद्यष्टसु वाक्येष्वनुषज्यते । यथोक्ता-ग्रत्वविशिष्टानामह्नां क्रमविशेषश्चाथशब्दैर्नियम्यते । तथा सति यद्यैन्द्रवायवाग्र-मेवाहर्नैरन्तर्येणासकृदावर्त्यते, तदानीम् 'अथ शुक्राग्रमहः' इत्यादिकं बाध्येत । तस्मात्—कर्मयुक्तानामग्रत्वविशेषोपेतानामह्नां नवानां चोदकप्राप्तानां तथैवानु-ष्ठाने सति पुनः पुनश्चोदकेन तथैव प्राप्तेर्दण्डाकालितवदावृत्तिः । इति पूर्वः पक्षः।

अहःशब्दो न विवक्षितः। वाक्यभेदप्रसङ्गात् । 'ऐन्द्रवायवाग्रं प्रथमं भवति, तस्याहः' इत्यहःसंघातनिवृत्तये वाक्यं भेत्तव्यं प्रसज्येत । अहःशब्दे त्वविवक्षिते सत्यष्टभिरथशब्दैर्यथोक्ताग्रत्वानामेवाऽऽनन्तर्यं नियम्यते। तथा सति द्वितीयपर्याये विहितस्याऽऽग्रयणाग्रत्वस्योपर्यैन्द्रवायवाग्रत्वं नानुष्ठातुं शक्यम् । तदनुष्ठानाभावे च स्वस्थानविवृद्ध्यैव प्रायणीयोदयनीयान्तरालपूर्तिर्भवति । पूरयितव्यमन्तरालं नवधा विभज्य प्रथमभागगतेष्वहःस्वैन्द्रवायवाग्रत्वम्, द्वितीयभागेषु शुक्राग्रत्वम्, इत्यनेन क्रमेणानुष्ठातव्यम् । सेयं स्वस्थानविवृद्धिः । स्वस्यैन्द्रवायवाग्रत्वस्य स्थानं शुक्राग्रात्पूर्वभावित्वम् । तत्प्रकृतावेकस्मिन्नाह्नि भवति । इह तु बहुष्व-हःसु । इति तद्वृद्धिः ।

'न ह्यनीका चोदकाप्ता प्रत्यक्षविहिता तु सा ।
तस्यामुक्तो विचारः स्यादिति वार्तिक ईरितम् ॥ ३९ ॥ ४० ॥

( षड्विंशे—व्यूढे मन्त्राणां छन्दोव्यतिक्रमाधिकरणे सूत्रम्— ) ।

छन्दोव्यतिक्रमाद्व्यूहे भक्षपवमानपारिधिकपालस्य
मन्त्राणां यथोत्पत्तिवचनमूहवत्स्यात् ॥ ८८ ॥

षड्विंशाधिकरणमारचयति—

व्यूढे भक्षादिमन्त्राणामर्थानां च व्यतिक्रमः ।
मन्त्राणामेव वाऽऽद्यः स्यादविशेषेण कीर्तनात् ॥ ४१ ॥
छन्दसां व्यत्ययः प्रोक्तो नार्थानां तेन मन्त्रगाः ।
गायत्र्याद्या विपर्यास्या अर्थेषूक्तिः प्रशस्तये ॥ ४२ ॥

व्यूढे द्वादशाहे भक्षपवमानतदुभयपरिधिकपालानि चोदकप्राप्तानि। तत्र भक्ष-मन्त्रेषु सवनत्रयगतेषु 'गायत्रच्छन्दसः, त्रिष्टुप्छन्दसः, जगतीछन्दसः' इति

---

१ ञ. °नुयुज्य° । २ क. ज. झ. यथैन्द्र° । ३ ज. झ. बाध्यते । ३ क. °ममुक्ता° । ५ ज. प्राप्ते दण्डाकल्पित° । ६ क. °दकता प्र° । ख. च. ज. झ. ञ. °दकप्राप्ता । ७ क. बाधः । ८ च. प्रशस्यते । ९ ज. झ. रूढे । १० ज. झ. भक्ष्यमाणत° । ११ क. ख. च. ञ. °यत्रीछ° ।

श्रुतम्। तथा पवमानत्रयविषयेष्वन्वारोहमन्त्रेषु 'गायत्रछन्दाः, त्रिष्टुप्छन्दाः, जगतीछन्दाः इति श्रुतम्। तथा परिधिस्तावकेऽर्थवादे पठ्यते—गायत्रो मध्यमः परिधिः, त्रैष्टुभो दक्षिणः, जागत उत्तरः' इति। तथा कपालविषयं वाक्यं पठ्यते—'अष्टाकपालः प्रातःसवनीयः, एकादशकपालो माध्यंदिनीयः, द्वादशकपालस्तार्तीयसवनिकः' इति। अत्राष्टत्वादिभिस्त्रिभिः संख्याभिर्गायत्र्यादिच्छन्दांसि तत्तदक्षरस्मृतिद्वारेणोपस्थाप्यन्ते। एवं स्थिते सति व्यूढप्रकरणे छन्दोव्यतिक्रमः पठ्यते—'छन्दांसि वा, अन्योन्यस्य लोकमभिध्यायन्—गायत्री त्रिष्टुभः, त्रिष्टुब्जगत्याः, जगती गायत्र्याः,' इति। तत्र संशयः—योऽयं छन्दोव्यतिक्रमः, स भक्षपवमानपरिधिकपालरूपिणामर्थानामुभयविधमन्त्रगतच्छन्दोवाचिशब्दानां च कार्यः, किंवा तेषां शब्दानामेव, इति। तत्र 'मन्त्रगतानामेव' इति विशेषाश्रवणात्—'सर्वत्र व्यतिक्रमः' इत्याद्यः पक्षः। तेन गायत्रशब्दनिर्दिष्टः प्रातःसवनीयो भक्षस्त्रैष्टुभशब्दस्य माध्यंदिनीयभक्षस्य स्थाने[1], माध्यंदिनीयो जागतस्य स्थाने, जागतो गायत्रस्य प्रातःसवनिकस्य स्थाने। तथा बहिष्पवमानो माध्यंदिनसवने माध्यंदिनपवमानस्तृतीयसवने, आर्भवपवमानः प्रातःसवने। तथा मध्यमः स्थविष्ठः परिधिर्दक्षिणतः, अणीयान्द्राघीयानुत्तरतः, अणिष्ठो ह्रसिष्ठो मध्यतः। तथा—अष्टाकपालो माध्यंदिनसवने, एकादशकपालस्तृतीयसवने[2], द्वादशकपालः प्रातःसवने। सोऽयमर्थव्यतिक्रमो[3] मन्त्रद्वयशब्देष्वप्येवं योज्यः। इति प्राप्ते—

ब्रूमः—'छन्दांसि वा' इति वाक्येऽर्थानां[4] व्यतिक्रमो नोक्तः[5]। अतो मन्त्रगतानां[6] गायत्र्यादिशब्दानामेव[7] व्यतिक्रमः। यस्त्वर्थेषु गायत्रादिशब्दप्रयोगः[8], स प्रशंसार्थः। भक्षार्थानां[9] मुख्यच्छन्दस्त्वाभावात्। इति राद्धान्तः॥४१॥४२॥

इति श्रीमाधवीये जैमिनीयन्यायमालाविस्तरे दशमाध्यायस्य पञ्चमः पादः॥ ५॥

| | अत्र पादे | आदितः। |
|---|---|---|
| अधिकरणानि | २६ | ७१४। |
| सूत्राणि | ८८ | २००७। |

१ क. ख. च. ञ. °यत्रीछ°। २ क. ख. ज. झ. ञ. °लस्तृतीय°। च. °लस्तृतीयसवनीयः' इ°। ३ ख. च. ज. झ. ञ. °यः—सोऽयं छन्दोव्यतिक्रमो भ°। ४ ज. झ. °पिणामन्यानां°। ५ ज. झ. °ने, स च तृतीयसवनस्य स्थाने, सोऽपि प्रा°। ६ ज. झ. ञ. योजनीयम् (यः)। ७ ज. झ. °गतगा°। ८ ज. झ. ञ. °यत्र्यादि°। ९ क. लक्षार्थानां। ख. लक्षणार्थानां। च. ञ. लक्ष्यार्थानां।

( अथ दशमाध्यायस्य षष्ठः पादः )।

( प्रथमे-रथंतरादीनां साम्नां तृचे गानाधिकरणे सूत्रे १-२ )।

एकर्चस्थानि यज्ञे स्युः स्वाध्यायवत् ॥ १ ॥ तृचे वा लिङ्गदर्शनात् ॥ २ ॥

षष्ठपादस्य प्रथमाधिकरणमारचयति-

सामैकस्यां तृचे वा स्यादाद्यः स्वाध्यायवद्भवेत् ।
वचनाल्लिङ्गसंयुक्तात्स्तोत्रे साम तृचे भवेत् ॥ १ ॥

पवमानाज्यपृष्ठादिस्तोत्रेषु यद्विहितं रथंतरबृहद्वैरूपादि[1]सामाध्येतार एकस्या-मृच्यधीयते, तत्किं स्तोत्रप्रयोगकालेऽप्येकस्यामृचि गेयं किंवा तृचे गेयम् , इति संशयः। अध्ययनस्यानुष्ठानार्थत्वाद्यथाऽध्ययनमेक[4]स्यां गेयम् । इति पूर्वः पक्षः।

'अष्टाक्षरेण प्रथमाया ऋचः प्रस्तौति[5] द्व्यक्षरेणोत्तरयोः' इति तिसृष्वृक्षु प्रस्तोत्रा गातव्यो भागो निरूप्यते। तदिदं तृचस्य लिङ्गम् । *'ऋक्सा[6]मोवाच मिथुनीसंभवाव'-इत्यादावृग्देवतासामदेवतयोः संवादरूपेऽर्थवादे सामदेवतैका-मृचं, द्वे ऋचौ, च प्रत्याख्याय तिस्र ऋचोऽङ्गी चकार। तदिदमपरं लिङ्गम् । ताभ्यां लिङ्गाभ्यामुपबृंहितात् 'एकं साम तृचे क्रियते स्तोत्रीयम् ' इति वचना-त्तृचे गातव्यम् ॥ १ ॥

( द्वितीये-स्वर्दृक्शब्देन वीक्षणस्य कालार्थताधिकरणे सूत्रम् )।

स्वर्दृशं प्रति वीक्षणं कालमात्रं परार्थत्वात् ॥ ३ ॥

द्वितीयाधिकरणमारचयति-

स्वर्दृक्शब्दे वीक्षणे च किं स्यादङ्गाङ्गिताऽथवा ।
मीलनावधिताऽऽद्योऽस्तु[7] भिन्नवाक्येन[8] तद्विधेः ॥ २ ॥
प्रतिशब्देनावधिर्हि द्योत्यो वाक्यं न भिद्यते ।
सत्येवं[9] मीलनस्यापि विधिर्नोत्तरयोर्भवेत् ॥ ३ ॥

* 'ऋक्सामोवाच-'मिथुनी संभवाव' इति। सोऽब्रवीत्-'न वै त्वममालमसि, जायात्वे वेदो मे महिमा ' इति। ते द्वे भूत्वोचतुः। सोऽब्रवीत्-'न वै वां ममालम् । जायात्वे वेदो मे महिमा ' इति। तास्तिस्रो भूत्वोचुः। सोऽब्रवीत्-'संभवाम ' इति ' शाबरभाष्ये।

१ च. ऋचे। २ च. ऋने। ३ ज. झ. °दिसमा° । ४ च. °कस्यामृचि साम्नः कृतम् । तथैकस्यामेव साम गे° । ५ च. °ति, अक्ष° । ६ क. ख. च. °क्सागे वाव मि° । ञ. झ. क्सामे वा° । ७ ज. झ. °स्तुतिनवाक्येन तद्विधः। ८ ज. वाक्येन भि° । ९ ज. झ. °त्येव मीलनस्यास्य वि° ।

अस्ति रथंतरसाम्नो योनौ—'अभि त्वा शूर'—इत्येतस्यामृचि स्वर्दृक्शब्दः 'ईशानमस्य जगतः स्वर्दृशम्' इत्याम्नातः। अस्ति चोद्गातुः कर्तृता तृचे, 'रथंतरे प्रस्तूयमाने संमीलयेत्, स्वर्दृशं प्रति वीक्षेत' इति श्रुतेः। तत्र संशयः—किं स्वर्दृक्शब्दोच्चारणवीक्षणयोरङ्गाङ्गिभावोऽत्र विधीयते, किंवा—विधीयमानसंमीलनावधित्वेन स्वर्दृक्शब्दोच्चारणं निर्दिश्यते, इति। तत्र संमीलनवाक्याद्वीक्षणवाक्यं भिन्नम्। ततो न मीलनावधित्वेनान्वयः संभवतीति। किंच—'वीक्षेत' इति लिङ्प्रत्ययोऽत्र विधायकः श्रूयते। ततः स्वर्दृक्शब्दोच्चारणं वीक्षणाङ्गम्, वीक्षणं वा तदङ्गम्, इत्यङ्गाङ्गिभावोऽभ्युपेयः। तथा सति स्वर्दृक्शब्दरहितयोरुत्तरयोर्ऋचोर्गीयमाने रथंतरे विहितसंमीलनानुवृत्तिः फलिष्यति। इति पूर्वः पक्षः।

'स्वर्दृशं प्रति' इत्यनेन कर्मप्रवचनीयेन प्रतिशब्देन स्वर्दृक्शब्दोच्चारणस्य मीलनकालावधित्वं द्योत्यते। न च—अत्र भिन्नं वाक्यम्। एकवाक्यत्वसंभवात्। तथा हि—नि(वि)रोधपरिहाराय स्वत एव प्राप्तत्वाद्वीक्षणं न विधेयम्। तथा सति 'आ स्वर्दृक्शब्दोच्चारणात्संमीलयेत्' इत्येकं वाक्यं संपद्यते। एवं सत्युत्तरयोर्ऋचोर्मीलनविध्यभावः फलिष्यति। इति राद्धान्तः॥ २॥ ३॥

(तृतीये—गवामयनिके पृष्ठ्यषडहे बृहद्रथंतरयोर्विभागाधिकरणे सूत्रे ४-५)।

**पृष्ठ्यस्य युगपद्विधेरेकाहवद्द्विसामत्वम्॥ ४॥ विभक्ते वा समस्तविधानात्तद्विभागे विप्रतिषिद्धम्॥ ५॥**

तृतीयाधिकरणमारचयति—

गवामयनिके पृष्ठ्यषडहे प्रत्यहं द्वयम्।
बृहद्रथंतरं चोत भवेत्किंचित्क्वचिद्दिने॥ ४॥
द्वंद्वगर्भबहुव्रीहेराद्योऽन्त्येऽपि समो ह्यसौ।
अन्योन्यानिरपेक्षस्य चोदकादन्तिमो भवेत्॥ ५॥

द्वादशाहे पृष्ठ्यः षडह उत्पन्नः। तत्र षण्णामप्यह्नां क्रमेण रथंतरबृहद्वैरूपवैराजशाक्वररैवतानि सामानि विहितानि। गवामयने तु विकृतिरूपो यः पृष्ठ्यः षडहः, तत्र श्रूयते—'पृष्ठ्यः षडहो बृहद्रथंतरसामा' इति। चोदकप्राप्तयोर्बृहद्रथं-

१ ज. झ. क्रतुतौ। २ ज. °रणत्वीक्ष्यसायो° झ. °रणं वीक्ष्य साम्नोर°। ३ क. °त्वेऽन्व°। ४ ञ. वीक्षत इति लट्प्रत्य°। ५ ख. °मानर°। च. °माने रथंतरेऽपि वि°। ६ ख. °हित सं°। च. °हितस्य सं°। ७ च. ज. झ. हि—विरो°। ञ. हि निषेध°। ८ ज. झ. न च वि°। ९ क. पृष्ठ्याः ष°। ख. ज. झ. पृष्ठ्यः। ष°। १० ज. झ. वोत। ञ. तोत। ११ क. समौ हि तौ। ज. झ. समा ह्यसौ। १२ क. °पोऽन्यः पृ°।

तयोः पुनर्विधानाद्वैरूपादिनिवृत्तिः। ततः शिष्यमाणं बृहद्रथंतरसामद्वयं किं प्रत्यहं कर्तव्यम्, किंवा केषुचिदहःसु बृहत्, केषुचिद्रथंतरम्, इति संशयः। बृहच्च रथंतरं च बृहद्रथंतरे, ते च सामनी यस्य, इति द्वंद्वगर्भिते बहुव्रीहावितरेतरयोगद्वंद्वेन साम्नोः साहित्यं प्रतीयते। ततः प्रत्यहं सामद्वयम्। इति पूर्वः पक्षः।

ते सामनी यस्याह्न इत्यह्नो यद्यन्यपदार्थत्वम्, तदा भवदुक्तमेव स्यात्। इह तु षडहोऽन्यपदार्थः। तथा सति षडहे द्वयोः साम्नोः साहित्यं सिद्धान्तेऽपि समानम्। प्रकृतौ साम्नोरन्योन्यनिरपेक्षत्वादिहापि निरपेक्षमेव साम चोदकेनातिदिश्यते। तस्मात्—केषुचिदहःसु किंचित्साम। इति राद्धान्तः॥ ४॥ ५॥

( चतुर्थे-प्रायणीयोदयनीययोरैकादशिनानां विभागाधिकरणे सूत्राणि ६—१२ )।

**समासस्त्वैकादशिनेषु तत्प्रकृतित्वात्॥ ६॥ विहारप्रतिषेधाच्च॥ ७॥ श्रुतितो वा लोकवद्विभागः स्यात्॥ ८॥ विहारप्रकृतित्वाच्च॥ ९॥ विशये च तदासत्तेः॥ १०॥ त्रयस्तथेति चेत्॥ ११॥ न समत्वात्प्रयाजवत्॥ १२॥**

चतुर्थाधिकरणमारचयति—

**स्युरेकादशिनाः किं प्रायणीयोदयनीययोः।**
**प्रत्येकमखिलाः किंवा विभज्याः स्युस्तयोरपि॥ ६॥**
**उद्देश्ययोः प्रधानत्वात्प्रत्येकं पशवोऽखिलाः।**
**नोद्देश्यौ शतवद्भागः शिष्टस्त्वासत्तितोऽन्तिमे॥ ७॥**

द्वादशाहे श्रूयते—'एकादशिनान्प्रायणीयोदयनीययोरतिरात्रयोरालभेरन्' इति। त एते पशव एकादशापि प्रायणीयेऽहनि कर्तव्याः, तथोदयनीयेऽपि सर्वे कर्तव्याः। कुतः। प्रायणीयोदयनीययोरुद्देश्यत्वेन प्राधान्यात्। प्रतिप्रधानं चाङ्गावृत्तेर्युक्तत्वात्। इति पूर्वः पक्षः।

वचनान्तरेण विहितानामेकादशानां प्रकरणेन द्वादशाहाङ्गत्वे सिद्धे देशाकाङ्क्षायां तान्पशूनुद्दिश्य प्रायणीयोदयनीयौ देशत्वेन विधीयेते। तत्र कुत उद्देश्यत्वम्, कुतस्तरां प्राधान्यम्, कुतस्तमां पश्वावृत्तिः। एवं सति यथा 'शतं देवदत्त-

१ ञ. योगेन सा°। २ ज. झ. प्रतिसा°। ३ क. च. °क्षत्वव°। ४ ज. झ. नाप्यति। ५ ज. झ. सिद्धान्तः। ६ क. ख. घ. झ. °शिनः किं। ७ झ. °रमी। ८ ञ. °धानप्रवृ°। ९ क. °रेणावि°। १० ज. झ. ञ. °द्धे सति दे°।

यज्ञदत्तयोर्विधीयताम् ' इत्यत्र देवदत्ते पञ्चाशद्विधीयते यज्ञदत्ते पञ्चाशत् ' इति विभाग; तथा—प्रायणीये पञ्च पशवः, उदयनीये पञ्च ' इति विभागो युक्तः । यस्त्ववशिष्ट एकः पशुरान्तिमः, स प्रत्यासन्नत्वादन्तिमेऽहन्युदयनीये कर्तव्यः ॥ ७ ॥

( पञ्चमे—सर्वपृष्ठे देशविशेषव्यवस्थाधिकरणे सूत्रे १३–१४ ) ।

सर्वपृष्ठे पृष्ठशब्दात्तेषां स्यादेकदेशत्वं पृष्ठस्य कृतदेशत्वात् ॥ १३ ॥ विधेस्तु विप्रकर्षः स्यात् ॥ १४ ॥

पञ्चमाधिकरणमारचयति—

किं सर्वपृष्ठे सर्वाणि पृष्ठदेशे यथोक्ति वा ।
पृष्ठशब्दात्पृष्ठदेशे वचनात्तु व्यवस्थितिः ॥ ८ ॥

इदमाम्नायते—' विश्वजित्सर्वपृष्ठः ' इति । षडहे षट्स्वहःसु क्रमेण ' रथंतरं बृहद्वैरूपम् ' इत्यादिभिः षड्भिः सामभिः पृष्ठस्तोत्रं निष्पादितम् । तानि सर्वाणि पृष्ठसामानि यस्मिन्विश्वजिति सोऽयं सर्वपृष्ठः । तत्र माध्यंदिनपवमान-मैत्रावरुणसाम्नोरन्तरालरूपे पृष्ठस्तोत्रदेशे किं सर्वाणि पृष्ठसामानि कार्याणि, किंवा यथावचनं देशव्यवस्था, इति संशयः । पृष्ठकार्यगमकेन पृष्ठशब्देन पृष्ठ-देशे ( इति ) प्राप्ते—

वचनेन देशविशेषो व्यवस्थाप्यते । वचनं चैवमाम्नायते—' पवमाने रथंतरं करोति, आर्भवे बृहत्, मध्य इतराणि—वैरूपं होतुः, पृष्ठं वैराजं ब्रह्मसाम, शाक्करं मैत्रावरुणसाम, रैवतमच्छावाकसाम ' इति । वचनं हि न्यायाद्बलीयः । तस्मात् देशविशेषो व्यवस्थितः ॥ ८ ॥

( षष्ठे—वैरूपवैराजसाम्नोः पृष्ठकार्ये निवेशाधिकरणे सूत्राणि १५–२१ ) ।

वैरूपसामा क्रतुसंयोगात्त्रिवृद्वदेकसामा स्यात् ॥ १५ ॥ पृष्ठार्थे वा प्रकृतिलिङ्गसंयोगात् ॥ १६ ॥ त्रिवृद्वदिति चेत् ॥ १७ ॥ न प्रकृतावकृतत्वसंयोगात् ॥ १८ ॥ विधित्वान्नेति चेत् ॥ १९ ॥ स्याद्विशये तन्न्यायत्वात्कर्माविभागात् ॥ २० ॥ प्रकृतेश्चाविकारात् ॥ २१ ॥

---

१ क. षडहं षट्कं षट्स्व° । झ. षडहःसु । २ क. ख. °ह्मणः सा° । ३ क. ख. °णस्य सा° । ४ क. ख. °वाकस्य सा° ।

षष्ठाधिकरणमारचयति-

कार्त्स्न्याद्वैरूपवैराजे उक्थ्यषोडाशिनोरुत ।
पृष्ठे स्यात्क्रतुसंयोगादाद्योऽन्त्यः पृष्ठलिङ्गतः ॥ ९ ॥

इदमाम्नायते-'उक्थ्यो वैरूपसामा-एकविंशः, षोडशी वैराजसामा' इति । तत्र-कृत्स्न उक्थ्ये वैरूपं साम, कृत्स्ने षोडाशिनि वैराजं साम, 'वैरूपं साम यस्मिन्नुक्थ्ये क्रतौ, वैराजं साम यस्मिन्षोडाशिनि क्रतौ' इत्येवं क्रतुसंबन्धप्रतीतेः ।

मैवम् । प्रकृतौ 'रथंतरसामा, बृहत्सामा' इत्येवंविधस्य निर्देशस्य पृष्ठस्तोत्रविषयत्वदर्शनादत्रापि तन्निर्देशेन पृष्ठलिङ्गेन पृष्ठकार्ये वैरूपं वैराजं च भवितुमर्हति । क्रतुसंबन्धस्तयोः पृष्ठद्वारेणोपपद्यते ॥ ९ ॥

( सप्तमे-त्रिवृति स्तोमगतसंख्याविकाराधिकरणे सूत्रे २२-२३ ) ।

त्रिवृति संख्यात्वेन सर्वसंख्याविकारः स्यात् ॥ २२ ॥
स्तोमस्य वा तल्लिङ्गत्वात् ॥ २३ ॥

सप्तमाधिकरणमारचयति-

त्रिवृदग्निष्टुदित्येतत्सर्वत्र स्तोम एव वा ।
आद्यस्त्रैगुण्यवाचित्वादन्त्यः स्तोमेऽस्य रूढितः ॥ १० ॥

एवं श्रूयते-'त्रिवृदग्निष्टुदग्निष्टोमः'इति । किं त्रिवृत्त्वमग्निष्टुति क्रतौ सर्वेषु साधनेषु संबध्यते, किंवा स्तोममात्रसंबन्धि तत् । 'त्रिवृद्रज्जुः' इत्यादौ त्रिवृच्छब्दस्य त्रैगुण्यवाचित्वदर्शनादत्रापि क्रतुसाधनेषु या या संख्या श्रूयते, सा सर्वा त्रिवृत्त्वेन विक्रियते । इति प्राप्ते-

ब्रूमः-यद्यपि त्रिवृच्छब्दोऽवयवप्रसिद्ध्या लोके त्रैगुण्यं ब्रूते तथाऽपि वेदे रूढ्या स्तोमवाची । 'त्रिवृद्बहिष्पवमानः' इत्युक्त्वा स्तोत्रियाणां नवानामृचामनुक्रमणेन स्तोमविषयमेव त्रिवृत्त्वम् ॥ १० ॥

(अष्टमे-उभयसाम्नि बृहद्रथंतरयोः समुच्चयाधिकरणे सूत्राणि २४-२६)।

उभयसाम्नि विश्वजिद्वद्विभागः स्यात्

१ क. पृष्ठ्ये । २ क. पृष्ठ्यालि° । ३ ज. झ. °न्धस्त्वपृ° । ४ क. त्रिकत्वेन । ख. ज. झ. ञ. त्रित्वेन । ५ च. इत्युक्त्या । ६ ख. च. ज. झ. स्तोत्रीयाणां । ७ ख. च. °नुक्रमेण स्तो° । ज. झ. °नुक्रमणतः स्तो° ।

॥ २४ ॥ पृष्ठार्थे वाऽतदर्थत्वात्
॥ २५ ॥ लिङ्गदर्शनाच्च ॥२६॥

अष्टमाधिकरणमारचयति—

संसवादौ द्वयोरेकं पृष्ठं यद्वा समुचितम् ।
एकं प्रकृतिवद्विश्वजिद्वदन्यत्र चेतरत् ॥ ११ ॥
वचनाद्विश्वजित्येते सामनी स्तोत्रयोर्द्वयोः ।
नेहास्ति तत्पृष्ठ एव साहित्यं स्यात्पुनर्विधेः ॥ १२ ॥

इदमाम्नायते—'संसव उभे कुर्यात्' इति । *'अभिजितावेकाह उभे बृहद्रथंतरे कुर्यात्' इति । किमत्र बृहद्रथंतरयोरेकं पृष्ठस्तुतौ, इतरदन्यस्तुतौ स्यात्, किंवा समुचितमुभयं पृष्ठस्तुतौ, इति संशयः । प्रकृतौ द्वयोर्विकल्पितत्वादेकस्मिन्प्रयोग एकस्य पृष्ठत्वादन्यत्रापि तथात्वं युक्तम् । तथा सत्यवशिष्टं साम सर्वपृष्ठविश्वजिन्न्यायेन स्तोत्रान्तरे प्रयोक्तव्यम् । इति पूर्वः पक्षः ।

तादृग्वचनाभावेनात्र विश्वजिद्वैषम्यात् । प्रकृतिवद्विकल्पे सति पुनर्विधानवैयर्थ्यात्समुच्चीयते । इति राद्धान्तः ॥ ११ ॥ १२ ॥

(नवमे—मध्वशनघृताशनयोः षडहान्तेऽनुष्ठानाधिकरणे सूत्रे २७-२८)

पृष्ठे रसभोजनमावृत्ते संस्थिते त्रयस्त्रिंशेऽहनि स्यात्तदानन्तर्यात्प्रकृतिवत् ॥२७॥
अन्ते वा कृतकालत्वात् ॥ २८ ॥

नवमाधिकरणमारचयति—

त्रयस्त्रिंशारम्भणे किं तदन्ते मधुभोजनम् ।
षडहान्तेऽथवाऽऽद्यः स्यात्सांनिध्याद्वाक्यतोऽन्तिमः ॥ १३॥

पृष्ठ्यः षडहो द्विविधः—त्रयस्त्रिंशान्तः, त्रयस्त्रिंशादिश्चेति । द्वादशाहे—त्रिवृत्पञ्चदशः, सप्तदशः, एकविंशः, त्रिणवः, त्रयस्त्रिंशः, इत्येतैः स्तोमैर्युक्तान्यहानि षड्विहितानि । सोऽयं त्रयस्त्रिंशान्तः । क्वचिद्विकृतौ व्यत्यासेन त्रयस्त्रिंशादिस्त्रिवृदन्तः—'पृष्ठ्यः षडहस्त्रयस्त्रिंशारम्भणस्त्रिवृदुत्तमः कार्यः' इति । तत्र मधु-

* "अपचितावप्येकाहे" इति शाबरभाष्यपाठः ।

१ क. एकप्र° । ख. एव प्र° । ज. एवं प्र° । २ ख. च. वेतरत् । ३ ख. च. ज. ञ. °सामनी द्वे स्तो° ४ क. किं मन्त्रबृ° । ५ ज °नाप्यत्रा° ६ ख. °वा यस्मात्सां° ७ ज. ञ. भोजनं ।

भोजनं चोदकमाप्तम्। तच्च प्रकृतौ ( विहितम् )। त्रयस्त्रिंशेऽहन्यनुष्ठितेऽनन्तरं कृतम्, इत्यत्रापि सांनिध्यात्त्रयस्त्रिंशान्ते कर्तव्यम्। इति प्राप्ते—

ब्रूमः—' संस्थिते पृष्ठ्ये षडहे मध्वाशयेद्घृतं वा ' इति वाक्येन प्रकृतौ षडहप्रयोगस्यान्ते मधुभोजनं विहितम्। त्रयस्त्रिंशसंनिधिस्तु नान्तरीयकः। अतोऽत्रापि षडहावसाने कर्तव्यत्वात्त्रिवृत्संनिधौ तदनुष्ठानम् ॥ १३ ॥

( दशमे— { षडहावृत्तावपि मध्वशनघृताशनयोः सकृदनुष्ठानाधिकरणे } सूत्रे २९—३० )।

**अभ्यासे च तदभ्यासः कर्मणः पुनः प्रयोगात् ॥ २९ ॥ अन्ते वा कृतकालत्वात् ॥ ३० ॥**

दशमाधिकरणमारचयति—

**अभ्यासे षडहे भुक्तिमभ्यस्येत्किं न वाऽग्रिमः।**
**स्तोत्रशस्त्रादिवन्मैवं संस्थिते तद्विधानतः ॥ १४ ॥**

' *आवृत्तं पृष्ठ्यमुपयन्ति ' इति श्रूयते। तत्र षडहावृत्तौ यथा स्तोत्रादीन्यावर्तन्ते, तथा मधुभोजनमपि। इति प्राप्ते—

ब्रूमः—संस्थिते षडहे भोजनं विधीयते। संस्था नाम पुनः षडहाविशेषव्यापारामावः। अतः षडहावृत्तेरन्ते मधुभोजनं सकृदेव कार्यम् ॥ १४ ॥

**( एकादशे—गवामयने मध्वशनघृताशनयोः प्रतिमासमावृत्त्यधिकरणे सूत्रम् )।**

**आवृत्तिस्तु व्यवाये कालभेदात्स्यात् ॥ ३१ ॥**

एकादशाधिकरणमारचयति—

**सर्वान्ते प्रतिमासं वा पृष्ठ्यान्ते मधुभोजनम्।**
**सर्वान्ते पूर्ववन्मैवं संस्थितानां पृथक्त्वतः ॥ १५ ॥**

गवामयने श्रूयते—' चत्वारोऽभिप्लवाः षडहाः। पृष्ठ्यः षडहः समासः सद्वितीयः सतृतीयः सचतुर्थः सपञ्चमः ' इति। तत्र षडहपञ्चकरूपे मासेऽभ्यस्यमाने पृष्ठ्योऽप्यावर्तते। तथा सति पूर्वन्यायेनाऽऽवृत्तेषु पृष्ठ्येषु सर्वेषु समाप्तेष्वन्ते मधुभोजनम्। इति प्राप्ते—

* " आवृत्तं पृष्ठ्यं षडहमुपयन्ति " इति शाबरभाष्ये पाठः।

१ ख. °तम् ' इ°। ज. °तं च " इ°। २ ज. °हे मुक्तिमन्यस्ये°। ञ. °हे भुक्तिमभ्यस्ते°। ३ क. °वृत्तौ म°। ४ ज. पृष्ठान्ते। ५ ख. समासः। ६ ख. °पेण मा°। ञ. °पे समा°। ७ क. ञ. °मासेष्व°।

ब्रूमः—प्रतिमासं संस्थितानां पृष्ठ्यानां पृथक्त्वाद्भोजनमपि प्रतिमासमावर्तनीयम् ॥ १५ ॥

( द्वादशे- द्वादशाहे सत्रिभिरपि मध्वशनाधिकरणे सूत्रे ३२-३३ )।

मधु न दीक्षिता ब्रह्मचारित्वात् ॥ ३२ ॥
प्राश्येत वा यज्ञार्थत्वात् ॥ ३३ ॥

द्वादशाधिकरणमारचयति—

मध्वभक्ष्यं भक्ष्यते वा सत्रिभिर्ब्रह्मचारिणः।
निषिद्धत्वादादिमोऽन्त्यः पुंस्क्रत्वर्थविभेदतः ॥ १६ ॥

सत्रात्मकद्वादशाहे पृष्ठ्यषडहे संस्थिते मध्वभक्ष्यम्। कुतः। सत्रिणां दीक्षितत्वेन ब्रह्मचारित्वात्। ब्रह्मचारिणां च मधुमांसप्रतिषेधात्। इति चेत्।

मैवम्। तन्निषेधस्य पुमर्थत्वेन, भक्षणविधेः क्रत्वर्थत्वेन च विषयभेदात्। तस्मात्--सत्रिभिर्भक्ष्यम् ॥ १६ ॥

( त्रयोदशे—मानसस्य द्वादशाहाङ्गताधिकरणे सूत्राणि—३४—४४ )।

मानसमहरन्तरं स्याद्भेदव्यपदेशात् ॥ ३४ ॥
तेन च संस्तवात् ॥ ३५ ॥ अहरन्ताच्च परेण
चोदना ॥ ३६ ॥ पक्षे संख्या सहस्रवत् ॥ ३७ ॥
अहरङ्गं वांऽशुवच्चोदनाभावात् ॥ ३८ ॥ दशम-
विसर्गवचनाच्च ॥३९॥ दशमेऽहन्निति च तद्गुण-
शास्त्रात् ॥ ४० ॥ संख्यासामञ्जस्यात् ॥ ४१ ॥
पश्वतिरेके चैकस्य भावात् ॥ ४२ ॥ स्तुतिव्यप-
देशमङ्गेन विप्रतिषिद्धं व्रतवत् ॥ ४३ ॥ वचनाद-
तदन्तत्वम् ॥ ४४ ॥

त्रयोदशाधिकरणमारचयति—

मानसं किमहर्भिन्नमङ्गं वा दशमेऽहनि।
भिन्नं स्तुत्यादिनाऽङ्गं तद्विसर्गोक्त्यादिभिर्भवेत् ॥ १७ ॥

---

१ ज. झ. ञ. °र्भक्षणीयम्। २ क. °महो भिन्न° । ३ क. भिन्नस्तु°।

द्वादशाहे मानसग्रहणं श्रूयते—'अनया त्वा पृथिव्या पात्रेण समुद्रस्तया प्रजापतये त्वा जुष्टं गृह्णामीति मानसं प्राजापत्यं गृह्णाति' इति। अयमर्थः—'पृथिवी पात्रम्, समुद्रः सोमः, प्रजापतिर्देवता, एवंविशिष्टस्य ग्रहस्य ग्रहणे मनः साधनम्, तदिदं मानसम्' इति। एतच्च द्वादशभ्यो भिन्नमहस्त्रयोदशेऽहनि कर्तव्यो यागविशेषः। कुतः। स्तुत्यादिभ्यः। मानसेन द्वादशाहस्य स्तुतिरेवमाम्नायते—'द्वादशाहस्य इतरसानि च्छन्दांसि तानि मानसेनाप्याययन्ति' इति। स्तुतिसाधनं च मानसं स्तोतव्याद्भिन्नं भवितुं युक्तम्। तथा व्यपदेशभेदोऽपि श्रूयते—'वाग्वै द्वादशाहः, मनो मानसम्' इति। एवमाद्युपपत्तिभिर्भिन्नमहः। इति प्राप्ते—

ब्रूमः—दशमस्याह्नोऽङ्गं तत्स्यात्। विसर्गोक्त्यादिभ्यः। 'एष वै दशमस्याह्नो विसर्गो यन्मानसम्' इति विसर्गोक्तिः। इयं च दशमाहाङ्गत्वं गमयति। अहरन्तरत्वे द्वादशाहसमाख्या च विरुध्यते। अङ्गभूतेनापि मानसस्तुतिव्यपदेशभेदादिकमुपपद्यते। तस्मात्—अभेदः॥ १७॥

( चतुर्दशे—सत्रस्य बहुकर्तृकत्वाधिकरणे सूत्राणि ४५–५० )।

सत्रमेकः प्रकृतिवत्॥ ४५॥ वचनात्तु बहूनां स्यात्॥४६॥ अपदेशः स्यादिति चेत्॥४७॥ नैकव्यपदेशात्॥ ४८॥ संनिवापं च दर्शयति॥ ४९॥ बहूनामिति चैकस्मिन्विशेषवचनं व्यर्थम्॥ ५०॥

चतुर्दशाधिकरणमारचयति—

सत्रमेकः करोत्याहो बहवः प्रकृताविव।
एकः कुर्यादिहाऽऽसीरन्नित्युक्त्या बहवो मताः॥ १८॥

द्वादशाहादिसत्रस्य ज्योतिष्टोमः प्रकृतिः। तत्र कर्त्रैक्याच्चोदकेन सत्रेऽपि कर्त्रैक्ये प्राप्ते—

प्रत्यक्षवचनाद्बहवोऽभ्युपेयाः॥ १८॥

( पञ्चदशे—सत्रे यजमानानामेवर्त्विक्त्वाधिकरणे सूत्राणि ५१–५८ )।

अन्ये स्युर्ऋत्विजः प्रकृतिवत्॥५१॥ अपि

---

१ क. मानसग्रहः। ख. च. मानसं ग्रहणं। ञ. मानसग्रहणं। २ ज. झ. तद्युक्तम्। ३ ज. झ. °देशः श्रू°। ४ ख ज. झ. तस्मात्। ५ क. °हाशीर°। ६ ज. झ. °त्र कार्यैक्या°

वा यजमानाः स्युर्ऋत्विजामभिधानसंयोगात्तेषां स्याद्यजमानत्वम् ॥ ५२ ॥ कर्तृसंस्कारो वचनादाधातृवदिति चेत् ॥ ५३ ॥ स्याद्विशये तन्न्यायत्वात्प्रकृतिवत् ॥ ५४ ॥ स्वाम्याख्याः स्युर्गृहपतिवदिति चेत् ॥ ५५ ॥ न प्रसिद्धग्रहणत्वादसंयुक्तस्य तद्धर्मेण ॥ ५६ ॥ दीक्षितादीक्षितव्यपदेशश्च नोपपद्यतेऽर्थयोर्नित्यभावित्वात् ॥ ५७ ॥ अदक्षिणत्वाच्च ॥ ५८ ॥

पञ्चदशाधिकरणमारचयति—

ऋत्विजोऽन्येऽत्र यष्टृभ्यः स्युस्त एवोत चोदकात् ।
अन्ये यष्टार एव स्युः प्रत्यक्षवचनादिभिः ॥ १९ ॥

अत्र सत्रे किं यजमानेभ्यो व्यतिरिक्ता ऋत्विजः कर्तव्याः किंवा यजमाना एवर्त्विजः । ज्योतिष्टोमे यजमानादन्य ऋत्विजः । तद्विकृतित्वादिहापि चोदकादन्ये स्युः । इति प्राप्ते—

ब्रूमः—'ये यजमानास्त एव ऋत्विजः' इति प्रत्यक्षवचनात्, 'अदक्षिणानि सत्राणीत्याहुः' इति दक्षिणाराहित्यश्रवणात्, 'अध्वर्युर्गृहपतिं दीक्षयित्वा ब्रह्माणं दीक्षयति, तत उद्गातारम्' इत्यादिना ब्रह्मोद्गात्रादिसमाख्यासंयोगदीक्षासंयोगयोरार्त्विज्ययाजमानद्योतकयोः प्रतिभानाच्च यजमाना एवर्त्विजः ॥ १९ ॥

( षोडशे—सत्राहीनयोर्विवेकाधिकरणे सूत्रे ५९–६० ) ।

द्वादशाहस्य सत्रत्वमासनोपायिचोदनेन यजमानबहुत्वेन च सत्रशब्दाभिसंयोगात् ॥ ५९ ॥ यजतिचोदनादहीनत्वं स्वामिनां चास्थितपरिमाणत्वात् ॥ ६० ॥

षोडशाधिकरणमारचयति--

---

१ क. ज. °जोऽन्यत्र । २ क. °दिति ॥ १९ ॥ ३ ख. च. ज. झ. ञ. °दन्येषामृत्विक्त्वादन्ये स्युः । ४ ख. ज. झ. °तिमाना° ।

अहीनसत्रयोर्लक्ष्मभेदो नास्त्यस्ति वा नहि ।
आवृत्तिसाम्यादाद्यः स्यादिज्यासिभ्यां तयोर्भिदा ॥ २० ॥

अस्ति द्वादशाहस्याहीनत्वं सत्रत्वं च । तत्रैवं चिन्त्यते—किमहीनसत्रयोर्लक्षणभेदो नास्ति, उत—अस्ति, इति । तत्र—'नास्ति' इति तावत्प्राप्तम् । कुतः । ज्योतिष्टोमावृत्तिरूपस्य समानत्वात् । यथा द्विरात्रादीनामेकादशरात्रान्तानामहीनानामावृत्तौ ज्योतिष्टोमस्वरूपम्, तथा त्रयोदशरात्रादीनां सत्राणाम् । इति प्राप्ते ।

ब्रूमः—'आसीरन् उपेयुः' इति चोदनाद्वयं यजमानबहुत्वं च सत्रलक्षणम् । यजतिचोदना यजमानबहुत्वनियमाभावश्चाहीनलक्षणम् । वैदिकप्रयोगेषु तयोरव्यभिचारात् । इति राद्धान्तः ॥ २० ॥

(सप्तदशे—पौण्डरीके सकृदेव दक्षिणादानाधिकरणे सूत्राणि ६१-६७)।

अहीने दक्षिणाशास्त्रं गुणत्वात्प्रत्यहं कर्मभेदः स्यात् ॥ ६१ ॥ सर्वस्य वैककर्म्यात् ॥ ६२ ॥ पृषदाज्यवद्वाऽह्नां गुणशास्त्रं स्यात् ॥ ६३ ॥ ज्योतिष्टोम्यस्तु दक्षिणाः सर्वासामेककर्मत्वात्प्रकृतिवत्तस्मान्नाऽऽसां विकारः स्यात् ॥ ६४ ॥ द्वादशाहे वचनात्प्रत्यहं दक्षिणाभेदस्तत्प्रकृतित्वात्परेषु तासां संख्याविकारः स्यात ॥ ६५ ॥ परिक्रियाविभागाद्वा समस्तस्य विकारः स्यात् ॥ ६६ ॥ भेदस्तु गुणसंयोगात् ॥ ६७ ॥

सप्तदशाधिकरणमारचयति—

अयुतादि प्रत्यहं स्यात्सकृद्वाऽङ्ग्यनुसारतः ।
आद्यो भवेत्प्रयोगोऽङ्गी तदैक्येन सकृद्भवेत् ॥ २१ ॥

अस्ति पौण्डरीकः । 'पौण्डरीकेणैकादशरात्रेण स्वाराज्यकामो यजेत' इति तद्विधानात् । तत्र श्रूयते—'अयुतं पुण्डरीके दद्यादश्वसहस्रमेकादशम्' इति । तत्र गवायुताश्वसहस्रे प्रत्यहं दातव्ये । कुतः । दक्षिणाया अङ्गत्वेन प्रतिप्रधानमावर्तनीयत्वात् । इति प्राप्ते—

१ क. ज. झ. ञ. °लक्ष्यभे° । २ क. °कृत्क्रतुसा° । च. °कृद्वाऽप्यनुसा° । ज. झ. °कृद्वाक्यानु° । ३ क. °दश्वमेकादशसहस्रम् ।

ब्रूमः—अहर्गणरूपस्य पौण्डरीकस्य प्रयोगो दक्षिणाङ्गं प्रत्यङ्गी। स चैकः। अतः--सकृदेव दानम्[1] ॥ २१ ॥

( अष्टादशे- पौण्डरीके सर्वासां दक्षिणानां विभज्य नयनाधिकरणे सूत्राणि ६८--७१ )।

प्रत्यहं सर्वसंस्कारः प्रकृतिवत्सर्वासां सर्वशेषत्वात् ॥ ६८ ॥ एकार्थत्वान्नेति चेत् ॥ ६९ ॥ स्यादुत्पत्तौ कालभेदात् ॥ ७० ॥ विभज्य तु संस्कारवचनाद्द्वादशाहवत् ॥ ७१ ॥

अष्टादशाधिकरणमारचयति--

सकृत्किं प्रत्यहं वाऽस्य नयनं तत्र चोत्तमे।
सर्वस्य वा विभक्तस्य सकृत्संस्कारसिद्धितः ॥ २२ ॥
प्रतिमाध्यंदिनं चोदकप्राप्तेः[2] प्रत्यहं तदा।
सर्वं नेयं तदेकत्वाद्विभज्य द्वादशाहवत् ॥ २३ ॥

पौण्डरीके सकृदेव दातव्यं गवायुताश्वसहस्ररूपं दक्षिणाद्रव्यं यदस्ति, तस्य नयनादिसंस्कारश्चोदकप्राप्तः। प्रकृतौ 'माध्यंदिने सवने दक्षिणा नीयन्ते[3]' इति[4]। तद्विकृतित्वेन नयनमिह सकृत्कार्यम्, किंवा प्रत्यहम्[5], इत्येकः संशयः। तयोरुत्तमे पक्षे प्रत्यहं किं दक्षिणाद्रव्यस्य सर्वस्य नयनम्, किंवा दशस्वहःसु गवामेकैकसहस्रम्, एकादशेऽह्नि--अश्वसहस्रम्, इति द्वितीयः संशयः। तत्र 'सकृन्नयनम्' इति तावत्प्राप्तम्। कुतः। तावतैव चिकीर्षितसंस्कारस्य सिद्धत्वात्। अथवा प्रतिमाध्यंदिनसवनं चोदकप्राप्तेः समानत्वात्प्रत्यहं नयनं कार्यम्[6], तदाऽपि गवायुताश्वसहस्ररूपस्य द्रव्यस्यैकदक्षिणारूपत्वात्सर्वं नेयम्। इति पूर्वः पक्षः।

विभज्य नेयम्। कुतः। द्वादशाहविकृतित्वात्। द्वादशाहे चान्वहं विभज्य नीतत्वात्[7]। इति राद्धान्तः ॥ २२ ॥ २३ ॥

( एकोनविंशे--मानवीषु पञ्चदशानामेव सामिधेनीत्वाधिकरणे सूत्राणि ७२--७५ )।

लिङ्गेन द्रव्यनिर्देशे सर्वत्र प्रत्ययः स्याल्लिङ्गस्य सर्वगामित्वादाग्नेयवत् ॥ ७२॥ यावदर्थं वाऽर्थशेष-

१ ख. दानमिति। २ अ. °प्राप्तः प्र°। ३ क. निनयेत्। ४ ज. झ. °ति तद्विधा (नम्। तद्विकृति )त्वेन। ५ ज. झ. प्रत्यक्षम्। ६ ज. झ. अ. कर्तव्यम्। ७ ज. झ. नी-(ने)यत्वात्।

त्वादल्पेन परिमाणं स्यात्तस्मिंश्च लिङ्गसामर्थ्यम्

॥ ७३ ॥ आम्नये कृत्स्नविधिः ॥ ७४ ॥ ऋजीषस्य

प्रधानत्वादहर्गणे सर्वस्य प्रतिपत्तिः स्यात् ॥ ७५ ॥

एकोनविंशाधिकरणमारचयति—

मनोर्ऋचः सामिधेन्यः सर्वाः पञ्चदशैव वा ।

अविशेषेण सर्वाः स्युः कार्याः पञ्चदशैव ताः ॥ २४ ॥

क्वचिद्विकृतिविशेषे श्रूयते—'मनोर्ऋचः सामिधेन्यो भवन्ति' इति । तत्र विशेषाश्रवणादृचो यावत्यो मनुसंबन्धिन्य ऋक्संहितायामाम्नाताः, ताः सर्वाः सामिधेन्यः । इति प्राप्ते—

ब्रूमः—अग्निसमिन्धनमासामृचां कार्यम् । तच्च प्रकृतौ पञ्चदशभिः सिद्ध-मित्यत्रापि चोदकवशात्पञ्चदशैवोपादेयाः ॥ २४ ॥

( विंशे—वाससि मानोपावहरणयोरनुष्ठानाधिकरणे सूत्रम्— )।

वाससि मानोपावहरणे प्रकृतौ सोमस्य वचनात् ॥ ७६ ॥

विंशाधिकरणमारचयति—

उपावहरणं मानमपि क्वाप्युत वाससि ।

क्वापि स्यात्प्रांशुताभावाद्वचनाद्वाससोभयम् ॥ २५ ॥

ज्योतिष्टोमे सोमस्योपावहरणं मानं च श्रुतम् । तदुभयं संपादनप्रयत्नेन बिना स्वत एव लब्धेन केनापि साधनेन कार्यम् ।

मैवम् । 'वाससि मिनोति, वाससा चोपावहरति' इति वचनेन वाससो विहितत्वात् ॥ २५ ॥

( एकविंशे—अहर्गणे वासोन्तरोत्पादनाधिकरणे सूत्रम् ) ।

तत्राहर्गणेऽर्थाद्वासः प्रकृतिः स्यात् ॥ ७७ ॥

एकविंशाधिकरणमारचयति—

---

१ ज. झ. °न्यः कार्याः । इ° । २ क. °भयसंपादनं प्र° । ३ ज. झ. ञ. कर्तव्यम् । ४ क. वाससा ।

नान्यद्वासोऽहर्गणे स्यात्स्याद्वा न स्यादनुक्तितः।
चोदकात्प्रत्यहं प्राप्तं कार्याद्वासोन्तरं भवेत् ॥ २६ ॥

द्वादशाहादावहर्गणे चोदकप्राप्तादेकस्मान्मानोपावहरणहेतोर्वाससोऽन्यद्वासोऽनुक्तत्वान्न संपाद्यम्। इति प्राप्ते—

ब्रूमः—प्रत्यहं—सोमस्योपावहरणं चोदकेन प्राप्तम्। तच्चोपावहरणरूपं कार्यं वासोभेदं विना न सिध्यति। हविर्धानशकटेऽवस्थिताद्वासोपनीतसोमात्कियन्तमपि सोमभागमेकैकस्याह्नः पर्याप्तं पृथक्कृत्योपावहर्तुं वासोन्तरं संपाद्यम् ॥ २६ ॥

( द्वाविंशे—उपावहरणार्थमेव वासोन्तरोत्पादनाधिकरणे सूत्रे ७८–७९ )।

मानं प्रत्युत्पादयेत्प्रकृतौ तेन दर्शनादुपावहरणस्य ॥ ७८ ॥ हरणे वा श्रुत्यसंयोगादर्थाद्विकृतौ तेन ॥ ७९ ॥

द्वाविंशाधिकरणमारचयति—

तत्किं माने हृतौ वाऽऽद्यः प्रकृतावेकतेक्षणात्।
अर्थात्तदैक्यं तत्रोक्त्या हृतौ स्यात्सार्थकत्वतः ॥ २७ ॥

यदेतद्वासोन्तरमहर्गणे संपाद्यम्, तत्किं मानकाले, उत—उपावहरणकाले। इति संशयः। प्रकृतौ मानोपावहरणयोर्वास‍सैकत्वदर्शनादिहापि तदैक्यसिद्धये मानकाले वासोन्तरं संपाद्यम्। इति पूर्वः पक्षः।

प्रकृतौ—येन सोमो मितः, तेनैवोपावहरणमर्थसिद्धम्। 'कियानेव सोमः शकटेऽवस्थापनीयः, कियानेवोपावहर्तव्यः' इति सोमद्वयाभावादर्थसिद्धस्य चैकस्य वाचनिकत्वाभावान्न चोदकेनातिदेशोऽस्ति। अतोऽहर्गणे मानहेतोर्वाससः शकटेऽवस्थितत्वादुपावहरणे वासोन्तरस्य सार्थकत्वात्तत्समये तत्संपाद्यम् ॥ २७ ॥

इति श्रीमाधवीये जैमिनीयन्यायमालाविस्तरे दशमाध्यायस्य षष्ठः पादः ॥ ६ ॥

| | अत्र पादे | आदितः। |
|---|---|---|
| अधिकरणानि | २२ | ७३६ । |
| सूत्राणि | ७९ | २०८६ । |

१ ज. झ. ञ. संपादनीयम्। २ ज. झ. ञ. संपादनीयम्। ३ ज. झ. नाऽऽद्यः। ४ ज. झ. °त्वादुपावहरणकाले त°।

( अथ दशमाध्यायस्य सप्तमः पादः )।

( प्रथमे—ज्योतिष्टोमे प्रत्यङ्गं हविर्भेदाधिकरणे सूत्रे १—२ )।

**पशोरेकहविष्ट्वं समस्तचोदितत्वात् ॥ १ ॥ प्रत्यङ्गं वा ग्रहवदङ्गानां पृथक्प्रकल्पनत्वात् ॥ २ ॥**

सप्तमपादस्य प्रथमाधिकरणमारचयति—

**पशुः कृत्स्नो हविः किंवा प्रत्यङ्गं हविरन्यता ।**
**आद्यश्चोदनया मैवमवदानपृथक्त्वतः ॥ १ ॥**

'अग्नीषोमीयं पशुमालभेत' इत्यत्र कृत्स्नस्य पशोरेकहविष्ट्वं युक्तम् । कुतः । अग्नीषोमदेवतां प्रति द्रव्यत्वेन पशोश्चोदितत्वात् । न हि हृदयाद्यङ्गं साक्षात्पशुर्भवति । इति प्राप्ते—

ब्रूमः—'हृदयस्याग्रेऽवद्यति, अथ जिह्वायाः, अथ वक्षसोऽवद्यति, दोष्णोरवद्यति, पार्श्वयोरवद्यति' इत्यादिना हृदयाद्यङ्गानामवदानानि पृथगाम्नायन्ते । अवदानं च हविष्ट्वप्रयोजकः संस्कारः । पुरोडाशादौ होतुमवदीयमानत्वदर्शनात् । हविःशब्दश्च कर्मव्युत्पत्त्या होमयोग्यं द्रव्यं ब्रूते । पश्वाकृतिचोदना तु हृदयाद्यङ्गद्वारेण देवतासंबन्धादुपपद्यते । तस्मात्—प्रत्यङ्गं हविर्भेदः ॥ १ ॥

( द्वितीये—पशोर्हृदयादिभिरेवाङ्गविशेषैर्यागानुष्ठानाधिकरणे सूत्राणि ३—९ )।

**हविर्भेदात्कर्मणोऽभ्यासः, तस्मात्तेभ्योऽवदानं स्यात् ॥ ३ ॥ आज्यभागवद्वा निर्देशात्परिसंख्या स्यात् ॥ ४ ॥ तेषां वा द्व्यवदानत्वं विवक्षन्नभिनिर्दिशेत्पशोः पञ्चावदानत्वात् ॥ ५ ॥ अंसशिरोनूकसक्थिप्रतिषेधश्च तदन्यपरिसंख्यानेऽनर्थकः स्यात्प्रदानत्वात्तेषां निरवदानप्रतिषेधः स्यात् ॥ ६ ॥ अपि वा परिसंख्या स्यादवदानीयशब्दत्वात् ॥ ७ ॥ अब्राह्मणे**

---

१ ञ. °मस्य । २ च. °नत्वे द° । ज. झ. ञ. °नत्वाद° । ३ ज. झ. ञ.

च दर्शनात् ॥ ८ ॥ शृताशृतोपदेशाच्च
तेषामुत्सर्गवदयज्ञशेषत्वम् ॥ ९ ॥

द्वितीयाधिकरणमारचयति—

एकेनाङ्गेन सर्वैर्वा यद्वैकादशभिर्यजिः।
एकेन यागसंसिद्धेर्हविषां भेदतोऽखिलैः ॥ २ ॥
एकादशभिरन्येषां परिसंख्या भवेद्यतः।
न त्रिदोषी गत्यभावादशृतोक्तेश्च सोचिता ॥ ३ ॥

प्रत्यङ्गं हविर्भेदे स्थिते सति त्रेधा यागे संशयः। तत्र—अनिर्दिष्टविशेषेण येन केनाप्यङ्गेन यागः कार्यः। तावतैव सिद्धत्वात्। इत्येकः पक्षः।

चोदितपशुद्रव्यं परिगणितेषु हृदयादिष्वन्येषु चांसशिरःप्रभृतिषु समानम्। ततो हृदयादिवदंसादीनां हविर्भेदत्वाद्यागमन्तरेण हूयमानत्वलक्षणहविष्ट्वापर्यवसानात्सर्वैरङ्गैर्यागः। इति द्वितीयः पक्षः।

हृदयादिभिरेकादशभिरेवाङ्गैर्यागः कर्तव्यः। कुतः। अन्येषामंसादीनां परिसंख्यातत्वात्। चोदकेन सर्वेषामङ्गानामवदाने प्राप्ते हृदयादिवाक्येनांसादयः परिसंख्यायन्ते। ननु—परिसंख्यायां 'विधिः स्वार्थं जह्यात्, परार्थं कल्पेत, प्राप्तं बाधेत' इति दोषत्रयं प्रसज्येत। प्रसज्यतां नाम। सति हि गत्यन्तर एषां दोषत्वम्। परिसंख्यायास्तु ते त्रयः स्वरूपम्। इति कृत्वा न दोषतां भजन्ते। किंच 'द्वयानि मांसान्यभिमृशन्ति शृतान्यशृतानि' इति केषांचिन्मांसानामपक्वत्वमुच्यते। पाकस्तु हविषो मांसस्य प्रतिनियतः। तस्मात्—अशृतत्वोक्तिरंसादिपरिसंख्यां गमयति। एतदेवाभिप्रेत्यांसादिप्रतिषेधः श्रुत्या वर्णितः—'नांसयोरवद्यति, न शिरसः' इत्यादिना। तस्मात्—एकादशभिरेव यागः॥२॥३॥

( तृतीये—ज्योतिष्टोमेऽनिज्याशेषैर्व्यङ्गैः स्विष्टकृद्धोमाधिकरणे सूत्रे १०—११ )।

इज्याशेषात्स्विष्टकृदिज्येत प्रकृतिवत् ॥ १० ॥
त्र्यङ्गैर्वा शरवद्विकारः स्यात् ॥ ११ ॥

तृतीयाधिकरणमारचयति—

१ ख. °द्धे हवि° । २ क. ख. च झ. ञ. त्रिदोषः। ३ क. च. ञ. °दश्रुतो°। ख. ज. झ. °दशृतो°। ४ ज. °त्यङ्गह°। झ. °त्यङ्गं च ह°। ५ ज. झ. ञ. कर्तव्यः। ६ ख. °दितः प°। घ. °दितं प°। ७ क. °विष्ट्वाप°। ८ ज. झ. °नां सं°। ९ क. ख. ननु। १० क. ख. ज. झ. ञ. परार्थः। ११ झ. भजते। १२ क. ज. झ. ञ. शृताशृतानि। १३ क. च. °त-शृत°। ख. °त्-अभूत°। ज. झ. ञ. °त्—अश्रुत°।

इज्याशेषैरशेषैर्वा त्र्यङ्गैः स्विष्टकृतो हुतिः ।
आद्यः प्रकृतिवन्मैवं पूर्वार्धेत्युक्तिशेषतः ॥ ४ ॥

पशौ श्रूयते—'त्र्यङ्गैः स्विष्टकृतं यजति' इति । तत्र—इज्यार्थानां हृदयाद्येकादशाङ्गानां यैः कैश्चित्त्र्यङ्गैरिज्याशेषभूतैः स्विष्टकृद्धोतव्यः । कुतः । प्रकृताविज्याशेषेण पुरोडाशेन स्विष्टकृतो हुतत्वादत्रापि चोदकेन तथात्वात् । इति प्राप्ते—

ब्रूमः—'दोष्णः पूर्वार्धाद्[१]द्वयमे समवद्यति, गुदस्य मध्यतः, श्रोण्या जघनतः' इति वाक्यशेषेण हृदयादिभ्य एकादशभ्योऽन्यानि त्रीण्यङ्गानि स्विष्टकृते समाम्नायन्ते । न च—हृदयादिष्वपि गुदादीन्याम्नातानि, इति शङ्क्यम् । तद्विशेषस्य कल्पसूत्रकारेण दर्शितत्वात् । 'हृदयं जिह्वा वक्षो यकृद्वृक्कौ सव्यं दोः, उभे पार्श्वे दक्षिणा श्रोणिः, गुदं तृतीयम्—इति दैवतावदानानि । दक्षिणोंऽसः, सव्या श्रोणिः, गुदं तृतीयम्—इति सौविष्टकृतानि, इति । तस्मात्—अनिज्याशेषैरङ्गैः स्विष्टकृद्धोमः ॥ ४ ॥

( चतुर्थे—अध्यूध्न्या इडाविकारताधिकरणे सूत्राणि १२—१६ ) ।

अध्यूध्नी तु होतुस्त्र्यङ्गवदिडाभक्षविकारः स्यात् ॥ १२ ॥ शेषे वा समवैति तस्माद्रथवान्नियमः स्यात् ॥ १३ ॥ अशास्त्रत्वात्तु नैवं स्यात् ॥ १४ ॥ अपि वा दानमात्रं स्याद्भक्षशब्दानभिसंबन्धात् ॥ १५ ॥ दातुस्त्वविद्यमानत्वादिडाभक्षविकारः स्यात्, शेषं प्रत्यविशिष्टत्वात् ॥ १६ ॥

चतुर्थाधिकरणमारचयति—

होतुर्नियम्यतेऽध्यूध्नी किंवेडां विकरोति सा ।
अनस्थाभिरिति प्राप्ता होतुः पक्षे नियम्यते ॥ ५ ॥
अनुवादोऽनस्थिवाक्यं प्रापिका परिशिष्टगीः ।
नाध्यूध्नी तत्र तेनेडा होतुर्विक्रियते तया ॥ ६ ॥

१ च. अङ्गैः । २ क. च. °श्चिदङ्गैः । ३ क. ख. ञ. °दुभेऽव° । ख. °द्वयमे व° । ४ झ. तद्विषमस्य । ५ क. °क्षोपस्थय° । ख. °क्षो यकृत्कुक्षौ स° । च. ञ. झ. °क्षोयकृद्वृक्कयो स° । ञ. °क्षोयकृत्पृक्यो स° । ६ क. ख. ञ. उभये । ७ क. ख. ञ. झ. ञ. °तानि । ८ ख. तेनेता । ९ ख. °विक्रीयते तथा । ज. झ. ञ. °विक्रियते तथा ।

पशावेव श्रूयते—'अध्यूध्नीं होत्रे हरन्ति' इति। अध्यूध्नी हृदयादिभ्योऽन्यदङ्गम्। तत्र—इयं होतुरेव नान्यस्य—इति नियम्यते। कुतः। पक्षे प्राप्तत्वात्। तथा हि—हृदयादीनिज्याशेषान्भक्षणार्थं पात्रे निक्षिप्यानिज्याशेषानपि तत्र क्षिपेत्। अनस्थिभिरिडां वर्धयन्ति' इति श्रवणात्। अस्मिंश्च भक्षणे प्रत्येकमृत्विजां विभज्यमाने सेयमध्यूध्नी होतुः कदाचित्प्राप्नोति, कदाचिदन्यस्य, ततो नियन्तव्या। इति प्राप्ते—

ब्रूमः—'वर्धयन्ति' इति वर्तमानापदेशेनानस्थिवाक्यमनुवादः। प्रापकं तु परिशिष्टवाक्यम्। तच्चैवमाम्नायते—'अथ यद्यत्परिशिष्यते' तत्तत्समवत्तधान्यामानयति हृदयं जिह्वा वक्षः'—इत्यारभ्य 'वनिष्ठुम्' इत्येतदन्तम्। न च—तस्मिन्वाक्येऽध्यूध्नी पठिता। ततोऽप्राप्तत्वाद्विधीयमानया तया होतुरिडाभागोऽन्यो बाध्यते। तत्रेयं वचनव्यक्तिः—'यद्धोत्रे हरन्ति' तदध्यूध्नीम्' इति। तस्मात्—विकारः॥ ५॥ ६॥

( पञ्चमे-वनिष्ठोर्भक्षविकारताधिकरणे सूत्रम्— )।

**अग्नीधश्च वनिष्ठुरध्यूध्नीवत्॥ १७॥**

पञ्चममधिकरणमारचयति—

**वनिष्ठुरपि तद्वत्स्यात्प्राप्तिः प्रासनतो यदि।**
**इडासंस्कार एवायं भक्षो विक्रियते ततः॥ ७॥**

पशावेव श्रूयते—'वनिष्ठुमग्नीधे' इति। अध्यूध्नीवद्वनिष्ठुरपि हृदयादिव्यतिरिक्तमङ्गम्। ततः—संशयपूर्वोत्तरपक्षास्तद्वद्योज्याः। अधिका शङ्का त्वेवम्—'इडापात्रे हृदयादिप्रासनवाक्ये वनिष्ठुरपि पठितः। ततः पक्षे प्राप्त एव नियम्यते' इति।

उपस्तरणादिवत्प्रासनमिडायाः संस्कार एव। न त्वेतावता वनिष्ठोर्भक्षत्वप्राप्तिरित्यप्राप्तविधेः पूर्ववद्विकारः। इत्युक्तशङ्कायामुत्तरम्॥ ७॥

( षष्ठे—मैत्रावरुणस्यापि शेषभक्षास्तित्वाधिकरणे सूत्रे— १८—१९)।

**अप्राकृतत्वान्मैत्रावरुणस्याभक्षत्वम्॥ १८॥ स्याद्वा होत्रध्वर्युविकारत्वात्तयोः कर्माभिसंबन्धात्॥ १९॥**

षष्ठाधिकरणमारचयति—

**मैत्रावरुणनाम्नोऽत्र भक्षो नास्त्यस्ति वा नहि।**
**अप्राकृतत्वादध्वर्युहोत्रन्तर्भावतोऽस्ति सः॥ ८॥**

---

१ ज. झ. ञ. हरति। २ ज. झ. °मानोऽन°। ३ क- °वत्तं धा°। ख. °वत्तं धान्यमा°। ज. झ. °वतधानामा°। ञ. वतमवं धा°। ४ ज. झ. प्राप्तवाप्तिय°। ञ. प्राप्तिरेव निय°। ५ ज. झ. °त्युक्तं शङ्कोत्त°। ६ क. °म्नोऽन्ते भ°। ज. झ. °म्नो नु भ°। ७ °क. °होत्रेऽन्त°।

अत्र पशौ मैत्रावरुणनाम्न इडाभक्षो नास्ति। कुतः।प्रकृतौ मैत्रावरुणस्याभावेन चोदकप्राप्त्यभावात्।

मैवम्। 'मैत्रावरुणः प्रेष्यति चान्वाह' इति प्रैषानुवचने तस्य विधीयेते। तत्र प्रैषकार्येणाध्वर्यावन्तर्भावः। अनुवचनकार्येण च होतरि। तस्मात्—अस्ति भक्षः॥ ८॥

(सप्तमे—मैत्रावरुणस्यैकभागताधिकरणे सूत्रे २०—२१)।

**द्विभागः स्याद्द्विकर्मत्वात्॥ २०॥ एकत्वाद्वैकभागः स्याद्भागस्याश्रुतिभूतत्वात्॥ २१॥**

सप्तमाधिकरणमारचयति—

**द्विभाग एकभागो वा द्विभागः स्या[द्]द्विकर्मतः।**
**एकः पुंमैक्यतो नो चेद्वैषम्यं प्रकृतावपि॥ ९॥**

स मैत्रावरुणः कर्मोपाधिना द्विभागः। इति चेत्।

न। पुरुषैक्योपाधिना भागस्याप्येकत्वं स्यात्। अन्यथा प्रकृतावपि कर्मतारतम्यानुसारेण भागतारतम्यं प्रसज्येत॥ ९॥

(अष्टमे—प्रतिप्रस्थातुर्भक्षाभावाधिकरणे सूत्रे २२—२३)।

**प्रतिप्रस्थातुश्च वपाश्रपणात्॥ २२॥ अभक्षो वा कर्मभेदात्तस्याः सर्वप्रदानत्वात्॥ २३॥**

अष्टमाधिकरणमारचयति—

**प्रतिप्रस्थातुरत्रास्ति भक्षो नो वा वपामसौ।**
**पचत्यतोऽस्ति नो पक्वा वपा सर्वा हुता यतः॥ १०॥**

अत्र पशौ प्रतिप्रस्थातुरिडाभक्षोऽस्ति। कुतः। अध्वर्युकर्मणो वपापाकस्य तेन कृतत्वात्।

मैवम्। भक्षयितुं वपाशेषस्याभावात्॥१०॥

(नवमे—गृहमेधीयकेऽपूर्वाज्यभागविधानाधिकरणे सूत्राणि २४—३३)।

**विकृतौ प्राकृतस्य विधेर्ग्रहणात्पुनः श्रुतिरनर्थिका**

---

१ ज. झ. काम्यैक्यतो। २ क. ख. ञ. °ण ता°।

स्यात् ॥ २४ ॥ अपि वाऽऽग्नेयवद्विशब्दत्वं स्यात् ॥ २५ ॥ न वा शब्दपृथक्त्वात् ॥ २६ ॥ अधिकं वाऽर्थवत्त्वात्स्यादर्थवादगुणाभावे वचनादविकारे तेषु हि तादर्थ्यं स्यादपूर्वत्वात् ॥ २७ ॥ प्रतिषेधः स्यादिति चेत् ॥ २८ ॥ नाश्रुतत्वात् ॥ २९ ॥ अग्रहणादिति चेत् ॥ ३० ॥ न तुल्यत्वात् ॥ ३१ ॥ तथा तद्ग्रहणे स्यात् ॥ ३२ ॥ अपूर्वतां तु दर्शयेद्ग्रहणस्यार्थवत्त्वात् ॥ ३३ ॥

नवमाधिकरणमारचयति—

गृहमेधीयके त्वाज्यभागावित्यनुवादगीः ।
स चोदकविधिर्वाऽर्थवादो वाऽधिककर्म वा ॥ ११ ॥
परिसंख्येत संकोचश्चोदकान्यत्र वाऽत्र वा ।
अपूर्वो गृहमेधीयः स्याद्वाऽतो लुप्तचोदकम् ॥ १२ ॥
अनुवादः पुनः श्रुत्या द्वितीयः सार्थतावशात् ।
निर्वापवच्चोदकस्य लिङ्गत्वेन सहायकृत् ॥ १३ ॥
ओदनेनैव तत्सिद्धेरैष्टिकस्य प्रशंसनम् ।
विध्येकवाक्यता नास्ति तेनात्राङ्गान्तरे विधिः ॥ १४ ॥
प्रत्यभिज्ञानतोऽङ्गस्य परिसंख्येतरस्य हि ।
चोदकस्य च संकोच इतराङ्गनिषेधतः ॥ १५ ॥
व्यापारैक्याच्चोदकस्य स्वार्थसंहरणं भवेत् ।
वैरूप्याच्च निरर्थत्वादपूर्वं कर्म युज्यते ॥ १६ ॥
आज्यभागेतिनाम्नोपकारकक्लृप्तिस्मृतेरिह ।
नामतादि समं तस्माल्लुप्यते तेन चोदकः ॥ १७ ॥

'मरुद्भयो गृहमेधिभ्यः सर्वासां दुग्धे सायमोदनम्' इति विहिते गृहमेधीये

---

१ ख. च. ज. झ. ञ. अपूर्वं । २ ख. च. ज. झ. ञ. गृहमेधीयं । ३ ज. झ. सहायावत् । ४ क. °तः ॥ १५ ॥ स संकोचोऽपि नो युक्तः प्रत्यक्षाङ्गपरो विधिः । व्या° । ५ च. ञ. संग्रहणं । ६ च. °दनम् । इ° ।

श्रूयते—' आज्यभागौ यजति ' इति । तत्राष्टधा संशयः—चोदकप्राप्तयोरेवाऽऽज्यभागयोरिह पुनः श्रवणादनुवादोऽयम् । इत्याद्यः पक्षः ।

तथा सति वैयर्थ्यप्रसङ्गात् । ततः सार्थकत्वाय चोदकैतद्वाक्ययोर्मिलितयोरत्राऽऽज्यभागविधायकत्वमभ्युपेतव्यम् । ओषधिद्रव्यनिर्वापादयो यथा प्रकृतिगताः सन्तो विकृतावपि श्रूयमाणाश्चोदकस्य लिङ्गम्, तथाऽऽज्यभागावपि लिङ्गत्वेन सहायीकृतौ ततो मिलितयोर्विधायकत्वम् । इति द्वितीयः पक्षः ।

गृहमेधीयविधिवाक्ये श्रुतस्यौदनस्यैवौषधिद्रव्यतया लिङ्गत्वसिद्धेर्नास्ति लिङ्गान्तरापेक्षा । तस्मात्—प्रकृताविष्टौ श्रुतत्वादाज्यभागकर्मण इह पुनः श्रवणमर्थवादत्वेन तत्प्रशंसार्थम् । इति तृतीयः पक्षः ।

भिन्नप्रकरणे श्रुतस्य विध्येकवाक्यत्वायोगादर्थवादत्वमयुक्तम् । ततः—चोदकप्राप्तादाज्यभागादिकर्मणोऽधिकमाज्यभागरूपमङ्गान्तरं विधीयते । इति चतुर्थः पक्षः ।

ऐष्टिकयोराज्यभागयोरिह प्रत्यभिज्ञानान्नाङ्गान्तरं युक्तम् । तस्मात्—आज्यभागव्यतिरिक्तस्य प्रयाजाद्यङ्गस्य परिसंख्यानार्थमिदमाज्यभागवचनम् । इति पञ्चमः पक्षः ।

आज्यभागवाक्येन तद्विधिरूपः स्वार्थस्त्यज्येत, प्रयाजादिरूपनिषेधोऽन्यार्थः परिगृह्येत, चोदकप्राप्तं च प्रयाजाद्यनुष्ठानं बाध्येत, इति दोषत्रयप्रसङ्गान्न परिसंख्या युक्ता । तेन प्रत्यक्षरूपादस्मादाज्यभागवाक्यादानुमानिकं चोदकवाक्यमाज्यभागव्यतिरिक्तप्रयाजाद्यङ्गेषु संकोचनीयम् । इति षष्ठः पक्षः ।

यदि चोदकस्य प्रत्यङ्गं पृथग्व्यापाराः स्युः, तदा प्रयाजाद्यङ्गगोचरैर्व्यापारैस्तेषामतिदेशः सिध्यति । आज्यभागगोचरस्यानेन प्रत्यक्षविधिना बाधितत्वान्न चोदकेनाऽऽज्यभागातिदेशः, इत्येवं संकोचो वर्णयितुं शक्यते । इह तु ' शब्दबुद्धिकर्मणां विरम्य व्यापाराभावात् ' इति न्यायेनैक एव चोदकस्य व्यापारः । तथा सति—' युगपदतिदेशोऽनतिदेशश्च विरुद्धधर्मः प्रसज्येत । तस्मात्—प्रयाजाद्यङ्गेषु संकोचो न युक्तः । तेन चोदकोऽत्राऽऽज्यभागकर्मणि संकोचनीयः । न च—उक्तदोषापत्तिः । अस्य संकोचस्योपसंहाररूपत्वात् । आज्यभागयोरेव शक्तश्चोदकः । तज्ज्ञानं शक्तिज्ञानमुपसंहारः । तथा सत्याज्यभागातिदेशे व्यापृतस्य चोदकस्य को नामातिदेशनिवृत्तिरूपविरुद्धधर्मप्रसङ्गः । तत्राऽऽज्यभागकर्मणि चोदकावस्थापनम् । इति सप्तमः पक्षः ।

१ ख. ज. झ. °त् । सा° । २ ज. झ. °यभूतौ । ३ ज. झ. °मेधवि° । ४ क. °न्तरमिह वि° । ५ क. °धो व्यर्थः । ज. झ. °धोऽन्योऽर्थः । ६ च. °कप्राप्तस्य । ७ क. ख. ग. °नाति । ८ ज. झ. °धर्मत्वं प्र° । ९ क. च. °कस्य चोदकस्य ज्ञानं श° । ज. झ. °कस्य चोदकः—तज्ज्ञानं श° ।

'पुरोडाशं चतुर्धा करोति' 'आग्नेयं चतुर्धा करोति' इत्यनयोरुभयोरपि प्रत्यक्षवचनत्वेन सरूपत्वादुपसंहारः। इह तु प्रत्यक्षपरोक्षयोर्वचनचोदकयोर्विरूपत्वान्नासौ युक्तः। किंच प्रत्यक्षवचनेनैवाऽऽज्यभागविधिसिद्धेश्चोदककल्पना निरर्थिका। तस्मात्-उपसंहारो न युक्तः। तस्मात्—अपूर्वो गृहमेधीयो न चोदकेनान्याङ्गानि गृह्णाति। इतिकर्तव्यताकाङ्क्षा तु प्रत्यक्षवचनेनैव पूर्यते। एवं सत्युक्तदोषत्रयाभावादुत्तमः पक्षोऽभ्युपेयः। ननु सांग्रहिण्यामिष्टौ प्रत्यक्षवचनविहितैरामनहोमैः सह चोदकातिदिष्टानामनुयाजानां समुच्चयोऽङ्गीकृतः, तद्वदत्रापि विधीयमानयोराज्यभागयोश्चोदकप्राप्तप्रयाजाद्यङ्गैः सर्वैः सह समुच्चयोऽस्तु। न। वैषम्यात्। प्रकृतावाज्यभागयोरुपकारः क्लृप्तः, सोऽत्र नामसाम्येन स्मार्यते। तत्र क्लृप्तोपकारैरनुयाजाद्यङ्गैश्चोदकेन सहसाऽतिदिष्टैः संपूर्यते। ततो विधिवैयर्थ्यपरिहाराया ऽऽमनहोमेषूपकारे क्लृप्ते सति पश्चात्प्रवर्तमानः प्रयोगवचनः समुच्चित्यानुष्ठापयति। ततो वैषम्यात्क्लृप्तोपकाराज्यभागविधायकेनानेन प्रत्यक्षवचनेन गृहमेधीये चोदको लुप्यते। तस्मात्—अविकृतिरूपं साङ्गमपूर्वं कर्मात्र विधीयते। इति राद्धान्तः॥ ११॥ १२॥ १३॥ १४॥ १५॥ १६। १७॥

(दशमे—गृहमेधीये स्विष्टकृदाद्यनुष्ठानाधिकरणे सूत्रम्—)।

ततोऽपि यावदुक्तं स्यात्॥ ३४॥

दशमाधिकरणमारचयति—

तत्रान्यदङ्गं नो कार्यं कार्यं वाऽन्यानपेक्षणात्।
न कार्यं विहितत्वेन कार्यं स्विष्टकृदादिकम्॥ १८॥

तत्र गृहमेधीय आज्यभागाभ्यामेव निराकाङ्क्षत्वादन्यत्स्विष्टकृदादिकं न कार्यम्। इति चेत्।

न। आज्यभागवद्विहितत्वात्। 'अग्नये स्विष्टकृते समवद्यति' इति, 'इडामुपह्वयते' इति विहितम। तस्मात् यावदुक्तं कार्यम्॥ १८॥

(एकादशे—गृहमेधीये प्राशित्रादिभक्षणाभावाधिकरणे सूत्राणि ३५–३७)।

स्विष्टकृद्भक्षप्रतिषेधः स्यात्तुल्यकारणत्वात्॥ ३५॥
अप्रतिषेधो वा दर्शनादिडायां स्यात्॥ ३६॥

---

१ ख. °श्चैराज्य°। २ ज. ञ. °वाद्यमष्ट°। ३ ज. ञ. °प्तातः प्र°। ४ क. °सा निर्दिष्टैः। ५ ख. °मानप्र°। ज. ञ. °मानः स°। ६ ज. ञ. सिद्धान्तः। ७ क. ख. च. ञ °त्वादिडास्विष्ट°।

**प्रतिषेधो वा विधिपूर्वस्य दर्शनात् ॥ ३७ ॥**

एकादशाधिकरणमारचयति—

**तत्रैव परिसंख्यात्वे प्राशित्राद्यस्ति वा न वा ।**
**अस्तीडादर्शनान्मैवं तदुक्त्याऽत्रास्ति नेतरत् ॥ १९ ॥**

गृहमेधीये स्विष्टकृदाज्यभागेष्वष्टधा संशयं हृदि निधाय परिसंख्यार्थं पञ्चमं पक्षमभ्युपेत्येयं कृत्वाचिन्ता । तत्र प्राशित्रादिभक्षणं न परिसंख्यातं तदस्ति । कुतः । भक्षणार्थस्येडोपह्वानस्य तत्र दर्शनात् । इति प्राप्ते—

ब्रूमः—अत्र गृहमेधीये तदिडाभक्षणं वचनबलेनास्तु । स्विष्टकृद्वाक्यप्रापितस्य परिसंख्यातस्य वचनेन निवारितत्वादितरत्प्राशित्रादिभक्षणं परिसंख्यातत्वान्नास्ति ॥ १९ ॥

**द्वादशे—प्रायणीयातिथ्ययोः शंय्विडान्ततानियमाधिकरणे**
**सूत्रे ३८—३९ )।**

**शंय्विडान्तत्वे विकल्पः स्यात्परेषु पत्न्यनुयाजप्रतिषेधोऽनर्थकः स्यात् ॥ ३८ ॥ नित्यानुवादो वा कर्मणः स्यादशब्दत्वात् ॥ ३९ ॥**

द्वादशाधिकरणमारचयति—

**प्रायणीयातिथ्ययोः किं विकल्पः शंय्विडान्तयोः ।**
**नियमो वा विकल्पः स्यान्निषेधपरिसंख्यया ॥ २० ॥**
**शंय्विडान्तत्ववाक्याच्च नियमो विधिमात्रतः ।**
**नित्यानुवादो नञ्वाक्यं दोषबाहुल्यमन्यथा ॥ २१ ॥**

ज्योतिष्टोमे श्रूयते—'शंय्वन्ता प्रायणीया संतिष्ठते, न पत्नीः संयाजयन्ति । इडान्ता आतिथ्याः संतिष्ठन्ते, नानुयाजान्यजति' इति । प्रकृतौ यदा 'तच्छंयोः'—इति मन्त्रं जपति, तदानीमध्वर्युः परिधीनग्नौ प्रक्षिपति । तदाह कल्पसूत्रकारः—'अनूच्यमाने शंयुवाक आहवनीये परिधीन्प्रहरति' इति । ततो हविःशेषेषु भक्षितेषु पत्नीः संयाजयन्ति, इति क्रमः । तथा—प्रधानयागनारिष्ठहोमप्राशित्रादिभक्षणेडाभक्षणानुयाजसूक्तवाकशंयुवाकाः, इत्यधस्तनः प्रयोगक्रमः ।

१ ख. च. °क्त्याऽऽत्रास्तु ने° । ज. °क्त्या त्वत्र ने° । २ क. °पेत्य द्वयं । ञ. °पेत्यैवं कृ° । ३ ज. झ. °न्ताऽवतारिता । त° । ४ ज. झ. °तं किं त° । ख. °तं तद्द° । ५ ज. झ. ञ. °ख्यानस्य । ६ ज. °न्ततः । नि° । ७ ख. ज. झ. नियमे । ज. नित्यमेवावि° । ८ क. ख. ज. °न्ताऽऽतिथ्या संतिष्ठते, ना° । ९ क. °नपाह्वाना° ।

पत्नीसंयाजानामुपरि फलीकरणहोमप्रायश्चित्तहोमकपालोद्वासनैरिष्टिः समाप्यते। एवं स्थिते विकृतिरूपायाः प्रायणीयेष्टेः शंयुवाकान्तत्वम्, आतिथ्येष्टेरिडाभक्षणान्तत्वं च विकल्पितं स्यात्। कुतः। निषेधविधिवाक्याभ्यां प्रकरणद्वयप्रतीतेः। तथा हि—शंय्वन्तत्वेडान्तत्वविधिनैवोपरितनपत्नीसंयाजानुयाजानिषेधे पुनर्निषेधवचनं परिसंख्यार्थम्। पत्नीसंयाजानुयाजव्यतिरिक्ते नास्ति निषेधः। इति परिसंख्या। तेन प्रकृतिवद्यथाप्राप्तं कपालोद्वासनान्तत्वमनयोरिष्ट्योः प्रतीयते। विधिवाक्येन च शंय्विडान्तत्वम्। तेन व्रीहियववद्विकल्पः। इति प्राप्ते—

ब्रूमः—विधिमात्रस्यात्र प्रवृत्तेः शंय्वन्तत्वमिडान्तत्वं च तयोः प्रतिनियतम्। पत्नीसंयाजाद्यभावस्त्वर्थसिद्धः। ततो नञ्पदयुक्तमुपरितनं प्रतिषेधवाक्यं नित्यानुवादः सन्नर्थवादः। पत्नीसंयाजाद्यकरणाल्लाघवं भवतीति। अन्यथा बहवो दोषाः प्रसज्येरन्। विकल्पे * तावदष्टौ दोषाः प्रसिद्धाः। परिसंख्यायां च त्रयो दोषाः। विधिपरिसंख्याभ्यां वाक्यभेदोऽपरो दोषः। ततः—शंय्विडान्तत्वं नियतम् ॥ २० ॥ २१ ॥

(त्रयोदशे—प्रायणीयातिथ्ययोः पूर्वाभ्यामेव शंय्विडाभ्यां संस्थाधिकरणे सूत्राणि ४०–४२)।

प्रतिषेधार्थवत्त्वाच्चोत्तरस्य परस्तात्प्रतिषेधः स्यात् ॥ ४० ॥ प्राप्तिर्वा पूर्वस्य वचनादतिक्रमः स्यात् ॥ ४१ ॥ प्रतिषेधस्य त्वरायुक्तत्वात्तस्य च नान्यदेशत्वम् ॥ ४२ ॥

त्रयोदशाधिकरणमारचयति—

तत्रैव शंय्विडे पूर्वे परे वा स्वेच्छयाऽथवा।
परे एवाथवा पूर्वे एवाऽऽद्यो द्विविधश्रुतेः ॥ २२ ॥
निषेधस्यार्थवत्त्वाय परे एवानुवादगीः।
पूर्वोक्तवाक्यतां याति पूर्वे एवाविरोधतः ॥ २३ ॥

*प्रथमं व्रीह्यनुष्ठाने—यवशास्त्रस्याप्रामाण्यस्वीकारात्मा प्रतीतप्रामाण्यपरित्यागः। प्रयोगान्तरे यवोपादाने यवशास्त्रस्य स्वीकृताप्रामाण्यपरित्यागात्मकं परित्यक्तप्रामाण्योपादानम्। व्रीहिशास्त्रे स्वीकृतप्रामाण्यपरित्यागरूपाऽप्रतीताप्रामाण्यस्वीकारः। पुनस्तृतीयप्रयोगे व्रीह्युपादाने व्रीहिशास्त्रस्य स्वीकृताप्रामाण्यपरित्यागात्मा त्यक्तप्रामाण्यस्वीकारः। इति चत्वारो दोषाः। यथाकथंचिद्द्वारोपेणाष्टौ वा दोषाः। इति लघुमञ्जूषा।

१ क. °याजे निषिद्धे पु°। २ क. परे वाऽप्यथवा पूर्वे पश्चाद्या हि°।

प्रायणीयातिथ्ययोरेवान्तत्वेन निर्णीते शंय्विडे पुनः संदिह्येते । प्रकृतौ द्विविधे शंय्विडे—पत्नीसंयाजेभ्यः पुरस्तादुपरिष्टाच्च विहिते । ते चात्र चोदकप्राप्ते[1] । द्विविधश्रुतेः । अर्थे चोदकादतिदिष्टे[2] सति विशेषनियामकाभावादिच्छया स्वीकार्ये । इत्येकः पक्षः ।

यदि प्रायणीया पूर्वशंय्वन्ता, आतिथ्या च पूर्वेडान्ता[3], तदानीमन्तत्वविधिनैव ताभ्यां शंय्विडाभ्यामूर्ध्वमप्राप्तानां पत्नीसंयाजानामनुयाजानां च वारितत्वान्निषेधो व्यर्थः स्यात् । परयोरन्तत्वे[4] ताभ्यां शंय्विडाभ्यां[5] प्राप्तानां तेषामनिवारणात्तन्निवारणाय सार्थको निषेधः । तस्मात्—परे एव शंय्विडे प्राप्ते । इति द्वितीयः पक्षः ।

निषेधोऽयं नित्यानुवादः—इत्युक्तम् । स च पूर्वयोः शंय्विडयोरन्तत्वेऽप्येकवाक्यतामापाद्यार्थवादत्वेनोपपद्यते । संजातविरोधिन्यौ हि पूर्वे शंय्विडे । तस्मात्—ते एव प्राप्ते । इति राद्धान्तः ॥ २२ ॥ २३ ॥

( चतुर्दशे—उपसदामपूर्वार्थत्वाधिकरणे सूत्राणि ४३—४६)।

**उपसत्सु यावदुक्तमकर्म स्यात् ॥ ४३ ॥ स्रौवेण वा गुणत्वाच्छेषप्रतिषेधः स्यात् ॥ ४४ ॥ अप्रतिषिद्धं वा प्रतिषिध्य प्रतिप्रसवात् ॥४५॥ अनिज्या वा शेषस्य मुख्यदेवतानभीज्यत्वात् ॥ ४६ ॥**

चतुर्दशाधिकरणमारचयति—

**उपसत्सु निषिद्धेभ्यः[6] शिष्टं सर्वं किमाचरेत् ।**
**यावदुक्तमुताऽऽद्योऽस्तु चोदकस्यानिवारणात् ॥ २४ ॥**
**स्रौवाघारे पुनः श्रुत्या शिष्टस्य परिसंख्यया ।**
**अपूर्वार्थत्वतो वाऽन्त्योऽनुवादोऽत्र निषेधगीः ॥ २५ ॥**

ज्योतिष्टोमे ( ‘ षडुपसद उपसाद्यन्ते ’ इति ) विहितासूपसत्सु पठ्यते—‘ अप्रयाजास्ता अननुयाजाः ’ इति । तत्र निषेधात्प्रयाजानुयाजान्[7]वर्जयित्वाऽवशिष्टं चोदकप्राप्तमङ्गजातं सर्वमाचरणीयम् । इति प्राप्ते—[8]

ब्रूमः—प्रकृतौ विहित एवाऽऽघारः पुनरिह विधीयते । स च चोदकप्राप्तमन्यत्सर्वमङ्गजातं परिसंचष्टे । अन्यथा पुनर्विधानवैयर्थ्यात् । ननु—पुनर्विधानं[9]

१ ज. झ. °प्ते। तत्र द्वि° । २ ख. घ. झ. ञ. °दनातिदि° । ३ ज. झ. °न्ता स्यात्, त° । ४ ज. °रयोः शंय्विडयोर° । ५ ज. झ. °योस्तत्वे° । ६ ञ. निषेधेभ्यः । ७ ज. झ. ञ. °जान° । ८ ख. इति पूर्वः पक्षः । ९ ख. पुनर्विधी° ।

प्रतिप्रसवार्थम्। अत एव श्रुतिस्तत्र स्रौवाघारप्रभावशङ्कानिराकरणपूर्वकं विदधाति—'नान्यामाहुतिं पुरस्ताज्जुहुयात्, यदन्यामाहुतिं पुरस्ताज्जुहुयादन्यन्मुखं कुर्यात्, स्रुवेणाऽऽघारमाघारयति' इति। अयमर्थः—'स्रौवाघारः सर्वत्र यज्ञमुखम्। तथा सति यदि कश्चिन्मन्द उपसत्प्रयोगादौ स्रौवाघारमहुत्वा तस्य स्थाने कांचिदन्यामाहुतिं जुहुयात्, तदा मुखव्यत्यासेन प्रत्यवायं प्राप्नुयात्। स्रौव एवाऽऽघार आदौ कर्तव्यः' इति। नैतद्युक्तम्। चोदकप्राप्तस्याऽऽघारस्य कारणमन्तरेणाकस्मादभावशङ्कया अयुक्तत्वात्। तस्मात्—परिसंख्यार्थ एव पुनर्विधिः। आहुत्यन्तरनिन्दा तु तच्छेषभूतोऽर्थवादः। यदि 'परिसंख्या त्रिदोषा' इत्युच्येत, तर्हि गृहमेधीयवदपूर्वं कर्मास्तु। प्रयाजादिनिषेधो नित्यानुवादः। सर्वथा यावदुक्तमत्रानुष्ठेयम् ॥२४॥ २५॥

(पञ्चदशे—अवभृथेऽपूर्वकर्मताधिकरणे सूत्राणि ४७–५०)।

अवभृथे बर्हिषः प्रतिषेधाच्छेषकर्म स्यात् ॥४७॥
आज्यभागयोर्वा गुणत्वाच्छेषप्रतिषेधः स्यात्॥४८॥
प्रयाजानां त्वेकदेशप्रतिषेधाद्वाक्यशेषत्वम्, तस्मान्नित्यानुवादः स्यात् ॥ ४९ ॥ आज्यभागयोर्ग्रहणं नित्यानुवादो गृहमेधीयवत्स्यात् ॥ ५० ॥

पञ्चदशाधिकरणमारचयति—

किं स्यादवभृथे बर्हिर्वर्ज्यं सर्वमुताऽऽचरेत्।
यावदुक्तं प्रयाजानुयाजबर्हिर्निषेधतः ॥ २६ ॥
आद्योऽप्सुमन्तावित्याज्यभागोक्त्या परिसंख्यया।
अन्येनात्र गुणाप्राप्तेरपूर्वत्वेन वाऽन्तिमः ॥ २७ ॥

ज्योतिष्टोमगतेऽवभृथे चतुर्थप्रयाजप्रथमानुयाजरूपौ बर्हिर्यागौ वर्जयित्वा शिष्टं चोदकप्राप्तं सर्वमनुष्ठेयम्। कुतः। अपबर्हिषः प्रयाजान्यजति, अपबर्हिषावनुयाजौ यजति' इति बर्हिर्यागद्वयमात्रवर्जनावगमात्। इति प्राप्ते—

ब्रूमः—'अप्सुमन्तावाज्यभागौ यजति' इति परिसंख्यानाद्युक्तमेवानुष्ठेयम्। अथोच्येत-चोदकप्राप्तावाज्यभागावनूद्याप्सुशब्दोपेतमन्त्रद्वयरूपस्य गुणस्यात्र वि-

---

१ क. ख. च. ञ. मुख्यव्य°। २ क. ख. च. ञ. स्रौवा°। ३ ज. झ. ञ. °रकस्य। ४ ज. °वभृते ब°। ५ क. अन्येन त्रैगुणप्रा°। ख. अनेनात्र गुणप्रा°। च. अन्यतोऽत्र गु°। ज. झ. अन्यो नार्थं गुणः प्रा°। ञ. अन्यो नार्थगुणप्रा°। ६ ख. ज. झ. °नापग°। ७ ज. झ. °नानुक्त°।

धानान्न परिसंख्या-इति । मैवम् । लिङ्गक्रमाभ्यामेव मन्त्रयोः प्राप्तत्वात् । अतः-परिसंख्यया गृहमेधीयवदुपसद्वदपूर्वकर्मत्वेन वा यावदुक्तमेवानुष्ठेयम् ॥२६॥२७॥

( षोडशे-{वाजपेयादौ यूपादीनां खादिरत्वादिनियमाधिकरणे} सूत्राणि ५१-५७ )।

**विरोधिनामेकश्रुतौ नियमः स्याद्ग्रहणस्यार्थवत्त्वाच्छरवच्च श्रुतितो विशिष्टत्वात् ॥ ५१ ॥ उभयप्रदेशान्नेति चेत् ॥ ५२ ॥ शरेष्वपीति चेत् ॥ ५३ ॥ विरोध्यग्रहणात्तथा शरेष्विति चेत् ॥ ५४ ॥ तथेतरस्मिन् ॥ ५५ ॥ श्रुत्यानर्थक्यमिति चेत् ॥ ५६ ॥ ग्रहणस्यार्थवत्त्वादुभयोरप्रतिपत्तिः स्यात् ॥ ५७ ॥**

षोडशाधिकरणमारचयति-

**बृहद्यवः खादिरश्च विकल्प्या नियता उत ।**
**विकल्प्याश्चोदकप्राप्तेर्नियताः स्युः पुनर्विधेः ॥ २८ ॥**

क्वचिद्विकृतौ श्रूयते-'बृहत्पृष्ठं भवति' इति । मैधातवीये श्रूयते-'यवमयो मध्यमः' इति । वाजपेये श्रूयते-'खादिरो यूपो भवति' इति । तत्र-बृहद्रथंतरयोः, व्रीहियवयोः, खादिरबैल्वादीनां च प्रकृतौ विकल्पितत्वादत्रापि चोदकेन विकल्पिताः । इति चेत् ।

न । पुनर्विधानवैयर्थ्यात् । परिसंख्या तु दुष्टत्वान्न शङ्क्या । तस्मात्-नियताः । कोटयन्तरं त्वर्थान्निवर्तते ॥ २८ ॥

( सप्तदशे-काम्येष्टिषु प्राकृतद्रव्यदैवतस्य निवृत्त्यधिकरणे सूत्राणि ५८-६० )।

**सर्वासां च गुणानामर्थवत्त्वाद्ग्रहणमप्रवृत्ते स्यात् ॥ ५८ ॥ अधिकं स्यादिति चेत् ॥ ५९ ॥ नार्थाभावात् ॥ ६० ॥**

सप्तदशाधिकरणमारचयति-

---

१ ज. झ. तत्प्रकृतौ । ञ. प्रत्यक्षतो । २ ज. झ. ञ. शङ्कनीया ।

काम्येष्टिषु द्रव्यदेवं प्राकृतं न निवर्तते।
निवर्तते वा न प्राप्तेर्विकल्पो वा समुच्चयः॥ २९॥
उत्पत्तिशिष्टेनैवात्र निराकाङ्क्षत्वतः कृतः।
चोदकः शिष्ट एवास्य विषयोऽर्थान्निवर्तते॥ ३०॥

'ऐन्द्राग्नमेकादशकपालं निर्वपेत्प्रजाकामः' इत्यादिषु प्राकृतयोरग्निदेवताष्टाकपालद्रव्ययोर्नास्ति निवृत्तिः। कुतः। चोदकेन प्राप्तत्वात्। श्रुतयोरतिदिष्टयोश्च द्रव्यदेवतयोर्विकल्पः समुच्चयो वा स्वेच्छया कार्यः। इति प्राप्ते—

ब्रूमः—उत्पन्नस्य यागस्येतिकर्तव्यताकाङ्क्षायां पश्चाच्चोदकस्यावसरः। इह तूत्पत्तिशिष्टाभ्यां द्रव्यदेवताभ्यां यागस्य तद्विषयाकाङ्क्षानिवृत्तेर्न तत्र चोदकस्यावकाशोऽस्ति। ननु सकृद्व्यापृतश्चोदकः क्वचित्प्रवर्तते, क्वचिन्निवर्तते, इत्येतन्न संभवति-इति चेत्। मा भूत्तत्संभवः। न वयं तन्निवृत्तिं ब्रूमः, किंतु श्रुताभ्यां द्रव्यदेवताभ्यामन्य एवाङ्गकलापश्चोदकस्य विषयः। ततः प्राकृतयोर्द्रव्यदेवतयोरप्राप्तत्वादेव फलतो निवृत्तिं ब्रूमः। तस्मात्—दूरापेतौ विकल्पसमुच्चयौ॥ २९॥ ३०॥

(अष्टादशे-सौमापौष्णपशौ खादिरयूपस्य नियमाधिकरणे सूत्राणि ६१-६३)।

तथैकार्थविकारे प्राकृतस्याप्रवृत्तिः, प्रवृत्तौ हि विकल्पः स्यात्॥ ६१॥ यावच्छ्रुतीति चेत्॥ ६२॥ न प्रकृतावशब्दत्वात्॥ ६३॥

अष्टादशाधिकरणमारचयति—

औदुम्बरः खादिरेण समुच्चेयोऽथ बाधकः।
द्वयोर्नियोजनादाद्यो निरपेक्षत्वतोऽन्तिमः॥ ३१॥

पशुकामेनानुष्ठेये सौमापौष्णे पशौ श्रूयते—'औदुम्बरो यूपो भवति' इति। तत्र—चोदकप्राप्तेन खादिरेण सह श्रूयमाणस्यौदुम्बरस्य समुच्चयः कार्यः। कुतः। द्वयोर्यूपयोः पशुनियोजनसंभवेन चोदकपरित्यागायोगात्। इति प्राप्ते—

ब्रूमः—खादिरौदुम्बरौ परस्परनिरपेक्षतया पशुनियोजनक्षमौ प्रमाणद्वयबलेन प्राप्तौ। तयोः समुच्चयाङ्गीकारे नैरपेक्ष्यं परित्यज्येत। तस्मात्—उपदिष्ट औदुम्बरोऽतिदिष्टस्य बाधकः॥ ३१॥

---

१ क. वा तत्प्राप्ते°। २ ञ. °षयेऽर्था°। ३ ज. झ. °रः। उत्प°। ४ क. ज. °दृच्यावृत्तश्चो°। ५ क. °त्—तदूहनायैतौ। ६ ज. झ. °मुच्चयो°। ७ ज. झ. °गात्। ८ क. ख. ग. ज. ञ. °णव°।

(एकोनविंशे–ब्रह्मवर्चसकामैर्व्रीहिभिरेव यागाधिकरणे सूत्राणि ६४-७१)।

विकृतौ त्वनियमः स्यात्पृषदाज्यवद्ग्रहणस्य गुणार्थत्वात्, उभयोश्च प्रदिष्टत्वाद्गुणशास्त्रं यदेति स्यात् ॥ ६४ ॥ ऐकार्थ्याद्वा नियम्येत श्रुतितो विशिष्टत्वात् ॥ ६५ ॥ विरोधित्वाच्च लोकवत् ॥ ६६ ॥ क्रतोश्च तद्गुणत्वात् ॥ ६७ ॥ विरोधिनां च तच्छ्रुतावशब्दत्वाद्विकल्पः स्यात् ॥ ६८ ॥ पृषदाज्ये समुच्चयाद्ग्रहणस्य गुणार्थत्वम् ॥ ६९ ॥ यद्यपि चतुरवत्तीति तु नियमे नोपपद्यते ॥ ७० ॥ क्रत्वन्तरे वा तन्न्यायत्वात्कर्मभेदात् ॥ ७१ ॥

एकोनविंशाधिकरणमारचयति–

किं शुक्ला व्रीहयः पक्षे चोदकप्रापितान्यवान् ।
न बाधन्तेऽथ बाधन्ते गुणार्थोक्तिरतोऽग्रिमः ॥ ३२ ॥
वाक्यभेदो यागशुक्लगुणयोर्विधितो भवेत् ।
विशिष्टस्य विधौ कार्यमेकं वा बाधकास्ततः ॥ ३३ ॥

'सौमारौद्रं चरुं निर्वपेच्छुक्लानां व्रीहीणां ब्रह्मवर्चसकामः' इत्यत्र चोदकप्राप्तो व्रीहियवविकल्पो न बाध्यः[1] । कुतः । प्रत्यक्षस्य व्रीहिवाक्यस्यातिदिष्टपाक्षिकव्रीह्यनुवादेन शुक्लगुणविधानार्थत्वे सति बाधमन्तरेणोपपन्नत्वात् । इति प्राप्ते–

ब्रूमः–यागस्तावदप्राप्तत्वाद्विधेयः । तत्र गुणोऽपि यदि पृथग्विधीयेत तदा वाक्यं भिद्येत । ततः शुक्लव्रीहिद्रव्यविशिष्टो यागोऽत्र विधीयते । तथा सत्यतिदिष्टव्रीहियवयोर्यत्कार्यं तदेवोपदिश्यमानशुक्लव्रीहीणां कार्यम् । ततस्ते व्रीहयः पाक्षिकान्यवान्बाधन्ते ॥ ३२ ॥ ३३ ॥

(विंशे–पञ्चावदानतायाः सर्वाङ्गसाधारणताधिकरणे सूत्रे ७२–७३) ।

यथाश्रुतीति चेत् ॥ ७२ ॥ न चोदनैकत्वात् ॥ ७३ ॥

विंशाधिकरणमारचयति–

---

१ क. °वत्वाद्विक° । २ ख. च. ज. झ. ञ. बाध्यते । ३ ज. झ. °श्यते मा° । ४ ज. झ. °स्ते शुक्लव्री° ।

वपायामेव किंवाऽन्येष्वपि पञ्चावदानता।
वपोद्देशादाद्यपक्षोऽवदानोद्देशतोऽन्तिमः ॥ ३४ ॥

पशौ श्रूयते—' यद्यपि चतुरवत्ती यजमानः, पञ्चावत्तैव वपा कार्या ' इति। यजमानविशेषस्य चतुरवत्तित्वं गोत्रभेदेन स्मृतिकारैः पठ्यते—

*' जामदग्न्या वत्सविदा वार्ष्टिषेणोश्च ते त्रयः।
पञ्चावत्तिन एवान्ये सर्वे चतुरवत्तिनः ' इति ॥

सर्वेषां यजमानानां गोत्रविशेषमपोद्य श्रूयमाणमिदं पञ्चावत्तित्वं वपामुद्दिश्य विधानाद्वपायामेव। इति प्राप्ते—

ब्रूमः—अवदानस्य चोदकप्राप्तत्वेन विधेयत्वाभावादवदानमुद्दिश्य विधीयमाना संख्याऽवदानयुक्तेष्वन्येष्वपि पश्ववयवेषु भवति। इति राद्धान्तः ॥ ३४ ॥

इति श्रीमाधवीये जैमिनीयन्यायमालाविस्तरे दशमाध्यायस्य सप्तमः पादः ॥ ७ ॥

| | अत्र पादे | आदितः। |
|---|---|---|
| अधिकरणानि | २० | ७५६। |
| सूत्राणि | ७३ | २१५९। |

( अथ दशमाध्यायस्याष्टमः पादः )।

( प्रथमे—प्रदेशानारभ्यविधानयोर्निषेधस्य पर्युदासताधिकरणे सूत्राणि १—४ )।

प्रतिषेधः प्रदेशेऽनारभ्यविधाने च, प्राप्तप्रतिषिद्धत्वाद्विकल्पः स्यात् ॥ १ ॥ अर्थप्राप्तवदिति चेत् ॥ २ ॥ न तुल्यहेतुत्वादुभयं शब्दलक्षणम् ॥ ३ ॥ अपि तु वाक्यशेषः स्यादन्याय्यत्वाद्विकल्पस्य विधीनामेकदेशः स्यात् ॥ ४ ॥

अष्टमपादस्य प्रथमाधिकरणमारचयति—

---

* गोभिलगृह्यसूत्रभाष्ये तु—
" जामदग्न्या वत्सविदा वार्ष्टिषेणस्तथैव च।
भार्गवाश्च्यवना और्वाः पञ्चावत्तिन ईरिताः " इति समुपलभ्यते।

---

१ ख. °णास्तथैव च। प°। २ क. °द्दिश्याभिधा°। ज. झ. °द्दिश्य सुवि°। ३ क °वदानेषु।

नाऽऽर्षेयं न च होतारं नानुयाजेष्वितीदृशे ।
विकल्पः पर्युदासो वा स्यादाद्यो वचनद्वयात् ॥ १ ॥
अन्याय्यत्वाद्विकल्पस्य विध्यंशः सा निषेधगीः ।
तेनानुयाजवाक्यस्थस्तदर्थं पर्युदस्यति ॥ २ ॥

महापितृयज्ञे चोदकप्राप्तं वरणं प्रति श्रूयते—'नाऽऽर्षेयं वृणीते, न होतारम्' इति । तथाऽनारभ्यवादः श्रूयते³—'आ श्रावयेति चतुरक्षरम्, अस्तु श्रौषडिति चतुरक्षरम्, यजेति द्व्यक्षरम्, ये यजामह इति पञ्चाक्षरम्, द्व्यक्षरो वषट्कारः, एष वै सप्तदशः प्रजापतिर्यज्ञमन्वायत्तः' इति । तत्रोक्तम्—'नानुयाजेषु ये यजामहं करोति' इति । तत्र वरणस्य विधिप्रतिषेधौ चोदकप्रत्यक्षवचनाभ्यां प्रतीयेते । 'ये यजामहे' इति मन्त्रस्य तु द्वाभ्यां प्रत्यक्षवचनाभ्यां विधिप्रतिषेधप्रतीतिः । तत्र विधायकप्रतिषेधकयोर्द्वयोः प्रमाणयोरवैयर्थ्यार्थं विकल्पः । इति प्राप्ते—

ब्रूमः—अष्टदोषग्रस्तत्वाद्विकल्पो न न्याय्यः । ननु परस्परविरुद्धयोर्विधिप्रतिषेधयोः समुच्चयस्याप्यभावात्का गतिरत्र—इति चेत् । उच्यते—निषेधत्वेन प्रतीयमानमिदं 'न' इत्यनेन शब्देनोपेतं वाक्यं विधिवाक्यस्यांशो भविष्यति । तथा हि—यदि 'न' इत्ययं शब्दः करोतिना संबध्यते, तदा 'ये यजामहं न करोति' इत्येवं प्रतिषेधः स्यात् । यदि च 'वृणीते' इत्याख्यातप्रत्ययेन संबध्यते, तदा 'वरणं न कर्तव्यम्' इति निषिध्येत । न त्वेवं संबध्यते, किंत्वनुयाजपदेन वृञ्धातुना च संबध्यते । तथा सति—'अनुयाजव्यतिरिक्तेषु यागेषु ये यजामहः कर्तव्यः' 'वरणव्यतिरिक्तमङ्गजातमनुष्ठेयम्' इति ये यजामहवरणपर्युदासेन विधेरेव विशेषितत्वे सति प्रतिषेधवाक्यस्य कस्यचिदभावाच्च विकल्पः शङ्कितुमपि शक्यः ॥ १ ॥ २ ॥

( द्वितीये—निषेधस्यार्थवादताधिकरणे सूत्रम्— ) ।

अपूर्वे चार्थवादः स्यात् ॥ ५ ॥

द्वितीयाधिकरणमारचयति—

न सोमेऽध्वर इत्युक्तौ निषेधः पर्युदस्यते ।
उतार्थवादो वाऽऽद्यः स्यादसमस्तपदोक्तितः ॥ ३ ॥
सोमे प्रसक्तिरङ्गत्वाद्विकल्पाय मध्यमः ।
नैवास्त्यत्र समासस्य नियमः पाणिनेर्मते ॥ ४ ॥

---

...त्वा° । २ अ. °तार वृणीते' इ° । ३ क. झ. ञ. °ते—"ओ श्रा° । ... ञ. झ. ञ. निषिध्यते । ६ क. °ङ्के वा न वि° ।

पुरैतस्मात्सोमयाग आज्यभागाप्रसक्तितः।
न पर्युदासः किंत्वर्थवादो दृष्टान्तवर्णनात् ॥ ५ ॥

दर्शपूर्णमासयोराज्यभागौ प्रकृत्य तौ 'न तौ पशौ करोति' इति निषिध्य पश्चात् 'न सोमेऽध्वरे' इत्येवमाम्नायते। तत्र—अयं प्रतिषेधः स्यात्। कुतः। नशब्दस्य सोमशब्देन सह समस्तत्वाभावात्। 'अब्राह्मणमाकारयति, अधर्मं करोति' इत्यादिषु पर्युदासप्रदेशेषु समस्तत्वदर्शनात्। व्यस्तोऽयं नकारः क्रियापदेनान्वित आज्यभागानुष्ठानं प्रतिषेधति। ननु—पशोरिष्टिविकृतित्वेन चोदक आज्यभागौ प्रसञ्जयति। सोमस्य त्वविकृतित्वान्नास्ति तत्प्रसक्तिः—इति चेत्। बाढम्। तथाऽपि सोमाङ्गभूतासु दीक्षणीयादिष्विष्टिषु या प्रसक्तिः, सैवाङ्गिनि सोमे प्रसक्तिर्भविष्यति। तस्मात्—प्रतिषेधः। इत्याद्यः पक्षः।

चोदकप्रतिषेधाभ्यां 'दीक्षणीयादावाज्यभागौ वा कुर्यात्' इत्येवं विकल्पः स्यात्। स चाष्टदोषग्रस्तः। अतः पूर्वाधिकरण इव पर्युदासोऽस्तु। तत्र *कात्यायनमतेन समासनियमेऽपि पाणिनेर्मतेऽनियमः। तस्मात्—सोमव्यतिरिक्ते कर्मण्याज्यभागौ कर्तव्यौ। इति मध्यमः पक्षः।

यथा वरणेषु तद्व्यतिरिक्ताङ्गेषु च चोदकेन प्रसक्तिसाधारण्ये सति वरणपर्युदासेनाङ्गान्तरविषये चोदको व्यवस्थाप्यते, तथाऽत्रापि पर्युदासवादिना पर्युदासात्पुरा पर्युदसनीये सोमे, इतरत्र च साधारण्येनाऽऽज्यभागप्रसक्तिर्वाच्या। सा किम्—उपदेशात्स्यात्, अतिदेशाद्वा। न प्रथमः। प्रकरणेन दर्शपूर्णमासयोरवरुद्धस्याऽऽज्यभागोपदेशस्य सोमे प्रसञ्जकत्वाभावात्। न द्वितीयः। अन्योन्याश्रयत्वप्रसङ्गात्। उपदेशवाक्यार्थे पर्युदासादिना निर्णीते सति पश्चाच्चोदकेन प्रसक्तिः। सत्यां च प्रसक्तौ पश्चात्पर्युदासनिर्णयः। तस्मात् न पर्युदासः। का

* 'नित्यो ह्यस्य नशब्दस्य सुबन्तसंबन्धेन समास इति वार्तिककारो भगवान्कात्यायनो मन्यते स्म—'वचनानर्थक्यं च स्वभावसिद्धत्वात्' इति। नेति भगवान्पाणिनिः। स हि 'विभाषा' (पा० सू० २।१।११) इति प्रकृत्येदृशं समासमुक्तवान्। सद्वादित्वाच्च पाणिनेर्वचनं प्रमाणम्। असद्वादित्वान्न कात्यायनस्य। असद्वादी हि विद्यमानमप्यनुपलभ्य ब्रूयात्' इति शाबरभाष्यमपि 'स्वभावसिद्धत्वात्' इति हेतुग्रन्थव्याख्यानभूतमहाभाष्यविरुद्धम्। हेतुना द्वयोरपि मतैक्यप्रतीतेः। एकार्थीभावव्यपेक्षावादयोः समासव्याससिद्धेर्विभाषाधिकारो व्यर्थ इत्येव वार्तिकतात्पर्यम्। वार्तिकमते व्यासाभाव इति तु केवलं मीमांसकानामेव व्यपेक्षामात्राश्रयिणामेकार्थीभावानभ्युपगन्तॄणां प्रतिभा।

१ च. ज. ञ. °भागप्र°। २ च. °न्तदर्शना°। ३ क. °ष्टिषु वि°। ४ ख. च ञ. °यादीष्टि°। ५ ज. झ. कार्यौ। ६ ज. झ. तथैवात्रा°। च. ञ. तत्रा°। ७ ञ. °त्पुनः पर्युदासीवरणपर्युदास°। ८ ज. झ. उद्देशा°। ९ ज. झ. °पपदस्य। १० क. ख. ञ. °क्यार्थोन्नीतस्य निषेधस्य शेषः। ११ च. पशोश्चोदकस्य प्र°

तर्हि 'न सोमेऽध्वरे' इति वाक्यस्य गतिः । उच्यते—'न पशौ करोति' इत्यस्य निषेधस्य शेषः सदृष्टान्तो वर्ण्यते—'यथा न तौ सोमेऽध्वरे करोति, तथा तौ न पशौ कुर्यात्' इति । ततः— अर्थवादः । इति राद्धान्तः ॥ ३ ॥ ४ ॥ ५ ॥

(तृतीये—अतिरात्रे षोडशिग्रहानिषेधस्य विकल्परूपताधिकरणे सूत्रम्—)।

शिष्ट्वा तु प्रतिषेधः स्यात् ॥ ६ ॥

तृतीयाधिकरणमारचयति--

> नातिरात्रे पर्युदासो वादो वाऽथ निषेधनम् ।
> आद्योऽनुयाजवन्मैवं विध्येकविषयत्वतः ॥ ६ ॥
> अत एवार्थवादोऽपि न युक्तः पशुसोमवत् ।
> निषेधः स्याद्विकल्पोऽत्र व्रीह्यादाविव युज्यते ॥ ७ ॥

ज्योतिष्टोमस्य संस्थाविशेषे श्रूयते—'अतिरात्रे षोडशिनं गृह्णाति, नातिरात्रे षोडशिनं गृह्णाति' इति । तत्र—यथा—अनुयाजेषु'ये यजामहे' इति विधिनिषेधयोः समावेश पर्युदासः, एवमत्रापि । इति चेत् ।

मैवम् । एकविषयत्वेन व्याहतिप्रसङ्गात् । 'अतिरात्रव्यतिरिक्तेऽतिरात्रे' इत्युक्ते कथं न व्याहन्येत । दृष्टान्ते—विधिः सर्वविषयः, निषेधोऽनुयाजमात्रविषयः, इत्यनुयाजपर्युदासेऽपि न विधेर्निर्विषयत्वम् । तर्हि 'न पशौ करोति' इत्यत्र 'न सोमे'—इतिवदर्थवादोऽस्तु । इति चेत् ।

न । स्तुत्यस्तावकयोर्विधिनिषेधयोरेकविषयत्वेन व्याहतितादवस्थ्यात् । 'अपशवोऽन्ये गोअश्वेभ्यः' इत्यत्र पश्वन्तरनिषेधेन गोअश्वविधेः स्तुतिर्दृष्टा । इह तु षोडशिनिषेधेन षोडशिन एव स्तुतौ स्पष्टो व्याघातः । तस्मात्—प्रतिषेधः—इति तृतीयः पक्षोऽस्तु । न च—अत्रापि व्याघातः शङ्कनीयः । अनुष्ठानविकल्पाङ्गीकारेण भिन्नप्रयोगविषयत्वात् । सत्स्वप्यष्टसु दोषेषु गत्यन्तराभावाद्व्रीहियववद्विकल्पोऽभ्युपेयः । तस्मात्—प्रतिषेधः । इति राद्धान्तः ॥ ६ ॥ ७ ॥

---

१ क. च. सदृष्टान्तो । २ क. °ल्पोऽयं व्री° । ३ क. च. तत्र यद्यनुयाजमात्रनिषेध इवानुयाज इवात्रापर्युदासेऽपि विधेर्निर्विषयत्वम् । ख. तत्र यद्यप्यनुयाजस्य पर्युदासेऽपि विधेर्निर्विषयत्वम्। ज. तत्र यद्यप्यानुयाजमात्रविषय इत्यनुयाजपर्युदासेऽपि न विधेर्निर्विषयत्वम्। ञ. तत्र यद्यनुयाज इवात्र निषेध इवानुयाजपर्युदासेऽपि विधेर्निर्विषयत्वम् । ४ च. °दोऽस्त्विति यथाऽनुयाजेषु ये यजामहाविधिनिषेधयोः समादेशपर्युदास एवमत्रापीति चेन्न । एकविषयत्वेन व्याहतिप्रसङ्गात् । अतोऽतिरात्रव्यातिरिक्तेऽतिरात्र इत्युक्ते कथं न व्याहन्येत । दृष्टान्ते तु विधिः सर्वविषयः। निषेधोऽनुयाजमात्रविषय इति। मैवम्। स्तुत्य° । ५ ज. झ. ञ. शङ्कनीयः । ६ ज. झ. ञ. °भ्युपेतव्यः।

(चतुर्थे-जर्तिलोक्तौ निषेधस्यार्थवादताधिकरणे सूत्रम्-)।

न चेदन्यं प्रकल्पयेत्प्रक्लृप्तावर्थवादः स्यादानर्थक्यात्परसामर्थ्याच्च ॥ ७ ॥

चतुर्थाधिकरणमारचयति-

जर्तिलोक्तौ चतुर्धा किं विकल्पोऽथ पयःस्तुतिः ।
विकल्पः पूर्ववन्मैवं वाक्यैकयात्पयसा सह ॥ ८ ॥

अग्निहोत्रे श्रूयते-'जर्तिलयवाग्वा जुहुयात्, गवीधुकयवाग्वा जुहुयात्, न ग्राम्यान्पशून्हिनस्ति, नाऽऽरण्यान् । अथो खल्वाहुः-अनाहुतिर्वै जर्तिला गवीधुकाश्च । पयसाऽग्निहोत्रं जुहुयात्' इति। जर्तिला आरण्यास्तिलाः । गवीधुका आरण्या गोधूमाः । तयोरुभयोर्विकल्पः श्रौत एव ।

'अनाहुतिः' इति पूर्वयोः पक्षयोर्दूषितत्वात्-होमाभावस्तृतीयः पक्षः । न च-अत्र 'जर्तिलगवीधुकयोरनाहुतिः' इत्येतेन पर्युदासः संभवति । आहुतिपदान्वितस्य नञ्पदस्य जर्तिलगवीधुकपदान्वयायोगात् ।

पयोविधिश्चतुर्थः पक्षः । एतेषां परस्परविरुद्धानां चतुर्णां गत्यन्तराभावात्षोडशिग्रहणाग्रहणवद्विकल्पः । इति प्राप्ते-

ब्रूमः-पयोविधिना सह जर्तिलादेरेकवाक्यत्वेनाऽर्थवादत्वं युक्तम् । ग्राम्यारण्यपशुहिंसाराहित्येन प्रशस्तयोरपि जर्तिलगवीधुकयोरग्निहोत्रं प्रत्याहुतित्वं नास्ति । पयसस्तु तदस्ति । 'इत्थं महाभागं पयः' इति स्तूयते । तस्मात्-अर्थवादः ॥ ८ ॥

(पञ्चमे-त्र्यम्बकादावभिघारणानभिघारणादीनामर्थवादताधिकरणे सूत्रम्-)।

पूर्वैश्च तुल्यकालत्वात् ॥ ८ ॥

पञ्चमाधिकरणमारचयति-

अभिघारनिषेधौ च होमाहोमौ विकल्पितौ ।
विधास्यमानशेषौ वा विकल्पः श्रुतिसाम्यतः ॥ ९ ॥
निषेधस्य विधेश्चात्र मीमांस्यत्वेन वर्णनात् ।
समीमांसावुभावर्थवादोऽस्त्वर्थे विधित्सिते ॥ १० ॥

चातुर्मास्येषु त्र्यम्बकमन्त्रसंयोगेन त्र्यम्बकनामका एककपालाः पुरोडाशा बहवो विहिताः । तान्प्रकृत्य श्रूयते-'अभिघार्या अनभिघार्या इति मीमांसन्ते ब्रह्म-

१ च. 'हणव'। २ क. ख. ञ. ग्रामार'। ३ ज. झ. श्रूयते। ४ क. विधीयमा'।

वादिनः ’ इत्यादि । आधाने श्रूयते--‘होतव्यमग्निहोत्रं, न वा, इति मीमांसन्ते ब्रह्मवादिनः ’ इत्यादि । अस्मिन्नुदाहरणद्वये नञ्श्रुतिर्विचारार्था । अनयोरुदाहरणयोर्विधिनिषेधौ वाचकशब्दाभ्यां श्रूयमाणत्वात्समानबलौ । ततः षोडशिग्रहणाग्रहणवद्विकल्पः । न च—जर्तिलवद्विधास्यमानस्तुत्यर्थत्वं शङ्क्यम् । दृष्टान्तस्य विषमत्वात् । दृष्टान्ते तावज्जर्तिलादेरन्यदेव विधास्यमानं पयः । तस्य स्तुतिर्युक्ता । इह तूपक्रमे विहितावेवाभिघारणहोमौ मीमांस्यन्तौ ( संमीमांस्यान्ते ) पुनर्विधीयेते । ‘ अभिघार्या एव’ ‘ तूष्णीमिव होतव्यम् ’ इति *वाक्यशेषयोः पठ्यमानत्वात् । न च—तेनैव तस्य स्तुतिः संभवति । पुनर्विधानं त्वनुवादत्वेन गुणार्थत्वेन चोपपद्यते । निषेधस्य स्तावकत्वं दूरापेतम् । नहि तस्यैव निषेधेन तदेव स्तोतुं शक्यते । तस्मात्—विधिनिषेधौ विकल्पार्थौ । इति प्राप्ते—

ब्रूमः—इतिशब्देन मीमांसाप्रकारवाचिना विधिनिषेधयोर्मीमांस्यत्वं प्रतीयते । ततो विधिनिषेधविशिष्टा मीमांसा विधित्सितार्थस्तुत्यै । ‘इत्थं महाभागो विधित्सितोऽर्थो यन्मीमांसया निर्णेतव्यः ’ इति स्तूयते । तस्मात्—एकवाक्यत्वादर्थवादः ॥ ९ ॥ १० ॥

(षष्ठे-आधान उपवादस्य विकल्पताधिकरणे सूत्राणि ९—११)।

उपवादश्च तद्वत् ॥ ९ ॥ प्रतिषेधादकर्मेति चेत् ॥ १० ॥ न शब्दपूर्वत्वात् ॥ ११ ॥

षष्ठाधिकरणमारचयति—

उन्नेयो ब्रह्मगानस्य निषेधो विहितस्तुतिः ।
विकल्पितो वा शून्योऽपि वपोत्खेद इव स्तुतिः ॥ ११ ॥
विध्यनन्वयतोऽस्तोत्रं ब्रह्मोद्गाता तथा सति ।
विषयैक्याद्विकल्पोऽत्र षोडशिग्रहवन्मतः ॥ १२ ॥

आधाने वामदेव्यादिसाम्नां गानानि विहितानि । आधान एवेदमपरमाम्नायते—‘ उपवीता वा एतस्याग्नयो भवन्ति, यस्याग्न्याधेये ब्रह्मा सामानि गायति’ इति । उपशब्दः सामीप्यं ब्रूते । वीता विगताः कालविलम्बमन्तरेण परित्यक्ता इत्यर्थः।

* ‘ अथो खल्वाहुः—अभिघार्या एव। न हि हविरनभिघृतमस्ति, ‘ तूष्णीमिव होतव्यम् । यथापूर्वमाहुतीर्जुहोति । नाग्निः परापतति ’ इति शाबरभाष्ये वाक्यशेषौ ।

१ क. ख. ज. झ. ञ. नश्रुति° । २ च. °चार्या । अ° । ३ क. °द्विभाष्यमा° । ४ ज. झ. विषयत्वात् । ५ ख. मीमांस्यतो । च. मीमांसन्तौ। ज. झ. मीमांसते । ६ ख. प्रतिषेधेन । ७ ख. ञ. °स्तुतिः । ‘ इ° । झ. °स्तुत्यर्था । ‘ इ° । ८ क घ. °धो न हि तत्स्तुतिः। ९ ज. झ. °तोऽपि शू° । १० ज. यानानि । ११ क. ख. च. ञ. परैस्त्यक्ता ।

अनया निन्दया ब्रह्मणः सामगाननिषेध उन्नीयते। स निषेध उद्गातुर्विहितं वामदेव्यादिसामगानं स्तौति। ननु—ब्रह्मणः सामगानमप्रसक्तम्। ततस्तन्निषेधोऽत्यन्तमसंभावितत्वाच्छशविषाणवच्छून्यः। न हि वन्ध्यापुत्रो वा तद्वधो वा संभावयितुं शक्यते। तथा सति तादृशेन निषेधेन कथं स्तुतिः—इति चेत्। 'वपोत्खेदवत्' इति ब्रूमः। 'स आत्मनो वपामुदखिदत्' इत्यनेनात्यन्तासंभावितार्थेन यथा प्राजापत्यस्य तूपरस्याजस्य विधिः स्तूयते, तद्वत्। इति प्राप्ते—

ब्रूमः—नेदं वामदेव्यादिसामविधीनां स्तोत्रं भवितुमर्हति। विधीनामनेकत्वेन स्वस्वसंनिधिपठितैरर्थवादैर्निराकाङ्क्षत्वेन च तदन्वयायोगात्।—का तर्ह्यस्य वाक्यस्य गतिः—इति चेत्। उच्यते। ब्रह्मशब्दोऽत्र विप्रत्वजातिद्वारेणोद्गातारं ब्रूते। यस्य च गानं प्रसक्तं, तस्मिन्निषेधे सति विधिनिषेधाभ्यामेकविषयाभ्यामुद्गातुर्गानं विकल्प्यते॥ ११॥ १२॥

(सप्तमे—दीक्षितदाननिषेधस्य पर्युदासताधिकरणे सूत्राणि १२—१५)।

दीक्षितस्य दानहोमपाकप्रतिषेधोऽविशेषात्सर्वदानहोमपाकप्रतिषेधः स्यात्॥ १२॥ अक्रतुयुक्तानां वा धर्मः स्यात्क्रतोः प्रत्यक्षशिष्टत्वात्॥ १३॥ तस्य वाऽप्यानुमानिकमविशेषात्॥ १४॥ अपि तु वाक्यशेषत्वादितरपर्युदासः स्यात्, प्रतिषेधे विकल्पः स्यात्॥ १५॥

सप्तमाधिकरणमारचयति—

दीक्षितो न ददातीति प्राप्तं सर्वं निषिध्यते।
अतिदिष्टपुमर्थं वा पुमर्थं वोक्तितोऽग्रिमः॥ १३॥
उपदेशार्थवत्त्वाय मध्यमोऽन्त्यस्तु संनिधेः।
एकवाक्यत्वलोभश्चेत्पुमर्थं पर्युदस्यताम्॥ १४॥

ज्योतिष्टोमे श्रूयते—'दीक्षितो न ददाति, न जुहोति, न पचति' इति। तत्र यद्दानादिकं पुरुषार्थं, यच्च क्रत्वर्थम्, तत्राप्युपदिष्टमतिदिष्टं च, तत्सर्वं प्रतिषिध्यते। कुतः। 'न ददाति' इत्यादिवचनस्य सामान्यरूपत्वात्। इत्याद्यः पक्षः।

१ क. तद्वाधो। २ ज. झ. °ति प्राप्ते ब्रू°। ३ ज. झ. श्रूयते। ४ क. °मर्थं वा। ५ क. °त्वबोधश्चे°।

उपदिष्टस्यापि प्रतिषेधे सत्युपदेशो व्यर्थः स्यादिति ततोऽतिदिष्टं, पुरुषार्थं च, इत्युभयमेव प्रतिषिध्यते। क्रत्वर्थत्वेनोपदिष्टं दानादिकमनुष्ठेयम्। इति मध्यमः पक्षः।

नित्याग्निहोत्रदानादिकं पुरुषार्थत्वेन यत्प्रत्यक्षश्रुतावुपदिष्टं ज्योतिष्टोमकालेऽपि प्राप्तम्, यच्चातिदिष्टं दानादिकं, तयोरुभयोर्मध्ये प्रत्यक्षोपदिष्टनिषेधस्योपदिष्टमेव संनिहितमिति पुमर्थस्यैवात्र निषेधः। न च—नित्याग्निहोत्रदानादौ विधिनिषेधयोः प्रवृत्त्या विकल्पः शङ्क्यः। भिन्नविषयत्वात्। क्रत्वर्थो निषेधः क्रतुकाले तद-नुष्ठानं निवारयति। पुरुषार्थस्तु विधिः कालान्तरे तदनुष्ठापयति। तस्मात्—पुमर्थस्य निषेधः। यदि प्रतिषेधपक्षे वाक्यभेदः शङ्क्येत, तर्हि पुमर्थदानादिव्यति-रिक्तं क्रतुकालेऽनुष्ठेयमिति पर्युदासोऽस्तु ॥ १३ ॥ १४ ॥

( अष्टमे—वर्त्महोमादिभिराहवनीयस्य बाधाधिकरणे सूत्रम्— )।

अविशेषेण यच्छास्त्रमन्याय्यत्वाद्विकल्पस्य तत्संदि-
ग्धमाराद्विशेषशिष्टं स्यात् ॥ १६ ॥

अधिकरणमारचयति—

विकल्पितो बाध्यते वाऽऽहवनीयः पदादिभिः।
सामान्यस्य विशेषेण प्रत्यक्षोक्तित्वसाम्यतः ॥ १५ ॥
लिङ्गचोदकवद्बाधो नास्ति तेन विकल्पितः।
विशेषार्थे[3] लक्षणा स्यादतो मुख्येन[4] बाध्यते ॥ १६ ॥

अनारभ्य श्रूयते—'यदाहवनीये जुहोति तेन सोऽस्याभीष्टः प्रीतः' इति। ज्योतिष्टोमे श्रूयते—'पदे जुहोति, वर्त्मनि जुहोति' इति। राजसूये श्रूयते—'वल्मीकवपायामुत्सृज्य जुहोति' इति। तथाऽन्यत्र श्रूयते—'गार्हपत्ये पत्नीसंया-जाञ्जुहोति' इति। तत्र—अनारभ्यवादे होमसामान्यमनूद्याऽऽहवनीयो विहितः। प्रकरणनियमितैः पदादिवाक्यैस्तदनूद्य[6] विशिष्टहोमा[7] विहिताः। गार्हपत्यवाक्येन होमविशेषमनूद्य गार्हपत्यो विहितः। तत्र—पदादिहोमेषु सामान्यशास्त्रेण प्राप्त आहवनीयो विशेषशास्त्रप्राप्तैः पदादिभिः सह विकल्प्यते। कुतः। उभयोः प्रत्यक्षवचनयोः[8] क्रत्वर्थत्वेन समानबलत्वात्। ननु—'ऐन्द्र्या गार्हपत्यमुपतिष्ठते' इत्यत्र

१ ख. ज. झ. °ष्टं सज्ज्योति°। २ ख. पुरुषार्थस्य। ३ क. विशेषार्थो। ४ ज. झ. मुख्यो न बा°। ५ ज. झ. ञ. °पामु°। ६ ज. झ. °नुबध्वा वि°। ञ. °नुबाध्या वि°। ७ ख. ज. झ. ञ. °शिष्टा हो°। ८ ज. झ. °चनोक्तत्वेन समब°।

यथा श्रुत्या लिङ्गं बाध्यते । यथा वा चोदकातिदिष्टानां कुशानामुपदिष्टैः शरैर्बाधः। तथा सामान्यस्य विशेषेण बाधोऽस्तु इति-चेत् । न । वैषम्यात् । लिङ्गं विलम्बितत्वाद्दुर्बलम्। चोदकश्चानुमेयतया दुर्बलः । न त्वेवं सामान्यशास्त्रं विलम्ब्यते, नाप्यनुमीयते । अतो दौर्बल्याभावाद्विकल्पः । इति प्राप्ते—

ब्रूमः—होमसामान्यस्यानुवादकं यच्छास्त्रं तत्सामान्ये मुख्यत्वाद्धोमविशेषानुवादे लाक्षणिकतया दुर्बलम् । विशेषशास्त्रं तु व्यावृत्त्या विधायकत्वात्प्रबलम् । न च—पदादिशास्त्रमपि होमसामान्यमेवानूद्य पदादिविधायकत्वेन समानबलं स्यात्—इति शङ्कयम् । प्रकरणनियमितत्वेन विशिष्टविधायकस्य सामान्यानुवादकत्वायोगात् । तस्मात्—प्रबलेन विशेषेण सामान्यं बाध्यते ॥१५॥१६॥

(नवमे—वैमृधादिषु साप्तदश्यविधेर्वाक्यशेषाधिकरणे सूत्राणि १७—१९)।

अप्रकरणे तु यच्छास्त्रं विशेषे श्रूयमाणमविकृतमाज्यभागवत्प्राकृतप्रतिषेधार्थम् ॥ १७ ॥ विकारे तु तदर्थं स्यात् ॥ १८ ॥ वाक्यशेषो वा क्रतुना ग्रहणात्स्यादनारभ्यविधानस्य ॥ १९ ॥

नवमाधिकरणमारचयति—

सामिधेनीसाप्तदश्यं वैमृधादावपूर्वगिः ।
संहतिर्वोपकारस्य कॢप्त्याऽऽद्योऽस्त्वाज्यभागवत् ॥१७॥
सामिधेन्यश्चोदकाप्ताः साप्तदश्यं तु वैमृधे ।
पुनर्वाक्येन संहार्यमनारभ्योक्तिचोदितम् ॥ १८ ॥

अनारभ्याऽऽम्नायते—'सप्तदश सामिधेनीरनुब्रूयात्' इति। तथा वैमृधेऽध्वरेकल्पायां पशौ चातुर्मास्येषु मित्रविन्दायामाग्रयणेष्ट्यादौ च पुनः साप्तदश्यं विहितम् । यद्यपि—अनारभ्याधीतानां प्रकृतिगामित्वं न्याय्यम् , तथाऽपि श्रुतेन पाञ्चदश्येनावरुद्धत्वाद्विकृतिष्वेवेतच्चिविशते । तथा सति वैमृधादिषु विकृतिष्वनारभ्यवादप्राप्ताः सप्तदश सामिधेन्यः प्राकरणिकेन विधिना पुनर्विधीयमाना गृह-

१ ज. झ. यदा । २ क. ख. °था चो° । ३ क. °धोऽस्ति-इ° । ४ ञ. नन्वेवं । ५ ज. झ. °यकं च स° । ६ ज. झ. ञ. शङ्कनीयम् । ७ क. संहति° । च. संगति° । ज. झ. संस्कृति° । ८ ज. झ. °धेन्याश्चो° । ९ ज. झ. °रभ्य किंचिदाम्ना° । १० ज. °रका-ल्पायां । ११ च. पुनः पुनः । १२ च. °ष्वेव निवि° । १३ क. °वादाः प्रा° ।

मेधीयाज्यभागवत्क्रमोपकारत्वेनेतिकर्तव्यताकाङ्क्षां पूरयन्त्यश्चोदकं लोपयन्त्यो वैमृधादेरपूर्वतां गमयन्ति। साप्तदश्यं त्वनारभ्यवादप्राप्तमनूद्यते। इति प्राप्ते—

ब्रूमः—वैमृधादिषु सामिधेन्य आज्यभागवन्न विधीयन्ते, किंतु चोदकप्राप्तास्ता अनूद्य साप्तदश्यं विधीयते। तच्च साप्तदश्यं वैमृधादिप्रकरणेष्वाम्नातैर्विधिभिः कासुचिदेव विकृतिषु प्राप्तम्। अनारभ्यवादेन तु सर्वासु विकृतिषु। तत्रानारभ्यवादो विलम्बते। प्रथमं विधेयस्य साप्तदश्यस्य सामिधेनीसंबन्धमवबोध्य, अन्यथानुपपत्त्या क्रतुप्रवेशं परिकल्प्य, प्रकृतौ पाञ्चदश्यपराहतत्वेन विकृतिषु सर्वासु निवेशः क्रियते—इति विलम्बः। प्राकरणिकैर्विधिभिः सामिधेनीसंबन्ध एव बोध्यः। क्रतौ तद्विशेषे च प्रवेशो न कल्प्यः। प्रत्यक्षप्रकरणपाठेनैव तत्सिद्धेः। ततः साप्तदश्यस्य वैमृधादिविकृतिविशेषसंबन्धे सहसा प्रतिपन्ने सति तद्विशेषासंबन्धो न कल्पयितुं शक्यः। अनारभ्यवादस्तु वैमृधादिषु प्राप्तस्य नित्यानुवादोऽस्तु। यद्वा प्राकरणिकविधिर्वैमृधादिषु साप्तदश्यप्रापकः। अनारभ्यवादस्तु प्राप्तस्य पाञ्चदश्यस्य बाधकः। सर्वथाऽपि चतुर्धाकरणवदुपसंहारवचनत्वान्नाऽऽज्यभागवदपूर्वं कर्म ॥ १७ ॥ १८ ॥

( दशमे— { अविहितस्वाहाकारेषु प्रदानेषु स्वाहाकारविधानाधिकरणे } सूत्राणि २०—२२ )।

**मन्त्रेष्ववाक्यशेषत्वं गुणोपदेशात्स्यात् ॥ २० ॥ अनाम्नाते च दर्शनात् ॥ २१ ॥ प्रतिषेधाच्च ॥ २२ ॥**

दशमाधिकरणमारचयति—

स्वाहेत्युक्तिर्दर्विहोमे संहारः स्यान्न वाऽग्रिमः।
पूर्वन्यायान्न तन्मन्त्रे स्वाहाकाराविधित्वतः ॥ १९ ॥
विधित्वेऽपि नियम्यः स्यान्न व्यत्यासवषट्कृती।
होमान्तरे वषट्कारस्वाहाकारविकल्पनम् ॥ २० ॥

अनारभ्य श्रूयते—'वषट्कारेण स्वाहाकारेण वा देवेभ्योऽन्नं प्रदीयते' इति। दर्विहोमविशेषे श्रूयते—'पृथिव्यै स्वाहा, अन्तरिक्षाय स्वाहा' इत्यादि।

---

१ अ. °म्नाय तैर्वि°। झ. °म्नायते। तै°। २ ज. झ. विलम्ब्यते। ३ ज. झ. बाधनीयः। ञ. बोधनीयः। ४ ज. झ. तत्र। ५ ज. झ. °त्यानित्यानु°। ६ क. साहश्य°। ७ ख. °श्यस्य प्रा°। ८ अ. °त्वादाज्य°। ९ ख. °क्तिर्हविर्होमे। १० क. °याश्रुत°। ११ क. ख. च. °कारवि°। ज. °काराविधित्सितः। १२ क. ख. ज. झ. °यम्ये स्या°। ञ. °म्येऽग्रिम°। १३ क. ख. झ. °कृते। हो°। १४ ज. झ. °ण वा वै स्वा°।

तत्र—पूर्वाधिकरणे यथाऽनारभ्यविहितस्य साप्तदश्यस्य प्राकरणिकविधिनोपसंहारः, तथोपसंहारे सति होमान्तरेषु नास्ति स्वाहाकारः। इति प्राप्ते—

ब्रूमः—'पृथिव्यै स्वाहा' इति मन्त्रपाठोऽयम्। न त्वत्र स्वाहाकारोऽनारभ्याधीतब्राह्मणवाक्येनैव विधीयते। न खलु 'यमादित्या अंशुमाप्याययन्ति' इत्यादियाज्यामन्त्रगता आदित्यादिशब्दाः कस्यचिदर्थस्य विधायका दृष्टाः। यथा सिद्धार्थवाच्यादित्यशब्दो न विधीयते, यथा वा क्रियावाचित्वेऽपि वर्तमानार्थः 'आप्याययन्ति' इति शब्दो न विधायकः, तथा दैविकहविर्विषयः 'दत्तम्' इत्यस्मिन्नर्थे वर्तमानः स्वाहाशब्दो नोच्चारणं विदधाति। तथा सत्युपसंहार्योपसंहारकयोरेकविषयत्वशङ्काया अप्यभावान्नास्त्येवात्र पूर्वन्यायः। ननु—प्रकरणादिना मन्त्रस्य होमे विनियुक्तत्वात्स्वाहाकारविधिरर्थाल्लभ्यते—इति चेत्।

एवमपि ब्राह्मणवाक्येन पक्षे प्राप्तः स्वाहाकारो नियम्यते। अस्मिन्दर्विहोमे स्वाहाकारेणैवान्नं प्रदीयते। ततः पाक्षिको वषट्कारोऽर्थान्निवर्तते। किंच—'पुरस्तात्स्वाहाकारा वा अन्ये देवाः, उपरिष्टात्स्वाहाकारा अन्ये' इति ब्राह्मणोक्तवाक्येन 'स्वाहा पृथिव्यै' इत्यपि पाठः पक्षे प्राप्नोति। तत्र 'पृथिव्यै स्वाहा' इत्येव नियम्यते। अर्थात्—व्यत्यासो वषट्कृतिश्च निवर्तते। तस्मात्—अविधित्वविधित्वयोरुपसंहाराभावेन होमान्तरेष्वनारभ्यविहितयोर्वषट्कारस्वाहाकारयोर्विकल्पः सुस्थितो भवति॥ १९॥ २०॥

( एकादशे—अग्न्यतिग्राह्यस्य विकृतावुपदेशाधिकरणे सूत्राणि २३—२८ )।

**अग्न्यतिग्राह्यस्य विकृतावुपदेशादप्रवृत्तिः स्यात् ॥ २४ ॥ मासि ग्रहणं च तद्वत् ॥ २३ ॥ ग्रहणं वा तुल्यत्वात् ॥ २५ ॥ लिङ्गदर्शनाच्च ॥ २६ ॥ ग्रहणं समानविधानं स्यात् ॥ २७ ॥ मासि ग्रहणमभ्यासप्रतिषेधार्थम् ॥ २८ ॥**

एकादशाधिकरणमारचयति—

**नातिदेशोऽतिदेशो वा वह्न्यतिग्राह्ययोर्न सः।**
**विकृतौ पुनरुक्तत्वाद्दोषोऽङ्गान्तरवद्भवेत् ॥ २१ ॥**

---

१ क. °रेऽयं ना°। २ क. ख. ञ. °द्वारा अन्याय्यः इति। अपि च विधित्वेऽपि ब्राह्मणोक्तवा°। ज. झ. °द्वारा अन्या इति ब्राह्मणोक्तवा°। ३ ख. °ति। अपि च विधित्वेऽपि ब्रा°। ४ ख. °कन्यायेन। ५ ज. झ. निवर्त्यते.। ६ क. °त्वात्वद्व्यागान्त°।

प्रकृतेर्विकृतीनां च साम्याय स्यात्पुनर्वचः ।
साम्ये च गुणकामानां प्रवृत्तिः प्रकृताविव ॥ २२ ॥

इदं श्रूयते—'य एवं विद्वानाग्निं चिनुते' इति । 'उपष्टम्भनं वा एतद्यज्ञस्य यदतिग्राह्याः' इति । अतिग्राह्यसंज्ञका ग्रहा यज्ञस्योपष्टम्भकत्वादनुष्ठेया इत्यर्थः। अत्र चीयमानस्याग्नेरतिग्राह्याणां च विकृतिष्वतिदेशो नास्ति । कुतः । पुनरुक्तिवैयर्थ्यप्रसङ्गात् । विकृतौ ह्येवं पुनरुच्यते—'अथातोऽग्निमग्निष्टोमेनानुयजन्ति, तमुक्थ्येन तमतिरात्रेण, तं द्विरात्रेण' इत्यादि । अयमर्थः—'इष्टकाचितमग्निमनु तस्मिंश्चितेऽग्नावग्निष्टोमाद्यनुष्ठानम्' इति । तत्र—अग्निष्टोमः प्रकृतिः, उक्थ्यादयो विकृतयः । यदि विकृतिषु चोदकश्चितमग्निमतिदिशेत्, तदानीमुक्थ्यादिषु चोदकादेव तत्प्राप्तेः पुनर्विधानमनर्थकं स्यात् । अतिग्राह्याश्च विकृतिषु पुनर्विधीयन्ते पृष्ठ्ये गृह्णीयात् उक्थ्ये गृह्णीयात् । तस्मात्—विधानार्थवत्त्वाय विकृतावग्न्यतिग्राह्यातिदेशो नास्ति । इति प्राप्ते—

ब्रूमः—ऐन्द्रवायवग्रहादीनामङ्गान्तराणामुक्थ्यादिविकृतिषु यथाऽतिदेशोऽभ्युपगतः, तथाऽग्निचयनस्यातिग्राह्याणां चातिदेशः स्यात् । न हि—अखण्डः सकृत्प्रवृत्तश्चोदकः कानिचिदङ्गान्यतिदिश्येतराण्युपेक्षते—इति युक्तम् । अतिदेशप्राप्तानामपि पुनर्वचनं प्रकृतिसाम्यार्थम् । यथा प्रकृतावग्न्यतिग्राह्ययोः प्रत्यक्षविधिः, तथा विकृतिष्वपि,इति तत्साम्यम् ।न च—साम्ये प्रयोजनाभावः । गुणकामप्रवृत्तेस्तत्प्रयोजनत्वात् । 'श्येनचितिं चिन्वीत स्वर्गकामः' इत्यादिना श्येनाकारादिगुणफलभूतस्वर्गादिकामाः श्रुताः । ते चोपदिष्टमाश्रयमपेक्षन्ते । तस्मात्—'अथातोऽग्निम्'—इति वाक्येन प्रकृतावग्निष्टोमे कासुचिदुक्थ्यादिविकृतिषु चाग्निचयनलक्षण आश्रय उपदिश्यते । अन्यासु वाजपेयादिविकृतिषूपदिष्टस्याऽऽश्रयस्याभावात् । अतिदिष्टस्य चानाश्रयत्वाद्गुणकामानां नास्ति प्रवृत्तिः । तस्मात्—पुनर्विधानवैयर्थ्याभावादस्त्यतिदेशः ॥२१॥२२॥

( द्वादशे—उपस्तरणाभिघारणाभ्यां सहैव चतुरवदानाधिकरणे सूत्राणि २९–३२ )।

उत्पत्तितादर्थ्याच्चतुरवत्तं प्रधानस्य होमसंयोगादधिकमाज्यमतुल्यत्वाल्लोकवदुत्पत्तेर्गुणभूतत्वात् ॥ २९ ॥ तत्संस्कारश्रुतेश्च ॥ ३० ॥

---

१ क. सोम्याय । २ क. ख. च. ज. झ. उपस्तम्भनं। ३ च. यज्ञोपस्तम्भ° । ४ ख. ज. झ. °ष्टकाचि° । ५ क. पृष्ठं । ६ क. उक्थं । ७ ज. झ. °त्–पुनर्विधा° । ८ क. ज. झ. इत्युक्तम् । ९ ज. झ. ञ. पुनर्विधानं । १० क. ख. श्येनचितं। ११ क. °ना कामादि°। झ. ज. °ना कारादि° ।

**ताभ्यां वा सह स्विष्टकृतः सकृत्त्वे द्विरवघा-रणेन तदाप्तिवचनात् ॥ ३१ ॥ तुल्यवच्चाभि-धाय सर्वेषु भक्त्यनुक्रमणात् ॥ ३२ ॥**

द्वादशाधिकरणमारचयति—

**चतुर्द्विर्वा पुरोडाशेऽवदानं होमतोक्तितः।**
**चतुर्मैवं सहाऽऽज्येन सिद्धस्यात्रानुवादतः ॥ २३ ॥**

दर्शपूर्णमासयोराम्नायते—' चतुरवत्तं जुहोति ' इति। तत्र किं पुरोडाशद्रव्य गतस्यावदानस्य चतुःसंख्या, किंवा तत्र द्विसंख्या। चतुष्ट्वं तूपस्तरणाभिघारणार्थाभ्यामाज्यावदानाभ्यां सह संपद्यते, इति संशयः। तत्र चतुरवत्तस्य द्वितीयया विभक्त्या होमकर्मत्वमुच्यते। न च-उपस्तरणाद्यर्थस्याऽऽज्यस्य होमकर्मत्वमस्ति। तस्मात्—पुरोडाशावदानस्यैव चतुर्वारत्वम्। इति प्राप्ते—

ब्रूमः—न तावदत्र होमानुवादेन चतुरवत्तत्वं विधीयते। होमस्याप्राप्तत्वात्। नापि विशिष्टविधिः। गौरवप्रसङ्गात्। होममात्रविधाने चतुरवत्तत्वमनुवाद्यम्। तच्चाऽऽज्यसहितस्यैव युक्तम्। 'द्विर्हविषोऽवद्यति ' इति विधिना पुरोडाशावदाने द्वित्वस्यैव प्राप्तत्वात्। तस्मात्—पुरोडाशे द्विरवदानम् ॥ २३ ॥

( त्रयोदशे—उपांशुयाजेऽपि चतुरवत्तस्याऽऽवश्यकताधिकरणे सूत्रे ३३–३४ )।

**साप्तदश्यवन्नियम्येत ॥ ३३ ॥ हविषो वा गुणभूतत्वात्तथाभूतविवक्षा स्यात् ॥ ३४ ॥**

त्रयोदशाधिकरणमारचयति—

**उपांशुयाजे किं न स्यादवदानचतुष्टयम्।**
**स्याद्वा नास्त्युपसंहारोऽत्रानूक्तिर्वाक्यतोऽस्ति तत् ॥ २४ ॥**

दर्शपूर्णमासयोः श्रुतं चतुरवत्तं नोपांशुयाजे। कुतः। साप्तदश्यवदुपसंहारात्। यथा साप्तदश्यमनारभ्याधीतं परिगणितासु मित्रविन्दादिविकृतिषु पुनः श्रूयमाणं तास्वेवोपसंहृतम्, एवमुपस्तरणाभिघारणोपेते हविषि श्रूयमाणं तत्रैवोपसंहर्तव्यम्। तथा च पुरोडाशसांनाय्ययोस्तत्पर्यवस्यति। उपांशुयाजस्य तूपस्तरणादिराहित्यान्नास्ति चतुरवत्तम्। इति प्राप्ते—

ब्रूमः—योऽयमुपसंहारत्वेनोदाहृतोऽवत्तविधिः सोऽनुवादः—इति पूर्वत्रोक्तम्।

---

१ ज. होम्यतो°। २ ख. च. झ. ञ. °तीयावि। ३ च. °नेन च°। ४ ज. झ. तथाऽऽज्येन स°। ५ ज. झ. °रान्नात्रुक्ति°। ख. °रात्सोनूक्ति°। ६ क. झ. °वामिहोप°।

अत उपसंहारो न शङ्कितुं शक्यः। मा भूदुपसंहारः, तथाऽप्युपांशुयाजे चतुरवत्तं कथं सिध्यति- इति चेत् । 'चतुरवत्तं जुहोति' इति वाक्यात्—इति ब्रूमः । तस्मात्—अस्त्युपांशुयाजे चतुरवत्तम् ॥ २४ ॥

( चतुर्दशे--दर्शपूर्णमासयोराग्नेयैन्द्राग्नयोरनुवादताधिकरणे सूत्राणि ३५--४६ ) ।

पुरोडाशाभ्यामित्यधिकृतानां पुरोडाशयोरुपदेशस्तच्छ्रुतित्वाद्वैश्यस्तोमवत् ॥ ३५ ॥ न त्वनित्याधिकारोऽस्ति विधौ नित्येन संबन्धस्तस्माद्वाक्यशेषत्वम् ॥ ३६ ॥ सति च नैकदेशेन कर्तुः प्रधानभूतत्वात् ॥ ३७ ॥ कृत्स्नत्वात्तु तथा स्तोमे ॥ ३८ ॥ कर्तुः स्यादिति चेत् ॥ ३९ ॥ न गुणार्थत्वात्प्राप्ते च नोपदेशार्थः ॥ ४० ॥ कर्मणोऽस्तु प्रकरणे तन्न्यायत्वाद्गुणानां लिङ्गेन कालशास्त्रं स्यात्॥ ४१॥ यदि तु सांनाय्यं सोमयाजिनो न ताभ्यां समवायोऽस्ति विभक्तकालत्वात् ॥४२॥ अपि वा विहितत्वाद्गुणार्थायां पुनः श्रुतौ संदेहे श्रुतिर्द्विदेवतार्था स्याद्यथाऽनभिप्रेतस्तथाऽऽग्नेयो दर्शनादेकदेवते ॥ ४३ ॥ विधिं तु बादरायणः ॥ ४४ ॥ प्रतिषिद्धविज्ञानाद्वा ॥ ४५ ॥ तथा चान्यार्थदर्शनम् ॥ ४६ ॥

चतुर्दशाधिकरणमारचयति—

सप्त पक्षाः पुरोडाशाभ्यामेवेत्यधिकारिणः ।
शेषः स्यात्तच्छ्रुतेर्मैवं कार्त्स्न्र्यनित्यत्वबाधनात् ॥ २५ ॥

---

१ ज. झ. °स्यात्र श्रुते° । २ ज. झ. कार्त्स्न्र्ये नि° ।

कर्मान्तरविधिर्मैवं प्रत्यभिज्ञैवकारतः ।
णिजर्थस्य विधिर्मैवमाफल्यात्स्वार्थवर्जनात् ॥ २६ ॥
कालस्यास्तु विधिर्मैवं लक्षणायाः प्रसङ्गतः ।
ऐन्द्राग्नैकविधिर्मैवं वैषम्याच्चैवकारतः ॥ २७ ॥
कालो लाक्षणिकोऽप्यस्तु सार्थत्वायेति चेन्न तत् ।
स्तुत्या विध्येकवाक्यत्वात्सार्थत्वाच्चानुवादता ॥ २८ ॥

दर्शपूर्णमासयोरिदमाम्नायते—'पुरोडाशाभ्यामेवासोमयाजिनं याजयेत्—यावेतावाग्नेयश्चैन्द्राग्नश्च' इति । तत्र षट् पक्षान्क्रमेणोपन्यासपूर्वकं निरस्य सप्तममवस्थापयति । 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' इत्यत्र योऽधिकारी श्रुतः, तस्यायं शेषः स्यात् । कुतः । तच्छ्रुतेः । पुरोडाशसाधनकस्य यागस्य यः कर्ताऽधिकारवाक्ये श्रूयते, स एवात्रासोमयाजिशब्देन विशेषितः श्रूयते । इत्याद्यः पक्षः ।

नैष युक्तः । कात्स्न्र्यनित्यत्वयोर्बाधप्रसङ्गात् । तथा हि—'पुरोडाशाभ्यामेव' इत्येवकारेण सांनाय्योपांशुयाजयोर्व्यवच्छेदः । तथा पुरोडाशद्वयस्य 'आग्नेयश्चैन्द्राग्नश्च' इति विशेषितत्वादग्नीषोमीयस्यापि व्यवच्छेदः । ततः कात्स्न्र्यं बाध्येत । अथ 'असोमयाजिनमेव' इत्यन्वयः, तदानीं सोमयागादूर्ध्वं दर्शपूर्णमासव्यवच्छेदाद्यावज्जीवादिवाक्यात्प्रापितं नित्यत्वं बाध्येत । तस्मात्—दर्शपूर्णमासाभ्यामन्ये आग्नेयैन्द्राग्नकर्मणी विधीयेते । इति द्वितीयः पक्षः ।

'यावेतौ' इति प्रसिद्धानुवादेन दर्शपूर्णमासावेव प्रत्यभिज्ञायेते । 'पुरोडाशाभ्यामेव' इत्येवकारश्च कर्मान्तरपक्षे व्यर्थः स्यात् । तस्मात्—प्रसिद्धकर्मानुवादेन 'याजयेत्' इति णिजर्थ ऋत्विजं प्रति विधीयते । एवकारस्य प्रयोजनं सांनाय्यादिनिवृत्तिः । इति तृतीयः पक्षः ।

सोऽप्यनुपपन्नः । ऋत्विग्गामिफलस्य कस्यचिदश्रवणात् । न च—विश्वजिन्न्यायेन कल्पयितुं शक्यम् । परार्थकर्मणि प्रवृत्तस्यार्थवृत्तेरेवासंभवात् । तस्मात्—कालविधिरस्तु । सोमयागात्प्राचीने काले पुरोडाशाभ्यामेव याजयेत्, न तु सांनाय्येन । सोऽयं चतुर्थः पक्षः ।

एषोऽप्ययुक्तः । असोमयाजिशब्दस्य काले लक्षणावृत्तिप्रसङ्गात् । तस्मात्—ऐन्द्राग्नस्यैकस्य पौर्णमास्यामप्राप्तत्वेन विधिरस्तु । आग्नेयस्तु पौर्णमास्याममावास्यायां च नित्यप्राप्तत्वादनूद्यते । इति पञ्चमः पक्षः ।

---

१ ज. झ. °त् ॥ २६ ॥ फल° । २ च. °त्र च ष° । ३ ज. झ. श्रुतः । ४ ज. झ. °यस्यैन्द्राग्नस्य च ' इ° । ५ ज झ. यदि । ६ ज. झ. इत्येष । ७ क. °वृत्ते स्वार्थं° । ख. च. °वृत्तस्यार्थप्राप्तेरे° । ८ क. °रन्ना । आ° । ९ ख. आग्नेयस्य । १० ख. °स्तमनू° ।

सोऽप्ययुक्तः। सकृत्प्रयुक्तस्यैकस्य लिङ्प्रत्ययस्य विधित्वमनुवादत्वं चेति वैषम्यप्रसङ्गात्। एवकारश्चात्र व्यर्थः। तस्मात्—अगत्या तल्लाक्षणिकमभ्युपेत्यापि कालस्य विधिरस्तु। तथा हि—असोमयाजिनः सांनाय्ये तावत्प्रतिप्रसवः श्रूयते—'तदु ह संनयेत्' इति। 'यदा सोमयागो नास्ति तदाऽपि संनयेदेव' इत्यर्थः। तथा सति सोमासोमयाजिनोरुभयोरप्यमावास्यायां सांनाय्यमैन्द्राग्नपुरोडाशेनं भिन्नविषयाभावाद्विकल्पितम्। सोऽयं विकल्पितः पुरोडाशः सोमयागात्प्रागेव, पश्चात्तु सांनाय्यमेव, इत्यभिप्रेत्य कालो विधीयते। तथा सत्येतच्छास्त्रं सार्थकम्, नान्यथा। इति षष्ठः पक्षः।

सोऽप्ययुक्तः। 'सांनाय्येन तु सोमयाजिनम्' इत्यस्य विधेः स्तावकत्वे सत्येकवाक्यत्वलाभात्। सार्थकत्वं चैवं सति भविष्यति। तस्मात्—अनुवादोऽयम्। इति सप्तमः पक्षो राद्धान्तः॥ २५॥ २६॥ २७॥ २८॥

(पञ्चदशे—उपांशुयाजस्य ध्रौवाज्यद्रव्यताधिकरणे सूत्रे ४७—४८)।

**उपांशुयाजमन्तरा यजतीति हविर्लिङ्गाश्रुतित्वा-**
**यथाकामी प्रतीयेत ॥ ४७ ॥ ध्रौवाद्वा सर्वसं-**
**योगात् ॥ ४८ ॥**

पञ्चदशाधिकरणमारचयति—

**उपांशुयाजे यत्किंचिद्द्रव्यमाज्यमुताग्रिमः।**
**विशेषानुक्तितो नैवं ध्रौवाज्यस्य विधानतः॥ २९॥**

'उपांशुयाजमन्तरा यजति' इत्यत्र द्रव्यविशेषस्यानुक्तत्वादैच्छिकं द्रव्यम्। इति चेत्।

नैवम्। आज्यस्य श्रुतत्वात्। 'तावब्रूतामग्नीषोमावाज्यस्यैव नावुपांशु पौर्णमास्यां यजन्' इति हि श्रुतम्। न च—एवमप्यानियतं यत्किंचिदाज्यम्—इति शङ्क्यम्। ध्रौवस्य विहितत्वात्। 'सर्वस्मै वा एतद्यज्ञाय गृह्यते यद्ध्रुवायामाज्यम्' इति विहितम्। विध्यश्रवणेऽपि ध्रौवाज्यस्य सप्रयोजनत्वाय विपरिणामः कर्तव्यः॥ २९॥

(षोडशे—उपांशुयागस्य प्राकृतदेवतानियमाधिकरणे सूत्रे ४९—५०)।

**तद्वच्च देवतायां स्यात्॥ ४९॥**
**तान्त्रीणां वा प्रकरणात्॥ ५०॥**

षोडशाधिकरणमारचयति—

---

१ ज. झ. °त्या लाक्ष°। २ ज. झ. कालस्यैव। ३ ख. घ. तदु ह समवन°। च. तदिह संन°। ज. झ. तदु समवन°। ४ ज. झ. °न सह भि°। ५ ज. झ. °दाज्यं स्यात्—इ°। ६ ज. झ. ञ. शङ्कनीयम्।

तत्र यः कोऽपि देवः स्यात्तान्त्रिको वाऽग्रिमो भवेत्।
अविशेषात्प्रकरणात्तान्त्रिकोऽत्र नियम्यते ॥ ३० ॥

तत्रोपांशुयाजे या काचिद्देवता स्यात्। 'विष्णुरुपांशु यष्टव्यः' इत्यादेरर्थवादत्वेनाविधायकत्वात्। अन्यस्य च देवताविधेरदर्शनात्। यागेन देवतामात्रस्यैव कल्पनाच्च।

मैवम्—उपांशुयाजस्य दर्शपूर्णमासप्रकरणपठितत्वाद्दर्शपूर्णमासतन्त्रमध्यपठित एव कश्चिद्देवः प्रत्यासत्त्योपांशुयाजे नियम्यते ॥ ३० ॥

( सप्तदशाष्टादशयोः—उपांशुयाजस्य विष्ण्वादिदेवताकत्वपौर्णमासीकर्तव्यत्वयोराधिकरणयोः सूत्राणि ५१–६१)।

धर्माद्वा स्यात्प्रजापतिः ॥ ५१ ॥ देवतायास्त्वनिर्वचनं तत्र शब्दस्येह मृदुत्वं तस्मादिहाधिकारेण ॥ ५२ ॥ विष्णुर्वा स्याद्धौत्राम्नानादमावास्याहविश्च स्याद्धौत्रस्य तत्र दर्शनात् ॥ ५३ ॥ अपि वा पौर्णमास्यां स्यात्प्रधानशब्दसंयोगाद्गुणत्वान्मन्त्रो यथा प्रधानं स्यात् ॥ ५४ ॥ आनन्तर्यं च सांनाय्यस्य पुरोडाशेन दर्शयति, अमावास्याविकारे ॥ ५५ ॥ अग्नीषोमविधानात्तु पौर्णमास्यामुभयत्र विधीयते ॥ ५६ ॥ प्रतिषिध्यविधानाद्वा विष्णुः समानदेशः स्यात् ॥ ५७ ॥ तथा चान्यार्थदर्शनम् ॥ ५८ ॥ न चानङ्गं सकृच्छ्रुतावुभयत्र विधीयेतासंबन्धात् ॥ ५९ ॥ गुणानां च परार्थत्वात्प्रवृत्तौ विधिलिङ्गानि दर्शयति ॥ ६० ॥ विकारे चाश्रुतित्वात् ॥ ६१ ॥

सप्तदशाधिकरणमारचयति—

कोऽपि देवस्तान्त्रिकेषु नियतो वा तदाऽपि किम्।
प्रजापतिरुताग्निः स्यादग्नीषोमावुताथवा ॥ ३१ ॥

विष्णुर्यद्वाऽग्निमुत्सृज्य विकल्प्यं देवतात्रयम् ।
कोऽप्यत्रानियमान्मैवमुपांशुत्वादियन्त्रणात् ॥ ३२ ॥
प्रजापतिरुपांशुत्वान्न तूष्णींभावयोगतः ।
अग्निर्मुख्यत्वतो मैवं तद्याज्यादेरपाठतः ॥ ३३ ॥
अग्नीषोमौ तदुक्तेर्नो तत्र कालविधानतः ।
विष्णुर्याज्यादितस्तन्न प्राजापत्योक्तिबाधनात् ॥ ३४ ॥
याज्यात्रैविध्यतः प्राप्ता विकल्प्यन्तेऽत्र देवताः ।
विधिशेषार्थवादेऽपि प्राप्तं त्रयमनूद्यते ॥ ३५ ॥

तान्त्रिकदेवेषु नियामकाभावात्–यः कोऽपि । इति चेत् ।

न । वक्ष्यमाणानामुपांशुत्वादीनां नियामकत्वात् । 'यत्किंचित्प्राजापत्यं यज्ञे क्रियते, उपांश्वेव तत्क्रियते' इति वचनादुपांशुत्वधर्मसाम्येन प्रजापतिर्देवता' इति चेत् ।

न । 'प्रजापतिं मनसा ध्यायेत्' इति विधेस्तूष्णींभावस्यैव प्रजापतिधर्मत्वात् । प्रथमयागदेवत्वेन मुख्यत्वादग्निर्देवता । इति चेत् ।

न । उपांशुयाजक्रमेऽग्निविषययाज्याद्यपाठात् । 'तावब्रूताम्'–इत्यादिपूर्वोदाहृतवाक्यादग्नीषोमौ देवता । इति चेत् ।

न । तस्य वाक्यस्य पौर्णमासीकालविधायकत्वात् । कस्यांचिच्छाखायामुपांशुयाजक्रमे वैष्णवयाज्यापुरोनुवाक्ययोः पाठात्–विष्णुर्देवता । इति चेत् ।

न । तथा सति शाखान्तरप्रोक्तयोः प्राजापत्ययोर्याज्यापुरोनुवाक्ययोर्बाधः प्रसज्येत । तस्मात्–नानाशाखासु पठिताभ्यां विष्णुप्रजापत्यग्नीषोमविषययाज्यपुरोनुवाक्याभ्यां प्राप्तास्तिस्रो देवता विकल्पन्ते । अत एवोपांशुयाजविधिशेषेऽर्थवादेऽप्येतदेव प्राप्तं देवतात्रयमनूद्यते–'विष्णुरुपांशु यष्टव्योऽजामित्वाय, प्रजापतिरुपांशु यष्टव्योऽजामित्वाय, अग्नीषोमावुपांशु यष्टव्यावजामित्वाय' इति । तस्मात्–देवताविकल्पो राद्धान्तः ।

*अष्टादशाधिकरणमारचयति–

*शाबरभाष्ये शास्त्रदीपिकायां च पूर्वाधिकरण एवास्याधिकरणस्यान्तर्भावोऽङ्गीकृतः।

१ ज. झ. °यद्वाग्नि° । २ ज. झ. ञ. तत्राका° । ३ क. ख. °स्तत्र प्रा° । ४ ख. °पि तत्र प्राप्तम° । ५ क. ज. झ. °मेण वै° । ६ क. ज. झ. °ष्णुप्राजापत्याग्नी° । ७ ज. झ. °कल्पः सिद्धान्तः । ञ. °कल्पः सिध्यति ।

दर्शादिर्वा तस्य कालो दर्श एवान्य एव वा ।
द्विपुरोडाशसांनिध्यादाद्यो दर्शेऽग्नितोऽग्रतः ॥ ३६ ॥
विष्णुयाज्योक्तितो युक्तो मध्यमः पूर्णिमाविधेः ।
स एव कालो याज्याया उत्कर्षः पूर्णिमादिने ॥ ३७ ॥

'जामि वा एतद्यज्ञस्य क्रियते, यदन्वञ्चौ पुरोडाशावुपांशुयाजमन्तरा यजति अजामित्वाय' इति पुरोडाशयोर्मध्ये स यागो विहितः । पुरोडाशौ च पौर्णमास्यामाग्नेयाग्नीषोमौ, अमावास्यायामाग्नेयैन्द्राग्नौ । ततो द्विपुरोडाशसंनिधेः समानत्वाद्दर्शः पूर्णिमा च, इत्युभयमुपांशुयाजस्य कालः । इत्याद्यः पक्षः ।

दर्शं प्रकृत्य याज्याकाण्ड आग्नेययाज्याया अधस्ताद्वैष्णवयाज्यायाः पाठात्प्रकरणस्य संनिधितः प्रबलत्वाद्दर्श एव कालः । इति मध्यमः पक्षः ।

'तावब्रूतामग्नीषोमावाज्यस्यैव नावुपांशु पौर्णमास्यां यजन्' इति पौर्णमास्यास्तत्कालत्वेन विधानाद्वाचनिकस्य विधेः प्रबलत्वात्पौर्णमास्येव कालः । तथा सति वैष्णवयाज्याप्रकरणादुत्कृष्यताम् ॥ ३६ ॥ ३७ ॥

(एकोनविंशे—एकपुरोडाशायामप्युपांशुयाजाधिकरणे सूत्राणि ६२–७०)॥

द्विपुरोडाशायां स्यादन्तरार्थत्वात् ॥ ६२ ॥ अजामिकरणार्थत्वाच्च ॥ ६३ ॥ तदर्थमिति चेन्न तत्प्रधानत्वात् ॥ ६४ ॥ अशिष्टेन च संबन्धात् ॥ ६५ ॥ उत्पत्तेस्तु निवेशः स्याद्गुणस्यानुपरोधेनार्थस्य विद्यमानत्वाद्विधानादन्तरार्थस्य नैमित्तिकत्वात्तदभावेऽश्रुतौ स्यात् ॥ ६६ ॥ उभयोस्तु विधानात् ॥ ६७ ॥ गुणानां च परार्थत्वादुपवेषवद्यदेति स्यात् ॥ ६८ ॥ अनपायश्च कालस्य लक्षणं हि पुरोडाशौ ॥ ६९ ॥ प्रशंसार्थमजामित्वम् ॥ ७० ॥

एकोनविंशाधिकरणमारचयति—

१ ज. झ. °र्शादिर्वागस्य । २ क. °र्शेऽग्निमो यतः । ३ ज. झ. अमावास्यां ।

पुरोडाशैक्ययुक्तायां पौर्णमास्याम यं नहि।
स्याद्वा नास्त्यन्तरेत्युक्तलक्ष्ये कालेऽस्ति शङ्खवत् ॥३८॥

सोमात्प्रागग्नीषोमीयपुरोडाशरहिता केवलाग्नेयपुरोडाशयुक्ता पौर्णमासी भवति। 'स सोमेनेष्ट्वाऽग्नीषोमीयो भवति' इति वाक्येनाग्नीषोमीययोः सोमोत्तरकालत्वावगमात्। तस्मात्—उपांशुयाजे(जो) नास्ति। कुतः। 'उपांशुयाजमन्तरा यजति' इति पुरोडाशद्वयान्तरालवत्त्वस्य गुणत्वेन विधानात्। इति प्राप्ते—

ब्रूमः—किं पुरोडाशावन्तरालकालस्य विशेषणभूतौ, उत लक्षणभूतौ। नाऽऽद्यः। अन्तरालकालवत्ताद्विशेषणयोः पुरोडाशयोरुपांशुयाजे गुणत्वप्रसङ्गात्। न चैतद्युक्तम्। उपांशुयाजवत्तयोरपि स्वातन्त्र्येणैव फलान्वयात्। द्वितीये तु—शङ्खन्यायेनोपलक्षकस्याग्नीषोमीयपुरोडाशस्यैवाभावेऽप्युपलक्ष्ये काले यागोऽस्ति। यथा—'शङ्खध्वनिवेलायां राजसेवार्थं प्रतिदिनमागन्तव्यम्' इत्युक्ते कस्मिंश्चिद्दिने तं शङ्खं धमतः पुरुषस्याभावेनोपलक्षकस्य ध्वनेरभावेऽप्युपलक्षिते तस्मिन्काले सेवकाः समागच्छन्ति, तथाऽत्रापि द्रष्टव्यम्। यदि तत्र कालोपलक्षकमन्यदेव व्यापारः सूर्यगत्यादिकं संभाव्यते, तर्ह्यत्रापि संभवत्येवाऽऽग्नेयपुरोडाश उपलक्षकः। तस्मात्—एकपुरोडाशायामपि पौर्णमास्यामस्त्युपांशुयाजः ॥ ३८ ॥

इति श्रीमाधवीये जैमिनीयन्यायमालाविस्तरे दशमाध्यायस्याष्टमः पादः ॥ ८ ॥

| | अत्र पादे | आदितः। |
|---|---|---|
| अधिकरणानि | १९ | ७७५ । |
| सूत्राणि | ७० | २२२९ । |

॥ समाप्तश्चायं दशमोऽध्यायः ॥

---

१ ज. °कालाव° । ज. झ. °कालीनत्वा° । ञ. °कालवत्त्वात्° । २ क. °शशङ्खयोरन्तरालवत्त्वगु° । ३ ख. °पांशुवत्तयोरपि गु° । ४ क. 'त्वमसंगतम्। न। ५ ख. च. ञ. °शस्यभा° । ६ क. °यां स्वाभावेऽप्युपलक्षिते काले रा° । ७ ख. च. ञ. सेवकः। ८ ख. ज. ञ. समागच्छति। ९ क. °पाररूपं ग° । १० ख. च. ज. झ. °मस्तूपां°।

(अथैकादशाध्यायः प्रारभ्यते) ।

बाधाबाधविचारेण प्रयोज्ये निश्चिते सति ।
प्रयोगस्य विचारोऽथ तन्त्ररूपो विचार्यते ॥ १ ॥

अनेन दशमैकादशयोरध्याययोः पूर्वोत्तरभाव उपपादितः ॥ १ ॥

( प्रथमे—आग्नेयादीनां समुदितानां तन्त्रेण स्वर्गफलकत्वाधिकरणे सूत्राणि १—४ ) ।

प्रयोजनाभिसंबन्धात्पृथक्सतां ततः स्यादैककर्म्यमेकशब्दाभिसंयोगात् ॥ १ ॥ शेषवद्वा प्रयोजनं प्रतिकर्म विभज्येत ॥ २ ॥ अविधानात्तु नैवं स्यात् ॥ ३ ॥ शेषस्य हि परार्थत्वाद्विधानात्प्रतिप्रधानभावः स्यात् ॥ ४ ॥

एकादशाध्यायस्य प्रथमपादे प्रथमाधिकरणमारचयति—

षड्यागानां फलं स्वर्गः प्रत्येकं तन्त्रतोऽथवा ।
आद्यः पृथक्लफलार्थित्वान्न संघस्य फलोक्तितः ॥ २ ॥

'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' इति श्रुतं फलमाग्नेयादिभिः षड्भिर्यागैः प्रत्येकमभिसंबध्यते । कुतः । पृथगुत्पन्नतया परस्परानिरपेक्षाणां पृथगेव फलाकाङ्क्षितत्वात् । इति चेत् ।

न । तत्समूहवाचिना दर्शपूर्णमासशब्देन व्यवहृत्य संघस्यैव फलसंबन्धनात् । तस्मात्—स्वर्गस्तेषां फलं तन्त्रेण । तन्यते विस्तार्यते बहूनामुपकारो येन सकृत्प्रवर्तितेन, तदिदं तन्त्रम् । तद्यथा—बहूनां ब्राह्मणानां मध्ये कृतः प्रदीपस्तेषामुपकरोति, न त्वनुलेपनभोजनादिवत्प्रतिपुरुषमावृत्तिलक्षणमावापमपेक्षते । एवं स्वर्गस्तन्त्रेण फलम् ॥ २ ॥

( द्वितीये—अङ्गानामैककार्याधिकरणे सूत्राणि ५—१० ) ।

अङ्गानां तु शब्दभेदात्क्रतुवत्स्यात्फलान्यत्वम् ॥ ५ ॥
अर्थभेदस्तु तत्रार्थेह्यैकार्थ्यादैककर्म्यम् ॥ ६ ॥

---

१ क. ख. च. °यस्याऽऽद्ये पा° । २ ख. च. °न्त्रताऽथ । ३ ञ. °ङ्क्षित्वा° । ४ ख. °बन्धात् । ५ क. ख. °नां क्र° । ६ ञ. °नां च क्र° ।

शब्दभेदान्नेति चेत् ॥ ७ ॥ कर्मार्थत्वात्प्रयोगे ताच्छब्द्यं स्यात्तदर्थत्वात् ॥८॥ कर्तृविधेर्नानार्थत्वाद्गुणप्रधानेषु ॥९ ॥ आरम्भः शब्दपूर्वत्वात् ॥१०॥

द्वितीयाधिकरणमारचयति—

कार्यभेदो न वाऽङ्गानां सौर्यचित्रादिवद्भिदा ।
करणैक्यात्तदेकत्वं द्वारभेदो बहुत्वतः ॥ ३ ॥

यानि प्रयाजाज्यभागाद्यङ्गानि, तेषां सर्वेषां करणं प्रत्युपकारभेदः स्यात् । कुतः । कार्यभेददर्शनात् । यथा—'सौर्यं चरुं निर्वपेद्ब्रह्मवर्चसकामः' 'चित्रया यजेत पशुकामः' इत्यादिषु परस्परनैरपेक्ष्येण विहितानां सौर्यादीनां ब्रह्मवर्चसादिकार्यभेदः, तथा प्रयाजाज्यभागादीनां परस्परनिरपेक्षाणां करणोपकारा भिद्यन्ते । न च—अत्र पूर्वन्यायेन संघोपकारगमकं किंचिदस्ति । इति प्राप्ते—

ब्रूमः—करणाकाङ्क्षानुसारेण ह्यङ्गोपकारः कल्प्यः । करणं च स्वयमेकं सत्स्वर्गशक्त्युद्बोधनलक्षणमेकमेवोपकारमङ्गकृतमपेक्षते । अङ्गबहुत्वं तु द्वारकार्यभेदेनोपपद्यते । यथा तण्डुलकाष्ठस्थाल्यादीनां कारकाणां द्वारभेद एवौदननिष्पादनलक्षणं प्रधानकार्यमेकमेव । तद्वदत्र द्वारभेदेऽप्युपकार एक एव ॥३॥

( तृतीये— { दर्शपूर्णमासादिकाम्यकर्मणां सर्वाङ्गोपसंहाराधिकरणे } सूत्राणि ११—१९)।

एकेनापि समाप्येत कृतार्थत्वाद्यथा क्रत्वन्तरेषु प्राप्तेषु चोत्तरावत्स्यात् ॥ ११ ॥ फलाभावान्नेति चेत् ॥ १२ ॥ न कर्मसंयोगात्प्रयोजनमशब्ददोषं स्यात् ॥ १३ ॥ एकशब्द्यादिति चेत् ॥ १४ ॥ नार्थपृथक्त्वात्समत्वादगुणत्वम् ॥ १५ ॥ विधेस्त्वेकश्रुतित्वादपर्यायविधानान्नित्यवच्छ्रुतभूताभिसंयोगादर्थेन युगपत्प्राप्तेर्यथाप्राप्तं

१ ञ. °नां सूर्य° । २ ख. घ. °षां क° । ञ. °षां तेषां स° । ३ ज. झ. ञ. °गानुयाजादी° । ४ च. °रणे प्रकारे भिद्यते । न । ५ ज. झ. विद्यन्ते । ६ ज. झ. ञ. कल्पनीयः । ७ क. °त्स्वप्रान्त उद्बो° । ज. झ. °त्स्वस्य श° । ८ ख. एक एवेति । ज. झ. एकः ।

स्वशब्दार्थो निवीतवत्स्यात्सर्वप्रयोगे प्रवृत्तिः स्यात् ॥ १६ ॥ तथा कर्मोपदेशः स्यात् ॥ १७ ॥ क्रत्वन्तरेषु पुनर्वचनम् ॥ १८ ॥ उत्तरास्वश्रुतित्वाद्विशेषाणां कृतार्थत्वात्स्वदोहे यथाकामी प्रतीयेत ॥ १९ ॥

तृतीयाधिकरणमारचयति—

उपकारः स एकेन कैश्चिद्वा निखिलैरुत ।
आकाङ्क्षापूरणादाद्यः फलाधिक्याय मध्यमः ॥ ४ ॥
कपोतवद्यौगपद्ये त्यागहेतोरभावतः ।
संभूयकरणाकाङ्क्षां पूरयन्त्युपकारतः ॥ ५ ॥

योऽयं करणं प्रत्येक उपकारः पूर्वत्र निर्णीतः, स एकेनाङ्गेन सिध्यति । कारणस्याङ्गाकाङ्क्षायास्तावता पूरितत्वात् । यथा ग्रामगतैः सर्वैः कर्तव्यं करदानमेक एव राजकुलसमागतः करोति, कराकाङ्क्षा च तावता राज्ञो निवर्तते । तथाऽत्रापि द्रष्टव्यम् । यदि 'एतदङ्गमनुष्ठेयम्' इति विशेषनियामकं न स्यात्, तर्हि विकल्पोऽस्तु । इत्याद्यः पक्षः ।

यथा यावन्ति काम्यकर्माणि सौर्यचित्रादीन्यनुतिष्ठति तावत्फलं प्राप्नोति, तथा—अङ्गभूयस्त्वेन फलभूयस्त्वसंभवादिच्छया कानिचिदङ्गान्यनुष्ठेयानि । तैश्चातिशयवानेकः करणोपकारो जायते । इति मध्यमः पक्षः ।

यथा जिघत्सया खले बीजभक्षणाय कपोतपङ्क्तिर्युगपत्पतति, तथा करणाकाङ्क्षां पूरयितुं समर्थानि सर्वाण्यङ्गान्येकप्रयोगवचनपरिगृहीततया युगपत्प्राप्तानि तेषु केषांचित्परित्यागे हेतुर्नास्ति । तस्मात्—सर्वाण्यङ्गानि संभूयैकस्योपकारजननेन करणाकाङ्क्षां पूरयन्ति । इति सिद्धान्तः ।

---

१ ज. झ. °कुले स° । २ क. ख. च. °ता नि° । ३ क. पक्षोऽभ्युपेयः । ४ ज. झ. °या स° । ५ ख. °त्प्राप्नुवन्ति ते° । ६ ज. झ. °नने क° ।

+वार्तिककारस्तु पूर्वाधिकरणस्य वैयर्थ्यं मन्यमानोऽस्मिन्नेवाधिकरणेऽन्तर्भावयामास।

( चतुर्थे-काम्यकर्मणां भूयोऽभ्यासाधिकरणे सूत्राणि २०-२६ )।

कर्मण्यारम्भभाव्यत्वात्कृषिवत्प्रत्यारम्भं फलानि स्युः ॥ २० ॥ अधिकारश्च सर्वेषां कार्यत्वादुपपद्यते विशेषः ॥ २१ ॥ सकृत्तु स्यात्कृतार्थत्वादङ्गवत् ॥ २२ ॥ शब्दार्थश्च तथा लोके

+ तदेतत्स्पष्टीकृतम् 'अङ्गानां तु शब्दभेदात्क्रतुवत्स्यात्फलान्यत्वम्' [ ११ । १ । ५ ] इति सूत्रं द्वितीयाधिकरणप्रारम्भभूतमुपादाय शास्त्रदीपिकायाम्-'अतःप्रभृति षड्भिः सूत्रैरेकमधिकरणम्, 'एकेनापि समाप्येत'-[ ११ । १ । १२ ] इत्यतःप्रभृति च नवभिः सूत्रैरधिकरणान्तरं भाष्यकारेण व्याख्यातमिति प्रतिभाति। तत्र च पूर्वाधिकरणे-अङ्गानां कार्यभेदं पूर्वपक्षीकृत्य, एककार्यत्वं सिद्धान्तितम्। उत्तराधिकरणे तु-तस्मिन्नेकस्मिन्कार्ये विकल्पमाशङ्क्य समुच्चयः प्रतिपाद्यते, इति व्याचष्टे। तदिदं वार्तिककारो नानुमेने। न हि कार्यभेदाभेदमात्रचिन्ता प्रयोजनवती, भेदे सति कार्याणां कारकवदङ्गानां समुच्चयः, कार्यैक्येऽप्यपर्यायविधानात्समुच्चय इति नास्त्यनुष्ठाने विशेषः। औपोद्घातिकमिदम्। सति हि कार्यैक्ये विकल्पसमुच्चयौ-इति चेत्। तथाऽपि नास्त्येव प्रयोजनम्, करणैकत्वाद्धि तत्सामर्थ्योद्बोधनरूपस्योपकारस्य स्पष्टमेवैकत्वम्। अवान्तरकार्यभेदस्तु सिद्धान्तेऽपि संमत एवेति न चिन्तनीयं पश्यामः। अथ-शक्त्युद्बोधनस्यावान्तरकार्याणां च मध्ये किंचिदुपकाराख्यं वस्तु मन्यसे। तदप्रामाणिकम्, निष्प्रयोजनं च। शक्त्युद्बोधन एव विकल्पसमुच्चयाचिन्तोपपत्तेः। तस्मादेकमेवेदं पञ्चदशसूत्रं समुच्चयप्रतिपादनार्थमधिकरणम्। त्रयश्चेह पक्षाः-किमङ्गानामितरेतरनिरपेक्षाणां क्रतूपकारकतया विकल्पः, उत-एकेन द्वाभ्यां बहुभिश्चोपकारसिद्धेरुपकारभूयस्तया च फलभूयस्त्वम्, उत-समुच्चितानामेवोपकारकत्वम्, इति। तदर्थमिदं चिन्त्यते-किमङ्गानामात्मीयैर्विधिभिः प्रयोगोऽभिधीयते, किंवा प्रधानविधिभिः, इति। प्रधानान्येकशब्देन तन्त्रेणाभिहितानि युगपत्फले विनियुक्तानि युक्तं यत्फले समुच्चीयन्ते। अङ्गानि तु पृथक्शब्देनाभिहितानि पृथगेव विहितानि फलमपेक्षमाणान्यन्योन्यनिरपेक्षाण्येव क्रतूपकारार्थतया विनियुक्तानि विकल्पितुमर्हन्ति। तेषां हि स्ववाक्यैरेव विधानम्। असति विधानेऽङ्गत्वानुपपत्तेः। उक्तं हि-'न चाविहितमङ्गं भवति' इति। स्ववाक्यानि च तेषामेकैकमेव विदधति, इति कुतः समुच्चयः। न हि कश्चिच्छब्दोऽस्ति, येनैषां सहितानामनुष्ठानमुच्यते। तस्मात्-यथा सत्यपशुफलत्वे चित्रोद्भिदादीनां पृथग्विधानादसमुच्चयः, तथाऽङ्गानामपि, इति प्रथमः पक्षः।

सत्यम्, निरपेक्षाणामुपकारकत्वं गम्यते, तथाऽपि बह्वङ्गाम्नानसामर्थ्याद्विकल्पस्य चान्याय्यत्वात्तेषामेकमपि प्रयुञ्जीत, तथा द्वे, तथा बहूनि च, अङ्गभूयस्तया चोपकारभूयस्त्वात्फलभूयस्त्वम्। इति द्वितीयः। स च 'एकेनापि समाप्येत'-इत्यनेन सूत्रेणोच्यते। पक्षान्तरमेव चा[१]धिकरणान्तरमिव भाष्ये दर्शितम्। अधिकरणान्तरत्वे तु-अनेन सूत्रेण विकल्पो वक्तव्यः स्यात्। न च-अनेन विकल्प उच्यते। 'प्राप्तेषु चोत्तरावत्स्यात्' इति समुच्चयस्याप्यभ्यनुज्ञानात्। तस्मात्-नाधिकरणान्तरम्'-इति ग्रन्थेन।

१ च. °धिकारेणान्त°।

॥ २३ ॥ अपि वा संप्रयोगे यथाकामी प्रतीयेता-
श्रुतित्वाद्विधिषु वचनानि स्युः ॥२४॥ एकशब्द्या-
त्तथाऽङ्गेषु ॥ २५ ॥ लोके कर्मार्थलक्षणम् ॥२६॥

चतुर्थाधिकरणमारचयति—

काम्यकर्मप्रयोगः किं सकृदेवासकृच्च वा ।
फलसिद्धेरादिमोऽन्त्यो भूयः स्वेच्छानुसारतः ॥ ६ ॥

चित्रादिकाम्यकर्म सकृदेव प्रयोक्तव्यम् । तावतैव पश्वादिफलसिद्धेः । यथा प्रयाजाद्यङ्गं सकृदेवानुष्ठीयते, तद्वत् । इति प्राप्ते—

ब्रूमः—विषमो दृष्टान्तः । करणस्याङ्गेषु सकृदेवाऽऽकाङ्क्षा । इह तु पुरुषः स्वर्गपश्वादीन्भूयो भूयः कामयते । ततस्तदनुसारेण प्रयोगावृत्तिः ॥ ६ ॥

( पञ्चमे—अवघातादीनामातण्डुलनिर्वृत्तेरभ्यासाधिकरणे सूत्रम्— ) ।

क्रियाणामर्थशेषत्वात्प्रत्यक्षोऽतस्त-
न्निवृत्त्याऽपवर्गः स्यात् ॥ २७ ॥

पञ्चमाधिकरणमारचयति—

अवघातः सकृन्नो वा सकृत्स्याद्विधिसिद्धितः ।
दृष्टा तण्डुलनिष्पत्तिस्तदन्तोऽभ्यस्यतामयम् ॥ ७ ॥

'व्रीहीनवहन्ति' इत्यत्र सकृन्मुसलपातमात्रेण विधिप्रयुक्तस्यापूर्वस्य सिद्धेर्नास्त्यत्राऽऽवृत्तिः । इति चेत् ।

न । तण्डुलनिष्पत्तेर्दृष्टप्रयोजनत्वेन तत्पर्यन्तस्याभ्यासस्याश्रुतस्यापि कल्पनयित्वात् । एवं तण्डुलपेषणादावपि द्रष्टव्यम् ॥ ७ ॥

( षष्ठे—अदृष्टफलस्यावघातादेः सकृदनुष्ठानाधिकरणे सूत्रम् ) ।

*धर्ममात्रे त्वदर्शनाच्छब्दार्थेनापवर्गः स्यात् ॥ २८ ॥

षष्ठाधिकरणमारचयति—

* शास्त्रदीपिकायां तु पूर्वाधिकरण एवेदमप्यधिकरणमन्तर्भावितम् ।

१ क. °फलासि° । २ झ. °काम्यं क° । ञ. काम्यकर्मप्रयोगः । स° । ३ ख. ग. ज. झ. ञ. °लस्य सि° । च. °लस्य सिद्धिः । य° । ४ ख. च. ज. झ. ञ. °ते । अत° । ५ क. दृष्टा । ६ ज. झ. °र्नास्ति तत्रा° । ७ ञ. °सस्य कृतस्याश्रु° ।

सर्वौषधावघातः किमावर्त्यः सकृदेव वा ।
आवर्त्यः पूर्ववन्नैवं दृष्टार्थस्यात्र वर्जनात् ॥ ८ ॥

अग्निप्रकरणे श्रूयते–'औदुम्बरमुलूखलं सर्वौषधस्य पूरयित्वाऽवहन्ति, *अथै-तदुपदधाति' इति । अत्रादृष्टमात्रस्य प्रयोजनत्वात्सकृदेवावघातः ॥ ८ ॥

(सप्तमे -प्रयाजादीनामङ्गानां सकृदनुष्ठानाधिकरणे सूत्राणि २९–३७) ।

क्रतुवद्वाऽनुमानेनाभ्यासे फलभूमा स्यात् ॥२९॥ सकृद्वा कारणैकत्वात् ॥ ३० ॥ परिमाणं चानियमे न स्यात् ॥ ३१ ॥ फलस्याऽऽरम्भनिर्वृत्तेः क्रतुषु स्यात्फलान्यत्वम् ॥३२॥ अर्थवांस्तु नैकत्वादभ्यासः स्यादनर्थको यथा भोजनमेकस्मिन्नर्थस्यापरिमाणत्वात्प्रधाने च क्रियार्थत्वादनियमः स्यात् ॥ ३३ ॥ पृथक्त्वाद्विधितः परिमाणं स्यात् ॥ ३४ ॥ अनभ्यासो वा प्रयोगवचनैकत्वात्सर्वस्य युगपच्छास्त्रादफलत्वाच्च कर्मणः स्यात्क्रियार्थत्वात् ॥ ३५ ॥ अभ्यासो वा छेदनसंमार्गावदानेषु वचनात्सकृत्त्वस्य ॥ ३६ ॥ अनभ्यासस्तु वाच्यत्वात् ॥ ३७ ॥

सप्तमाधिकरणमारचयति–

अङ्गेऽभ्यासो न वा भूम्नाऽभ्यासो नाङ्गे पृथक्फलम् ।
अङ्गचावृत्त्यैव भूमाऽतः प्रयोगेऽङ्गं सकृद्भवेत् ॥ ९ ॥

एकस्मिन्यागे प्रयाजाद्यङ्गं फलभूमार्थिनाऽभ्यसनीयम् । कारीर्यादेः काम्यस्य कर्मणोऽभ्यासेन फलभूयस्त्वदर्शनात् । इति चेत् ।

न । अङ्गोपकृतस्य प्रधानस्य यत्फलम्, ततोऽतिरिक्तस्य कस्यचिदभावाद्यदि फलभूमानमर्थयेत, तदा साङ्गं प्रधानमावर्तनीयम् । न त्वङ्गमात्रावृत्त्या तत्सिध्यति ।

* अत्र 'तदुपदधाति' इति शाबरभाष्ये पाठः ।

१ ज. झ. ञ. नैवम् । २ ञ. °तो विभक्त° । ३ ज. ञ. °चिद्भावा° ।

ननु—उपकारभूयस्त्वमङ्गावृत्तिलक्षणं फलभूयस्त्वे पर्यवस्यति । यथा सस्यादिषु कर्षणावृत्तिकृतो भूयानुपकारः फलं वर्धयति, तद्वत्—इति चेत् । न । तत्र दृष्टत्वात् । इह त्वदृष्ट उपकारः शास्त्रादेव बोध्यः । न च शास्त्रमुपकारभूयस्त्वायाङ्गावृत्तिं क्वचिद्ब्रूते । तस्मात्—एकस्मिन्प्रयोगे सकृदेव प्रयाजाद्यङ्गानुष्ठानम् ॥ ९ ॥

( अष्टमे—बहुवचनस्य त्रित्वपरत्वे कपिञ्जलाधिकरणे सूत्राणि ३८–४५ ) ।

**बहुवचनेन सर्वप्राप्तेर्विकल्पः स्यात् ॥ ३८ ॥**
**दृष्टः प्रयोग इति चेत् ॥ ३९ ॥ तथेह ॥ ४० ॥**
**भक्त्येति चेत् ॥ ४१ ॥ तथैतरस्मिन् ॥ ४२ ॥**
**प्रथमं वा नियम्येत कारणादतिक्रमः स्यात्॥४३॥**
**तथा चान्यार्थदर्शनम् ॥ ४४ ॥ प्रकृत्या च पूर्ववत्तदासत्तेः ॥ ४५ ॥**

अष्टमाधिकरणमारचयति—

**कपिञ्जलेषु त्रित्वाद्याः पाक्षिकास्त्रित्वमेव वा ।**
**आद्यो बहुत्वसाम्यान्न त्रित्वेनैव कृतत्वतः ॥ १० ॥**

अश्वमेधे ' वसन्ताय कपिञ्जलानालभते ' इति त्रित्वचतुष्ट्वादिसंख्यानां बहुत्वसाम्यादिच्छया या काचिद्बहुत्वसंख्या स्वीकार्या। इति चेत् ।

न । त्रित्वेनैव शास्त्रस्य कृतत्वात् । यो हि चतुष्ट्वादिसंख्यामुपादत्ते, तेन न तदन्तर्भूतं वर्जयितुं शक्यम् । त्रित्वमाददानेन त्वनन्तर्भूतं चतुष्ट्वादिकं वर्जयितुं शक्यते । अतोऽवश्यंभावित्वेन प्रथमभावित्वेन लाघवेन च त्रित्व उपात्ते शास्त्रार्थसिद्धौ ततोऽधिकपक्षिहिंसायां प्रत्यवायात् । तस्मात्—त्रित्वमेवोपादेयम्॥१०॥

( नवमे—' उत्तरा दोहयति ' इत्यत्र सर्वासां गवां दोहनाधिकरणे सूत्राणि ४६–५२ ) ।

**उत्तरासु न यावत्स्वमपूर्वत्वात् ॥ ४६ ॥ यावत्स्वं वाऽन्यविधानेनानुवादः स्यात् ॥ ४७ ॥ साक-**

---

१ क. °मङ्गीकृत्य फ° । ख. °मङ्गीकृत्या फ° । ज. °मङ्गीकृत्य लक्षणां फ. । झ. °मङ्गवृत्त्यैव लब्धं फ° । ञ. °मङ्गीकृतं फ° । २ ख. च. झ. ञ. °द्या ऐच्छिका° । ३ क. ख. च. °साम्येन त्रि° । ज. झ. °सामान्ये त्रि° । ४ ज. झ. तेनापि त° । ५ ज. झ. °यितुमश° । ६ क. च. त्रित्वोपादा° । ७ ञ. °क्रमनपेक्षितं प्रत्यवायार्थम् । त° ।

ल्यविधानात् ॥ ४८ ॥ बह्वर्थत्वाच्च ॥ ४९ ॥
अग्निहोत्रे चाशेषवद्यवागूनियमः ॥ ५० ॥ तथा
पयःप्रतिषेधः कुमाराणाम् ॥ ५१ ॥ सर्वप्रापि-
णाऽपि लिङ्गेन संयुज्य देवताभिसंयोगात् ॥ ५२ ॥

एकादशाधिकरणमारचयति—

उत्तरास्तिस्र एव स्युर्यावत्स्वं वाऽत्र पूर्ववत् ।
तिस्र एव हविःकात्स्न्यापूर्वयोर्विधितोऽन्तिमः ॥ ११ ॥

सांनाय्यदोहं प्रकृत्य श्रूयते—'वाग्यतस्तिस्रो दोहयित्वा विसृष्टवागनन्वारभ्य तूष्णीमुत्तरा दोहयति' इति । तिसृभ्य उत्तरा गावो यजमानस्य यावत्यः सन्ति, तासां मध्ये कपिञ्जलन्यायेनोत्तरास्तिस्र एव गावो दोहनीयाः । इति प्राप्ते—

ब्रूमः—'नास्यैतां रात्रिं पयसाऽग्निहोत्रं जुहुयात्, कुमाराश्च न पयो लभेरन्' इति विद्यमानस्य पयसो हविष्ट्वं विधीयते । न च-अत्र कुमाराणां पयसो निषेधः । तथा सति दृष्टार्थत्वपरित्यागेनादृष्टार्थत्वं कल्प्येत, 'कुमाराश्च न' इत्येवं चशब्दश्चापि-शब्दार्थवाची प्रयुज्यमानस्तदा व्यर्थः स्यात् । किंच 'बहु दुग्धीन्द्राय देवेभ्यो हविः' इति मन्त्रे हविषां बाहुल्यं प्रतीयते । तेन प्राप्तं सर्वोत्तरादोहनमनूद्यापूर्वमनन्वारम्भणमत्र विधीयते । तस्मात्—विधेयकपिञ्जलवैषम्याद्धविर्बाहुल्यार्थं सर्वा उत्तरा दोहनीयाः ॥ ११ ॥

( दशमे— { आग्नेयादीनां प्रधानानां भेदेऽप्याघारादीनामङ्गानां तन्त्रेणानुष्ठानाधिकरणे } सूत्राणि ५३-६६) ।

प्रधानकर्मार्थत्वादङ्गानां तद्भेदात्कर्मभेदः प्रयोगे स्यात् ॥ ५३ ॥ क्रमकोपश्च यौगपद्ये स्यात् ॥ ५४ ॥ तुल्यानां तु यौगपद्यमेकशब्दोपदेशात्स्याद्विशेषाग्रहणात् ॥ ५५ ॥ ऐकार्थ्यादव्यवायः स्यात् ॥ ५६ ॥ तथा चान्यार्थदर्शनं कामुकायनः ॥ ५७ ॥ तन्न्यायत्वादशक्तेरानुपूर्व्यं

१ क. °त्स्न्यीत्पूर्व° । २ २ ज. झ. ञ. °नाय्ये दो° । ३ ञ. निधीयते । ४ ख. च. ज. झ. ञ. इत्यस्मिन्नपि म° । ५ ज झ. °णमात्रं वि° । ६ क. सर्वोत्त° ।

स्यात्संस्कारस्य तदर्थत्वात् ।।५८।। असंसृष्टोऽपि तादर्थ्यात् ॥ ५९ ॥ विभवाद्वा प्रदीपवत् ॥ ६० ॥ अर्थात्तु लोके विधिः प्रतिप्रधानं स्यात् ॥ ६१ ॥ सकृदिज्या कामुकायनः परिमाणविरोधात् ॥६२॥ विधेस्त्वितरार्थत्वात्सकृदिज्याश्रुतिव्यतिक्रमः स्यात् ॥ ६३ ॥ विधिवत्प्रकरणाविभागे प्रयोगं बादरायणः ॥ ६४ ॥ कचिद्विधानान्नेति चेत् ॥ ६५ ॥ न विधेश्चोदितत्वात् ॥ ६६ ॥

दशमाधिकरणमारचयति—

प्रत्यङ्गि कार्याण्यङ्गानि तन्त्रेणोताङ्गिनो यतः।
एकैकस्योपकार्यत्वं तस्मात्प्रत्यङ्ग्यनुष्ठितिः ॥ १२ ॥
विधानवदनुष्ठानं सकृदेवोपकारकम्।
तद्देशकालकर्तॄणामेकत्वान्नर्तकादिवत् ॥ १३ ॥

पौर्णमास्यां त्रीण्याग्नेयादीन्यङ्गीनि[1] प्रयाजाज्यभागैरुपकार्याणि। तेष्वेकैकस्याङ्गिन उपकारापेक्षित्वात्प्रतिप्रधानमङ्गानि[2] पृथगनुष्ठेयानि। इति प्राप्ते—

ब्रूमः—यथा ‘ समिधो यजति ’ इत्यादिविधानं सकृदेव प्रवृत्तम्[4] न त्वाग्नेयादित्रयोद्देशेन पृथक्प्रवर्तते, तथाऽनुष्ठानमपि सकृदेव प्रवर्तते। प्रवृत्तं सत्त्रयाणामुपकाराकाङ्क्षां पूरयति। यथा बहूनां पुरतो नृत्यन्नर्तकः सर्वेषां सभ्यानां युगपन्निर्वर्तयति, तद्वत्। तस्मात्—आग्नेयादिषु देशकालकर्तॄणामेकत्वादङ्गानां तन्त्रेणानुष्ठानम् ॥ १२ ॥ ॥ १३ ॥

( एकादशे—कृष्णग्रीवयोः प्रथमतृतीययोर्भेदेन प्रदानाधिकरणे सूत्राणि ६७–७० )

व्याख्यातं तुल्यानां यौगपद्यमगृह्यमाणविशेषाणाम् ॥ ६७ ॥ भेदस्तु कालभेदाच्चोदनाव्यवायात्स्याद्विशिष्टानां विधिः प्रदानकालत्वात् ॥ ६८ ॥ तथा चान्यार्थदर्शनम् ॥ ६९ ॥ विधिरिति चेन्न वर्त-

---

१ क. ख. °न्यङ्गानि°। २ ञ. °नि प्रधानानि प्र°। ३ क. ख. °क्षितत्वा°। ४ क. प्रयुक्तम्।

मानापदेशात् ॥७०॥

एकादशाधिकरणमारचयति-

कृष्णग्रीवद्वये तन्त्रं पृथग्वा देवतैक्यतः ।

तन्त्रं सौम्यव्यवायेन कालभेदात्पृथग्भवेत् ॥ १४ ॥

काम्यपशुकाण्डे श्रूयते-'आग्नेयं कृष्णग्रीवमालभेत, सौम्यं बभ्रुम्, आग्नेयं कृष्णग्रीवं पुरोधायां स्पर्धमानः' इति । अयमर्थः-'ममैव पौरोहित्यमस्तु नान्यस्य' इत्येवं स्पर्धोपेतो यथोक्तवर्णोपेतं पशुत्रयमालभेत' इति । तत्र-आद्यन्तयोः कृष्णग्रीवयोः पश्वोर्देवतैक्यात्तन्त्रेणानुष्ठानम् । इति चेत् ।

न । सौम्यपशुना व्यवधाने सति कालैक्यासंभवेन तन्त्रासंभवात् । तस्मात्-आवापः ॥१४ ॥

इति श्रीमाधवीये जैमिनीयन्यायमालाविस्तर एकादशाध्यायस्य प्रथमः पादः ॥ १ ॥

| | अत्र पादे | आदितः । |
|---|---|---|
| अधिकरणानि | ११ | ७८६ । |
| सूत्राणि | ७७ | २२९९ । |

( अथैकादशाध्यायस्य द्वितीयः पादः ) ।

( प्रथमे-आग्नेयादीनां प्रधानानां तन्त्राधिकरणे सूत्रे १-२ ) ।

एकदेशकालकर्तृत्वं मुख्यानामेकशब्दोपदेशात्॥ १ ॥

अविधिश्चेत्कर्मणामभिसंबन्धः प्रतीयेत लक्षणार्थाभिसंयोगाद्विधित्वाच्चेतरेषां प्रतिप्रधानं भावः स्यात् ॥ २ ॥

द्वितीयपादस्य प्रथमाधिकरणमारचयति-

आग्नेयादिप्रधानेस्य देशे काले च कर्तरि ।

भेदः स्यादथवा तन्त्रमङ्गत्वाद्द्रव्यदेववत् ॥ १ ॥

---

१ क. ख. ज. झ. ञ. °नस्थे दे° ।

उत्पत्तिविधिशेषत्वाद्भेदः स्यादेकशब्दतः।
विधेः[1] प्रयोगशेषत्वादभेदेन[2] तु तन्त्रता ॥ २ ॥

दर्शपूर्णमासयोर्देशकालकर्तारो विहिताः—'समे दर्शपूर्णमासाभ्यां यजेत' 'पौर्णमास्यां पौर्णमास्या यजेत' 'अमावास्यायाममावास्यया यजेत,' 'दर्शपूर्णमासयोश्चत्वार ऋत्विजः' इति। एते देशकालकर्तारोऽङ्गत्वाद्द्रव्यदेवतावदुत्पत्तिविधिशेषाः सन्तः प्रधानेष्वाग्नेयादिषु प्रतिप्रधानं भिद्यन्ते। इति प्राप्ते—

ब्रूमः—'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' इत्येकेन शब्देनाऽऽग्नेयादीनां पृथगुत्पन्नानामपि परस्परसहितानामेव फलसाधत्वेन विधानादेकः प्रयोगो गम्यते। तमेकप्रयोगापादकमेकं दर्शपूर्णमासशब्दमुपजीव्य देशादिविधान.देशादयोऽपि प्रयोगशेषा एव, न तूत्पत्तिशेषाः। तस्मात्-एकस्मिन्प्रयोगे देशादीनां तन्त्रेण संबन्धः ॥ १ ॥ २ ॥

(द्वितीये—अङ्गानामपि समदेशादिनियमाधिकरणे सूत्राणि—३-१०)।

*अङ्गेषु च तदभावः प्रधानं प्रति निर्देशात् ॥ ३ ॥ यदि तु कर्मणो विधिसंबन्धः स्यादैकशब्द्यात्प्रधानार्थाभिसंयोगात् ॥ ४ ॥ तथा चान्यार्थदर्शनम् ॥ ५ ॥ श्रुतिश्चैषां प्रधानवत्कर्मश्रुतेः परार्थत्वात्कर्मणोऽश्रुतित्वाच्च ॥ ६ ॥ अङ्गानि तु विधानत्वात्प्रधानेनोपदिश्येरन्, तस्मात्स्यादेकदेशत्वम् ॥ ७ ॥ द्रव्यदेवतं तथेति चेत् ॥ ८ ॥ न चोदनाविधिशेषत्वान्नियमार्थो विशेषः ॥ ९ ॥ तेषु समवेतानां समवायात्तन्त्रमङ्गानि, भेदस्तु तद्भेदात्कर्मभेदः प्रयोगे स्यात्तेषां प्रधानशब्दत्वात्, तथा चान्यार्थदर्शनम् ॥ १० ॥

द्वितीयाधिकरणमारचयति—

* शास्त्रदीपिकायां तु पूर्वाधिकरण एवास्याप्यन्तर्भावः कृतः।

१ ज. झ. विधिः प्र°। २ ज. झ. °त्वाचदभेदेन त°। ञ. °त्वादभेदने च त°।

अङ्गे ये केऽपि देशाद्याः किंवा ते देवतादिवत् ।
अनन्वयात्केऽपि मैवं प्रयोगेण परिग्रहात् ॥ ३ ॥

प्रयाजाद्यङ्गेषु ये केऽपि देशकालकर्तारः प्रतीष्टि कर्तव्याः । कुतः । अनन्वयात् । यथा प्रधानान्वितयोर्द्रव्यदेवतयोरङ्गेष्वन्वयो नास्ति, तथा देशादीनामपि । इति प्राप्ते—

ब्रूमः—प्रयोगशेषत्वं देशादीनाम्, न त्वाग्नेयादिविधिशेषत्वम्, इत्युक्तम् । प्रयोगेण च प्रधानवदङ्गान्यपि गृह्यन्ते । तस्मात्—य एव देशादयः प्रधानानाम्, त एवाङ्गानामपि ॥ ३ ॥

( तृतीये— { दर्शपूर्णमासेष्टिप्रभृतिषु संघभेदे-नाङ्गानां भेदेनानुष्ठानाधिकरणे } सूत्राणि ११—१७ ) ।

इष्टिराजसूयचातुर्मास्येष्वैककर्म्यादङ्गानां तन्त्रभावः स्यात् ॥ ११ ॥ कालभेदान्नेति चेत् ॥ १२ ॥ नैकदेशत्वात्पशुवत् ॥ १३ ॥ अपि वा कर्मपृथक्त्वात्तेषां तन्त्रविधानात्साङ्गानामुपदेशः स्यात् ॥ १४ ॥ तथा चान्यार्थदर्शनम् ॥ १५ ॥ तदावयवेषु स्यात् ॥ १६ ॥ पशौ तु चोदनैकत्वात्तन्त्रस्य विप्रकर्षः स्यात् ॥ १७ ॥

तृतीयाधिकरणमारचयति--

संघभेदे तन्त्रभङ्गं न वा, कर्मैक्यतोऽग्रिमः ।
न मुख्यकालभेदोक्त्या प्रयोगस्य पृथक्त्वतः ॥ ४ ॥

इष्टौ विद्यमानानां षण्णां यागानां द्वाववान्तरसंघौ—दर्शश्च पूर्णमासश्च । चातुर्मास्येषु चत्वारः संघाः—वैश्वदेववरुणप्रघाससाकमेधशुनासीरीयाः । एतादृशे विषये संघातानेकत्वेऽपि कर्मैक्यात्प्रयोगैक्ये साङ्गानां तन्त्रेणानुष्ठानं युक्तम् । न च पौर्णमास्यमावास्ययोः कालयोर्भेदेनाङ्गभेदः शङ्क्यः । पशुवदभेदोपपत्तेः । 'वपया प्रातःसवने प्रचरन्ति, पुरोडाशेन माध्यंदिने, अङ्गैस्तृतीयसवने' इति

१ च. °तीष्टीच्छया क° । ज. झ. °तीच्छया क° । २ ज. झ. ञ. परिगृह्यन्ते । ३ ज. झ. कर्तैक्य° । ४ ज. द्वावेव सं° । ५ क. ख. च. °लभेदे° । ६ ज. झ. ञ. शङ्कनीयः ।

वपापुरोडाशहृदयाद्यङ्गप्रचाराणां कालभेदेऽपि पश्वङ्गानां प्रयाजानां यथा नास्त्यावृत्तिः, तद्वदत्रापि। इति प्राप्ते—

ब्रूमः—नात्राङ्गतन्त्रं युक्तम्। कुतः। दर्शपूर्णमासकर्मण एकफलसाधनत्वेन स्वरूपत एकत्वेऽपि दर्शप्रयोगात्पूर्णमासप्रयोगस्य पृथक्त्वात्। तच्च पृथक्त्वं वाचनिकात्कालभेदादवगम्यते। पशुदृष्टान्तस्तु विषमः। नहि मुख्यस्य पशुयागस्य भेदोऽभिहितोऽस्ति। वपादीनां तु प्रयाजाद्यपेक्षया मुख्यत्वेऽप्यस्ति महद्वैषम्यम्। प्रयाजादिभ्यो वपादयो मुख्याः। तेभ्यो वपाद्यवयवेभ्योऽवयवी पशुर्मुख्यः। अत्रापि प्रयाजादिभ्य आग्नेयादयस्त्रयो मुख्याः। तेभ्योऽपि तेषां संघो दर्शो मुख्यः। तस्य च दर्शस्य कालभेदोऽपि विधीयते-'अमावास्यायाममावास्यया यजेत' इति। तत्र दर्शयागस्थानीयस्य पशुयागस्य कालभेदो विधीयेत चेत्, भवेत्तदा साम्यम्। नत्वेवं विधीयते। किंतु वपादिप्रचारस्यैव कालभेदो विधीयते। न हि प्रचारस्याङ्गभूतस्य मुख्ययागत्वमस्ति, येन प्रयोगभेद आशङ्क्येत। तस्मात्—पशुवैषम्येण मुख्यस्यैव दर्शस्य पूर्णमासयागस्य च कालभेदोक्त्या प्रयोगभेदे सति प्रयोगशेषाणां प्रयाजादीनामावृत्तिरिति। एवं वैश्वदेवादिषु द्रष्टव्यम् ॥४॥

( चतुर्थे— { अध्वरकल्पायां त्रिषु संघेष्वङ्गानां भेदेनानुष्ठानाधिकरणे } सूत्राणि १८—२२ )।

तथा स्यादध्वरकल्पायां विशेषस्यैककालत्वात् ॥ १८ ॥ इष्टिरिति चैकवच्छ्रुतिः ॥ १९ ॥ अपि वा कर्मपृथक्त्वात्तेषां च तन्त्रविधानात्साङ्गानामुपदेशः स्यात् ॥ २० ॥ प्रथमस्य वा कालवचनम् ॥ २१ ॥ फलैकत्वादिष्टिशब्दो यथाऽन्यत्र ॥ २२ ॥

चतुर्थाधिकरणमारचयति--

अङ्गान्यध्वरकल्पायां प्रातःकालादिवर्तिषु।
त्रिषु संघेषु तन्त्रेण स्युर्भेदेनाथवाऽग्रिमः ॥ ५ ॥

---

१ ज. झ. ञ. नात्र त°। २ ज. झ. ञ. °दो विहि°। ३ क. °वी मुख्यः। ४ ख. तत्रापि। ५ ञ. चतुर्दशस्य। ६ ख. °दोऽभिधी°। ७ ज. झ. ञ. °ते। भ°। ८ ज. झ. °प्रचलस्यै°। ९ क. °गभेदशे°। झ. °गविशे°। १० च. °दिवृत्तिषु। ११ ज. झ. मन्त्रेण।

उषस्यशेषनिर्वापात्तद्वदङ्गापकर्षणात् ।
प्रातर्निर्वापवैशेष्यान्मुख्यकालाय भिन्नता ॥ ६ ॥

काम्येष्टिष्वध्वरकल्पा नाम काचिदिष्टिः । तत्र—प्रातःकाले त्रयाणां यागानामाग्नावैष्णवसारस्वतबार्हस्पत्यानां संघः पठितः । मध्याह्नापराह्णयोरपि तथैव पठितः । अष्टाकपालैकादशकपालद्वादशकपालैराग्नावैष्णवो विशेषितः । इतरत्समानम् । तत्र त्रिषु संघेषु प्रयाजाद्यङ्गानां तन्त्रम् । कुतः । 'पुरा वाचः प्रवदितोर्निर्वपेत्' इति संघस्य यागस्याशेषस्य निर्वापस्य रात्रौ सुप्तजनानां प्रबोधपूर्वकव्यापारात्प्राचीन उषःकालेऽपकर्षे सति निर्वापवदङ्गान्तराणामपकर्षस्य प्रतिभानात् । इति प्राप्ते—

ब्रूमः—'आग्नावैष्णवं प्रातरष्टाकपालं निर्वपेत्' इति सामान्येन विहितो यः प्रातःकालीनो निर्वापः स एव संनिहितत्वात् 'पुरा वाचः'—इति विशिष्यते । तस्मात्—उत्तरसंघनिर्वापोऽपि मुख्यत्वलाभाय तत्तत्कालयोः कर्तव्यः । तद्वत्प्रयाजादीनामपि भेदेनानुष्ठानम् ॥ ५ ॥ ६ ॥

( पञ्चमे—प्राजापत्यवसाहोमानां तन्त्रेणानुष्ठानाधिकरणे सूत्रम्—) ।

वसाहोमस्तन्त्रमेकदेवतेषु स्यात्प्रदानस्यैककालत्वात् ॥ २३ ॥

पञ्चमाधिकरणमारचयति—

प्राजापत्यवसानां किं भेदस्तन्त्रमुताग्रिमः ।
पशुभेदाद्वैंपाककालैक्याच्छक्तितोऽन्तिमः ॥ ७ ॥

वाजपेये सप्तदशसु प्रजापतिदेवताकेषु पशुषु तद्भेदानुसारेण वसाहोमो भिद्यते । इति चेत् ।

नं । प्रजापतिरेक एव सप्तदशानां पशूनां देवता । तथा पाकोऽपि सहैव क्रियते । प्रदानस्यापि पाक उपलक्षणम् । प्रदानेऽपि साहित्यमस्ति । कालश्चैकः । ज्यायार्धचान्तस्य कालत्वेन चोदकातिदेशात् । शक्यते च सह होमः। तस्मात्—तन्त्रम् ७॥

१ क. च. ज. झ. ञ. °तद्द्वाराऽङ्गा° । २ क. ख. च. ञ. °वैषम्यान्मु° । ३ च. °घनि° । ४ ज. झ. °मप्यप°।५ ज. प्रतिप्रधानात् । झ. प्रतिविधानात् । ६ ज. झ. °र्वापेऽपि । ७ ज. झ. °वकर्मका° । ८ क. ख. ज. झ. ञ. °नुमतेन व° । ९ ज. झ. ञ. मैवम् । १० ज. झ. °ज्याया अर्ध° ।

( षष्ठे–ऐकादशिनगतवसाहोमस्य भेदेनानुष्ठानाधिकरणे–सूत्रम्– )।

**कालभेदे त्वावृत्तिर्देवताभेदे ॥ २४ ॥**

षष्ठाधिकरणमारचयति–

**ऐकादशिनगे तन्त्रं वसाहोमेऽथ भिन्नता।**
**तन्त्रं शक्यत्वतो भेदः प्रदानार्धर्चभेदतः ॥ ८ ॥**

ऐकादशिनेष्वाग्नेयसारस्वतसौम्यादिपशुषु वसाहोमस्य सह कर्तुं शक्यत्वात्तन्त्रम्। इति प्राप्ते—

ब्रूमः—देवताभेदेन प्रदानभेदान्न तन्त्रम्। याज्यार्धर्चान्तकालानां भिन्नत्वेनानुष्ठाने यौगपद्यासंभवाद्भेदः ॥ ८ ॥

( सप्तमे—यूपैकादशिन्यां तन्त्रेण यूपाहुत्यनुष्ठानाधिकरणे–सूत्राणि २५–२७ )।

**अन्ते यूपाहुतिस्तद्वत् ॥ २५ ॥ इतरप्रतिषेधो वा ॥ २६ ॥ अशास्त्रत्वाच्च देशानाम् ॥ २७ ॥**

सप्तमाधिकरणमारचयति–

**यूपैकादशिनीयूपाहुतेर्भेदोऽथ तन्त्रता।**
**समीपभेदादाद्योऽन्त्यः सामीप्यं दृष्टिगं यतः ॥ ९ ॥**

यूपैकादशिन्यां चोदकप्राप्ता यूपाहुतिः प्रतियूपं भिद्यते। कुतः। 'यूपस्यान्तिकेऽग्निं मथित्वा यूपाहुतिं जुहोति' इति तद्विधानात्। सामीप्यानां च भेदात्। इति प्राप्ते–

ब्रूमः—न तावदत्यन्तसामीप्यं संभवति। यूपदाहप्रसङ्गात्। अतो यावता व्यवधानेन यूपा दृष्टिगोचरा भवन्ति, तावतो देशस्य समीपत्वमभ्युपेयम्। तेन देशैक्यसंभवादाहुतेस्तन्त्रता ॥ ९ ॥

( अष्टमे–साङ्गस्यावभृथस्याप्स्वनुष्ठानाधिकरणे सूत्राणि २८–३१ )।

**अवभृथे प्रधानेऽग्निविकारः स्यान्नहि तद्धेतुरग्निसंयोगः ॥ २८ ॥ द्रव्यदेवतावत् ॥ २९ ॥ साङ्गो वा प्रयोगवचनैकत्वात् ॥ ३० ॥ लिङ्गदर्शनाच्च ॥ ३१ ॥**

---

१ क. च. ञ. ञ. प्रधाना°। २ ज. झ. वपाहो°। ३ ज. झ. °न्तरका°। ४ ज. झ. °शिनो चो°। ५ ज. झ. °पेतव्यम्। ६ ज. झ. °स्तन्त्रत्वम्।

शब्दविभागाच्च देवतानपनयः ॥ ३२ ॥

अष्टमाधिकरण[illegible]—

[illegible]भृथे [illegible] [illegible]ग्रिमः ।

[illegible] तन्त्रत्वात् ॥ १० ॥

[illegible] एक[illegible]ऽवभृथ[illegible]

[illegible] अतः [illegible]तावदग्नौ

[illegible] । [illegible]घारा[illegible]ज्यभागादीन्याहवनीयेऽनुष्ठे-

[illegible] । इ[illegible]

[illegible]:—स्यादेवम्, यदि—'अवभृथे' इत्येतावदेव श्रूयेत । इह तु 'अप्सु चरन्ति' इति श्रवणादवभृथप्रयोगेणाप्यनन्वयात्साङ्गं प्रधानमप्सु कर्तव्यम् ॥ १० ॥

( नवमे— {वरुणप्रघासेष्वाग्नेयादीनां मारुत्या भेदेनानुष्ठानाधिकरणे} सूत्राणि ३३—४१ ) ।

दक्षिणेऽग्नौ वरुणप्रघासेषु देशभेदात्सर्वं विक्रियेत ॥ ३३ ॥ अचोदनेति चेत् ॥ ३४ ॥ स्यात्पौर्णमासीवत् ॥ ३५ ॥ प्रयोगचोदनेति चेत् ॥ ३६ ॥ अथेह ॥ ३७ ॥ आसादनमिति चेत् ॥ ३८ ॥ नोत्तरेणैकवाक्यत्वात् ॥ ३९ ॥ अवाच्यत्वात् ॥ ४० ॥ आम्नायवचनं तद्वत् ॥ ४१ ॥

नवमाधिकरणमारचयति—

मारुत्याः सार्धमष्टाभिरङ्गैस्तन्त्रं भिदाऽथवा ।
प्रयोगैकत्वतस्तन्त्रं भेदो देशस्य भेदतः ॥ ११ ॥

वरुणप्रघासेष्वाग्नेयादीनि नव हवींषि विहितानि । तेषु मारुतीमामिक्षां प्रतिप्रस्थाता दक्षिणे विहारेऽनुतिष्ठति । इतराणि त्वध्वर्युरुत्तरे विहारेऽनुतिष्ठति । तेषामष्टानां प्रयोगैक्यात्तन्त्रेणाङ्गान्युभयवादिसंमतानि । तथा तान्येव मारुत्या अपि, इत्यत्रापि तन्त्रं प्राप्तम् । कुतः । वरुणप्रघासान्तःपातित्वेन प्रयोगैक्यात् । ननु—अत्र

---

१ क. °वाचित्वा° । २ ज. झ. ञ. स्यादेतदेवम् । ३ ख. अप्स्ववभृथं च° । च. अप्स्ववभृथेन च° । ज. झ. अप्स्ववतर° । ४ क. च. ज. झ. °रङ्गं तन्त्रं । ५ ख. °क्षिणावि° । ञ. °क्षिणवि° । ६ क. °मनुष्ठानं प्र° । ७ ञ. संगता° । ८ क. °रुत्याऽपि° । ञ. °रुत्या अपीति मन्त्रं ।

विहारभेद आम्नातः—'पृथगग्नी प्रणयतः, पृथग्वेदी कुरुतः' इति। सोऽयं पृथगनुष्ठानाभावे व्यर्थः स्यात्। मैवम्। हविरासादनमात्रे तद्भेदोपयोगात्। 'अष्टावध्वर्युरुत्तरे विहारे हवींष्यासादयति। मारुतीमेव प्रतिप्रस्थाता दक्षिणस्मिन्' इति तद्विधानात्। तस्मात्—तन्त्रम्। इति प्राप्ते—

ब्रूमः—देशभेदात्प्रयोगभेदे सत्यङ्गानुष्ठानमपि भिद्यते। च न—तद्भेदस्य हविरासादनमात्रार्थता युक्ता। तदासादनस्य दृष्टहोमार्थतापरित्यागेनादृष्टार्थकल्पनीयप्रसङ्गात्। न च—प्रयोगभेदेनैवाऽऽसादनभेदस्यापि सिद्धौ वचनमनर्थकं स्यात्—इति वाच्यम्। अव्यवस्थया प्रयोगप्राप्तौ तद्वचनस्य व्यवस्थार्थत्वात्। तस्मात्—भेदेनाङ्गानुष्ठानम्॥ ११॥

(दशमे—उत्तरदक्षिणविहारयोः कर्तृभेदाधिकरणे सूत्राणि ४२—४६)।

**कर्तृभेदस्तथेति चेत्॥ ४२॥ न समवायात्॥ ४३॥ लिङ्गदर्शनाच्च॥ ४४॥ वेदिसंयोगादिति चेत्॥ ४५॥ न देशमात्रत्वात्॥ ४६॥**

दशमाधिकरणमारचयति—

**कर्तृभेदो न वा तत्र भेदः स्यादङ्गभेदवत्।**
**पञ्चर्त्विग्वचनान्मैवं द्वयोरुक्त्या व्यवस्थितिः॥ १२॥**

तत्र पूर्वोक्ते विषये प्रयोगभेदादाघाराद्यङ्गभेद इव होतृभेदादीनां कर्तृणामपि भेदः। इति चेत्।

मैवम्। वाचनिकपञ्चसंख्याविरोधात्। [illegible] पञ्चर्त्विजश्चातुर्मास्येषु [illegible]

[illegible]दि—अग्न्याद्यष्टके [illegible]

ननु पञ्चसंख्यानिश्चयमात्र[illegible]ष्टक [illegible] [illegible]

प्र॥ इति चेत्। सत्यम्। प्राप्तावेव तावुभावुभयत्र। व्यवस्था तु वचनाद्भविष्यति। तच्च वचनं पूर्वमेवोदाहृतम्। तस्मात्—नास्ति कर्तृभेदः॥ १२॥

(एकादशे—{उत्तरदक्षिणविहारयोः पत्नीसंयाजादीनां भेदेनानुष्ठानाधिकरणे} सूत्रे ४७—४८)।

**एकाग्नित्वादपरेषु तन्त्रैः स्यात्॥ ४७॥**

---

१ च. °रुतमे°। ज. झ. °रुतिमे°। २ ज. झ. °दनास्यदृष्टहोमार्थप°। ३ ज. झ. °नात्। ४ ख. °वस्थायाः प्र°। ५ ञ. कर्त्रभे°। ६ ञ. °संस्थावि°। ७ झ. शक्नुयात्। ८ ख. °बुभय°। ९ क. ख. च. पूर्वोदा°।

नाना वा कर्तृभेदात् ॥ ४८ ॥

एकादशाधिकरणमारचयति—

तत्रैव पत्नीसंयाजादौ तन्त्रं भिन्नताऽथवा ।
तन्त्रमग्न्यैक्यतो मैवं कर्तृभेदानिवारणात् ॥ १२ ॥

तत्रैवाऽऽग्नेयाद्यष्टके मारुत्यां च गार्हपत्ये होतव्येषु पत्नीसंयाजादिषु तन्त्रं युक्तम् । कुतः । गार्हपत्यस्यैकत्वात् । न ह्याहवनीयवद्दाक्षिणे विहारे गार्हपत्यः पृथगस्ति । तस्मात्—तन्त्रम् । इति प्राप्ते—

ब्रूमः—न तावदत्र पूर्वोक्तः कर्तृभेदो निवारयितुं शक्यते । तथा सति—अध्वर्युणा कृता:[1] पत्नीसंयाजाः प्रतिप्रस्थातृकर्तृकायां मारुत्यां कथमुपकुर्युः । तस्मात्—अध्वर्युः प्रतिप्रस्थाता च गार्हपत्ये पृथक्पृथक्पत्नीसंयाजाञ्जुहुयाताम्[2][3] ॥१३॥

( द्वादशे { वाजपेये प्राजापत्यपश्वालम्भशेषस्य ब्रह्मसामकाल उत्कर्षाधिकरणे } सूत्राणि ४९–५१ ) ।

पर्यग्निकृतानामुत्सर्गे प्राजापत्यानां कर्मोत्सर्गः श्रुतिसामान्यादारण्यवत्तस्माद्ब्रह्मसाम्नि चोदनापृथक्त्वं स्यात् ॥४९॥ संस्कारप्रतिषेधो वा वाक्यैकत्वे क्रतुसामान्यात् ॥ ५० ॥ वपानां चानभिघारणस्य दर्शनात् ॥ ५१ ॥

द्वादशाधिकरणमारचयति—

पर्यग्निकरणे त्याग आलम्भो ब्रह्मसामनि ।
कर्मशेषनिषेधश्च[4] कर्मान्तरविधिर्भवेत् ॥ १४ ॥
किंवोत्कर्षोऽवशिष्टस्य[5] ह्यारण्योक्तिवदादिमः ।
अदृष्टवाक्यभेदार्तद्रव्याभावेन[6] चान्तिमः ॥ १५ ॥

वाजपेये 'सप्तदश प्राजापत्यान्पशूँन्संचिनुते' इति प्रकृत्य श्रूयते—'तान्प-

१ ज. झ. ञ. हुताः । २ क. ख. च. ञ. °थक्पत्नी° । ३ क. °याज्जुहुयात् । ख. च. °यातम् । ञ. °यात् । ४ क. °शेषे नि° । ५ ज. झ. किमुत्क° । ६ क. ख. ज. °द्रव्याभेदेन । झ. ञ. °द्रव्यभेदेन । ७ ख. °शूनालभते । ज. झ. °शून्प्रकृत्य श्रूयते ।

र्यग्निकृतानुत्सृजन्ति, ब्रह्मसाम्न्यालभते' *इति। तेषु सप्तदशसु पशुषु पर्यग्निकरणेऽनुष्ठिते सत्युत्तरकालभावी कर्मशेष उत्सर्गशब्देन निषिध्यते। अश्वमेधे 'पर्यग्निकृतानारण्यानुत्सृजन्ति' इत्यत्र कर्मशेषनिषेधस्य प्रतिपन्नत्वादत्रापि तथात्वेन सप्तदश पशवः पर्यग्निकरणान्ताः समाप्याः। आलभतिना च ब्रह्मसामकाले कर्मान्तरं विधीयते। इति प्राप्ते—

ब्रूमः—कर्मान्तरविधौ सप्तदशपशुजन्यादृष्टाद्भिन्नं किंचिददृष्टं कल्प्येत। वाक्यभेदश्च प्राप्नुयात्। किंच 'ब्रह्मसाम्न्यालभते' इत्यत्र द्रव्यदेवतयोरश्रवणान्न कर्मान्तरविधिः संभवति। तस्मात्—पर्यग्निकरणानन्तरमेव कार्यस्य सप्तदशपशूनामालम्भादिशेषस्य ब्रह्मसामकाल उत्कर्षो विधीयते। तथा सत्यर्थप्राप्तपर्यग्निकरणानन्तरभाविकर्मशेषव्यापारोपरम उत्सर्गशब्देनानूद्यते ॥ १४॥१५॥

( त्रयोदशे—अहीन उक्ष्णामुत्सर्गस्य कर्मशेषप्रतिषेधार्थताधिकरणे सूत्राणि ५२—५४ )।

**पञ्चशारदीयास्तथेति चेत् ॥ ५२ ॥ न चोदनैकवाक्यत्वात् ॥५३॥ संस्काराणां च दर्शनात्॥५४॥**

त्रयोदशाधिकरणमारचयति—

**उक्षोत्सर्गः किमुत्कर्षस्त्यागो वाऽऽद्योऽत्र पूर्ववत्।**
**अन्वहत्रित्वयोरुत्तमाहपञ्चत्वयोर्विधौ ॥ १६ ॥**
**वाक्यभेदाद्विशिष्टानामन्येषां कर्मणां विधिः।**
**तस्मादारण्यवच्छेषत्याग उत्सर्ग इष्यताम् ॥ १७ ॥**

अस्त्यहीनेषु पञ्चशारदीयनामकः कश्चित्पञ्चाहविशेषः। स च पञ्चसु वर्षेष्वनुष्ठेयः। तत्र प्रथमे वर्षे विशाखानक्षत्रयुक्तायाममावास्यायां सप्तदशाल्पवयसः स्त्रीपशवः सप्तदशोक्षाणश्च विहिताः। तेषु सर्वेषु पर्यग्निकृतेषु प्रोक्षितेषु च सत्सु स्त्रीपशूनामालम्भं, पुंस्पशूनामुत्सर्गं चाऽऽम्नाय पुनर्द्वितीये तृतीये चतुर्थे च वत्सरे तथैवानुष्ठानमाम्नाय पश्चादाम्नायते—'त्रींस्त्रीनेकैकस्मिन्नहन्यालभेरन्, पञ्चोत्तमेऽहनि' इति। तत्र वत्सरचतुष्टयगतासु चतसृष्वमावास्यासु योऽयं पशूनामुत्सर्गः, तत्र कर्म-

* तत्र विचार्यते—'उत्सृजन्ति' इति किमयं कर्मशेषप्रतिषेधः, 'आलभते, इति कर्मान्तरचोदना। अथवा पूर्वः—पर्यग्निकरणात्परेषां संस्काराणां प्रतिषेधार्थः, उत्तरश्च तेषामेव कालान्तरे प्रतिप्रसवार्थ इति। इति शाबरभाष्ये संशयग्रन्थः।

१ ख. °तान्पशूनु°। २ ज. झ. °सु पर्यग्निकरणे स°। ३ ज. झ. °र्मनि°। ४ ज. झ. ञ. समापनीयाः। ५ क. ख. °न्वहं त्रि°। ६ ज. झ. ञ. °सु संवत्सरेष्व°। ७ ज. झ. वत्सरे। ञ. संवत्सरे। ८ ख. °दश स्वल्प°। च. ज. झ. °दश स्त्री°। ९ क. ख. च. ञ. पुंपशु°।

शेषत्यागो न भवति, किंतूत्कर्षः। कुतः। 'गौश्लीन्'—इति वाक्येनाऽऽलम्भस्या-
भिधानात्। यथा पूर्वं प्राजापत्यानामालम्भोत्कर्षः, तथाऽत्रापि युज्यते। इति प्राप्ते—

ब्रूमः—'गौश्लीनेनैकस्मिन्नहन्यालभेरन्' इत्यत्र पर्यग्निकरणानन्तरभाविप्रोक्षण-
मालम्भनमनूद्यैकाहत्वत्रित्वगुणयोर्विधौ वाक्यं भिद्येत। तथा 'पञ्चोत्तमेऽहन्'—
इत्यत्रोत्तमाहत्वपञ्चत्वयोर्विधौ वाक्यभेदः। तस्मात्—तद्गुणद्वयविशिष्टानामन्येषां
कर्मणां विधिरभ्युपेयः। तथा सति—आरण्यपशुन्यायेन सप्तदशोक्षाणः
पर्यग्निकरणप्रोक्षणाभ्यां समापनीयाः॥ १६॥ १७॥

(चतुर्दशे—दशपेयाभिषेचनीययोर्भेदेन प्रयोगाधिकरणे
सूत्राणि ५५—६०)।

**दशपेये क्रयप्रतिकर्षात्प्रतिकर्षः, ततः प्राचां तत्स-
मानं तन्त्रं स्यात्॥ ५५॥ समानवचनं तद्वत्
॥ ५६॥ अप्रतिकर्षो वाऽर्थहेतुत्वात्सहत्वं विधी-
यते॥ ५७॥ पूर्वस्मिंश्चावभृथस्य दर्शनात्॥५८॥
दीक्षाणां चोत्तरस्य॥ ५९॥ समानः कालसा-
मान्यात्॥ ६०॥**

चतुर्दशाधिकरणमारचयति—

**दशपेये चाभिषेचनीये तन्त्रं भिदाऽथवा।
क्रयसाहित्यतस्तन्त्रं कालभेदेन भिन्नता॥ १८॥**

राजसूये दशपेयाभिषेचनीयसंज्ञकौ द्वौ सोमयागौ। तयोरङ्गानुष्ठानं तन्त्रेण
कार्यम्। कुतः। क्रयसाहित्यात्। 'सह सोमौ क्रीणात्यभिषेचनीयदशपेययोः'
इति श्रूयते। तथा सति—अभिषेचनीयस्य दशपेयस्य च सोमे क्रेतव्ये सति क्रया-
त्पूर्वभाविनां दशपेयाङ्गानामपकर्षात्तन्त्रं स्यात्। इति प्राप्ते—

ब्रूमः—भिन्नकालीनयोरभिषेचनीयदशपेययोरङ्गानां भेदो युक्तः। संसृपाख्या-
भ्यो दशभ्य इष्टिभ्य ऊर्ध्वमपराह्णे दशपेयस्योपक्रमः। ताभ्यः प्राचीनेऽत्यन्तव्य-
वहिते कालेऽभिषेचनीयः। न च क्रयसाहित्यमस्ति। 'सद्यो दीक्षयन्ति, सद्यः

१ ख. ज. झ. ञ. °विनः प्रा°। च. °विनं प्रा°। २ ख. °नीयात°। ज. °नीयत°।
३ झ. °स्य यदा सोमक्रयः, तदा दशपेयस्यापि सो°। ४ क. संमृपाख्या°।

सोमं क्रीणान्ति' इति दर्शयित्वे क्रयस्य सद्यस्कालत्वविधानात्। 'सह सोमौ' इति वचनेन क्रयार्थोपसंवादे साहित्यं विवक्षितम्। तस्मात्—उभयोरङ्गानां भेदः॥१८॥

(पञ्चदशे—वारुणीनिष्कासावभृथस्यार्थकर्मताधिकरणे सूत्राणि ६१—६३)॥

निष्कासस्यावभृथे तदेकदेशत्वात्पशुवत्प्रदानविप्रकर्षः स्यात् ॥६१॥ अपनयो वा प्रसिद्धेनाभिसंयोगात् ॥ ६२ ॥ प्रतिपत्तिरिति चेन्न कर्मसंयोगात् ॥ ६३ ॥

पञ्चदशाधिकरणमारचयति—

निष्कासावभृथे विप्रकर्षोऽथ प्रतिपादनम्।
उतार्थकर्म पशुवदाद्योऽवभृथशब्दतः॥ १९ ॥
कर्मान्तरं तदाऽपि स्यात्प्रतिपत्तिः प्रयाजवत्।
प्राधान्यादार्थकर्म स्यात्तच्चावभृथधर्मकम्॥ २०॥

चातुर्मास्ययागेषु वरुणप्रघासेषु वारुणीमामिक्षां प्रकृत्येदमाम्नायते—'वारुण्या निष्कासेन तुषैश्चावभृथमभ्यवयन्ति' इति। तत्रायं प्रयोगप्रकारः—'वरुणप्रघासेषु नव हवींषि। तेष्वष्टमं हविर्वारुण्यामिक्षा। नवमं हविः काय एककपालः। वारुण्यामामिक्षायां यवपिष्टनिर्मितं मेषमवदधाति। तत आमिक्षासंयुक्तं मेषं सर्वमवदाय हुत्वा तत एककपालेन प्रचर्य भाण्डलिप्तेन वारुण्यामिक्षाया निष्कासेन यवतुषैश्चावभृथमनुतिष्ठन्ति' इति। तत्र संशयः—किं वारुण्यामिक्षायां एकमंशं यवमयमेषसहितं पूर्वं प्रदाय पश्चादेककपालप्रचारादूर्ध्वं निष्कासरूपांशान्तरेण तुषैः प्रचरितव्यमित्येवं प्रचारस्य विप्रकर्षः, उत—कर्मान्तरम्। तत्रापि—किं प्रतिपत्तिकर्म, आहोस्वित्—अर्थकर्म, इति। तत्र—'विप्रकर्षः' इति तावत्प्राप्तम्। कुतः। पशौ तथा दृष्टत्वात्। 'प्रातःसवने वपया प्रचर्य तृतीयसवने हृदयाद्यङ्गैः प्रचारः' इति सवनीयपशौ यथा प्रचारविप्रकर्षः, तद्वदत्रापि। इत्याद्यः पक्षः।

तथा सति—अवभृथशब्दवैयर्थ्यं स्यात्। अतः—'कर्मान्तरम्' इति पक्षान्तरम्। तदाऽपि—आमिक्षाहविःशेषस्य निष्कासस्यास्मिन्कर्मणि हविष्ट्वायोगात्प्रयाज-

---

१ क. ख. च. ञ. °भृथं य°। २ ख. ज. झ. ञ. अत्रायं। ३ ख. °दधाति। ४ ज. झ. ततः कायैनैक°। ५ ज. झ. °क्षानि°। ६ झ. ञ. °यामेक°। ७ ज. झ. ञ. °यर्थ्यप्रसङ्गात्कर्मा°। ८ ज. झ. °क्षाशे°।

न्यायेन प्रतिपत्तिः स्यात् । यथा 'प्रयाजशेषेण हवींष्यभिघारयति' इत्यत्र शेषं संस्कर्तुमभिघारणम्, तथाऽत्रापि निष्कासः संस्क्रियते । इति प्राप्ते—

ब्रूमः—तस्मिन्पक्षे निष्कासस्य संस्कार्यद्रव्यत्वेन प्राधान्यात् 'निष्कासम्' इति विभक्तिव्यत्ययः स्यात् । अतोऽवभृथस्य प्राधान्यायार्थकर्मत्वमेष्टव्यम् । यदि चातुर्मास्येषु नास्त्यवभृथः, तदा तद्धर्मातिदेशाय तन्नामनिर्देशोक्तिः । अन्यदीयद्रव्यशेषस्यापि कर्मान्तरे विनियोगो वाचनिकः । तस्मात्—अर्थकर्म ॥ १९ ॥ २० ॥

( षोडशे— { प्रायणीयनिष्कास उदयनीयनिर्वापस्य संस्कारकर्मताधिकरणे } सूत्राणि ६४—६६ ) ।

**उदयनीये च तद्वत् ॥ ६४ ॥ प्रतिपत्तिर्वाऽकर्मसंयोगात् ॥ ६५ ॥ अर्थकर्म वा शेषत्वाच्छ्रयणवत्तदर्थेन विधानात् ॥ ६६ ॥**

षोडशाधिकरणमारचयति—

**प्रायणीयस्य निष्कासे यो निर्वापोऽर्थकर्म तत् ।**
**निष्कासप्रतिपत्तिर्वोदयनीयस्य संस्कृतिः ॥ २१ ॥**
**उताऽऽद्यः पूर्ववन्मैवं मुख्यस्य प्रकृतत्वतः ।**
**मध्योऽस्तु नोपयोक्तव्यसंस्कारस्य गुरुत्वतः ॥ २२ ॥**

ज्योतिष्टोमे श्रूयते—'प्रायणीयस्य निष्कास उदयनीयमभिनिर्वपति' इति । अत्र पूर्वन्यायेन निष्कासद्रव्यकमुदयनीयसमानधर्मकमर्थकर्म । इत्याद्यः पक्षः ।

मुख्यस्योदयनीयस्य प्रकृतत्वाद्भिन्नप्रकरणाम्नातावभृथधर्मातिदेशवदुदयनीयधर्मातिदेशासंभवान्नार्थकर्मत्वम्, तर्हि निष्कासप्रतिपत्तिः इति मध्यमः पक्षोऽस्तु ।

सोऽपि न संभवति । उपयुक्तसंस्कारादुपयोक्ष्यमाणसंस्कारस्य गरीयस्त्वात् । तस्मात्—उदयनीयस्य संस्कारः ॥ २१ ॥ २२ ॥

इति श्रीमाधवीये जैमिनीयन्यायमालाविस्तर एकादशाध्यायस्य द्वितीयः पादः ॥ २ ॥

| | अत्र पादे | आदितः । |
|---|---|---|
| अधिकरणानि | १६ | ८०२ । |
| सूत्राणि | ६६ | २३६५ । |

---

१ क. °स्कारार्थद्र°

( अथैकादशाध्यायस्य तृतीयः पादः )।

(प्रथमे—वेद्याद्यङ्गानां प्रधानकालान्यकालकर्तव्यताधिकरणे सूत्रम्—)॥

**अङ्गानां मुख्यकालत्वाद्वचनादन्यकालत्वम् ॥ १ ॥**

तृतीयपादस्य प्रथमाधिकरणमारचयति—

**वेद्यादिर्मुख्यकाले स्यात्स्वकाले वेतराङ्गवत् ।**
**मुख्यकाले न पूर्वेद्युरित्याद्युक्तेः स्वकालगः ॥ १ ॥**

वेदिः, वेदः, इध्मा, बर्हिः, इत्यादेः संपादनरूपमङ्गानुष्ठानं प्रधानस्यैव काले कर्तव्यम्। प्रयाजाद्यङ्गेषु मुख्येन सह देशकालकर्त्रैक्यस्य निर्णीतत्वात्। इति चेत्।

न। कालादिभेदस्य वाचनिकत्वात्। 'पूर्वेद्युरमावास्यायां वेदिं करोति' इत्यादिः कालभेदः। 'अप्स्ववभृथेन चरन्ति' इत्यादिर्देशभेदः। अग्नौ सौत्रामण्यां च दक्षिणाभेदात्कर्तृभेदः। 'वडवा दक्षिणा' इति सौत्रामण्यां श्रुतम्। तस्मात्—वेद्यादौ स्वस्वकालादयो द्रष्टव्याः ॥ १ ॥

( द्वितीये—आधानस्य तन्त्रेणानुष्ठानाधिकरणे सूत्रम्— )।

**द्रव्यस्य चाकर्मकालनिष्पत्तेः प्रयोगः सर्वार्थः स्यात्स्वकालत्वात् ॥ २ ॥**

द्वितीयाधिकरणमारचयति—

**प्रतिकर्म पृथक्कार्यमाधानं यदि वा सकृत् ।**
**अन्याङ्गवत्पृथक्कर्मैवं स्वकालत्वसमत्वतः ॥ २ ॥**

'वसन्ते ब्राह्मणोऽग्निमादधीत' इति विहितमाधानं प्रयाजाद्यङ्गवत्प्रतिकर्म पृथक्कार्यम्। इति चेत्।

न। आधानस्य स्वातन्त्र्येण वसन्तादिकाले विहिते तत्कर्मकालेषु पृथगनुष्ठानायोगात्। स्वकालेऽनुष्ठितस्य सर्वकर्मणि संबन्धः समानः। न च—प्रकरणेन विशेषो नियन्तुं शक्यः। आधानस्यानारभ्याधीतत्वात्। 'आहवनीये जुहोति' इत्यादिवाक्येन त्वैष्टिकचातुर्मास्यसौमिकदार्विकहोमेषु प्रयोगः साधारणः प्रतिपाद्यते। तस्मात्—तन्त्रेणानुष्ठानम्। यद्यपि—आधानं नेष्ट्यादिकर्मणां साक्षादङ्गम्, तथाऽपि पृथक्कालाभावादाहवनीयादिद्वारा कर्मोपकारकत्वाच्चाङ्गत्वमभ्युपेत्यैवं चिन्ता ॥ २ ॥

---

१ ञ. °दि किं मुख्यकाले स्वका° । २ च. स्वकालतः। ३ क. ज. झ. ञ. अव° । ४ ज. झ. ञ. °द्यादि(पु) स्व° । ५ ज झ. °थक्त्वार्थमा° । ६ ज. झ. °थक्त्वार्थम् । ७ झ. ञ. °मेषु संबन्धः साधारणः प्रतीयते । ८ ज. झ. तन्मात्रेणानुष्ठेयम् । ९ क. °पेयमित्येवं° । ख. ङ. स. ञ. °पेत्येयं चि° ।

( तृतीये-अग्नीषोमीयादिषु यूपस्य तन्त्रेणानुष्ठानाधिकरणे सूत्रे ३-४)।

**यूपश्चाकर्मकालत्वात् ॥ ३ ॥ एकयूपं च दर्शयति ॥ ४ ॥**

तृतीयाधिकरणमारचयति-

**अग्नीषोमीयमुख्येषु यूपो भिन्नोऽथ तन्त्रता ।**
**उपदेशातिदेशाभ्यां भिन्नो नो कालभेदतः ॥ ३ ॥**

ज्योतिष्टोमे पशवोऽग्नीषोमीयसवनीयानुबन्ध्यास्त्रयो विहिताः । तेषु यूपभेदो युक्तः । कुतः । अग्नीषोमीये प्रत्यक्षवचनेनोपदेशात् । इतरयोश्चोदकाभ्यामतिदेशात् । इति प्राप्ते-

ब्रूमः-न तावदग्नीषोमीयपशोः काले यूपस्योत्पत्तिः । किंतु ततः प्रागेव यूपोत्पत्तिकालः । 'दीक्षासु यूपं छिनत्ति, क्रीते राजनि' इति तत्कालविधानात् । तत आधानवत्सर्वार्थत्वं संभवति । यथा स्वकाले संपन्नमाधानं तत्तद्वाक्यशेषैस्तेषु तेषु कर्मसु, तथा स्वकाले छेदनादिना निष्पन्नो यूपः प्रत्यक्षचोदकोक्तिभ्यां तत्र तत्र विनियोज्यः । तस्मात्-तन्त्रेण यूपः संपाद्यः ॥ ३ ॥

( चतुर्थे-यूपसंस्काराणां तन्त्रेणानुष्ठानाधिकरणे सूत्राणि ५-७ ) ।

**संस्कारास्त्वावर्तेरन्नर्थकालत्वात् ॥ ५ ॥ तत्कालास्तु यूपकर्मत्वात्तस्य धर्मविधानात्सर्वार्थानां च वचनादन्यकालत्वम् ॥ ६ ॥ सकृन्मानं च दर्शयति ॥ ७ ॥**

चतुर्थाधिकरणमारचयति-

**संस्कारास्तक्षणाद्याः किं भिन्नास्तन्त्रेण वाऽग्रिमः ।**
**पशुकालत्वतो मैवं यूपत्वापादका यतः ॥ ४ ॥**

तक्षणपर्यूहणाद्यो यूपसंस्काराः पशुकालीनत्वान्नियोजनादिवत्त्रिषु पशुषु भेदेन कर्तव्याः । इति चेत् ।

मैवम् । छेदनवत्तक्षणादीनामपि यूपकालीनत्वात् । न खलु यूपो नाम कश्चिल्लोके प्रसिद्धः पदार्थोऽस्ति, येन तस्य च्छेदनमात्रेण तद्विधिः कृतार्थः स्यात् । किं तर्हि च्छेदनतक्षणादिना यूपसंज्ञामापन्नित्यैव विधीयते । तथा सति यैश्छेदनतक्षणा-

---

१ ख. च. ज. झ. ञ. °नेन तद्यू° । २ क. ख. न तावद्यमग्नी° च. न तावद्वियमग्नी° । ३ क. °त्पत्तिकालः । किं° । ४ ज. झ. °क्यविशे° । ५ क. °त्यङ्गचोदनोक्ति° । ६ ज. झ. ञ. विनियुज्यते । ७ ज. झ. ञ. संपादनीयः । ८ ख. ज. ञ. °त्यैव वि° ।

दिसंस्कारैर्यूपत्वमापद्यते, ते सर्वे छेदनकाल एवानुष्ठेयाः । तस्मात्–त्रिष्वपि पशुषु यूपच्छेदनवत्तक्षणपर्यूहणादयस्तन्त्रेणानुष्ठेयाः ॥४॥

( पञ्चमे–स्वरोस्तन्त्रेणानुष्ठानाधिकरणे सूत्राणि ८–१२ )॥

स्वरुस्तन्त्रापवर्गः स्यादस्वकालत्वात् ॥ ८ ॥ साधारणो वाऽनुनिष्पत्तिस्तस्य साधारणत्वात् ॥ ९ ॥ सोमान्ते च प्रतिपत्तिदर्शनात् ॥ १० ॥ तत्कालो वा प्रस्तरवत् ॥११॥ न वोत्पत्तिवाक्यस्वात्प्रदेशात्प्रस्तरे तथा ॥ १२ ॥

पञ्चमाधिकरणमारचयति–

स्वरुर्भिन्नोऽथवैकः स्यादस्वकालत्वतो भिदा ।
प्राथम्यमेकशकले तन्त्रं स्यादविशेषतः ॥ ५ ॥

शकलः स्वरुरित्युच्यते । स चे भिन्नेषु पशुषु भिन्नः संपाद्यः । कुतः । अस्वकालत्वात् । न हि यूपस्येव स्वरोः कश्चित्प्रातिस्विकः कालः श्रूयते । ततः 'स्वरुणा स्वधितिना वा पशुमनक्ति' इत्यञ्जनकालीनत्वावगमादञ्जनवद्भेदः । इति प्राप्ते--

ब्रूमः--' यः प्रथमः शकलः परापतेत् , स स्वरुः कार्यः, इति श्रुतं प्राथम्यमेकस्मिन्नेव शकले युक्तम् । स च शकलो यूपकालीनः पशुविशेषसंबन्धे हेतुमलभमानो यूपवत्तन्त्रेण सर्वेषु पशुषूपकरिष्यति ॥५॥

( षष्ठे--अहर्गणे कृष्णविषाणाप्रासनस्यान्त्याहानियमाधिकरणे सूत्रे १३–१४ )।

अहर्गणे विषाणाप्रासनं धर्मविप्रतिषेधादन्त्ये प्रथमे वाऽहनि विकल्पः स्यात् ॥ १३ ॥ पाणेस्त्वश्रुतिभूतत्वाद्विषाणानियमः स्यात्प्रातःसवनमध्यत्वाच्छिष्टे चाभिप्रवृत्तत्वात् ॥ १४ ॥

षष्ठाधिकरणमारचयति–

अहर्गणे विषाणायास्त्यागोऽह्नोः किं विकल्प्यते ।
किंवा नियम्यतेऽन्त्येऽह्नि, स्यादाद्यो बाधसाम्यतः ॥ ६ ॥

१ ख. च भिन्नेषु यूपेषु भि° । ज. झ. च त्रिषु पशुषु भ° । २ ज. झ. संपादनीयः । ३ क. ख. ग. °त्वाद° । ४ ख. °विषयसं° । ५ क. °न्त्ये हि स्या° ।

कण्डूयनं न हस्तेन श्रुतमर्थात्तु तद्भवेत् ।
श्रुताद्बाधाद्वरं तस्य बाधोऽतोऽन्त्ये नियम्यताम् ॥ ७ ॥

'कृष्णविषाणया कण्डूयेत' 'नीतासु दक्षिणासु चात्वाले कृष्णविषाणां प्रास्यति' इति ज्योतिष्टोमे श्रुतं प्रासनमहर्गणे द्विरात्रादौ चोदकप्राप्तम् । तत्र-'प्रथमे चरमे वाऽहनि' इत्येवं विकल्प्यते । कुतः । उभयत्र बाधसाम्यात् । यदि प्रथमेऽहनि प्रास्येत, तदानीमुत्तरेष्वहःसु चोदकप्राप्तं दक्षिणानयनात्प्राचीनं विषाणया कण्डूयनं बाध्येत । चरमेऽहनि तत्प्रासने पूर्वेष्वहःसु दक्षिणानयनादूर्ध्वं हस्तेन कण्डूयनं चोदकप्राप्तं बाध्येत । तस्मात्-समबलत्वेन विकल्पः। इति प्राप्ते-

ब्रूमः-न हि हस्तेन किंचिच्छ्रुतम् । किंतु विषाणायां त्यक्तायामर्थात्प्राप्यते । कामं तस्य बाधोऽस्तु । श्रुतं विषाणया कण्डूयनमबाधितुं चरमेऽहनि प्रासनं नियम्यते ॥ ९ ॥

( सप्तमे-राजसूये नानाबीजेषु वाग्विसर्गस्य चरमकालनियमाधिकरणे सूत्रम्- ) ।

वाग्विसर्गो हविष्कृता बीजभेदे तथा स्यात् । १५ ॥

सप्तमाधिकरणमारचयति-

नानाबीजेषु यागेषु वाग्विसर्गश्च पूर्ववत् ।
शङ्किते तद्विधौ न स्यादविधित्वे तदुत्तरम् ॥ ८ ॥

राजसूये नानाबीजयुक्ता यागाः श्रुताः-'अग्नये गृहपतये पुरोडाशमष्टाकपालं निर्वपति कृष्णानां व्रीहीणां सोमाय वनस्पतये श्यामाकं चरुम्' इत्यादिना । प्रकृतौ प्रणीताप्रणयनकाले नियमिताया वाचो हविष्कृदाह्वानकाले विसर्गः श्रुतः । स चात्र चोदकप्राप्तः । तत्र-'प्रथमे चरमे वा हविष्कृदाह्वानकाले वाग्विसर्गो विकल्पितः' इति पूर्वः पक्षः । 'चरम एव' इति राद्धान्तः ।

अत्रेयं पूर्वपक्षिणोऽभ्यधिका शङ्का-'हस्तेन कण्डूयनं न विहितम् । वाग्विसर्गस्तु विहितः' इति ।

तत्रेदमुत्तरम्--विहितस्य वाङ्नियमस्यावधित्वेनायं हविष्कृदाह्वानकालीनो वाग्विसर्गोऽनूद्यते । रागप्राप्तत्वान्नासौ विधीयते-इति । तस्मात्-प्रासनवद्विसर्गोऽपि चरम एव काले नियम्यते ॥ ८ ॥

(अष्टमे-अग्नीषोमीये पौरोडाशिककाल एव वाग्विसर्गाधिकरणे-सूत्रम्)।

पशौ च पुरोडाशे समानतन्त्रं भवेत् ॥ १६ ॥

---

१ ख. ज. झ. द्विरात्रादौ । २ च. °ङ्कितैत° । ३ ञ. °धित्वं त° । ४ ज. झ. ञ. °नाविधवी° । ५ ज. झ. अत्र येयं ।

अष्टमाधिकरणमारचयति—

**पशुकाले पुरोडाशकाले वा वाग्विसर्जनम्।**
**तन्त्रित्वादादिमोऽन्त्यः स्याद्वाग्यमात्कर्तृसंस्कृतिः॥ ९॥**

यद्यपि पशौ हविष्कृदाह्वानं नास्ति, तथाऽपि कृत्वाचिन्तेयम्। अत्र पशौ हविष्कृदाह्वानकाले वाग्विसर्जनीया। कुतः। पशोस्तन्त्रित्वात्। पशुपुरोडाशस्य प्रसङ्गित्वेन पशावनुष्ठितैरेवाङ्गैरुपकारसिद्धेः। इति प्राप्ते—

ब्रूमः--वाग्यमो नादृष्टार्थः। किंतु—तत्कर्तृसंस्कारार्थः। तथा सति पुरोडाशे तदभावे सत्यसंस्कृतकर्त्रा तदनुष्ठानं प्रसज्येत। तस्मात्—नियमितां वाचं पुरोडाशस्य हविष्कृदाहूवानकाले विसृजेत्॥ ९॥

( नवमे—अग्निचयनेऽग्निविमोकस्य मतभेदे व्यवस्थाधिकरणे सूत्राणि १७–२० )।

**अग्नियोगः सोमकाले तदर्थत्वात्संस्कृतकर्मणः परेषु साङ्गस्य तस्मात्सर्वापवर्गे विमोकः स्यात्॥ १७॥ प्रधानापवर्गे वा तदर्थत्वात्॥ १८॥ अवभृथे च तद्वत्प्रधानार्थस्य प्रतिषेधोऽपवृक्तार्थत्वात्॥ १९॥ अहर्गणे च प्रत्यहं स्यात्तादर्थत्वात्॥ २०॥**

नवमाधिकरणमारचयति—

**किमग्निमोकः सर्वान्ते मुख्यान्ते वाऽग्रिमो यतः।**
**योगे सर्वार्थता मैवं मुख्यार्थोऽसौ तदन्तिमः॥ १०॥**

अग्निचयने योगविमोकावग्नेः श्रुतौ। 'अग्निं युनज्मि'—इति मन्त्रहोमो योगः। 'इमं स्तनम्' इति मन्त्रहोमो विमोकः। स च साङ्गप्रधानविषयसर्वप्रयोगान्ते कर्तव्यः। कुतः। योगस्य सर्वार्थत्वेन मध्ये तद्विमोकासंभवात्। इति प्राप्ते--

ब्रूमः--'पञ्चभिर्युनक्ति पाङ्क्तो यज्ञो यावानेव यज्ञस्तमाप्नोति' इत्यनेन मोचने यज्ञप्राप्तिवचनेन योगस्य प्रधानार्थत्वावगमात्प्रधानकर्मणोऽन्ते विमोकं कुर्यात्॥१०॥

एतदेवाधिकरणं वार्तिककारमतेनाऽऽरचयति—

१ क. °संस्थितिः। २ च. ज. झ. ञ. तत्र। ३ क. °तु—यत्क° । ४ ख. ज. झ. ञ. नियतां। ५ ज. झ. °विभागाव° । ६ च. °षयः स° । ७ क. ख. च. ञ. °ब्यः। यो°। ८ ख. च. ज. झ. ञ. °नेष य° । ९ ज. झ. °चनय° ।

व्युत्पन्नौ तावुभौ पक्षावुत्पत्तावविशेषतः ।
सर्वार्थत्वं गुणे भाति सर्वान्तेऽतो विमोचनम् ॥ ११ ॥

प्रधानान्ते विमोकः—इति यो भाष्ये सिद्धान्तः, स एवात्र पूर्वः पक्षः । 'अग्निं युनज्मि—शवसा घृतेनेति जुहोति, अग्निमेव तद्युनक्ति' इत्येतद्योगस्योत्पत्तिवाक्यम् । 'पञ्चभिर्युनक्ति'—इति गुणविधिः । तत्र न तावदुत्पत्तौ प्रधानगामी योग इत्यस्यार्थस्य गमको विशेषोऽस्ति । गुणविधिशेषेऽपि यज्ञशब्दो न प्रधानमात्रमाचष्टे, किंतु साङ्गम् । तस्मात्—योगस्य सर्वार्थत्वाद्विमोकोऽपि सर्वान्ते कर्तव्यः ॥ ११ ॥

( दशमे—उपसत्कालस्य सुब्रह्मण्याह्वानस्य तन्त्रेणानुष्ठानाधिकरणे सूत्रम्— ) ।

सुब्रह्मण्या तु तन्त्रं दीक्षावदन्यकालत्वात् ॥ २१॥

दशमाधिकरणमारचयति—

उपसत्कालसुब्रह्मण्यागणो भिद्येत वा न वा ।
प्रधानभेदाद्भेदः स्यात्कालभेदान्न भिद्यते ॥ १२ ॥

अहर्गणेषूपसत्कालीनं सुब्रह्मण्याह्वानं प्रधानभेदाद्भिद्यते । इति चेत् । न । पूर्वकालीनतया यूपन्यायेन तन्त्रत्वात् ॥ १२ ॥

( एकादशे—सुत्याकालीनसुब्रह्मण्याह्वानस्य भेदेनानुष्ठानाधिकरणे सूत्राणि २२-३२) ।

तत्काला त्वावर्तेत प्रयोगतो विशेषसंबन्धात् ॥ २२ ॥ अप्रयोगाङ्गमिति चेत् ॥ २३ ॥ स्यात्प्रयोगनिर्देशात्कर्तृभेदवत् ॥ २४ ॥ तद्भूतस्थानादाग्निवदिति चेत्तदपवर्गस्तदर्थत्वात् ॥ २५ ॥ अग्निवदिति चेत् ॥ २६ ॥ न प्रयोगसाधारण्यात् ॥ २७॥ लिङ्गदर्शनाच्च ॥२८॥ तद्धि तथेति चेत् ॥ २९ ॥ नाशिष्टत्वादि-

---

१ क. व्युत्पन्नौ । २ ज. झ. भाष्यसि° । ३ क. ज. °तद्याग° । ४ क. ख. ज. °मात्रत्वमा° । च. °माच° । ५ च. °गणे भि° । ७ ज. झ. °दादुगृह्याद्भि° ।

तदन्यायत्वाच्च ॥ ३० ॥ विध्येकत्वादिति चेत्
॥३१॥ न कृत्स्नस्य पुनःप्रयोगात्प्रधानवत् ॥३२॥

एकादशाधिकरणमारचयति—

सुत्याकालीनमाह्वानं तन्त्रं स्याद्भिद्यतेऽथवा ।
यूपाहुतिर्यथा तन्त्रं सुत्याकालतया भिदा ॥ १३ ॥

अहर्गणेषु प्रथमसुत्यासंनिधौ कृतमपि सुब्रह्मण्याह्वानं सर्वेष्वहःसूपकरोति । यथा यूपैकादशिन्यां दृष्टिगोचरे देशे क्रियमाणा यूपाहुतिः सत्यप्यर्थादेकयूपसंनिधौ सर्वेषामुपकारः, तद्वत् । इति प्राप्ते—

ब्रूमः—अन्यसुत्याकालीनेनाऽऽह्वानेनात्र नास्त्युपकारः । कालविशेषस्यापि तत्प्रयोजकत्वात् । अन्यथा ग्रहादीनामपि तन्त्रत्वापत्तेः । तस्मात्—आह्वानं भिद्यते ॥१३॥

( द्वादशे—देशपात्रर्त्विजामन्यप्रयोगे पूर्वदेशाद्यादानस्यैच्छिकताधिकरणे सूत्रम्— ) ।

लौकिकेषु यथाकामी संस्कारानर्थलोपात् ॥ ३३ ॥

द्वादशाधिकरणमारचयति—

देशपात्रर्त्विजोऽन्यस्मिन्प्रयोगेऽन्य उतैच्छिकाः ।
भुक्त्यर्थपर्णवत्तेऽन्ये वासोवत्ते स्युरैच्छिकाः ॥ १४ ॥

'समे यजेत' इत्युक्तो देशः, जुह्वादीनि पात्राणि, अध्वर्युप्रमुखा ऋत्विजः। ते चैकस्मिन्प्रयोग उपयुक्ता निरिष्टकत्वान्न प्रयोगान्तरमर्हन्ति । इष्टान्निर्गता निरिष्टाः; कुत्सिता निरिष्टा निरिष्टकाः । पुनः प्रयोगानर्हा इत्यर्थः । यथा भोजन उपयुक्तं कदलीपर्णं प्रक्षाल्यापि न पुनस्तच्छिष्टाः स्वी कुर्वन्ति, तथाऽत्राप्यन्ये देशादयः प्रयोगान्तरे संपाद्याः । इति प्राप्ते—

ब्रूमः—यथा वस्त्रं पूर्वदिने प्रावरणायोपयुक्तमपि दिनान्तरे निरिष्टकं न भवति, शिष्टास्तद्वासो दिनान्तरे स्वी कुर्वन्ति, तद्वदत्रापि द्रष्टव्यम् । 'इदं निरिष्टकम्, इदं न' इत्यत्र शिष्टाचार एव प्रमाणम् । शिष्टाश्च देशादि नियमेन न त्यजन्ति । तस्मात्—ऐच्छिकाः ॥१४॥

---

१ क. च. °तितया तन्त्रं । ञ. °तिर्यथा तन्त्रं । २ क. ख. °ण्याऽऽह्वानं । ञ. झ. °णाया आह्वते: स° । ञ. °णा त्वाज्याहु° । ३ ञ. °पकरोति, त° । ४ ज. झ तन्त्रापं° । ५ ज. झ. °पलाशादिपर्ण । ६ क. ख. च. ञ. °त्रं प्रक्षाल्यापि पू° ।

( त्रयोदशे- पात्राणां तन्त्रस्य नियमाधिकरणे—सूत्राणि ३४-४२ )।

यज्ञायुधानि धार्येरन्प्रतिपत्तिविधानादृजीषवत् । ॥ ३४ ॥ यजमानसंस्कारो वा तदर्थः श्रूयते तत्र यथाकामी तदर्थत्वात्॥ ३५ ॥ मुख्यसाधारणं वा मरणस्यानियतत्वात् ॥ ३६ ॥ यो वा यजनीयेऽहनि म्रियेत सोऽधिकृतः स्यादुपवेषवत् ॥ ३७ ॥ न शास्त्रलक्षणत्वात् ॥ ३८ ॥ उत्पत्तिर्वा प्रयोजकत्वादाशिरवत् ॥ ३९ ॥ शब्दासामञ्जस्यमिति चेत् ॥ ४० ॥ तथाऽऽशिरे ॥ ४१ ॥ शास्त्रात्तु विप्रयोगस्तत्रैकद्रव्यचिकीर्षा प्रकृतावथेहापूर्वार्थवद्भूतोपदेशः ॥ ४२ ॥

त्रयोदशाधिकरणमारचयति—

मा भूदन्यत्वानियमः पात्रे तन्त्रं किमैच्छिकम् ।
नियतं वाऽग्रिमो देशवन्मैवं प्रतिपत्तितः ॥ १५ ॥

देशपात्रर्त्विजां साधारण्येनान्यत्वनियमे निवारिते सति पुनः पात्रेषु नियमानियमसद्भावश्चिन्त्यते । 'प्रथमप्रयोगे यान्युपयुक्तानि पात्राणि तान्येव प्रयोगान्तरेषु' इति नियमो नास्ति, उत—अस्ति, इति संशयः । यथा देशे कर्तृषु च 'त एव' इति नियमो नास्ति। ऐच्छिकत्वस्योक्तत्वात् । तथा पात्रेष्वपि । इति चेत् । मैवम्। आमरणं पात्राणां धारणीयत्वात् । 'आहिताग्निमग्निभिर्दहन्ति, यज्ञपात्रैश्च' इति प्रतिपत्तिविधानेनाऽऽमरणं धारणमेवावगम्यते । ननु—'पात्रैः' इति तृतीयया गुणभावावगमादर्थकर्मेदम्, न तु प्रतिपत्तिः । तथा सति पात्रान्तरैरपि दाहसिद्धेर्न धारणनियमः—इति चेत् । मैवम् । 'दक्षिणे पाणौ जुहूमासादयति' इति द्वितीयया प्रतिपाद्यत्वावधारणात्पूर्वेषामेव धारणम् । तस्मात्—सर्वेषु प्रयोगेषु पात्राणां तन्त्रम् ।

---

१ ख. °न्यत्र नि° । २ ख. ज. झ. तत्त्वं ।३ क. ज. झ. पात्रान्तरेषु नियमादृष्टस° । ञ. °पात्रान्तरेषु नियमसदस° । ४ ज. झ. एत । ५ ज. झ. °कस्यो° । ६ क. °रणम् । तैर्दहत्वा° । ७ ज. झ. °णमव° । ८ च. ज. झ. °याऽर्थगु° । ९ ज. झ. पात्रान्तराणां । १० झ. तन्त्रता ।

(चतुर्दशे—पात्राणामाधानमारभ्य धारणनियमाधिकरणे सूत्राणि ४३–४५)।

* प्रकृत्यर्थत्वात्पौर्णमास्याः क्रियेरन् ॥ ४३ ॥ अग्न्याधेये वाऽविप्रतिषेधात्तानि धारयेरन्मरणस्यानिमित्तत्वात् ॥ ४४ ॥ प्रतिपत्तिर्वा यथाऽन्येषाम् ॥ ४५ ॥

चतुर्दशाधिकरणमारचयति—

किं पौर्णमासीमारभ्य यद्वाऽऽधानमियं धृतिः।
प्रकृत्यर्थतयाऽऽद्यः स्यान्मरणानियमात्परः ॥ १६ ॥

अनारभ्याधीतानां पात्राणां प्रकृतिगामितया पौर्णमासीमारभ्य धारणम्। इति प्राप्ते—

ब्रूमः—आधानकाले पवमानेष्टिषु चोदकप्राप्तत्वात्पात्राण्याधानमारभ्य धारयितव्यानि। अन्यथा—आधानपौर्णमास्योर्मध्ये यजमानस्य कदाचिन्मरणे पात्राभावेन दाहाभावप्रसङ्गात्। तस्मात्—'आधानमारभ्य धारणम्' इत्ययं परपक्षोऽभ्युपगन्तव्यः ॥ १६ ॥

(पञ्चदशे—सर्वसोमानामुपरिष्टात्प्राजापत्यप्रचाराधिकरणे सूत्राणि ४६–५२)।

उपरिष्टात्सोमानां प्राजापत्यैश्चरन्तीति सर्वेषामविशेषाद्वाच्यो हि प्रकृतिकालः ॥ ४६ ॥ अङ्गविपर्यासो विना वचनादिति चेन्न ॥ ४७ ॥ उत्कर्षः संयोगात्कालमात्रमितरत्र ॥ ४८ ॥ प्रकृतिकालासत्तेः शस्त्रवतामिति चेत् ॥४९॥ न श्रुतिप्रतिषेधात् ॥५०॥ विकारस्थान इति चेत् ॥५१॥ न चोदनापृथक्त्वात् ॥ ५२ ॥

पञ्चदशाधिकरणमारचयति—

---

* [illegible] कारस्त्वस्याप्यधिकरणस्य पूर्वस्मिन्नेवाधिकरणेऽन्तर्भावं मन्यते।

---

१ क. किं पूर्णं॰। ख. च. ज. झ. ञ. किं पौर्णमासमा॰। २ ज. झ. ॰कृतगा॰। ३ ख. ॰त्राणाऽऽधा॰। ४ च. ॰स्यपरः प॰। ५ ख. ञ. परः प॰। ६ ज. झ. परमः प॰।

प्राजापत्यप्रचारः किमार्भवे शस्त्रिसोमतः ।
ऊर्ध्वं वा विकृतौ वोत परस्तात्सर्वसोमतः ॥ १७ ॥
आर्भवे चोदकादुक्त्यासत्तिभ्यां तदनन्तरः ।
श्रुतिबाधस्तदा तस्मात्तृतीयो विकृतित्वतः ॥ १८ ॥
पशवो न हि सोमस्य विकारा अविशेषतः ।
उक्तत्वात्सर्वसोमानामुपरिष्टात्प्रचर्यते ॥ १९ ॥

वाजपेये सप्तदशप्राजापत्यप्रचारस्य काले चतुर्धा संशयः । तत्र तावदयं प्रयोगक्रमः—तृतीयसवने प्रथममार्भवः पवमानः, ततो वैश्वदेवग्रहपर्यन्ताः शस्त्रवन्तः सोमाः, ततोऽशस्त्रिष्ववशिष्टेषु सोमग्रहेषु प्रचीर्णेष्वग्निष्टोमसाम्न ऊर्ध्वमुक्थ्यादयः सोमविकाराः—इति । एवं स्थिते प्राजापत्यपशूनामार्भवकाले प्रचारः । कुतः । प्रकृतौ तस्य प्रचारकालत्वेन चोदकप्राप्तत्वात् । इत्याद्यः पक्षः ।

'उपरिष्टात्सोमानां प्राजापत्यैश्चरन्ति' इति वचनेन सोमग्रहप्रचारादूर्ध्वं कालो विधीयते । यदि 'प्रातःसवनमाध्यंदिनसवनसोमेभ्य ऊर्ध्वत्वमार्भवकालस्यास्ति' इति योज्येत, तदा चोदकेनैव तत्कालप्राप्तेर्वचनमनर्थकं स्यात् । अतः 'तृतीयसवनसोमानामुपरि' इति वक्तव्यम् । यदि तत्र 'सर्वसोमानामुपरि' इति विवक्ष्येत, तदा चोदकप्राप्तः कालो विप्रकृष्यते । ततः प्रत्यासत्तये 'शस्त्रिणां वैश्वदेवग्रहान्तानां सोमानामुपरि' इति द्वितीयः पक्षः ।

'उपरिष्टात्सोमानाम्' इत्यविशेषप्रवृत्ता श्रुतिः कतिपयसोमोर्ध्वत्वविवक्षायां बाध्येत । तस्मात्—शस्त्रवतां तद्रहितानां सोमानामुपरिष्टादग्निष्टोमे यज्ञायज्ञीयसाम्ना संस्थिते सति स प्रचारः कार्यः । तस्य विकृतिकालत्वात्, प्राजापत्यपशूनां च विकृतिरूपत्वात् । इति तृतीयः पक्षः ।

सोमविकाराणामेवायं कालः । पशवस्तु न सोमविकाराः । तस्मात्—अविशेषवचनानुसारेण प्राकृतानां वैकृतानां च सर्वेषां सोमानामुपरिष्टात्प्राजापत्यपशुप्रचारः । इति सिद्धान्तः ॥१७॥१८॥१९॥

( षोडशे—सवनीयपुरोडाशे देवतोत्कर्षाधिकरणे सूत्रे ५३–५४)।

उत्कर्षे सूक्तवाकस्य न सोमदेवतानामुत्कर्षः पश्वनङ्ग-

१ ख. तीये वि° । २ क. ज. झ. ञ. °त्याचार्य° । ३ ज. °ले सं । ४ ज. झ. ञ. °स्य पशुप° । ५ क. मान्ताप्राजा° । ६ ख. °नमाध्यंदिनसवनसो° । ज. झ. ञ. °नग-तसो° । ७ ज. झ. सत्रिणां । ८ ख. ज. झ. °कारः । त° । ९ ख. ज. झ. राद्धान्तः ।

त्वात्, यथा निष्कर्षेऽनन्वयः ॥ ५३ ॥ वाक्यसंयोगाद्वोत्कर्षः समानतन्त्रत्वादर्थलोपादनन्वयः ॥ ५४ ॥

षोडशाधिकरणमारचयति—

सवनीयपुरोडाशे देवोत्कर्षो न विद्यते ।
अस्ति वा पश्वनङ्गत्वान्नान्वयाभावतोऽस्ति सः ॥ २० ॥

ज्योतिष्टोमे सवनीयपशुस्तन्त्री, सवनीयपुरोडाशः प्रसङ्गी, तस्मिन्पुरोडाशे देवता आम्नाताः—'भृज्जन्निन्द्राय हरिवते धाना पूषण्वते करम्भम्' इत्यादिना । तत्र देवतावाचिनां हरिवदिन्द्रपूषण्वदिन्द्रादिपदानामुत्कर्षो विषयः । तस्य चैवं संभावना—सवनीयपशोस्तावदनुयाजा उत्कृष्यन्ते, 'आग्निमारुतादूर्ध्वमनुयाजैश्चरन्ति' इति—अनुयाजानामाग्निमारुतशस्त्रादधस्तनं स्वकालं निर्वाप्योर्ध्वकालस्य विहितत्वात् । उत्कृष्टेष्वनुयाजेषु तदुत्तरकालीनः सूक्तवाकोऽर्थादुत्कृष्यते । तस्मिंश्च सूक्तवाके देवतावाचीनि पदानि प्रयोक्तव्यानि । प्रसङ्गिनः पुरोडाशस्य पृथक्सूक्तवाको नास्ति । ततः पशुसंबन्धिसूक्तवाकोत्कर्षेण पुरोडाशसंबन्धिदेवतावाचिपदोत्कर्षः संभावितः । स चोत्कर्षो नास्ति—इति तावत्प्राप्तम् । कुतः । तासां देवतानां पश्वनङ्गत्वात् ।

मैवम् । सूक्तवाकमन्तरेण पृथगुच्चारितानां देवतापदानामन्वयाभावात् । सूक्तवाके त्वस्त्यन्वयः । तथा हि—'अग्निमद्य होतारमवृणीतायं यजमानः' इत्यस्मिन्प्राशुके सूक्तवाके 'भृज्जन्निन्द्राय हरिवते धाना अयं यजमानः' इत्यस्त्यन्वयः । तस्मात्—उत्कर्षोऽस्ति । इति सिद्धान्तः ॥ २० ॥

इति श्रीमाधवीये जैमिनीयन्यायमालाविस्तर एकादशाध्यायस्य तृतीयः पादः ॥ ३ ॥

| | अत्र पादे | आदितः। |
|---|---|---|
| अधिकरणानि | १६ | ८१८ । |
| सूत्राणि | ५४ | २४१९ । |

---

१ ज. झ. ञ. तस्मिंश्च पु° । २ ज. झ. भृज्यग्नि° । ३ ख. ज. निर्वार्योर्ध्व° । ख. झ. ञ. निवार्योर्ध्व° । ४ ज. झ. ञ. °नि न च-प्र° । ५ ज. झ. ञ. °कोऽस्ति । ६ क. ख. °शुबन्धसू° । ज. झ. °शुबन्धि° । ७ ज. झ. भृज्यग्नि° ।

( अथैकादशाध्यायस्य चतुर्थं पादः )।

( प्रथमे राजसूये सौमापौष्णादिकेऽङ्गानां भेदेनानुष्ठानाधिकरणे सूत्राणि १—३ )।

**चोदनैकत्वाद्राजसूयेऽनुक्तदेशकालानां समवायात्तन्त्रमङ्गानि ॥ १ ॥ प्रतिदक्षिणं वा कर्तृसंबन्धादिष्टिवदङ्गभूतत्वात्समुदायो हि तन्निर्वृत्त्या तदेकत्वादेकशब्दोपदेशः स्यात् ॥ २ ॥ तथा चान्यार्थदर्शनम् ॥ ३ ॥**

चतुर्थपादे प्रथमाधिकरणमारचयति—

**सौमापौष्णादिके तन्त्रमङ्गानामुत भिन्नता ।**
**तन्त्रं फलैक्यतो मैवं दक्षिणाकर्तृभेदतः ॥ १ ॥**

राजसूये श्रूयते—'सौमापौष्ण एकादशकपालः, ऐन्द्रापौष्णश्चरुः, पौष्णश्चरुः, श्यामो दक्षिणा' इति । 'आग्नावैष्णव एकादशकपालः, ऐन्द्रावैष्णवश्चरुः, वैष्णवस्त्रिकपालः, वामनो दक्षिणा' इति । तत्र द्वयोस्त्रिकयोस्तन्त्रेणाङ्गानुष्ठानम् । कुतः । कृत्स्नस्य राजसूयस्य फलैकत्वेन तदेकदेशयोरनयोरपि फलैकत्वात् । न च—दर्शपूर्णमासयोरिवात्र कालभेदोऽस्ति, येनाऽऽवापः शङ्क्येत । इति प्राप्ते—ब्रूमः—श्यामवामनयोर्दक्षिणयोर्भेदेन ताभ्यामानतानां कर्तॄणां भेदादङ्गानि भिद्यन्ते ॥१॥

( द्वितीये—राजसूये कर्तुस्तन्त्रताधिकरणे सूत्राणि ४—८ )।

**अनियमः स्यादिति चेत् ॥ ४ ॥ नोपदिष्टत्वात् ॥५॥ लाघवातिपत्तिश्च॥६॥प्रयोजनैकत्वात्॥७॥ विशेषार्था पुनः श्रुतिः ॥ ८ ॥**

द्वितीयाधिकरणमारचयति—

**राजसूये प्रक्रमस्थकर्तारो नियता न किम् ।**
**नियता वा दक्षिणानां भेदादनियता अमी ॥ २ ॥**

---

१ ज. झ. ञ. °पादस्य प्र° । २ च. येनापवादः ।

अनेकसमुदायात्मराजसूयाय ते वृताः।
आदौ ते न नियम्यन्ते विशेषे दक्षिणाभिदा ॥३॥

राजसूयस्य प्रक्रमे ये कर्तारः, त एवाऽऽसमाप्तेर्न नियम्यन्ते। दक्षिणादिभेदेन कर्तृभेदस्य पूर्वमुक्तत्वात्। तथा च यया दक्षिणया ये परिक्रीताः, ते तदीयकर्मानुतिष्ठन्तु। इतरस्मिन्कर्मणि दक्षिणान्तरेण ते वाऽन्ये वा परिक्रीयन्ताम्। इति प्राप्ते—

ब्रूमः—'अनेन राजसूयसंज्ञेन कर्मसमुदायेन मां याजय' इत्येवमादौ यजमानेन वृतत्वादा समाप्तेस्त एव कर्तारः। ईदृशमेव वरणं न्याय्यम्। समुदायस्यैकफलत्वात्। प्रतिकर्म पृथग्वरणे गौरवात्। कदाचिद्वरीतव्यानामलाभे विघ्नप्रसङ्गाच्च। कर्त्रैक्येऽपि कर्तृत्वधर्मविशेषे दक्षिणाभेद उपयुज्यते। पूर्वकर्तृत्वाधिष्ठानभूता एव वामनेन क्रीताः सन्त आग्नावैष्णवादिनिकं कुर्युः, अयुतेन क्रीताः सन्तोऽभिषेचनीयम्, इति कर्तृत्वधर्मविशेषः। तस्मात्—नियताः। ॥२॥३॥

(तृतीये-अवेष्टावङ्गानां भेदाधिकरणे सूत्राणि ९—११)।

अवेष्टौ चैकतन्त्र्यं स्याल्लिङ्गदर्शनात् ॥ ९ ॥ वचनात्कामसंयोगे ॥ १० ॥ क्रत्वर्थायामिति चेन्न वर्णसंयोगात् ॥ ११ ॥

तृतीयाधिकरणमारचयति—

अवेष्टावङ्गतन्त्रत्वं भेदो वा लिङ्गतोऽग्रिमः।
नोत्पत्तौ दक्षिणाभेदाल्लिङ्गं बाह्यप्रयोगगम् ॥ ४ ॥

राजसूयप्रकरणे श्रूयते—'दिशामवेष्टयो भवन्ति' इति। ताश्चावेष्टय उत्पत्तिवाक्यैरेवमाम्नायन्ते—'आग्नेयमष्टाकपालं निर्वपति हिरण्यं दक्षिणा। ऐन्द्रमेकादशकपालमृषभो दक्षिणा। वैश्वदेवं चरुं पिशङ्गी पष्ठौही दक्षिणा। मैत्रावरुणीमामिक्षां वशा दक्षिणा। बार्हस्पत्यं चरुं शितिपृष्ठो दक्षिणा' इति। तास्ववेष्टिषु तन्त्रेणाङ्गानामनुष्ठानम्। कुतः। तल्लिङ्गात्। 'यदि ब्राह्मणो यजेत, बार्हस्पत्यं मध्ये निधायाऽऽहुतिमाहुतिं हुत्वा तमभिघारयेत्। यदि राजन्यः, ऐन्द्रम्। यदि वैश्यः, वैश्वदेवम्' इति। तत्र मध्ये निधानं प्रयोगैक्ये लिङ्गम्। तदैक्याच्च तन्त्रम्। इति प्राप्ते—

ब्रूमः—उत्पत्तिगतेन दक्षिणाभेदेन प्रयोगभेदावगमादङ्गानां भेदः। लिङ्गं तु बहिष्प्रयोगविषयम्। अस्ति च प्रयोगद्वयम्। राजसूयप्रकरणपाठादन्तःप्रयोग

१ च. °स्य ये। २ ज. वाऽन्यया प°। ३ ख. ज. झ. ञ. °संज्ञकेन। ४ ज. झ. °ध्ये विधा°।

एकः। न च—प्रकरणादुत्कर्षः कर्तुं शक्यः। राजसूयाङ्गभूतदिग्व्यस्थापननिमित्तोन्मादपरिहाररूपेणार्थवादेन तत्संबन्धावगमात्। * तथा च श्रूयते—ईश्वरो वा एष दिशोऽनून्मदितोः। यं दिशोऽनु व्यवस्थापयति। दिशामवेष्टयो भवन्ति। दिक्ष्वेव प्रतितिष्ठत्यनुन्मादाय' इति। राजसूयाद्बहिष्प्रयोगस्तु 'एतयाऽन्नाद्यकामं याजयेत्' इति विहितः। न च—असौ राजसूयान्तःपाती। 'यदि ब्राह्मणः' इत्यादिना वर्णसंयोगावगमात्। राजसूये च ब्राह्मणवैश्ययोरनधिकारात्। तस्मात्—'बहिष्प्रयोगे तन्त्रम्, अन्तःप्रयोगे भेदः' इति निर्णयः॥ ४॥

(चतुर्थे—पवमानेष्टिहविषां भेदेनानुष्ठानाधिकरणे सूत्राणि १२–१५)।

पवमानहविःष्वैकतन्त्र्यं प्रयोगवचनैकत्वात् ॥१२॥
लिङ्गदर्शनाच्च ॥ १३ ॥ वचनात्तु तन्त्रभेदः स्यात्
॥ १४ ॥ सहत्वे नित्यानुवादः स्यात् ॥ १५ ॥

चतुर्थाधिकरणमारचयति—

पवमानेष्टिहविषां तन्त्रं भेदोऽथवाऽग्रिमः।
साध्यदेशाद्यभेदान्नो काम्ये भेदोक्तितोऽन्तिमः॥ ५॥

आधानप्रकरणे पठ्यते—'अग्नये पवमानायाष्टाकपालं निर्वपेत्, अग्नये पावकाय, अग्नये शुचये' इति। तैरेतैर्हविर्भिः साध्यस्याग्नेरेकत्वाद्देशाद्यभेदाच्चाङ्गानां तन्त्रम्। इति प्राप्ते—

ब्रूमः—'यः कामयेत—उत्तरं वसीयान्, श्रेयान्, स्याम्—इति, तस्याग्नये पवमानाय निरुप्याथ पावकाय शुचये चोत्तरे हविषी समानबर्हिषी निर्वपेत्' इति वचनात्काम्यप्रयोगे प्रथमस्य हविषोऽङ्गभेदः, उत्तरयोस्तन्त्रम्। नित्यप्रयोगे तु त्रयाणां तन्त्रम्॥ ५॥

(पञ्चमे—द्वादशाहे दीक्षोपसत्सुत्यानां प्रत्येकस्य द्वादशाहताधिकरणे सूत्राणि १६–२३)।

द्वादशाहे तत्प्रकृतित्वादेकैकमहरपवृज्येत कर्म-

---

* क. ख. ज. ञ.: इति पुस्तकेषु तथा चेत्येतदारभ्यावगमादित्यन्तपाठो न।

---

१ क. °त्तोत्साद°। २ झ. °गत्वेन 'ए°। ३ झ. °ये ब्रा°। ४ च. °योगोऽङ्गं त°। ५ च. काम्यभे°। ६ ञ. °र्हविः सा°। ७ क. ख. वशीयान्। च. वरीयान्। ८ ज. झ. °म्यस्य ह°। ञ. °म्यप्रयोगस्य ह°।

पृथक्त्वात् ॥ १६ ॥ अह्नां वा श्रुतिभूतत्वात्तत्र साङ्गं क्रियेत यथा माध्यंदिने ॥ १७ ॥ अपि वा फलकर्तृसंबन्धात्सहप्रयोगः स्यादाग्नेयाग्नीषोमीयवत् ॥१८॥ साङ्गकालश्रुतित्वाद्वा स्वस्थानानां विकारः स्यात् ॥ १९ ॥ तदपेक्षं च द्वादशत्वम् ॥ २० ॥ दीक्षोपसदां च संख्या पृथक्पृथक्प्रत्यक्षसंयोगात् ॥२१॥ तथा चान्यार्थदर्शनम् ॥२२॥ चोदनापृथक्त्वे त्वैकतन्त्र्यं समवेतानां कालसंयोगात् ॥ २३ ॥

पञ्चमाधिकरणमारचयति—

द्वादशाहे सदीक्षोपसदहे दिनमानकम् ।
शतत्रयं द्वादश वा षट्त्रिंशद्वाऽग्रिमो यतः ॥ ६ ॥
एकैककर्मणोऽह्नोऽस्य ज्योतिष्टोमविकारता ।
एकैकं तदनुष्ठानं दिनानां पञ्चविंशतिः ॥ ७ ॥
अह्नां द्वादशताश्रुत्या मध्यपक्षस्तदाऽपि किम् ।
कार्या द्वादश सायस्काश्चतुष्काणामुत त्रिकम् ॥ ८ ॥
एकैकस्यैव यागस्य विकृतित्वादिहाऽऽदिमः ।
अमुख्यकालाङ्गबाधाच्चतुष्कं भिद्यते त्रिधा ॥ ९ ॥
दीक्षा उपसदः सुत्या प्रत्येकं द्वादश स्मृताः ।
साङ्गस्य द्वादशाहस्य षट्त्रिंशद्दिवसा मताः ॥ १० ॥

द्वादशाहस्यैकैकमहः पृथक्कर्म तस्मिंश्च सदीक्षस्य[1] सोपसत्कस्य[2] ससुत्यस्य ज्योतिष्टोमस्य विध्यन्तोऽतिदिष्टः। अतिदिष्टानामुपसदां दीक्षाणां च प्राकृतसंख्याबाधनाय पृथग्द्वादशत्वं श्रुतम् । ततो दीक्षोपसदर्थं चतुर्विंशतिदिनानि सुत्यार्थमेकं दिनमिति पञ्चविंशतिः । ईदृशस्य कर्मविशेषस्याह्नो द्वादशावृत्तिभिः शतत्रयं स्यात् । इत्याद्यः पक्षः ।

---

१ ज. झ. साङ्गस्य । २ झ. काङ्गबाधाच्च चतु° । ३ ज. झ. श्रुताः । ४ ज. झ. °क्षणीयस्य । ५ ञ. °पस्करस्य । ६ क. °ख्यावचनात्पृथ° । ख. °ख्याबाधनात्पृथ° । ७ क. °स्याह्नां द्वा° ।

तथा सत्यह्नां द्वादशत्वं श्रूयमाणं बाध्येत । तस्मात्- द्वादश दिवसाः । इति मध्यमः पक्षः ।

तदाऽपि दीक्षोपसद्भ्यामुपेतस्यैकैकस्याह्नः साङ्गज्योतिष्टोमविकारत्वात्सर्वं सद्य एव कर्तव्यम् । इत्येकः पक्षः ।

प्रकृतौ दीक्षोपसदोर्मुख्यकालात्प्रागेवानुष्ठितत्वादिहापि तथैवानुष्ठानं प्राप्तम् । तच्च मुख्यकालेऽनुष्ठाने बाध्येत । तस्मात्—अङ्गद्वयस्य प्रधानस्य च द्वादश दिनानि विभज्यानुष्ठानम् । इति पक्षान्तरम् ।

'द्वादश दीक्षाः, द्वादशोपसदः' इत्यङ्गयोर्मुख्यवत्पृथग्द्वादशत्वश्रुत्या षट्-त्रिंशत् । इति सिद्धान्तः ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥

( षष्ठे—प्रधानैरपृथक्कालानामङ्गानां भेदेनानुष्ठानाधिकरणे सूत्राणि २४—२७ ) ।

भेदस्तु तद्भेदात्कर्मभेदः प्रयोगे स्यात्तेषां प्रधानश-
ब्दत्वात् ॥ २४ ॥ तथा चान्यार्थदर्शनम् ॥ २५ ॥
श्वःसुत्यावचनं तद्वत् ॥२६॥पश्वतिरेकश्च ॥२७॥

षष्ठाधिकरणमारचयति—

सवनीयादिकं तंत्र सकृत्स्याद्भिद्यतेऽथवा ।
प्रयोगैक्यात्सकृन्मैवं मुख्यकाले विधानतः ॥ ११ ॥

तत्र द्वादशाहे सवनीयपश्वादिकमङ्गं दीक्षादिवत्सकृदेवानुष्ठेयम् । कुतः । 'द्वादशाहेन प्रजाकामं याजयेत्' इति प्रयोगैकत्वावगमात् । इति चेत् ।

मैवम् । दीक्षादीनामन्यस्मिन्कालेऽनुष्ठेयत्वात् । सवनीयादिकं तु मुख्यकालेऽनुष्ठेयम् । अतो मुख्यकालानां भेदाद्भिद्यते ॥ ११ ॥

( सप्तमे—उपसत्काले सुब्रह्मण्याह्वानस्याविकारेण कर्तव्यताधिकरणे सूत्रे २८—२९ ) ।

सुत्याविवृद्धौ सुब्रह्मण्यायां सर्वेषामुपलक्षणं
प्रकृत्यन्वयादावाहनवत् ॥ २८ ॥ अपि
वेन्द्राभिधानत्वात्सकृत्स्यादुपलक्षणम्,

---

१ च. तत्र । २ क. च. °दशाहस्य द्वादश । ३ ज. झ. षड्विंशतिः । ४ ज. झ. °द्धान्तः । ५ क. तन्त्रं । ६ क. °कालवि° । ७ ज. झ. ञ. °ख्यस्य का° ।

कालस्य लक्षणार्थत्वादविभागाच्च ॥ २९॥

सप्तमाधिकरणमारचयति—

उपसत्काल आह्वानं द्वादशाहे विकारभाक्।
न वाऽऽद्य उपलक्ष्यत्वादत्राह्नां प्रकृताविव ॥ १२ ॥
सुत्यागमनमात्रस्य विवक्षा प्रकृतौ ततः।
विकारमन्तरेणात्र तत्सिध्येत्तेन तन्त्रता ॥ १३ ॥

उपसत्काले यत्सुब्रह्मण्याह्वानं प्रकृतावस्ति, तद्द्वादशाहे चोदकप्राप्तम्। तस्य मुख्यकालादन्यः काल इति कृत्वा तन्त्रं पूर्वं निर्णीतम्। इदानीमन्योऽप्यूहरूपो विकारस्तन्त्रावापपर्यवसायी विचार्यते। प्रकृतौ प्रथमोपसद्दिनमारभ्य त्रयोदशेऽहनि प्रथमसुत्या, चतुर्दशेऽहनि द्वितीयसुत्या, इत्येवंक्रमेण चतुर्विंशेऽहनि चरमसुत्या भवति। तथा च प्रकृतौ 'चतुरहः' इति संख्याविशिष्टेनाहःशब्देन सुत्याया उपलक्षितत्वादत्रापि द्वादशानां सुत्यानामहःशब्देनोपलक्षणीयत्वे सति तद्विशेषणभूतचतुःसंख्यास्थाने यथोचितं त्रयोदशचतुर्दशादिसंख्यानामूहनीयत्वेन विकारो भवति। ततो विशेषणभेदेन विशेष्यस्याहःशब्दस्यापि द्वादशकृत्व आवृत्तावर्थात्सुब्रह्मण्यावापः स्यात्। इति प्राप्ते—

ब्रूमः—प्रकृताविन्द्रस्य सुत्यागमनमात्रं विवक्षितम्। चतुरहत्वं त्वर्थप्राप्तमनूद्यते। उभयविवक्षायां 'सुत्यामागच्छ, चतुरह आगच्छ' इति वाक्यं भिद्येत। तथा—अत्रापि 'त्रयोदशाहे सुत्यामागच्छ' इत्येवंविधं विकारमन्तरेण 'चतुरहे सुत्यामागच्छ' इत्येवाऽऽह्वानेऽपि चतुरहंशब्दस्याविवक्षितार्थत्वात्सुत्याकारेण द्वादशानामेकत्वादशेषसुत्यागमनं सिध्यति। तस्मात्—इह रूपविकाराभावात्पूर्वोक्तं तन्त्रं सुस्थितम् ॥१२॥१३॥

(अष्टमे—वाजपेये प्राजापत्येषु कुम्भ्यादीनां तन्त्रताधिकरणे सूत्रम्-)।

पशुगणे कुम्भीशूलवपाश्रपणीनां
प्रभुत्वात्तन्त्रभावः स्यात् ॥ ३० ॥

अष्टमाधिकरणमारचयति—

---

१ ज. झ. °शाविवि° । २ क. °दहनामुपक्र° । ३ ज. झ. °त्यानम° । ४ क. ञ. °त्सिद्धेस्तेन । ५ च. पूर्वकाले पूर्वं । ६ क. ख. च. विकृतौ । ७ ज. झ. ञ. °था सति प्र° । ८ क. °दशादि° । ९ ख. त्रयोदशेऽहनि । १० क. च. °रहःश° । ११ च. °त-अहरू° । १२ ज. झ. सुस्थम् । ञ. संस्थितम् ।

प्राजापत्येषु कुम्भ्यादेर्भेदो नो वाऽङ्गभेदतः।
भेदो मैवं विशेषाङ्गश्रपणादौ प्रभुत्वतः॥ १४॥

वाजपेये सप्तदशप्राजापत्यपशुषु कुम्भ्या हृदयशूलस्य वपाश्रपण्याश्च भेदः स्यात्। तत्तत्पश्वङ्गानां भिन्नत्वात्।

मैवम्। पश्वङ्गानां बहुत्वेऽपि प्रौढकुम्भ्यादेर्द्दृष्टार्थे श्रपणादौ प्रभुत्वात्। तस्मात्–तन्त्रम्॥ १४॥

(नवमे–भिन्नदेवताकेष्वपि शूलादीनां तन्त्रताधिकरणे सूत्रे ३१–३२)।

भेदस्तु संदेहाद्देवतान्तरे स्यात्॥ ३१॥
अर्थाद्वा लिङ्गकर्म स्यात्॥ ३२॥

नवमाधिकरणमारचयति–

किमेकादशिनेष्वस्य कुम्भ्यादेर्भिन्नता न वा।
असंदेहाय भेदो न लिङ्गादेवास्य सिद्धितः॥ १५॥

भिन्नदेवताकेष्वेकादशिनेषु पशुष्वेककुम्भीपाके सति–'किमङ्गं कां देवतां प्रत्युपाकृतस्य पशोः संबन्धि' इति संदेहे सति प्रदानं संकीर्येत। तस्मात्–कुम्भ्यादिरावापः। इति चेत्।

मैवम्। चिह्नकरणमात्रेणैव संदेहापगमसिद्धौ लाघवात्। तस्मात्–अत्रापि तन्त्रम्॥ १५॥

(दशमे–वसाकुम्भ्या अपि तन्त्रताधिकरणे सूत्राणि ३३–३६)।

+ अयाज्यत्वाद्वसानां भेदः स्यात्स्वयाज्याप्रदानत्वात्॥ ३३॥ अपि वा प्रतिपत्तित्वात्तन्त्रं स्यात्स्वस्वस्याश्रुतिभूतत्वात्॥ ३४॥ सकृदिति चेत्॥ ३५॥ न कालभेदात्॥ ३६॥

दशमाधिकरणमारचयति–

---

+ शास्त्रदीपिकायां तु पूर्वाधिकरण एवास्यान्तर्भावः कृतः।

---

१ ख. कुम्भादे°। २ च. संकर्येतम्। ज. झ. संकीर्येत। ३ क. °ग्भवात्। ४ क. ख. च. ज. झ. अस्मात्।

तत्तन्त्रं हेयमुत नो, चिह्नं नास्ति वसास्वतः।
हेयं, नो प्रतिपत्तित्वात्सांकर्येणाप्यदोषतः॥ ६॥

ऐकादशिनेषु कुम्भ्यादर्यत्तन्त्रं निर्णीतम्, तत्परित्याज्यम्। कुतः। अङ्गाना-मिव वसानां चिह्नकरणासंभवेन सांकर्यप्रसङ्गात्। इति चेत्।

मैवम्। वसाहोमस्य प्रतिपत्तिकर्मत्वेन द्रव्यं प्रति प्रयोजकत्वाभावेन द्रव्यश्र-पणार्थं कुम्भीभेदप्रयोजकत्वस्य दूरापेतत्वात्। न च—अत्र द्रव्यसांकर्यं दोषाय भवति। व्यवस्थापकप्रमाणाभावात्। ननु—तत्तद्देवताविषययाज्यार्धर्चान्तेषु भिन्ना होमाः पूर्वं निर्णीताः। बाढम्। तथैवार्धर्चान्ते तद्धूयताम्, किमायातं द्रव्य-सांकर्ये। तस्मात्—कुम्भ्यादेस्तन्त्रं न त्याज्यम्॥ १६॥

(एकादशे—भिन्नजातिषु कुम्भ्यादीनां भेदेनानुष्ठाना-
धिकरणे सूत्रे ३७—३८)।

जात्यन्तरेषु भेदः स्यात्पक्तिवैषम्यात्॥ ३७॥
वृद्धिदर्शनाच्च॥ ३८॥

एकादशाधिकरणमारचयति—

भिन्नजातिषु कुम्भ्यादेस्तन्त्रं भेदोऽथवाऽग्रिमः।
पूर्ववत्पाकवैषम्ये साहित्यासंभवाद्भिदा॥ १७॥

एकजातिषु पशुषु यथा कुम्भ्योस्तन्त्रं पूर्वोक्तम्, तथाऽत्रापि। इति चेत्।

मैवम्। अवेरङ्गानि सहसा पच्यन्ते, अजाङ्गानि तु विलम्बेन। ततः साहित्यासंभवात्कुम्भ्यादेर्भेदः॥१७॥

(द्वादशे—अश्वप्रतिग्रहेष्टौ प्रतिपुरोडाशं कपालभेदा-
धिकरणे सूत्राणि ३९—४१)।

कपालानि च कुम्भीवत्तुल्यसंख्यानाम्॥ ३९॥
प्रतिप्रधानं वा प्रकृतिवत्॥ ४०॥ सर्वेषां चाभि-
प्रथनं स्यात्॥ ४१॥

द्वादशाधिकरणमारचयति—

तन्त्रं चतुष्कपालानां भेदो वा तन्त्रमस्त्वतः।
कुम्भीवत्तन्त्रता मैवं भेदः स्यात्प्रकृताविव॥ १८॥

---

१ ज. झ. ०भीस्ततः। २ ज. झ. ०न्तरेषु। ३ ज. झ. ०वाऽऽकाशत्वाद्धूयन्ताम्। झ. ०वार्धर्चान्तेष्वाहूयता०। ४ ज. झ. अजाद्यङ्गानि।

इदं श्रूयते-'यावतोऽश्वान्प्रतिगृह्णीयात्, तावतो वारुणांश्चतुष्कपालान्निर्वपेत्' इति। यथा-प्राजापत्येषु कुम्भ्या महत्त्वेन तन्त्रम्, तथाऽत्रापि तन्त्रम्। इति चेत्।

मैवम्। प्रकृतौ प्रतिपुरोडाशं कपालभेदेन तद्भेदस्यैव चोदकप्राप्तेः। किंच-अत्यन्तविशालेषु कपालेषु चतुर्षु पुरोडाशानां शतेष्ववस्थापितेष्वेकस्यैव कपालस्यैकदेशे पुरोडाशस्यैकस्य समाप्तेर्न कोऽपि पुरोडाशश्चतुष्कपालः सिध्येत्। तस्मात्-प्रतिपुरोडाशं कपालचतुष्कभेदः ॥१८॥

( त्रयोदशे-व्रीह्यवहननादौ प्रतिप्रहारं मन्त्रस्यानावृत्त्यधिकरणे सूत्रे ४२-४३ )।

**एकद्रव्ये संस्काराणां व्याख्यातमेककर्मत्वम् ॥ ४२ ॥**

**×तस्मिन्मन्त्रार्थनानात्वादावृत्तौ मन्त्रस्यासकृत्प्रयोगः स्यात् ॥ ४३ ॥**

त्रयोदशाधिकरणमारचयति-

**अवघातार्थमन्त्रः किमसकृत्सदेव वा।**
**प्रहारभेदादावृत्तिः कर्मैक्येन सकृद्भवेत् ॥ १९ ॥**

'अवरक्षो दिवः सपत्नं वध्यासम्-इत्यवहन्ति' इत्यवघाते विहितो मन्त्र आवर्तनीयः। अवघातस्य प्रहाररूपत्वात्। प्रहाराणां च भिन्नत्वात्। इति प्राप्ते-

ब्रूमः-तण्डुलनिष्पत्तिपर्यन्तत्वेनाऽऽक्षिप्तप्रहाराभ्यासयुक्तस्यावघातस्यैककर्मत्वात्तत्र विनियुक्तस्य मन्त्रस्यावघातोपक्रमे सकृदेव पाठः ॥ १९ ॥

( चतुर्दशे-नानाबीजेष्टौ प्रतिप्रहारं मन्त्रावृत्त्यधिकरणे सूत्रम् )।

**द्रव्यान्तरे कृतार्थत्वात्तस्य पुनःप्रयोगान्मन्त्रस्य च तद्गुणत्वात्पुनःप्रयोगः स्यात्तदर्थेन विधानात् ॥४४॥**

चतुर्दशाधिकरणमारचयति-

**नानाबीजेषु तन्मन्त्रः सकृद्वाऽसकृदग्रिमः।**
**विशेषाग्रहणान्नैवमवघातस्य भेदतः ॥ २० ॥**

---

× अस्य सूत्रत्वे बहवो विप्रतिपन्नाः।

---

१ च. °तेषु व्यव°। ञ. °तेष्वेव स्था°। २ क. प्रकार°। ३ च. °तः ॥२०॥ राजसूये ना°।

नानाबीजेष्टौ बीजानामवघातस्याङ्गभूतो मन्त्रः 'अयमेतदर्थः' इति विशेषस्यागृह्यमाणत्वात्सकृदादौ प्रयोज्यः । इति चेत् ।

मैवम् । अवघातानां भिन्नत्वेन समन्त्रत्वाय प्रत्यवघातं मन्त्रस्याऽऽवर्तनीयत्वात् ॥२०॥

(पञ्चदशे—प्रतिनिर्वापादिमन्त्रावृत्त्यधिकरणे सूत्रे ४५—४६)।

**निर्वपणलवनस्तरणाज्यग्रहणेषु चैकद्रव्यवत्प्रयोजनैकत्वात् ॥ ४५ ॥ द्रव्यान्तरवद्वा स्यात्तत्संस्कारात् ॥ ४६ ॥**

पञ्चदशाधिकरणमारचयति—

**निर्वापादिषु तन्मन्त्राः सकृद्भेदेन वाऽग्रिमः ।**
**द्रव्यकर्मैक्यतो मैवं संस्कारस्य पृथक्त्वतः ॥ २१ ॥**

दर्शपूर्णमासयोर्निर्वापबर्हिर्लवनवेदिपरिस्तरणाज्यग्रहणेष्वावृत्तयः श्रुताः—'चतुरो मुष्टीन्निर्वपति' 'अयुग्वा युग्वा मुष्टीर्लुनाति'[1] 'त्रिधा तु पञ्चधा तु वा वेदिं स्तृणाति' 'चतुर्जुह्वां गृह्णाति' इति । तेषु निर्वापादिषु मन्त्रा विहिताः—'देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामग्नये जुष्टं निर्वपामि' इति, 'बर्हिर्देवसदनं दामि' इति, 'ऊर्णाम्रदसं त्वा स्तृणामि' इति, 'शुक्रं त्वा शुक्रायां धाम्ने धाम्ने देवेभ्यो यजुषे यजुषे गृह्णामि' इति च । तत्तन्मन्त्रा द्रव्यैक्यात्कर्मैक्याच्च व्रीह्यवघातन्यायेन सकृत्पाठ्याः । इति प्राप्ते—

ब्रूमः—समन्त्रकप्रथममुष्टिनिर्वापेण ये संस्कृतास्तण्डुलाः, तेभ्योऽन्ये मुष्ट्यन्तरनिर्वापेण संस्कार्याः । अतस्तत्संस्कारसिद्धये नानाबीजन्यायेन मन्त्रावृत्तिः । एवं लवनादिषु योज्यम् ।।२१॥

( षोडशे—वेदिप्रोक्षणे प्रत्यावृत्तिमन्त्रानावृत्त्यधिकरणे सूत्रे ४७—४८ )॥

**वेदिप्रोक्षणे मन्त्राभ्यासः कर्मणः पुनःप्रयोगात् ॥ ४७ ॥ एकस्य वा गुणविधिर्द्रव्यैकत्वात्तस्मात्सकृत्प्रयोगः स्यात् ॥ ४८ ॥**

---

१ क. च. °युजो मु° । ज. झ. °युक्षो मुष्टीं लु° । ञ. °युग्वा मुष्टीं लु° । २ ख. °मु मुष्टिनि° । ३ ज. झ. ऊर्गम्र° । ४ ज. झ. जुष्टं । ५ ज. झ. °ति चेत् । मन्त्रा° । ६ ख. ञ. °कृत्पठनीयाः । इ° । ७ ज. झ. °र्वापसं° ।

षोडशाधिकरणमारचयति—

वेदिप्रोक्षणमन्त्रः किमावर्त्यः सकृदेव वा ।
आद्यः स्यात्प्रोक्षणत्रित्वात्संस्कार्यैकत्वतः सकृत् ॥ २२ ॥

वेद्यास्त्रिः प्रोक्षणं विहितम् । तत्र मन्त्र आम्नायते—'वेदिरसि बर्हिषे त्वा' इति । तत्र त्रिः प्रोक्षणक्रियाया आवृत्त्या तन्मन्त्रस्याप्यावृत्तिः । इति चेत् ।

मैवम् । संस्कार्यवेद्या एकत्वेन समन्त्रकप्रथमप्रोक्षणेन तत्संस्कारसिद्धौ पुनर्नं मन्त्रः । वैयर्थ्यात् । प्रोक्षणावृत्तिस्तु वाचनिकी, इति वैषम्यम् ॥ २२ ॥

( सप्तदशे—कण्डूयनमन्त्रस्यानावृत्त्यधिकरणे सूत्रे ४९–५० ) ।

कण्डूयने प्रत्यङ्गं कर्मभेदात्स्यात् ॥ ४९ ॥ अपि वा चोदनैककालमैककर्म्यं स्यात् ॥ ५० ॥

सप्तदशाधिकरणमारचयति—

एककालीनबह्वङ्गकण्ड्वां मन्त्रे भिदा न वा ।
अङ्गभेदान्मन्त्रभेदो निवृत्त्यैकत्वतो न सः ॥ २३ ॥

ज्योतिष्टोमे—'कृष्णविषाणया कण्डूयते' इति प्रोक्तसाधनोपेते कण्डूयने 'सुपिप्पलाभ्यस्त्वौषधीभ्यः—इत्यादिको मन्त्रो* विहितः । तत्र युगपद्बह्वङ्गेषूत्पन्नायां कण्ड्वां प्रत्यङ्गमभ्यस्यमाने कण्डूयने मन्त्राभ्यासः कर्तव्यः । कुतः । कण्डूयितव्यानामङ्गानां भिन्नत्वात् । इति प्राप्ते—

ब्रूमः—न ह्यङ्गशेषो मन्त्रः, येन तद्भेदादभ्यस्येत । किंतु कण्डूनिवृत्तये यत्प्राप्तं कण्डूयनम्, तदेव कृष्णविषाणाविशिष्टत्वाकारेण विधीयते । विधीयमानस्य तस्य कण्डूयनस्य शेषो मन्त्रः । तेन च कण्डूयनेनाऽऽत्मनि निर्दुःखत्वलक्षणः संस्कार उत्पाद्यते । तत्र संस्कार्यात्मन एकत्वात्सकृन्मन्त्रपाठेन तत्सिद्धेर्नावघातवन्मन्त्रस्याऽऽवृत्तिः । कण्डूयनं तु दृष्टप्रयोजनपर्यन्तं प्रत्यङ्गं नानाबीजावघातवदावर्त्यताम् । तस्मात्—सकृदेव कण्डूयनमन्त्रः ॥२३॥

---

*शाबरभाष्ये तु 'कृषिषु स्याम कृष'—इति, शास्त्रदीपिकायां तु 'कृष्यै त्वा सुसस्यायै' इति मन्त्रो लिखितः ।

---

१ ख. °बता । आ° । २ च. ज. झ. ञ. °नर्मन्त्रवै° । ३ क. °नके कण्ड्वां कण्डूम° । ख. च. °नबह्वङ्गकण्डूम° । ज. झ. ञ. °नबह्वङ्गकण्डूमन्त्रभि° । ४ ख. °त्पन्न-या क° । ज. झ. °त्पन्नायाः कण्ड्वा अपनयनाङ्गप्र° । ५ क. ख. च. अभ्यासः । ६ च. ज. झ. ञ. तद्भेदमभ्यभ्येत् । ७ ज. झ. यतः । ८ ज. झ. उत्पद्यते । ९ ज. झ. °स्कार्यस्याऽऽत्म° । १० क. °वन्नाऽऽव° । ११ क. ज. झ. °यनम् ।

( अष्टादशे—स्वप्नादिमन्त्रानावृत्त्यधिकरणे सूत्रम् )।

**स्वप्ननदीतरणाभिवर्षणामेध्यप्रतिमन्त्रणेषु चैवम् ॥ ५१ ॥**

अष्टादशाधिकरणमारचयति—

स्वप्नादिमन्त्रा आवर्त्या नो वाऽऽद्योऽस्त्वन्तरायतः।
कृत्स्नोद्देशप्रवृत्तत्वान्निमित्ताभेदतः सकृत् ॥ २४ ॥

दीक्षितस्य स्वप्ननद्युत्तरणवृष्टिक्लेदनामेध्यदर्शननिमित्तकास्तत्तन्मन्त्रजपाः प-ठिताः—'त्वमग्ने व्रतपा असि'—इत्यादिः स्वप्नमन्त्रः। 'देवीरापो अपांनपात्'—इत्यादिर्नदीतरणमन्त्रः। 'उन्दतीर्बलं धत्ते'—इत्यादिर्वृष्टिक्लेदनमन्त्रः। 'अबद्धं मनः'—इत्यादिरमेध्यदर्शनमन्त्रः। यदि निद्रा मध्ये प्रबोधैरल्पैर्व्यवधीयेत, नदी च बहुस्रोतोयुक्ता द्वीपैः, वृष्टिश्च विच्छेदैः, अमेध्यानि च देशैः, तदा तैरन्तरायै-र्निमित्तेषु भिद्यमानेषु नैमित्तिका मन्त्रा आवर्त्याः—इत्येवं प्राप्ते—

ब्रूमः—रात्रिगतां कृत्स्नां निद्रामुद्दिश्य मन्त्रविधानान्निमित्तमेकम्। एवमितरत्रा-पि योज्यम्। तस्मात्—नास्त्यावृत्तिः ॥ २४ ॥

( एकोनविंशे—दीक्षितस्य प्रयाणे मन्त्रानावृत्त्यधिकरणे—सूत्रम् )।

**प्रयाणे त्वार्थनिर्वृत्तेः॥ ५२ ॥**

एकोनविंशाधिकरणमारचयति—

प्रयाणे प्रत्यहं मन्त्रो भिन्नो नो वाऽत्र विश्रमैः।
प्रयाणभेदाद्भिन्नो नो गत्यैक्यादानिवृत्तितः ॥ २५ ॥

'भद्रादभिश्रेयः'—इत्यादिः प्रयाणमन्त्रः। तस्य दीक्षितस्य विश्रमभेदेन निर्ग-मनभेदाद्भेदः। इति प्राप्ते—

ब्रूमः—निर्गमनादारभ्य पुनःप्रवेशपर्यन्तं विश्रमव्यवधानेऽपि प्रयोजनैक्यादेक-मेव प्रयाणम्। ततो न मन्त्रावृत्तिः ॥२५॥

( विंशे—उपरवमन्त्रस्याऽऽवृत्त्यधिकरणे सूत्रे ५३—५४ )।

**उपरवमन्त्रस्तन्त्रं स्याल्लोकवद्बहुवचनात् ॥ ५३ ॥**

---

१ ख. °त्स्नो देशे प्र°। झ. °त्स्नोद्देशेन वृ°। २ ख. उदन्नदीर्बं°। ञ. उन्नन्नदीर्ब°। ३ ख. घ. ज. झ. ञ. आवर्तनीयाः। ४ ज. झ. मन्त्राभिधा°। ५ ञ. °द्रादिभिः श्रे°। ६ क. ख. ज. ञ. °स्य निर्गमना°। ७ ज. झ. विश्राम°।

न संनिपातित्वात्, असंनिपातिकर्मणां विशेषाग्रहणे कालैकत्वात्सकृद्वचनम् ॥ ५४ ॥

विंशाधिकरणमारचयति—

तन्त्रेणोपरवे मन्त्रो भिद्यते वा, बहूक्तितः ।
तन्त्रं बहूक्तिः पूजार्था भिन्नोऽसौ खेयभेदतः ॥ २६ ॥

सन्ति ज्योतिष्टोमे पीठपादचतुष्टयाकारा बाहुमात्रखाता उपरवनामकाश्चत्वारो गर्ताः । तदीयखननमन्त्रे बहुवचनं श्रूयते—'रक्षोहणो वलगहनो वैष्णवान्खनामि' इति । तच्च प्रत्युपरवं मन्त्रावृत्तौ नोपपद्यते । तस्मात्—तन्त्रम् । इति प्राप्ते—

ब्रूमः—एकस्मिन्नपि बहुवचनं पूजार्थमाचार्यादिष्विव प्रयोक्तुं शक्यम् । खेयास्तूपरवा भिन्नाः । ततः—खननभेदेन तदङ्गभूतो मन्त्र आवर्तनीयः ॥२६॥

(एकविंशे—हविष्कृदादिमन्त्राणामावृत्त्यधिकरणे सूत्राणि ५५–५७) ।

हविष्कृदाध्रिगुपुरोनुवाक्यामनोतस्याऽऽवृत्तिः कालभेदात्स्यात् ॥५५॥ अध्रिगोश्च विपर्यासात् ॥ ५६ ॥ करिष्यद्वचनात् ॥ ५७ ॥

एकविंशाधिकरणमारचयति—

हविष्कृदादिमन्त्राणां सवनीयादिगामिनाम् ।
तन्त्रं न वा सहत्वार्थं तन्त्रं नो कालभेदतः ॥ २७ ॥

सवनीयेषु पुरोडाशेषु हविष्कृन्मन्त्रश्चोदकप्राप्तः । प्राजापत्येषु पशुष्वध्रिगुप्रैषमन्त्रः । कृष्णग्रीवयोः पश्वोरनुवाक्यामनोतामन्त्रौ । 'हविष्कृदेहि'—इति हविष्कृन्मन्त्रः । 'दैव्याः शमितारः'—इत्यध्रिगुप्रैषमन्त्रः । 'अग्ने नय सुपथा,—इति पुरोनुवाक्या । 'त्वं ह्यग्ने प्रथमो मनोता'—इति मनोतामन्त्रः। एते चतुर्विधा मन्त्राः स्वस्वविषये तन्त्रेण पठनीयाः । तथा सति सवनीयपुरोडाशानां सहोपक्रमोऽनुगृह्यते। एवमुदाहरणान्तरेष्वपि। तत्र प्राजापत्याः पशवः क्रतुपशुभिः सहोपक्रान्ताः । अतो द्विविधेष्वपि पशुषु तन्त्रम् । कृष्णग्रीवौ च सहोपक्रान्तौ, अतस्तयोः पुरोनुवाक्यायास्तन्त्रम् । तथा मनोतामन्त्रस्यापि । इति प्राप्ते—

---

१ क. °रा बहुमात्रा खा° । ख. च. ञ. °रा बाहुमात्रा खा° । २ क ख. च. ज. झ. ञ. बलगहनो । ३ क. °न्त्रावृत्तिर्नोप° । ४ ख. पूज्यार्थं° । ५ ख. पशुपुरोडाशेषु ।

सूपः--सवनत्रयगतानां पुरोडाशानां तावत्कालभेदः सुपरिद्धः । क्रतुपशवः प्रातरालभ्यन्ते, प्राजपत्यास्तु पर्यग्निकृताश्चिरं विलम्ब्य ब्रह्मसामकाल आलभ्यन्ते । द्वयोः कृष्णग्रीवयोर्मध्ये सौम्यः पशुरालभ्यते । ततः सर्वत्र कालभेदेनानुष्ठानभेदात्तदङ्गभूतमन्त्राणामावृत्तिः ॥ २७ ॥

इति श्रीमाधवीये जैमिनीयन्यायमालाविस्तर एकादशाध्यायस्य
चतुर्थः पादः ॥ ४ ॥

| | अत्र पादे | आदितः । |
|---|---|---|
| अधिकरणानि | २१ | ८३९ । |
| सूत्राणि | ५७ | २४७६ । |

अध्यायश्च समाप्तः ।

---

१ क. ख. ज. झ. ञ. सुसिद्धः । २ क. ज. झ. 'रारभ्य' ।

[illegible]

तन्त्रं द्वयो[illegible]

प्रसङ्गोऽन्यो[illegible]द्देश[illegible] ॥ १ ॥

'अभ्यर्हितं पूर्वम्' इति न्याये[illegible]ङ्गप्रतिपाद्ययोरेकादशद्वादशाध्याययोः पूर्वोत्तरभाव उपपादितः । [illegible]ङ्गयोर्लक्षणभेदोऽप्यनेन सूचितो भवति । उभयोद्देशेन सकृदनुष्ठानं तन्त्रम्, अन्योद्देशेनान्यदीयस्यापि सहानुष्ठानं [illegible], इति तद्भेदः ॥ १ ॥

( प्रथमे—अग्नीषोमीयप्रयाजादिभिः पुरोडाशस्योपकाराधिकरणे सूत्राणि १—६ )।

तन्त्रिसमवाये चोदनातः समानानामेकतन्त्रत्वम-तुल्येषु तु भेदः स्याद्विधिप्रक्रमतादर्थ्यात् तादर्थ्यं श्रुतिकालनिर्देशात् ॥ १ ॥ गुणकालविकाराच्च तन्त्रभेदः स्यात् ॥ २ ॥ तन्त्रमध्ये विधानाद्वा मुख्यतन्त्रेण सिद्धिः स्यात्तन्त्रार्थस्याविशिष्टत्वात् ॥३॥ विकाराच्च न भेदः स्यादर्थस्याविकृतत्वात् ॥४॥ एकेषां चाशक्यत्वात् ॥ ५ ॥ एकाग्निवच्च दर्शनम् ॥ ६ ॥

तस्य प्रसङ्गस्य प्रतिपादके द्वादशाध्याये प्रथमपादस्य प्रथमाधिकरणमारचयति—

पश्वर्थानुष्ठितैर्नास्ति पुरोडाश उपक्रिया ।

अस्ति वा विध्यभावान्नो ह्यर्थतस्त्वस्तु [illegible] ॥ २ ॥

अग्नीषोमीये पशौ यानि चोदकप्राप्तानि प्रयाजाद्यङ्गान्यनुष्ठितानि, तैः पशुपुरोडाश उपकारो नास्ति । कुतः । उपकारबोधकस्य वि[illegible]भावात् । चोदकस्तु 'दर्शपूर्णमासवत्पशुरनुष्ठेयः' [illegible]वैरूप्यत्वात्पश[illegible]व तदुपकारं [illegible]ति । ननु—पशुपुरोडाशस्यापि [illegible] चोदके[illegible] बाढम् । अत एव भिन्नचोदकबलात्पुरोडाशोपकाराय प्रयाजाद्यङ्गानि पृथगनुष्ठेयानि । इति प्राप्ते—

१ च. °थे प्रथमा[illegible] २ क. °मु—पु° ३ ख. [illegible]

ब्रूमः—यद्यपि 'पश्वर्थैः पुरोडाशस्योपकारः[1]' इत्येतादृशं शास्त्रं नास्ति, तथाऽप्ययमुपकारोऽ[illegible]प्तो न निवारयितुं शक्यते। यथा प्रदीपस्य वैदिकार्थं निर्मितस्यार्थसिद्धं मार्गप्रकाशकत्वमनिवार्यम्, तथा पशुतन्त्रमध्येऽनुष्ठीयमानस्य पुरोडाशस्य पश्वर्थैरङ्गैरुपकारः केन वार्येत। तस्मात्—अन्यार्थैरप्यस्तूपकारः ॥२॥

( द्वितीये—पुरोडाशे, आज्यभागयोः कर्तव्यताधिकरणे सूत्रम् )।

**जैमिनेः परतन्त्रत्वापत्तेः स्वतन्त्रप्रतिषेधः स्यात् ॥ ७ ॥**

द्वितीयाधिकरणमारचयति—

**आज्यभागौ पुरोडाशे न स्तः स्तौ वाऽस्य चोदकः।**
**लुप्तस्ततो न तौ मैवं प्रयोगांशस्य लोपनात् ॥ ३ ॥**

'न तौ पशौ करोति' इति निषेधादाज्यभागयोः पशावभावे पुरोडाशे प्रसङ्गसिद्धिर्नास्ति। ततस्ता विचार्येते[illegible] तत्र 'पुरोडाश आज्यभागौ न स्तः' इति तावत्प्राप्तम्। कुतः। पुरोडाशविषयस्य चोदकस्य लुप्तत्वात्। अन्यथा प्रयाजादीनामपि पुनरनुष्ठानापत्तेः। इति प्राप्ते—

ब्रूमः—न तावत्पुरोडाशे चोदको लुप्यते बाधकाभावात्। पूर्वोक्तप्रसङ्गसिद्धिस्तु प्रयोगवचनमेव बाधते, न चोदकम्। अन्यथा प्रयाजादीनां पुरोडाशाङ्गत्वाभावेन प्रसङ्गसिद्धेरप्यवक्तव्यत्वात्। ननु—प्रयोगवचनबाधेऽप्याज्यभागौ न स्तः—इति चेत्। न। आज्य[illegible] [illegible] बाधिकायाः प्रसङ्गसिद्धेरभावात्। ततः प्रसङ्गसिद्धाङ्गविषयप्र[4][illegible] [illegible] बाधव[illegible]त्येव प्रयोगवचनांशेनाऽऽज्यभागावनुष्ठीयेते[5]। यथा देवदत्ते यज्ञदत्त[illegible]नयाऽऽरूढ[illegible]देवदत्तया[illegible] निवर्तते, न तु वस्त्रालंकरणादि[6]र्वा[illegible]नम् ॥ ३ ॥

( तृती[illegible]—सोमे [illegible] [illegible]करणे सूत्रे ८—९ )।

[illegible] [illegible]काय[illegible] [illegible]र्मा वैदिकर्म

[illegible]त् [illegible] [illegible] [illegible] ॥ ९ ॥

तृतीया[illegible]र[illegible]

[illegible]सोमे [illegible]कार्यो [illegible]कं भवेत्।
**तत्र कार्यो[illegible]की वैदिकं वा, वैदिकस्तु लौकिकी ॥ ४ ॥**

---

1 ज. झ. °का[illegible]°। 2 [illegible] ज. झ. [illegible]। 3 [illegible] ज झ 'गवा°। ख. ञ. °गबाध्येऽप्या°। 4 ज. °यागाङ्गस्यै°। 5 ख. ग ज झ ञ °नुष्ठाप्यते। 6 ज °दिवाहन°।

प्रचाराय हविःसादनीयं कार्यैष्टिकी पृथक् ।
मैवं सादनमन्यत्र कर्तुं शक्यं ततो न सा ॥ ५ ॥

*साङ्गप्रधानहविःप्रचाराय कृतायां सौमिक्यां महावेद्यामेवेष्टिप्रकृतिकहविषां सादयितुं शक्यत्वात्पृथगैष्टिकी वेदिर्न कार्या ॥ ४ ॥

(चतुर्थे–सौम्यचर्वादिहोमस्यैष्टिकपात्रैरनुष्ठानाधिकरणे सूत्रे १०-११)।

पात्रेषु च प्रसङ्गः स्याद्धोमार्थत्वात्
॥ १० ॥ न्याय्यानि वा प्रयुक्तत्वात्,
अप्रयुक्ते प्रसङ्गः स्यात् ॥ ११ ॥

चतुर्थाधिकरणमारचयति–

सौम्यचर्वादिहोमः किं सौमिकैरैष्टिकैरुत ।
कार्यसिद्धेः सौमिकैः स्यादवैगुण्यादिहैष्टिकैः ॥ ६ ॥

सोमे ग्रहचमसेषु प्रयुक्तेषु प्रवर्तमाने सौम्यचरौ सवनीयपुरोडाशेषु च सौमिकैर्ग्रहचमसैर्होमः । कुतः । तैर्होतुं शक्यत्वेन कार्यसिद्धेः । इति चेत् ।

मैवम् । वैगुण्यप्रसङ्गात् । जुहूस्रुवादिभिः कर्तव्यस्य ग्रहादिभिः कृते वैगुण्यं स्यात् । विद्यन्ते च सोमे प्रयुक्ता ऐष्टिकस्रुवादयः । तस्मात्–अवैगुण्यार्थमैष्टिकैर्होमः ॥६॥

( पञ्चमे–शामित्रे पशुपुरोडाशश्रपणाभावाधिकरणे सूत्रम्– )।

शामित्रे च पशुपुरोडाशो न
स्यादितरस्य प्रयुक्तत्वात् ॥ १२ ॥

पञ्चमाधिकरणमारचयति–

श्रप्यः पशुपुरोडाशः शामित्रेऽग्नावथोदिते ।
शालामुखीयनाम्नाऽऽद्यः पशुतन्त्रगतत्वतः ॥ ७ ॥

---

*षट्स्वपि पुस्तकेषु संदेहपूर्वपक्षग्रन्थानुपलब्ध्या शास्त्रदीपिकास्थ एव लिख्यते— 'ज्योतिष्टोमे यानि महावेद्यां कृतायां दर्शपूर्णमासप्रकृतीनि कर्माणि प्रवर्तन्ते, तेषु महावेदेर्भेदेन प्राकृती वेदिः कर्तव्या, न, इति संदेहे––यद्यप्यङ्गप्रधानार्था महावेदिः, तथाऽपि प्रचारार्थत्वान्न हविरासादनार्थायाः प्राकृत्याः कार्यं साधयति, इति तदर्थं प्राकृती कर्तव्या–इति।

---

१ ज. झ. °नार्था का° । २ क. च. ज. झ. ञ. कार्यसिद्धौ । ३ च. °षु प्रव° । ४ क. ख. च. ञ. °विभिर्वैगु° । ५ ज. झ. °त्रे यदि वोदि° ।

श्रपणं विहितं गार्हपत्ये सोऽत्र प्रयुज्यते।
प्राग्वंशपूर्वभागे च होमवैगुण्यहानये ॥ ८ ॥

अग्नीषोमीयादिपशुः शामित्रेऽग्नौ श्रप्यते। ततः—पशुतन्त्रमध्यपाती पशुपुरोडाशोऽपि तत्रैव श्रपणीयः। इति चेत्—

मैवम्। प्रकृतौ पुराडाशश्रपणं गार्हपत्ये विहितम्। स च गार्हपत्यः सोमे प्रयुक्तः। प्राचीनवंशशालाया अन्तः पूर्वभागे प्रवर्तमानस्य शालामुखीयनाम्नोऽभिहितस्य पूर्वप्रसिद्धस्याऽऽहवनीयस्योत्तरवेदिनिष्पत्तेरूर्ध्वं गार्हपत्यत्वात्। तस्मात्—अवैगुण्याय तत्र श्रपयितव्यम् ॥ ८ ॥

( षष्ठे—कौण्डपायिनामयनेऽग्निहोत्रद्रव्यस्य प्राजहिते श्रपणाधिकरणे सूत्रम् )।

श्रपणं चाग्निहोत्रस्य शालामुखीये न स्यात्,
प्राजहितस्य विद्यमानत्वात् ॥ १३ ॥

षष्ठाधिकरणमारचयति—

शालामुखीयवह्नौ किं श्रप्यतां कौण्डपायिने।
किंवा प्राजहिते वह्नौ, चोदकप्रापितोऽग्रिमः ॥ ९ ॥
प्राग्वंशे पश्चिमो वह्निर्भवेत्प्राजहितोऽत्र सः।
अग्निहोत्रेतिनाम्नाऽऽप्तो नामाप्तो लिङ्गतो बली ॥ १० ॥

कुण्डपायिनामयनगतेऽग्निहोत्रे यच्छ्रपणम्, तच्छालामुखीये कर्तव्यम्। कुतः। चोदकेन प्राप्तत्वात्। तथा हि—प्रकृतिभूतेऽग्निहोत्रे गार्हपत्ये श्रपणं विहितम्। शालामुखीयश्च पूर्वमाहवनीयोऽपि सोमे गार्हपत्यः संपन्नः। 'शालामुखीय एव, अत ऊर्ध्वं गार्हपत्यः' इति श्रुतेः। स च द्वादशाहंगवामयनपरम्परया चोदकेनात्र प्राप्तः। तस्मात्—तत्र श्रपणम्। इति प्राप्ते—

ब्रूमः—प्राचीनवंशे पश्चिमवह्निः पूर्वप्रसिद्धमुख्यगार्हपत्यस्य प्राजहित इति पूर्वाचार्यसंज्ञा। स च प्राजहितोऽग्निहोत्रनाम्नाऽत्रातिदिश्यते। नामातिदेशश्च शीघ्रबुद्धिहेतुतया लिङ्गातिदेशात्प्रबलः। तच्च लिङ्गं परम्परातिदेशात्प्रबलम्, इति वक्तव्यम्। तस्मात्—प्राजहिते श्रपणम् ॥९॥१०॥

१ क. स्तोत्रं। २ क. च. ज. झ. ञ. °गेऽत्र हो°। ३ क. ख. ञ. °म्ना विहि°। ४ च. °सिद्धह°। ज. झ. °सिद्धस्याऽऽह। ५ क. ख. च. ज. झ. ञ. °नीयोत्त°। ६ क. °तिमात्रोक्तौ। ७ ख. यथा हि। ८ च. °हगतानामयनप°। ख. ञ. °हर्गणसत्रागवामयनप°। ९ च. °बल इ°। ख. °बलः। तल्लिङ्गापरम्परयाऽति°। ज. झ. °बलः। तल्लिङ्गपरंपराति°। १० ख.। °ति किंच व°।

( सप्तमे— { हविर्धानशकटान्यशकटेनौषधद्रव्यकपुरोडाशनिर्वापाधिकरणे } सूत्राणि १४-१६)।

**हविर्धाने निर्वपणार्थे साधयेतां प्रयुक्तत्वात् ॥ १४ ॥ अप्रसिद्धिर्वाऽन्यदेशत्वात्प्रधानवैगुण्यादवैगुण्ये प्रसङ्गः स्यात् ॥ १५ ॥ अनसां च दर्शनात् ॥ १६ ॥**

सप्तमाधिकरणमारचयति—

**हविर्धानोर्ध्वकाले किमौषधार्थमनोन्तरम् ।**
**नास्त्यस्ति वा, न शक्तत्वाद्देशभेदादिनाऽन्तिमः ॥ ११ ॥**

ज्योतिष्टोमे हविर्धाननामकयोः शकटयोः प्रवर्तनादूर्ध्वमौषधद्रव्यकाणां पुरोडाशानां निर्वापाय तयोरेव शक्तत्वान्न शकटान्तरमन्वेष्यम् । इति चेत् ।

न । देशभेदात् । महावेद्यां मन्त्रपूर्वकं प्रवर्त्य हविर्धानमण्डपे हविर्धानाख्ये शकटे स्थापिते । निर्वापस्तु गार्हपत्यात्पश्चिमे देशे । किंच—अस्त्यत्र तृतीयं शकटम् । 'अनांसि प्रवर्तयन्ति' इति बहुवचनोक्तेः । तस्मात्—शकटान्तरे निर्वापः ॥ ११ ॥

( अष्टमे—प्रायणीयादिषु दीक्षाजागरणस्याभावाधिकरणे सूत्रम् ) ।

**तद्युक्तं च कालभेदात् ॥ १७ ॥**

अष्टमाधिकरणमारचयति—

**दीक्षाजागरणं प्रायणीयादौ तद्भवेन्न वा ।**
**अदृष्टार्थं ततस्तत्स्यान्न रक्षार्थत्वतोऽन्यदा ॥ १२ ॥**

दीक्षाकालादन्यकाले यद्यपि प्रायणीयादिकम् , तथाऽप्यदृष्टार्थं जागरणं प्रसङ्गात्सिध्यति । इति चेत् ।

न । तस्य रक्षार्थत्वात् । ततः कालान्तरे पृथक्कर्तव्यम् ॥ १२ ॥

(नवमे—विहारभेदेन मन्त्रभेदाधिकरणे सूत्रम् ) ।

**मन्त्राश्च संनिपातित्वात् ॥ १८ ॥**

नवमाधिकरणमारचयति—

---

१ क. °श्चिमदे° ।

विहारभेदे निर्वापमन्त्रादेस्तन्त्रता न वा।
तन्त्रं द्वयोः स्मृतेः सिद्धेरुत्तमोक्त्या पृथग्भवेत् ॥ १३ ॥

वरुणप्रघासेष्वध्वर्युप्रतिप्रस्थात्रोर्विहारभेदेऽपि मन्त्रेष्वेकेनैव पठ्यमानेषूभयोरर्थस्मृतिसिद्धेस्तन्त्रम्[१]। इति चेत्।

मैवम्। 'निर्वपामि'[२] इत्युत्तमपुरुषार्थस्य पाठमन्तरेण स्मृत्यभावात्। तस्मात्—उभयोः पृथक्पाठः ॥ १३ ॥

( दशमे—दीक्षणीयादिष्वग्न्यन्वाधानस्याभावाधिकरणे सूत्रम्— )।

धारणार्थत्वात्सोमेऽग्न्यन्वाधानं न विद्यते ॥ १९ ॥

दशमाधिकरणमारचयति—

अन्वाधानं दीक्षणीयादिषु स्यान्नास्ति वाऽस्ति तत्।
चोदकान्नास्ति सौमिक्यविहारेण धृतत्वतः ॥ १४ ॥

दीक्षणीयादिष्वन्वाधानं कर्तव्यम्। चोदकप्राप्तत्वात्। इति चेत्।

न। अग्निधारणार्थमन्वाधानम्। तच्च धारणं दीक्षणीयादिभ्यः प्राचीनेन[४] सौमिकेनैव[३] विहरणेन सिद्धम्। तस्मात्—अन्वाधानं नास्ति ॥१४॥

( एकादशे—दीक्षणीयादिषु व्रतोपायनाभावाधिकरणे सूत्राणि २०—२३ )।

तथा व्रतमुपेतत्वात् ॥ २० ॥ विप्रतिषेधाच्च ॥ २१ ॥ सत्यवदिति चेत् ॥२२॥ न संयोगपृथक्त्वात् ॥२३॥

एकादशाधिकरणमारचयति—

व्रतोपानयनमेष्वास्ति न वा, चोदकतोऽस्ति तत्।
उपेतस्यापरित्यागे विरोधान्नास्ति तत्पुनः ॥ १५ ॥

* सत्यवचनब्रह्मचर्यादिसंकल्परूपं व्रतं[५] सोमार्थं पूर्वमुपेतम्। तच्चाऽऽसोमसमाप्तेर्न परित्यक्तव्यम्[६]। तत्र पुनरुपायनं विरुध्यते। 'अग्ने व्रतपते व्रतं चरिष्यामि' इत्ययमुपायनमन्त्रः। न हि चर्यमाणे व्रते 'चरिष्यामि' इति प्रयोगः संभवति। तस्मात्—प्रसङ्गसिद्धं व्रतम् ॥१५॥

---

* षट्स्वपि पुस्तकेषु संशयपूर्वपक्षग्रन्थस्यानुपलब्धत्वात्—"तत्रैव ( दीक्षणीयादिष्वेव ) प्राकृतं व्रतोपायनं कर्तव्यं, न वा, इति संशये—'कर्तव्यम्' इति प्राप्ते"—इति शास्त्रदीपिका स्मर्तव्या।

---

१ ख. °सिद्धिस्त°। २ ख. निर्वपानि। ३ क. ख. °मिकवि°। ४ ज. झ. प्राचीनेनैव। ५ क. ख. ज. झ. ञ. °नव्रतच°। ६ ज. झ. परित्यक्तम्।

(द्वादशे-ऐष्टिकेष्वग्न्यन्वाधानाननुष्ठानाधिकरणे सूत्राणि २४-२८)।

ग्रहणार्थं च पूर्वमिष्टेस्तदर्थत्वात्
॥ २४ ॥ शेषवदिति चेत् ॥ २५ ॥
न वैश्वदेवो हि॥२६॥ स्याद्वा व्यप-
देशात्॥२७॥न गुणार्थत्वात् ॥२८॥

द्वादशाधिकरणमारचयति-

परिग्रहाय देवानामन्वाधानं भवेन्न वा ।
असिद्धत्वाद्भवेन्मैवं वैश्वदेवेन सिद्धितः ॥ १६ ॥

धारणार्थमन्वाधानं प्रसङ्गात्सिध्यतु नाम, देवतापरिग्रहार्थं त्वसिद्धत्वात्पुनः कर्तव्यम् । अन्वाधानमन्त्रस्य देवतापरिग्रहार्थत्वमपि दर्शपूर्णमासयोराम्नायते- 'ममाग्ने वर्चो विहवेष्वस्तु-इत्यग्निं गृह्णाति' इति ।

नैतद्युक्तम् । देवतापरिग्रहस्याप्यत्र विद्यमानत्वात् । तथा च श्रूयते-'आग्नावैष्णवमेकादशकपालं निर्वपेद्दीक्षिष्यमाणः, अग्निरवमो देवानां विष्णुः परमः, यदाग्नावैष्णवमेकादशकपालं निर्वपति देवता एवोभयतः परिगृह्य दीक्षते' इति ।- प्रधानदेवतानामेवात्र परिग्रहः, नाङ्गदेवतानाम्-इति चेत् । एवमपि विश्वदेवतापरिग्रहेण सर्वदेवपरिग्रहः सिध्यति । विश्वशब्दस्य सर्वशब्दपर्यायत्वात् । तस्मात्-न पृथगन्वाधानम् ॥ १६ ॥

( त्रयोदशे-ऐष्टिकेषु पत्नीसंनहनाननुष्ठानाधिकरणे सूत्रम्- )।

संनहनं च वृत्तत्वात् ॥ २९ ॥

त्रयोदशाधिकरणमारचयति-

पत्नीसंनहनं कार्यं चोदकादिति चेन्न तत् ।
बन्धवासोधारणयोर्योक्त्रबन्धनसिद्धितः ॥ १७ ॥

यद्यदृष्टाय बन्धः, यदि वासोधारणं दृष्टप्रयोजनम् । तदुभयमपि सौमिकेन योक्त्रबन्धनेन सिध्यति । 'योक्त्रेण पत्नीं संनह्यति' इति सोमे विधीयते । तस्मात्-प्रैतङ्क्तमिदं पत्नीसंनहनम् ॥ १७ ॥

---

१ क. °रिग्रहणार्थं° । ज. °रिहारार्थं° । २ क. गृह्णामि । ३ क. ख. ञ. दीक्षितः । ४ ख. °बन्धेन सि° । ५ ख. °दि च वा° । झ. °द्वि वा वा° । ६ क. प्रत्यङ्क° ।

( चतुर्दशे—ऐष्टिकेष्वारण्यभोजनाभावाधिकरणे—सूत्रम्—)।

अन्याविधानादारण्यभोजनं न स्यात्,
उभयं हि वृत्त्यर्थम् ॥ ३० ॥

चतुर्दशाधिकरणमारचयति—

आरण्याशनमत्रास्ति चोदकप्राप्तितो यदि ।
वृत्त्यर्थत्वेन तत्सिद्धं सोमप्रोक्तात्पयोव्रतात् ॥ १८ ॥

स्पष्टोऽर्थः ॥ १८ ॥

( पञ्चदशे—ऐष्टिकेषु शेषभक्षानुष्ठानाधिकरणं सूत्रम्— )।

शेषभक्षास्तथेति चेन्नान्यार्थत्वात् ॥ ३१ ॥

पञ्चदशाधिकरणमारचयति—

यजमानगता भक्ष्या न सन्त्यारण्यवद्यदि ।
न वृत्त्यर्था इमे किंतु कर्तव्याः प्रतिपत्तये ॥ १९ ॥

इडाप्राशित्रभक्षाणां प्रतिपत्त्यर्थत्वं षष्ठे निरूपितम् ॥ १९ ॥

( षोडशे—ऐष्टिकेष्वन्वाहार्यदानाभावाधिकरणे सूत्रम्— )।

भृतत्वाच्च परिक्रयः ॥ ३२ ॥

षोडशाधिकरणमारचयति—

अन्वाहार्योऽत्र दातव्यो न वाऽऽद्यः सोममात्रगा ।
गवादिदक्षिणा यस्मान्नाऽऽनत्यन्तरवर्जनात् ॥ २० ॥

'गौश्चाश्वश्च'—इत्यादिदक्षिणा प्रधानस्यैव, न त्वङ्गानाम् । 'दक्षिणाः सोमस्य' इत्यभिधानात् । अत इष्टिषु चोदकप्राप्तोऽन्वाहार्यो दातव्यः । मैवम् । सोमप्रयोगमध्यपातिनीषु पृथगानत्यभावात् । तस्मात्—न दातव्यः ॥ २० ॥

( सप्तदशे—ऐष्टिकेषु शेषभक्षस्य संस्कारार्थतया कर्तव्य-
त्वाधिकरणे सूत्रे ३३–३४ ) ।

शेषभक्षास्तथेति चेत् ॥ ३३ ॥

---

१ ख. °क्तासत्रो व्र° । २ क. ख. ज. झ. ञ. भक्षा । ३ प्रतिपत्त्यर्थं । ४ क. °नत्यं तद्व° । ख. °नन्त्यतरव° । ५ क. ज्ञातव्यः । ६ क. °नन्त्यभा° ।

न कर्मसंयोगात् ॥ ३४ ॥

सप्तदशाधिकरणमारचयति—

ऋत्विग्भक्षा निवर्तेरन्नन्वाहार्यवन्न तत्[1] ।
याजमानवदेतेषां कार्यत्वात्प्रतिपत्तये ॥ २१ ॥

इदं च प्रतिपत्त्यर्थत्वं[2] दशमाध्याये वर्णितम् ॥२१॥

( अष्टादशे—ऐष्टिकेषु होतुर्वरणसद्भावाधिकरणे सूत्राणि ३५–४१ ) ।

प्रवृत्तवरणात्प्रतितन्त्रं वरणं होतुः क्रियेत ॥३५॥
ब्रह्माऽपीति चेत् ॥ ३६ ॥ न प्राङ्नियमात्तदर्थं
हि ॥ ३७ ॥ निर्दिष्टस्येति चेत् ॥ ३८ ॥ नाश्रु-
तित्वात् ॥ ३९ ॥ होतुस्तथेति चेत् ॥ ४० ॥ न
कर्मसंयोगात् ॥ ४१ ॥

अष्टादशाधिकरणमारचयति—

नैतासु वरणं होतुरस्ति वाऽऽनत्यभावतः ।
नास्त्यन्वाहार्यवद्धर्मार्थत्वादत्रेष्टिवद्भवेत् ॥ २२ ॥

यथैतास्विष्टिषु पृथगानत्यभावादन्वाहार्यो नास्ति, तथा होतुर्वरणमपि नास्ति। इति चेत् ।

न । वरणस्य धर्मार्थत्वात् । दर्शपूर्णमासेष्टावपि धर्मार्थमेव वरणम् । वरणात्प्रागपि सामिधेनीषु होतुः प्रवृत्तत्वात् । न हि प्रवृत्तस्य पुनरानतिः कर्तव्या । तस्मात्—प्रकृताविवात्रापि धर्मार्थमेव वरणं कार्यम्। न त्वानत्यर्थेन[3] सौमिकवरणेनास्य प्रसङ्गसिद्धिः[4] ॥ २२ ॥

(एकोनविंशे—आतिथ्यायां बर्हिषः प्रतिकर्म प्रोक्षणाभावाधिकरणे सूत्रे ४२–४३ ) ।

यज्ञोत्पत्त्युपदेशे निष्ठितकर्मप्रयोग-
भेदात्प्रतितन्त्रं क्रियेत ॥ ४२ ॥ न
वा कृतत्वात्तदुपदेशो हि ॥ ४३ ॥

एकोनविंशाधिकरणमारचयति—

---

१ क. च. ज. झ. ञ. °त् । यज° । २ ख. प्रतिपत्त्यर्थ° । ३ ञ. °त्यर्थत्वेन । ४ ञ. झ. प्रसङ्गासिद्धिः ।

आतिथ्यादिगते बर्हिष्युक्षणादि पृथङ्न वा ।
आद्योऽतन्त्रप्रसङ्गत्वान्न प्रसङ्गानिवारणात् ॥ २३ ॥

'यदातिथ्यायां बर्हिः, तदुपसदाम्, तदग्नीषोमीयस्य' इति श्रुतम् । तच्च बर्हिस्त्रयाणां साधारणमिति चतुर्थे निरूपितम् । तस्मिन्साधारणे बर्हिषि प्रोक्षणादिसंस्कारः प्रतिकर्म पृथगनुष्ठेयः । कुतः । तन्त्रप्रसङ्गयोरत्रासंभवात् । न तावत्तन्त्रमस्ति । दर्शयागत्रयवदेककालीनत्वाभावात् । नापि प्रसङ्गः । एकस्य तन्त्रमध्येऽन्ययोरपठितत्वात् । इति प्राप्ते—

ब्रूमः—बर्हिष एकत्वात्सकृत्प्रोक्षणादिभिः संस्कारे पुनःप्रोक्षणाद्यपेक्षा नास्ति । ते च प्रोक्षणादयः प्राथम्यादातिथ्यायां कार्याः । तत उपसत्स्वग्नीषोमीये च प्रसङ्गसिद्धिर्न वारयितुं शक्यते ॥ २३ ॥

( विंशे—आतिथ्यायां स्तरणमन्त्रावृत्त्यधिकरणे सूत्रम्— ) ।

देशपृथक्त्वान्मन्त्रोऽभ्यावर्तेत ॥ ४४ ॥

विंशाधिकरणमारचयति—

तत्राऽऽस्तरणमन्त्रस्य प्रसङ्गो यदि वा भिदा ।
आद्यः प्रोक्षणवन्मैवं देशस्तरणभेदतः ॥ २४ ॥

तस्मिन्नातिथ्याबर्हिषि 'ऊर्णाम्रदसं त्वां स्तृणामि' इति य आस्तरणमन्त्रः, तस्याग्नीषोमीये प्रसङ्गसिद्धिः स्यात् । प्रोक्षणादौ तद्दर्शनात् । इति चेत् ।

मैवम् । आतिथ्यायाः प्राग्वंशो देशः, अग्नीषोमीयस्योत्तरवेदिः । ततो देशभेदतः स्तरणभेदे सति तत्संनिपातिनो मन्त्रस्याप्यावर्तनीयत्वात् ॥ २४ ॥

( एकविंशे—बर्हिषो देशान्तरनयने संनहनहरणमन्त्रयोरप्रयोगाधिकरणे सूत्रे ४५–४६ ) ।

संनहनहरणे तथेति चेत् ॥ ४५ ॥ नान्यार्थत्वात् ॥ ४६ ॥

एकविंशाधिकरणमारचयति—

संनाहे हरणे मन्[illegible]र्यौ किं न वाऽग्रिमः ।
पूर्ववद्देशं कार्यं म[illegible] तदभावतः ॥ २५ ॥

आतिथ[illegible]देशे [illegible] बर्हि[illegible]षोमीयदेशे यदा नीयते, तदा संनहने

---

१ ज. झ. साधन[illegible]ति । २ ज झ [illegible]र्गगतया° । ३ ञ. °रपि प° । ४ च. ज. झ. ञ. तत्र स्त° । ५ क. ख. ऊर्णा । ज. झ. ऊर्ण । ६ ख. च. ज. झ. ञ. देशभेदेन ।

हरणे च–'इन्द्राण्यै संनहनम्–' बृहस्पते मूर्ध्ना हरामि' इति यौ मन्त्रौ, तौ स्तरणवदावर्तनीयौ। इति चेत्।

मैवम्। प्रकृतौ लवनदेशादानयने कार्ये तौ मन्त्रौ दृष्टौ, न तु गार्हपत्यादाहवनीयं प्रत्यानयने। अतोऽत्रापि प्राग्वंशादुत्तरवेदिं प्रत्यानयने तौ मन्त्रौ न चोदकात्प्राप्नुतः॥ २५॥

इति श्रीमाधवीये जैमिनीयन्यायमालाविस्तरे द्वादशाध्यायस्य प्रथमः पादः॥ १॥

| | अत्र पादे | आदितः। |
|---|---|---|
| अधिकरणानि | २१ | ८६०। |
| सूत्राणि | ४६ | २५२२। |

(अथ द्वादशाध्यायस्य द्वितीयः पादः)।

(प्रथमे–विहाराग्नेर्वैदिककर्ममात्रार्थताधिकरणे सूत्राणि १–७)।

विहारो लौकिकार्थानामर्थं साधयेत्प्रभुत्वात्॥१॥ मांसपाकप्रतिषेधश्च तद्वत्॥२॥ निर्देशाद्वा वैदिकानां स्यात्॥ ३॥ सति चौपासनस्य दर्शनात्॥ ४॥ अभावदर्शनाच्च॥ ५॥ मांसपाको विहितप्रतिषेधः स्यादाहुतिसंयोगात्॥ ६॥ वाक्यशेषो वा दक्षिणेऽस्मिन्नारभ्यविधानस्य॥ ७॥

द्वितीयपादस्य प्रथमाधिकरणमारचयति–

सर्वार्थो वैदिकार्थो वा विहारः, शक्तिमत्त्वतः।
आद्यः प्रत्यक्षवचनैर्निराकाङ्क्षत्वतोऽन्तिमः॥ १॥

विहारो गार्हपत्यादिस्त्रिविधोऽग्निः। स च शक्तत्वाल्लौकिकदहनपचन–वैदिकाग्निहोत्रादिव्यवहारार्हः। इति चेत्।

मैवम्। 'गार्हपत्ये हवींषि श्रपयन्ति' 'दक्षिणाग्नावन्वाहार्यं पचति, 'आहवनीये जुह्वति' इत्येतादृशैः प्रत्यक्षवचनैर्निराकाङ्क्षाणां गार्हपत्यादीनां लौकिकार्थत्वायोगात्। तस्मात्–अग्निहोत्रादिवैदिकार्थो विहारः॥ १॥

---

१ ज. झ पचन्ति। २ ञ. जुहोति। ३ च. 'किकत्वा'।

(द्वितीये—सवनीयपशौ पशुपुरोडाशस्य कर्तव्यताधिकरणे सूत्राणि ८–१०)।

सवनीये छिद्रापिधानार्थत्वात्पशुपुरोडाशो न स्यादन्येषामेवमर्थत्वात् ॥ ८ ॥ क्रिया वा देवतार्थत्वात् ॥ ९ ॥ लिङ्गदर्शनाच्च ॥ १० ॥

द्वितीयाधिकरणमारचयति—

सवनीये पुरोडाशोऽतिदिष्टो नोत विद्यते।
अन्यैः पिधानतो न स्याद्देवसंस्कृतये भवेत् ॥ २ ॥

अग्नीषोमीयपशौ विहितो यः पुरोडाशः, स च्छिद्रपिधानार्थः। 'शुषिरो ह वा एतर्हि पशुः, यर्हि वपामुत्खिदति, यद्व्रीहिमयः पुरोडाशो भवति, अपिहित्या अच्छिद्रतायै' इति श्रुतेः। स च पुरोडाशः सवनीये पशौ चोदकप्राप्तोऽपि न कर्तव्यः। सवनीये विहितैरेव पुरोडाशैस्तच्छिद्रपिधानात्। 'अनुसवनं सवनीयाः पुरोडाशा निरुप्यन्ते, अपिहित्या अच्छिद्रतायै' इत्युक्तत्वात्। इति प्राप्ते—

ब्रूमः—पुरोडाशस्य पशुदेवतासंस्कारार्थत्वं दशमस्य प्रथमपादे (अधि०९)निरूपितम्। पिधानवाक्यं त्वर्थवादः। तस्मात्—चोदकप्राप्तः पुरोडाशः कर्तव्यः॥२॥

(तृतीये—सवनीयपुरोडाशे हविष्कृदाह्वानस्याभावाधिकरणे सूत्रम्—)।

हविष्कृत्सवनीयेषु न स्यात्प्रकृतौ यदि सर्वार्था पशुं प्रत्याहूता सा कुर्याद्विद्यमानत्वात् ॥ ११ ॥

तृतीयाधिकरणमारचयति—

सवनीये पुरोडाशे स्यादाहूतिर्हविष्कृतः।
न वाऽतिदेशात्स्यान्मैवं पश्वाह्वानात्प्रसक्तितः॥ ३ ॥

(*सवनीयपुरोडाशस्याऽऽग्नेयपुरोडाशविकृतित्वात् 'प्रकृतिवद्विकृतिः कर्तव्या' इत्यतिदेशेन हविष्कृदाह्वानं तत्र कर्तव्यम्। इति चेत्।

मैवम्। पशौ कृतेन हविष्कृदाह्वानेन पुरोडाशादिष्वपि प्रसक्तत्वान्नास्त्याह्वानम्। यद्यपि—औषधार्थं हविष्कृदाह्वानं पशौ नास्ति, तथाऽप्येषा कृत्वाचिन्ता ॥ ३ ॥

* अयं धनुराकारचिह्नद्वयान्तरगतः पाठः—क. ख. च. ज. ञ. पुस्तकेषु नोपलब्धः। केवलं 'झ' पुस्तके त्रुटिपूरणायैव लिखितः।

१ झ. °द्रविधा°। २ च. ज. झ. ञ. सुषिरो। ३ क. ख. ञ. °तिखदति। ४ क. यतो व्रीहि°। ५ क. ख. च. ज. झ. ञ. निरूप्यन्ते। ६ क. ख. ब. °दाहुति°। ७ च. °स्याऽस्तु। च°

(चतुर्थे—तृतीयसवने हविष्कृदाह्वानस्यापुनरावृत्त्य-
धिकरणे सूत्रे १२—१३)।

पशौ तु संस्कृते विधानात्तार्तीयसवनिकेषु स्यात्सौ-
म्याश्विनयोश्चापवृक्तार्थत्वात् ॥ १२ ॥ योगाद्वा
यज्ञाय तद्विमोके विसर्गः स्यात् ॥ १३ ॥

चतुर्थाधिकरणमारचयति—

अस्त्याहूतिश्चरौ सौम्ये नास्ति वा, पशुपाकतः।
निवृत्तत्वादस्ति मैवमनिवृत्तेः पुरोत्थितेः ॥ ४ ॥

तृतीयसवनीये ये सौम्यचर्वादयः, तेषु हविष्कृदाह्वानं पुनः कर्तव्यम्। पश्व-र्थमाहूतायास्तस्याः पशुपाके निष्पन्ने सति निवृत्तत्वात्। इति चेत्।

मैवम्। प्रकृतौ पत्नीसंयाजेभ्य ऊर्ध्वं हविष्कृतः पत्न्या उत्थानं वाक्येन विहितम्। पशावपि ततः पूर्वं निवृत्त्यभावात्। तस्मात्—तत्कालीनेषु सौम्यचर्वादिषु नास्ति पुनराह्वानम् ॥ ४ ॥

(पञ्चमे—निशि यज्ञेऽमावास्यातन्त्रप्रयोगाधिकरणे
सूत्राणि १४—१८)।

निशि यज्ञे प्राकृतस्याप्रवृत्तिः स्यात्प्रत्यक्षशिष्टत्वात्
॥ १४ ॥ कालवाक्यभेदाच्च तन्त्रभेदः स्यात् ॥ १५॥
वेद्युद्धननव्रतं विप्रतिषेधात्तदेव स्यात् ॥ १६ ॥
तन्त्रमध्ये विधानाद्वा तत्तन्त्रा सवनीयवत् ॥ १७ ॥
वैगुण्यादिध्माबर्हिर्न साधयेदग्न्याधानं च यदि देव-
तार्थम् ॥ १८ ॥

पञ्चमाधिकरणमारचयति—

निशि यज्ञे दर्शतन्त्रं नोतास्त्येतन्न दर्शगे।
तन्त्रमध्ये विध्यभावादस्त्यर्थात्तद्विधानतः ॥ ५ ॥

'अग्नये रक्षोघ्ने पुरोडाशमष्टाकपालं निर्वपेत्, यो रक्षोभ्यो बिभीयात्' इति

---

१ क. ख. च. °स्त्याहुति°। २ च. पुरःस्थितेः। झ. पुरास्थितेः। ३ ज. °दाहू°। ४ क. ख. ङ. ज. ञ. °म्। सकृदाहू°। ५ च. °दार्शिके।

विधायेदमाम्नातम्--'अमावास्यायां निशि यजेत' इति । एतस्मिन्यज्ञे दर्शयागस्याङ्गतन्त्रं न प्रसज्यते । कुतः। दर्शकर्मणस्तन्त्रमध्येऽस्य रक्षोघ्नस्य विध्यभावात् । यत्तु--'अमावास्यायाम्' इति पदम्, तत्कालपरम् । कर्मपरत्वे लक्षणापत्तेः। अतो न वाक्यात्तन्त्रमध्ये विधिः । प्रकरणं तु भिद्यते, काम्येष्टिकाण्ड एतस्य पाठात्। इति प्राप्ते--

ब्रूमः--मा भूद्वाक्येन प्रकरणेन वा तन्त्रमध्ये विधिः । तथाऽपि--अमावास्याकाले दर्शकर्मणः प्रक्रान्तत्वेन निशि क्रियमाणो यागोऽर्थवशाद्दर्शकर्मतन्त्रमध्यपाती भवति । तस्मात्--अत्रास्ति प्रसङ्गसिद्धिः ॥ ५ ॥

( षष्ठे--विकृतिष्वप्यारम्भणीयानुष्ठानाधिकरणे सूत्राणि १९--२१)।

**आरम्भणीया विकृतौ न स्यात्प्रकृतिकालमध्यत्वात्कृता पुनस्तदर्थेन ॥ १९ ॥ स्याद्वा कालस्याशेषभूतत्वात् ॥ २० ॥ आरम्भविभागाच्च ॥ २१ ॥**

षष्ठाधिकरणमारचयति--

**आरम्भणीया सौर्यादौ नोत स्यान्न प्रयोगवत् ।**
**क्रत्वर्था न प्रयोगार्था क्रत्वारम्भे ततो भवेत् ॥ ६ ॥**

दर्शपूर्णमासयोः प्रथमप्रयोगस्यैवोपक्रम आरम्भणीया, न प्रयोगान्तरस्य, इति नवमे (पा० १ अ० ११) निर्णीतम् । आदौ कृतस्य कर्तृसंस्कारस्य यावज्जीवपर्याप्तत्वाद्यथा न प्रयोगान्तर आरम्भणीया, तथा यावज्जीवलक्षणप्रकृतिकालमध्यपातिनीनां सौर्यादिविकृतीनां नास्ति तदपेक्षा । इति प्राप्ते--

ब्रूमः--' दर्शपूर्णमासावारप्स्यमानः ' इत्युक्तत्वात्क्रत्वर्था हि सा, न तु प्रयोगार्था । क्रत्वन्तराणि हि सौर्यादीनि । ' ततः--प्रयोगान्तरवैषम्यात्सौर्यादौ सा कर्तव्या । न यावज्जीवकालः प्रकृत्यङ्गम् । कर्तृधर्मत्वेन द्वितीये (पा० ४ अधि० १ ) निर्णीतत्वात् । अतो नोक्तरक्षोघ्नन्यायोऽत्र प्रसरति । तस्मात्--नास्त्यत्र प्रसङ्गः ॥ ६ ॥

**( सप्तमे--प्रधानानां धर्मविरोधे बहूनां धर्मानुष्ठानाधिकरणे सूत्रम्-- )।**

**विप्रतिषिद्धधर्माणां समवाये**

---

१ क. °मध्येऽभावात् ' अस्यां निशि यजेत ' इत्येवमप्यस्य । २ क. °न वा प्र° । ३ क. ख. °या, तथा सौर्यादिप्रयोगे । इति चेत् । न । क्रत्वर्था हि सा । ४ ञ. °था सौर्यादिप्रयोगे । इति चेत् । मैवम् । क्रत्वर्था । ५ क. ख. ज. झ. ञ. प्रवृत्त्यङ्गम् । ६ ज. झ. नोक्तो र° ।

भूयसां स्यात्सधर्मत्वम्॥२२॥

सप्तमाधिकरणमारचयति—

या पञ्चदशरात्रस्य सुब्रह्मण्याद्यकालगा ।
आग्नेयी स्यात्किमैन्द्री वा प्रथमाहानुगुण्यतः ॥ ७ ॥
आग्नेयी प्रथमं चाहो विरोधानुदयाद्बलि ।
न बह्वनुग्रहादैन्द्री कुलार्थत्यागनीतितः ॥ ८ ॥

पञ्चदशरात्रस्याग्निष्टुत्प्रथममहः। तस्यैकाहरूपोऽग्निष्टुत्प्रकृतिः। तत्रोपसत्कालीनसुब्रह्मण्याह्वानार्थमियमाग्नेयी विहिता । तदेतद्विकृतिरूपे प्रथमेऽहनि चोदकतः प्राप्नोति । इतरेषु चतुर्दशस्वहःसु स्वस्वप्रकृत्यनुसारेणैन्द्री प्राप्ता । उपसत्कालीनायाश्च सुब्रह्मण्याया अहर्गणेषु तन्त्रं निर्णीतम् । तथा सत्यत्रोपसत्कालीनसुब्रह्मण्यायामाग्नेय्यैन्द्र्योः कलहप्राप्त्यावसंजातविरोधितया प्रबलस्य प्रथमस्याह्न आनुगुण्येनाऽऽग्नेयी कार्या । इति प्राप्ते—

ब्रूमः—बह्नामह्नामनुग्रहायैन्द्री कार्या । ' त्यजेदेकं कुलस्यार्थे ' इति न्यायेन बहुत्वमपि प्राबल्यकारणम् ॥७॥८॥

इदमेवाधिकरणं वार्तिककाराभिमतेनोदाहरणेनाऽऽरचयति—

सप्तयागसमूहस्य वृधन्वत्यावृचावुत ।
वार्त्रघ्न्यावाज्यभागार्थे प्रथमत्वाद्दधीन्द्रयोः ॥ ९ ॥
दर्शधर्मातिदेशेन प्राप्त आद्योऽन्तिमो यतः ।
घृतं मध्वाप इत्येषां बहूनां बलितोचिता ॥१०॥

काम्येष्टिकाण्डे श्रूयते—" अग्नये दात्रे पुरोडाशमष्टाकपालं निर्वपेत्, इन्द्राय प्रदात्रे पुरोडाशमेकादशकपालम्, दधि मधु घृतमापो धानाः, तत्संसृष्टं प्राजापत्यं पशुकामः ' इति । एतेषां च सप्तयागानां प्रयोगैक्यादाज्यभागौ तन्त्रेणानुष्ठेयौ । तेष्वैन्द्रयाग ऐन्द्राग्नविकृतिः। दधियागः सांनाय्यविकृतिः । तदुभयानुसारेण दर्शधर्मातिदेशादाज्यभागयोः पुरोनुवाक्ये वृधन्वत्यावृचौ प्राप्नुतः । ' मधु, घृतम् , आपः ' इत्येतद्द्रव्यकास्त्रयो यागा उपांशुयाजविकृतयः । तदित्थमनुसारेण पूर्णमासधर्मातिदेशाद्वार्त्रघ्न्यावृचौ प्राप्नुतः । तत्र—ऐन्द्रयागः प्राजापत्ययागात्पूर्वं पठितः । दधिद्रव्यं च मधुघृतोदकद्रव्येभ्यः पूर्वं पठितम् । अतः प्राबल्याद्वृधन्वत्यौ । इति प्राप्ते—

---

१ क. ञ. °वाऽहो । २ क. ख. च. °द्वली ॥ न. ३ ख. °सु प्र° । ञ. °सु स्वप्र । ४ च. °लीनसु° । ५ ज. झ. °संगत° । ६ ख. °रति । ७ ख. ज झ. तेषां । ८ क. ख. ञ. °प्रागवि° । ९ ख. ज. झ. °ण ध° ।

पुनः—यद्यपि धर्मो मुख्यस्य प्रथममवगम्यते, तथाऽपि भूयसामनुग्रहाय पश्चादाश्रीयते । तस्मात्—वार्त्रघ्न्यौ ॥ ९ ॥ १० ॥

( अष्टमे { तुल्यसंख्याकानां धर्मविरोधे प्रथमस्यैव धर्मानुष्ठानाधिकरणे } सूत्रे २३–२४ ) ।

मुख्यं वा पूर्वचोदनाल्लोकवत् ॥ २३ ॥

तथा चान्यार्थदर्शनम् ॥ २४ ॥

अष्टमाधिकरणमारचयति—

आग्नावैष्णवसारस्वतयोरिच्छाऽथ मुख्यगम् ।
आद्यो नियामकाभावादन्त्यः प्राथम्यतो भवेत् ॥ ११ ॥

'आग्नावैष्णवमेकादशकपालं निर्वपेत्', 'सरस्वतीमाज्यस्य यजेत्' इति श्रूयते । तत्र—आग्नावैष्णवस्यैन्द्राग्नविकृतित्वेन, सारस्वताज्यस्य चोपांशुयाजविकृतित्वेन,* आज्यभागमन्त्रविकल्पः । नियामकाभावात् । इति चेत् ।

मैवम् । आग्नावैष्णवस्य प्रथमपठितत्वेन मुख्यत्वात्तज्जमनुष्ठानं युक्तम् ॥ ११ ॥

( नवमे—अङ्गगुणविरोधे प्रधानगुणस्यैव प्राबल्याधिकरणे सूत्रम्— ) ।

अङ्गगुणविरोधे च तादर्थ्यात् ॥ २५ ॥

नवमाधिकरणमारचयति—

य इष्ट्या पशुनेत्यादौ दीक्षाकालोऽथ सोमकः ।
आद्यः प्राथम्यतो मैवं प्रधानस्य बलित्वतः ॥ १२ ॥

*दीक्षा पर्वणि वा सुत्या दीक्षा स्यात्प्रथमत्वतः ।
सुत्या प्राधान्यतोऽन्या तु शेषत्वादपकृष्यते ॥ १३ ॥

'य इष्ट्या पशुना सोमेन वा यजेत, सोऽमावास्यायां पौर्णमास्यां वा' इति श्रूयते । तत्र—अङ्गभूताया दीक्षणीयेष्टेः प्रधानभूतायाः सुत्यायाश्चैकमेव पर्वदिनं प्राप्नोति । तच्च विरुद्धम् । 'एका दीक्षा तिस्र उपसदः, पञ्चमी प्रसुतः'

* विकृतित्वेन पश्चात्त्वेन पूर्ववन्नियामकस्य बहुत्वस्याभावादिच्छयाऽऽज्यभागमन्त्रविकल्पो नियामकाभावात् । इति च. ञ. पुस्तकयोः पाठष्टिप्पणरूप इव भाति । * इयं कारिका क. ख. ञ. पुस्तकेषु त्रुटिता ।

१ ज. झ. °वृत्त्यं प्रा° । २ ज. झ. °तीमथाऽऽज्य° । ३ ख. °गवि° । ४ क. °तन्त्रम° । ज. °सद्गम° । ५ ख. °थानार्थव° । ६ क. पञ्चमीं । ७ क. ख प्रसूतः ।

इत्युपसद्भिस्तयोर्मध्ये व्यवधानासंगमात् । तत्र पूर्वोक्ताग्नावैष्णवन्यायेनेष्टेः प्रथमप्रस्थितत्वाद्दीक्षणीयेष्टिः पर्वण्यनुष्ठेया । तदनुसारेण दिनान्तरे सुत्याया उत्कर्षः । इति प्राप्ते—

ब्रूमः—प्रधानत्वात्सुत्यैव दर्शेऽनुष्ठेया । तदनुसारेण शेषभूता दीक्षा दिनान्तरेऽपकृष्यते ॥१२॥१३॥

( दशमे—परिधौ परिधियूपोभयधर्मानुष्ठानाधिकरणे सूत्रम् ) ।

परिधिर्द्व्यर्थत्वादुभयधर्मा स्यात् ॥ २६ ॥

दशमाधिकरणमारचयति—

पश्वर्थपरिधौ स्वीयधर्मो यद्वा द्विधर्मता ।
मुख्यत्वादादिमोऽन्त्यः स्यान्नियोजनविधानतः ॥ १४ ॥

पशुमतसु चातुर्मास्येषु 'परिधौ पशुं नियुञ्जन्ति' इति श्रूयते । तत्र मार्जनादयः परिधेः स्वकीयधर्माः । त एव मुख्यत्वात्तस्मिन्ननुष्ठेयाः, न तु प्रोक्षणादयो यूपधर्माः । तेषां परिधिं प्रत्यमुख्यत्वात् । इति प्राप्ते—

ब्रूमः—यथाऽग्निपरिधानार्थत्वेन मार्जनादीनां परिधिधर्माणामनुष्ठानम्, तथा यूपकार्ये नियोजने परिधिविधानेन यूपधर्माणां प्रोक्षणादीनामप्यनुष्ठानं युक्तम् । ततो द्विधर्मत्वम् ॥१४॥

(एकादशे—परिधौ विरोधियूपधर्माननुष्ठानाधिकरणे सूत्राणि २७–२९)।

यौप्यस्तु विरोधे स्यान्मुख्यानन्तर्यात् ॥ २७ ॥ इतरो वा तस्य तत्र विधानात् ॥ २८ ॥ उभयोश्चाङ्गसंयोगः ॥ २९ ॥

एकादशाधिकरणमारचयति—

विरोधितक्षणाद्यत्र कार्यं नो वा यतो यजौ ।
यूपासत्तिस्ततः कार्यं न तद्रूपोपमर्दनात् ॥ १५ ॥

त्वक्सहितत्वशयानत्वादयः परिधिधर्माः । तेषां विरोधिनस्तक्षणोच्छ्रयणादयो यूपधर्माः ते च यागे प्रत्यासन्नाः यागनिष्पादकस्य पशोरङ्गे यूपे वर्तमानत्वात् । त्वक्सहितत्वादयस्तु नाऽऽसन्नाः यागस्य निष्पादकं हविः । हविषामाधारोऽग्निः

१ ज. झ. दिशान्तरे । च दिनान्तरेषु । २ क. ख. च. नियुञ्जति । ३ च. संमार्गादयः । ४ च. यूपाः सन्ति त° । ५ ख. च. °स्त । न या° ।

अग्नेरङ्गं परिधिः । परिधौ च वर्तमानत्वात् । तस्मात्—तक्षणादयः कार्याः ।
इति प्राप्ते—

ब्रूमः—तक्षणादिना परिधिस्वरूपे उपमर्दिते सति कुत्र पशुनियोजनं क्रियेत ।
तस्मात्—न कार्याः ॥ १५ ॥

(द्वादशे—सवनीयपुरोडाशयोः पशोरेव तन्त्रिताधिकरणे सूत्राणि ३०-३२)।

पशुसवनीयेषु विकल्पः स्याद्वैकृतश्चेदुभयोरश्रुतिभूतत्वात् ॥ ३० ॥ प्राशुक्तं वा तस्य वैशेषिकाम्नानात्, तदनर्थकं विकल्पे स्यात् ॥ ३१ ॥
पशोश्च विप्रकर्षस्तन्त्रमध्ये विधानात् ॥ ३२ ॥

द्वादशाधिकरणमारचयति—

सवनीयपुरोडाशाः प्रातःसवनगास्त्रयः ।
सवनीयः पशुस्तत्र तन्त्रित्वं किं विकल्प्यते ॥ १६ ॥
पशोरेवेतिनियमो हेत्वभावाद्विकल्प्यते ।
पुनः प्रैषात्स्वरुप्रासात्पशोरेव हि तन्त्रिता ॥ १७ ॥

यदीयतन्त्रमध्येऽर्थान्तरं, स तन्त्री । अर्थान्तरं प्रसाङ्गि । तथा सति 'प्रातःकालीनसवनीयपुरोडाशानां सवनीयपशोश्च मध्ये तन्त्रित्वमस्यैव'—इति नियमे हेतुर्नास्ति । उभयत्र प्रत्यक्षाङ्गोपदेशाभावात् । चोदकप्राप्तेश्च समानत्वात् । माध्यंदिनतृतीयसवनद्वयगतानां पशुतन्त्रमध्य उपक्रमात्प्रसङ्गित्वमेव, न तु तन्त्रित्वमिति निश्चेतुं शक्यते । पशोः प्रातःकालीनानां चोपक्रमेऽपि पौर्वापर्यं न ज्ञायते। तस्मात्—विकल्पेन तन्त्रित्वम् । इति प्राप्ते—

ब्रूमः—सवनीयपशौ चोदकप्राप्ते मैत्रावरुणप्रैषमन्त्रे पाठविकारः प्रत्यक्षमाम्नायते—'अयं यजमानः' इति पाठस्य 'अयं सुतासुती यजमानः' इति विशेषितत्वात् । तथा सोमान्ते स्वरोः प्रतिपत्तिः प्रत्यक्षमाम्नायते-'संस्थिते यज्ञे प्रस्तरं प्रहरति, स्वरुं वा यज्ञवेशसाय'इति । तस्मात्—पशुस्तन्त्री । पुरोडाशानां तूपक्रमे पश्चाद्भावित्वनिश्चयाभावेऽपि समाप्तिपूर्वभावित्वनिश्चयेन मध्यपातित्वात्प्रसाङ्गित्वम् १६।१७॥

---

१ ज. झ. °मः—लक्ष° । २ क. ख. क. क्रियते । ३ क. °नीयः पु° । ४ क ख. च. ज. झ. °नीयप° । ५ ज. झ. ञ. °रेवोत नि° । ६ क. ख. च. °प्राप्ता पशो° । ७ क. ख. ञ तन्त्रता । ८ क °मस्त्येव । ९ क °यमहे° । १० च सुन्वन्यज° । ११ क ख ञ स्व॰ रुर्वा । १२ ञ °वित्वभा° ।

( त्रयोदशे—समानतन्त्रप्रकृतिविकृत्योर्विकृतितन्त्रानुष्ठानाधिकरणे सूत्रम्— )।

अपूर्वे च प्रकृतौ समानतन्त्रा चेदनित्यत्वादनर्थकं हि स्यात् ॥ ३३ ॥

त्रयोदशाधिकरणमारचयति—

प्रकृतिर्विकृतिर्वा स्यात्तन्त्रिणी, प्रकृतिर्मतः।
नित्याऽसावुपदिष्टाङ्गा मैवं कामबलित्वतः ॥ १८ ॥

'य इष्टया पशुना'—इत्यादिशास्त्रात्प्रकृतिविकृत्योर्नित्यकाम्येष्ट्योः पर्वण्येवानुष्ठेयतया सहप्रयोगे सति यावज्जीवं कर्तव्यत्वादङ्गोपदेशयुक्तत्वाच्च प्रबला प्रकृतिर्दर्शपूर्णमासेष्टिस्तन्त्रिणी। जीवनमध्यपतितत्वाच्चोदकप्रवृत्तेरुपदेशापेक्षत्वाच्च दुर्बला सौर्यादिविकृतिः प्रसङ्गिनी। इति प्राप्ते—

ब्रूमः—कामस्य शीघ्रप्रवर्तकत्वादनुष्ठाने प्रबला विकृतिरेव तन्त्रिणी। यद्यपि विकृतिरेकाहकाला, प्रकृतिद्व्यहकाला, तथाऽपि सहप्रयोगं कृत्वाऽपि चिन्तितम्॥

( चतुर्दशे—आग्रयणे प्रसूनबर्हिषामेव ग्रहणाधिकरणे सूत्रम्— )।

अधिकश्च गुणः साधारणेऽविरोधात्कांस्यभोजिवदमुख्येऽपि ॥ ३४ ॥

चतुर्दशाधिकरणमारचयति—

बर्हिराग्रयणे किंचित्प्रसूनं वा बहुत्वतः।
प्राथम्याच्चाग्रिमो मैवमलोपात्कांस्यभोजिवत् ॥ १९॥

ऐन्द्राग्नवैश्वदेवद्यावापृथिव्यादयो वैश्वदेवपर्वगतद्यावापृथिव्यानुसारेणाऽऽग्रयणेष्टौ प्रयुज्यन्ते। तत्रैन्द्रवैश्वदेवयोर्बर्हिर्मात्रं चोदकप्राप्तम्। तत्प्रकृतौ बर्हिर्विशेषस्यानुक्तत्वात्। द्यावापृथिव्ये तु स्वप्रकृत्यनुसारेण प्रसूनबर्हिरितिदिश्यते। प्रसूनं पुष्पितम्, लूनशेषान्मूलात्पुनरुत्पन्नं वा। तत्राऽऽग्रयणे यत्किंचिद्बर्हिर्मात्रं कर्तव्यम्। ऐन्द्राग्नवैश्वदेवयोरनेकत्वेन प्राथम्येन च तदानुगुण्यस्य न्याय्यत्वात्। इति प्राप्ते—

ब्रूमः—बर्हिरन्तरस्वीकारे द्यावापृथिव्ये प्रमाणप्राप्तः प्रसूनत्वनियमो लुप्यते। प्रसूनस्वीकारे चैन्द्राग्नवैश्वदेवयोर्न किंचिल्लुप्यते। तस्मात्—अलोपाय कांस्यभोजि-

१ क. ख. ज. झ. ञ. °त्या सा उ° । च. °त्या सा उपदिष्टा° । २ क. °काम्ययोः प. । ज. झ. ञ. °काम्येष्टौ । प° । ३ क. °शकर्तव्यत्वा° । ४ ख. ज. झ. ञ. °ध्यपातित्वा° । ५ ज. झ. काम्यस्य । ६ ज. °लूतं वा । ७ ख. च. ज. झ. ञ. °द्वितीया भागा आग° । ८ ज. झ. प्रथमेन । ९ क. ख. च. °प्राप्तप्र° ।

न्यायेन प्रसूनमेव कर्तव्यम्। शिष्यस्य कांस्यभोजनव्रतमस्ति, गुरोस्तु तन्नास्ति, तयोः सहभोजने यथोपसर्जनमपि शिष्यमनुसृत्य तव्द्रतापयितुं कांस्यमाद्रियते। तथाऽत्रापि द्रष्टव्यम् ॥ १९ ॥

( पञ्चदशे-द्यावापृथिवीयादीनां सर्वेषामेव तन्त्रित्वाधिकरणे सूत्राणि ३५—३७ )।

तत्प्रवृत्त्या तु तन्त्रस्य नियमः स्याद्यथा पाशुकं सूक्तवाकेन ॥ ३५ ॥ न वाऽविरोधात् ॥ ३६ ॥ अशास्त्रलक्षणाच्च ॥३७॥

पञ्चदशाधिकरणमारचयति—

द्यावापृथिव्यस्तन्त्री स्यात्सर्वे वा तन्त्रिणोऽग्रिमः।
प्रैषन्यायात्प्रसूनस्य तन्त्रित्वापादकत्वतः ॥ २० ॥
प्रसूनत्वं नोपदिष्टमविरोधात्तथाश्रितम्।
तन्त्रित्वनियतौ शक्तं नातः सर्वेऽत्र तन्त्रिणः ॥ २१ ॥

यथा मैत्रावरुणप्रैषमन्त्रविकारः पशुसंबन्धी सन्यशोस्तन्त्रित्वमापादयति, तथा प्रसूनत्वं द्यावापृथिव्यसंबन्धित्वाद्द्यावापृथिव्यस्य तन्त्रित्वमापादयति। इति प्राप्ते—

ब्रूमः—उक्तप्रैषमन्त्रविकारः प्रत्यक्षश्रुतः। इदं प्रसूनत्वमतिदिष्टत्वाच्च तन्त्रित्वमापादयितुं क्षमम्। न च—प्राबल्याभावे कथं तदाश्रयणम्—इति वाच्यम्। ऐन्द्राग्नादिना सह विरोधाभावमात्रेण तदाश्रयणात्। तस्मात्—एकस्य तन्त्रित्वनियमाभावेनाऽऽग्नेयादिवत्सर्वेऽप्यत्र तन्त्रिणः ॥२०॥२१॥

इति श्रीमाधवीये जैमिनीयन्यायमालाविस्तरे द्वादशाध्यायस्य द्वितीयः पादः ॥ २ ॥

| | अत्र पादे | आदितः। |
|---|---|---|
| अधिकरणानि | १५ | ८७५ । |
| सूत्राणि | ३७ | २५५९ । |

१ क. 'न पशून'। २ ख. 'प्रिमाः प्रै'। ३ क. 'त्वं चोप'। ४ क. 'पशुसन्यशुस-स्त्वमिति। ५ ख. 'त्सर्वत'। ग. ज. झ. 'त्सर्वेऽप्यत'।

( अथ द्वादशाध्यायस्य तृतीयः पादः )।

( प्रथमे-अष्टरात्रे वत्सत्वगहतवाससोः समुच्चयाधिकरणे सूत्रे १-२) ।

विश्वजिति वत्सत्वङ्नामधेयादितरथा तन्त्रभूयस्त्वादहतं स्यात् ॥ १ ॥ अविरोधो वा उपरिवासो हि वत्सत्वक् ॥२॥

तृतीयपादे प्रथमाधिकरणमारचयति-

त्वग्वाससोरष्टरात्रे विकल्पो नियमोऽथवा ।
समुच्चयो वा नामातिदेशसाम्याद्विकल्प्यते ॥ १ ॥
मुख्यत्वेन त्वगेव स्याद्वास एव बहुत्वतः ।
योग्यत्वेन व्यवस्थायामुभयोः स्यात्समुच्चयः ॥ २ ॥

अष्टरात्रे विश्वजित्प्रथममहः । तस्मिन्प्रकृतिभूतादेकाहाद्विश्वजितः परिधानार्था वत्सत्वक्प्राप्नोति । नाम्ना तथाऽतिदेशात् । 'अवभृथादुदेत्य वत्सत्वचं परिधत्ते' इति प्रकृतौ विधानात् । ततो ज्योतिर्नामकोऽभिप्लवः षडहः। तत्र प्रकृतेर्ज्योतिष्टोमादहतं वासो नाम्नाऽतिदिश्यते । ततोऽभिजिदष्टममहः । तत्रापि चोदकाद्वासः प्राप्नोति । तत्र द्वयोर्नामातिदेशयोः समबलत्वादष्टस्वहःसु त्वग्, वासो वा, इच्छया विकल्प्यते । इत्याद्यः पक्षः ।

विकल्पस्याष्टदोषत्वान्नियमः-इति द्वितीयः पक्षः । तत्रापि-विश्वजितः प्राथम्येन प्रबलतया त्वगेव-इत्यपरः पक्षः। इतरेषामह्नां बहुत्वेन प्रबलतया वास एव-इत्यपरः पक्षः ।

कौपीनत्वे वासो योग्यम् । स्कन्धावरणे योग्या । तस्मात्तथानुग्राहकेण समुच्चयेनात्र प्रसङ्गोऽपोद्यते । इति राद्धान्तः ॥ १ ॥ २ ॥

द्वितीये- {अनुनिर्वाप्यपुरोडाशानां पुरोडाशस्यैव तन्त्रित्वाधिकरणे} सूत्राणि ३-८)।

अनुनिर्वाप्येषु भूयस्त्वेन तन्त्रनियमः स्यात् ॥ ३ ॥ आगन्तुकत्वाद्वा स्वधर्मा स्याच्छ्रु-

---

१ ज. झ. °या उभ° । २ ज. झ. अष्टशत्रे । ३ ञ. वाससो । ४ क. विकल्पेत । झ. विकल्प्येत । ज. झ. विकल्पितः। ५झ. प्रबलत्वेन । ६ ख. ज. झ. ञ. त्वक्त्वाव° । च. त्वक्तु प्राव° । ७ च. °हकत्वेन स° । ८ ज. झ. सिद्धान्तः ।

तिविशेषादितरस्य च मुख्यत्वात् ॥ ४ ॥ स्वस्थानत्वाच्च ॥ ५ ॥ स्विष्टकृच्छ्रवणान्नेति चेत् ॥ ६ ॥ विकारः पवमानवत् ॥ ७ ॥ अविकारो वा प्रकृतिवच्चोदनां प्रति भावाच्च ॥ ८ ॥

द्वितीयाधिकरणमारचयति—

स्वाधर्म्यमनुनिर्वाप्येष्वस्ति नो वा, बहुत्वतः।
अस्ति मैवं तन्त्रमध्ये विहितत्वात्प्रसाङ्गिता ॥ ३ ॥

अग्नौ श्रूयते—' अग्नीषोमीयस्य पशुपुरोडाशमनु देवसुवां हवींषि निर्वपति ' इति। तत्र हविषामष्टानां बहुत्वेन पुरोडाशाद्बलवत्त्वात्तन्त्रित्वम्। ततः स्वधर्मा एव तेऽनुष्ठेयाः। न तु पुरोडाशधर्मैः प्रसङ्गसिद्धिः। इति चेत्।

मैवम्। प्रत्यक्षेण पुरोडाशतन्त्रमध्ये विधानेन प्राप्तस्य प्रसङ्गित्वस्य युक्तिमात्रेण वारयितुमशक्यत्वात्स्वाधर्म्यं नास्ति ॥३॥

( तृतीये—भिन्नोपकारकाणां गुणानां समुच्चयाधिकरणे सूत्रम्—)।

एककर्मणि शिष्टत्वाद्गुणानां सर्वकर्म स्यात् ॥ ९ ॥

तृतीयाधिकरणमारचयति—

ऋजुत्वाद्य आघारे विकल्प्यन्ते न वाऽग्रिमः।
एकार्थत्वाददृष्टार्थभेदात्संभवतोऽन्तिमः ॥ ४ ॥

दर्शपूर्णमासयोराम्नायते—' ऋजुमाघारयति, संततमाघारयति, ऊर्ध्वमाघारयति ' इति। तेषामृजुत्वादीनामाघारोपकारद्वारा कार्यस्यैकत्वाद्विकल्पः। इति चेत्।

मैवम्। दृष्टद्वारभेदाभावेऽप्यदृष्टद्वारभेदात्सहानुष्ठानसंभवाच्च विकल्पो न ॥४॥

( चतुर्थे—प्रयोजनैक्ये गुणानां विकल्पाधिकरणे सूत्राणि १०—१५)।

एकार्थास्तु विकल्पेरन्समुच्चये ह्यावृत्तिः स्यात्प्रधानस्य ॥ १० ॥ अभ्यस्येतार्थवत्त्वादिति चेत् ॥ ११ ॥ नाश्रुतित्वात् ॥ १२ ॥ सति चाभ्यासशास्त्रत्वात् ॥ १३ ॥ विकल्पवच्च दर्शयति ॥ १४ ॥ काला-

१ ख. °सुवामष्टौ ह° । २ क. ख. ज. ननु । ३ ख. ज. ञ. °द्रात्स° ।

न्तरेऽर्थवत्त्वं स्यात् ॥ १५ ॥

चतुर्थाधिकरणमारचयति—

समुच्चयो यवव्रीह्योर्विकल्पो वाऽत्र पूर्ववत् ।
आद्यो मैवं नैरपेक्ष्याददृष्टाभेदतोऽन्तिमः ॥ ५ ॥

अदृदोषनिदानविकल्पपरिहाराय प्रयोगवचनानुग्रहाय च समुच्चयः स्यात् । कन्याधारधर्मवत् । इति चेत् ।

मैवम् । अदृष्टस्य कल्पयितुमशक्यत्वात् । तर्हि—अस्तु दृष्टभेदः—इति चेत् । एकं पुरोडाशनिष्पादनमन्तरेणान्यस्य कार्यस्यादर्शनात् । न च—पेषणादौ दृषदुपलयोरिव समुच्चयः शङ्कनीयः । तद्वत्परस्परतापेक्षत्वाभावात् । अत एव 'व्रीहिभिर्यजेत' इत्यत्र यवनिरपेक्षाणां व्रीहीणां यागसाधनत्वं विधीयते । एवं 'यवैर्यजेत' इत्यत्रापि । तस्मात्—विकल्पः ॥ ५ ॥

( पञ्चमे—वैगुण्यसमाधानार्थानां प्रायश्चित्तानां विकल्पाधिकरणे सूत्रम्— )॥

प्रायश्चित्तेषु चैकार्थ्यान्निष्पन्नेनाभिसंयोगः, तस्मात्सर्वस्य निर्घातः ॥ १६ ॥

पञ्चमाधिकरणमारचयति—

वैश्वानरे पथिकृते साहित्यं वा विकल्पनम् ।
साहित्यं स्याददृष्टाय विकल्पः स्यात्समाधये ॥ ६ ॥

विहितयोर्दर्शपूर्णमासयोः कदाचिदननुष्ठाने प्रायश्चित्तं श्रूयते—'वैश्वानरं द्वादशकपालं निर्वपेदमावास्यां वा पौर्णमासीं वाऽतिपाद्य' इति । ... पथिकृते पुरोडाशमष्टाकपालं निर्वपेत्, यो दर्शपूर्णमासयाजी सन्नमावास्यां वा पौर्णमासीं वाऽतिपातयेत्' इति च । अत्र पूर्ववद्दृष्टप्रयोजनाभावाददृष्टार्थमुभयं समुच्चित्यानुष्ठेयम् । इति चेत् ।

मैवम् । यज्ञवैगुण्यसमाधेर्दृष्टप्रयोजनत्वादन्योन्यनिरपेक्षयोर्व्रीहियववद्वि...।

एवम्—'ऋग्यजुःसामविहितस्याननुष्ठानात्, निषिद्धस्याऽऽचरणाद्वा ... ण्यम्, तस्य वैगुण्यमात्रस्य समाधानाय निरपेक्षाणि प्रायश्चित्तानि विहिता...

१ ख. °त । आधा° । २ ख. एवं । ३ ज. झ. पेषणादयो । ४ ञ. °वत...मु° ... ज. झ. ञ. °रे पाथि° । ६ ख. °दनु° । ७ ख. °पाद्य' इ° । ८ क. ख. ञ. °ार्थं° । ९ झ. च. ज. झ. °मवेक्षु वि° ।

-'भूः स्वाहेति गार्हपत्ये जुहुयात्, भुवः स्वाहेति दक्षिणाग्नौ जुहुयात्, स्वः स्वाहेत्याहवनीये जुहुयात्, भूर्भुवःस्वः स्वाहेत्याहवनीये जुहुयात्' इति। तान्येतानि विकल्प्यन्ते प्रत्येकं वैगुण्यसमाधानक्षमत्वात् ॥ ६ ॥

( षष्ठे—नैमित्तिकप्रायश्चित्तानां समुच्चयाधिकरणे सूत्रम्)।

समुच्चयस्त्वदोषनिर्घातार्थेषु ॥ १७ ॥

षष्ठाधिकरणमारचयति—

भिन्नस्कन्नादिहोमादेर्विकल्पो वा समुच्चयः।
विकल्पः पूर्ववन्नैवमदोषे विहितत्वतः ॥ ७ ॥

यज्ञपात्रभेदनहविर्द्रव्यस्कन्दनादिनिमित्तेषु श्रूयते—'भिन्ने जुहोति' इत्यादि। तत्र वैगुण्यसमाधानार्थत्वात्पूर्ववद्विकल्पः। इति चेत्।

नैवम्। दोषसंयोगमनुपन्यस्य भेदनादिनिमित्तमुपजीव्य विहितत्वात्। अतो नैमित्तिकानामेतेषां प्रयोगवचनपरिगृहीतत्वेन समुच्चयः ॥ ७ ॥

( सप्तमे—कर्मकालेऽनध्यायेऽपि मन्त्राणां प्रयोगाधिकरणे सूत्रे १८—१९ )।

मन्त्राणां कर्मसंयोगात्स्वधर्मेण प्रयोगः स्याद्धर्मस्य तन्निमित्तत्वात् ॥ १८ ॥ विद्यां प्रति विधानाद्वा सर्वकालं प्रयोगः स्यात्कर्मार्थत्वात्प्रयोगस्य ॥ १९ ॥

*सप्तमाधिकरणमारचयति—

अनध्याये मन्त्रपाठः क्रतौ नास्त्यस्ति वा, न सः।
तत्पाठस्य निषिद्धत्वादस्ति तत्रानिषेधतः ॥ ८ ॥

'पर्वणि नाध्येयम्' इति निषिद्धत्वादनध्याये क्रतुप्रयोगे मन्त्रपाठो नास्ति। इति चेत्।

---

* क. ख. ज. झ. ञ. पुस्तकेषु तु केवलमवतरणिकामात्रं लिखित्वा वक्ष्यमाणाधिकरणीये 'स्वरो मन्त्रे'—इतिकारिकाव्याख्याने एव लिखिते। तथा चास्याधिकरणस्य कारिकाव्याख्याने केवलं 'च' पुस्तकाधारेणास्माभिर्लिखिते।

---

१ क. 'त्रभेदेम ह'। ज. झ. 'त्रभेद'। २ ख. 'विहक'। ३ ज. झ. 'समवोपन्यस्य वि'। . 'समवोप'। ४ ख. 'मामेव के'। ज. झ. 'नामेतेषां'।

न। निषेधस्य ग्रहणाध्यापनविषयत्वेन क्रतुप्रयोगे तन्निषेधाभावात्। तस्मात्-क्रतावनध्यायेऽप्यस्ति मन्त्रप्रयोगः॥ ८॥

( अष्टमे-कर्माणि प्रावचनस्वरेणैव मन्त्रोच्चारणाधिकरणे सूत्राणि २०-२२ )।

**भाषास्वरोपदेशादैरवत्प्रावचनप्रतिषेधः स्यात्॥ २०॥ मन्त्रोपदेशो वा न भाषिकस्य, प्रायापत्तेर्भाषिकश्रुतिः ॥२१॥ विकारः कारणाग्रहणे॥ २२॥**

अष्टमाधिकरणमारचयति--

**स्वरो मन्त्रे भाषिकः किं स्यात्प्रावचनिकोऽथवा।**
**ब्राह्मणोक्तेरादिमोऽन्त्यस्तदुक्तेर्लक्षणत्वतः॥ ९॥**

तत्तच्छाखीयब्राह्मणस्वरो भाषिक इत्युच्यते। तदुक्तमाचार्यैः—

'छन्दोगा बह्वृचाश्चैव तथा वाजसनेयिनः।
उच्चनीचस्वरं प्राहुः स वै भाषिक उच्यते' इति।

सोऽयं भाषिकः क्रतौ मन्त्रेषु प्रयोक्तव्यः। ब्राह्मणेनोक्तत्वात्। मन्त्रविनियोगस्य लिङ्गेन सिद्धत्वात्। स्वरविशेषविधानाय ब्राह्मणे मन्त्र उपादीयते। इति प्राप्ते—

ब्रूमः—न हि ब्राह्मणे मन्त्रः पठ्यते। किंतु पठनीतस्वरानुप्रेत मन्त्रकाण्डसमुत्पन्नं मन्त्रमुपलक्षयितुं तदुपलक्षणसमर्थानि मन्त्रोपक्रमसदृशानि कानिचिदक्षराण्युच्चार्यन्ते—'इमामगृभ्णन्रशनामृतस्येत्यश्वाभिधानीमादत्ते' इति। एवमेवाभिप्रायं द्योतयितुं क्वचिच्छन्दान्तरेणोपलक्ष्यते। तद्यथा—'सावित्राणि जुहोति प्रसूत्यै' इति। यत्र लिङ्गसिद्धो विनियोगः, तत्र ब्राह्मणमनुवादकमस्तु। तस्मात्—प्रावचनिकः स्वरः क्रतौ प्रयोक्तव्यः॥ ९॥

( नवमे-ब्राह्मणोत्पन्नमन्त्रस्य भाषिकस्वरेणैवोच्चारणाधिकरणे सूत्रे २३-२४ )।

**तन्न्यायत्वादहृष्टोऽप्येवम्॥ २३॥ तदुत्पत्तेर्वा प्रवचनलक्षणत्वात्॥ २४॥**

नवमाधिकरणमारचयति—

**ब्राह्मणोत्पन्नमन्त्रस्य त्रैस्वर्यं भाषिकोऽथवा।**
**आद्योऽन्यमन्त्रवन्मैवं स्वरान्तरविवर्जनात्॥ १०॥**

१ ज. ञ. °तद्देशीय°। २ ज. °पपद्यते।

